न्महेतुं सेवकधर्मं निरूपयन्ति, आज्ञेति । आज्ञा प्रभ्वाज्ञा पूर्वं प्रथमतो गङ्गासागरसङ्गमे या जाता पश्चाद्द्वितीया या आज्ञा मधुवने मथुरायां जाता तदाज्ञाद्वयमपि मया न कृतम् । ननु तदाज्ञाद्वयं किं विषयकं यन्न कृतं तत्राहुः, देहदेशपरित्याग इति । पूर्वाज्ञाया विषयो देहपरित्यागः । द्वितीयाज्ञाया विषयो देशपरित्यागः । ननु बलात्कारेण देहपरित्यागस्य दोषरूपत्वात् कथं तदाज्ञासम्भवः । तदकरणे च कथं दोषसम्भव इति चेत्सत्यं, कर्माधीनदेहे प्रारब्धभोगसमाप्तिव्यतिरेकेण बलात्कारेण देहत्याग एव दोषसम्भवः । यत्र केवलं भगवदिच्छाधीनायेव देहग्रहणपरित्यागौ तद्देहस्यालौकिकत्वात्तदाज्ञया परित्यागो न दोषायेति ज्ञात्वापि यत्तदकरणं तस्याज्ञोल्लङ्घनहेतुत्वात् प्रतिबन्धकत्वमित्युक्तम् । देशपरित्यागः स्पष्टः । एवमाज्ञाद्वयाकरणेऽनिष्टहेतुत्वं ज्ञात्वा तृतीयाज्ञा कृतेत्याहुः, तृतीयो लोकगोचर इति । तृतीयः परित्यागः लोकप्रसिद्धस्मृत्यादिशास्त्रेषु गोचरो विषयः संन्यासग्रहणपूर्वकं गृहपरित्यागः स कृतः । यद्यप्यत्र कृत इति शब्दो नास्ति तथापि पूर्वाज्ञाद्वयकरणनिषेधादत्र च कृत इति शब्दाभावेपि करणमायाति । यद्यपि पूर्वोक्ताज्ञाद्वयाकरणापराधः सम्भवति, तथापि तृतीयाज्ञाकरणेन तयोरप्याज्ञयोः करणं जातमिति नापराधः ।

तथापि, आज्ञोल्लङ्घनजनितापराधेन यदि फलविलम्बं कुर्यात् प्रभुस्तदा तज्जनितः पश्चात्तापो भवत्येवेति कथमपराधनिवृत्तिरितिसन्देहे समाधानमाहुः, पश्चात्ताप इति

पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

फलविलम्बेपि विलम्बस्य दण्डस्थानीयत्वात्सेवकेन पश्चात्तापो न कर्त्तव्यः । तत्र हेतुः, सेवकोहमिति । अहं सेवकः सेवाकरणयोग्यः । आज्ञाद्वयाकरणस्य सेवाप्रतिबन्धकत्वं ज्ञात्वा शीघ्रं सेवार्थं विलम्बजतापेन शिक्षामिव प्रतिबन्धनिवृत्तिं विधाय पुनः सेवार्थमेव विलम्बं न कृतवान् इति न मम पश्चात्तापः । यतोहं सेवकः, न चान्यथा । यदि मयि सेवकत्वं न मन्येत तदापराधेनोपेक्षामेव कुर्यात्, न तु स्वीयत्वं ज्ञात्वा विलम्बजतापरूपशिक्षां कुर्यादित्यत उक्तं, न चान्यथेति, अस्मिन्नर्थेन्यथाभावो नास्तीत्यर्थः ।

ननु यथा लोके 'राजा मित्रं केन दृष्टं श्रुतं वे'ति लौकिकप्रभुन्यायेन तापानन्तरमप्युपेक्षामेव कुर्यादिति चेत्तत्र बाधकमाहुः, लौकिकप्रभुवदिति । लौकिकाः प्राकृता जीवाः प्रभवो लोके प्रभुत्वेन व्यवहार्याः, तद्वद्भगवान्न द्रष्टव्यः न ज्ञातव्यः । तत्र हेतुः, यतः कृष्णः फलात्मा प्रभुश्च । लौकिकप्रभूणां प्राकृतत्वात्तेषामङ्गीकारस्यानित्यत्वादङ्गीकृतस्याप्युपेक्षा सम्भवति, प्रकृते प्रभोरलौकिकत्वेन तदङ्गीकारस्यापि नित्यत्वेन अङ्गीकृतोपेक्षैवासम्भावितेति ज्ञापनायोक्तं, न द्रष्टव्यः कदाचनेति । अत एव पितृचरणैरुक्तं 'अङ्गीकृतजनजनितापराधकृदक्षमाविनोदोस्य । अङ्गीकृतिश्च नित्या यदन्तु

कोऽन्योऽस्य साम्यमियात्तेनाङ्गीकारस्य नित्यत्वे न सन्देहः । कदाचनेति भूतभविष्यद्वर्तमानकालेपीत्यर्थः ॥ ७ ॥

यद्यप्युपेक्षां न करिष्यति, तथापि, अपराधस्य जातत्वात्पुनः पूर्ववत्तादृशीं कृपां न करिष्यतीति मनःसन्देहनिवृत्त्यर्थमाहुः, सर्वं समर्पितमिति ।

**सर्वं समर्पितं भक्त्या कृतार्थोऽसि सुखी भव ।**

त्वयि पूर्वं कृपासीदेव, यतस्त्वया सर्वमेव समर्पितं, तत्रापि भक्त्या भक्तिमार्गानुसारेण, न तु विहितत्वाद्युपाधिना, तस्मात्त्वं फलरूपभक्तिमार्गाङ्गीकारेण कृतार्थ एवासि । मध्ये मौढ्याज्ञोल्लङ्घनजनितापराधेन अन्तराये सति क्लेशं प्राप्तवानसि । अतस्तदाग्रहं परित्यज्य प्रभ्वाज्ञां कृत्वा पुनः पूर्ववदेव सुखीभव यथापूर्वं सुखं प्राप्नुहि । ननु, अङ्गीकारस्य नित्यत्वात्फलमार्गीयं सुखं यद्यपि दास्यति तथापि पूर्ववत्सर्वात्मना दास्यति न वेति सन्देहजनितक्लेशमग्रिमदृष्टान्तेन दूरीकुर्वन्ति । प्रौढापीति ।

**प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥**
**तथा देहे न कर्त्तव्यं वरस्तुष्यति नान्यथा ।**

फले प्रभुः तारतम्यं तदा कुर्याद्यदि त्वदपेक्षा न स्यात्, यस्यापेक्षावश्यकी तस्य दोषमप्यनङ्गीकृत्य फलं ददात्येव । पूर्वोक्तं दृष्टान्तमेव विवृण्वन्ति । यथा प्रौढा रमणयोग्या स्वकीया दुहिता तस्यां स्नेहाधिक्यात् तस्या वरे भोक्तरि भोगावश्यकदशासमये यदि न प्रेष्यते तदा वरः स्वाभिलाषाया अपूर्त्याऽसन्तुष्टो भवति । प्रेष्यते चेत्सन्तुष्ट एव भवति । अपि शब्देन यद्यपि पाणिग्रहणमारभ्यैव तस्य भोगेच्छास्त्येव, तथापि तस्यां रसोपमर्दासहिष्णुत्वेन विलम्बमपि सहते । सहिष्णुत्वदशायां विलम्बकर्त्तरि असन्तुष्ट एव भवति । तथा प्रभोः सर्वात्मना स्वापेक्षासमये यदि अपेक्षां ज्ञात्वा कार्यसंपत्तिर्न क्रियते तदा प्रभुरसन्तुष्ट एव भवति । तस्मादयं निष्कर्षः प्रभोः स्वाभिलषितसिद्ध्यभावहेतुकमिति, विलम्बाभावे पूर्ववदेव सर्वात्मना स्वाभिलाषापूर्त्यर्थं फलं दास्यत्येवेत्यस्मिन्नर्थे विलम्बस्याज्य पर्यन्यत उक्तम् । तथा देहे न कर्त्तव्यमिति । देहे देहत्यागविषये सर्वात्मना प्रभुसन्तोषाभावाद्विलम्बो न कार्यः । यथा दुहितृप्रेषणविलम्बे स्नेहो हेतुः । तन्निराकरणपूर्वकप्रेषणे वरसन्तोषेणोभयकार्यसिद्धिस्तथात्राप्याग्रहहेतुत्यागपूर्वकमाज्ञाकरणेनोभयकार्यसिद्धिरिति सर्वात्मना प्रभुसन्तोषार्थं देहत्यागविलम्बहेतुर्देहस्त्याज्य एव ।

ननु यद्यप्यस्मिन्नर्थे दृष्टोऽनुनिस्तथापि भगवदभिप्रेतश्रीभागवतार्थप्राकट्येन लोके परमोत्कर्षः सिद्ध्यतीति पदार्थनियतिकश्चिद्विलम्बेच्छा सम्पद्यते । तस्या अपि फलविलम्बहेतुत्वेन मां निराकुर्वन्ति, लोकवदिति ।

## लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥

यद्यपि भगवदभिमेतश्रीभागवतार्थप्राकट्येन जैमिनिव्यासादिवत् श्रुत्यविरुद्धालौकिकशास्त्रार्थप्राकट्येन लोक एवोत्कर्षः सिद्धचेत् । नत्वलौकिकस्वसिद्धान्तफलानुभवहेतूत्कर्षः सिद्धयति । लोकोत्कर्षसिद्धौ जैमिनिव्यासाद्युत्कर्षवल्लौकिक एवोत्कर्षः सेत्स्यति, न तु स्वमार्गीयोत्कर्षोऽपि । तस्मात्तदुत्कर्षासिद्धौमे मम स्वमार्गीयफलभोक्तुः पूर्वोक्तफलविचारस्य स्वमार्गीयफलविलम्बहेतुत्वात्किं फलं स्यान्न किमपीत्यर्थः । स्वमार्गीयफलविचारे यत्र मुक्त्यादीनामपि निःफलत्वं तत्र पूर्वोक्तलौकिकस्यापि फलत्वगणना सर्वात्मना दूरापास्तेति ज्ञापनायोक्तम्, किं स्यादिति । अत एतत्फलतारतम्यविचारेण त्वयापि सर्वात्मना फलसिद्धिविलम्बाभाव एव विचारणीयो न त्वन्योऽपि विचारः कर्त्तव्य इति ज्ञापनायोक्तम् । विचारयेति ॥ ९ ॥

यद्यपि फलविलम्बाभाव एव विचारणीयस्तथापि बलात्कारेण शरीरत्यागस्य स्वतोऽशक्यत्वात् कथं सम्भवतीति सन्देहनिवारणप्रकारमाहुः । अशक्य इति ।

## अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

यद्यपि बलात्कारेण शरीरत्यागः स्वकर्तृकश्चेत्स्यात्तदाऽशक्यः स्यात् । प्रकृते शरीरत्यागस्तु *भगवदिच्छाकर्तृक* इति न स्वस्याशक्यत्वम् । यतोऽशक्यादिसर्वदुःखहर्ता यो हरिः स एव सर्वपुरुषार्थसाधकत्वेन स्थित एवास्ति । अत्र हरिपदोक्त्या देहत्यागोऽपि फलान्तरायदुःखदूरीकरणार्थमेव । अतो लोके अशक्यस्याप्यनायासेन साधकत्वमुक्तं भवति । तस्मात्फलविलम्बाभावार्थमेतावत्कर्तरि **मोहं मा गाः**, मोहं चित्तविक्षेपं मा गा, न प्राप्नुहि, कथञ्चन केनापि प्रकारेण आज्ञोल्लङ्घनजनितापराधफलविलम्बविषये आज्ञोल्लङ्घनात्पूर्वसामयिकफलानुभवे, आज्ञाकरणानन्तरं फलानुभवतारतम्यविषये च सर्वात्मना वैयग्र्याभावबोधनायोक्तम्, कथञ्चनेति । अतः परमुक्तार्थमुपसंहरन्ति ॥ १० ॥

एवं प्रबोधनेन सर्वात्मना वैयग्र्यनिवृत्तिर्जातेति ज्ञापनायाहुः । इतीति ।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

इति श्रीवल्लभाचार्यविरचितमन्तःकरणप्रबोधः समाप्तः ।

---

इतीति समाप्तौ । श्रीकृष्णदासस्य श्रीकृष्णपदेन भक्तसहितलीलारसाविष्टत्वं ज्ञापितं, तद्दासत्वेन शुद्धपुष्टिमार्गीयफलरूपदास्यं प्राप्तस्य तत्रापि वल्लभस्य प्रभोः शुद्ध-

पुष्टिमार्गीयफलरूपदास्यभाग्नानां च वल्लभस्यात्यन्तं प्रियस्य तादृशस्य स्वचित्तं प्रति हितं वचः, हितं हितकारि । वचसि हितमिति पदोपादानेन वचनस्य आप्तवाक्यत्वेन प्रामाण्यावधारणेन चित्तस्य सर्वात्मना वैयग्र्याभावः सिद्ध इति ज्ञापनायोक्तम् । चित्तं प्रतीति । एवं प्रबोधनेन स्वचित्तस्य शुद्धपुष्टिमार्गीयपरमफलानुभवयोग्यतां निःसन्दिग्धामुपपाद्य एतच्छ्रवणेन स्वमार्गीयाणामपि स्वाधिकारानुसारेणापि भक्तिमार्गीयफलं सिद्ध्यतीति ज्ञापनायाहुः, यदाकर्ण्येति । यद्वच आकर्ण्य आसमन्ताच्छ्रुत्वा । यद्यपि वचः श्रुत्वेत्येतावतैव श्रवणसिद्धावपि आसमन्तात्कथनेन साभिप्रायश्रवणं ज्ञापितम् । साभिप्रायश्रवणस्य फलमाहुः, भक्त इत्यादि । भक्तो भगवति स्निग्धो भवति । तदनन्तरमाचार्याणां फलविलम्बहेतुदूरीकरणसामर्थ्यं ज्ञात्वा स्वस्यापि फलविलम्बहेतुचिन्तां दूरीकरिष्यन्तीति चिन्तापरित्यागेन निश्चिन्ततां व्रजेत् प्राप्नोतीत्यर्थः ।

चित्तप्रबोधकाचार्यवचांसि विवृतानि वै ।
तेनाचार्याः प्रसीदन्तु स्वीये मयि सदा स्वतः ।
इति श्रीपितृपादाब्जपरागधनिना मया ।
श्रीवल्लभेन विरचिता विवृतिः पूर्णतामियात् ॥ २ ॥
अर्पिता श्रीमदाचार्यपदाम्बुजेषु मया स्वतः ।
तेनैव कृतकृत्योस्मि इति मे निश्चिता मतिः ॥ ३ ॥

इति श्रीवल्लभविरचितान्तःकरणप्रबोधटीका समाप्ता ।



श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

*श्रीमदाचार्यचरणकमलेभ्यो नमः।*

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः।



## श्रीरघुनाथचरणनिर्मितं विवरणम्।

व्रजस्त्रीनेत्रनलिनवनालीषु परिभ्रमन्।
लिप्सॆस्वन्मधु योऽलिस्तं प्राप तं कृष्णमाश्रये ॥ १ ॥

अथ भगवदीयानामनवरतभगवद्भजनसिध्यर्थं तत्प्रत्यूहदुरितजनितचिन्तासन्तानदवदहनदमनोपायमन्तःकरणप्रबोधमन्तःकरणं संमुखीकृत्य प्रतिजानते। अन्तःकरणमद्वाक्यं सावधानतया शृण्विति।

**अन्तःकरण मद्वाक्यं सावधानतया शृणु।**
**कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥**

अत्र स्वान्तःकरणव्यपदेशेनान्येषामन्तःकरणं प्रबोध्यत इति ज्ञेयम्। कृष्णात्परं नास्ति दैवमित्यादिवक्ष्यमाणं मदीयं वाक्यं सावधानतया प्रमादराहित्येन शृणु आकर्णयेत्यर्थः। तदेवाहुः, कृष्णात्परमिति। वस्तुतः परमार्थतो विचार्यमाणे 'कृषिर्भूवाचक' इत्यादिनिरुक्तिबलात्कृष्णात्परमन्यद्दोषवर्जितं दैवं देवः सर्वोपास्य ईश्वरो नास्तीत्यर्थः। अत एव गीतायां 'न त्वत्समोस्त्यभ्यधिकः कुतोन्य' इति। एवं बुध्यस्वेति वाक्यशेषः। ननु भगवदीयानामपि कदाचिल्लोकवत्कुतश्चिदभिभवो दृश्यतेऽतस्तत्राभिमानेन स्वावमानमाशङ्क्य, अहं भगवति कृतात्मनिवेदीति सर्वं मयि भगवदेककर्तृकमिति विमृश्य तदपमानमपि भगवतैव कृतमिति भगवत्यपि दोषस्फूर्तौ सदृष्टान्तं समाधानमाहुः।

**चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता।**
**कदाचिदपमाने वा मूलतः का क्षतिर्भवेत् ॥ २ ॥**

अत्र चाण्डालीतिपदं महादोषोपलक्षणपरं, तेन सदोषा या काचन राजपत्नीत्वेन परिगृहीता जाता राज्ञा च सत्कृता, कदाचित्तस्या अपमानेपि मूलतः स्वरूपात्क्षतिः हानिः का भवेन्न कापीत्यर्थः। अयं भावः। भगवत्सम्बन्धं विना सर्वेषामन्तःकरणं स्वभावतो दुष्टमेव। तत्कर्षस्तु भगवत्सम्बन्धकृत एव, तेन यत्सम्बन्धात्स्वयमुत्कृष्ट इत्य-

भिमन्यते, तत्कृतापमानेपि स्वरूपं तु स्वस्य पूर्वं सदोषमेवेति कुतस्तरां दोषावकाश इति। चकारादन्यैरपि राज्ञीत्वेन मानिता पूजिता। दृष्टान्ते एवं ज्ञेयं, सदोषाया अपि चाण्डाल्या राजपरिग्रहात् मानिताया अपि कदाचिद्राजकृततिरस्कारे स्वजातीयपतिकृतसंमाननतो वरं राजकृततिरस्कार इति, यथा सम्बन्धोत्कर्षात्स्वोत्कर्षः। एवं भगवत्कृतापमानेपि स्वस्य लाभ एव न हानिरिति भावः ॥ २ ॥

स्वस्यान्तःकरणं स्वयमेव कथं बोधनीयमित्यपेक्षायामाहुः।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

योहमिदानीमुत्तमत्वाभिमानेनावमतोस्मीति मन्ये स एवाहमात्मसमर्पणात्पूर्वमपि किं सर्वकालमुत्तम एव स्थित आसम्, प्रत्युत तद्विपरीत एवासमतो मम पूर्वापेक्षयाऽधमता का भाव्या भविष्यति। यतः पूर्वावस्थामनुस्मृत्य पश्चात्तापो भवेदित्यर्थः ॥ ३ ॥

नन्वेवं बहुशः समाधानेपीदानीन्तनावमानवत्फलदशायामप्येवं कुर्याच्चेत्तदानीं कथं समाहितिरित्यपेक्षायामाहुः।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥

सत्यो यथार्थो यः सङ्कल्पो व्रतं तस्माद्विष्णुः सर्वत्र वर्त्तमानः फलदशायामप्यन्यथा न करिष्यत्येवेति ज्ञेयम्। तुशब्दो निर्द्धारणे च। स च सङ्कल्पो यथा। 'द्विःशरं नाभिसन्धत्ते द्विःस्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामो द्विर्नैव भाषते'। 'सकृदेव प्रपन्नो यो यस्तवास्मीति याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम'। 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती'त्येवमादिषु ज्ञेयः। येन भगवताहं सर्वतः पृथक्कृत्य स्वभजने योजितः स कथमग्रे त्यक्ष्यतीति भावः। स्वस्यावश्यकर्त्तव्यमाहुः। आज्ञैवेति। सततं निरन्तरमाचार्यद्वारा या आज्ञा सैव कार्या न तु कदाचिदप्यनाज्ञप्तमन्यमनसिदं वा। अन्यथा एवमकरणे स्वामिद्रोह एव भवेत् ॥ ४ ॥

नन्वाज्ञातिरिक्तकार्यमात्राकरणे प्राप्ते चिकीर्षितकार्यस्य कथं सम्पत्तिरित्याहुः।

सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।

गर्भान्निर्भेदितकस्यायमेव धर्मो यद् स्वामी प्रभुरेव सर्वमैहिकामुष्मिकं स्वस्य सेवकस्य करिष्यतीत्यर्थः। एवमनुसन्धानेन स्थेयमिति भावः ॥ ५ ॥

अथ विश्वासार्थमाचार्याः स्वानुभवमुद्भावयन्त्याज्ञा पूर्वमित्यारभ्य श्लोकद्वयेन।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे।
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया॥ ६॥
देहदेशपरित्यागस्तृतीयो लोकगोचरः।
पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन॥ ७॥

आज्ञापूर्वमिति। मां प्रति पूर्वं प्रथममाज्ञा देशपरित्यागविषयिणी गङ्गासागरसङ्गमे जाता। यापि पुनरन्या देहपरित्यागविषयिणी मधुवने मथुरायां जाता तदाज्ञाद्वयं मया न कृतमेव। तृतीया या लोकगोचरा लोकविषयिणी लोकानुद्धरस्वेत्येवंरूपा सा कृतेति शेषः।

तत्राज्ञाद्वयभङ्गरूपेप्यर्थे सति कथं मम पश्चात्तापो, यन्मया न कृतमित्येवं रूपः, स न कथमपि सङ्गच्छत इति। अकरणे हेतुः, सेवकोहमिति। सेवकस्य सर्वस्वनिवेदिनो या काचन कृतिः सा भगवदिच्छयैवेति निश्चयात्। न चान्यथा अन्यसदृशो नासीत्यर्थः।

ननु लौकिकप्रभूणामिवाज्ञाभङ्गस्यादोषत्वे भगवतोपि तथात्वापत्तिरित्यत आहुः। लौकिकप्रभुवदिति। कदाचिदासुरव्यामोहार्थं लोकवदाचरणेपि लोकवद्भगवान्न कदाचिदपि ज्ञेय इत्यर्थः। लोकवदाचरणं तु रामायणमौसलादिषु प्रसिद्धम्॥ ७॥

कस्मिन्नप्यंशे चिन्ता न कार्येत्याहुः।

सर्वं समर्पितं भक्त्या कृतार्थोसि सुखीभव।
प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे॥ ८॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा।
लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय॥ ९॥

सर्वं लौकिकालौकिकसाधारणं स्वीयं भक्त्या स्नेहपूर्वकं समर्पितमेवास्ति, अतः कृतार्थोसि कृतकृत्योसि सुखी भव, सुखेनैव वर्तस्व, न मिथ्या चिन्तयेरर्थः। आलस्यादिना भगवदर्थं मियारपदं स्वशरीरमनुपयुञ्जानं प्रति सदृष्टान्तं दोषमाहुः। प्रौढापीति। प्रौढा वृद्धा, अपि शब्दात्प्रौढापि दुहिता यदा स्नेहवशाद्वरे तद्गृहे न प्रेष्यते न याप्यते तदा तत्स्वामी वरस्तां विना प्रकारान्तरेण न तुष्टो भवतीति, यद्वद्यथास्ति तथा निवेदिते देहेऽप्यतिस्नेहवशादनुपयोगो भगवदसन्तोषकारक इत्यर्थः। लोकवदिति।

साधारणलोकवन्मे यदि स्थितिः स्यात्तदेदानींतनावस्थापेक्षया तदधिकं लोके वेदे च किं स्यान्न किमपि, प्रत्युत सर्वनाश एव भवेदित्येवं त्वमेव विचारय, इदमुपपन्नं न वेति।

ननु सर्वथा शरीराद्यशक्तौ भजनासम्भवे कथं निस्तार इत्यत आहुः ॥

**अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥**

सर्वप्रकारेण कृत्यऽसाध्येऽयं हरिरेवास्ति मम शरणमिति बुद्धिमवलम्बस्व । अस्मिन्नर्थे कथमपि मोहं वैचित्यं मा गाः, मा प्राप्नुहि ॥ १० ॥

उपसंहरन्ति ।

**इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।**
**चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥**

**इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।**

श्रीकृष्णे दास्यं गतस्य वल्लभस्य, श्रीकृष्णदासस्येति जात्यभिप्रायेणैकवचनं वा। श्रीकृष्णदासस्य चित्तं प्रति हितमभीष्टसम्पादकं वल्लभस्येदमभिहितं वचो ज्ञेयम् । कथं तदित्यत आहुः, यदाकर्ण्येति । यद्वचः श्रुत्वा भक्तो नैश्चिन्त्यं प्राप्नुयादिति ॥ ११ ॥

इति * श्रीविट्ठलेश्वरात्मजश्रीरघुनाथविरचितमन्तःकरणप्रबोधविवरणं संपूर्णम् ।

* केचित्त्वेतत् श्रीरघुनाथानां [illegible], परमगुरु श्रीरघुनाथाभिधान[illegible] श्रीरघुनाथ[illegible] इति श्रीरघुनाथार्मैरपि निर्णीतम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।



## श्रीमन्महानुभावश्रीहरिरायचरणविरचितविवृतिसमेतः ।

अथ श्रीवल्लभाचार्याः कृष्णेनातिदयालुना । निःसाधनजनोद्धृत्यै पुष्टिमकटनेच्छुना ॥
स्वास्यरूपाः स्वतस्तेन प्रभुणा प्रकटीकृताः । जीवोद्धाराय विवृतिं चक्रुर्भागवते मुदा ॥
तथा स्वतन्त्रभजनप्रकारस्योपदेशनम् । ततश्च भगवान्मत्वा स्वमार्गोद्घाटनं हि तैः ॥
आचार्यविप्रयोगं चासहमानोखिलेश्वरः । आज्ञाद्वयमदाद्देहदेशत्यागैकबोधिकम् ॥
ततः स्वमौढ्यवशतः करुणावशतोपि च । तद्द्वयोल्लङ्घनं चक्रुः पश्चात्तापस्ततोऽभवत् ॥
दोषस्फूर्त्या हरौ सङ्गविलम्बात्त्यागजाड्यतः । अङ्गीकृतिगतेश्चापि धर्मत्यागाच्च दुःसहः ॥
बालवत्पूर्वमाज्ञप्तः पश्चान्नेति यदब्रवीत् । मां तेनास्थिरवाक्त्वं हि हरौ दोषस्तदास्फुरत् ॥
ततः समादधुश्चित्तं वचनैः स्फूर्तिमागतैः ।

**अन्तःकरण मद्वाक्यं सावधानतया शृणु ।**
**कृष्णात् परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥**

अन्तःकरणपदतो बहिरज्ञानबोधनम् ॥
दोषसम्बन्धतश्चित्ते*स्वभिन्नत्वं हि मन्यते । आज्ञोल्लङ्घनतो दोषो भगवद्दोषभावनात् ॥
अत एव तदात्मीयं कर्तुमत्र समाहृतिः । अन्यथा मौढ्यदार्ढ्ये तु सर्वभावाच्युतिर्भवेत् ॥
मद्वाक्यमिति वाक्येषु स्वसम्बन्धो निरूपितः । निर्दोषभगवद्भावबोधकत्वात्तु सर्वथा ॥
अत एव समासो हि पदयोरत्र बोधितः । वाक्यमित्येकवचनं सर्वैरेकार्थबोधनात् ॥
स्ववाक्यस्य दुरूहत्वाद्भावप्रौढस्य चेतसः । अर्थानवगमस्तस्मात्सावधानत्वबोधनम् ॥
श्रवणोक्त्या सतात्पर्यमर्थावगमनं मतम् । श्रवणेनैव हि स्वीयविचारान्तरवारणम् ॥
एतद्श्रवणे दोषोपीति विध्यवतारणम् । पश्चात्तापो द्विधा जातः प्रभुदोषसमागतेः ॥
आज्ञारूपस्वधर्मस्य परित्यागात्स्वदोषतः । तत्र ॥ प्रथमं दोषः प्रभौ नास्तीति कथ्यते ॥
तदारोपणतश्चित्ते भ्रान्तत्वमपि चोच्यते । न हि कृष्णे सदानन्दे दोषसम्भावनोद्भवः ॥
सच्छब्देन यतस्तत्र दोषाभावश्च रूप्यते । सर्वस्यैव तदात्मत्वाच्च परं विद्यते ततः ॥

---

* 'स्वस्मिन् तथम' पाठ. ।

अतो वैषम्यनैर्घृण्ये अपि दोषौ न कर्तरि । नास्तीत्युक्त्या तदन्यस्य सत्ताभावो विबोध्यते ॥
दैवशब्देन पूज्यत्वं सर्वेषां ज्ञापितं हरौ । तस्यैव च परत्वेन सर्वोत्कृष्टत्वबोधनम् ॥
जगत्पूज्ये भगवति दोषसत्ता कथं भवेत् । अन्येषामपि पूज्यत्वं तद्विभूतित्वतोपि हि ॥
भृगवे हरिणा स्वस्य दोषाभावो विबोधितः । निर्दोषपूर्णगुणता सर्वत्रैव निरूपिता ॥
सर्वेषां भाग्यरूपत्वं दैवशब्देन चोदितम् । यथा भाग्यं विना सर्वसाधनं विफलं मतम् ॥
तथा तत्प्रतिकूलत्वे न देवानां फलदातृता । अत एवास्मदाचार्यैर्ग्रन्थे सेवाफलाभिधे ॥
तदान्यदेवसेवापि व्यर्थेति विनिरूपितम् । प्रायश्चित्तानि चीर्णानीत्यादिवाक्यानि सन्ति हि ॥
स्वसम्बन्धेन सर्वेषां फलदे दोषवारके । स्वरूपतोपि निर्दोषे कथं दोषनिरूपणम् ॥
ननु कृष्णावतारे तु क्रोधादि दृश्यते हरौ । दैत्यमारणतोनन्तयुवतीनां परिग्रहात् ॥
क्रोधोपि देवस्येत्यादिवाक्यं च खलु दृश्यते । इति चेन्न हरौ दोषः प्रतीत्या न हि वस्तुतः ॥
विचार्यमाणे क्रोधादि हितं पर्यवसानतः । मुक्तिदानान्निजानन्ददानात्तदधिकारतः ॥
दोषा एव न जीवैस्तु प्रयुक्तास्तं स्पृशन्त्यपि । अभिचारा वैष्णववदतस्तद्दोषवर्जितम् ॥
एवं सतीदृशे नाथे दोषारोपणतः स्वतः । पूर्वं जातोपि चोत्कर्षो नश्येत्तदपमानतः ॥
स्वामिसम्बन्धराहित्याद्भवेत्तु महती क्षतिः । इति चेत्तत्समाधानमग्रिमश्लोकरूपितम् ॥

**चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।**
**कदाचिदपमानेपि मूलतः का क्षतिर्भवेत् ॥ २ ॥**

संभावितस्य चाकीर्तिरिति गीतोक्तवाक्यतः । उत्कृष्टस्य पुरा पश्चादपकर्षे क्षतिर्भवेत् ॥
पूर्वं स्वरूपं दृष्टान्तस्तथा हीनो निरूपितः । तादृशस्य तयोत्कर्षे मूलं तु भगवान्मतः ॥
पुष्टिमार्गेहतौ नैव जीवोत्कर्षो नियामकः । भक्तिहंसे तथा चोक्तं प्रभुभिर्विठ्ठलेश्वरैः ॥
पूर्वं जीवगतोत्कर्षोप्यप्रयोजक इत्यपि । मूलतस्त्वपमाने तु न हीनस्य क्षतिर्भवेत् ॥
अपमानजदुःखं तु क्रियते स्वविचारतः । दास्यं स्मर मनः स्वीयं दासानां नापमाननम् ॥
चेदित्यनेन दौर्लभ्यमङ्गीकारे निरूपितम् । जातं यद्राजपत्नीत्वं तन्न याति कथञ्चन ॥
अन्यैर्वा सा न दुर्वारैर्भोक्तुं शक्या पत्यान्वितैः । न वा तदुपभोगोन्यैः पश्चात्कर्तुं हि शक्यते ॥
अपमाने निग्रहस्तु शिक्षानुमतार्थकः । बहिः संवेदने पश्चाद्दैन्यभावप्रसाधकः ॥
मदनन्यत्वेपि मातुलपत्न्यो ध्रुवम् । मानयन्ति यतस्त्वां हि नापकर्षस्ततो मतः ॥
कदाचिदित्यनेनात्र नित्यता नापमानने । मनःपूर्वकृतित्वेन नित्यताङ्गीकृतौ हरेः ॥
नापमाने प्रयत्नश्च हरेरिच्छा न तादृशी । शिक्षार्थं दण्डनार्थं वा कुरुते न निजेच्छया ॥
इच्छापूर्वकनित्यं हि भवेदेव हि नित्यता । दण्डोप्यनुग्रहः प्रोक्तः सर्वैराप्त एव हि ॥
अपि शब्देन तत्रापि मानसाम्यं निरूपितम् । एवं वाक्यैर्बोधयित्वा दृष्टान्तेन च बोधनम् ॥
क्रियते दृढता यस्मात्तद्बोधस्य सिध्यति ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

अहं समर्पणात्पूर्वमुत्तमः किं स्थितो मनः॥
यतो दोषा निवृत्तास्तु सर्वेषां तत्समर्पणात् । सदेत्यनेन हृदये तदावेशात्कचित्कचित् ॥
जाताप्युत्तमता नैव निरन्तरमभून्मयि । यथा श्रावणशुक्लैकादश्यां कृष्णे पुरःस्थिते ॥
साक्षात्समर्पणे सर्वोत्तमत्वं न तथा पुरा । नन्वास्यरूपाचार्याणां कथनं नैव युज्यते
ईदृशं कृष्णरूपत्वात्सर्वस्योत्तमता यतः । इति चेन्न रसात्मत्वात्तत्स्वरूपं च तत्तथा ॥
यथा भगवतो लीलारसानुभवसिद्धये । मानिनीषु तथारूपं मद्वं तादृग्वचोपि हि ॥
तथावतारे भक्त्याख्यरसानुभवहेतुकम् । रूपं तथा वचश्चापि स्वाचार्यचरणोदितम् ॥
अतो रसात्मके रूपे न कार्यः संशयस्तथा । यतो रसस्वरूपं हि यत्र यादृक् तथैव तत् ॥
किञ्चाधुना चाधमता का वा भाव्या मम त्वया । यतोधमत्वतश्चिच पश्चात्तापो भवेचव॥
ननु सत्यं तथाप्येष कृष्णः सर्वोत्तमः स्वतः । कर्तुं चापि यथाऽकर्तुमन्यथा कर्तुमीश्वरः ॥
अतः कदाचिद्वरणं कुर्याच्चेदन्यथा तदा । का गतिः कुत्र गच्छामि गत्वा वान्यं कमाश्रये ॥
इयं चिन्ता न कर्तव्या—

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥

सत्यसङ्कल्पतो हरिः । स्वाङ्गीकृतिं कृपापूर्णो न कुर्यादन्यथा क्वचित् ॥
केषां सत्या कृतिः केषां वाक् सत्या न विचारितम् । विचारितं हरेः सत्यपदस्तुकथनेन्यथा ॥
कदाचिद्वासदोषेण नान्यथा तद्विचारितम् । अतो वचःश्रुतौ नैवं विधेयं भयमन्यथा ॥
विष्णुः सर्वत्र सत्वेन रक्षकः कथमन्यथा । करिष्यति यतो रक्षा साधारण्या कृतिः प्रभोः ॥
तुशब्देन न भक्तेषु कचिदप्यन्यथा कृतिः । करणं वाप्यकरणं सुखार्थास्तु विवृद्धये ॥
नन्वेवं चेत्स्वतन्त्रत्वं किं दासानां न बाधकम् । स्वतन्त्रा गतचिन्तास्तु कुर्युराज्ञाविलोपनम् ॥
तथासति महान् दोषस्तदर्थमिह चोच्यते । आज्ञैव कार्या दासेन न प्रश्नो न विचारणम् ॥
एवकारेण धर्माणामाज्ञात्वेनैव वै कृतिः । कार्यत्वावश्यकत्वार्थमत्ययान्तपदोक्तितः ॥
सेवकस्तापकुर्वन् वै प्रत्यवायी हि जायते । निरन्तरं तत्कृतिस्तु स्वधर्मत्वेन बोधिता ॥
स्वधर्मो यादृशस्तस्याऽकृतौ दोषोपि तादृशः । वाग्रूपवेदधर्मस्याऽकरणे वाङ्निरूपितः
नरकादिः, स्वरूपात्मधर्मस्याकरणे हरेः । स्वामिद्रोहो महान् दोषः स्वरूपेण विरोधतः ॥
आज्ञाभङ्गो नरेन्द्राणामिति लौकिकवाक्यतः ।

सेवकस्य तु धर्मोऽयं स्वामी स्वस्य करिष्यति ।
आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥

सेवकस्य हरेः सेवां कुर्वतो मार्गवर्तिनः ॥
धर्मोऽयमेव नान्योऽस्ति यदाज्ञाकरणं प्रभोः । तुशब्देनान्यथा धर्मः पुष्टिस्थेषु विलोक्यते,
तदाज्ञालोपमानादि तद्धर्मेर्धर्मेनेशनात् । तथैवात्रापि विज्ञेयं न, धर्मोऽयमितीरितम् ॥
अत एवार्जुनेनोक्तं करिष्ये वचनं तव । न चायमीदृशो धर्मः सन्दिग्धफलसाधकः ॥
यत आज्ञाभिधं धर्मं हरिः स्वीयं करिष्यति । 'अहं त्वा सर्वपापेभ्य' इत्युक्तं हरिणा यतः ॥
अन्ये सर्वेऽपि ये धर्मास्ते विभूतिपराः कृताः । फलदानं विभूतिभ्यस्तेषु सर्वत्र निश्चितम् ॥
ईदृग् धर्मपरित्यागं स्वामिन्नाहुर्मनः प्रति । पश्चात्तापोऽप्यतो योग्यः सर्वथेति निरूपितम् ॥
तदेवाहुर्निजाचार्या मध्यमाज्ञात्रयं हरिः * अदात्, तत्र स्थलं पूर्वाज्ञायां च तन्निरूपितम् ॥
यत्र देहपरित्यागः कर्तव्य इति सोऽब्रवीत् । तत्र बीजं तु सान्निध्याद्धरेर्भावात्मकस्य हि ॥
साक्षात्तद्भावसम्बन्धो विना मार्गोपदेशनम् । ततः स्वरूपप्राकट्यं पुष्टिमार्गस्थितप्रभोः ॥
*ज्ञानं च नाभिलषितं गूढभावस्य वै हरेः । सर्वत्र सर्वजीवानां *तेनैवं प्रभुरुक्तवान् ॥
ततः प्राकृतवल्लभ्या गार्हस्थ्यादौ विमोहनम् । सम्पाद्य स्वीयसान्निध्यं भक्तानामेव कारितम् ॥
उपदेशनमारब्धमाचार्यैः पुष्टिमार्गगम् । ततो मधुवने सर्वा गूढलीला प्रकाशिता ॥
उपदेशेन भक्तेभ्योऽनभीष्टं तदपि प्रभोः । लीलाधारस्वतः स्वस्य तद्वारैव प्रकाशनात् ॥
तद्द्वयं न कृतं कृष्णाऽऽज्ञाया रसविशेषतः । श्रीभागवतगूढार्थप्रकटीकरणात्तथा ॥
दौर्लभ्यस्य तदासक्तेर्न भयं मोक्षितो रतेः । तुशब्देनाधुना नैव तादृगाज्ञां ददाति हि ॥
स्वास्थ्यवाक्ये न संन्यासे कुरुते भावनाशनम् । 'स्वास्थ्यवाक्यं न कर्तव्यं' इत्यतोऽस्मत्प्रभोर्वचः ॥
स्पष्टं च प्रथमाज्ञायाः स्वसंयोगप्रबोधकम् । गङ्गायाः सागरेणात्र यथा योगस्तथा मया ॥
पूर्णभावेन सम्बन्ध इति स्वामिन्प्रलोभनम् । पद्ये द्वितीये यः प्रोक्तोऽपिशब्दस्तेन बोधितम् ॥
एतदाज्ञापनमपि स्वसम्बन्धप्रलोभकम् । पश्चाच्छब्देनैतदाज्ञा विलम्बेन समुद्धृता ॥
स्पष्टं मधुवने प्रोक्तं दुष्टसम्बन्धतस्तथा । तत्र नैवंविधं कार्यं कार्यमित्याशयो हरेः ॥
वनस्थानाच्च निःसरणात् प्रोक्तिर दुष्टता । एतद्द्वयं तु न कृतं तृतीयोऽर्थात्कृतो मतः ॥

* अदात् यत् पूर्वाज्ञायां तत्र निरूपितम् । इति पाठः ।
● एतादृशं प्रभुभावस्वरूपं ज्ञानं प्राप्य सर्वजीवानां स्यादिति एतस्मान्न हरिणाभिलषितम् ।
● एवं देहत्यागरूपम् ।

त्यागो लोकैकविषयो नामदानादिवर्जनात् । सेवापदर्शनाभावात् सहनाद्दुःखदस्य च ॥
नन्वेवं धर्मगमने पश्चात्तापस्तु संभवेत् । इति चेन्न; यतः सेवाकरणात्सेवकोस्म्यहम् ॥

पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

सेवा तु स्वाम्यभिहितकरणेन भवेत्पुनः । स्वामिनैव यदुक्तं मे श्रीभागवतवर्णनम् ॥
पुष्टिमार्गमकरन्दं तदेव क्रियते मया । तदुत्तरं चेत्स्थास्यामि तदा दोषो भविष्यति ॥
न चाज्ञामाप्तसेवायाः करणे धर्मतश्च्युतिः । सेवाकृतेराज्ञयापि स्थितेरन्यविवर्जनात् ॥
तदा केन प्रकारेण पश्चात्तापो भवेन्मम । ननु प्रभूणां लोके तु दृष्टा सेवाकृतावपि
परित्यागकृतिः स्वीयोत्तराज्ञापरिपालने । अत्रापि चेत्तथाभावे पश्चात्तापस्तु सर्वथा
इति चेन्न हरिः कृष्णो द्रष्टव्यो लौकिकेशवत्। स भावाज्ञो हरिर्भावपेक्षास क्षणिको हरिः
न तथा, स तु दोषाढ्यो हरिर्दोषविवर्जितः। सोऽनित्यस्वीकृतिः कृष्णो नित्याङ्गीकरणो मतः॥
स दुःखरूपः कृष्णस्तु पूर्णानन्दो निरूपितः । सोल्पदः पूर्णपरमानन्दसन्दोहदो हरिः ॥
कदाचनेतिशब्देन सोऽस्थिरः स्थिरता हरेः। अतस्त्यागभयाऽभावादनुतापो निवारितः ॥

सर्वं समर्पितं भक्त्या कृतार्थोसि सुखी भव ।

किञ्च, सर्वं लौकिकं हि वैदिकं च समर्पितम् । अहन्ताममते चापि त्वया तत्र समर्पिते ॥
अतः कर्तव्यताऽभावात् कृतार्थस्त्वमभूत्तव। किमर्थं कुरुषे दुःखं किं तवास्ति सुखी भव॥
भ्रमादेवाभवद्दुःखं त्यजाश्रितिश्चममाश्रयः। सेवावशादगमने नातोपोऽलौकिकप्रभोः ॥

प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ।

सेवाप्रियस्य करुणाकरस्य मृदुचेतसः । देहाध्यासादगमने स्वसन्तोषो भवेत्प्रभोः ॥
अतो विदधते चित्तसमाधानं निदर्शनात् । देहे न सत्ता स्थाप्या हि यथा दुहितरि स्वतः॥
जामात्रर्थे पोषणं तु हर्यर्थे तद्वदत्र हि । अयोग्यतायां तच्चिन्ता कर्तव्या रक्षणादिषु ॥
प्रौढा चेत्सफला चिन्ता तस्यैवेति विभुध्यताम् । अतो न देहाध्यासेन देहाद्यर्पणं हरौ
उचितं तद्वत्स्नेहात्स न तुष्येद्यतो वरः प्रत्यग्रभोक्ता, नाऽज्ञातरसस्यायोग्यवस्तुनः ॥
अतः स तु कथं तुष्येदपेक्षायामनर्पणात् । तदाशयपरिज्ञानमात्राच्चेदर्प्यते स्वतः ॥
तदा विशेषसन्तोषस्त्वाज्ञायां मध्यमः स्मृतः । आज्ञायामपि चेल्लोभो देहादेस्तोषणं कथम् ॥
यदर्थं सकलापेक्षा तदभावेऽखिलं वृथा ।

* 'महाप्रभ' पाठ. ।

लोकवच्चेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

ननु देहादिलोभस्तु लोकोत्पन्नस्य जायते ॥
स्वानभिमेवकथने मानोपि भवति भिये । मदोपि प्रियसौभाग्यात्स्वासाधारण्यबोधकः ॥
जायते दोषभावश्च मयी मौढिनशात्पुनः । अतः किञ्चित्रमिति चेन्नैवं चित्तोचितं मयि ॥
अहं तद्दास्यरूपोस्मि भक्त्यात्मा वह्निरूपधृक् । निर्दुष्टः केवलानन्दकरपादादिसङ्गतः ॥
कृष्णाधरसुधासारः परमानन्दरूपवान् । भक्तिदाता समस्तानां स्वीयसान्निध्यमात्रतः ॥
श्रीकृष्णरसमात्रात्मा व्रजस्त्रीहृदयस्थितः । लीलाशतसमाक्रान्तसर्वाङ्गो विस्मृताखिलः ॥
हृदयस्वामिसहितो ह्याविर्भूतस्वदाज्ञया । एतादृशो ममापि स्याल्लोकवच्चेत्स्थितिर्मनः ॥
हृदि किं स्यादिति पुनः स्वयं हृद्येव चिन्तय । तद्दास्यस्य स्थितौ चैवं ममोरपि तथा स्थितिः
इत्यज्ञानं न तदुक्तं हरेरानन्दरूपिणः । अवाच्यत्वादेवमुक्तं स्वयमेव विचारय ॥
ननु जातेऽपराधे तु किं विधेयमशक्तितः । अज्ञात्वा वा यत्ना ज्ञात्वा यत्कृतं नाकृतं हि तत् ॥
अतः कथं सोनुतापो हृदयात्तु निवर्तते । इतिचेन्न हरिः सर्वदुःखहर्ता ह्युपेक्षते ॥
अशक्ये निजभक्तानां स्वयं सर्वत्र साधकः । यतो गजेन्द्रस्याशक्ये स्वयमाविर्बभूव ह ॥
कार्यं च कृतवान् सर्वमतो हरिपदं यतः । एतेन साधनाभावे दैन्यभावोद्भवे पुनः ॥
निःसाधनफलात्मासौ प्रादुर्भवति निश्चितम् । एवकारेण नान्येषां निःसाधनफलात्मता ॥
न वा कृपालुता पूर्णानन्दाभावात्सदास्थितेः । अस्तीति पदतः स्वामे प्रादुर्भूतो निरूपितः ॥
अतो मोहं स्वैरकल्पं मा मागुहि मनो मम । एवं स्वान्तःसमाधानं विधाय स्वसदुक्तिभिः ॥

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः ।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

---

इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः समाप्तः ।

सम्पाद्य स्वस्य नैश्चिन्त्यं स्वीयान् प्रति वदन्ति हि । एवं प्रकारकं वाक्यं हितं फलदमाशु हि ॥
स्वचित्तं प्रति यत्प्रोक्तं तदाकर्ण्य भजन् हरिम् । स्वदोषेप्यपरित्यागी प्रभुरित्यवबोधतः ॥
परित्यागभयाभावान्नो निश्चिन्ततां व्रजेत् । नन्वेवं कथनादेव नैश्चिन्त्यं तु कथं भवेत् ॥
स्वानुभूतेरभावे तु वाक्यमात्रे हि सिध्यति । इति चेदुच्यते स्वीयान्तःसमाधानं स्वदासता ॥
आविर्भूतस्वरूपस्य भोक्तानुप्रबोधने । अनुभूयैतदखिलं मयात्र विनिरूपितम् ॥
नात्र कार्यो ह्यविश्वासो मदुक्तिः सफलात्मभिः । ननु दासत्वकृष्णत्वे विरुद्धे भवतः कथम् ॥
हि मा विचार्य कार्यं वशात्तु स्वस्य कथ्यते । महापुरुषवाक्य कृष्णत्वं चौपचारिकम् ॥

अथवा भाववशतः स्वस्वरूपस्य विस्मृतिः। विरुद्धधर्मता वापि ब्रह्मवत्तत्र रूप्यते ॥
यद्वा व्यामोहसिध्यर्थमेवं रूपनिरूपणम्। एवं हि संशये कार्या सद्भिरेवं समाहितिः ॥
यथा रसात्मनो रूपं हरेर्यत्र यथाविधम्। वचः क्रियापि सर्वैवानुरूपा यत्र यादृशी ॥
तत्र तादृग्विधं रूपमुच्यते न प्रदर्शनम्। अन्यथा न रसात्मत्वं स्याद्घोद्धृत्वं रसज्ञवत् ॥
लोकेपि यत्र नाट्यादौ प्रादुर्भवतिचेद्रसः। स्त्रीवेशादिह तत्रैवमुच्यते सैव वर्तते ॥
एवं हि भगवान् कृष्णो रसात्मा यत्र यादृशः। तद्रसानुभवार्थं हि विशिष्टस्तत्र तादृशः ॥
रसात्मत्वात्तदास्यं च मन्तव्यं तादृशं पुनः। अतो दास्यरसार्थाय प्रादुर्भूतं तदात्मना ॥
भक्त्यात्मकं मुखं तत्र रूपमेव हि तादृशम्। वचोपि तादृशं तत्र सत्यमेव न चान्यथा ॥
यथा वचो हरेः स्वीयदैन्यभावनिरूपकम्। मानापनोदसमयेऽस्मत्प्रभोस्तद्रसात्मनः ॥
तथाचार्येषु वाक्यानि नात्र कश्चन संशयः। वल्लभस्येति नामोक्त्या विश्वासस्थानमुच्यते ॥
हरेः स्वस्मिंस्तथा नास्ति नित्या प्रीतिर्निरूपिता। ईदृक्स्वरूपविश्वासे नैश्चिन्त्यं निश्चितं मया॥
भाग्यभाजां हि विश्वासो भवेच्छ्रीवल्लभप्रभौ। यथा निवेदने चिन्ता नवरत्ने निवारिता ॥
एवमत्र फले चिन्ता स्वकीयानां समुद्धृता। संयोगमानविरहाभिधभावत्रयं स्वतः ॥
अनुभूतं तु संयोगः सेवया त्यागतोऽपरः। आज्ञाकरणतो मानभावोत्र सफलीकृतः ॥
स्वरूपस्फूर्तितः पश्चात्पश्चात्तापो निवारितः। इति श्रीवल्लभाचार्यपदाम्बुरुहरेणुपु—
सक्तचित्तस्य विवृतिर्हरिदासस्य पूर्णताम्। अगमत्तेन ते स्वीयं दृढं कुर्वन्तु मां सदा ॥
अवद्यमनवद्यं वा विचारयतु मे प्रभुः। यत्प्रसादादिदं सर्वं पूर्णतां याति सर्वथा ॥
सन्तोपि कृपया युक्तं मदीयं मूर्खजल्पितम्। श्रीमदाचार्यसम्बन्धात्पश्यन्तु परमादृताः १५१

---

इति श्रीहरिदासोक्तान्तःकरणप्रबोधविवृतिः

समाप्ता।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।

## श्रीदुग्धमल्लात्मजश्रीव्रजराजकृतविवरणम् ।

नत्वा स्वाचार्यपादाब्जं सर्वाभीष्टप्रदायकम् ।
तदुक्तबोधवाक्यानि व्याख्यास्ये बोधसिद्धये ॥ १ ॥

*(अथ) श्रीमदाचार्यचरणाः (स्वीयान् प्रति नवरत्ने 'चिन्ता कापि न कार्या' इत्याज्ञाप्य तस्या अन्तःकरणधर्मत्वादन्तःकरणस्य च स्वभावचञ्चलत्वाद्दृथाध्यानादिसंभवे पूर्वोक्ताज्ञाभङ्गसम्भवात्त्निवेदनं कृतमप्यकृतं स्यादिति तदभावाय प्रमेयबलेन यथा भगवान् भक्तान्तःकरणसम्बन्धी सन् फलप्रकरणे मद्यानतिवारणं कृतवाँस्तथात्र) स्वीयान्तःकरणबोधार्थं (तदभिमुखीकृत्य) समौद्धिस्वस्वरूपज्ञापनपूर्वकमन्तःकरणप्रबोधं निरूपयन्त्येकादश श्लोकैरेकादशेन्द्रियबोधकत्वेन । अन्तःकरणेति ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात्परं नास्ति दैवं वस्तुतो दोषवर्जितम् ॥ १ ॥

हे अन्तःकरण ? मदीयानामिति शेषः (समाप्तौ 'भक्तो निश्चिन्ततां व्रजेदि'त्युपसंहाराल्लोध्यः) मद्वाक्यं सावधानतया सावधानीभूय शृणु शृणुष्वेत्यर्थः । स्वाचार्यत्वेनाप्तोक्ता । श्रवणे सावधानत्वोक्तिः श्रवणानन्तरं तथाकरणार्थम् । अन्तःकरणस्यैकवचनं स्वमार्गे सर्वेषामेकरूपत्वज्ञापनाय जात्यभिप्रायेण । (अत्र सर्वे प्राज्ञाः स्वान्तःकरणमेव बोधनीयत्वेनाङ्गीचक्रुः । तदपि श्रीवल्लभाष्टके रूपद्वयेनावतारबोधनात्सर्वोत्तमे 'स्वास्यं प्रादुर्भूतं चकारे'त्युक्तेश्च, मुखान्यत्वाराभिप्रायेण सङ्गतमेव,) एवं स्वीयानामन्तःकरणं सम्मुखीकृत्य बोधवाक्यमेवाहुः । कृष्णात्परमिति । कृष्णात् 'कृषिर्भूवाचकः' इत्यस्य ब्रह्मानन्दात्मकतया विवरणेन व्रजरत्नाङ्गनानां भावात्मकात् (परमुत्कृष्टं दैवं देवानां क्रीडाकृतां समूहो वा, 'दैवं दिष्टं भागधेयं भाग्यमि'तिकोशात्तामां भाग्यरूपं वा । नास्ति इतरं) नास्तीत्यर्थः । ननु किं स्तुतिरेवेयमित्याशङ्कायामाहुः वस्तुत इति । तत्रोक्तस्य(वाचा वास्तव)त्वार्थं विशेषणमाहुः—दोषवर्जितमिति । दोषैर्वर्जितं रहितमित्यर्थः । (तथा चेदं तद्वास्तवत्वे बीजम् । किञ्च;) कृष्णपदात् सदानन्द

*( ) विवरणमिदं श्रीमद्व्रजराजविवरणं. ग्रन्थान्तर मध्यादिति ज्ञेयम् ।

कृस्तेन यथा गोपिकार्थं कोटिकन्दर्पलावण्यं प्रकटीकृत्य प्रकटस्तथा सर्वत्रापि तदर्थं प्रकटो भविष्यतीति ज्ञापितम् । तेनान्यत्र क्रीडारूपत्वं नास्त्येवेति जीवानामन्यत्र नायकभावेन भजनं दोषरूपमेवेति भावो दोषवर्जितमित्यनेन ज्ञापितः । अत एव 'वीरयोषिता'मित्यत्र 'व्रजनितम्बिनी'वाक्यव्याख्याने श्रीमदाचार्यैर्'न हि कृष्णादन्य एवं सम्बोधनमर्हती'ति निरूपितम् । अत्र श्रीमहिषीभिरपि 'त्वक्श्मश्रुरोमे'तिपद्येनान्यत्र कान्तभावस्य दोषरूपता निरूपिता । ( तथा च स्वक्रीडानुरोधेन स्वीयभाग्यरूपतया च स्वयमेवास्माकं करिष्यतीति निश्चित्य चिन्ता न कार्येत्यर्थः । )

(ननु सत्यमेवं तथापि भगवतो ब्रह्मश्रुत्यादिदुरापचरणरेणुत्वे स्वतुच्छत्वे च स्फुरिते सोत्पद्येतैवेति कथं तन्निवृत्तिरित्याकाङ्क्षायां तन्निवृत्त्यर्थमेवं) दोषरहितस्वरूपं विचार्य तत्र मानापेक्षादिदोषराहित्येनाज्ञैव कार्येति सार्द्धैस्त्रिभिर्विदन्तः प्रथमं (तुच्छत्वस्फूर्तेरकिञ्चित्करत्वाय निदर्शनमाहुः,)चाण्डाली चेदिति ।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमाने वा मूलतः का क्षतिर्भवेत् ॥ २ ॥

चाण्डाली चेत्कदाचिद्राज्ञा मानिता सती राजपत्नी च जाता । चकारेण स्वस्यापि तथाभिमानोत्पत्तिर्जातेति ज्ञाप्यते । ( तदा ) तादृश्याः कदाचिदपमाने वा मूलतो राजपत्नीत्वतः का क्षतिर्भवेत् ? न कापीत्यर्थः । माने कारणं राजपत्नीत्वं न तु चाण्डालीत्वम् । राजपत्नीत्वेपि कारणं राजसम्माननं न तु स्वधर्मः कोपि । तस्मात्तत्कृतापमानस्यापि न राजपत्नीत्वान्यथाकारित्वशङ्का । यथा राजपत्नीत्वसम्पत्त्यनन्तरमपमानेपि न तद्धानिस्तथात्र समर्पणानन्तरं ( परीक्षाद्यर्थं ) द्वितीयरसपूर्त्यर्थं वा भगवतापमानेपि कृते स्वस्य पुनरन्यभावो न भविष्यति । समर्पणेन यो भावो जातः स तु जात एव, ( पुनर्यदा परीक्षादिपूर्त्तिः ) संयोगरसदानेच्छा ( वा ) भविष्यति तदा पुनस्तथैव मानप्राप्तिरपि भविष्यतीति विचार्यम् । ( तथा द्वितीयव्याख्यानरीत्या राजपत्नीत्वमिव समर्पणानन्तरं स्वस्य सेवायोग्यत्वमेव विचार्यं, न तु चाण्डालीत्वमिव स्वतुच्छत्वमपि विचार्यम् । भगवता पुष्टिमार्गस्य स्वार्थं प्रकटितत्वेन स्वोरीचिकीर्षितजीवदोषानादरणपुरःसरं तदङ्गीकरणे अन्तरा च जीवदोषोद्भासकौ भगवानेनेति न्यायेन विलम्बेपि पूर्वात्परबलीयस्त्वन्यायेन नाङ्गीकारतिरस्कारो, नापि दोषमानल्पमिति न तुच्छत्वाऽवसर इत्याश)येनाहुः । समर्पणादहमिति ।

१ (किञ्च यथा राजसम्पत्त्यनन्तरं पूर्वस्वरूपं न विचार्यं, तद्विचारे सति स्वदीनत्वे स्फुरिते तस्य पतानिः स्यात्तथा समर्पणे कृतेपि स्वस्वरूपविचारेण प्रभुः कृपां करिष्यति न वेति दीनत्वं न विचार्यम् । ) इति श्रीपुरुषोत्तमचरणैर्व्याख्या पङ्क्तय स्वहस्ताक्षरग्रथितपत्रे सन्ति ।

समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।
का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥

समर्पणात् पूर्वं किमहं सदा उत्तमः स्थितः ? अपि तु न । तथा च समर्पणात् पूर्वं येन भगवदुत्तमानापेक्षा स्यात्ताहग्भावयुक्तस्तु न स्थितः । तदनन्तरमेव तथाजातस्त्वेतावत्तानेपि (मम) काधमता भाव्या (भाविनी, विभावनीया वा)। यतः समर्पणानन्तरं पश्चात्तापो भवेत् ? । ......कदाचित्कर इत्यनेनाश्वासनार्थं स्वसहजधर्मं आगन्तुकधर्मश्च स्मारितः । अतः परमर्द्धेन नित्याङ्गीकाररूपं भगवद्धर्मं तदर्थं स्मारयन्तस्तेन, भक्तुतमानकरणात्मकस्वरूपसम्पत्तिर्भविष्यति, पुनरन्यथा सा न भविष्यत्येव, भगवदङ्गीकारस्य नित्यत्वादित्याहुः । सत्यसङ्कल्पत इति ।

सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।
आज्ञैव कार्या सततं स्वामिद्रोहोन्यथा भवेत् ॥ ४ ॥

सत्यसङ्कल्पतो विष्णुर्व्यापकः, अन्यथा तु न करिष्यति । यथा 'ये यथा मां प्रपद्यन्ते,' 'द्विः स्थापयति नाश्रिता(नि'त्यादिः सङ्कल्पः सत्यो विषयाव्यभिचारी, तथा) 'मां प्रपन्नो जनः कश्चिन्न (भूयोर्हति शोचितु')मित्यादि(रपि)भगवतः सत्य एव सङ्कल्पस्तेन पुनस्तं (प्रपन्नमन्य)था न करिष्यति । (शोकयुक्तं न करिष्यतीत्यर्थः । किञ्च;) विष्णुर्व्यापकस्तेन विप्रयोगसमयेपि रसदानं करिष्यति, 'मया परोक्षं भजते'त्यन्यायेनेति ज्ञाप्यते । एवं (स्वस्वरूपधर्मं भगवद्धर्मञ्च स्मारयित्वा स्वीयसेवकस्य रक्षणाय यतः) प्रभुरन्यथा न करिष्यत्यतो भावात्मकं समर्पणमनुसन्धायापमानं क्लेशं परित्यज्य, भगवान् यथेच्छापूर्वकमाज्ञापयति तथैव कार्यमित्याहुः । आज्ञैवेति । सततं निरन्तरमाज्ञैव कार्या । अन्यथा तदकरणे स्वामिनः प्रभोर्द्रोहो भवेत् । भगवता स्वकार्यकरणार्थं (स्वदासीय)देहकरणात्तदाज्ञाया अकरणे बाधकमेव स्यादिति भावः । ('भगवद्दत्तं देहं भगवत्कार्यार्थं जीवो धृत्वा तिष्ठती'ति पुरञ्जनोपाख्यानाज्ज्ञेयम् ।) सिद्धमाहुः । सेवकस्येति ।

सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।

सेवकस्यायमेव धर्मो यदाज्ञाकरणम् । तु शब्देनान्यधर्मनिवृत्तिः सूच्यते (एवं पादत्रयेण ...................... दासधर्मो भगवच्चोपदिष्टुरिति, तुना पक्षान्तरनिरासपूर्वकं .............) एवं सेवकधर्ममुक्त्वा प्रभुधर्मस्वरूपमाहुः । स्वामी प्रभुः स्वस्य ............ करिष्यतीति स्वपरोक्षितकरणं प्रभुधर्म एव । सेवकधर्मस्तु तदाज्ञाकरण-

मेवेति तुशब्देन ज्ञाप्यते । ( संयोगपृथक्त्वेनात्रापि तु शब्दस्यानुषङ्गः । यद्वा, स्वामी भगवान् स्वस्यात्मीयस्य दासस्य करिष्यति, स्वाज्ञापालनाग्रहं विलोक्य दयया तं धर्मं निर्वाहयिष्यतीत्यर्थः । अतस्तदर्थमपि न चिन्तावसर इति भावः । एवं सार्धैस्त्रिभिराज्ञैव कार्येति सम्यगुपदिश्य, ) एवं भगवदाज्ञाप्रकरणसंतुष्टप्रभुसम्पादितेन स्वस्योत्तमत्वेन कदाचिदाज्ञान्यथाकरणेपि स्वस्य तादृक्सेवकत्वमेव भाव्यं, न त्वन्यथा विचारणीयं, पश्चात्तापो वा कर्तव्यो, यतः प्रभुरेव स्वेच्छातस्तथाकारयतीत्याशयेन स्वदृष्टान्त-माहुः । आज्ञेति ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥

या आज्ञा पूर्वं गङ्गासागरसङ्गमे गङ्गासागरसमीपे जाता, पश्चाद्या मधुवनेपि जाता, तदाज्ञाद्वयं मया न कृतम् । तु शब्दस्त्वाज्ञाद्वयाकरणस्य भगवदिच्छाविषयरूपत्वज्ञापनार्थः । ननु, आज्ञाद्वयं किं विषयकमित्यपेक्षायामाहुः । देहदेशपरित्याग इति । गङ्गासागरसङ्गमेऽन्यत्र गमनकृतस्वनिकटस्थित्यभावजकोपेन देहपरित्यागविषयिणी । सापि पूर्वोक्तप्रकारेच्छाजनितक्षणवियोगासहिष्णुतया जाता । ( एवं मधुवने मथुरायां देशत्यागविषयिणी । ) स्वाचार्यैस्तु स्वीयशिक्षार्थकविप्रयोगतापानुभवार्थं दूर एव स्थितिः क्रियते । भगवता स्वार्थं तथाज्ञप्तम् । श्रीमदाचार्यैः स्वसौभाग्यज्ञापनाय तदाज्ञाद्वयमपि न कृतम् । तृतीया लोकगोचरा लोकपरित्यागविषयिणी जाता, सा कृतेति भावः । ( ''''''''''पाठे, तृतीय आज्ञाविषयः, स चोभयसमुदायरूपः सन्यास इति व्याख्येयम् । तथा च द्वयं न कृतमप्येवं कृतं, तदपि मया तदवतारेण । अतो मन्निदर्शनं पुरस्कृत्य अन्येन तथा न कार्यम्, किन्तु यथा प्रभ्वाज्ञा तथैव कार्यमिति-भावः । यद्वा, न कृतमित्यत्र काकुः । 'दिह' उपचये, 'दिश' अतिसर्जने, देह उपचयः, देशो दानम् । अयमर्थः, भगवता श्रीभागवतार्थप्रकटनाय पूर्वमाज्ञप्तं, तत्सूक्ष्मटीकाकरणेन कृतम् । ततः सुबोधिन्यामुपचयो अन्यत्राहुत्यापा आरब्धस्तदा देहपरित्याग आज्ञप्तः । ततस्तद्विहाय निरोध एव विवृतः । ततो मुक्तौ विव्रीयमाणायां देशपरित्याग आज्ञप्तः । तदा विमोचने स्वाश्रयमापणे च विवृते फलं द्वयमेव स्यादिति तदभावाय तादृशमाज्ञाद्वयं मयापि स्वाग्रहत्यागेन कृतञ्चेदन्येन तु सर्वथा कर्तव्यमेवेति भावः । )

( एवमाज्ञाया अकरणकरणे उक्त्वा ) स्वस्याज्ञाद्वयाकरणजपश्चात्तापाभावायमाहुः । पश्चात्ताप इति ।

पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।
लौकिकप्रभुवत्कृष्णो न द्रष्टव्यः कदाचन ॥ ७ ॥

तत्राज्ञाद्वयाकरणे पश्चात्तापो मया कथं कर्तव्यः ? । यतोहं सेवकोस्मि । तदपि स्वस्य सेवकत्वप्रौढ्यैव कृतम् । न चान्यथा, न केवलं स्वप्रौढ्येति । तथा च ममेदं ( शोभते नत्वन्यस्येतिभावः । यद्वा, आज्ञाद्वयाकरणान्ममापि पश्चात्तापश्चेदन्यस्य त्वत्यन्त एव स्यादतस्तथान्येन न कार्यमितिभावः )। ननु सेवकत्वे सति स्वप्रौढ्या आज्ञाया अकरणे भगवानप्रसन्नो भवेदि(ति कथं भवतां शोभाकरं, यदि शोभाकरं कथमन्येन न कार्यमि)त्याशङ्क्य भगवतोऽलौकिकत्वेन तदभावमाहुः । लौकिकप्रभुवदिति । लौकिकप्रभुवत् कृष्णः सदानन्दः फलरूपः कथञ्चन केनापि प्रकारेण न द्रष्टव्यः । तथा च, यथा लौकिकप्रभुणा स्वोक्ताकरणे क्रोधो भवति भगवतस्तथा न भवति । यतस्तद्रसानुभवार्थं प्रभुरेव तथा प्रेरयति । अत एव भगवता पार्थं प्रत्युक्तं 'कर्तुं नेच्छसी'त्यारभ्य 'मायये'त्यन्तम् । लौकिकानामतथाभावात् क्रोधो भवति । (अतो भगवदप्रसन्नतापा अभावादस्माकं शोभाकरम् । अन्यस्य तु तादृग्योग्यताया अभावेन भगवदिच्छाज्ञानाभावादनुचितमेवेत्यर्थः )।

(एवमाज्ञाकरणतदकरणव्यवस्थामुक्त्वा तेन यत् सिद्धं तद् वदिष्यन्तो, ) भगवति सर्वसमर्पणं जीवधर्मः, पश्चात्तु प्रभुः स्वेच्छया यत्करिष्यति तत्करोतु, त्वयापि स्वधर्मः कृतोस्तीति निश्चिन्त्येन स्थीयतामित्याहुः । सर्वमिति ।

सर्वं समर्पितं भक्त्या कृतार्थोसि सुखी भव ।
प्रौढापि दुहिता यद्वत्स्नेहान्न प्रेष्यते वरे ॥ ८ ॥
तथा देहे न कर्तव्यं वरस्तुष्यति नान्यथा ।

भक्त्या स्नेहेन सर्वं समर्पितमतः कृतार्थोसि सुखी भव सुखेनैव स्थीयताम् । परिणामे सुखमेवेति सुखी भवेत्युक्तम् । सर्वपदेन लौकिकं रसाधिकरणदेहसम्बन्धिभावरूपवर्गोपि समर्पित इति ज्ञापितम् । समर्पणे कृते देहेपि सम्बन्धस्य जातत्वाद्देहेनैव सेवा कर्त्तव्येति लौकिकदृष्टान्तनिदर्शनपूर्वकं (तत्कर्त्तव्यत्वमाहुः) । प्रौढापीति । प्रौढापि स्वयोग्यापि दुहिता स्वस्य स्नेहास्पदं परं यद्वत् प्रेष्यते तथा देहं न कर्तव्यम् । तस्य देहस्नेहेन भगवत्सेवायां देहस्याविनियोगो न कर्त्तव्यः । किन्तु देहेन लौकिकेन भावभावेन च भगवत्सेवोपयोगेनैव कर्त्तव्या । तदकरणे वरः प्रभुरन्यथा न तुष्यति । यथा स वरः स्त्रियं विना न तुष्यति तथा प्रभुरपि न तुष्यति । अत्रापि

समर्पणाऽनन्तरं गुरुयो भावः स एवोच्यते। एतज् ज्ञापनार्थमेव पूर्वं निदर्शने राजपत्नीत्वमुक्तम्। द्वितीयेनापि तथैवोक्तम्।

(एवं देहस्नेहत्यागपूर्वकं देहेन सेवैव कारणीयेति निर्द्धार्य पूर्वं भगवता परीक्षार्थं कृते विलम्बे मम कथं गतिर्भवित्रीति या चिन्ता कृता, सा ते गुणायैव जाता, न तु दोषाय। न ह्येवानङ्गीकृतौ चिन्ता भवति, किन्त्वङ्गीकृतावेवेत्याश्वासनाय दृष्टान्तमुखेन परिचायकान्तरं वदन्त) एतत्सेवाद्यभावे सर्वं व्यर्थमेवेत्याहुः। लोकवदिति।

लोकवचेत्स्थितिर्मे स्यात्किं स्यादिति विचारय ॥ ९ ॥
अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन ॥ १० ॥

चेत्, समर्पणाभावे मे स्थितिर्लोकवत् सर्वसाधारण्येन स्यात्तदा किं स्यात्, फलमितिशेषः। इति विचारय। किं स्यात्? न किमपीत्यर्थः। (तथा च, तथा स्थित्यभाव एव गुणपरिचायक इति भावः)। नन्वेतद्भावस्य सर्वफलरूपत्वमस्तीति सत्यम्, तस्य परं भावस्याशक्यत्वात्तत्प्राप्तिः कथं स्यादि(तिचिन्ता तु भवतीतिचेद्विमेपि तदा तादृशभीते भगवानपि दयालुरेवे)त्याहुः। अशक्य इति। अशक्ये सति हरिरकारणसर्वदुःखहर्त्ताऽस्त्येव, शरणमिति शेषः। अतस्तदभावे सर्वं व्यर्थमिति लौकिकेन विचारेण कथञ्चन तत्प्राप्त्यर्थं मोहं मा गाः, मा प्राप्नुहि।

एवं प्रबोधं निरूप्या(तः परं शङ्कापिशाच्यनुदयाद्)पसंहरन्ति। इतीति।

इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः।
चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः।

इतीति समाप्तौ प्रकारे वा। श्रीकृष्णे दास्यं गतस्य वल्लभस्य रसरूपत्वेन प्रियस्य चित्तं (स्मृतिजनकमन्तःकरणं) प्रति हितं हितकरं वचोस्तीत्यर्थः। यद्वचः आकर्ण्य, आसमन्तात्तात्पर्यपूर्वकं श्रुत्वा भक्तो भूत्वा, निश्चिन्ततां निश्चिन्तस्य भावमलौकिकत्वं व्रजेत्।

चित्तप्रबोधवाक्यानि स्वाचार्योक्तानि सर्वदा।
तिष्ठन्तु हृदये येन प्रसीदति हरिः स्वयम् ॥ १ ॥

इति श्रीमत्प्रभुचरणरेणुधन(श्रीश्यामलालात्मजश्रीव्रजराज)-
कृतम् अन्तःकरणप्रबोधविवरणम्
सम्पूर्णम्।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीवल्लभाचार्यचरणविरचितान्तःकरणप्रबोधः ।



## श्रीदशदिगन्तजैत्रश्रीपुरुषोत्तमचरणकृतं विवरणम् ।

जन्तुस्वभावदोषोत्थमन्तुचिन्ताकुलान् स्वकान् ।
अवन्तः श्रीमदाचार्याः सन्तु मत्स्वान्तगोचराः ॥ १ ॥

अथ श्रीमदाचार्यचरणा उपदिष्टसेवाया निर्दोषत्वाय सिद्धान्तरहस्ये ब्रह्मसम्बन्धेन सेवाकर्तॄणां २ पूर्वेषां देहजीवयोः दोषाणामकिञ्चित्करत्वमग्रे दोषासंसर्गोपायं च भगवदुक्तं निरूप्य, सेवाया आधिदैविकीत्वाय नवरत्ने चिन्तानिवृत्त्युपायकथनमुखेनोद्वेगाख्यमतिबन्धकनिवृत्तिप्रकारञ्च निरूप्य तथा सेवाकरणे भगवत्पादकथ्यस्यानुभावप्रदर्शनस्य चावश्यंभावात्तस्मिन् सत्यपि यदा प्रारब्धादिवशात्पूर्वदोषोपोद्बलनं तदा पात्रस्य स्वल्पत्वान्महत्याः कृपायास्तस्मिन्न माने तस्य स्वोत्कर्षस्फूर्तौ भगवदाज्ञाभङ्गादावपराधे जाते भगवतोऽप्रसन्नता भवेत्तथापि भगवद्धर्मरूपायाः सेवाया नित्यं क्रियमाणत्वात् 'न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि,' इत्येकादशे भगवद्वाक्यात् सेवाया नाशाभावेनापराधजनितपश्चात्तापोत्पत्तौ चिन्तासम्भवे क्रियमाणकरिष्यमाणसेवयोरनाधिदैविकीत्वं स्यादिति तन्निवृत्त्यर्थमस्मिन् ग्रन्थे विचारात्मकं साधनमुपदेष्टुं तत्र विश्वासाय स्वाख्यायिकां मध्ये वदिष्यन्तो 'मनोवशेऽन्ये ह्यभवंस्म देवा मनस्तु नान्यस्य वशं समेति, भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेव' इति भिक्षुगीतावाक्यान्मनस एव दुष्टत्वमुत्पादकतया तस्यैव साधनीयत्वं निश्चित्य स्ववाक्यश्रवणार्थं स्वीयानामन्तःकरणमेवाभिमुखीकुर्वन्ति । अन्तःकरणेत्यादि ।

अन्तःकरण मद्वाक्यं सावधानतया शृणु ।
कृष्णात् परं नास्ति देवं वस्तुतो दोषवर्जितम् ॥ १ ॥

यद्यप्यन्तःकरणपदं स्वपरान्तःकरणसाधारणं तथाप्युपसंहारे 'भक्तो निश्चिन्ततां व्रजेदि'ति निश्चयनेन मन्यकरणस्य तादर्थ्यं निश्चायिते परान्तःकरणबोधन एव तात्पर्यानुगत्या स्वीयानां भक्तानामेव यदन्तःकरणं तद्धरणस्यैवोचितत्वात्तदेव ग्राह्यम् । श्रीगो-

१ (क-ख-पुस्तकयोः) 'पूर्वेषां देहजीवयोः' इति स्थाने पाठः । पूर्वेषां देहजीवयो-रित्यादि' इत्यधिकपाठः ।

कुलनाथास्तु स्वसौभाग्यप्रदर्शनार्थं स्वीयानां भक्तिमार्गप्रदर्शनार्थञ्च श्रीमदाचार्यचरणैः स्वान्तःकरणमेव बोध्यत इत्याहुः । तथैवान्येपि सर्वे । श्रीरघुनाथास्तु स्वान्तःकरणव्यपदेशेनान्येषामेवान्तःकरणं बोध्यत इत्याहुः । ममत्विदमेव रोचते । सौभाग्यप्रदर्शनस्य सुबोधिन्यारम्भस्थेन 'अयं तस्य विवेचितु'मिति श्लोकेनैव कृतत्वात्ततोधिकदर्शनस्य प्रकृतानुपयोगात् । भक्तिमार्गप्रचारार्थमाविर्भूतत्वेन भक्तान्तःकरणस्यैव साधनीयत्वादिति । तथाचायमर्थः । हे अन्तःकरण ? इन्द्रियान्तरदुर्जेय ? त्वं मद्वाक्यं 'योन्तर्बहिस्तनुभृतामि'त्येकादशीयवाक्याद्'आचार्यचैत्यवपुषा' हुताशनरूपेण स्वगतिं व्यञ्जतो वस्तुतः कृष्णत्वेन चाप्ततमस्य मम वाक्यं वक्ष्यमाणं त्वद्धितकरं ग्रन्थरूपं सावधानतया शृण्वाकर्णयेति । एवमभिमुखीकृत्य ब्रह्मसम्बन्धकरणपूर्वकसेवया स्वस्य व्रजभक्तमार्गीयत्वेन भगवदनुभावदर्शित्वादिना च स्वस्मिन्नुत्कर्षस्फूर्त्या भगवदाज्ञादौ व्रजस्थदृष्टान्तेन प्रमाद्यन्तं प्रति तदभावाय तेभ्योपि भगवत उत्कर्षं पूर्वं भावयितुमाहुः । कृष्णादित्यादि । वस्तुतः श्रुत्यादिरूपतया निर्गुणसेवया च लोकवेदोक्तदोषवर्जितं दैवं प्राप्तरासक्रीडानां देवीनां कदम्बकं कृष्णात्परं भिन्नं न । उत्कृष्टं च न । 'तस्मान्न भिन्ना एतास्तु' इति तापनीयश्रुतेः, उत्कर्षस्य निरवधिसदानन्दरूपे भगवत्येव विश्रान्तेश्च । अतस्तदीयतया तद्दृष्टान्तेन स्वोत्कर्षं विभाव्य प्रौढ्या भगवद्वचनभिन्नेतं न कार्यम् । तासामप्यागन्तुकदोषोत्पत्तौ ताः प्रत्यपि पञ्चाध्याय्यां 'प्रशमाय प्रसादाय तत्रैवान्तरधीयते'तिवाक्येन भगवत्तिरोधानस्योक्तत्वादिति । अत्र भावनार्थकक्रियापदाभावाद्यद्यपि वाक्यस्य साकाङ्क्षत्वं तथाप्यग्रे उपान्त्ये विचारयेति क्रियाया वक्ष्यमाणत्वादेतेष्वान्तरवाक्येष्वपि दूरस्थापि सैव योज्या, न तु क्रियान्तरमध्याहार्यम् । 'दूरान्वयापेक्षयाऽध्याहारस्य गुरुत्वात्' । तथा चेति विचारयेत्यर्थः । एवमग्रे यथायोग्यं बोध्यम् ॥ १ ॥

एवं प्रौढिहेतुं निवार्यं तस्य जीवस्य पुनस्तथात्वाभावाय दैन्यसिद्ध्यर्थं स्वभावतो निकर्षं बोधयितुं दृष्टान्तमाहुः । चाण्डालीत्यादि ।

चाण्डाली चेद्राजपत्नी जाता राज्ञा च मानिता ।
कदाचिदपमानेपि मूलतः का क्षतिर्भवेत् ॥ २ ॥

प्रारब्धवशादतिदुष्टकुलोत्पन्नापि, केनचिद्गुणेन कथञ्चिद्राजपत्नी, राजा पतिर्यस्यास्तादृशी, राज्ञः पत्नीव पत्नी, पतनात् पत्नी, राज्ञो भोग्या सती राज्ञा मानिता च जाता । तस्याः कदाचित् कालविशेषे अपमाने; अर्थाद्राज्ञा कृते चाशब्दादनपमानेपि मूलतो अपमानहेतुभूताच्चाण्डालीत्वादनपमानहेतुभूताद्राजपत्नीत्वाच्च का क्षतिः का हानिर्भवेत् ? न कापीति विचारयेत्यर्थः । एतस्य वाक्यस्याऽऽचार्यविषयत्वं यैरङ्गीकृतं; तन्मते न

"'मृगयुरिव कपीन्द्र'मित्यादौ क्लेशवशाद्यथा भक्तैर्भगवति दोष आरोपितस्तथाऽऽचार्यैः स्वस्मिन्निति बोध्यम् ॥ २ ॥

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिके तत्साम्यं वदन्तस्तादृग्विचारफलमाहुः । समर्पणादित्यादि ।

**समर्पणादहं पूर्वमुत्तमः किं सदा स्थितः ।**
**का ममाधमता भाव्या पश्चात्तापो यतो भवेत् ॥ ३ ॥**

समर्पणाद् भजनार्थकसंस्काररूपात् स्वसर्वसहितात्मनिवेदनाद्राजपरिग्रहस्थानीयात् पूर्वमहं प्राकृतः, चाण्डालीवत्सहजागन्तुकदोषदुष्टः, किं सदा सर्वकालमभिव्याप्य उत्तम उत्कृष्टः स्थितः ? । किं शब्दः काकुं स्फोरयति । अपि तु न स्थितः । किन्तु समर्पणादेवोत्कृष्टो राजपत्नीत्वाच्चाण्डालीवदुत्कर्षवान् जातः । अतः स्वपूर्वस्थितिविचारे राजकृतापमानतुल्यभगवदप्रसन्नतायां जातायां मम चाण्डालीवद्दुष्टस्याधमता निकृष्टता का भाव्या ? । कतमा भवत्री ? । यतो यया कृत्वा; पश्चात्तापस्तज्जनितखेदविशेषो मे भवेत् ? । नहि प्राकृतरूपा; तस्याः सहजत्वात् । नाप्यभगवदीयरूपा; भगवता अन्यक्तत्वात् । अङ्गीकारात्मकस्यापि भगवद्धर्मस्य नित्यत्वात्; संसारावेशरूपस्य भगवत्त्यागकार्यस्याभावेनात्यागनिश्चयाच्च; तेनैवाग्रिमात्यागानुमितेश्च । अतो जातायामप्यप्रसन्नतायां पूर्वदशात उत्तमैव दशास्ति; नत्वधमेति पश्चात्तापनिवृत्त्यर्थं विचारय । तथा चैवं विचारे भगवत्प्रसादसाधनं दैन्यमप्युद्बुद्धं भविष्यतीत्यप्रसन्नतापि निवर्त्स्यत इत्यर्थः ॥ ३ ॥

एवं नीरधर्मपुरस्कारेण विचारमुपदिश्य भगवतोऽप्रतिहतेच्छत्वानुसन्धानाय भगवद्धर्म•पुरस्कारेण तमुपदिशन्ति । सत्येत्यादि ।

**सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।**
**आज्ञैव कार्या सततं स्वामिद्रोहोऽन्यथा भवेत् ॥ ४ ॥**

विष्णुर्व्यापकः, अन्तर्यामितया सर्वान्तः प्रविश्य यो भगवान् सत्यसङ्कल्पतः सत्यो निरपायोऽव्यभिचारी यः सङ्कल्प आलोचनमिदमेवं करिष्यामीत्याकारकं तस्मादन्यथा प्रकारान्तरेण न करिष्यति । तुः शङ्कानिरासे । भगवन्निवेदितात्मनाम् आत्मेत्यस्मदभिनिवेदिनां तदनुचितं न करिष्यति इति शङ्का न कर्तव्या । यतः स तेषामीश्वरो नियामकोऽपि; अतस्तेषां तद्धितार्थम् । अयं तु तत्संकल्पः शङ्कानिरास उत्तरार्धे हेतुत्वेन प्रविशति, स्वसङ्कल्पात्स्वोचितमेव करिष्यति । अत एवं

• ( [illegible] )

शङ्कानिरासाद्धेतोः सततं प्रमादराहित्येन निरन्तरं; आज्ञैव कार्या । अन्यथा प्रमादेनाकरणे स्वामिद्रोहो महानपराधो भवेत् । अत्रापि 'इति विचारये'ति पदं सम्बध्यते॥४॥

सेवकत्वपुरस्कारेण पुनर्विचारान्तरमुपदिशन्ति । सेवकस्येत्यर्द्धेन ।

सेवकस्य तु धर्मोयं स्वामी स्वस्य करिष्यति ।

तु पुनरयं वक्ष्यमाणः सेवकस्य धर्मस्तं व्यक्तीकुर्वन्ति । स्वामी स्वस्य करिष्यतीति । स्वामी भर्ता स्वस्यात्मीयस्य मम करिष्यति, मदर्थं यद्यदालोचितं तत् करिष्यति । अत्रापि तथा सम्बन्धः ।

सेवकत्वविचारस्यावश्यकत्वाय तेनोपदेशे विश्वासार्थं स्वाख्यायिकामुपदिशन्ति द्वाभ्याम् ।

आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे ॥ ५ ॥
यापि पश्चान्मधुवने न कृतं तद्द्वयं मया ।
देहदेशपरित्यागस्तृतीयो लोकगोचरः ॥ ६ ॥
पश्चात्तापः कथं तत्र सेवकोहं न चान्यथा ।

आज्ञेत्यादि । तुरवधारणे । पूर्वमेव गङ्गासागरसङ्गमप्रदेशे समीपे वा या आज्ञा जाता पश्चात्तदुत्तरकाले मधुवने मथुरायामपि याज्ञा जाता, तद्द्वयं मया भगवता स्वात्मानुभावप्रकटनार्थं श्रीभागवतगूढार्थप्रकटनार्थं चाज्ञप्तेन न कृतम् । तयोर्विषयः क इत्याकाङ्क्षायां तयोर्विषयमाहुः । देहदेशपरित्यागः । द्वन्द्वान्ते श्रूयमाणस्य परित्यागशब्दस्य प्रत्येकमभिसम्बन्धः । तथा च पूर्वा देहत्यागविषयिणी, द्वितीया देशत्यागविषयिणीति सिद्ध्यति । तदकरणे बीजन्तु नाभिमानो न वा शास्त्रविरोधः । किन्तु, श्रीभागवतार्थप्रकटनार्थाज्ञाकार्यसम्पत्तिरेव । नहि देहे त्यक्ते साज्ञा सिद्ध्यति; वाग्व्यापारस्य तद्धेतुकत्वेन तदभावे तस्याप्यभावात् । प्रकारान्तरेणोक्तौ च प्रत्नियस्तानां विश्वासाभावात् । नापि भगवद्देशे त्यक्ते देशान्तरस्यानीदृशत्वेनैतद्विचारप्रतिबन्धकत्वात् । तदेतदवधार्य आचार्यैराज्ञाद्वयं न कृतम् । भगवतस्त्वयमाशयः । देह उपचयः; देशो दानम्; 'दिह उपचये,' 'दिश अतिसर्जने' इति धातुनिष्पन्नत्वाद्यौगिकावेतौ शब्दावाशयाप्युक्तौ । तथा च, उपचयो बाहुल्यं दानञ्च परित्यक्तव्यम् । न च पूर्वाक्षसारस्फूर्तिलोपः । यावदुक्तमेतावत्कृत्यैव साज्ञा कृतास्तु; अधिकं न कार्यम् । रहस्यप्रकाशस्यानभिमतत्वात् । अधिककरणेनानधिकारिणामपि तज्ज्ञानसम्भवेन कृतार्थतासमत्वाधिकार्यनधिकारिविभागभङ्गापातात् । इदञ्च सूक्ष्मदर्शितानिरोधानस्वन्धत्रयस्याप्यात्याननन्दनमस्कन्धस्याप्यानानन्तरसाम्यविश्वाधनभट्टशर्मादिभिर्विचारतिकृतिभिः कार्य-

स्तुमीयते । सोयमाचार्यैर्नाविचारितः । न चाचार्याणां भगवदाज्ञार्थानवधारणकथनमयुक्तमिति शङ्क्यम्; भक्तानां पञ्चाध्यायीस्थस्कन्धारोहणवाक्यार्थाज्ञानवत् सम्भवात् । तदा तृतीयाज्ञा जाता । तद्विषयस्तृतीयपरित्यागः स लोकगोचरः । ‘लोकस्तु भुवने जन’ इति कोशाज्जनविषयः । स च संन्यासेन भव’त्येकचार्यनिकेतः स्यादि’त्यादिवाक्यैः संन्यासे तथात्वात् । तत्र तादृश्यामाज्ञायां जातायां पश्चात्तापो मम जात इति शेषः । स कथं केन प्रकारेणेति विचार्यमाणे, सेवकोहं; अहं सेवक इति सेवकत्वप्रकारेणाज्ञाभङ्गकरणहेतुकः । च पुनरन्यथा न, स्वचिकीर्षितकार्यासम्पूर्त्यादिहेतुको न । अतो मत्कृत्यादिविचारेपि मत्सेवकत्वपुरस्कारेण विचारात् पश्चात्ताप एव युक्त इत्यर्थः ।

* ‘आज्ञा पूर्वन्तु या जाते’त्यत्र । अत्रेदं बोध्यम् । प्राकट्यात् पूर्वं हि ‘अर्थं तस्य विवेचितुम्’ इत्यत्रोक्ताज्ञा जाता, तदनन्तरमाज्ञाद्वयं देहदेशपरित्यागविषयं गङ्गासागरसङ्गमे मधुरायाञ्च जातमिति । एवमाज्ञात्रयं सिद्धम् । तत्र श्रीमदाचार्येष्वतिकरुणत्वमस्ति न वेति लोकानां संशयनिवारणार्थं पुष्टिमार्गस्थत्वात् स्वस्य वा तदर्थं प्राकट्यानन्तरमाज्ञाद्वयमतिकरुणत्वविरोधिजातम्, तदाज्ञाद्वयं स्वस्य भगवतश्च स्वाङ्गीकृतेषु अतिकरुणत्वख्यापनार्थं न कृतम्, तत्कृतौ हि सर्वमाज्ञाक्षं न स्यात्तेन च स्वाङ्गीकृतानामनुद्धारः स्यात्, तेन चोभयस्य करुणत्वं न स्यात्, यदि तदेव न स्यात्तदा पूर्वं तदर्थं नाज्ञापयेत् । भगवान् स्वयं च नाविर्भूयात् । नत्वेवम् । अतः परीक्षार्थत्वान्नान्तःकरणगोचरा । अतो न विशेषणत्वादि कृतमित्यर्थः । न च पूर्वमेव तत्सम्भवे किं देशत्यागविषयिण्या तयेति वाच्यम्, क्रीडादेशे त्यक्ते विरहेण स्वयमेव देहं त्यक्ष्यन्तीति तेनातिकरुणत्वमेव परीक्षितं न भविष्यतीति भगवदभिप्रायः । श्रीमदाचार्यैस्तु तदपि तथैव ज्ञातमिति सापि न कृतेति भावः । नन्वयमेवाशयो भगवतः श्रीमदाचार्याणाञ्च तथैव ज्ञानं जातं, इत्यत्र किं मानमित्यपेक्षायां भगवदादिसर्वसम्मतं हेतुमाहुः । तृतीयो लोकगोचर इति । तद्व्यपेक्षया पूर्वमाज्ञातः सर्वोद्धारः लोकगोचर इति न किञ्चिद् अलौकिकं मानं वाच्यम् । किन्तु सर्वलोकप्रसिद्धमेव मानमित्यर्थः । एवं कृते पश्चात्तापः कथम्? न कथमपि । यतः सेवकधर्मोन्तःकरणप्रबोधप्रकरणम्, न त्वन्यथा तद्विरुद्धमित्यर्थः । अत एव श्रीमदाचार्यचरणैः निरोधलक्षणग्रन्थे ‘विशेषतश्चेदाज्ञा स्यादि’त्यनेनेतिदिक् । (इति स्वतन्त्रलेखः) ॥ ५-६ ॥

ननु युक्तोयं विचारस्तथापि पूर्वापराधजनितभगवदप्रसन्नताया अनिवृत्तौ भयप्रवेशः, स कथं निवर्तनीय इत्याशङ्कायां तदर्थं विचारान्तरमुपदिशन्ति । लौकिकप्रभुवदित्यादि ।

* [illegible] । द्वितीयश्च [illegible] । अत एव निरपेक्षः ।

वाक्योंसे मृत्यु और यम भी भगवान्‌का आश्रय रखनेवालेके पास नहीं जा सकते तो अन्यकी क्या बात ? अर्थात् अनन्य आश्रय रखनेवालेके ऊपर सब प्रकारके सामर्थ्यसे युक्त भगवान् विराजमान होनेसे उसका कोई कुछ बिगाड नहीं सकता है । तथापि इतना तो विवेक अवश्य अनुसन्धेय है कि सर्वस्वनिवेदनपूर्वक शरण गमन करनेवालेका उद्धार आप अनायास ही करते है ॥ १० ॥

"जीवमात्रके दशप्राण और ग्यारहवां आत्मा रहता है," इस श्रुतिवाक्यसे जिस तरह दश प्राणोंसे सब सिद्ध होता हैं, उसी तरह यह कृष्णाश्रय स्तोत्र ही भगवदीयोंका सब कार्य सिद्ध कर देता है। यह ज्ञान करानेके लिये श्रीमहाप्रभुजीने दशश्लोकोंसे कृष्णाश्रय स्तोत्रकी रचनाकी। जैसे आत्मा क्षयरहित है वैसे ही इस स्तोत्रके पाठ करनेसे अक्षय फल प्राप्त होता है, यह बतानेकेलिए आत्मारूप ग्यारहवे श्लोकमें कृष्णाश्रयस्तोत्रके पाठका फल निरूपण करते हैं:—

**कृष्णाश्रयमिदं स्तोत्रं यः पठेत् कृष्णसन्निधौ ।**
**तस्याश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत ॥ ११ ॥**

**अन्वयः**—यः इदं कृष्णाश्रयं स्तोत्रं कृष्णसन्निधौ पठेत्, तस्य आश्रयः कृष्णः भवेत् इति श्रीवल्लभः अब्रवीत् ।

सब पदार्थोंमेंसे निष्ठाका त्याग करके जिससे कृष्णकी सेवा हो सके अथवा जिससे कृष्णका आश्रय सिद्ध हो, या जिससे कृष्ण आश्रय बने वह कृष्णाश्रय है । यही कृष्णाश्रय है । कारण कि कृष्णाश्रय शब्दका यथार्थ अर्थ इसीमें समाविष्ट है । अतः इस कृष्णाश्रयका पाठ श्रीकृष्णके समीप होनेसे ही कृष्णका आश्रय सिद्ध होता है अन्यथा नहीं । पाठमात्रसे कृष्णका आश्रय कैसे सिद्ध होगा ऐसी शङ्का भी न करनी चाहिये । कारण कि यह बात कहने वाला श्रीवल्लभ है । यहां आचार्यजी अपना नाम निर्देश करके बताते हैं, कि मैं भगवत्स्वरूपका ज्ञाता हूं, अतः मेरा वाक्य सत्य है इसमें अप्रामाण्यशङ्का न करनी चाहिये । आचार्यजीको सर्वोद्धारकेलिये भूतलपर अवतार लेना पडा है, जिसको सर्वोद्धारकेलिये अवतार लेनेकी भगवान्‌की आज्ञा है, वही भगवान्‌के यथार्थ स्वरूपको पहचान सकता है । अतः उनके वचनोंपर विश्वास रखना चाहिये । इसीसे भगवत्कृपा होकर सब सिद्ध होगा ॥११॥

श्रीमद्विठ्ठलनाथपादकमले संवन्द्य भक्त्या मुदा
कृष्णैकाश्रयियोय तातचरणान् तादृक् पितृव्यानपि ।
श्रीकृष्णाश्रयसंज्ञके स्तुतिकरे कल्याणरायाभिधः
श्रीगोविन्दसुतः प्रकाशमकरोद्भूयान्मुदे सद्धियाम् ।

इति श्रीविट्ठलनाथ चरणैकतान श्रीकल्याणराय विरचित कृष्णाश्रयस्तोत्रप्रकाशः सम्पूर्णः ।

॥ श्रीकृष्णाय नमः ॥

# मेरे चार शब्द

पुष्टिमार्गीय हिन्दी भाषाभाषी वैष्णवों की सङ्ख्या गुर्जरभाषाभाषियों की अपेक्षा कम नहीं है, तथापि हिन्दी भाषामें साम्प्रदायिक ग्रन्थोंको अभाव पूर्ववत् विद्यमान ही है। इस महती त्रुटिको दूर करनेके अभिप्राय से "वैष्णव वैभव" मासिक पत्रका आविर्भाव हुआया। दुर्भाग्यसे वह आज तिरोहित दशाका अनुभव कर रहा है। इसके अनन्तर साम्प्रदायिक मौलिक ग्रन्थोंका अनुवाद करना प्रारम्भ किया, आज इन पङ्क्तियोंका लेखक हिन्दी भाषामें साम्प्रदायिक ग्रन्थोंका अनुवाद कर रहा है, इस समय १०० फार्मसे अधिक होसके इतना साहित्य मौजूद है। षोडशग्रन्थों में "विवेक धैर्याश्रय" का अनुवाद गो० श्रीव्रजरत्नलालजी महाराज की सहायता से छप चुका है। "बालबोध" का अनुवाद भी आपही छपायेंगे ऐसी आशा है। यह "कृष्णाश्रय स्तोत्र" का अनुवाद गो० श्रीरणछोडलालजी महाराजकी कृपासे छपा है। ब्रह्मवाद सङ्ग्रह चौखम्बासिरिज के अध्यक्ष सेठ जयकृष्णदासजीने छपाया है। यदि हिन्दी भाषाभाषी वैष्णव जनता इन ग्रन्थोंका उचित आदर करेगी तो शुद्धाद्वैत मार्तण्ड, प्रमेयरत्नार्णव, प्रस्थानरत्नाकर, निबन्ध और काशीस्थ गो० श्रीगिरिधरजी महाराजकृत निदरणके अनुसार अणुभाष्यका अनुवाद आदि ग्रन्थ शीघ्रही छपसकेंगे।

यह कृष्णाश्रय ग्रन्थ श्रीमहाप्रभुजीके समयकी देशकालकी परिस्थितिका भलीप्रकार परिचय कराता है, जिस समय देश म्लेच्छाक्रान्त हो चुकाथा, उस समय पुष्टिमार्गका प्रचार हुआ है। ऐसे भयङ्कर समयमें धर्मका प्रचार करना कितना कठिनथा यह विचारशील पाठकों से छिपी हुई बात नहीं है। आज पुष्टिमार्गपर जो लोग आक्षेप करते हैं, उनको इस परम पुनीत सम्प्रदाय का साहित्य देखना चाहिये। भाविक वैष्णवोंसे प्रार्थना है कि आप यदि अपने शास्त्रों को अन्य धर्मोंसे पराभूत देखना नहीं चाहते हैं, तो आप साम्प्रदायिक ग्रन्थोंका सरल हिन्दी भाषामें अनुवाद कराके छपाइये, और हिन्दी में छपने वाले ग्रन्थों को सहायता प्रदान कीजिये।

२ रा भोईवाडा, भुलेश्वर,
बम्बई, रथयात्रा १९८९

भवदीय
हरिशङ्कर शास्त्री
वेदान्त विशारद

# शीघ्र ही छपकर प्रकाशित होनेवाली पुस्तकें

नित्यलीलास्थ गोस्वामीजीवनेशाचार्यजी महाराज (पोरबन्दर) सङ्गृहीत

## वैष्णव द्विजाह्निक

अर्थात् उपनीत ब्राह्मण, क्षत्रिय और वैश्योंका नित्यकर्म

इस आह्निकमें सन्ध्यादि नित्यकर्म करनेका पूरा परिचय कराया गया है। साथ ही वर्णविभागके अनुसार पद्धति भी समजानेवाला यह एक मात्र ग्रन्थ वैष्णवोंके लिये उपयोगी है ।

## उपदेश मीमांसा

यदि आप शुद्धपुष्टि मार्गीय शरण मन्त्र और ब्रह्मसम्बन्धका रहस्य जानना चाहते है, विधर्मी वितण्डवादियोंका मुखमर्दन करना चाहते है। गायत्री मन्त्रका उपदेश होनेके पश्चात् अन्य मन्त्रों का उपदेश हो सकता है या नहीं? अन्य देवोंकी उपासना छोडकर श्रीकृष्ण ही की उपासना क्यों करनी चाहिये इत्यादि प्रश्नोंका सरल हिन्दी भाषामें उत्तर जानना चाहते है तो इस ग्रन्थको अवश्य पढिये।

## श्रीमद्गोपाल पूर्वतापिन्युपनिषद्

सम्प्रति विराजमान गोस्वामिबालकोंमें सर्वप्रथमग्रन्थकार विद्वद्रत्न गोस्वामी श्रीमदनिरुद्धाचार्यजी महाराजने इस ग्रन्थपर **ब्रह्मामृत भाष्य** और **पीयूषलहरी टीकाकी** रचना की है। इसका हिन्दीअनुवाद भी किया गया है। इस ग्रन्थमें श्रीकृष्ण ही परात्पर पुरुषोत्तम है, शिवब्रह्मादि देवता भी उनकी उपासना करते है, कर्म ज्ञानकी अपेक्षा भक्ति ही सर्वश्रेष्ठ है इत्यादि विषयोंपर पूर्ण प्रकाश डालागया है। ग्रन्थ उच्चकोटिका है।

### થોડા વખતમાં છપાઈ બહાર પડનારાં પુસ્તકો.

નિત્યલીલાસ્થ શ્રીસુદામાપુરીયવાદીભપઞ્ચાનનગોસ્વામીશ્રીજીવનેશાચાર્ય સઙ્ગૃહીત-

# વૈષ્ણવદ્વિજાહ્નિક. (મોટું, ગુજરાતી.)

## અર્થાત્ ઉપનયન સંસ્કાર પામેલા બ્રાહ્મણ, ક્ષત્રિય અને વૈશ્યોનું નિત્ય કર્તવ્ય કર્મ.

દરેકને સહેલું પડે તે ખાતર આ આહ્નિકમાં સન્ધ્યાદિ નિત્ય કર્મ કરવાની સંપૂર્ણ સમજણ ગુજરાતી ભાષામાં આપવાની સાથે મન્ત્રો પણ ગુજરાતી હરફમાં છાપવામાં આવ્યા છે. વૈષ્ણવદ્વિજોને-બ્રાહ્મણ, ક્ષત્રિય, વૈશ્યોને-વૈષ્ણવી પદ્ધત્યનુસાર સન્ધ્યાદિનિત્યકર્માનુષ્ઠાન સમજાવનારું માત્ર આ એક જ આહ્નિક છે. 'ગુજરાતી ન્યુસ' પ્રેસની સફાઈદાર છપાઈ તો મુદ્રક મશહૂર છે એટલે તે બાબત કશું વક્તવ્ય હોય જ નહિ. **પખવાડીયામાં છપાઈને બહાર પડશે.**

### वैष्णव-द्विजाह्निक. ( हिन्दी. )

हिन्दी भाषाभाषी सज्जनोंकी खास सुविधाके लिए ऊपर बतलाये गये आह्निकका ही यह ठीक-ज्योंका त्यों हिन्दीमें अनुवाद है. एक सप्ताहमें छपकर तैयार हो जायगा.

### वैष्णव संक्षिप्ताह्निक.

આ આહ્નિકમાં દન્તધાવન વિધિ, તિલકવિધિ, મુદ્રાવિધિ, ભગવત્સેવા, જપવિધિ, નિત્ય પાઠ કરવાનો ક્રમ, અન્યાશ્રય વગેરે અનેક ખાસ બાબતો ઉપર સંક્ષેપમાં સારો પ્રકાશ પાડવામાં આવ્યો છે. 'વૈષ્ણવોએ ટુંકામાં ટુંકું કેટલું નિત્યકર્મ કરવું આવશ્યક છે' તે સમજવા આ આહ્નિક અવશ્ય ખરીદવું જોઈએ.

### ઉપદેશમીમાંસા.

તમારે તમારા શુદ્ધ સનાતન પુષ્ટિમાર્ગ ઉપર 'મુખમસ્તીતિ વક્તવ્યમ્'ના ન્યાયે શઙ્કા કરનારા આજકાલના વિતણ્ડાવાદીઓને શાસ્ત્રોનાં પ્રમાણો સાથે મુખતોડ જવાબ આપવો છે? તો 'મીમાંસા'ના સત્વર ગ્રાહક બનો. તેમાં શું છે? 'ગાયત્રી મન્ત્રનો ઉપદેશ લીધા પછી બીજો ઉપદેશ લેવાય કે નહિ?' 'અન્ય દેવના મન્ત્રો છોડીને શ્રીકૃષ્ણના મન્ત્રોનો ઉપદેશ લેવામાં વિશેષતા શી?' 'મન્ત્રોપદેશ કોઈ પણ ઉત્તમ બ્રાહ્મણ પાસેથી ન લેતાં શુદ્ધાદ્વૈત વૈષ્ણવ વેલ્લનાટીય બ્રાહ્મણ શ્રીવલ્લભકુલના આચાર્યો પાસેથી જ લેવાનું કારણ શું?' 'બ્રહ્મસમ્બન્ધ જ લેવાનું તાત્પર્ય શું?' 'દોષોની નિવૃત્તિ તો પ્રાયશ્ચિત્તાદિકથી પણ શક્ય છે તો પછી બ્રહ્મસમ્બન્ધ જ લેવામાં વિશેષતા શી?' "બ્રહ્મસમ્બન્ધમન્ત્રોપદેશ લીધા પછી થતા દોષોની નિવૃત્તિ શી રીતે કરવી?' 'સ્ત્રીને તો પતિ જ ગુરૂ છે તો પછી મન્ત્રોપદેશ લઈ બીજો ગુરૂ કરવાની આવશ્યકતા શી?' 'પતિ તથા સ્ત્રી એક ગુરૂ પાસેથી મન્ત્રોપદેશ લઈ શકે કે કેમ?' નાનાં બાળકોને મન્ત્રોપદેશ આપવાથી શું ફળ?' 'ચોરાશી તથા બસોબાવન વૈષ્ણવોની વાર્તામાં તમામને શ્રી [illegible]જીનો અનુભાવ હતા તે આજના સમયમાં કેમ નથી?' આવા અનેક જટિલ પ્રશ્નોના જવાબ સચોટ રીતે તથા યુક્તિપૂર્વક આ ગ્રન્થમાં આપવામાં આવ્યા છે. દરેક વૈષ્ણવે આ પુસ્તક અવશ્ય વાંચવું જોઈએ. પદર દિવસમાં બહાર પડશે.

મળવાનું ઠેકાણું:—

**બુકસેલર, ગિરિધરલાલ, જ. શાહ,**

C/o શ્રી જીવનેશાચાર્યપુષ્ટિસિદ્ધાન્ત પુસ્તક ભંડાર, લાલબાવામન્દિર, મુંબઈ નં. ૨.

નોટ—કપયા એડ્રેસને તમારી બુકમાં નોંધી લેશો; કારણ કે વૈષ્ણવ સંપ્રદાયનાં તમામ જાતનાં પુસ્તકો વગેરે મળવાનું ઠેકાણું તથા કાઉનસાર સપ્લાઈ કરનાર આ એક જ ઠેકાણું છે.

श्रीकृष्णाय नमः।

# किञ्चित्प्रास्ताविकम्।

कृष्णाष्टम्यां कृष्णाश्रयस्तोत्रं षड्विवरणसमेतं प्रकाशयितुं तत्प्रणेतृनिःसीमानुग्रहेण पारयामीति महत्सौभाग्यं मे। अतीयाय किल सार्धाब्दो मुद्रणयन्त्रमारोपितस्यास्य, किन्तु गोस्वामिश्रीरणछोडलालजीमहाराजैः सार्कं श्रीपुरुषोत्तमक्षेत्र–काशीक्षेत्र–चरणाद्रयडेलप्रभृतिष्वनेकस्थलेषु यात्रानिमित्तं गतं मयेति, तेषां कुमारश्रीवल्लभलालजीमहोदयानां वाराणसीयप्रथमापरीक्षादित्सापि तदन्तर एव जातेति तत्राप्युद्युक्तं, भूयोपि वाराणसीं प्रति प्रस्थितं तैः सह परीक्षादापनार्थम्, अन्यैश्चाप्येवंविधैर्हेतुभिरेकत्र स्थितिमलभमानेन प्रकटयितुमेतत्स्तोत्रमतिक्रान्ता वेला मया। ततश्च बहुभिर्वारंवारं पर्यनुयोजिपि हितैषिभिः किमेतत् कुत एतत् कथमेतदित्यादि। किं पुनः प्रतिपद्यतां प्रतिवचनं, यत्रैकस्या व्यक्तेरधीनं कार्यबाहुल्यमथ च स्थितेरनैयत्यं तत्र भवत्येवैवंविधो विलम्बः। अस्तु।

ग्रन्थोयं श्रीमदाचार्यचरणप्रणीतषोडशप्रकरणग्रन्थेषु नवमीं सङ्ख्यामावहति। विषयश्चास्य नाम्नैव स्पष्टो यत् कृष्णाश्रयणमन्तरा स्वभावदुष्टजीवानां निस्तारो नास्त्येव कलौ। 'मामेव ये प्रपद्यन्ते' 'सर्वधर्मान्परित्यज्य' 'अपि चेत्सुदुराचारः' 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इत्यादिवाक्यपरसहस्रैरिदमेव दृढीक्रियते। 'कलिदावानलेनाद्य साधनं भस्मतां गत'मित्याद्युक्तिभिः प्रमाणबलं प्रमेयबलमन्तराऽकिञ्चित्करमेवेत्यपि निर्विवादम्, अत एव 'कृष्णश्चेत्सेव्यते भक्त्या कलिस्तस्य फलाय ही'ति दैवोद्धारार्थगृहीतावतारैर्निबन्ध आज्ञप्तम्। यद्यपि भक्त्यादिमार्गा जनोद्धारार्थं निबन्धादौ सपरिकरं निरूपितास्तथापि प्रत्यहं कलेराधिक्येन तेषां दुःसाध्यत्वमाकलय्य आश्रयस्यैव च सर्वहितावहत्वं पर्यालोच्य स्तोत्रमिदं न्यरीरचन्नाचार्याः। आश्रयभवने तु महदनुग्रहस्यैव हेतुता नान्यस्य। अनयैव दृशा प्रणीतोयं ग्रन्थ इति प्रबन्धस्यास्यावलोकनेनावगतं भविष्यति श्रीमदाचार्यपादाम्भोरुहमकरन्दलिहो दैवसर्गस्येत्यलं पल्लवितेन।

ग्रन्थस्यास्य परिष्करणे पुस्तकप्रदानेन प्रशंसनीयमुपकारमाचरितवतां मे दीक्षागुरूणां गोस्वामिश्रीमदनिरुद्धलालजीमहाराजानां काम्यवनस्थगोस्वामिश्रीवल्लभलालजीमहाराजानां सुगृहीतं नामधेयं प्रत्यहं स्मरामि। तृतीयपीठाधीश्वरश्रीव्रजभूषणजीनामध्यापकाः पं. कण्ठमणिशर्माणः, पुरुषोत्तमलालजिमन्दिरस्थदामोदरशास्त्रिणः, सद्गतभगवदीयाः 'मूलचन्द्र तुलसीदास तेलीवाला' एतेषामपि सर्वेषां पुस्तकप्रदानतो मदुपरि महदुपकृतिः। गोस्वामिश्रीरणछोडलालजीमहाराजा अपि सांप्रदायिक-

साहित्योद्धृतिविषये स्वपितृपादाननुकुर्वन्तीति प्रत्यक्षमेव सर्वेषाम् । एतेषां समाश्रयेणानेके साम्प्रदायिकाः प्रबन्धा बहिरवतेरुः । षोडशग्रन्थानां सेवाफलादि ग्रन्थाष्टकं नवमं कृष्णाश्रयस्तोत्रं चैतेषामेव प्रबन्धबलेन लब्धावतारं श्रीमदाचार्यवाक्सुधापिपासूनां मनोरथपूरकं भवतीति महान् प्रमोदावसरः । अपि चैतादृक्सत्प्रवृत्तौ योग्यविधित्सया परमकरुणया दशवर्षाणि मे सर्वविधसाहाय्यं दत्तवद्भ्यो गोस्वामिश्रीगोकुलनाथजिदेशिकवरेभ्यः साञ्जलि कार्तज्ञ्यमावेदयामि ।

अस्मिन् संशोधने दृष्टिदोषतो मुद्राक्षरयोजकप्रमादतो वा जातानि स्खलितानि संशोध्य तास्ता अशुद्धीर्बोधयित्वानुगृह्णन्तु दयालवो विद्वांसो मामिति प्रार्थयति—

कृष्णाष्टमी
संवत् १९८३

विद्वज्जनकृपाभिलाषि—
हरिकृष्णः शास्त्री,
'शुद्धाद्वैतविशारदः'।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# कृष्णाश्रयस्तोत्रम् ।

---

श्रीमद्रघुनाथचरणविरचितविवरणविभूषितम् ।

य आविरासीद्धरेस्मिन् कलौ श्रीवल्लभाभिधः ।

निजदास्यं स नो देयादन्यादपि दुराश्रयात् ॥ १ ॥

**सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि ।**

**पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥**

सर्वमार्गेष्विति । सर्वे कर्मज्ञानोपासनादयस्ते मृग्यन्ते तत्तत्फलार्थिभिरिति मार्गा इष्टप्राप्त्युपायास्तेषु सर्वेषु नष्टेषु तिरोहितेषु सत्सु । अनेन जीवानां सर्वथैवागतिकत्वं सूचितम् । एवंविधेऽप्यशक्यार्थे मम सर्वस्वनिवेदिनो दासस्य कृष्ण एव गतिः शरणं, प्राप्त्यर्थे आश्रयणं च । अत्रास्त्वितिपदं व्याख्यानेऽध्याहार्यम् । एवकारेणान्यनिषेधः सूचितः । किं च, कालकृतोपद्रवेणाप्यगतिकत्वं कलौ चेत्यनेनाहुः कलाविति । बहिर्धर्मरूपाभासोन्तर्दोषग्रस्तो धर्मः खलो भवति, तादृशो धर्मो यस्मिन्कलौ । खलानां दांभिकहैतुकपापण्डिनामेव धर्मो यस्मिन्निति वा, क्वचि'त्खरधर्मिणी'त्यपि पाठः श्रूयते, तत्रापि खरो रौद्रो धर्मो यस्येति, अत्रैवं व्युत्पत्तिःखरश्चासौ धर्मश्चेतिकर्मधारये कृते पश्चान्मत्वर्थीय 'इनि'प्रत्ययः, नो चेद्बहुव्रीहौ 'क'प्रत्ययः प्रसज्येत । चकारात्कर्मज्ञानाद्यतिरोधानेषु कल्यतिरिक्तकालेष्वपि । किञ्च, पाषण्डो वेदबाह्यो धर्मः, स प्रचुरः अधिको यस्मिन्, एवंविधे लोके व्यवहार्यजनतायां सत्यां, सर्वप्रकारेण कृष्णाश्रयणं विना निस्तारो नास्त्येवेति सर्वस्यापि फलितार्थो ज्ञेयः । अत एव 'बृहन्नारदीये'प्युक्तं, 'हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथे'ति । अत्र सर्वत्रापि क्वचिन्निमित्तसप्तमी, क्वचि 'द्दर्शणां कर्तृत्व' इत्यनेन सप्तमी ज्ञेया ॥ १ ॥

धर्मोत्पत्तौ बाह्याभ्यन्तरभेदेन बाधमुद्भावयन्तो निष्प्रत्यूहं श्रीकृष्णाश्रयणं विदधति ।

---

१ आश्रयो वेति पाठ ।

म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च ।
सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥

म्लेच्छाक्रान्तेष्विति । धर्माद्यर्थिभिर्वासयोग्येषु देशेषु कुरुक्षेत्रगङ्गातटादिषु म्लेच्छैराक्रान्तेषु व्याप्तेषु सत्सु, अत्रोभयथा म्लेच्छा ज्ञेया जात्या कर्मणा च । नन्वेवंविधेष्वपि देशेषु पुण्यात्मानो भविष्यन्त्येव तैः सह धर्माद्याचरणं कुतो नेत्यत आहुः—पापैकेति । कलिना प्रवृत्तत्वात्पापस्यैवैकस्य निलयाः स्थानभूता जाताः । चकारादनेवंविधेष्वपि । एतेन धर्मादिषु बाह्यसाधननिवृत्तिरुक्ता । तर्ह्याभ्यन्तरसाधनं स्मरणादि कुतो नेत्यत आहुः—सत्पीडेति । सतां सत्पुरुषाणां धार्मिकाणां भगवत्परायणानामपि यादृशी पीडा नोचिता तादृश्या अपि दर्शनादन्येषां विश्वासशैथिल्येन व्यग्रेषु विक्षिप्तचित्तेषु कर्तव्यतामूढेषु लोकेषु सत्सु । कृष्ण एव गतिर्ममेति पूर्ववद्व्याख्येयम् ॥ २ ॥

ननु गङ्गादिपूर्वोक्तपुण्यदेशानां वस्तुसामर्थ्येन साधनत्वं कुतो नेत्याशङ्क्य वस्तुसामर्थ्यतिरोधानान्न तथात्वमिति समाहितिपूर्वकं कृष्णाश्रयमाहुः—

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ।
तिरोहिताधिदैवेषु कृष्ण एव गतिर्मम ॥ ३ ॥

गङ्गादीति । आधिभौतिकाध्यात्मिकाधिदैविकादिभेदेन त्रैविध्यं तीर्थादावप्यस्ति, तत्र 'पुरुषश्चाधिदैवत'मितिवचनाद्भगवद्रूपमेव तीर्थादौ सामर्थ्यरूपेणास्तीति मन्तव्यं, तच्च भगवदिच्छयेदानीं बहुधा तिरोहितं, न तु सर्वथा, अत एवंविधेषु गङ्गादितीर्थवर्येषु तीर्थमुख्येषु म्लेच्छादिभिः केवलदुष्टैरावृतेषु सत्सु, इह अस्मिन् भूलोके काले वा कृष्ण एव गतिर्ममेति पूर्ववत् ॥ ३ ॥

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु ।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥

अहङ्कारेति । किञ्च, वयं सर्वज्ञाः के वास्मच्चोधिकवेत्तारो यान् वयं पृच्छाम इत्येवंविधाहङ्कारेण विशेषतो मूढेषु आत्मोद्धारोपायज्ञानशून्येषु, 'लोकेष्वि'तिपदं पूर्वस्मादध्याहार्यम् । किञ्च, सत्सु महापुरुषेषु पापं दुष्टाचरणप्रकार इति यावत्, तमनुवर्तमानमनुतिष्ठन्ति ये ते पापानुवर्तिनः, एवंविधेषु सत्सु, अथवा जीविकार्थं सत्सु सत्पुरुषेषु पापानुवर्तिषु निषिद्धाचरणपरेषु । किंविशिष्टेषु तेषु लाभपूजेति । लाभो द्रव्यादेः पूजा

१ 'कृष्णार्थे' इति पाठः । २ 'कथमस्मानि'ति पाठः । ३ 'उभ्यां' इति पाठः ।

स्वोन्नतिपूर्वकं लोककृतसन्माननं, अर्थः स्वप्रयोजनं, एतत्त्रितयसिद्ध्यर्थमेव यत्न उद्यमो येषां तेषु सत्सु, कृष्ण एव गतिर्मम ॥ ४ ॥

अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु ।
तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५ ॥

अपरिज्ञानेति । वैदिकजनगुर्वाद्युपसत्त्यभावेन विद्योपशमात्पाठार्थविनियोगादीनामपरिज्ञानेन मन्त्रेषु नष्टेषु तिरोहितेषु सत्सु, पुनः किंविशिष्टेषु अव्रतयोगिषु अव्रतेषु व्रतभ्रष्टेषु योगः स्थितिरस्ति एषामेतेनैवंविधेष्वतिरोहितानामप्यकिञ्चित्करत्वमेव । यद्वा, स्वस्वाश्रमस्था योगिन उच्यन्ते तेष्वप्यव्रतेषु सत्सु । पुनः किंविशिष्टेषु तिरोहितार्थदेवेषु । तिरोहितः गुप्तः अर्थो मन्त्रार्थः, देवोऽधिष्ठात्री देवता, एतद्द्वयं येषां मन्त्राणां, न ज्ञायते तैः कियानर्थः सेत्स्यतीति भावः ॥ ५ ॥

नानावादविनष्टेषु सर्वकर्मव्रतादिषु ।
पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥

नानावादेति । कुतार्किकबौद्धाद्यागमोक्ता ये वादा वाग्जालरूपाः 'यावज्जीवेत्सुखं जीवेदि'त्येवंरूपाः, तैः कृत्वा वैदिकागमाद्युक्तसर्वकर्मव्रतादिषु विनष्टेषु विशेषतो नष्टेषु नास्तिक्येन पराङ्मुखेषु सत्सु । किञ्च, पाषण्डेषु वेदादिविरुद्धार्थेष्वेव एकः असाधारणः प्रयत्नः पुनः पुनरुद्यमो येषां, एवंविधेषु[1] लोकेषु सत्सु कृष्ण एवेति पूर्ववत् ॥ ६ ॥

विश्वासार्थं सदृष्टान्तमाश्रयणमाहुः—

अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः ।
ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥

अजामिलादिदोषाणामिति । शूद्रीभर्तुर्ब्रह्मबन्धोरजामिलनाम्नो दोषाणां महापातकानां नाममात्रेण नाशकोऽस्माकमनुभवे स्थितः, शाब्दानुभवे अन्तःसाक्षित्वेन वा स्थितो विषयीकृत इति यावत् । 'आदि'पदाद्गजेन्द्रप्रभृतयः, यमलोकस्थिता नारकिणश्च । इदं नृसिंहपुराणादौ प्रसिद्धम् । ज्ञापितं दैवजीवेष्वखिलं समग्रं निजमाहात्म्यं येन, एवंविधः कृष्ण एवेति पूर्ववत् ॥ ७ ॥

---

१ आचार्योपसत्त्यभावेनेति पाठः ।

प्राकृताः सकला देवा गणितानन्दकं बृहत् ।
पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्मम ॥ ८ ॥

प्राकृता इति। सकला ब्रह्मादयो ये देवास्ते प्राकृताः, प्रकृतिर्माया तन्निबन्धनोत्पत्तिस्थितिविलया, अतस्तेषामाश्रयणं न कालादिभयनिवर्तकं प्रत्युत भयजनकमेव। अत एवोक्तं दशमे 'मर्त्यो मृत्युव्यालभीतः पलायन्'इत्यादौ । तर्हि बृहदक्षरं तथास्त्विति चेत्तदपि नेत्याह—गणितानन्दकमिति । ब्रह्मापेक्षया शतगुणितानन्दत्वेनापरिमितानन्दत्वाभावात्पुरुषोत्तमापेक्षयाल्पत्वाद्धरेः सकलदुःखहारकस्य श्रीकृष्णस्य पूर्णानन्दत्वादखण्डितानन्दत्वात्सर्वैरूपायैः सर्वात्मना, कृष्ण एवेति पूर्ववत् ॥ ८ ॥

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ।
पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥

विवेकेति। 'विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यती'त्येवंरूपः, त्रिविधदुःखसहनं धैर्यपदार्थः। भक्तिपदेन क्रमायातमाश्रयणमुच्यते। आदिपदेन तत्साधनान्युच्यन्ते। एतेषां विविच्य निरूपणं तु 'विवेकधैर्याश्रय'व्याख्याने कृतमस्ति तत एवावगन्तव्यम्। विवेकादिभगवद्धर्मैरहितस्य मम कृष्ण एव गतिः। किञ्च, न केवलमेतद्राहित्यमपि तु विशेषतोऽतिशयेन पापासक्तस्य महापातकाचरणरतस्यापि। पापवर्जनेऽसमर्थत्वाद्ग्लान्या दीनस्य। भगवताप्येतादृशानां स्वाश्रयेणैव सिद्धिरुक्ता 'मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनय'इति, 'अपि चेत्सुदुराचार' इत्यादौ ॥ ९ ॥

सर्वस्वनिवेदिनां साधनं फलं च स्वयमेव संपादयिष्यतीति प्रार्थनामपि तथैवाहुः—

सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत् ।
शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १० ॥

सर्वसामर्थ्येति । कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्सर्वसामर्थ्यसहितस्त्वं मम प्रभुः। निर्विशिष्टः सर्वत्रैव यत्र क्वाप्यखिलान्सर्वान्वाञ्छितानर्थान्करोतीत्यखिलार्थकृत्, एतस्त्वमेवैवंविधः स्वामी अतः कारणात् कृष्ण हे परब्रह्म शरणस्थस्य शरणागतस्य सम्यगुद्धारं विज्ञापयामि अहं त्वत्पुरः स्थितः शरणार्थी ॥ १० ॥

एतत्पाठमात्रपरस्याप्येतदुक्तफलमाहुः—

१ अन्यथाकर्तुमिति ग.

कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ ।
तस्याश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११ ॥

कृष्णाश्रयमिति । कृष्ण आश्रीयते येन स्तोत्रेण तत्कृष्णाश्रयं, कृष्ण आश्रयः प्रतिपाद्योर्थो यस्येति वा । इदं यः कृष्णसन्निधौ समीपे 'सन्निधि'पदात्तदनन्यभक्तसमीपेपि पठनीय सन्निधेस्तुल्यत्वात् पठेदधीयीत तस्याश्रयानभिज्ञस्यापि स्वयमेव कृष्ण आश्रयो भवेत् । कथमिदमतिदुर्लभमेतावन्मात्रेण भवेदिति नाशङ्कनीयं, यतः कारणात् इतिश्रीवल्लभोब्रवीत् । इति इममर्थं श्रीवल्लभ आचार्यवर्योऽब्रवीदुक्तवानतः किमाश्चर्यम् । अत्राचार्यवचनाना वस्तुशक्तिरेव प्रयोजिका, यतस्तद्वचनैः प्रेरितो भगवांस्तदाश्रयो भवति न तु तत्कृतमण्वपि साधनमपेक्षते ॥ ११ ॥

सुखेन श्रीयता कृष्णः किमार्थैश्चिन्तया मुधा ।
आचार्यवाक्सुधासिक्ता शक्रद्दं सश्रय जनाः ॥ २ ॥
आचार्यचरणाम्भोजे इदं विश्वस्य विस्तरात् ।
रघुनाथश्चकारेदं कृष्णाश्रयविचारणम् ॥ ३ ॥

इति श्रीमद्वल्लभनन्दनचरणैकशरणश्रीरघुनाथस्य कृतौ
कृष्णाश्रयस्तोत्रविवरणं सपूर्णम् ।

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# कृष्णाश्रयस्तोत्रम्।

श्रीमत्कल्याणरायचरणविरचितप्रकाशप्रकाशितम्।

यल्लीलालवसंस्पर्शान्न रोचन्तेऽन्यदाशिषः।
तं राधाहृदयानन्ददायकं कृष्णमाश्रये ॥ १ ॥
यत्कृपादृष्टितो जन्तुर्गोविन्दं विन्दते मुदा।
भक्त्याहं तान्निजाचार्यानभिवन्देऽर्थसिद्धये ॥ २ ॥

श्रीकृष्णाश्रयस्य सर्वसाधकत्वात्स्वीयानां तदर्थं वरप्रदानमिव कुर्वन्तः श्रीमदाचार्यचरणाः कृष्णाश्रयस्तोत्रं निरूपयन्ति। तत्राधुना देशादिषट्साधनानामसाधकत्वं वदन्तो भक्तानां भगवानेव सर्वसाधनरूपश्चतुर्विधपुरुषार्थरूप इति, दशलीलानिरूप्य इति, दशविधभक्तसेव्य इति, प्रमाणनामितास्य स्तोत्रस्य सर्वसाधकत्वमिति च दशभिः श्लोकैः प्रार्थनाव्याजेन तं स्तुवन्ति। तत्र प्रथमं मुख्याङ्गत्वात्कालस्य तदसाधकत्वं वदन्तः कालधर्मनिराकरणपूर्वकमाश्रयं प्रार्थयन्ते—

**सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि।**
**पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥**

सर्वमार्गेष्विति। कलौ खलधर्मिणि खलोऽन्तर्दुष्टो धर्मस्तद्वति सति। 'खरधर्मिणी'तिपाठे दुःसहचेष्टिते कलौ सतीत्यर्थः। 'कृषिर्भूवाचक'इतिवाक्यनिरूप्यः सदानन्दः पुरुषोत्तम एव मम गम्यत इति गतिराश्रय ऐहिकपारलौकिकार्थसाधकोऽस्त्विति शेषः। खलधर्ममाहुः—लोके जने पाषण्डः प्रचुरः सर्वापेक्षयाधिको यस्मिंस्तादृशे सति। अत एव सर्वे मृग्यन्त इति मार्गाः पुरुषार्थोपायाः कर्मज्ञानादयस्तेषु नष्टप्रायेषु सत्सु, पाषण्डप्रवेशादात्मसुखसाधकस्वर्गपदस्य लोकभ्रमजननाच्चित्तशुद्ध्यजननात्कर्ममार्गस्य, मायावादाभिनिवेशाज्ज्ञानमार्गस्य, निरीश्वरत्वाद्योगाभ्यासाद्योगस्य, विभूतिपरत्वादुपासनामार्गस्य च मुख्यफलासाधकत्वेन नष्टप्रायत्वम्। चकारान्महादेवादिषु कलिकालानुगुणेषु सत्सु, एवका-

१ काल-देश-द्रव्य-कर्तृ-मन्त्र-कर्मणाम्। २ पै. कर्मादिभि पुरुषार्था मृग्यन्ते।

स्य। विशेष्यान्वितत्वेनान्ययोगव्यवच्छेदकत्वादंशः कलादिर्वा गतिर्नास्तीत्यर्थः। अन्यार्थकत्वादस्य सिद्धत्वेपि प्रार्थनं न दोषाय। ननु भक्तिमार्गीयाणामपि कलिकालस्य बाधकत्वाद्गृहाद्यासक्तिमत्वाल्लौकिकक्रियापरत्वात्पापसंभवाच्च भक्तिमार्गस्य कथमुद्धारकत्वं मुख्यफलसाधकत्वं चेति कर्मादितुल्यत्वात्किमाश्रयेणापीति चेत्, मैवं, भक्तिमार्गे त्वदुक्तदूषणानामभावात्। तथाहि—'कलेर्दोषनिधे'रिति 'कलौ तद्धरिकीर्तनादि'ति 'कलिं सभाजयन्ती'त्यादिवाक्यैर्बाधकत्वाभावादल्पकालेनैव फलसिद्धेः प्रत्युत साधकत्वात्। 'शृण्वन् गृणन्' 'मद्वार्तायातयामानां न बन्धाय गृहा मताः' 'तावद्रागादयः स्तेना' इत्यादिवाक्यैर्भगवत्परत्वे गृहादेर्बन्धहेतुत्वाभावात्। 'एवं नृणां क्रियायोगा' इत्यादिवाक्यैर्लौकिकक्रियाया अप्यलौकिकतुल्यत्वात्। 'मत्कर्म कुर्वता'मित्यादिवाक्यैर्भगवत्सेवादिना विहिताकरणेपि प्रत्यवायाभावात्, 'धुनोति सर्वं हृदि संनिविष्टः' 'ते मे न दण्डमर्हन्ती'त्यादिवाक्यैः कदाचित्पातकसंभवेपि नरकाद्यभावात्कीर्तनादिनैव पापनाशात्। 'सर्वधर्मान्परित्यज्य' 'अपि चेत्सुदुराचारः' 'यः कश्चिद्वैष्णवो लोके' 'यानास्थाये'त्यादिवाक्यैराचाराद्यभावेपि फलसिद्धेः। 'धर्मः सत्यदयोपेतः' 'धर्मः स्वनुष्ठितः' 'नैष्कर्म्यमप्यच्युतभाववर्जितं' 'यमादिभिर्योगपथैः' 'श्रेयःस्रुति'मित्यादिवाक्यैर्'यथा जलौकसां नित्यं जीवनं सलिलं मतम्। तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते' इतिबृहन्नारदीयवाक्याच्च भक्तिरहितानां कर्मादीनामसाधकत्वात्, भक्तिसहितानामेव साधकत्वात्। 'यत्कर्मभिर्यत्तपसा' 'चतुर्विधाः' 'अकामः' 'ज्ञाने प्रयासमुदपास्य' 'किमलभ्यं' 'रूपमारोग्यमर्था'नित्यादिवाक्यैः केवलभक्तेरपि सर्वसाधकत्वात्। 'परिनिष्ठितोपि नैर्गुण्ये' 'आत्मारामाश्च' 'नैकात्मतां' 'महतां मधुद्वि'डित्यादिवाक्यैः स्वतोपि फलरूपत्वात्। अधुना कर्मादीनामधिकाराणां गतत्वाद्भक्तिमार्गे महदनुग्रहस्याधिकारत्वेनाधिकारिकृतस्यैव सफलत्वादत्राधिकारभेदेन गौणमुख्यफलसंभवात्। एतदुक्तं 'तत्त्वार्थदीपे'—'अधुना ह्यधिकारास्तु सर्व एव गताः कलौ। कृष्णश्चेत्सेव्यते भक्त्या कलिस्तस्य फलाय ही'ति भक्तिसाध्यफलस्यान्येनासंभवादन्यसाध्यस्य भक्तेरानुषङ्गिकत्वाच्च कर्मादितुल्यत्वगन्धोपि। ननु पूर्णभक्तिमार्गस्याधिक्येपीह सामिकृतस्य तत्तुल्यत्वमिति चेत्, न 'स्मर्तव्यः' 'स्मृतेः' 'कृष्ण कृष्णे'ति 'न वै जनो जातु' 'कृष्णेति' 'आलोड्ये'त्यादिवाक्यैः सामिकृतस्यापि फलसाधकत्वादन्यस्य तदभावादलमुक्तिभिः॥ १॥

१ एवकारो हि त्रिप्रकारः—अन्ययोगव्यवच्छेदकोऽयोगव्यवच्छेदकोत्यन्तायोगव्यवच्छेदकश्चेति, विशेष्यान्वितः प्रथमो यथा पार्थ एव धनुर्धरः, विशेषणान्वितो द्वितीयो यथा शङ्खः पाण्डुरेव, क्रियान्वितस्तृतीयो यथा नीलं सरोजं भवत्येवेति। २. क्वचिद्यादिव।

## भट्टश्रीगोविन्दराजकृतटिप्पणम् ।

मिलिन्दवृन्दोपमचारुकेशं सुभक्तशेषं सुखकारिदेशम् ।
पयोदनीकाशमनोज्ञवेशं तं वेङ्कटेशं शरणं प्रपद्ये ॥
नत्वा श्रीवल्लभाचार्यचरणे शरणे सताम् ।
कृष्णाश्रयप्रकाशस्य व्याख्यानं सुनिरूप्यते ॥

संस्पर्शादिति । सम्यक् सम्बन्धादित्यर्थः । सम्बन्धे सम्यक्त्वं चात्रान्यापरिभूतत्वम् । अन्यदाशिष इति । न च अन्याश्च ता आशिषश्चेति विग्रहे अन्याशिष इति भाव्यमिति वाच्यम्, 'अषष्ठ्यतृतीयास्थस्ये'ति दुगागमात् । राधाहृदयानन्ददायकमिति । राधाहृदयायानन्दं ददातीति तथा । भगवत्सुखस्यानन्दरूपत्वान्नानुपपत्तिः काचित्, इतरथाऽव्याप्यवृत्तित्वेन सुखकथनस्यैवोचितत्वात् । अत एवोक्तं 'प्रेमामृत'टीकायाम् 'आनन्दोन्तःकरणदेहादिसर्वव्यापकः सुखमव्याप्यवृत्ती'ति । ननु 'आनन्दाद्ध्येव खल्विमानि भूतानि' 'सत्यं विज्ञानमानन्दं ब्रह्मे'त्यादिभिः श्रुतिभिरानन्दस्य भगवद्रूपत्वात्स्वदायक इत्यर्थः पर्यवसन्न इति चेत्, इष्टापत्तेः, स्वरूपदानस्योचितत्वात् । एतेनानयोरभेदः सङ्गच्छते । तदुक्तमाथर्वणीयकृष्णोपनिषदि 'पूर्णप्रेमारसदी राधा श्रीकृष्णमनसोद्भवा', तस्मान्न भिन्नेति । यत्कृपादृष्टित इति । स्वीयत्वेन परिग्रहादित्यर्थः । अभिवन्द इति । भक्त्यार्थसिद्धये निजाचार्यानभिवन्द इति सम्बन्धः । तत्र सेवाविषयकप्रेम्णा निर्विघ्नग्रन्थपरिसमाप्तिसिद्ध्यर्थं निजाचार्यनमस्काररूपं मङ्गलं करोमीत्येतद्ग्रन्थार्थः । सेवा त्वत्र नमनादिरूपा । न च प्रेमविशिष्टसेवयेति वक्तुमुचितं, प्रत्ययार्थस्यैव प्राधान्यात् । तथा चोक्तमस्मदाचार्यैर्निबन्धे 'धात्वर्थः सेवा प्रत्ययार्थः प्रेमेति' । तत्त्वार्थदीपे तु 'प्रेमसेवात्' इति फलितार्थकथनम्, अन्यथा 'प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणमि'ति न्यायविरोधः स्यात् । वस्तुतस्तु एतस्य सामान्यन्यायत्वेन विशेषन्यायस्यैव बलीयस्त्वात् । एतदुक्तं विवरणे 'प्रकृतिप्रत्यययोः प्रत्ययार्थस्य प्राधान्यमिति सामान्यन्यायादिच्छाविषयतया शब्दबोध्य एव शाब्दसाधनतान्वय इति स्वर्गकामादिवाक्ये बलवद्विशेषन्यायस्य बलीयस्त्वादश्वेन जिगमिषति असिना जिघांसतीत्यादिष्विव प्रयोगे प्रयोजनादिरूपसाधनस्य 'तदन्वेष्टव्यं तद्विजिज्ञासितव्यं मन्तव्यमित्यादिष्विव प्रयोगे तस्यार्थमूलत्वेन 'सन्'प्रत्ययाभिहितेच्छाविषय एव गमनादावन्वयस्य युक्तत्वात् प्रकृत्यभिहितानां क्रियाणां यज्ञादीनां विनियोग इति । ननु 'भावे'त्यभिधानात्प्रत्ययार्थस्य भावत्वमुचितं न तु प्रेमत्वमिति चेत्, अत्रोच्यते, भावार्थत्वं तु प्रत्ययस्य नास्त्यप्रयत्नादिमिदमेव, तत्र भावशब्देन देवादिविषयिणी रतिः प्रकृते

टिप्पणम्।

सर्गः। पुरुषाद्ब्रह्मादीनामुत्पत्तिर्विसर्गः। उत्पन्नानां तत्तन्मर्यादया पालनं स्थानम्। स्थितानामभिवृद्धिः पोषणम्। पुष्टानामाचार ऊतिः। तत्रापि सदाचारो मन्वन्तरम्। तत्रापि विष्णुभक्तिरीशानुकथा। भक्तानां प्रपञ्चाभावो निरोधः। निष्प्रपञ्चानां स्वरूपलाभो मुक्तिः। मुक्तानां ब्रह्मस्वरूपेणावस्थानमाश्रय इति'। दशविधभक्तसेव्य इति। सात्त्विकसात्त्विकाः, सात्त्विकराजसाः, सात्त्विकतामसाः। राजसराजसा, राजससात्त्विका, राजसतामसाः। तामसतामसाः, तामसराजसाः, तामससात्त्विकाः। एके निर्गुणा इत्येतैर्दशविधैर्भक्तैः सेव्य इत्यर्थः। प्रार्थनाव्याजेन स्तुवन्तीति। 'किमासनं ते गरुडासनाये'त्यनेनप्रार्थनाव्याजेनैव स्तुतिनिरूपणस्यैवोचितत्वादिति भावः। गम्यते प्राप्यत इत्यर्थः। ननु 'भावे' इत्यधिकारात्कथमत्र कर्मणि प्रत्यय इति चेत्, सत्यम्, 'कृत्यल्युटो बहुल'मित्यत्र 'बहुल'मितियोगविभागात्तथा। अत एव 'एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थं पादाभ्यां ह्रियते पादहारकः कर्मणि ण्वुल्' इति वैयाकरणशिरोमणयः। पाषण्ड इति। वेदविरुद्धत्वं पाषण्डत्वम्। आत्मसुखवाचकेति। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पद'मित्यनेन स्वर्गपदस्यात्मसुखवाचकत्वादित्यर्थः। लोकभ्रमजननादिति। लोकत्वेन भ्रमजननादित्यर्थः। मायावादाभिनिवेशादिति। विवर्ताधिष्ठानत्वेन मायोपहितब्रह्मणः कर्तृत्वकथनादित्यर्थः। विवर्तस्तु अतात्त्विकोऽन्यथाभासः। यद्वा, वस्तुनस्तदसमसत्ताको विवर्तः। अथवा कारणविलक्षणोऽन्यथाभावो विवर्तः। कारणभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति वा। निरीश्वरत्वाङ्गीकारायोगस्येति। निर्बीजयोगाङ्गीकारादित्यर्थः। योगस्तु चित्तवृत्तिनिरोधः स तु भगवद्ध्यानार्थमङ्गत्वेनोपयुक्त एकः। ध्यानाभावेऽप्यात्मबोधाङ्गभूतो द्वितीयः। उभावपि प्रामाणिकौ। यस्तु स्वतन्त्रतया फलसाधकत्वेन मोक्षस्तथासिद्धिहेतुर्ज्ञानात्मा वा तथान्ये देहेन्द्रियादिसाधकास्तेऽप्रामाणिकाः। सर्वमेतच्च निबन्धे स्पष्टम्। कलिकालानुगुणेष्विति। 'द्वापरादौ युगे भूत्वा कलया मानुषादिषु। स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान् कुरु' 'मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरे'त्यादिपद्मपुराणाद्युक्तवचनैर्महादेवादीनां कलिकालानुगुणत्वस्य सिद्धत्वादित्यर्थः। अन्यार्थकत्वादिति। अत्र प्रमाणभूताः 'शुभिके शिर आरोह शोभयन्ती मुखं मम। ममाग्रे वर्चो विहवेष्वस्त्वि'त्याद्य आगमा अनुसन्धेया इति भावः। 'कलेर्दोषनिधे'रित्यारभ्य'यत्रोऽपि फल्गु'रित्यन्तानां वचनानां सङ्ग्रहः—'कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्' 'कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्' 'कलि

टिप्पणम्।

सभाजयन्त्यार्या गुणज्ञाः सारभागिनः। यत्र संकीर्तनादेव सर्वः स्वार्थोपि लभ्यते' 'शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते। क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचित्तो न भवाय कल्पते' 'गृहेष्वाविशतां वापि पुंसां कुशलकर्मणाम्। मद्वार्तायातयामानां न बन्धाय गृहा मताः' 'तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम्। तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः' 'एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः। त एवात्मविनाशाय कल्पन्ते कल्पिताः परे' 'मत्कर्म कुर्वतां पुंसां काललोपो भवेद्यदि। तत्कर्म तस्य कुर्वन्ति तिस्रः कोट्यो महर्षयः' 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः। विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्टः' 'एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम्। ते मे न दण्डमर्हन्त्यथ यदमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः' 'ते देव सिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः। तान्नोपसीदत हरेर्गदयाभिगुप्तानैषां वयं न च वयः प्रभवाम दण्डे' 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः' 'यः कश्चिद्वैष्णवो लोके मिथ्याचारोप्यनाश्रमी। पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः' 'यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित्। धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह' 'धर्मः सत्यदयोपेतः विद्या वा तपसान्विता। मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि' 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः। नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्' 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्। कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्' 'यमादिभिर्योगपथैः कामलोभहतो मुहुः। मुकुन्दसेवया यद्वत्तथात्माद्धा न शाम्यति' 'श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये। तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्' 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि' 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा' 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' 'अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्' 'ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम्। स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोप्यसि तैस्त्रिलोक्याम्' 'त्रिपद्व्यं भगवति प्रसन्ने श्रीनिकेतने। तथापि तत्परा राजन् नहि वाञ्छन्ति किञ्चन' 'रूपारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः' 'परिनिष्ठितोपि नैर्गुण्ये उत्तमश्लोक-

टिप्पणम् ।

लीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान्' 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि' 'महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गु'रिति । भक्तिसाध्यफलस्येति भगवत्स्वरूपप्राप्तेरित्यर्थः । तदुक्तमस्मत्प्रभुभिर्भक्तिहंसे' 'भक्तौ च न स्वरूपातिरिक्तफलकत्व'मिति । 'स्मर्तव्य'इत्यारभ्य 'तदभावा'दित्यन्ते वचनानि तु 'स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतस्यैव च किङ्कराः' 'स्मृतेः सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिम्' 'कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम्' 'कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते । भस्मीभवन्ति राजेन्द्र महापातककोटयः' 'न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् । स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः' 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदे'ति । तत्र नवविधा भक्तिर्निदानं, ततः प्रेम, तेन च विशिष्टरूपभगवत्प्राप्तिः, सैव फलमिति फलसहितपूर्णभक्तिमार्गस्वरूपम् । अत एव सर्वनिर्णये 'स ज्ञानक्रियोभययुतः स एव फलं, तत्रापि साधनं प्रेमैव तत्साधनं नवविधा भक्ति'रिति श्रीमदाचार्यचर्य्याः । तथाच स्वामिकृतस्यापि स्मरणपर्यन्तं विहितस्यापि कायवाग्विनियोगस्नेहाभावेऽपि मनोमात्रस्थित्यैव तादृशपुरुषविहितस्य वा फलसाधकत्वमिति स्पष्ट एवेतरेभ्य उत्कर्षः । तथाचोक्तं निबन्धे—'कायवाग्विनियोगाभावेऽपि स्नेहाभावेऽपि मनोमात्रस्थितौ फलमेतदि'ति । कर्ममार्गस्य तु न तथा, साङ्गाद्वैदिककर्मणः फलावश्यंभावनियमादिति तत्त्वम् ॥ १ ॥

प्रकाशः ।

ननु पुण्यदेशस्थितिमात्रेणापि पुरुषार्थसिद्धेः किमितीतरव्यवच्छेदपूर्वकमाश्रयप्रार्थनमित्याशङ्क्य देशानामसाधकत्वं वदन्त आश्रयं प्रार्थयन्ते—

**म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च ।**
**सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥**

म्लेच्छाक्रान्तेष्विति । देशेषु हीनैराक्रान्तेषु सत्सु । ननु म्लेच्छा अपि न्यायवर्तिनश्चेत्तदा को दोषस्तत्राहुः—पापैकनिलयेष्विति । पापरूपा एव ते तदेकनिलयेषु, पापा ये मुख्यास्तन्निलयेषु, पापस्य वा । अथवा पूर्वोक्तेषु पापैकनिलयेषु च अङ्गवङ्गादिषु, यत्र गमनमात्रेण पुनः संस्कारसंभवः । ननु लोका वणिगादयः समीचीनाश्चेत्तावत्

१. अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हतीति ...।

प्रकाशः ।

किं कार्यमत आहुः—सदिति । साधूनां पीडया व्यग्राः स्वधर्माचरणमेवानिष्टहेतुः प्रत्यक्षत्वान्न कार्यमुत प्राकृतं कर्म चेति व्याकुला लोका येषु । सद्धर्मस्य शुभहेतुत्वानिश्चयेन श्रद्धाद्यभावाचेपि सहाया न भवन्तीत्यर्थः । 'अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः' इत्यादिवाक्यदेशानां कृष्णाश्रितानुकूलत्वात् । शेषं पूर्ववत् ॥ २ ॥

टिप्पणम् ।

पापा ये मुख्या इति । फलितार्थकथनमेतत्, इतरथा विशेषणसमासे 'पूर्वकालैके'त्यनेनैकशब्दस्य पूर्वनिपातः स्यात् । विग्रहस्तु पापेषु ये मुख्या इति । यत्र गमनमात्रेण पुनः संस्कारसंभव इति । 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हती'त्यनेन तथेत्यर्थः ॥ २ ॥

प्रकाशः ।

ननु गङ्गादितीर्थैरपि सर्वपुरुषार्थसिद्धेः किं केवलाश्रयेणेत्याशङ्क्य द्रव्याणामसारकत्वं वदन्तस्तीर्थानामाहुः—

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ।
तिरोहिताधिदेवेषु कृष्ण एव गतिर्मम ॥ ३ ॥

गङ्गादीति । गङ्गादीनि यानि तीर्थश्रेष्ठानि तेषु दुष्टैरेवावृतेषु सत्सु, अतो न तैः पुरुषार्थसिद्धिः । ननु कथं दुष्टैरावृतत्वं तत्र ब्राह्मणादीनामपि सत्त्वात्, न, अतिपरिचयादनादरेण तत्र भक्त्यभावेन प्रतिग्रहाद्युपाधिभिरवस्थानाच तेषामपि दुष्टत्वमेव । ननु सर्वदोषनिवारकेषु तेषु सत्सु दुष्टत्वमसंभवीति चेत्, न, 'सर्वेण गाङ्गेन जलेन सम्यङ्मृन्मात्रशतेनाप्यथ भावदुष्टः । आजन्मतः स्नानपरोपि नित्यं न शुद्ध्यतीत्येव वयं वदाम' इत्यादिस्पपुराणवचनात्, 'मत्स्यकच्छपमण्डूकास्तोये मग्ना दिवानिशं । वसन्तोपि च ते स्नानात्फलं नार्हन्ति कर्हिचित्' 'श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः । शुचि-

टिप्पणम् ।

द्रव्याणामसारकत्वं वदन्तस्तीर्थानामिति । तीर्थस्य तद्देशावच्छिन्नप्रवाहात्मकाप्याधिदैवरूपत्वेन द्रव्यत्वमितिभावः । अनघोकपसमन्भुमिं'मिनन्वे' 'द्वितीयस्य मसादनया मीर्थनमि'ति । याज्ञवल्क्येपि—'तीर्थं मन्वाद्युपाध्यायतात्रैप्लक्ष्यमपि पावनं' इति । उक्तं च इतमस्कन्धीयसुबोधिन्यां देवतात्वं 'कालिन्दीति समाप्ताते'त्यस्य व्याख्याने 'आध्यात्मिकं देवतात्मि'ति । 'प्रायश्चित्तानि चीर्णानी'तिवचनत्रयाणि—

१. कविंवुत्सत्कृपाठः । २. अवतिकारिभिरि पाठः । ३

प्रकाशः ।

शुद्धेन भावेन तदानन्त्याय कल्पते ' 'विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् । तद्धरन्त्यसुरास्तस्य मूढस्याकृतात्मन' इति योगियाज्ञवल्क्यवचोभिः, 'अश्रद्दधानः पापात्मा नास्तिकोच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिन ' इति वायुपुराणवचनाच, ' प्रायश्चित्तानि चीर्णानी'त्यादिभिश्च तेषां भगवद्वहिर्मुख्यनास्तिक्यादिदोषानिवारकत्वात् । ननु वस्तुशक्त्यां सत्यां कथमेतत्, न ह्यग्निः कदाचिन्न दहतीत्याशङ्क्याधिदैविकदेवतारूपतिरोधानाद्वस्तुन एवाभावादित्याहुः—तिरोहिताधिदैवेष्विति । दुष्टान्नत्याधिदैवतिरोधानात्ततः प्रत्येव माकट्यात्, अत एव श्रीभागवतार्थतत्त्वदीपे ' तीर्थादावपी'ति । अत एव सतां 'तीर्थीकुर्वन्ति तीर्थानी'त्यनेन तीर्थीकरणमुच्यते । आधिदैविकाभावे जले दृश्यमानदोषाभावात्किं तीर्थीकरणं स्यात् । शेषं स्पष्टम् ॥ ३ ॥

टिप्पणम् ।

'प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः' 'तीर्थादावपि या मुक्तिः कदाचित्कस्यचिद्भवेत् । कृष्णप्रसादयुक्तस्य नान्यस्येति विनिश्चयः' 'भवद्विधा भागवतास्तीर्थीभूताः स्वयं प्रभो । तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृते'ति ॥ ३ ॥

प्रकाशः ।

ननु कर्तृ[१]समीचीनत्वे सर्वफलसिद्धेः किमाश्रयेऽन्यव्यवच्छेदेनेत्याशङ्क्य कर्तॄणामसाधकत्वं वदन्त आश्रयं प्रार्थयन्ते—

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु ।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥

अहङ्कारविमूढेष्विति । सत्सु पण्डितेषु अहङ्कारेण वयं शास्त्रज्ञा इतिगर्वेणान्यं पृच्छन्त्यपि नेति मायावादाद्यभिनिवेशाद्विशेषेण मूढेषु सत्सु । ज्ञानवत्कृतिरपि तेषां दुष्टेत्याहुः लाभपूजार्थयत्नेष्विति । लाभपूजार्थमेव यत्नो येषां, ते पारमार्थिकमपि कर्म लाभपूजाभ्यामेव कुर्वन्ति । पापान् पुंसः, पापं वानुवर्तन्तेऽतः सङ्गस्वदोषाभ्यां दुष्टत्वान्न तेषां स्वतः फलसिद्धिराश्रये तु भगवत्कृपायां स्वत एव वेदार्थस्वदोषयोः स्फुरणात्फलसिद्धिः, भगवान् भगवदीयो वा वेदार्थं जानातीति भक्तानामेव वेदतात्पर्यज्ञानात् । शेषं सुगमम् ॥ ४ ॥

पूर्ववदाशङ्क्य मन्त्राणामसाधकत्वं वदन्त आश्रयं प्रार्थयन्ते—

अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु ।
तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५ ॥

---

१ कर्तृसमीचीनत्वेनेति ख. ग.

प्रकाशः ।

अपरिज्ञाननष्टेष्विति । मन्त्रा वैदिका आगमोक्ताश्च, तेषु अपरिज्ञाननष्टेषु अपरिज्ञानेन तात्पर्यफलदेवतास्वरूपाज्ञानेन नष्टप्रायेषु सत्सु । वैदिकानां गुरुकुलवासब्रह्मचर्यशूद्रासन्निध्यनध्यायराहित्यपूर्वकं पठितानां साधकत्वेनात्रतयोगिनामसाधकत्वात् । आगमोक्तानां तात्पर्याज्ञानेनार्थदेवयोस्तिरोभावादसाधकत्वात् । भगवदाश्रये तु 'यस्य स्मृत्ये'त्यादिवाक्यैः 'सव संपूर्णतां याती'ति मन्त्राणामपि साधकत्वात् ॥ ५ ॥

ननु मीमांसादिना मन्त्रतात्पर्यनिर्धारात्कर्मभिरेव फलसिद्धेः किमाश्रयेणेत्याशङ्क्य कर्मणामसाधकत्वं वदन्त आश्रयं प्रार्थयन्ते—

नानावादविनष्टेषु सर्वकर्मव्रतादिषु ।
पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥

नानावादविनष्टेष्विति । कर्माणि सोमयागादीनि, व्रतादीनि च, तेषु सर्वेषु प्रपञ्चः सर्वोऽपि मिथ्येति वेदानामपि तथात्वात्प्रपञ्चवत्स्वाज्ञानकल्पितत्वेन वेदानां तद्बोधितानां च व्यवहारमात्रेण प्रामाण्यान्न किञ्चित्कर्तव्यं प्राप्तव्यं वास्तीति केषाञ्चिद्वादः, 'परमेष्ठिनो वा एष यज्ञोऽग्र' इत्यादिवाक्यैर्ब्रह्मादीनामपि यज्ञैरेवोत्कर्षात्पूर्ववासनात एवोत्तरोत्तरप्रवृत्तेः कर्मैव कर्तव्यं तेनैव फलं न कोऽप्युपास्यः फलदाता प्रवर्तको वा, देवतापि चेतना नास्ति किन्तु मन्त्रमय्येवेति न देवताप्रीतिव्यापारः फलं देति केषाञ्चिद्वादः, शास्त्रेण षोडशपदार्थविवेकानन्तरं श्रवणमनननिदिध्यासनैः स्वात्मसाक्षात्कारे सति दुःखात्यन्ताभाव एव फलं न भगवान्सेव्यः फलं देति केषाञ्चिद्वादः, प्रकृतितद्विकारोपधानविलये पुरुषस्य स्वरूपेणावस्थानं फलं, न भगवानिति केषाञ्चिन्मतम्, एवंविधैर्नानावादैर्विशेषेण नष्टेषु सत्सु । विपरीतार्थनिश्चयेन फलाजनकत्वाद्विनाशः । वस्तुतः 'पुरुष एवेदं सर्वं' 'ऐतदात्म्यमिदं सर्वं' 'सर्वस्य वशी सर्वस्येशानः' 'एष ह्येव तं साधु कर्म कारयति' 'अहं सर्वस्य प्रभवः' 'यो नु रामनिन्द्रियवान्' 'देवोऽसुरो मनुष्यो वा' 'फलमत उपपत्तेः' 'त एवं दृष्टार्थवन्त्येनमि'ति 'देवा वै सत्रमासत' 'विशते तदनन्तरम्' 'मामेवैष्यसि' 'आनन्दं ब्रह्मणो रूप' मित्यादिश्रुतिस्मृतिपुराणन्यायैः प्रपञ्चस्य ब्रह्मात्मकत्वात्सत्यत्वेन कर्मोपास्य सफलत्वाद्भगवतः सर्वेश्वरत्वेन सेव्यत्वात्कर्मकत्वात्फलदातृत्वात्तृप्तिसत्रकरणाद्यनुपपत्त्या देवतानामपि चेतनत्वाद्भगवत्सायुज्यस्य मोक्षत्वादानन्दरूपत्वेन भगवत एव फलरूपत्वात्पूर्वोक्तवादानां भ्रष्टफलत्वात् । स्वपनाग्रहेणैव निपिद्धदशम्यादि विद्धैकाद-

टिप्पणम् ।

मन्त्रपिनष्टत्वन्यादिनि । यत्तु 'शास्त्रदीपिकायां नवमाध्याये 'देवता वा प्रयोजयेद् अतिथिवद्भोजनस्य तदर्थत्वादि'त्यधिकरणे 'यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा प्रसन्ना भवति च तथापि यागादेर्न फलं विग्रहवती दातुं स्यात्, ततश्च नित्य-

टिप्पणम् ।

वेदविषयत्वं न स्यात्, सत्यपि विग्रहे प्रत्तस्य हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम्, न चामुष्याना प्रसीदतीति युक्तम्, अत एवाप्रतिपन्नापूर्वत्यागे देवताप्रसादे वा फलमित्येतदपि निरस्तं, न हि तस्याः प्रसादः संभवतीत्युक्त'मिति पार्थसारथिमिश्राः तत्प्रौढिवादमात्रमेव । तथाहि—'यदुक्तं विग्रहवती चानित्या स्यात्ततश्च नित्यवेदविषयत्वं न स्यादि'ति, तदपेशलं, अनित्यानामपि यागादीनां वेदविषयत्वात्, विग्रहवत्त्वेनैव फलजनकत्वस्य 'हन्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतो'त्यादिश्रुत्युक्तत्वाच्च । मुख्यार्थबाधेन न श्रुतेरुपचरितार्थत्वम् । अर्थवादानां स्वतः प्रामाण्यं न तु विध्येकवाक्यतया । एतेनास्मिन्नेवाधिकरणे यच्छाबरभाष्ये सिद्धान्तितं तत्स्वमताग्रहमात्रमेव । प्रकृतमनुसरामः । यदपि 'सत्यपि विग्रहे प्रत्तस्य हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुमि'ति, तदप्यविचाररमणीयम् । विश्वादीनामपि प्रत्यक्षभोगाभावत्वेन 'सर्वमनुष्या विष्णुनाऽशितमश्नन्ती'तिश्रुतौ 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन' इति स्मृतौ ' विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् । पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ' ' पितृशेषं तु यो दद्यात् हरये परमात्मने । रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिन ' इति स्कान्दे ' यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् । तेनैव पिण्डांस्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ता ' इति ब्राह्मे च प्रतिपादितस्य भोगस्य विरोधापत्तेः । यत्तु निर्णयसिन्धुः—'एतत्सर्वं निबन्धविरोधान्निर्मूल'मिति, तन्न, श्रीधरस्वामिनृसिंहपरिचर्यादिमूलं वदतः स्वस्यैव वदद्व्याघातात् । एतेन 'न चामुष्याने'त्यारभ्य 'प्रसादः संभवतीत्युक्त'मित्यन्तं यदुक्तं तदेतेनैव निरस्तम् । वस्तुतस्तु विशिष्ट एव देवतेति न काप्यनुपपत्तिः । एतेन तदुक्तकर्ममार्गस्य प्रत्रपितफलत्वं सिद्धमिति निगर्वः । यत्तु मुक्तावल्यामात्मनिरूपणे 'सुतरामीश्वरभेद' इत्यारभ्य 'परमं साम्यमुपैतीति श्रूयते' इत्यन्तं पञ्चाननभट्टाचार्या आहुस्तत्प्रमादिकमेव । तथाहि यदुक्तं 'सुतरामीश्वरभेदोऽन्यथा पन्थमोक्षानुपपत्ते'रिति, तन्तुच्छं, बन्धस्य सांसारिकजीवविषयत्वेन सुतरां भेदाभावात् । यदपि 'योऽपीश्वराभेद' इत्यारभ्य 'सम्पत्तिना' इत्यन्तं वदन्ति तदपि तथा । तथाहि अभेदबोधिका किल 'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुतिः । नहि तदीयत्वप्रतिपादनद्वारा स्तुतिपरत्वाः शक्योऽपि स्तौपचारिकः, न च श्रुतेरुपचरितार्थत्वं संभवति मुख्यार्थबाधात् । अत एव'नांशो नानाव्यपदेशा'दित्यधिकरणे " अद्वनश्रुतयस्तु जातिदेशकालाभेदेन निविघोपचारादि'त्युक्त्वा 'न च यत्परासत्त्वौपचारिकं युक्तं'मित्युक्तं वाचस्पतिमिश्रैः । न च 'सर्वं एतात्मानः समर्पिता इति श्रुतिविरोधः, सर्वात्मनां तत्त्वेनैव भवन-

मिति तदर्थात् । यदपि 'मोक्षदशायामज्ञाननिवृत्तावभेदो जायते इत्यपि न, भेदस्य नित्यत्वे नाशायोगात्' तदप्यसत्, भेदस्य भ्रममात्रविषयत्वेन वस्तुन एवाभावात् । यदपि 'भेदनाशेपि व्यक्तिद्वयं स्यादस्त्येवे'ति तदपि न 'एष संप्रसादः अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुतिविरोधात् । एतेन 'न च द्विलमपी'त्यारभ्य 'सर्वजनसिद्धत्वा'दित्यन्तं यदुक्तं तत्सर्वमनेनैव परास्तम् । यदपि 'योपि तदानीमभेदप्रतिपादक आगमः सोपि निर्दुःखत्वादिना साम्यं प्रतिपादयति संपदाधिक्ये पुरोहितोयं राजा संवृत्त इतिवदि'ति, तदपि न छञ्चवर्णमतीक्ष्यं दत्तोत्तरत्वात् । 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतिस्तु जीवन्मुक्तपरा तस्माचार्किकमतस्यापि मलपिनकत्वं सिद्धमिति निष्कर्षः । वचनसङ्ग्रहस्तु—' अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः' 'को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजं । न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः । देवोसुरो मनुष्यो वा यक्षो गन्धर्व एव वा । भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम्' 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे' इति ।

आचार्यचरणद्वन्द्वनन्दनानन्दितात्मना ।
शिष्येण बालकृष्णानां किञ्चिदत्र विचारितम् ॥

प्रकाशः ।

इत्यादिप्रकरणाच्च । कर्मत्वेपि व्रतादीनां पृथगुपादानं ज्ञानाद्यङ्गत्वबोधनाय । ननु तेपि स्वयं कुर्वन्ति परानपि बोधयन्ति मिथ्यात्वनिःफलत्वाल्पफलत्वानन्दाभावज्ञाने कथं कुर्युः कथं वा बोधयेयुस्तेषामपि मतानां शङ्करजैमिनीगौतमादिप्रवर्तितत्वाचेत्यत आहुः—पापण्डकप्रयत्नेष्विति । पाषण्डनिमित्तमेव मुख्यः प्रयत्नो येषु 'त्वं च रुद्रे'तिसार्द्धेन 'त्वामाराध्ये'तिश्लोकद्वयेन च भगवता महादेवं प्रति तथैवाज्ञापनेन तथैव तेषां मद्वत्तेः स्वयं धर्मादिकरणेन स्वस्य महत्त्वख्यापनेन मतप्रवर्तनात्, 'यद्यदाचरति श्रेष्ठ' इतिन्यायात् । आधुनिकानां तैरेव मोहितत्वात् । नहि देवादिप्रवर्तितशास्त्रत्वमात्रेण सम्मतत्वं किन्तु वेदाविरोधित्वे सति वेदानुसारित्वात् । अन्यथा बृहस्पतिप्रवर्तितबौद्धशास्त्रस्यापि सम्मननप्रसङ्ग इत्यलं प्रसक्तानुप्रसक्त्या । शेषं भाष्यवत् ॥ ६ ॥

टिप्पणम् ।

'त्वं चे'त्यारभ्य 'भगवता त्वनन्यये'त्यन्तानां वचनानां सङ्ग्रहः—

'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु । त्वामाराध्य यथा शंभो ग्रही-

टिप्पणम् ।

प्यामि वरं सदा । द्वापरादौ युगे भूत्वा कलया मानुषादिषु । स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान् कुरु । मां च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ ६ ॥

प्रकाशः ।

ननु 'धर्मेण पापमपनुदति' 'धर्मे सर्वं प्रतिष्ठित'मितिश्रुतेः पूर्वं दोषाभावाय धर्मः कार्यस्तेन चित्तशुद्धौ माहात्म्ये स्वरूपे च ज्ञाते तदाश्रयादिकं कार्यं न त्वाशु दोषवत्तैवान्यथा क्व योगिध्येयो भगवान् क्व दुष्टो जीव इत्याशङ्क्य 'यमेवैष वृणुते' 'रहूगणैतत्' 'भक्त्या त्वनन्यये' त्यादीनाङ्गीकृत्य महदनुग्रहेण च भक्त्या दोषवतापि गम्यत इति तन्माहात्म्यमपि तथेति महापुरुषद्वारा शरणागतौ सर्वं तत एव भविष्यतीत्यभिमेत्य भक्तानां भगवानेव चतुर्विधपुरुषार्थरूप इति प्रथमं धर्मरूपत्वं वदन्तस्तं प्रार्थयन्ते—

अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः ।
ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥

अजामिलादीति । अनुभवविषयीभूतोऽजामिलादीनां ये दोषास्तेषां नाशकः । ज्ञापितं अखिलं माहात्म्यं येन तादृशः, तेन पापनिवर्तकत्वमिष्टप्रापकत्वं च धर्मकार्यमुक्तमतो दोषोपस्थितावपि तदाश्रयणमेव कार्यं भगवदीयानां न तु तं विहाय प्रायश्चित्तादीति सूचितम् । यद्वा, परम्परासंबन्धेनापि पूर्वोक्तः, स्वनामसाम्येनाप्यजामिलोद्धारात् अनुभवे स्थितो महदनुग्रहेण । ज्ञापितमखिलं लीलादिरूपं येन । शेषं प्राग्वत् ॥ ७ ॥

टिप्पणम् ।

'रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा । न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेकम्' 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'ति । अनुभवविषयीभूत इति । अजामिलादीनामिति शेषः । पक्षान्तरे त्वजामिलेतरभक्तविषयीभूतः सन्निति तदर्थः । अजामिलस्य तु परम्परासम्बन्धेन स्वनाम्नैवोद्धारात् । दोषोपस्थितावित्यारभ्य सूचितमित्यन्ते—ननु 'श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञोच्छेदी मम द्रोही मद्भक्तोपि न मे प्रियः' इत्यनेन भक्तिमार्गीयस्यापि वेदविहितकरणत्वेन दोषोपस्थितावपि प्रायश्चित्तादेः प्राप्तत्वादित्थं कथमुच्यते इति चेत्, सत्यं, महादोषोपस्थितौ भगवदिच्छां ज्ञात्वा प्रायश्चित्तादिकरणम् । तदुक्तं सर्वनिर्णये 'प्रायश्चित्तं पातकादीनामि'ति । अल्पदोषोपस्थितौ तु तदाश्रयणमेव कार्यं न प्रायश्चित्तादि । एतदुक्तं सर्वनिर्णये—'अनेनाल्पबहिर्मुखतायामपि भागवतमनुसन्धेयमित्युपायः कथित' इति सर्वं समञ्जसम् ॥ ७ ॥

प्रकाशः ।

ननु 'तस्मात्स्वाध्यायोऽध्येतव्यः' 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छती'त्यादिश्रुतेः कर्ममार्गेऽपि ब्रह्मयज्ञाध्ययनादिनाग्न्यादिसायुज्यसिद्धेः 'ये त्वक्षर'मित्यादिना ज्ञानेनाप्यक्षरसायुज्यसिद्धेः को विशेषः कृष्णाश्रय इति किमिति तस्यैव प्रार्थनमित्याशङ्क्य तारतम्यज्ञानार्थं सर्वस्वरूपनिरूपणपूर्वकमर्थरूपत्वं वदन्तस्तं प्रार्थयन्ते—

प्राकृताः सकला देवा गणितानन्दकं बृहत् ।
पूर्णानन्दो हरिस्तस्मात् कृष्ण एव गतिर्मम ॥ ८ ॥

प्राकृता इति । यस्मात्सकला देवाः प्राकृताः सत्त्वाहङ्कारप्रभवत्वात् । बृहदक्षरं गणितानन्दकं 'सैषानन्दस्य मीमांसा भवती'त्यारभ्य 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इत्यन्तेन ब्रह्मानन्दस्य गणितत्वात् कृष्ण एव हरिः सर्वदुःखहर्ता

टिप्पणम् ।

ये त्वक्षरमित्यादिनेति । 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' 'संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः' 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इत्येतेन तथेत्यर्थः । सैषानन्दस्येति । 'सैषानन्दस्य मीमांसा भवति । युवा स्यात्साधु युवाध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आजानजानां देवानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानां देवानामानन्दः, ये कर्मणा देवानपियन्ति श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्ये'त्यनेन प्रपाठकेन

प्रकाशः।

पूर्णानन्दश्च। पूर्णश्चासावानन्दश्च, पूर्ण आनन्दो येन यत्र यस्मादिति वा, तस्मात्कृष्ण एव गतिर्ममास्त्वित्यर्थः। देवादिसायुज्येपि तेषां प्रकृत्युपधानेन तन्मुक्तेः सगुणत्वेन 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने'ति भगवद्वाक्यात्पुनः संसारसंभवेनाल्पानन्दत्वेन स्वर्गवदमुक्तित्वात्। ज्ञानमार्गेऽक्षरमुक्तेर्निर्गुणत्वेप्यक्षरस्य गणितानन्दत्वेनाल्पत्वात् क्षुधितस्याल्पभोजनमभोजनमेवेतिवदप्रयोजकत्वात्। अज्ञावार्थेदूरार्थे 'क'प्रत्ययेनाल्पत्वं पुरुषोत्तमापेक्षयाल्पत्वं च सूचितम्। पूर्णानन्दत्वेन निर्गुणमुक्तिदायकत्वेन कृष्ण एव शरणं भावनीय इति सिद्धम्। तदुक्तं श्रीमदाचार्यचरणैः 'निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवये'ति। ननु 'ताविमौ वै भगवतो हरेरंशाविहागतौ। भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ' 'कलाभ्यां नितरां हरेः' इत्यादिनांशत्वकथनाद्देहस्य च त्रिदिवेशादावपि पाञ्चभौतिकत्वजन्यत्वनियमेन जन्मश्रवणात् सुखस्यात्मगुणत्वेन भेदाच्च कथं पूर्णत्वं, कथं चानन्दरूपत्वमानन्दप्रदत्वं तज्जनकत्वं वा परं वक्तुं शक्यमिति चेत्, मैवम्, 'ताविमा'वित्यादीनामर्थान्तरगमात्। तथाहि–भगवान् भक्तानामार्तिनाशार्थं सुखदानार्थं च प्रकटः भुवो भारव्ययायेदानयोः कृष्णार्जुनयोस्ताविमौ भगवतो हरेरंशौ चागतौ कृष्णयोर्यदुकुरूद्वहयोः प्रविष्टत्वाद्यदुकुरूद्वहौ कृष्णौ च जातौ, यत आगतौ तत्र यदुकुरूद्वहत्वाभावात्। तत्तत्कार्यकरणार्थं व्यूहेषु भगवतस्तत्तदंशापेक्षणादनयोरपि सङ्कर्षणांशत्वेन भूभारहरणार्थमपेक्षणात्। अंशयोरेवावतारत्वे पूर्णत्वाभावे 'कृष्णस्तु भगवान् स्वयम्' 'वसुदेवगृहे साक्षाद्भगवान् पुरुषः परः'। 'विदितोसि भवान् साक्षात्पुरुषः प्रकृतेः पर' इत्यादिकं विरुध्येतात्र चकारश्च व्यर्थः

टिप्पणम्।

ब्रह्मानन्दस्य गणितत्वादित्यर्थः। पूर्ण आनन्दो येनेति। मर्यादापुष्टिस्थस्येति शेषः। येनेति करणे तृतीया। ननु करणस्य व्यापारवत्त्वनियमात्कथमस्य फलोपधानासाधारणकारणत्वमिति चेत्, अत्रोच्यते, यत्र भगवान् साधनं कारयित्वैव फलं प्रयच्छति तत्र भगवतः करणत्वं, प्रयोज्यप्रवृत्त्युपहितप्रयोक्तृधर्मस्य साधनकारयितृत्वस्य तज्जन्यत्वेन व्यापारत्वादिति। पूर्ण आनन्दो यस्मादिति। पुष्टिस्थस्येत्यर्थः। हेतोर्निर्व्यापारसाधारणत्वात्। नन्भयोरपि मुख्यफलप्राप्तिवत्त्वेन को वा विशेषः पुष्टिस्थस्येति चेत्, साधनानपेक्षत्वस्यैव विशेषादित्यलं बहुना। 'ताविमावि'त्यारभ्य 'प्रकृतेः परः' इत्यन्तानि वचनानि–'ताविमौ वै भगवतो हरेरंशाविहागतौ। भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ' 'वभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः' 'अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' 'वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः। जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः' 'विदितोसि भवान् साक्षात् पुरुषः प्रकृतेः परः। केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृगि'ति। चकारश्च व्यर्थः स्यादिति। 'भारव्ययाय च भुवः' इत्यत्र

प्रकाशः ।

स्यात् । तथाचोक्तं श्रीभागवत'तत्त्वार्थदीपे' 'सर्वातिरिक्तरूपेण नरः स्वावेशधारकः । तपोऽतिरिक्तकार्यं तु पूर्णे कृष्णे न चान्यथे'ति । 'सर्वे'ति । व्याख्या तु 'सर्वकार्यकर्तृत्वात्सर्वरूपो नारायणः । पुष्टिकार्यकर्तृत्वादतिरिक्तोवतारः । तत्राधिकारमाशङ्क्य परिहरति 'स्वावेशे'ति । नरस्तु तादृशमंशं बिभर्ति न त्ववतार इत्यर्थः । 'ताविमौ वै भगवत' इति मूलवाक्यं 'कृष्णस्तु स्वयं भगवाने'तेन विरुध्यते इति समाधत्ते 'तपोतिरिक्ते'ति । मार्गद्वयस्थापनार्थमवतीर्णोऽपि पूर्णप्राकट्याभावे कार्यं न सेत्स्यतीति पूर्णे कृष्ण एव प्रविष्टावंशाविति मूलार्थ' इति । 'रभावि'त्यत्र कलाभ्यामंशाभ्यां भूर्वभौ हरेः सम्बन्धिनी भूः पदैरनुभावैर्लीलाभिश्च नितरां बभावित्यर्थ इति । अन्यथोक्तवचनविरोधात् । देहस्य पाञ्चभौतिकत्वजन्यत्वनियमस्य प्राकृतविषयत्वादप्राकृते यथावेदमेवार्थसिद्धेः, अन्यथा ज्ञानेच्छादीनामनित्यत्वनियमान्नित्यं ज्ञानादिकमपि तत्र न सिद्ध्येत् । ननु ज्ञानादिभिरेव जगत्कर्तृत्वोपपत्तौ प्रत्यक्षबाधाच्च किमित्यानन्दमयो नित्यो देहोऽङ्गीकार्य इति चेत्, न, कर्तृत्वनिर्वाहार्थमेव व्याप्तिबलेन नित्यज्ञानवत्तथाविधदेहस्वीकारात् । नित्यापरिच्छिन्नतनोः प्राकट्यस्यैव जन्मत्वेन जन्यत्वाभावात् । 'आनन्दाद्ध्येव' 'नित्यं विज्ञानमानन्दं ब्रह्म' 'स यथा सैन्धवघनः' 'आनन्दं ब्रह्मणो रूपम्' 'आनन्दमयोभ्या-

टिप्पणम् ।

भक्तार्तिनाशसुखदानादिकं चकारेण गृह्यते । तच्च पुष्टिरूपोचयकार्यमेवेति तदतिरिक्तकल्पनायां चकारो व्यर्थः स्यादित्यर्थः । व्याप्तिबलेनेति । अन्वयव्यतिरेकव्याप्तिबलेनेत्यर्थः । तथाहि यत्र यत्र कर्तृत्वं तत्र तत्र देहवत्त्वं यथा कुलालादावित्यन्वयव्याप्तिः । यत्र यत्र देहवत्त्वाभावस्तत्र तत्र कर्तृत्वाभावः, यथा मुक्तात्मनीति व्यतिरेकव्याप्तिरिति । न चाप्रयोजकत्वम्, देहवत एव कर्तृत्वात्, न ह्यशरीरी कुलालः शक्नोति कार्यं कर्तुम् । वस्तुतस्तु 'आनन्दमात्रकरपादमुखोदरादिः' 'सर्वतः पाणिपादान्त'मित्यादिविरोधः । 'अशरीरं शरीरेष्वि'त्यादयस्तु पाञ्चभौतिकशरीरनिषेधपराः । न च व्रीहियववद् विकल्पसंभवः प्रमेयापहारनिरूपणाभावात् । ननु गीताया चतुर्दशाध्याये 'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति' इत्युपादाय 'गुणेभ्यो नान्यं कर्तारमनुपश्यत्यपि तु गुणा एव कर्माणि कुर्वन्तीति' श्रीधरस्वामिव्याख्यानाद्धेतुनिरूपितव्याप्तावप्यतिव्याप्तिरिति चेत्, अत्र ब्रूमः—गुणानामपि देहत्वेनैव तथाकथनं न तु केवलतया । अत एवाग्रे 'गुणानेतानतीत्य' त्रीन्' इत्यस्य व्याख्याने 'देहोत्पादकाः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतांगीनपि गुणानतीत्यातिक्रम्ये'त्युक्तं श्रीधरस्वामिभिरिति विद्वांस एव विदाङ्कुर्वन्तु । 'आनन्दमात्रे'त्यारभ्य 'सुदितवक्त्र' इत्यन्तानि वचनानि । 'निर्दोषपूर्णगुणविग्रह आत्म-

प्रकाशः ।

सात्' 'आह च तन्मात्रम्' 'केवलानुभवानन्दस्वरूपः' 'आनन्दमात्रकरपादमुखोदरादिः' 'बहूनि सन्ति नामानि' 'त्रय्या चोपनिषद्भिश्च' 'न चान्तर्न बहिर्यस्ये'त्यादिश्रुतिन्यायपुराणवाक्यसहस्रैः प्रमाणप्रकरणीयलीलाभिश्च पूर्ण एव देहप्राणेन्द्रियान्तःकरणास्वरूप एवानन्दरूपो ज्ञानरूपः पुरुषोत्तमो न त्वात्ममात्रमिति निर्बाधमवबोधि । 'नित्यं विज्ञान'मिति 'पूर्णमेवावशिष्यते' 'भवानेकः शिष्यते शेषसंज्ञ' इत्यादिना नित्यत्वं, 'एष ह्येवानन्दयाती'तिश्रुतेरानन्दजनकत्वम् । 'कृष्णः प्रीतमनाः' 'वीक्ष्यासीदुत्तमा प्रीतिः' 'जातहर्षः' 'मुदितवक्त्र उपयाती'त्यादिनानन्दवत्त्वं चेति नानुपपन्नं किञ्चित् । तथाप्यानन्दत्वदेहत्वयोर्विरोध इति चेत्, न, स्वस्वाधिकरणे प्रमाणैरेकत्रोभयोः सिद्धयसिद्धिभ्यां च विरोधाभावात्। तथाप्यानन्दस्य धर्मिरूपत्वे कथं धर्मरूपत्वमिति चेत्' 'स यथा सैन्धवघनः' 'यः सर्वज्ञः' इतिश्रुतिभ्यां ज्ञानरूपत्वज्ञानाधारत्ववदानन्दरूपत्वतदाधारत्वयोरविरोधात् । श्रीमदस्मत्प्रभुचरणैः सर्वमेतद्यथा तथा विद्वन्मण्डने प्रपञ्चितमिति नात्र प्रपञ्च्यते ॥ ८ ॥

टिप्पणम् ।

तन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा' 'बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः' 'त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः । उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजम्' 'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः' 'नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु । व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः' 'एवं वृन्दावनं श्रीमान् कृष्णः प्रीतमनाः पशून् । रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः' 'वृन्दावनं गोवर्धनं यमुनापुलिनानि च । वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप' 'सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः । हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम्' 'यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते । मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापमि'ति ॥ ८ ॥

प्रकाशः ।

ननु विवेकधैर्याभ्यां स्थित्वा भक्तिकरणे भगवानपि वशो भवतीति किमिति दैन्येनाश्रयः प्रार्थ्यते इत्याशङ्क्य सर्वमनोरथपूरकत्वात्सर्वफलार्थं काम्यत्वात्कामरूपत्वं वदन्तस्तं प्रार्थयन्ते विवेकेति ।

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः।
पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम॥ ९॥

पूर्वं प्रभुस्वरूपविचारेणाश्रयमुक्त्वा जीवस्वरूपविचारेणाधुनोच्यते। भगवान् स्वेच्छया सर्वं करिष्यति न प्रार्थनीय इतिनिश्चयो विवेकः। भक्तिविरोधिदुःखनिवृत्त्युपायाकरणेन तद्दुःखसहनं धैर्यम्। भक्तिः साधनरूपापि। आदिपदात्पुण्यम्। विशेषत इति। तत्साधनैरपि रहितस्य। यद्वा, यत्किञ्चित्सत्त्वेपि विशेषतो नास्तीति न फलसिद्धिः। किञ्च, दीनस्य दरिद्रस्यातः सर्वसाधनरहितस्य। पापे आसक्तस्येति विपरीतसाधनवतो न तु प्रामादिकपापस्य। कृष्ण एवेति पूर्ववत्। अन्यत्र यत्किञ्चिद्गुण्येपि वैफल्याद्देवताकोपादनिष्टजननाद्वपद्दत्वाचेदृशस्य विवेकादिकं दत्वा स्वतो वा सर्वफलदायकः परमकृपालुः कृष्ण एवेति स एवाश्रयणीय इति हृदयम्। नन्वस्मच्छब्दस्योच्चारयितृवाचकत्वादाचार्यचरणानां तथात्वाद्विशेषणान्यसङ्गतानीति चेत्, न, अस्यान्यार्थत्वेनान्याधिकारेण कथनाद्भगवता वेदेषु 'प्रयतपाणिः शरणं प्रपद्ये' 'भूयिष्ठान्ते नम उक्तिं विधेम' 'स्वस्ति मेस्तु वनस्पते' इत्यादौ यजमानाधिकारेण कथन इवादोषत्वादिति सर्वमनवद्यम्॥ ९॥

ननु सर्वथा निःसाधनस्य शरणागतावपि कथं समीहितसिद्धिः, भगवांस्तु तत्कृतिसापेक्षस्तस्मै तस्मै फलं ददाति, प्रत्युत भगवदेकशरणस्य तदेकमनसो देवान्तरानादरेण तैःकृता अपि विघ्नाः स्युः 'श्रेयांसि बहुविघ्नानी'तिवाक्यादित्याशङ्क्य मोक्षप्राप्यत्वान्मोक्षरूपत्वं विज्ञापनं च वदन्तः समादधते सर्वसामर्थ्यसहित इति।

सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत्।
शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम्॥ १०॥

टिप्पणम्।

मोक्षप्राप्यत्वादिति। स्वरूपलाभप्राप्यत्वादित्यर्थः। तथाच श्रुतिः 'ब्रह्मविदाप्नोति परमि'ति। अस्या अर्थः—अक्षरवित् परं पुरुषोत्तमं प्राप्नोतीति। मोक्षरूपत्वमिति। भक्तिमार्गस्थाय भगवद्भजनं कुर्वते स्वीयाय सर्वफलदातृत्वं भगवत एव तथानागतफलदातृत्वमपि सम्पद्यत इति तद्रूपत्वान्मोक्षरूपत्वमित्यर्थः। तथाचोक्तं निबन्धे 'यथा मार्गा यथा तदन्तःस्थितश्च तथान्तर्याम्यक्षर कृष्णः। एवं सति पुरुषोत्तमेन सह दर्शनं भवति परमफलस्य निमित्तरूपेण वर्तते इति त्रयो भेदा इति'।

१ 'नं'इ॰ क॰ पुस्तके। २ तत्कृतिसापेक्ष इत्यपि पाठः।

प्रकाशः ।

सर्वं पूर्णं सामर्थ्यं सर्वेषां सर्वेषु वा, तत्सहित इतीच्छया स्वतोपि सर्वं करोति । यदि मर्यादां रक्षेत्तदा भगवत्त्वेन ज्ञानैश्वर्यधर्मादीनां सिद्धत्वात्तत्तद्वत्वापि तत्तत्फलं दद्यात् । कदाचित्पूर्वस्थितमपि स्वस्मिन्नयेत्, सर्वत्र स्वस्यैव सामर्थ्यात् । 'यद्यद्विभूतिमत्' 'मत्तः सर्वं प्रवर्तते' इत्यादिवाक्यैः सर्वं सामर्थ्यं येषां सुदर्शनादीनां तैः सहित इति वा, तैरपि भक्तविघ्ननिवारणात्, 'अव्याहतानि कृष्णस्ये'तिवाक्यात् । ननु सामर्थ्ये सत्यपि कदाचिदाश्रितं न रक्षेत्, मर्यादयैव वा यदि फलं दद्यात्तदा किमाश्रयेणेत्यत आहुः–सर्वत्रैव देशेषु वर्णेषु आश्रमेषु कर्मादिषु वाखिलार्थान्करोतीत्यखिलार्थकृत् ताच्छील्यादौ क्विप् 'सकृदेव' 'ये दारागारपुत्राप्ते'त्यादिवाक्यैः सकृदपि शरणागतं भगवान् रक्षति किं पुनर्भजनः । मर्यादयापि फलदानेन्यनैरपेक्ष्येण भजतो भगवान्मर्यादानपेक्षः फलं प्रयच्छति, विहितत्वादिना भजतो मर्यादासापेक्षो 'ये यथा मां प्रपद्यन्त' इति तन्मर्यादाया एव तादृशीत्वान्न क्षतिः । अत एव 'व्रजस्योवाह वै हर्षम्' 'चिक्रीडे जनयन्मुदम्' 'मनोरथान्तं श्रुतयो यथा ययुः' 'मुकुन्दो मुक्तिं ददातीत्यादि 'तथा न ते माधव' 'मर्त्यो मृत्युव्यालभीतः पलायन्' 'वसति मनसि यस्ये'त्यादिवाक्यैः कालप्रमादयोपि चेद्भगवदीयान्निवर्तन्ते कुतस्तरां पुनरन्ये विघ्नकर्तार इति न किञ्चिद्दूषणम् । पूर्वोक्तं शरणे स्थितं सम्यगनायासेनोद्धरति, सकृदागतं तु यथाकथञ्चित् । ईदृशं श्रीकृष्णमहमाश्रयं विज्ञापयामि । 'कृष्णे'तिसम्बोधनपाठे शरणस्थसमुद्धारं विज्ञापयामीत्यन्वयः । अनेनेश्वरे दीनभावः कर्तव्य इति सूचितम्, दीनभावेन कृतस्यैवेश्वरतोषहेतुत्वात् ॥ १० ॥

टिप्पणम् ।

'यद्यद्'रभ्य 'अव्याहतानी'त्यन्तानि वचनानि 'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः' 'अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तम् । रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासित' इति । ताच्छील्यादौ क्विविति । 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्वि'तिस्मरणात् । 'सकृदेवे'त्यारभ्य 'तत्तथा साधयिष्यामी'त्यन्तानां वचनानां सङ्ग्रहः–'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' 'ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे' 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' 'दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् । व्रजस्योवाह वै हर्षं भगवान् बालचेष्टितैः' 'ततस्तु भगवान् कृष्णो

टिप्पणम् ।

वयस्यैर्व्रजबालकैः । सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम्' 'तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः । स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे' 'राजन् पतिर्गुरुरलं भवतां यदूनां दैवंप्रियः कुलपतिः क्व च किङ्करो वः । अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' 'तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो' 'मर्त्यो मृत्युव्यालभीतः पलायन् सर्वान् लोकान् निर्भयान्नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति' 'वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपातः । गतिरथ मम वा तवास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोकः' ॥ १० ॥

प्रकाशः ।

'दश वै पशोः प्राणा आत्मैकादश' इतिश्रुतेः प्राणानामिव सर्वसाधकत्वं ज्ञापयितुं दशभिः श्लोकैः स्तोत्रं निरूप्य फलस्यात्मवदक्षयत्वं ज्ञापयितुमेकादशेनात्मरूपेणैतत्स्तोत्रपाठफलमाहुः—

कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ ।
तस्याश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११ ॥

कृष्ण आ समन्तात् श्रीयते सेव्यतेऽनेन, कृष्ण आश्रयो येन यस्मादिति वेति कृष्णाश्रयम्, इदमेव कृष्णाश्रयं यथार्थनिरूपकत्वान्नान्यत् । कृष्णसन्निधौ तन्निमित्तं वा, इदं यः पठेत् तस्य कृष्ण आश्रयो भवेत् । अत्र 'हेतुहेतुमतोर्लिङ्' इदमिति नान्यपाठेनेदं फलं, स्वरूपाज्ञानात् । नन्वल्पायासादेतत्स्तोत्रपाठमात्रेण कथमेतत्फलं स्यादित्याशङ्क्याहुः—श्रीवल्लभ इति । इदमब्रवीत् अवदत् । स्वस्य भगवत्स्वरूपाभिन्नत्वाद्भगवता सर्वोद्धारार्थं प्रकटितत्वादुद्धारकस्वरूपत्वाच्च नात्राप्रामाण्यशङ्का, नहि भगवान् सत्यवाक् स्ववाचमन्यथाकरोति । यत्र प्रसङ्गान्तारदकृतं 'तत्तथा साधयिष्यामि यद्गीतं तन्महात्मने'ति सदनुग्रहो भगवान् स्वकृतमिव मन्यमानः पुरुषोत्तमः स्वयं तत्र गत्वा नलकूबरमणीग्रीवोद्धारं कृतवान्, तत्र स्वयं सर्वार्थं प्रकटितस्य स्वस्वरूपस्य कृतौ वचने वा किं किं न करिष्यतीति तत्कृपायां सर्वं भवतीति सर्वमनवद्यम् ॥ ११ ॥

टिप्पणम् ।

'देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ।
तत्तथा साधयिष्यामि यद्गीतं तन्महात्मनेति' ॥ ११ ॥

१ श्रीमदं क्वचिन्नास्ति । २ स्वस्थ इति पाठः क्वचित् ।

प्रकाशः ।

श्रीमद्विट्ठलनाथपादकमले संवन्द्य भक्त्या मुदा
कृष्णैकाश्रयियोथ तातचरणान् तातक्पितृव्यानपि ।
श्रीकृष्णाश्रयसंज्ञके स्तुतिवरे कल्याणरायाभिधः
श्रीगोविन्दसुतः प्रकाशमकरोद्भूयान्मुदे सद्धियाम् ॥ १ ॥

इति श्रीविट्ठलनाथचरणकमलैकतानश्रीकल्याणरायविरचितः
कृष्णाश्रयस्तोत्रप्रकाशः समाप्तः ।

टिप्पणम् ।

दूरीकरोति विकटं किल सङ्कटानां सङ्गं विशंकटतरं वरसेवकानाम् ।
यत्पद्मरागमणिवर्यविराजमानं तद्वेङ्कटेशमुकुटं प्रकटं स्टामः ॥ १ ॥
निखिलपण्डितमण्डलमण्डितं हरिमुखाब्जसरोरुहभास्करम् ।
अतुलमङ्गलनामविराजितं जनमनोहररूपमहं भजे ॥ २ ॥

श्रीमत्कल्याणरायाणां नमस्कृत्य पदद्वयम् ।
कृष्णाश्रयप्रकाशस्य तत्प्रणीतस्य टिप्पणम् ॥ ३ ॥
गुरुश्रीबालकृष्णानामात्मजेन सतां मतम् ।
कृतं गोविन्दराजेन नाम्ना तत्त्वनिरूपणम् ॥ ४ ॥

इति श्रीमत्कल्याणरायचरणकोकनदमधुपायमानान्तःकरणतिगरोपनामकबालकृष्णभट्टात्मजगोविन्दराजकृतं तत्त्वनिरूपणाभिधं कृष्णाश्रयप्रकाशटिप्पणं समाप्तिमगमत् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# कृष्णाश्रयस्तोत्रम् ।

श्रीमद्धारिकेश्वरचरणप्रणीतविवृतियुतम् ।

पशुपतिकृतिभिर्यं भ्रंशिता मुग्धचित्ता-
स्तदनुसृतकृतीन् स्वाज्ञानतः पातुमिच्छन् ।
अवददविकृतं यः स्वागमं सर्वभद्रम्
तमहमतिदयालुं वल्लभाख्यं नतोस्मि ॥ १ ॥
विरञ्चिकृष्णनारदैर्निरूपितैर्भृशं सदा
चिरन्तनीयसाधनैर्विसम्मतं कलिं विभुः ।
विलोक्य सर्वतोधिकं निजागमं ततान यः
सदा सुसंमतं सतां विशेषतः कलौ युगे ॥ २ ॥

ननु साक्षात्परम्परया च भगवत्प्राप्तिसाधनानां बहूनां विद्यमानत्वात्तानि विहाय किमित्याश्रय एव बोध्यते, किञ्च, क्रमेण नवविधलीलाप्रवेशज्ञानानन्तरं ह्याश्रयस्तज्ज्ञानं वा स्वत एव भविष्यतीति किमिति तत्प्रतिपादकं स्तोत्रमुच्यते तत्राह–सर्वमार्गेष्विति।

सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि ।
पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥

तथापि निरोधस्य सर्वापेक्षया वरीयस्त्वान्मुक्तेरपि लोके तथात्वात्किमिति तौ विहायाश्रय एव निरूप्यते अत्रोच्यते 'आभासश्च निरोधश्च यतश्चाध्यवसीयते । स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते' 'या या साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः' 'सर्वमाश्रयतो भवे'दित्यादिवाक्यैराश्रयस्यैव सर्वसाधकत्वेनोक्तत्वात्सर्वसाधनफलरूपाभ्यां स एव परिणत इति तमेवाह–कृष्ण एव गतिर्ममेति ।

गतिशब्दः क्रियावाचकः, तेन गतिरित्युपलक्षणं किन्तु स एव भक्तिमार्गनिर्वाहप्रतिबन्धनिरसनतया परमभक्तिप्रतिपादकसाधनीभूततनुवित्तजादिप्रतिपादकशरीरतत्त्विवाँदकक्रियारूपो भवत्वित्यध्याहारः । कथञ्चित्पूर्वमाश्रयोन्मुखं ज्ञात्वा पश्चाज्जीवैस्तदा-

श्रयः कर्तव्य इति नार्थः, सर्वतः सर्वांशेन कार्यसिद्ध्यभावं निश्चित्य स्वस्मिंश्च तथात्वनिश्चये सत्यस्माकं सर्वथा लौकिकालौकिकफलसाधकोऽस्मत्कृतिनिरपेक्षः स भवतु । तथाभवनं तु तदिच्छासाध्यम् । भगवानाश्रयो भवतु मा वा, अस्माभिस्तदाश्रयैः सर्वथा भाव्यमेवेति निश्चित्याश्रयः सर्वथा कार्यः । एवंप्रपन्नानामाश्रयः सर्वथा भवत्येव, अन्यथा 'अनन्या' इति 'न मे भक्तः प्रणश्यति' इति भगवदुक्तं भज्येत । एवं सति सर्वफलरूपस्तत्राऽऽश्रयणोक्त्या साधनीभूतः क्रियते ततोधिकस्य फलस्याभावात्, प्रत्युत 'इष्टिकभिये'-तिन्यायेन स्वरूपहानिप्रसङ्गः स्यादत्र ब्रूयः-कृष्ण एव गतिर्ममेति । एवं च परमभक्तिस्तु कृष्णैकफलिका तदनुग्रहैकलभ्या च, तथासति तत्सिद्धिप्रतिबन्धनिवृत्तिपूर्वकं तत्सिद्धौ तत्साधनादिनिर्वाहकसाधनतामापन्नो न हीनतामापद्यते । यथा-'योगमायामुपाश्रित' इत्यत्र रसमार्गेऽन्तरङ्गाश्रयणं न दोषायायकं तन्मार्गस्यैव तथात्वात् । एवं भक्तिमार्गीयसर्वांशसाधने भगवतो न साधनरूपत्वमापद्यत इति सिद्धान्तः । यथा 'भर्ता सन् भ्रियमाणो बिभर्ती' त्यत्र भगवतस्तत्सम्बन्धिनां च परस्परमाधाराधेयभावे पोष्यपोषकभावे च नोभयोर्मध्ये कस्यापि हीनत्वं किन्तु तदेकपोषकत्वं तदेकपोष्यत्वं च भगवत उत्कर्षाधायकं, एवं तन्मार्गपक्षपाताद्भक्तिमार्गे सर्वांशेन फलत्वमापन्नस्य स्वस्य साधनतास्वीकारो न हीनत्वसंपादक इत्येवमभिसंधायाचार्यैरुक्तमितिभावः । धर्मादीनां च स्वसाधनसहितानामेव फलसाधकत्वं, तत्र देशकालादयो धर्मसाधनं तेषामिदानीमतथात्वं सर्वथा निरूपयन् पूर्वं कालस्यातथात्वमाह-सर्वमार्गेषु नष्टेष्विति । कलौ सर्वेषु मार्गेषु नष्टेषु सत्सु दैवैः कृष्ण एव गतिर्ममेत्येवंरूप आश्रयः कर्तव्य इति भावः । मार्गोक्त्या तेषां साङ्गानां स्वस्वाधिकारानुसारेण फलप्रापकत्वं निरूप्यते । नाशस्तु तेषां सर्वथा फलासाधकत्वरूपः । कलौ तत्तन्मार्गे किञ्चिदुत्तमानां तद्विध्याचरणेपि तत्फलाभावं दृष्ट्वान्येषामनुपलब्धिप्रमाणेन ततो विश्वासापगमाद्वाह्यतोपि तदाचरणपरम्पराया नाशः स्यादितिभावः । ननु सत्ययुगादीनां यथा धर्मसाधकत्वं तथैतस्यापि तथात्वे को दोषः कालत्वस्याविशेषादित्यत आह खलधर्मिणीति । खलाः सर्वथा बाह्याभ्यन्तरभेदेन धर्मादिकृत्यनुसन्धानरहिताश्च, अनुसंधानेपि द्वेषार्थमेव तदनुसन्धानं, न च स्वस्यान्येषां वा चिकीर्षाबुद्धिजनकत्वेन । अत एव 'घ्नन्तं गोमिथुनं पदे'ति तस्यासाधारणो धर्मो निरूपितः । ननु सर्वथा धर्मादित्यक्तारः केचन भविष्यन्ति न तु सर्वे तेन तदुक्त्या सर्वे कथं तादृशा भविष्यन्तीत्यत आह पाषण्डप्रचुर इति । येपि लोके सन्मार्गीयाचरणं कुर्वन्ति महान्तोपि तेपि भयानमनुसृत्यैव कुर्वन्ति, अन्यथा तदा लोके पूज्यत्वं न स्यात् । पूर्वमल्पप्राचुर्ये तत्र श्रद्धाभावेप्यन्यानुरोधेनाप्यन्यथाचरणे स्वबुद्धिरपि तथैव जातेति तत्र स्वयं श्रद्धालवो भूत्वान्येषामपि तथात्वं संपादयन्तः पश्चात्पक्तद्विषो भूत्वा सुखेन तथाकुर्वन्तीति भावः ।

एतेनान्यानुरोधेनापि सन्मार्गत्यागः ‘योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणे’त्तिन्यायेन सर्वथा स्वनाशक इति ज्ञापितं भवति । तेन प्रावाहिकभक्तिमार्गोपि नष्ट इति ज्ञापितम् । चकारः समुच्चयार्थः । तथाहि–मार्गाश्च सर्वे नष्टास्तादृग्धर्मा कलिश्चाविर्भूतः, लोके पाषण्डश्च प्रचुरः । एवं सर्वथा सर्वनाशोपस्थितौ विविधशङ्कास्पदीभूतान्तःकरणान् स्वानुपदिशन्ति श्रीकृष्ण एव गतिर्ममेति । अवतारान्तरं तु मर्यादारूपमित्येवं निःसाधनानां धर्मादिप्रतिकूलसाधनवतां वा सर्वप्रतिबन्धनिवृत्तिपूर्वकं ‘तवास्मी’त्युक्तिमात्रेण भक्त्यैकलभ्यः पुष्टिपुरुषोत्तम एवोद्धारं कर्तुं शक्त इत्येवकारेणांशकलावतारव्यवच्छेदपूर्वकं कृष्ण एव गतिर्ममेत्युक्तमेवमग्रेपि ज्ञेयम् ।

एवं कालस्य धर्मादिविरोधित्वमुक्त्वा देशस्यापि तथात्वमाह—म्लेच्छाक्रान्तेष्विति ।

म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च ।
सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥

यथा कालत्वस्याविशेषेपि सत्यादिरूप एव कालो धर्मसाधको भवति तथा देशत्वस्याविशेषेपि तीर्थादिरूप एव देशो धर्मादिकरणे साधनीभूतः । तीर्थमपि जलस्थलभेदेन द्विविधं, तत्र पूर्वं पुण्यक्षेत्रादिरूपस्य देशस्य पूर्ववत्तथात्वमाह–म्लेच्छाक्रान्तेष्विति । साक्षात्परम्परया च देशाः सर्वे म्लेच्छैः आ-समन्तात्-क्रान्ताः । तत्पुण्यक्षेत्रादिधर्मस्थानेषु तद्धर्मापगमार्थं द्वेषेण विपरीतकृतिपूर्वकं स्थितिराक्रमणम् । कुत्रचित्पुण्यादिभूमौ साक्षात्तत्रोत्पन्नविषयभोक्तारो भूत्वा तत्रैव तिष्ठन्ति कुत्रचित्तत्सन्निहितेषु । एवं तेषां साक्षात्स्थित्या स्वोत्पन्नविषयाणां तदेकभोग्यत्वेन च सर्वदेशानामधर्मसाधनत्वं जातम् । सर्वथा म्लेच्छीयत्वात्तेषाम् । म्लेच्छा अनाविष्टाः सन्तः सर्वथा धर्मादिविरोधिनः कलहप्रियाश्च ‘मनसा वचसा कृत्वा सद्धर्मपरिपन्थिनः । म्लेच्छदेशेषु संजाता भक्ष्याभक्ष्यविचारकाः’ । ननु तत्रोत्पन्नाः सर्वे न तथाभूतास्तद्विपरीतानां बहूनां दृश्यमानत्वात्, यथा म्लेच्छसंसर्गात्सर्वोपि देशोऽधर्मजनकतां यात एवं तद्विपरीतधर्मवतां तज्जातीयानामपि संसर्गा’त्संयोगपृथक्त्वन्यायेन देशव्यवच्छेदेन कियद्देशेषु धर्मसाधनताऽस्त्विति चेत्तत्राह–पापैकनिलयेष्विति । सर्व एव देशाः पापैकनिलया जाताः पापानामेको निलयः स्थानं तादृशा जाताः । तेन कुत्रापि धर्मवार्ता न श्रूयते । यद्वा पापास्त एव महामोकारस्तदेकनिलयत्वात्तथा । येपि तद्विपरीतधर्मास्ते तु पूर्वजन्मनि वैष्णवा भूत्वा वेदनिन्दां कृतवन्त इति तादृशेषु जन्म प्राप्नुवन्तोपि सत्स्वेव प्रविष्टा ननु तेषु । तेन सतामिव तेषामपि धर्मादिनियतत्वाभावः सूचितः । ननु तदाक्रा-

न्तेष्वपि देशेषु चातुर्वर्ण्यस्यापि विद्यमानत्वाद्धोक्तृत्वप्रतियोगित्वेन त एव सतां धर्मादिप्रवर्तने सहायाः कथं न भवन्तीति चेत्तत्राह—सत्पीडेति । चित्तस्थैर्ये हि सर्वेषां स्वधर्मानुसन्धानं भवति । सतां चकारात्तदनुवर्तिनां च पीडया सर्व एव लोका व्यग्राः । सतां प्रसङ्गे पीडासंभवात्तदभावे धर्मादिसिद्ध्यभावाद्व्यग्रता । तथासति किं कर्तव्यमित्याकाङ्क्षायामाह—कृष्ण एवेति । सर्वथा साधनाभावाद्धर्माभावेपि भक्तिकल्पतरुस्वभावत्वेन सर्वधर्ममार्गीयफलतोप्यधिकफलप्रापकत्वेन श्रीकृष्ण एव गतिर्ममेत्येवंरूप आश्रय एव सर्वथा कार्य इत्याचार्याणां परमोक्तिरिति भावः ॥ २ ॥

एवं स्थलादिरूपतीर्थानामतथात्वमुक्त्वा जलादिरूपाणामपि तेषामतथात्वमाह—

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ।
तिरोहिताधिदैवेषु कृष्ण एव गतिर्मम ॥ ३ ॥

गङ्गादितीर्थवर्येष्विति । ननु 'गङ्गागङ्गेती'त्यादिनोक्तमाहात्म्यवतां गङ्गादीनां विद्यमानत्वात् कथं संसर्गदोषा बाधन्ते तत्राह दुष्टैरिति । 'नहि गङ्गासमं तीर्थम्' 'या वै त्वसि'त्यादिना च सर्वेभ्यस्तीर्थेभ्यो गङ्गाया एव वरीयस्त्वस्योक्तत्वाद्तीर्थानपि तीर्थीकुर्वन्ती गङ्गैव गच्छति । एवंविधान्यतथाजातानि । किञ्च, अस्ति गङ्गायां निरूपत्वमाधिदैविकादिभेदेन । तत्र तीर्थरूपं तु दुष्टसम्बन्धादेव नष्टं, तथाहि—भगवता 'त्वं च रुद्रे'त्यादिवाक्यैर्जगन्मोहनार्थं पशुपतेः प्रवर्तितत्वात्तत्र यथा सर्वे जीवन्तो मुमूर्षवश्च मुग्धा भवन्ति तदर्थं सर्वथा चित्तशुद्ध्यभावसाधनीभूततीर्थसम्बन्धाभावार्थं शिवेन स्वगणा गङ्गादिषु स्थापितास्ते तु गणास्तिष्ठन्ति तत्रत्यानां प्राणापगमे यथा तीर्थसम्बन्धो न भवति तथा ते यतन्ते । तत्सम्बन्धात्तीर्थरूपमेव नष्टं, तथाचोक्तं तैत्तिरीयके 'ये[1] तीर्थानि प्रचरन्ती'त्यादिना । अत एव तत्र मृतानामपि न तीर्थमरणफलमत एव तत्र मृताःसन्तो रुद्रपिशाचं ते प्राप्नुवन्ति न दोषादिनिवृत्तिः काश्यादिषु मुमूर्षूणां मनुष्याणामारभ्य तिरश्चामपि । ननु तत्र मृतानामपि तारकब्रह्मोपदेशं शिवः करोतीति श्रूयते तथा सति कथं जलस्थलरूपाणां तेषां न शुद्धिसाधकत्वं, सत्यं, तत्तु पूर्वोक्तधर्मवत्कालाभावे न तु तद्वति । यद्वा 'त्वं चे'तिभगवदुक्तेः पूर्वं शिवस्तथाऽकरोत्तदनन्तरं तथाकरणे आज्ञाभङ्ग एव स्यादिति न तथा कृतवान् । तथापि निदर्शनस्येदानीमपि दृश्यमानत्वात्कथं न करोतीति तत्र शिवोपि वैष्णवत्वाद्भगवत्सम्मतमेव सर्वं करोति । किञ्च, तथोपदेशं कुर्वन्नपि पूर्वं वैष्णवेनेष्वमतसङ्गेनापराधाद्वा दैत्यावेशे जाते स्वस्थानमाहात्म्यार्थमागन्तुकदोषपरिहारपूर्वकं पूर्वरूपतासंपादकत्वेन भगवद्धर्माभिन्नत्वाच्छि

---

१ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे ।

एव तारकब्रह्मोपदेशं करोतीत्यर्थः । अत एव 'प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनन्ती'त्यादिना भगवद्बहिर्मुखस्य पवित्रीकरणसामर्थ्यं तीर्थादिष्वपि नास्तीति जातेपि तत्सम्बन्धे न कृतार्था भवन्तीत्यर्थः । तथा चोक्तं निबन्धे 'तीर्थादावपि या मुक्तिः कदाचित्कस्यचिद्भवेत् । कृष्णप्रसादयुक्तस्य नान्यस्येति विनिश्चय' इत्यादि सर्वमनवद्यम् । ननु गङ्गादेराधिदैविकरूपस्य विद्यमानत्वात् कथं तादृशैरावरणं तीर्थस्वनाशो वा भवेत्तत्राहुः तिरोहितेति । जलस्थलरूपेभ्य आधिदैविकं तिरोहितं तस्मादुष्टसंसर्गे अक्षरात्मकमपि तथैव जातम् । एवं सर्वेषां सर्वसाधनापगमे आश्रय एव साधीयानिति तमेवाहुः—कृष्ण एवेति ॥ ३ ॥

तथाप्यन्तरङ्गबहिरङ्गभेदेन सर्वधर्मप्रवर्तकानां सतां विद्यमानत्वात्कथं धर्मादिनाशः स्यात्तत्राह—

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु ।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥

अहङ्कारविमूढेष्विति । यदि तेपि तथाभूता भवेयुस्तदा कार्यं सिद्ध्येदेव तेषां स्वरूपमाह—परीक्षितीति यस्मिन् विद्यमाने तच्छरणागतौ कलेरध्यवसायो जातः स यथाहङ्कार इदानीं सत्सु प्रविष्टः । यथैतत्सम्बन्धात्परमधार्मिकस्यापि विष्णुरातस्य कलेः स्थानदानेन निदोषोत्पत्तौ मौढ्याद्ब्राह्मणातिक्रमे बुद्धिर्जातैवं सतामपि तत्सम्बन्धात्स्वधर्मपरित्यागे बुद्धिर्जातेत्यहङ्कारेण सर्व एव मुग्धा जाताः । एतेन कर्तॄणामप्यसाधकत्वमुक्तं भवति । यदि कर्तार एवाहङ्कारेण विमुग्धा जातास्तदा तत्कृतौ धर्माद्यसाधकत्वं किमाश्चर्यमिति कैमुतिकन्याय उक्तो भवति । अहम्मौढ्ये प्रकारान्तरेणापि तदपगमः स्यात्तदभावार्थं विशेषण मूढत्वम् । तत्र निदर्शनं पापानुवर्तिष्विति । पापा निषिद्धकृतिभिस्तत्फलरूपतां प्राप्तास्तद्दत्तविषयभोक्तृत्वेनानुवर्तित्वम् । ननु तेपि स्वोपजीव्यान् परमधर्मादिकं बोधयन्त इव दृश्यन्ते कथं ते तादृशास्तत्राह लाभेति । लाभार्थं या पूजा तस्यामेव कृतप्रयत्ना न तु भगवत्कीर्तनादौ सन्तुष्टाः सन्तः परस्परं पूजयन्ति, तादृशी तु नापेक्षिता । यद्वा, स्वलाभार्थं स्वपूजार्थं च यत्नो येषामेतेनैतादृशकर्तॄणां मन्त्रादीनामस्माद्द्रव्याणामप्यसाधकत्वमुक्तम् । अत्र कर्तॄणां तदनुवर्तिनामेव द्रव्यादीनामसाधकत्वात्पूर्वं कर्तॄणामसाधकत्वमुक्त्वा पश्चाद्द्रव्याणामुक्तं, निमित्तोक्तौ नैमित्तिकोक्तिरपि सङ्गच्छते । तेन 'स्वगं नष्टः परान्नाशयन्ती'तिन्यायेन सतां परम्पराप्येवंरूपैव जाता । यदि तेन दाम्य परस्य यामुष्मिकं सिद्ध्येत्तदा ते सन्त एव भवेयुः । इत्यर्थं तेषां तत्करणात् 'भक्तास्तपा च दृश्यन्ति मम नामानि चार्जुन । असुरास्ते जनाः पार्थ दूरतः परिवर्जयेत्'

इत्यादिवाक्यैस्तेषामतथात्वप्रतिपादनाद्धर्मध्वजित्वात्तत्कृतं सर्वमकृतप्रायं भवतीत्येवंरूप-सर्वनाश उपस्थिते सर्वेषां सर्वकार्यसाधक आश्रय एवाचार्यैरुपदिष्ट इति तथाह कृष्ण एवेति ॥ ४ ॥

ननु गोपालादितान्त्रिकवैदिकमन्त्रहरिदिनव्रतादीनां विद्यमानत्वात्तेषां च सर्वथा शोधकत्वात्कथं न तैस्तेषां पूर्वरूपत्वं तत्राह—

**अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु ।**
**तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५ ॥**

अपरिज्ञाननष्टेष्विति । तेषां परितो ज्ञानमङ्गान्युररीकृत्य फलपर्यन्तं स्वरूपनिर्धारः । किञ्च, गोपालादिमन्त्राणामपि वाराङ्गनावशीकरणादिकं फलत्वेन श्रूयत इ'त्यनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे' इतिवचनाद्भगवन्मन्त्राणां विषयादिषूपयोगोऽपरिज्ञानादेव भवति तेनानर्थोपशमस्य भक्तियोगस्य विषयाद्युपयोगे जाते नष्टत्वम् । गुरुकुलावासब्रह्मचर्यशूद्राश्रवणानध्यायराहित्यपूर्वकपठितानां वेदमन्त्राणां 'अनिच्छयापि संस्पृष्टो दहत्येव हि पावक' इतिन्यायेन सम्यक्तात्पर्याज्ञानेप्यध्ययनमात्रेणैव सर्वसाधकत्वात्कथं नष्टत्वं तत्राह—अव्रतयोगिष्विति । व्रतेष्वयोगो येषां, व्रतानामयोगो येष्विति वा । 'अधुना ह्यधिकारास्तु सर्व एव गताः कलौ' इतिवचनात्कृतानामपि तेषामव्रतयोगित्वम् । ननु किमित्यायासपूर्वकं कर्मव्रतादीनामसाधकत्वं साध्यते, किञ्च, 'दानव्रततपोहोम' 'जन्मान्तरसहस्रेष्वि'त्यादिवाक्यैः कर्मव्रतादीनां भक्तावपि साधकत्वं मन्तव्यं, तेन 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि'तिन्यायेन पूर्वमेव तेषामसाधकत्वं न वक्तुं शक्यमिति चेत्तत्राह—सत्यं, तानि वाक्यानि मर्यादिकभक्तिपराणि । नो चे'न्न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः' 'मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम्' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेने'त्यादिश्रुतिस्मृतयश्च न सङ्गच्छेयुः । भक्तौ भगवदिच्छैकसाध्यत्वं धर्माद्यसाध्यत्वं श्रीमत्स्वामिचरणैर्भक्तिहेतुनिर्णये प्रपञ्चितमस्तीति नात्रोच्यते । तेन पुष्टिभक्तौ तु 'न रोधयति मां योगो न साङ्ख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता' 'न दानं न तपो नेज्या न शौचं न व्रतानि च' 'प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्' 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' 'नाहं वेदैर्न तपसे'त्यादिवाक्यसहस्रैर्भगवदङ्गीकृतानामेव तत्प्राप्तिः । तस्माद्भगवदाश्रये कर्मादीन्यप्रयोजकानि । ननु 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावते'त्यादिवचनैर्भगवदीयानामपि नित्यनैमित्तिकव्रतादिकरणमावश्यकं

तत्र यदसाधकत्वं वदति भगवान् तदा भगवदीयानामपि नित्यनैमित्तिककर्मादिकरणमेकादशीजन्माष्टमीव्रतादिकरणं च व्यर्थमिति चेत्, न । तत्र पूर्वं भगवदीयानां कर्मव्रतादीनां स्वरूपं वक्तव्यं तदेवाहुः—'यत्स्ये विभूतीर्भवतस्तत्संपादय नः प्रभो' 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्' इति । तेन भगवदीयकृतकर्मणां 'यस्य स्मृत्ये'त्यादिवाक्यैः पूर्णत्वमन्येषामपूर्णत्वादसाधकत्वम् । तेन स्वमार्गीयाणां तेषां तेभ्यो भेदः सूचितः । वस्तुतस्तु यत्र विवेकधैर्यभक्त्यादिरहितानामपि तत्प्राप्तिस्तत्राकामतयापि कृतानां कर्मव्रतादीनामसाधकत्वं किमाश्चर्यम् । एतेन सर्वसाधनरहितानामेव भगवदाश्रये मुख्योऽधिकार इति ज्ञेयम् । तेन तेषां सपरिकराणां ज्ञानाभावे त एव नष्टा जाता इत्याह नष्टेष्विति । ननु तदधिष्ठातृदेवतानां तद्रूपसाधनैकलभ्यप्रसादानां विद्यमानत्वात्कथमपरिज्ञानं नाशो वा भवेत्तत्राह—तिरोहितेति । अर्थरूपा देवास्तेभ्यस्तिरोहिता जातास्तेन गतसाराः सन्तस्तेऽपि तथैव जाता इति भावः ॥ ५ ॥

ननु तान्त्रिकमन्त्राद्यभावेऽप्यग्निहोत्रचान्द्रायणकृच्छ्रादीनां विद्यमानत्वात्कथं न कार्यसिद्धिरत आह—

नानावादविनष्टेषु सर्वकर्मव्रतादिषु ।
पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥

नानावादविनष्टेष्विति । जैमिनिकणादगौतमाद्यो हि ऋषयस्तामसास्तैः श्रुतिस्मृत्यर्थविचारे क्रियमाणे कालसम्बन्धादुद्रिक्तस्वभावाः सन्तः कर्मव्रतादिप्रतिपादने निरन्तरसन्तन्यमानपरस्परप्रतिक्षेपासक्तैरुज्झितव्यवसाया जाताः । एवं वस्तुनिर्धारमार्थं तदन्तेवासिपरम्परया अपि पूर्वापेक्षयाप्यधिकदोषयुक्तत्वेन विविधकुतर्कोपेतैः परस्परविरुद्धनानावादरूपैस्तन्त्रान्तरैः सर्वाण्येव कर्मव्रतादीनि विशेषेण नष्टानि । फलस्वरूपाभ्यां वस्तुनिर्धारामावे तद्रूपेण कृतमकृतप्रायं भवतीति तथा । अत एव भगवतापि गीतोक्तं 'ज्ञात्वाज्ञात्वा च कर्माणि जनोऽयमधितिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' इति । तन्मार्गस्यैव तथात्वात् । ननु साक्षादग्निहोत्राद्यनप्रतिपादकानां श्रुतिस्मृतीनां विद्यमानत्वेन तदनुसारेण तत्कर्तारोऽपि दृश्यन्ते कथं तन्नाश इति शङ्कायामाह—पाषण्डैकेति । परवञ्चनार्थं धर्मवञ्चना प्रदर्शनं पाषण्डः, प्राकृतनित्यनैमित्तिककाम्यमन्त्रसाधनस्वरूपादिपरिज्ञानाभावे चित्तादिशुद्ध्यसाधकत्वात् 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इत्यादिवाक्यात्तेषामिदानीं निषिद्धत्वात्तथा भ्रष्यमाणत्वेन मासुरत्वानि तत्कर्तॄणामपि पाषण्डधर्मैकतो यः प्रकर्षेण

यत्नस्तद्रूपत्वमेव स्यात् । एवमखिलकर्मव्रतानां पापघ्वैकप्रयत्नरूपत्वे जाते ब्रह्मक्षत्राणामप्याश्रय एव साधीयानित्याह—कृष्ण इति ॥ ६ ॥

नन्वेवं सर्वथा सदोषाणां तृतीयैकमार्गप्रवेशयोग्यानां 'गतिर्ममे'त्येवंरूपोक्तिमात्रेण कथं भगवान् सर्वनिरपेक्ष आश्रयो भवेत्तत्राह—

**अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः ।**
**ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥**

अजामिलादिदोषाणां नाशक इति । ब्रह्मवादे भगवतः सर्वाश्रयत्वेपि सर्वार्थे भक्तिमार्गीयाश्रयस्य जीवानां सर्वथा कर्तव्यत्वात्दाश्रयभवने महानुत्साहो भवति । यथा स्वनाममाहात्म्यख्यापनार्थं नामोक्तिमात्रेणैवाजामिलादीनां सर्वदोषनाशको जातः स्वधर्मपक्षपातादेवं भक्तिमार्गे पक्षपातात्तन्मार्गीयाश्रयमाहात्म्यख्यापनार्थं तादृगुक्तिमात्रेणैव भगवाँस्तथाविधो भवतीति भावः । तथापि क्व जीवाः क्षुद्रतमाः क्व वा ब्रह्मादिदुर्लभकथो भगवानित्याश्रयभवननिश्चयाभावे कथं वा तमुद्दिश्य तथोक्तौ प्रवृत्तिरपि भवेत्तत्राह— अनुभवे इति । अत्रास्मच्छब्दोऽध्याहर्तव्यः । एवमाश्रयभवनोन्मुखो भगवान् मदनुभवे स्थित इति निर्णीतार्थोहं वदामीत्यज्ञानान्यथाज्ञानप्रतिकूलतर्कैर्नान्यथा शङ्कनीयमिति भावः । चित्तस्यातथात्वेपि निरन्तरं तदनुसन्धानपूर्वकमेनदुक्तौ सत्यां मदनुभूतो भगवानप्यनुभवारूढो भवतीति मदीयैरेतदेव सर्वथा कार्यमित्यलं विस्तरेण । ननु यथा कलौ श्रुत्यादिभिर्ज्ञातमाहात्म्या अपि धर्मादयो नष्टाः तथा 'कलौ दशसहस्राणि विष्णुस्त्यक्ष्यति मेदिनीम् । तदर्द्धं जाह्नवीतोयं तदर्द्धं ग्राम्यदेवता' इत्यादिना साक्षतो भगवत्सान्निध्याभावे तन्माहात्म्यमपि तिरोभूतं भविष्यतीति कथमज्ञातमाहात्म्यास्तदाश्रयोक्तौ प्रवृत्ता भविष्यन्तीति चेत्तत्राह ज्ञापितेति । ज्ञापितमखिलमखिलेभ्यो भक्तेभ्यो वा श्रुतिपुराणश्रीभागवतादिना साक्षात्परम्परया वा माहात्म्यं यस्य येनेति वा । तथाहि 'तस्माद्वा एतस्मादात्मनः' इत्यादिनाऽखिलेभ्यः सृष्टिकर्तृत्वबोधिकया श्रुत्या माहात्म्यख्यापनम् । प्रवृत्तिपराणां कर्ममाहात्म्यपरत्वमेव भगवन्माहात्म्यज्ञापनं तत्रैव पर्यवसितमित्याद्येवमेवं ज्ञानिनामुपासकानां च । भक्तानां तु साक्षादेव यथा 'जृम्भतो ददृशे इदम्' यथाच 'गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत्' एवमूह्यमुक्त्या सर्वत्र ॥ ७ ॥

ननु 'आकाशात्पतितं तोयं यथे'त्यादिनोक्तप्रकारेण देवतान्तरं भजतामपि सर्वमुक्तौ भगवत्सम्बन्धो भविष्यतीति किमित्येवं निर्बन्धेनाश्रय एवोच्यते तत्राह—

**प्राकृताः सकला देवा गणितानन्दकं बृहत् ।**
**पूर्णानन्दो हरिस्तस्मात् कृष्ण एव गतिर्मम ॥ ८ ॥**

प्राकृता इति । ब्रह्माणमारभ्य सर्व एव देवाः प्राकृता आधिभौतिकान्तःपातित्वात् । बृहदक्षरं गणितानन्दकं स्वार्थे 'कः' प्रत्ययः । तेन जीवेषु निरानन्दहेतूनामगणितानां विद्यमानत्वाद्यत्र गणितानन्देऽपि न तेषामानन्दपूर्णता तत्र प्राकृतैः कः पुरुषार्थः सिद्ध्येत् । तथापि विराडक्षरयोरपि तदात्मकत्वाविशेषेण कार्यसिद्ध्यभावे, कथं मूलाश्रयणेन सर्वथा तद्भवत्येवेत्येवं निश्चीयते तत्राहुः—पूर्णेति । नहि पूर्वोक्तैः कैरप्यानन्दः पूर्यते । तत्र दुःखापगमाभावे पूरितोऽप्यपूरित एव स्यात्तत्राह—हरिरिति । यद्य'प्येतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिना देवेष्वपि तद्दुःखमस्ति तथापि न तथा तेषामन्यपूरकत्वं तदल्पीयस्त्वात् । निरवधिदारिद्र्यस्य सावधिधनेनापगमस्याशक्यत्वादेवमपूर्णानपि प्रतिबन्धनिवृत्तिपूर्वकं कृष्ण एव पूर्णान् करोति । 'तं सत्यमानन्दनिधिं भजेते'ति न्यायेन स एव तथा कर्तव्य इति दिक् ॥ ८ ॥

ननु भवद्भिरेव भक्त्युत्पत्त्यर्थं तद्वृद्ध्यर्थं वा विवेकधैर्याश्रयाणां निरूपितत्वात्कथमितरनिरपेक्षः स एवोच्यते, किञ्च, आश्रयरक्षायाश्च तदुभयरक्षानन्तरं च भवद्भिरेवोक्तत्वात्कथं श्रीमतामेव वाक्यं विसंवादि भवतीति चेत्तत्राह—

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ।
पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥

विवेकधैर्यभक्त्यादिरहितेति । विवेकः सर्वप्रार्थनेऽपि निजेच्छातः करिष्यतीत्येवंनिश्चयरूपः । निरुद्ध्युपायाकरणेन सर्वथा दुःखसहनं धैर्यम् । भक्तिः प्रेमलक्षणा तत्साधनरूपा वा । आदिशब्देन मर्यादाभक्तिसाधनानां ग्रहणम् । यत्र भक्तिसाध्यं नान्येन सिद्ध्यत्यन्यसाध्यं तु भक्तेरानुषङ्गिकं फलमेवंरूपभक्तिव्यतिरेकेणापि यत्राश्रयात्सर्वसिद्धिस्तत्र विवेकादिनिरपेक्षः स तथा भवतीति किं वाच्यम् ? । अत एव तत्राप्यन्ते 'कलौ भक्त्यादिमार्गा हि दुःसाध्या' इत्युक्तम् । किञ्च, विवेकादिस्थितौ तदवलम्बेनाश्रयाभावेऽपि स्थितिर्भवति तथा सत्याश्रयस्वरूपं साङ्गं न सिद्ध्येत्, धर्मेतद्विपरीतादिसाधनाभावे तूभयथाप्यनुद्धार्य एव स्यात्तेन धर्मिपक्षमवलम्ब्य धर्मादिविपरीतसाधनानामेव मन्येऽहं कार्यसिद्ध्यभावनिश्चये दैन्याविर्भावेनैव शरणागतावित्याश्रये मुख्योऽधिकार इति तथैवोक्तं पापासक्तस्य दीनस्येति । आसक्तिः कायेन मनसा वाचा तत्करणे स्वानुप्रवृत्तिः । अयमेव विशेष आश्रयविधौ । एवं सति धर्मादिप्रतियोगिनां पक्षे मुख्यमित्याश्रयाधिकारस्य बहुधा विद्यमानत्वात् सर्वत्रैव स एव सर्वथा कार्य इत्याह कृष्ण एवेति । नन्वेवं सति तु पापकरणस्यैवाश्रये कारणत्वमायातीति चेत्तत्राह 'कृष्ण एवे'ति । अयमेवं प्रतिभाति—एतत्कारेण यत्र विवेकधैर्यभक्त्यादीनां भगवद्धर्मा-

णामप्यकारणं तत्र तत्करणे तदाश्रयस्य विद्यमानत्वादन्याश्रये जाते भगवदाश्रयानुत्पत्तिः स्यादतो यथा धर्मादित्यागस्तथाऽधर्मस्यापीति भावः । तर्हि पूर्ववाक्यमनुपपन्नमिति चेत्, न, अनवबोधात् । तथाहि 'एवं सति धर्मादिमतियोगित्वं कलौ सुलभमित्याश्रयाधिकारस्य बहुधा विद्यमानत्वा'देतस्यायमर्थः—विवेकधैर्यभक्त्यादिसहितास्तु कलौ दुर्लभाः पापकर्तारस्तु सुलभा इति तदधिकारस्य बहुधा विद्यमानत्वम् । ननु धर्मकर्तारस्तु सर्वथा तत्रानधिकारिणः परमधर्माकर्तार एवाधिकारिण इत्यायातमिति चेत् ? तत्रोच्यते । धर्मादिमतां विवेकधैर्यभक्तिमतां चेत्तत्त्यागपूर्वकं केवलाश्रयकरणं सहसा न भवति तेषु समीचीनत्वबुद्धेः । यथा प्रभुणा सर्वधर्मत्याग उपदिष्टे पार्थस्य तत्करणे शोकोत्पत्तौ पुनः प्रभुणैव 'पापेभ्यो मोक्षयिष्यामी'त्युक्तं, नोचेच्छरणधर्मे तदसंभवात्तन्मोचनकथनमनुपपन्नं भवति तथैवैतेषामपि शोकसंभवः । परं तद्विपरीतवतां तु तेष्वसद्बुद्ध्या निस्साधनेष्वेव श्रीगोकुलेशाङ्गीकारप्राचुर्यात्तद्बलाच्च तत्त्यागः सुलभ इति सुष्ठूक्तं 'धर्मादिमतियोगित्व'मित्यनेनेति सर्वमनवद्यम् ॥ ९ ॥

ननु 'श्रेयांसि बहुविघ्नानी'तिन्यायेन प्रतिबन्धकानां दृष्टादृष्टभेदाभ्यामुभयथा विद्यमानत्वात्कथमुक्तिमात्रेण चाक्लिष्टकर्मा भगवानाश्रयो भवेत्तत्राह—

## सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत् ।
## शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १० ॥

सर्वसामर्थ्यसहित इति । कर्तुमकर्तुमन्यथाकर्तुंसामर्थ्यादिरूपैः सहितः । ननु तत्र दृष्टान्तनिदर्शनस्यादृश्यमानत्वात्कथं ज्ञायते तत्राह सर्वत्रेति । सर्वत्र योग्यायोग्यविचारेणाखिलानामखिलान् वार्थान् करोति करिष्यत्यकार्षीदित्यादिधर्मस्याविनाशित्वेन भगवति सर्वदा विद्यमानत्वादाश्रयकरणे कोनध्यवसाय इत्यर्थः । तथापि भगवतः सर्वसमत्वात्सर्वमुक्त्यनवसरेऽप्रार्थितः कथमुद्धरिष्यतीत्यत आह शरणस्थेति । ये च शरणं गत्वा तस्मिन्नेव धर्मे स्थितास्तेषामुद्धरणे अप्रार्थितोपि भूकृतप्रयत्नः सर्वदैव वर्तते किं पुनर्मत्प्रार्थितः । यथा भूम्युद्धारचिकीर्षायामपि ब्रह्मणा भूम्या दुःखनिवेदनरूपप्रार्थनानन्तरमेव समाधौ तद्गिरः श्रवणानन्तरमेव साक्षाद्भगवानवतीर्यास्मानुद्धरिष्यतीत्येवंनिश्चयो जात एवं मत्प्रार्थितो मदीयानामाश्रयो भवत्येवेति निश्चित्य मदीयैः सर्वथा सर्वं परित्यज्याश्रय एव कर्तव्यः । एतदेवाभिसंधायाचार्यैरुक्तं कृष्णं विज्ञापयाम्यहमिति । यद्वा, मदीयैरेवं स्तुतिरेव कार्या, मत्प्रार्थितः स्वयमेवाश्रयो भविष्यति नात्र युष्मत्कृतिमपेक्षते ।

नत्वभिय स्तुतिः पूर्वं कर्तव्याश्रयणेप्सुभिः ।
दशमे स्वस्य धर्मस्य साधकं ज्ञापयेद्बुधः ॥ १० ॥

१ कार्यस्येतिपाठः ।

प्राकृता इति । ब्रह्माणमारभ्य सर्व एव देवाः प्राकृता आधिभौतिकान्तःपातित्वात् । बृहदक्षरं गणितानन्दकं स्वार्थे 'कः' प्रत्ययः । तेन जीवेषु निरानन्दहेतूनामगणितानां विद्यमानत्वाद्यत्र गणितानन्देपि न तेषामानन्दपूर्णता तत्र प्राकृतैः कः पुरुषार्थः सिद्ध्येत् । तथापि विराडक्षरयोरपि तदात्मकत्वाविशेषेण कार्यसिद्ध्यभावे, कथं मूलाश्रयणेन सर्वथा तद्भवत्येवेत्येवं निश्चीयते तत्राहुः—पूर्णेति । नहि पूर्वोक्तैः कैरप्यानन्दः पूर्यते । तत्र दुःखापगमाभावे पूरितोप्यपूरित एव स्यात्तत्राह—हरिरिति । यद्य'प्यस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिना देवेष्वपि तद्धत्त्वमस्ति तथापि न तथा तेषामन्यपूरकत्वं तदल्पीयस्त्वात् । निरवधिदारिद्र्यस्य सावधिधनेनापगमस्याशक्यत्वादेवमपूर्णानपि प्रतिबन्धनिवृत्तिपूर्वकं कृष्ण एव पूर्णान् करोति । 'तं सत्यमानन्दनिधिं भजेते'तिन्यायेन स एव तथाकर्तव्य इति दिक् ॥ ८ ॥

ननु भवद्भिरेव भक्त्युत्पत्त्यर्थं तद्वाढ्यार्थं वा विवेकधैर्याश्रयाणां निरूपितत्वात्कथमितरनिरपेक्षः स एवोच्यते, किञ्च, आश्रयरक्षायाश्च तदुभयरक्षानन्तरं च भवद्भिरेवोक्तत्वात्कथं श्रीमतामेव वाक्यं विसंवादि भवतीति चेत्तत्राह—

**विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ।**
**पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥**

विवेकधैर्यभक्त्यादिरहितेति । विवेकः सर्वप्रार्थनेपि निजेच्छातः करिष्यतीत्येवंनिश्चयरूपः । निरुद्ध्युपायाकरणेन सर्वथा दुःखसहनं धैर्यम् । भक्तिः प्रेमलक्षणा तत्साधनरूपा वा । आदिशब्देन मर्यादाभक्तिसाधनानां ग्रहणम् । यत्र भक्तिसाध्यं नान्येन सिद्ध्यत्यन्यसाध्यं तु भक्तेरानुषङ्गिकं फलमेवंरूपभक्तिव्यतिरेकेणापि यत्राश्रयात्सर्वसिद्धिस्तत्र विवेकादिनिरपेक्षः स तथाभवतीति किं वाच्यम् ? । अत एव तत्रान्यत्र 'कलौ भक्त्यादिमार्गा हि दुःसाध्या'इत्युक्तम् । किञ्च, विवेकादिस्थितौ तदवलम्बेनाश्रयाभावेपि स्थितिर्भवति तथासत्याश्रयत्वं साङ्गं न सिद्ध्येत्, धर्मतद्विपरीतादिसाधनाभावे तूभयथाप्यनुद्धार एव स्यात्तेन धर्मिपक्षमवलम्ब्य धर्मादिविपरीतसाधनत्वमेव सर्वतः कार्यसिद्ध्यभावनिश्चये दैन्याविर्भावकतामेव शरणागतावित्याश्रये सुम्पोषिकात इति सर्वथोक्तं पापासक्तस्य दीनस्येति । आसक्तिः कायेन मनसा पापा तदकरणे स्थातुमशक्तिः । अयमेव विशेष आश्रयविशेषे । एवं सति धर्मादिमतियोगिनः कलौ मुख्यमित्याश्रयाधिकारस्य बहुधा विद्यमानत्वात् सर्वैरेव स एव सर्वथा कार्य इत्याह कृष्ण एवेति । नन्वेवं सति तु पापकरणस्याश्रये कारणत्वमायातीति नेत्याह 'कृष्ण एवे'ति । अयमेव भक्तिमार्ग-प्रकारेण यत्र विवेकधैर्यभक्त्यादीनां भगवद्धर्मा-

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# कृष्णाश्रयस्तोत्रम् ।



श्रीमद्व्रजराजचरणविरचितविवरणविभूषितम् ।

यद्वाक्यपानकथनात् स्वीयत्वं मनुते हरिः ।
ते कृष्णवल्लभाचार्याः प्रसीदन्तु सदा मयि ॥ १ ॥
तदनुग्रहतः कृष्णाश्रयस्य विवृत्तिर्मया ।
विधीयते यतः कृष्णाश्रयः फलति सर्वथा ॥ २ ॥

अथ श्रीमदाचार्यचरणा भगवदाज्ञानुसारेण जनानुद्धर्तुं निबन्धादौ सपरिकरं भक्त्यादिमार्गानुपदिश्य प्रत्यहं कलेराधिक्येन तेषां दुःसाध्यत्वमाकलय्य विवेकधैर्याश्रय-ग्रन्थे विवेकधैर्याभ्यां सहितमाश्रयमुपदिष्टवन्तः, तत्स्वरूपं च तत्र सर्वथा सर्वदा भगवच्छरणगमनात्मकं सिद्धं, तथाच तत् कायिकादिभेदेन त्रिधा भवति, तत्र प्रथमं मानसं शरणं भावनात्मकं भवति, पश्चात् कायिकं तद्धैर्येण सिद्ध्यति, वाचनिकं तु 'प्रपन्नं पाहि मा प्रभो' इत्यादिप्रार्थनारूपम् । एतादृशस्य भवनेपि कारणं भगवदनुग्रह एवेति 'सोहं तवाङ्घ्री'त्यक्रूरस्तुतौ 'असतां दुरापं तथाप्यहं भवदनुग्रहमीश मन्य' इति स्वानुभवेन प्रतिपादितम् । शरणागतिलक्षणं च तत्रैवोक्तं 'यदि सद्भातमनुगुणं कुर्यात् त्याजयेद्वा तदा शरणागतिः सिद्धेति ज्ञातव्य'मित्यारभ्य 'सत्सेवारुचिर्भगवत्स्वरूपज्ञानेच्छा भगवच्छास्त्रपरत्वं चान्तिमजन्मज्ञापक'मित्यन्तेन । 'अनुगुणपक्षस्तु सुगम' इति च । एवं सत्येतादृशी शरणागतिर्विवेकधैर्याश्रयोक्तरीत्यापि साम्प्रतं कठिनेति भक्त्यादिमार्गाणां दुःसाध्यत्वे हेतुरपि तत्र नोक्त इति निबन्धादावुक्तोपि दुर्ज्ञेय इति तदुक्तिपूर्वकं साक्षां वाचनिकीं ता सांप्रतं साधनत्वेन विवक्षन्तः कृष्णाश्रयस्तोत्ररूपेणाहुः—सर्वेत्यादि ।

अत्र टीकारम्भे श्रीरघुनाथचरणैर्ग्रन्थावतरणिका कापि नोक्ता परन्तु 'य आविरासीद्धोरेस्मिन् कलौ श्रीवल्लभाभिधः । निजदास्यं [illegible] नो देयादन्यादपि दुराश्रया-दि'तिमङ्गलवाक्ये कलिस्वरूपस्य श्रीमदाचार्येषु प्रार्थनस्य च कथनेन सूचितेति न विरोधः । एवं कल्याणरायैरपि कृष्णाश्रयस्य सर्वसाधकत्वं सर्वसाधनानामसाधकत्वं चोक्तमिति तेषामप्ययमेवाशय । श्लोकसङ्ख्यातात्पर्यं तैरेवमुक्तं 'भक्तानां भगवानेव

पाठफलमाह—

कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ ।
तस्याश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११ ॥

कृष्णाश्रयमिदं स्तोत्रमिति । कृष्ण आश्रयो भवत्यस्मादिति कृष्णाश्रय इति स्तोत्रस्य नाम । फलाधिकारिणां पाठविधिं चाह—सन्निधौ सेव्यस्य गुरोर्वा । उभयोरभावे स्मरणीयस्य वा । धर्मादिषु सर्वेषु असाधनतानिश्चयः कृतार्थताविषयिण्युत्कटेच्छा च पूर्वावधिः। अल्पे बहु च साध्ये भगवान् स्वतः सर्वसाधको भवतीत्येवंरूप आश्रयसिद्धिरुत्तरावधिः। तावदिदं पठनीयमिति सिद्धम् । यः पठेत् कृष्णसन्निधौ । य एव पठेत्तद्धर्मविशिष्टान्तःकरणः अतथाभूतो वा । ततः किं स्यादत आह तस्याश्रयो भवेत् । क इत्याकाङ्क्षायां कृष्ण इति । कृष्णः सदानन्दः । तेन तदाश्रितानां व्रजस्थानामिव सर्वथा दुःखात्यन्ताभावः परमानन्दसम्बन्धश्चोक्तौ भवतः । नन्वत्र किं प्रमाणमेतत्स्तोत्रपाठमात्रेणैव स तथा भवेत् श्रीवल्लभ इति । यथा श्रिया वल्लभो भगवाँस्तथायमपीति भगवद्वाक्यमिवास्यापि वाक्यं वेदात्मकमिति मूर्ध्नि धृत्वा तथैव कर्तव्यमित्यर्थः । किञ्च, भगवद्धर्माणां स्वरूपं तद्धर्मनिरता एव जानन्तीति तदुक्तौ न विप्रतिपन्नैः कैरपि भाव्यमिति दिक् ॥ ११ ॥

व्रजपतिरतिमित्थं यः प्रदातुं कृपातः
सकलनिगमसारं तत्त्वतः संजगाद ।
स्वजनपरिवृढो श्रुक् संततेः संशयानाम्
स भवतु मम सर्वं विट्ठलेशः सुकेशः ॥ १ ॥
रुचिरचरणयुग्मं हृत्प्रवेशे तितिक्ष्यम्
निजमनसि विहारं ध्वस्तगाढान्धकारम् ।
अजिनवनकुठारं भाक्तलोकोपहारम्
सकलनिगमसारं भावयेद्विट्ठलेशम् ॥ २ ॥
आश्रयस्तोत्रविवृतिं द्वारिकेश्वरशुद्धधीः ।
आश्रितानां चकारेमामाश्रयप्रापणेच्छया ॥ ३ ॥

इति श्रीमद्गोपीजनवल्लभचरणैकतानद्वारिकेश्वरेण विरचिता
कृष्णाश्रयविवृतिः सम्पूर्णा ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# कृष्णाश्रयस्तोत्रम् ।

श्रीमद्व्रजराजचरणविरचितविवरणविभूषितम् ।

यद्वाक्यमात्रकथनात् स्वीयत्वं मनुते हरिः ।
ते कृष्णवल्लभाचार्याः प्रसीदन्तु सदा मयि ॥ १ ॥
तदनुग्रहतः कृष्णाश्रयस्य विवृतिर्मया ।
विधीयते यतः कृष्णाश्रयः फलति सर्वथा ॥ २ ॥

अथ श्रीमदाचार्यचरणा भगवदाज्ञानुसारेण जनानुद्धर्तुं निबन्धादौ सपरिकरं भक्त्यादिमार्गानुपदिश्य प्रत्यहं कलेराधिक्येन तेषां दुःसाध्यत्वमाकलय्य विवेकधैर्याश्रयग्रन्थे विवेकधैर्याभ्यां सहितमाश्रयमुपदिष्टवन्तः, तत्स्वरूपं च तत्र सर्वथा सर्वदा भगवच्छरणगमनात्मकं सिद्धं, तथाच तत् कायिकादिभेदेन त्रिधा भवति, तत्र प्रथमं मानसं शरणं भावनात्मकं भवति, पश्चात् कायिकं तद्धैर्येण सिद्ध्यति, वाचनिकं तु 'प्रपन्नं पाहि मां प्रभो' इत्यादिप्रार्थनारूपम् । एतादृशस्य भवनेपि कारणं भगवदनुग्रह एवेति 'सोहं तवाङ्घ्री'त्यक्रूरस्तुतौ 'असतां दुरापं तवाप्यहं भवदनुग्रहमीश मन्य' इति स्वानुभवेन प्रतिपादितम् । शरणागतिलक्षणं च तत्रैवोक्तं 'यदि सङ्घातमनुगुणं कुर्यात् त्याजयेद्वा तदा शरणागतिः सिद्धेति ज्ञातव्य'मित्यारभ्य 'सत्सेवारुचिर्भगवत्स्वरूपज्ञानेच्छा भगवच्छास्त्रपरत्वं चान्तिमजन्मज्ञापक'मित्यन्तेन । 'अनुगुणपक्षस्तु सुगम' इति च । एवं सत्येतादृशी शरणागतिर्विवेकधैर्याश्रयोक्तरीत्यापि साम्प्रतं कठिनेति भक्त्यादिमार्गाणां दुःसाध्यत्वे हेतुरपि तत्र नोक्त इति निबन्धादावुक्तोपि दुर्ज्ञेय इति तदुक्तिपूर्वकं साङ्गां वाचनिकीं तां सांप्रतं साधनत्वेन विवक्षन्तः कृष्णाश्रयस्तोत्ररूपेणाहुः—सर्वेत्यादि ।

अत्र टीकारम्भे श्रीरघुनाथचरणैर्ग्रन्थावतरणिका कापि नोक्ता परन्तु 'य आविरासीद्धरेरस्मिन् कलौ श्रीवल्लभाभिधः । निजदास्यं स नो देयादन्यादपि दुराश्रया'दि'तिमङ्गलवाक्ये फलिस्वरूपस्य श्रीमदाचार्येषु प्रार्थनस्य च कथनेन सूचितेति न विरोधः । एवं कल्याणरायैरपि कृष्णाश्रयस्य सर्वमापकत्वं सर्वसाधनानामसाधकत्वं चोक्तमिति तेषामप्ययमेवाशयः । श्लोकसङ्ख्यातात्पर्यं तैरेवमुक्तं 'भक्तानां भगवानेव

पाठफलमाह—

**कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ ।**
**तस्याश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११ ॥**

कृष्णाश्रयमिदं स्तोत्रमिति । कृष्ण आश्रयो भवत्यस्मादिति कृष्णाश्रय इति स्तोत्रस्य नाम । फलाधिकारिणां पाठविधिं चाह—सन्निधौ सेव्यस्य गुरोर्वा । उभयोरभावे स्मरणीयस्य वा । धर्मादिषु सर्वेषु असाधनतानिश्चयः कृतार्थताविपर्ययिण्युत्कटेच्छा च पूर्वावधिः । अल्पे बहु च साध्ये भगवान् स्वतः सर्वसाधको भवतीत्येवंरूप आश्रयसिद्धिरुत्तरावधिः । तावदिदं पठनीयमिति सिद्धम् । यः पठेत् कृष्णसन्निधौ । य एव पठेत्तद्धर्माविष्टान्तःकरणः अतथाभूतो वा । ततः किं स्यादत आह तस्याश्रयो भवेत् । क इत्याकाङ्क्षायां कृष्ण इति । कृष्णः सदानन्दः । तेन तदाश्रितानां व्रजस्थानामिव सर्वथा दुःखात्यन्ताभावः परमानन्दसम्बन्धश्चोक्तौ भवतः । नन्वत्र किं प्रमाणमेतत्स्तोत्रपाठमात्रेणैव स तथा भवेद् श्रीवल्लभ इति । यथा श्रिया वल्लभो भगवाँस्तथायमपीति भगवद्वाक्यमिवास्यापि वाक्यं वेदात्मकमिति मूर्ध्नि धृत्वा तथैव कर्तव्यमित्यर्थः । किञ्च, भगवद्धर्माणां स्वरूपं तद्धर्मनिरता एव जानन्तीति तदुक्तौ न विप्रतिपत्तिः कैरपि भाव्यमिति दिक् ॥ ११ ॥

व्रजपतिरतिमित्थं यः प्रदातुं कृपातः
सकलनिगमसारं तत्त्वतः संजगाद ।
स्वजनपरिवृढो श्रुक् संततेः संश्रयाणाम्
स भवतु मम सर्वं विट्ठलेशः सुकेशः ॥ १ ॥
रुचिरचरणयुग्मं हृत्प्रवेशेतितिग्मम्
निजमनसि विहारं ध्वस्तगाढान्धकारम् ।
अजितनवकुठारं भाग्यलोकोपहारम्
सकलनिगमसारं भावयेद्विट्ठलेशम् ॥ २ ॥
आश्रयस्तोत्रविवृतिं द्वारिकेश्वरशुद्धधीः ।
आश्रिताना चकारेमामाश्रयप्रापणेच्छया ॥ ३ ॥

इति श्रीमद्गोपीजनवल्लभचरणैकतानद्वारिकेश्वरेण विरचिता
कृष्णाश्रयविवृतिः सम्पूर्णा ।

---

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# कृष्णाश्रयस्तोत्रम् ।



श्रीमद्व्रजराजचरणविरचितविवरणविभूषितम् ।

यद्वाक्यमात्रकथनात् स्वीयत्वं मनुते हरिः ।
ते कृष्णवल्लभाचार्याः प्रसीदन्तु सदा मयि ॥ १ ॥
तदनुग्रहतः कृष्णाश्रयस्य विवृतिर्मया ।
विधीयते यतः कृष्णाश्रयः फलति सर्वथा ॥ २ ॥

अथ श्रीमदाचार्यचरणा भगवदाज्ञानुसारेण जनानुद्धर्तुं निबन्धादौ सपरिकरं भक्त्यादिमार्गानुपदिश्य प्रत्यहं कलेराधिक्येन तेषां दुःसाध्यत्वमाकलय्य विवेकधैर्याश्रयग्रन्थे विवेकधैर्याभ्यां सहितमाश्रयमुपदिष्टवन्तः, तत्स्वरूपं च तत्र सर्वथा सर्वदा भगवच्छरणगमनात्मकं सिद्धं, तथाच तत् कायिकादिभेदेन त्रिधा भवति, तत्र प्रथमं मानसं शरणं भावनात्मकं भवति, पश्चात् कायिकं तद्द्वैर्येण सिद्ध्यति, वाचनिकं तु 'प्रपन्नं पाहि मां प्रभो' इत्यादिप्रार्थनारूपम् । एतादृशस्य भवनेपि कारणं भगवदनुग्रह एवेति 'सोहं तवाङ्घ्र्यु'पस्थकूरस्तुतौ 'असतां दुरापं तच्चाप्यहं भवदनुग्रहमीश मन्य' इति स्वानुभवेन प्रतिपादितम् । शरणागतिलक्षणं च तत्रैवोक्तं 'यदि सङ्घातमनुगुणं [illegible]र्यात् त्याजयेद्वा तदा शरणागतिः सिद्धेति ज्ञातव्य'मित्यारभ्य 'सत्सेवारुचिर्भगवत्स्वरूपज्ञानेच्छा भगवच्छास्त्रपरत्वं चान्तिमजन्मज्ञापक'मित्यन्तेन । 'अनुगुणपक्षस्तु सुगम' इति च । एवं सत्येतादृशी शरणागतिर्विवेकधैर्याश्रयोक्तरीत्यापि साम्प्रतं कठिनेति भक्त्यादिमार्गाणां दुःसाध्यत्वे हेतुरपि तत्र नोक्त इति निबन्धादावुक्तोपि दुर्ज्ञेय इति तदुक्तिपूर्वकं साक्षां वाचनिकीं तां सांप्रतं साधनत्वेन विवक्षन्तः कृष्णाश्रयस्तोत्ररूपेणाहुः—सर्वेत्यादि ।

अत्र टीकारम्भे श्रीरघुनाथचरणैर्ग्रन्थावतरणिका कापि नोक्ता परन्तु 'य आविरासीद्धोरेस्मिन् कलौ श्रीवल्लभाभिधः । निजदास्यं स नो देयादन्यादपि दुराश्रया- दि'तिमङ्गलवाक्ये कलिस्वरूपस्य श्रीमदाचार्येषु प्रार्थनस्य च कथनेन सूचितेति न विरोधः । एवं कल्याणरायैरपि कृष्णाश्रयस्य सर्वमाधकत्वं सर्वसाधनानामसाधकत्वं चोक्तमिति तेषामप्ययमेवाशयः । श्लोकसङ्ख्यातात्पर्यं तैरेवमुक्तं 'भक्तानां

देशादिषट्साधनरूपश्चतुर्विधपुरुषार्थरूपश्चेति, दशलीलानिरूप्य इति, दशविधभक्तसैन्य इति', स्तोत्रार्थरूपे भगवति दशविधाः 'दश वै पशुषु प्राणा' इतिश्रुतेः प्राणानां दशत्वं, ते यथा साधकास्तथा स्तोत्रमपीति शब्देऽपि दशविधाः । अतोऽर्थमनुकूलयन् शब्द एवायं साधक इतिबोधनाय प्रार्थनाव्याजेन स्तुवन्तीति । द्वारिकेश्वरैस्तु 'आभासश्च निरोधश्चे'ति वाक्यलिखनेन 'नच लक्षणलक्षितया यजमानपञ्चमा इडां प्रक्षयन्ती'तिवदत्र दशसङ्ख्यापूरकसर्वफलरूपोऽत्र विवक्षित इत्याशय उद्घाटितः । तथा च 'या या साधनसंपत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रय' इतिवाक्यलिखनेनाश्रयशब्दः कृष्णाश्रय इति स्तोत्रनामेति तेषामाशयः । मम त्वन्यदपि प्रतिभाति—यथाक्रूरेण प्रसन्नप्रपन्नो भगवान् स्वाधिकारानुसारेण शरणतया प्रार्थितस्तथाऽऽचार्यैरपि स्वप्रकटितभक्तिमार्गफलदानानुकूलः प्रसन्नः स्वोक्तिपठनमात्रेणाश्रयदानं कर्तुं समयविशेषे प्रार्थितस्तदा कृतवानिति तज्ज्ञापकमिदं प्रार्थनाघटितं स्तोत्रमिति । अत्र च भगवान् गतिरयेन प्रार्थ्यते अस्त्विति क्रियाध्याहारेण । तत्र गतिशब्दः फले रूढः, 'सा काष्ठा सा परा गतिः' 'अन्ते या मतिः सा गतिः' 'नान्या भवेद्गतिररविन्दभे'ति श्रुतिपुराणादौ तथाप्रसिद्धेः । समाप्तौ तु 'तस्याश्रयो भवेत्कृष्ण' इत्याश्रयत्वं पाठफलत्वेनोक्तम् । आश्रयशब्दश्च सहाये रूढः, 'सिद्धाखिलार्था मधुसूदनाश्रयाः' 'भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयै' रित्यादौ तथाप्रसिद्धेः । कृष्णशब्दश्च परब्रह्मवाचकः 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इतितापनीयश्रुतेः, 'पापकर्षणो ह वै'ति च । ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे श्रीरुक्मिण्युद्वाहोत्तरं श्रीयशोदां प्रति भगवद्वाक्येऽपि 'कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः । अश्चापि दातृवचनस्तेन कृष्णं विदुर्बुधाः' 'कृषिश्च परमानन्दे णश्च तद्दास्यकर्मणि । तयोर्दाता च यो देवस्तेन कृष्णः प्रकीर्तितः' 'कोटिजन्मार्जिते पापे कृषिः क्लेशे च वर्तते । भक्तानां णश्च निर्वाणे तेन कृष्णः प्रकीर्तितः' इति त्रिधा निरुक्तः । तत्र तृतीयेन 'पापकर्षण' इतितापनीयश्रुतिरुपबृंहिता । गौतमीयतन्त्रे अष्टादशार्णव्याख्यायां च 'कृषिशब्दश्च सत्तार्थो णश्चानन्दस्वरूपकः । सुखरूपो भवेदात्मा भावानन्दमयत्वत' इति । बृहद्गौतमीयेऽपि 'कृषशब्दो हि सत्तार्थो णश्चानन्दस्वरूपकः । सत्तास्वानन्दयोर्योगाच्चित्परं ब्रह्म चोच्यते' इत्येनाभ्यां पूर्वश्रुतिरुपबृंहिता । अत्र प्रथमे सर्वशब्दप्रवृत्तिनिमित्तभूता सत्ता भावपदेनात्मपदेन च व्याख्याता 'रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रमि'तिदशमस्कन्धवाक्येन भगवत्स्वरूपं तेन सम्बन्धिदानात्सैव भिद्यमाना गवादिषु जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः, तां 'प्रातिपदिकार्थं धात्वर्थं च प्रचक्षते सा जातिः सा महानात्मा तामाहुस्त्वतलादय' इति वाक्यपदीयोक्तरीत्या मूलसद्रूपाभिन्नानन्दरूपत्वेन कृष्णत्वं घटितं, द्वितीये च प्रत्याहारन्यायेन

सदानन्दयोरन्तश्चित्तं निवेश्य सच्चिदानन्दतया परब्रह्मत्वेन कृष्णत्वं विवृतमितिभेदाः । अन्या अपि निरुक्तयो ब्रह्मवैवर्ते नामकरणप्रसङ्गे गर्गेणोक्ताः पञ्च सन्ति तास्ततो ज्ञातव्याः । आनन्दे च निरवधित्वमेव परमफलतावच्छेदकमित्यानन्दमयाधिकरणे स्थितम् । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इति छन्दोगश्रुते- 'र्यतो वाचो निवर्तन्ते' इतितैत्तिरीयश्रुतेश्च । फलं द्विविधं, साध्यमभिव्यङ्ग्यं च । तत्राद्यं यथा परशोश्छिदा । द्वितीयं यथा योगादात्मसुखम् । तत्र परे ब्रह्मण्याद्यरूपत्वस्याभावा- द्द्वितीयरूपतैव वाच्या । तत्र हेत्वपेक्षायां 'यमेवैष वृणुते तेन लभ्य' इतिश्रुत्या स्वीयत्वेन वरणे यत्साक्षाद्दर्शनं तदेव हेतुः । तथा सति 'नायमात्मा प्रवचनेने'त्यादिपूर्वार्द्धं उपलक्ष- णविधया साधनान्तरनिषेधश्रावणेन वरणद्वारकं स्वस्यैव साधनत्वमुक्तं भवति । तदेव च ब्रह्मवैवर्तोपबृंहणेऽप्यपि सिद्धम् । तदेतत् सर्वं हृदि कृत्वा मूढानां सन्देहनिवारणायादृष्ट- शास्त्रेऽनुरुद्धधर्ममार्गाणां कालादीनां सन्निपत्यारादुपकारकाणामसाधकत्वं दोषांश्च वदन्त वक्तरीत्या स्वस्मिन् फलरूपत्वमतिरोभावयित्वा तत्र साधनरूपोऽस्त्विति प्रार्थयन्ति—

सर्वमार्गेषु नष्टेषु कलौ च खलधर्मणि ।
पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥

सर्वे च ते मार्गाश्च । 'मृजूष् शुद्धौ' मृज्यन्ते शोध्यन्त इति । 'मृग अन्वेषणे' मृग्यन्ते तत्तत्फलार्थिभिरन्विष्यन्त इति मृगाः, स्वार्थेऽण् त एव मार्गाः 'योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचि'त्येकादशे भगवतोक्ताः स्वप्राप्त्युपायाः तेषु नष्टेषु अनुशास्तृदौर्लभ्यादिना तिरोहितेषु कृष्णो व्याख्यातरीतिको भगवानेव मम गतिःसाधनफलरूपोऽस्त्विति सम्बन्धः । अत्र 'यस्य च भावेन भावलक्षणमि'त्यनेन भावलक्षणा सप्तमी । अनुशास्तृदौर्लभ्यादौ हेतुः—खलध- र्मणि कलौ लोके पाषण्डप्रचुरे सतीति । चोऽवधारणे । खलोऽन्तर्दुष्टो धर्मो यस्मिन्नसौ खलधर्मा 'धर्मादनिच् केवलादि'त्यनेनानिच् । खलधर्मत्वे हेतुर्लौकानां पाषण्डप्राचुर्यम् । पाषण्ड उपधर्मो जैनदृष्ट्यादिसदृशस्तस्य प्राचुर्यं बाहुल्यम् । कलावित्यधिकरणे सप्तमी । आधारत्वं चात्राभिव्यापकतया कालिकसम्बन्धेन गौणौपश्लेषिकतया वा । तथाचैतादृशे कलावीदृशे लोके सर्वमार्गेषु नष्टेषु सत्सु तथेत्यर्थः । 'षष्ठी चानादरे' इत्यनेनानादरे वा कलाविति सप्तमी । हेतुहेतुमद्भावस्तु समभिव्याहारादेव लभ्यः । तथाचैतादृशे लोके एव- म्मार्गेषु सत्सु कलिमनादृत्य तद्भयं त्यक्त्वा तथेत्यर्थः । 'कलेर्दोषनिधे राजन्' 'कलिं सभाजयन्त्यार्या' इत्यादिवाक्येषु कलिस्तुतेस्तत्र सारात्वभ्रमवारणाय कीर्तनस्यापि यथाकथञ्चित्कृतस्य न फलसाधकत्वमितिबोधनाय चात्र कलिदोषस्योपन्यसनम् ।

'कृष्ण'पदा'त्सं'पदाच्च नैतद्वाक्यविरोध इति बोध्यम्। तथाच, जलभेदोक्तरीत्या कीर्तयितृन्निश्चित्य भगवानाश्रयणीय इति भावः। यद्वा, तादृशे लोके मार्गेषु नष्टेषु 'वादवादांस्त्यजेत्तर्कान् पक्षं कंच न संश्रयेदि'ति सप्तमस्कन्धीयनारदवाक्यानुसन्धानेन विवक्षितमार्गस्यैव दृढग्रहणात् कलौ तत्तन्मार्गाणां साधकत्वतरतमभावादिकलहे नष्टे। चकारोत्र तन्नाशसमुच्चायकः। तथा सति तथेत्यर्थः। एवमपि बोध्यम्, प्रथमव्याख्यानरीतौ कलौ सर्वमार्गेषु नष्टेष्वितिपदानां, कलावित्यस्यैव वाग्रिमश्लोकपञ्चकेनुषङ्गो बोध्यः। एतद्रीत्या व्याकुर्वन्तः प्राञ्चः सर्वेपि विशेष्यान्वितस्यैवकारस्यान्ययोगव्यवच्छेदकतयांशकलावतारव्यवच्छेदं तेनाहुः, तदस्माकमप्यभिप्रेतम्। श्रीरघुनाथास्तु 'खरधर्मिणी'ति पाठान्तरमप्युपन्यस्य खरश्चासौ धर्मश्चेति कर्मधारयान्मत्वर्थीयेन्प्रत्ययं बहुव्रीहिविग्रहे 'क'प्रत्ययापत्तिभियाहुः, चकारं च कलिव्यतिरिक्तकालसमुच्चायकमाहुः, मायातरणेप्रपत्त्यतिरिक्तसाधनाभावस्य सर्वकालेषु तौल्यादिति तेषामाशयः। प्रार्थना तु सर्वमतेप्यन्यार्थ्या ॥ १ ॥

एवं कालदोषेण सद्धदोषं मार्गनाशं चोपपाद्य कालस्य साधारणत्वेन देशानामसाधारणत्वेन तदपेक्षयान्तरङ्गत्वात्तत्र च 'काश्यादिपुर्यो यदि सन्ति लोके तासां तु मध्ये मधुरैव धन्या। या जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्धा विदधाति मुक्तिमि'त्यादिभिर्दशस्ताव रूपाद्यैः साक्षात्साधकत्वस्य 'देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितानि'त्यादिभिर्वाक्यैर्मार्गानुकूलतायाश्च प्रतीतेः मार्गं तयात्वभ्रमं वारयितुं कालेन देशदोषादिकं वदन्त आहुः—म्लेच्छेत्यादि।

म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च।
सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥

अत्रापि भावलक्षणा सप्तमी। चोवधारणे। कलावित्यनुषज्यते। देशेषु म्लेच्छैर्यवनैः उपलक्षणमेतत् अतिनास्तिकैरिति यावत्, तैराक्रान्तेषु व्याप्तेषु। व्याप्तिरत्र तदाज्ञानुरूपस्थितिरूपम्। तदाज्ञानुरूपस्थितौ को दोष इत्यत आहुः पापेत्यादि। 'एके मुख्यान्यकेवलाः' तत्पुरुषगर्भः कर्मधारयः। पापानां व्यभिचारचौर्यदौर्जन्यादीनामेकनिलयेषु मुख्यस्थानेषु। ते हि लुब्धाः कामिनो हिंसाश्च, ततस्तत्र व्यभिचारादिकं कुर्वन्ति चौर्यादिकं कारयन्ति च। तद्वन्तोऽन्योन्या अपि पैशुन्यप्राम्यमल्पादिना तथाविद्यमानोत्येव दोष इत्यर्थः। ननु न सर्वे तादृशा इति नैष दोष इत्यतो दोषान्तरमाहुः—सत्पीडेत्यादि। सतां स्वधर्मिणां पीडया मिथ्याभिशापदण्डादिरूपक्लेशेन व्यग्रा उद्विग्ना लोकाः सम्यञ्चो जना येष्विति। एवं च कल्पितास्वेषु चत्वारो दोषा उक्ताः।

तामसप्रभुक्तत्वम्, पापबाहुल्यम्, सत्पीडा, सदुद्वेगश्चेत्येतैरुपद्रवेण सम्यक्कर्तुमशक्त्या, सर्वमार्गेषु नष्टेषु सत्सु कृष्ण एवेति पूर्ववत् ॥ २ ॥

एवं कालेन देशदोषादिकमुपपाद्य तेषां बाह्यत्वेन जलस्य चान्तःप्रवेशबहिःसम्बन्धाभ्यां शोधकतया देशापेक्षयाप्यन्तरङ्गत्वात्तत्र च 'सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम्' 'कावेरी च महापुण्या प्रतीची च महानदी । ये पिबन्ति जलं तासां मनुजा मनुजेश्वर' 'प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः' इत्यादिवाक्यैः साधकत्वमार्गानुकूलत्वप्रतीतेस्तेषु तथात्वभ्रमं वारयितुं कालेन तत्रापि दोषं वदन्त आहुः गङ्गादितीर्थवर्येष्विति ।

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ।
तिरोहिताधिदैवेषु कृष्ण एव गतिर्मम ॥ ३ ॥

इह भारतवर्षे गङ्गादीनि यानि तीर्थश्रेष्ठानि तेषु दुष्टैः कर्मणा भावभेदेन च ये दूषितास्तैरेव वेष्टितेषु । अत्रापि भावलक्षणैव सप्तमी । तथाच 'किचाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम् । मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यतामि'तिनवमस्कन्धे भगीरथं प्रति गङ्गावाक्याद्दुष्टावरणेन तेष्वपि शक्तिकौण्ठ्यदोष इत्यर्थः । ननु 'साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः । हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिरि'ति तत्रैव गङ्गां प्रति भगीरथवाक्यात्तादृशां सङ्गादिना तन्निवृत्तेस्तस्य प्रायिकत्वान्नायं दोष इत्यत आहुः तिरोहिताधिदैवेष्विति । देवाना समूहो दैवम्, दैवे इत्यधिदैवं, देवसमूहे विद्यमानं गङ्गादेर्दैवतारूपम्, तिरोहितं अधिदैवं यस्मिंस्तत्तिरोहिताधिदैवम् । तथाच देवसंसदि विद्यमानं यद्गङ्गादेराधिदैविकं रूपं तत्तिरोधानाच्छक्तिकौण्ठ्यतादवस्थ्यमित्यर्थः । यद्वा, तिरोहित आधिर्यस्य तत्तिरोहिताधि, तादृशं दैवं देवसमूहो येष्विति । 'तत्तेषां न प्रियं यन्मनुष्या विदुरि'ति 'विप्रस्य वै संन्यसतो देवा दारादिरूपिणः । विघ्नं कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परमि'ति श्रुतिस्मृत्युक्तदिशा मनुष्यमुक्तिस्तेषां न प्रियेति तन्निवृत्त्यर्थं वाराहपाद्मादौ मुक्त्यभावाय भगवत्प्रार्थनात्तदन तीर्थादौ दुष्टेष्वाविश्य प्रतिबध्नन्तस्तिरोहिताधयो भवन्त्यतः शक्तिसद्भावेपि दोषतादवस्थ्यमतः कृष्ण एवेति पूर्ववदित्यर्थः । एतेन 'तीर्थादावपि या मुक्तिः कदाचित्कस्यचिद् भवेत् । कृष्णप्रसादयुक्तस्य नान्यस्येति विनिश्चय' इतिनिबन्धोक्तौ युक्तिरपि प्रत्यक्षादिरूपा दर्शिता ॥ ३ ॥

अतः परं 'न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः' इतिवाक्यात्तदपेक्षयान्तरङ्गत्वेन तेषां च सङ्गस्य 'प्रसङ्गमजरं पाशमात्मनः

कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम्' 'सतां प्रसङ्गात्' 'सन्त एवास्य छिन्दन्ति' 'सत्सङ्गेन हि दैतेयाः' इत्यादिवाक्यैः साधकत्वमार्गानुकूलत्वप्रतीतेस्तत्र तथात्वभ्रमं वारयितुं कालकृतं सत्सु दोषं वदन्त आहुः अहङ्कारेत्यादि ।

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु ।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥

अत्रा'र्हाणां कर्तृत्व'इत्यनेन तद्वैपरीत्ये सप्तमी । कलौ सत्सु मार्गप्रचारकेषु गुरुष्वप्यहङ्कारेण स्वपाण्डित्याभिमानेन विशेषतो मूढेषु सत्सु । तथात्वे प्रमाणद्वयमाहुः पापेत्यादि । पापाः पापकर्तारो राजसास्तामसाश्च म्लेच्छादयस्तदनुवर्तिषु तदुपजीविकेषु । अक्रूरादेः कंसाद्यनुवृत्तिवदनुवर्तित्वेऽप्यदोष इति तद्व्यावृत्त्यर्थं विशेषणान्तरं लाभेत्यादि । लाभो द्रव्यादेः, पूजा च नतिः, अर्थशब्दो द्वन्द्वान्ते श्रुतः प्रत्येकं सम्बध्यते, तेन तदर्थं यत्नो बाह्याभ्यन्तर उद्यमो येषामिति । एतद्द्वयं विमूढत्वज्ञापकम् । तथा च मार्गप्रचारकेष्वेतादृशेषु जातेषु सतामभावात्सङ्गो दुरापास्त इति सर्वमार्गेषु नष्टेषु कृष्ण एवेति पूर्ववत् ॥ ४ ॥

अतः परं सतां दुर्मिलतया तदपेक्षया मन्त्रसाधनजपादेः स्वमात्रसाध्यतयान्तरङ्गत्वात्तत्र च 'परिहृत्यापि वेदांस्त्रीन् कर्माणि विहितानि च । गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः' 'गायत्रीहीनवेदास्तु साङ्गा अपि च निष्फलाः' 'सर्वेषु वर्णेषु तथाश्रमेषु नारीषु नानाह्वयजन्मभेषु । दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एष' इत्यादिवाक्यैस्तत्तन्मन्त्राणां तथात्वप्रतीतेस्तेषु तथात्वभ्रमं वारयितुं तत्रापि कालेन दोषं वदन्त आहुः—अपरीत्यादि ।

अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु ।
तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५ ॥

अपरिज्ञाननष्टेष्विति । अत्रापि पूर्ववदनुषङ्गो भावलक्षणा सप्तमी च । 'मन्त्रस्य च परिज्ञानमि'त्येकादशे भगवद्वाक्यात्परिज्ञानेन मन्त्रशुद्धिः । परिज्ञानं नाम गुरूपसत्त्यादिना विधानन्यासपाठार्थतात्पर्यविनियोगादीनां निर्धारस्तदभावोऽपरिज्ञानं, तेन नष्टेषु । स्वरूपस्य श्रावणेऽपि शुद्ध्यभावेन 'उत त्वः पश्यन्न ददर्श वाचमि'तिवददृश्यमानेषु । कचिन्मन्त्रपरिज्ञानदर्शनाद्दोषान्तरमाहुः—अव्रतयोगिष्विति । 'अव्रता बटवोऽशौचा' इति द्वादशस्कन्धे कलिधर्मोक्तेर्मन्त्रोपाकरणदशायामेव गुरुकुलवासब्रह्मचर्याध्ययनधर्मपरिपालनाभावादव्रतेषु योगः सम्बन्धो येषां तादृशेषु । तेन दोषान्तरमप्याहुः तिरो-

हितार्थदेवेष्विति। तिरोहितानवप्रतीयमानौ अर्थः प्रयोजनं तात्पर्यं च देवोधिष्ठात्री देवता तौ येषाम्। 'य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशा-नी'त्यादिश्रुतिप्रभृत्युक्तनिदर्शनाव्यभिचारेण तदुभयतिरोभावस्य स्फुटत्वात्र तेषामिदानीं साधकत्वं न वा मार्गानुकूलत्वमतः कृष्ण एवेति पूर्ववत् ॥ ५ ॥

अतः परं मन्त्रापेक्षयापि स्वधर्माणां व्रतानामाचारस्य च पूर्वोक्तदोषाभावेन सुकरत्वेन चान्तरङ्गत्वात्तत्र च 'स्वधर्मस्थो यजन्यज्ञैरनाशीः काम उद्धव। न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत्' 'इह लोके वर्तमानः स्वधर्मस्थोनघः शुचिः। ज्ञानं विशुद्धमाप्नोति मद्भक्तिं च यदृच्छये'त्येकादशस्कन्धीयैः' 'केदारे उदकं पीत्वा पुनर्जन्म न विद्यते' 'तथा चैकादशी प्रोक्ता गर्भवासक्षयङ्करी। एकादशीसमं पुण्यं न भूतं न भविष्यती'त्यादिभिः पुराणान्तरी-यैर्भगवद्वाक्यै'राचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत' इत्यादिभिर्भारतीयैश्च वाक्यैर्धर्मव्रता-दीनां साधकत्वादिप्रतीतेस्तेषु तथात्वभ्रमं वारयितुं तेष्वपि कालेन दोषं वदन्त आहुः नानेत्यादि।

नानावादविनष्टेषु सर्वकर्मव्रतादिषु।
पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥

नानाप्रकारका ये वादाः स्वरूपफलादिविषयकास्तैर्विशेषेण स्वरूपेण फला-दिना च नष्टेषु तिरोहितेषु। तत्र स्वरूपतो नाशो वेदानाम्ना वादात्। 'यावज्जीवे-त्सुखं जीवेत्' 'अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकम्। प्रज्ञापौरुषनिःस्वाना जीवो जल्पति जीविका' इत्यादिरूपात्। फलतो नाशस्तु यथैकादशीव्रतादौ 'शुक्रेण मोहिता विप्रा दैत्यानां कारणे भुवि। तत्फलार्थं दशमीविद्धं कुर्वन्ति मम वासरमि'ति ब्राह्मे 'पुरा देवैर्ऋषिगणैः स्वपदच्युतिशङ्कया। सप्तमीवेधमालेन गोपितं चाष्टमीव्रत'मिति स्कान्देऽन्यत्र च निषेधनिन्दादेर्वेधस्वरूपनिर्णयस्य च विद्यमानत्वेपि तदनादृत्य स्वस्वाग्रहेण वाक्याभासाञ्न्यायाभासांश्च समुदाहृत्य निर्णयन्ति, तादृशस्थले बोध्यः। एवं स्वधर्माचारयोरपि विप्रतिपत्त्या फलतो नाशो बोध्यः। वादे प्रयोजकमाहुः पाषण्डेति। पाषण्डेन दम्भेन एकोन्यःप्रयत्न उद्यमो येषामिति। स च 'वेदपानेश्मसु सीधुगन्धिल-लनावक्त्रासवामोदितैर्नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः। सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते' इतिवद्बोध्यः। अत एवं भूयोदर्शनात्स्वधर्मव्रतादीनामपि न स्वतः साधकत्वं न वा मार्गानुकूल्यत्वमतः कृष्ण एवेति पूर्ववत् ॥ ६ ॥

एवं षड्भिर्भक्त्यादिमार्गाणां दुःसाध्यताज्ञापनाय कालकृतसर्वसन्मार्गनाशबोधनमुखेनाश्रयणस्योपायत्वं साधितम्, तदिदं तदा दृढीभवति यदा भगवानाश्रिते स्वमाहात्म्यमनुभावयति तदर्थमाहुः अजामिलादीति ।

**अजामिलादिदोषाणां नाशकोऽनुभवे स्थितः ।**
**ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥**

अजामिलादीति । अजामिलः षष्ठस्कन्धे प्रसिद्धो दासीपतिर्ब्रह्मबन्धुः । आदिपदेन गजेन्द्राहल्याद्या, नृसिंहपुराणे नवमाध्याये मार्कण्डेयमृत्युप्रसङ्गे उक्ता नारकिणश्च, तेषां ये दोषा इहजन्मनि पूर्वजन्मनि च कृतानि पापानि तेषां नाशकः । एतेन तादृशमाहात्म्ये तदनुभावने च शब्दः प्रमाणमुक्तम् । प्रत्यक्षमाहुः अनुभव इत्यादि । अनुभवेऽस्माकं स्थितो विषयीभूतो ज्ञापितसमग्रमाहात्म्यः, एतेन प्रपन्नस्य मायातरणे सति प्रतिबन्धकाभावात्स्वयमेवाग्रे माहात्म्यं गोचरीभवतीति ज्ञापितम् । ततश्च पूर्वमार्गे शब्दे श्रीमदाचार्यचरणोक्तौ वोभयत्र वा विश्वस्य भगवदाश्रयणे भगवानेव साधनान्तरापेक्षां विना सर्वं ज्ञापयंस्तद्गोचरो भवतीति सूचितम् । कृष्ण एवेति पूर्ववत् ॥ ७ ॥

एवमत्र शब्दप्रत्यक्षाभ्यां पूर्वोक्तश्रुतिब्रह्मवैवर्तादिरीत्या भगवानेव पुष्टिमार्गीयाणां साधनमिति साधितमतः परं पूर्वोक्तश्रुतिगौतमीयतन्त्रोक्तरीतिकं भगवतः फलत्वं साधयन्ति प्राकृता इत्यादि ।

**प्राकृताः सकला देवा गणितानन्दकं बृहत् ।**
**पूर्णानन्दो हरिस्तस्मात् कृष्ण एव गतिर्मम ॥ ८ ॥**

देवा—अष्टौ वसव, एकादश रुद्रा, द्वादशादित्या, इन्द्रः, प्रजापतिश्चेति त्रयस्त्रिंशद्वा, 'अग्निरवमो देवानां विष्णुः परमस्तदन्तरेणान्या देवता' इत्यग्न्यादयो विष्ण्वन्ताः । अत्र विष्णुः कालः, 'स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां वर' इति वा स्यात्तदन्ता वा । अकारं ब्रह्माणं नाभावुकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्य इति प्रणवमात्राधिष्ठातारो विश्वादयो वा प्रजापत्यन्ताः, शतानन्दिनो वा । ते सकलाः कला अंशस्तत्सहिताः, सर्वे प्राकृताः, प्रकृतिर्माया 'मायां तु प्रकृतिं विद्यादि'ति श्रुतेस्तदधीनाः । कालस्य क्षोभकतया गुणानुरोधित्वेन गुणाधिष्ठातृगामभिमानित्वेन च प्राकृतत्वम् । बृहदक्षरं गणितानन्दकं, गणितः 'स एको मानुष आनन्द' इत्यारभ्य शतानन्दिनां गणने 'स एको ब्रह्मण आनन्द' इत्युत्तरावधौ ब्रह्म गणितम्, अत एवंप्रद्युम्नात आनन्दो यत्र, स्वार्थे कप्रत्ययम् । तेन तुर्यपदोऽविनिविष्टा ओंकारं सर्वेश्वरं द्वादशान्त इत्याद्युक्ता गुणावतारा अपि नेत्र । प्रविशन्तीति बोधितम् । हरिः पुरुषोत्तमोऽ'क्षरात्परतः परः' स उत्तमः पुरुषः ।

'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इत्यादिश्रुतिस्मृतिप्रतिपाद्यः । पूर्णानन्दः शतानन्दसङ्ख्याने ब्रह्मानन्दस्य सर्वपरत्वेन गणनया मनोवागगोचरतामेव प्रतिपाद्य तदुत्तरानुवाके 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'तीतिश्रुतावानन्दस्य मनोवागगोचरत्वकथनेन तदपेक्षयाधिक्यस्यानवधित्वस्य च बोधनात्तथा । तस्मादानन्दे निरवधित्वस्यैव परमफलतावच्छेदकत्वेन तस्य चात्रैव विश्रान्तेः कृष्णः पूर्वोक्तरीतिकः मम परमफलरूपोस्त्विति पूर्ववत् ॥ ८ ॥

एवमष्टभिर्भगवत्स्वरूपविचारेणाश्रय एव सर्वथा साधको न त्वन्यः कोपि मार्गः साधक इति साधितम् । अतः परमाश्रयस्यापि साङ्गस्यैव साधकता विवेकधैर्याश्रये सिद्धेति तदङ्गाभावेऽपि यथा स फलं साधयति तमुपायं वदन्त आहुः विवेकेत्यादि ।

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ।
पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥

सर्वदुःखहर्ता भगवान् स्वेच्छातः सर्वं करिष्यतीत्येतद्विचारपूर्वकमनुसन्धानं विवेकः । सात्त्विकादीनां कायिकादीनां भौतिकादीनां त्रिविधदुःखानां प्रतीकारानाचरणेनोपेक्षणं धैर्यम् । माहात्म्यज्ञानपूर्वकः सुदृढः स्नेहो भक्तिर्नवविधा च । आदिपदेन तदङ्गानि । साङ्गे ज्ञानकर्मणी च । तै रहितस्यैतेन यावत्साधनराहित्यं सूचितम् । बाधकसत्तामाहुः विशेषतः पापासक्तस्येति । आसक्तिः सङ्गातिशयोपरिहार्यः सङ्ग इति यावत् । एतावता 'नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत' इतिवाक्यस्मारणाद्भक्त्युत्पत्तौ प्रतिबन्धकमपि सूचितम् । एवं बाधकद्वयसद्भावेऽपि येनाङ्गेनाश्रयस्य सिद्धिस्तदाहुः दीनस्येति । एवं साधकाभावबाधकसद्भावाभ्यां जातया ग्लान्या दीनस्य । दौर्गत्यादेरनोजस्त्वं दैन्यम् । अनोजस एतादृशस्य कृष्ण एवेति पूर्ववत् । एवंप्रकारिकाया ग्लानेरसतां दुरापत्वात् सतां मार्यादिकानां ग्लानौ साधनान्तरेषु प्रवृत्तेरत्र तु तादृशग्लानिप्रपत्तिभ्यां तदुभयविलक्षणतया 'सोऽहं त्वाङ्घ्री'त्यत्रोक्तानुग्रहस्य स्वस्मिन्कारणत्वेन सत्ता ज्ञाप्यते । एतादृशस्यापि फलसिद्धिर्गीतायां 'मां हि पार्थ व्यपाश्रित्य' 'अपि चेत्सुदुराचार'इत्यत्र भगवताज्ञप्ता । न च पूर्ववाक्ये पापयोनीनां गतिरुक्ता न तु पापकर्मणाम्, द्वितीये चानन्यभजनेन पापकर्मणां साधुत्वमुक्तं, न त्वाश्रयेणेति नैवद्वयमाश्रयेण सिद्धेर्गमकमिति शङ्क्यं, 'सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं हरे'रितिगारुडात्, 'सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम'तिपुराणान्तरीयभगवद्वाक्याच्च भगवतस्तादृशे व्रते निश्चिते ततो भगवदनुग्रहेणैव तत्र प्रवृत्तावपि माहात्म्यज्ञानपूर्वकस्नेहस्यैव द्वारत्वनिश्चयादनन्य-

भावत्वसिद्ध्या, द्वितीयस्या'नित्यमसुखं लोकमिमं प्राप्य भजस्व मामि'ति भजनशेषतया निरूपितत्वेन प्रथमस्य चाङ्गत्वात्। अतो नात्र कोऽपि चोद्यावसरः ॥ ९ ॥

एवं नवभिर्विवेकधैर्याश्रयग्रन्थोक्ताङ्गाभावेप्येतदुक्तरीतिकदैन्येनाप्याश्रयसिद्धिरिति बोधितम्। अतःपरमेतस्याप्यङ्गस्याभावे द्वाभ्यां साधनान्तरमाहुः सर्वसामर्थ्येत्यादि।

**सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत्।**
**शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १० ॥**

'परास्य शक्तिर्विविधैव श्रूयत' इत्यादिश्रुतिभिः कर्तुमकर्तुमन्यथाकर्तुं च यावन्ति सामर्थ्यानि तत्सहितस्तदुपपादितं'मनामिलादी'तिपद्येन। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' 'एष ह्येवानन्दयाती'त्यादिश्रुतिभिः सर्वत्र देशेषु जीवेषु चाखिलार्थानां कृत् 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्वि'त्यनेन ताच्छील्ये क्विप् कर्ता। एतादृशं कृष्णमहं जगदुद्धारार्थमाज्ञप्तो वैश्वानर आचार्यवर्यः शरणस्थानां शरणमार्गेण विना समुद्धारं सम्यक् आज्ञप्तमार्गप्राप्यपरमफलपर्यन्तमुद्धारं विज्ञापयामि। सामानाधिकरण्यादध्याहारानाक्रमाच्च प्रथमान्तद्वयमहंपदस्यैव विशेषणं वा। तथा च तादृशदैन्याभावेपि मयि विश्वासेनैतच्छरणमार्गेस्थितौ श्रीमदाचार्यचरणकृपयैवास्माकमुद्धार इति निश्चयदार्ढ्येपि तत्कृतं साधनान्तरमनपेक्ष्य मद्विज्ञापनादेवोद्धरिष्यतीत्यर्थः ॥ १० ॥

अतः परमेतन्निश्चयदार्ढ्यगमकं वदन्तो विज्ञापनप्रकारं स्वरूपं चाहुः कृष्णाश्रयमित्यादि।

**कृष्णाश्रयमिदं स्तोत्रं यः पठेत् कृष्णसन्निधौ।**
**तस्याश्रयो भवेत् कृष्ण इति श्रीवल्लभोब्रवीत् ॥ ११ ॥**

कृष्ण आश्रीयतेनेनेति, कृष्ण आश्रयो विषयो यस्येति वा कृष्णाश्रयम्। आश्रयपदस्य विषयवाचकत्वं प्रल्हादचरित्रे 'यत्तत्र गुरुणा प्रोक्तं शुश्रुवेनुपपाठ च। न साधु मनसा मेने स्वपरासद्ग्रहाश्रयमि'ति सप्तमेऽन्यत्र च प्रसिद्धम्। एतदन्वर्थनामकमिदमुक्तं स्तोत्रं यः कृष्णसन्निधौ भगवन्निकटे पठेत् तस्य कृष्ण आश्रयः सहायो भवेत्। इतीममर्थं श्रीवल्लभोऽब्रवीदुक्तवानिति। तथा चैवमेतत्पाठ एव पूर्वोक्तनिश्चयदार्ढ्यगमक इत्यर्थः। एवं च विवेकधैर्याश्रयोक्तरीतिकविवेकादेरभावे दैन्यपूर्वकमेवैतत्स्तोत्रार्थानुसन्धानपूर्वकं भगवत्सन्निधावेतत्स्तोत्रपाठः। तत्राप्यनधिकारे श्रीमदाचार्यचरणविश्वासपूर्वकं भगवत्सन्निधौ पाठ इति साधनद्वयं मानसवाचनिक–केवलवाचनिक–शरणागतिरूपं निर्दिष्टम् ॥ ११ ॥

[१]इदं प्राचां रीतिमनुसृत्य व्याख्यातं, मम त्वन्योऽप्यर्थः स्तोत्रस्य प्रतिभाति । तथाहि—अयं मार्गोऽविहितभक्तिरूपः, अत्र भगवान् रसात्मकः प्रतिपन्नः । एवं सति तदधिकारिष्वेव मन्दमध्यमविचारेणात्र साधनोपदेशो वक्तव्यः । अत एव विवेकधैर्याश्रयसमाप्तौ 'भक्त्यादिमार्गा' इत्युक्तम् । अन्यथैकादशे 'योगास्त्रयो मये' त्यत्र 'ज्ञानं कर्म च भक्तिश्चे'ति त्रितयान्ते निवेशिताया भक्तेरादित्वकथनं विरुद्धं स्यात् । अतोऽत्र भक्तिपदेन तत्परामर्शः किं'त्वथैतपरमं गुह्यमि' त्यत्रोक्तायाः । तथासति सा भक्तिरादिर्येषां तादृशा ये मार्गा अविहितभक्तेरेव प्रकारभेदा बालादिभावेन भजनरूपास्ते यतो दुःसाध्या इत्यर्थो भवति । एवं सति तत्र तत्रानधिकारे विवेकधैर्याश्रयोक्तरीतिक आश्रयः, अत एव 'स्वाम्यभिप्रायसंशयात्' 'गोपभार्यवत्' इति स्वामिपदं तद्दृष्टान्तश्च सङ्गतौ भवतः । अतः परं तत्राप्यनधिकार इदं स्तोत्रपठनमपि तस्यैवानुकल्परूपम् । एतन्मार्गप्रविष्टानामतिजघन्यतमाधिकारिणामेतन्मार्गफलसम्बन्धो यथा प्रणाड्या भवति तामनुसन्धायास्योक्तत्वात् । तदर्थं स्वस्वरूपं भगवत्स्वरूपं च वक्तव्यम् । तत्र भगवत्स्वरूपं तूक्तमेव । किञ्चाभेदवादानुरोधेन रसस्वरूपविचारे रसालम्बनद्वयाभिन्नरसात्मा स्वयं भवति । उपबृंहितं चेदं ब्रह्मवैवर्तीयश्रीकृष्णजन्मखण्डे गर्गवाक्येषु-'वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा । श्रीकृष्णतेजसोऽर्धेन सा च मूर्तिमती सती' 'एका मूर्तिर्द्विधा भूता भेदो वेदे निरूपितः । इयं स्त्री स पुमान् किं वा सा वा कान्ता पुमानयमि'ति । 'पितामहस्य जगतो माते'ति गीतायां च । तथासत्याचार्याणामपि 'वैश्वानराद्वाक्पतेः' 'वस्तुतः कृष्ण एवे'ति च वाक्यद्वयविचारे पूर्वोक्तरीत्योभयमुखारविन्दात्मकत्वमुभयात्मकत्वं च सिद्ध्यति । किञ्च, सप्तश्लोक्यां सर्वोत्तमे च 'श्रीभागवतप्रतिपदे'त्यादि 'तत्सारभूतरासस्त्रीभावपूरितविग्रह' इति चोक्तम् । एवं स्वरूपे निश्चिते यदा यद्भावेन यान् प्रति यथा वदन्ति तदा तदधिकारिणः प्रति तानि साधनानीति पुंस्तोत्रमप्येवं व्याख्यायते तदापि न दोषः । तथासत्यस्यार्थस्य गुप्ततया भगवतः परोक्षप्रियत्वेन चात्र परोक्षवादाल्लक्षणाप्यदुष्टैव । ततश्चायमर्थः । तथाहि सर्वमार्गेषु सख्यादिप्रोक्तेषु भगवत्प्राप्त्युपायेषु नष्टेषु तद्भापकतया स्वान्तःकरणेऽनुपायतया भातेषु । खलोन्तर्दुष्ट ईर्ष्यारूपो धर्मो यस्मिँस्तादृशे कलौ कलहे स्वसमानेषु स्वस्मिन् कृपातिशयख्यातिविषयके नष्टे हृदयादपयाते । चकारेण कलहादेरपि नष्टत्वं ज्ञाप्यते । पाषण्डः कलहजननकारणरूपो धर्मः प्रचुरो यस्मिंस्तादृशे लोके सख्यादौ चादृश्यमाने । विरहेण तेषु दोषारोप'स्तस्यात्रप्रस्थानितकमि'त्यादिवत्, अतो न दोषः । एवं सति दुःखितस्य मम कृष्णः सदानन्दस्तादृशतापे हृदि विभाव्यमान एव गतिर्बहिःप्राप्तौ साधनरूपो भवत्वित्यध्याहृता प्रार्थना । अत्रैवं सर्वसाधन-

१ अतः परं श्रीव्रजराजपादाः प्रमेयमनुसृत्य निरूपयन्ति स्तोत्रमिदम् ।

वैफल्यबोधनेन स्वस्यातिखेदः । एवकारेण तादृशसमये 'खल्दुः सुस्वरं राजति'त्यत्र फलप्रकरण इव भगवतः प्राकट्याकथयकत्वं च द्योत्यते । एवमग्रेपि बोध्यम् ॥ १ ॥

अतः परं भगवन्मिलनस्थानभूतानां देशानामप्यनुपायत्वमाहुः—म्लेच्छाक्रान्तेत्यादि । म्लाना रसमार्गविरोधिनीच्छा येषां ते म्लेच्छा एतद्रसानभिज्ञास्तैर्देशेषु वृन्दावनादिष्वाक्रान्तेषु । किञ्च, पापैकनिलयेषु । पातीति पः स्थायिभावः सः अपः अप्रकटो यत्रासौ पापो विरहः सन्तापातिशयजनकत्वात्, तदेकनिलयेषु 'सोयं वसन्तसमयो विपिनं तदेतत् सोयं निकुञ्जविटपी निखिलं तदास्ते । हा हन्त हन्त नवनीरदकोमलाङ्गो नालोकि पुष्पधनुषः प्रथमावतार' इतिवचनुद्बोधकत्वेन तदेकस्थानेषु । चोवधारणे । तेन पूर्ववत्तथात्वमनभिज्ञसम्बन्धेन तथात्वमिति ज्ञाप्यते । किञ्च, सतः शरीरस्य या पीडा तया व्यग्रा लोकाः स्वीयैकान्तभक्ता येषु । एतादृशेऽवसरे कृष्ण एवेति पूर्ववत् ॥ २ ॥

अतः परं तादृशां तीर्थानामप्यसाधकत्वमाहुः—गङ्गेत्यादि । इह वृन्दावनादिदेशे गङ्गा 'सितासिते सरिते यत्र सङ्गत' इति श्रुतौ तस्याः पूर्वं पठितत्वात्सादियस्याः सा गङ्गादिः, यमुनातत्प्रभृतीनि तीर्थवर्याणि यद्विशेषाश्चन्द्रसरोवरश्रीकुण्डाद्या, 'नद्यस्तदे'त्यत्रोक्ता नद्यश्च, तेषु दुष्टैस्तज्ञानरहितत्वेन दुर्वैरेवावृतेषु व्याप्तेषु । किञ्च, तिरोहिताधिदैवेषु । तिरोहितमगोचरमधि उपरि दैवं 'दैवं दिष्टं भागधेयं भाग्यमि'ति कोशादस्मद्भाग्यं, 'त्रैलोक्यलक्ष्म्यैकपदं वपुर्दध'द्यत्र । यदुपरि भगवानिदानीं न दृश्यते चिह्नानि सन्तीति 'श्रीनिकेतैस्तत्पदकैर्विसर्तुं नैव शक्नुम' इतिवद्धिकतापजनकेष्विति भावः । तथाचैतादृशावस्थायां कृष्ण एवेति पूर्ववत् ॥ ३ ॥

अतः परं सत्सङ्गस्याप्यसाधकत्वमाहुः—अहङ्कारेत्यादि । निन्दायां सर्वत्र तात्पर्यमेव बीजं न तु तेषु दोषो बीजम् । अहङ्कारेणास्मद्वशो भगवानस्मत्प्रार्थित एवान्यत्र फलिष्यतीत्येवंरूपेण विमूढेषु स्तब्धेषु । किञ्च, पापानुवर्तिषु पापः पूर्वोक्तरीतिको विरहस्तमनु लक्षीकृत्य वर्तन्त इति तथा । तथाच पूर्वं यद्वत् इदानीं तैरपि सह न मिलतीति । तत्प्रकं लाभपूजार्थयत्नेषु । लाभो भगवत्प्राप्तिस्तदर्था पूजा लाभपूजा तदर्थं यत्न उद्यमो येषाम् । पूर्वं भगवत्प्राप्तये कात्यायन्यर्चिता पुनरिदानीमपि यद्वर्तन्ति तेन ज्ञापने न मिलतीति । स्त्रीत्वानां नित्यत्वात्तापेनासक्तिभ्रमवचदाविर्भावाचेत्यन्यमित्यनिश्चयः । सत्सु एतन्मार्गगुरुष्वेतादृशेषु सत्सु किं तत्सङ्गेनेति कृष्ण एवेति पूर्ववत् ॥ ४ ॥

अतः परं तत्रोपस्थितापेन गुरूणां हार्दं विचारयन्तो मन्त्राणामसाधकत्वमाहुः—अपरिज्ञानेति । नः भगवान् तस्य परिज्ञाने स्वभावज्ञानं 'न नन्दसूनु'रितिप्रस्थानमाप-

यिकविलापस्थश्लोकोक्तं, तेन नष्टध्वंसाधकतया तैन्नतिषु। अत एव अव्रतयोगिषु ज्ञानगोचरत्वेपि जपादिनियमयोगिषु। तत्रापि हेतुः–तिरोहितार्थदेवेषु तिरोहितः अविषयः अर्थोऽभिधेयो देवोऽधिष्ठाता च येषां तादृशेषु मन्त्रेषु व्रतचर्याप्रासङ्गिक-मुख्यमहिषीप्रासङ्गिक-समर्पणादिप्रासङ्गिकेषु सत्सु। कृष्ण एवेति पूर्ववत् ॥ ५ ॥

अतः परं ततोप्यतितापाधिक्येन स्वस्याशक्तिं द्योतयन्तः कर्मादिनाशमाहुः–नानेत्यादि। नानाप्रकारका वादा नानावादाः। भगवान् मथुरायामेवं पुरवनितादीनां कामं वर्धयति, जरासन्धादिभिर्युध्यति, द्वारकायामुज्जयिन्यां प्राग्ज्योतिषपुरे इन्द्रप्रस्थादावेवमेवं करोतीत्यादिलोकोक्तिरूपाः, श्रीमदुद्धवानीतसन्देशादितत्संवादादिरूपा वा, तैर्विनष्टेषु अक्रियमाणेषु सर्वेषु गृहादिकर्मभगवद्व्रतादिषु। किञ्च, पाषण्डः कापट्यं, तेनैको मुख्यः प्रयत्नो वहिरुद्यमो येषां यत्सम्बन्धी। तथाच तादृशेष्वेतद्गोपनाय लौकिकवैदिकविहितमार्यादिककर्मभगवद्व्रतादीनामुद्यम एव न तु मनस्तत्तत्कृतिरपीति तादृशेषु तेषु सत्सु, 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने'त्येतादृशावस्थायां कृष्ण एवेति पूर्ववत् ॥ ६ ॥

एवमतिशयिततापे भगवानन्तःप्रादुरभूत्ततस्तयावस्थयाहुः–अजामिलादीति। जामि आलस्यं 'जामि वैतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावि'त्यादिश्रुतौ तथासिद्धत्वात् 'आत्मा यावत्प्रपन्नोभूदि'त्यत्रेवात्र परोक्षवादे वैदिकप्रयोगस्यादोषाच्च। न जामि अजामि अनालस्यं तेन लान्ति गृह्णत इत्यजामिलाः, आदिपदेन जामिलाश्च। जामि अजामि अनालस्यं तेन लान्ति गृह्णत इत्यजामिलाः, आदिपदेन जामिलाश्च। तथाच तादृशा ये तरुणसंविज्ञानाः। शैघ्र्येण विलम्बेन च भगवद्विप्रयोजका इति यावत्। तथाच तादृशा ये दोषा मानादय आज्ञाग्रकरणादयश्च तेषां नाशकः। अनुभवे मानसे साक्षिमत्यक्षे च स्थितो गोचरीभवन्। ज्ञापिताखिलमाहात्म्यः ज्ञापितमखिलं समीक्षाभावादिमथुराद्वारकास्थित्यादि तत्तल्लीलादितात्पर्यविषयकं सर्वं माहात्म्यमुत्कर्षः परोक्षभजनाविस्मरणातिप्रियत्वरूपो येन तादृशः। कृष्ण एवेति पूर्ववत्। एतेन योग्यतमानामप्येतादृशताप एव प्रादुर्भाव ईदृशो न त्वन्यथेति। अन्यथा त्वन्यथेत्यपि सूचितम् ॥ ७ ॥

माहात्म्यं यज्ज्ञापितं तन्मध्ये यदत्रोपयुज्यते तत्प्रकटीकुर्वन्त आहुः–प्राकृतेत्यादि। प्रकृते रसमार्गे भवा विद्यमानाः प्राकृताः। सकलाः, कला भगवदनुरञ्जनचातुर्यं तया सह वर्तमानाः। देवा भगवता सह क्रीडापराः। किञ्च, वृहदक्षरं गुहायां परमे व्योमन्याविर्भूतं ब्रह्म गणितानन्दकं, गणिनः श्रुतौ सह्यात आनन्दो येषां मजापरयन्तानां यतीनां वा, तेषामेव कं सुखं यस्मादिति तादृशं, न तु स्वस्मिन् स्थितिमात्रेण सकलदेवानां सुखदम्। तथा पूर्णानन्दः कर्मधारयेण बहुव्रीहिणा च हरिः

देवानन्दतिरोभावहर्ता कृष्ण एव तस्मान्मम तथेत्यर्थः । तथाचैतन्मार्गीयं फलं केवल-परमानुग्रहैकलभ्यमेवेति सपरिकरभगवन्माहात्म्यं यद्भगवज्ज्ञापितं तत्सूचितम् ॥ ८ ॥

एवमनुग्रहस्य तत्फलस्य स्वकृतसाधनासाध्यत्वेनुसंहिते यावस्था तामाहुः–विवेके-त्यादि । विवेकः साधनतारतम्यानुसन्धानं, धैर्यं दुःखसहनसामर्थ्यं, भक्तिः स्वशरीर-सेवा । आदिपदेन तत्तत्साधनानि, तै रहितस्य । विशेषतोऽत्यन्तं पापेन पूर्वोक्तविरहा-त्मकेन असक्तस्य मुक्तसमस्तसङ्गस्य, अत एव दीनस्य तव एवानोजसः कृष्ण एवेति पूर्ववत् ॥ ९ ॥

एवमतितापेन परमदैन्ये भगवान् बहिःप्रादुर्भूतस्तदातिसन्तुष्टा जीवेषु मन्दमध्य-मेष्वेवं विलम्बाभावाय विज्ञापयन्ति सर्वेत्यादि । अयोग्येष्वपि योग्यतासम्पादनं कर्तुमकर्तुमन्यथाकर्तुं समर्थस्यैव शक्यमिति तादृशः सन् । तादृशत्वस्य गमकमौदार्यमिति सर्वत्रैवाङ्गीकृतमाने अखिलार्थानां पुष्टिपुष्टिमोक्षरूपाणां कृत् ! करणशील ! कृष्ण ! पूर्वोक्तश्रुतिपुराणव्याख्यातरूप ! । श्रीरघुनाथचरणैः कृष्णपदं सम्बुद्धयन्तत्वेन व्याख्या-तमित्यस्माभिरपि तथोक्तम् । द्वितीयान्तपक्षेपि क्विबन्तमेव । शरणस्थानामेतन्मार्ग-रीत्या शरणागतानां फलपर्यन्तमुद्धारं अहं भवदनुभावप्रकटनार्थाद्यावतीर्णः विज्ञाप-यामि । एतेन स्वस्य विज्ञापने भगवतश्च तथोद्धारे आवश्यकता सूचिता ॥ १० ॥

विज्ञापना वदन्ति–कृष्णाश्रयमित्यादि । कृष्णाश्रयं स्तोत्रं श्रीरूपः स्वामि-नीभावपूरितत्वात् वल्लभो भगवतः प्रिय आचार्यवर्योऽब्रवीदिति, यः पठेत् एवमनुसन्द-धानो योसन्निधियोगावस्थां ज्ञापयन् कृष्णसन्निधौ व्यक्तं कथयेत्तस्य कृष्ण आश्रयो भवेदिदं विज्ञापनमित्यर्थः । स्तोत्रस्य प्रत्यक्षत्वेनेदमा विनाप्यर्थसिद्धेरिति, शब्दान्तरान-ध्याहाराच्च, अत्र दुरान्वयोप्यदुष्ट एव । 'विमुञ्चात्मतनुं घोरामित्युक्तो विससर्ज ह' । 'निससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियां'मित्यादौ भाव एव तनुत्वेन व्यवहाराच्च श्रीरूपत्वोक्तावपि न दोष इति न कोपि शङ्कालेश इति । यथाधिकारं सर्वा एव टीका उपयुज्यन्त इति न क्वापि शङ्कालेश इति । दिक् ॥ ११ ॥

इति श्रीवल्लभाचार्यपदाम्भोजकृतपद्धतम् ।
स्तोत्रं कृष्णाश्रयस्यैव विवृतं तत्प्रसादतः ॥ १ ॥

इति श्रीमद्वल्लभाचार्यचरणकमलचञ्चरीकश्रीश्यामलात्मजश्रीव्रज-राजविरचितं कृष्णाश्रयस्तोत्रविवरणं समाप्तम् ।

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# कृष्णाश्रयस्तोत्रम्।

## विवरणसमेतम्। -

यत्कृपादृष्टिपीयूषैकबिन्दुस्पर्शं रसार्द्रता।
कृष्णलीलाब्धिजा जन्तोर्न कदापि निवर्तते ॥ १ ॥
तानेव श्रीमदाचार्यचरणानाश्रये मुदा।
तेनैव मम तद्वाक्यबोधो बोध्यो हि जायते ॥ २ ॥
पुष्टिमार्गादिलीलाभिः स्वानन्दं पूरयन्निजम्।
स्वाश्रयं कुरुते यश्च तमहं कृष्णमाश्रये ॥ ३ ॥

अथाश्रयो द्वेधा निरूप्यते मर्यादापुष्टिभेदेन। तत्र मर्यादया य आश्रयः स तु स्फुट एव सर्वत्र व्याख्यातः। पुष्टिमार्गीयस्तु गूढः, स च परोक्षवादेन साधनफलस्वरूपनिरूपणपूर्वकं निरूप्यते। तत्रापि कालादिषड्साधनानां फलासाधकत्वं वदन्त आश्रयं संभावयन्ति। एवं सति यादृशः पुष्टिमार्गीयाणामाश्रयस्तादृशोत्र निरूप्यते प्रकारसहित इत्यवगम्यते। तथाहि प्रथमं परमकृपालुः साक्षात् भगवान् स्वयं निरुपधिकरुणावरणात्पुष्टिफलदानेच्छया यं वृणुते तस्य तदारभ्य स्वत एवोद्भूतसहजानुरागतो भगवत्सेवादौ प्रवृत्तिर्भवति न तु तद्व्यतिरिक्तधर्मेषु। ततस्तादृशानुरागपूर्वकसेवादिकरणोल्लसितप्रेमासक्तिजनितपुष्टिमार्गीयभावाङ्कुराणां 'भगवता सह संलाप' इत्याद्युक्तप्रकारकभावनाया अवश्यसंभवात्तत्र तद्धर्माक्रान्त्ये विजातीयसङ्गानुरोधादन्तःस्वरूपानुभवप्रतिबन्धे सति तदपेक्षाजनितार्त्या भगवद्व्यतिरिक्तस्य तन्निवृत्तेरसमर्थत्वाच्छरणागतिरुत्पद्यत इति श्रीमदाचार्यचरणास्तत्स्वरूपनिरूपणपूर्वकं श्रीकृष्णाश्रयस्तोत्रं निरूपयन्ति सर्वेति।

सर्वमार्गेषु नष्टेषु कलौ च खलधर्मिणि।
पाषण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥

तादृशपुष्टिमार्गीयस्य सर्वे मार्गाः प्रमाणरूपाः कर्मादयो नष्टाः, एक एव प्रमेयमार्गस्तिष्ठति, यतस्तेषु फलत्वासाधकत्वबुद्ध्याऽरुचिरेवेति तत्त्यागकरणान्नष्टा एवेत्यर्थः। अथवा 'णश अदर्शने' इति धात्वर्थविचारेण नष्टा अज्ञाता वा। तेषां दर्शनज्ञानयोरप्येतन्मार्गे

प्रतिबन्धकत्वादितिभावः । ननु भक्तानां कलिकालः साधको भवतीति तन्निष्ठमार्गाणां कथं तथात्वमिति पुष्टिमार्गीयाणां तस्य बाधकत्वमाहुः खलधर्मिणीति । कालस्तु प्रमाणभूतः, प्रमाणं साक्षात्स्वरूपं न कथयतीति तद्व्यतिरिक्तस्य सर्वस्य सदोषत्वमेवेति तन्नष्टत्वात् खलो दुष्टो धर्मो धर्मकर्तापि यत्रेति। यद्यपि 'कलेर्दोषनिधे राजन्' 'कलिं सभाजयन्ती'त्यादिवचनैः कलेर्भगवद्भजनानुकूलत्वमुक्तं, तथाप्यधुनानवतारसामयिकत्वेनाधिदैविकरूपत्वाभावात् पुष्टिमार्गीयान् प्रत्यानुकूल्यस्य नष्टत्वमेवेति तथोक्तम् । भौतिककालस्य प्रमाणरूपत्वेन मर्यादोक्तविधिना तेषां भजनं न पुष्टिरीत्या । फलमपि मुक्तिरेव न ततोऽग्रिमकक्षापन्ना। अत एव पाषण्डप्रचुरे लोके इत्युक्तम् । धर्मिव्यतिरेकेण केवलधर्मस्य सोपाधिकत्वात्तथोक्तमितिभावः । तानेव धर्ममार्गानुत्तरश्लोकेष्वसाधकत्वेन वक्ष्यन्ति । एवं सति तत्तत्काले तत्तद्धर्मानाचरणे तेषां दोषबुद्धिरेवोत्पद्यत इति तत्समक्षं तत्तत्काले प्रमाणातिरिक्तं न कर्तुं शक्यत इति कालस्य भावोद्बोधे प्रतिबन्धकत्वादसाधकत्वं निरूपितम् । चकाराद्गृहेऽपि तथा । 'गृहे स्थित्वा स्वधर्मत' इतिवचनात्तत्रापि सेवाकरणे क्रमेण स्नेहासक्तिजनितभावनाया जातत्वात्तत्रत्यानां तदभावात्तत्सङ्गोऽस्य बाधको विजातीयभाववत्त्वादित्यर्थः।अथवा, एवं पुष्टिमार्गीयस्य कालतदुक्तमार्गाणां प्रतिबन्धकत्वं निरूप्य तस्य स्वधर्माचरणप्रकारमाहुः—पाषण्डेति । लोके पुष्टिमार्गीये पाषण्डप्रचुरे सति तत्संसर्गेण भावापेक्षया दोषबाहुल्ये सतीत्यर्थः । यद्वा, पाषण्डो नाम स्वान्तर्निष्ठधर्मगोपनेन बहिरन्यधर्मकरणं तदेव प्रचुरो यस्मिंस्तादृशे सति । यथा न कोऽपि जानाति तथा कर्तव्यमापन्नमितिभावः । एवं सत्येतावत्प्रतिबन्धके विद्यमाने तत्संसर्गेण पूर्वोक्तभावानामुच्छलितत्वाभावात्फलाभाव इति तादृशस्य प्रतिबन्धनिवर्तकः साक्षाद्भगवानेव नान्य इति कृष्ण एव गतिर्ममेतिशरणमुपदिष्टम् । शरणं गते कृपया स एव सर्वं करिष्यतीतिभावः ॥ १ ॥

ननु तर्हि भगवल्लीलाप्रदेशेषु गत्वा स्वधर्मनिर्वाहः कर्तव्य इति चेत्तत्रापि प्रतिबन्धकबाहुल्येन देशानामसाधकत्वेन शरणमेव निरूपयति म्लेच्छेति ।

> म्लेच्छाक्रान्तेषु देशेषु पापैकनिलयेषु च ।
> सत्पीडाव्यग्रलोकेषु कृष्ण एव गतिर्मम ॥ २ ॥

मलिनपदार्थमेवेच्छन्तीति म्लेच्छा विषयिणो, मन्त्राद्युपासकाः, कर्ममार्गीयाश्च । यद्यपि तेऽनिषिद्धं विहितमेव कुर्वन्ति तथापि स्वार्थपराः 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती'त्याद्युक्त्या कर्मफलं मलिनमेवेति तत्पराणां तथात्वेन निर्देशः कृतः । तादृशैस्तैराक्रान्ताः सर्वे प्रदेशा, अत एव तत्तल्लीलादीनां तिरोभावान्न ते साधका इतिभावः । स्वरूपं तु भगवदीयत्वादनुकूल्येन किन्तु भावे वैजात्यप्राधेण तस्य बाधकत्वम् । तावतापि

यत्र प्रतिबन्धकत्वं तत्र केवलविषयाविष्टसम्बन्धिदेशसंसर्गेण भावनाशे किमु वक्तव्यमिति कैमुतिकन्यायेनापि देशस्यासाधकत्वं निरूपितम् । किञ्च, न केवलमाक्रान्तिमात्रं किन्तु तन्मय एव जाता इत्याहुः पापैकनिलयेष्विति । कर्मणां हिंसाप्रचुरत्वात्तथोक्तम् । एतेन तत्र गमनमात्रेण तत्सम्बन्धात्स्वधर्मनाशो भवतीतिभावः । एवं सति भगवतो मन्त्रोपासनाद्यस्पृष्टत्वेनास्मिञ्छ्लोके मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनानां सङ्ग्रहेणासाधकत्वं निरूपितम् । आदिपदेन विहितभक्त्यादीनामपि तथेत्यर्थः । ननु तत्रापि केचन निवृत्तिपरा भविष्यन्तीति चेत्तत्राहुः सत्पीडेति । निवृत्तिपरत्वेन सद्रूपाणि तत्रत्यानां देहेन्द्रियादीनि तेषां पीडा सत्पीडा, तद्देशसम्बन्धे तानि विषयाविष्टान्येव भवन्तीति तन्निग्रहाशक्यत्वान्निवृत्तिपराणां खेदो जायत इति तद्रूपैव स्वधर्मनाशजनिता पीडा, तया व्यग्राः कथमस्माकं परलोकः सेत्स्यतीति व्यग्रा लोका धर्मशीला येषु । यत्र स्थूलदृष्टीनामपि न धर्मनिर्वाहस्तत्रातिसूक्ष्मेक्षिकाणां तादृशानां भावशैथिल्ये किमु वाच्यम् । तादृशानामग्रेपि स्थातुमशक्तेरितिभावः । तथाचोक्तं 'अस्माच्च तत्प्रभृति नान्यसमक्षमि'-सूत्र विवरणे 'यथा व्याघ्राग्रे देहाभिमानी'ति फलप्रकरणे । अतस्तद्भावपोषणे प्रतिबन्धनिवृत्त्यर्थं शरणमेव भावनीयमिति कृष्ण एव गतिर्ममेत्युक्तम् । अत एव 'अलौकिकमनःसिद्धावि'ति विवेकधैर्याश्रयेप्युक्तम् ॥ २ ॥

एवं दुःसंसर्गेण देशानामसाधकत्वं निरूप्य तत्र भगवद्भक्ता अपि सन्ति ते समीचीनास्तैः सह सङ्गो न बाधक इत्याशङ्क्य द्रव्याणामशुद्धया दुष्टस्य तेषामपि सङ्गो बाधक इतीतरमार्गीयाणामसाधकत्वमाहुः गङ्गादीति ।

गङ्गादितीर्थवर्येषु दुष्टैरेवावृतेष्विह ।
तिरोहिताधिदैवेषु कृष्ण एव गतिर्मम ॥ ३ ॥

गङ्गादितीर्थवर्या भक्ताः । अयं भावः—'अस्ति गङ्गायां त्रिरूपमि'ति सिद्धान्तमुक्तावल्यां स्फुटीकृतं, तन्निविधत्वमत्रापि ज्ञेयम् । तेन जलरूपाधिभौतिकादिभेदेन प्रवाहभक्तिमार्गीयज्ञानमार्गीयमर्यादाभक्तिमार्गीया भक्ता निरूपितास्तत्र प्रथमं प्रवाहभक्तिमार्गीयाणामसाधकत्वं निरूपयन्ति । यद्यपि गङ्गापदस्यादौ निरूपणाद्गङ्गाया मर्यादाभक्तिमार्गीयभक्तत्वात्तन्मार्गीयभक्तानामेवादौ निरूपणं संभवति तथाप्याधिभौतिकादिक्रमेण परिदृश्यमानप्रवाहजलस्यैव प्रथमनिरूपणात्तत्राप्यादौ प्रवाहभक्तिमार्गीया एव ज्ञेयाः । अग्रिमाणामुत्तरश्लोकेषु निरूपणम् । तथाच पदसम्बन्धः, गङ्गा देवी आदिर्येषां तानि गङ्गादीनि, तस्या एवाधिदैविकादिरूपाणि, तद्रूपा एव 'तीर्थभूता'आदिसाधकवचनाद्भक्ताः, परन्तु दृश्यमानजलादिरूपाक्रमेण प्रवाहमार्गीया एव । कर्ममार्गीयापेक्षयोत्तमत्व-

ज्ञापनाय 'वर्ये'पदम्। तादृशेष्वपि दुष्टैरेव स्वरूपापेक्षया तद्दोषैरित्यर्थः। तादृशैर्धर्मव्रते-ष्वाच्छादितेषु सत्सु, धर्मा एव तेषां धर्मिस्वरूपज्ञाने आवरका जाताः। ननु भगवद्ध-र्मनिष्ठेषु कथं तद्धर्माणामावरकत्वं तत्राहुः—तिरोहिताधिदैवेष्विति। तिरोहितमधिदै-वस्वरूपं येषु। यथा जलप्रवाहे मूर्तिमत्या गङ्गायास्तिरोधानं तथा प्रवाहमार्गेपि साक्षा-त्पुरुषोत्तमस्वरूपतिरोधानम्। विभूतिरूपस्यैव तेषां भजनं तद्रूपमेव फलं, न तत्राधिदैवि-कभजनं फलं चेति द्रव्याशुद्ध्या पुष्टिमार्गीयाणां तत्सङ्गो न साधक इति शरणगतिमे-वोपदिशन्ति कृष्ण एवेति। अत एवार्घ्यफलाभावे भगवतो दातृत्वं नास्ति सा सेवानाधिदैविकी'त्युक्तं सेवाफले। प्रकृते तु आधिदैविकस्वरूपस्यैव सर्वस्य साधक-त्वादाधिदैविकरसात्मकसदानन्दस्वरूपज्ञापककृष्णपदमेवोक्तं सर्वत्र शरणागतौ। एतेन तद्व्यतिरिक्तस्वरूपस्य शरणमपि न साधकमित्यपि सूच्यत इति सुष्ठूक्तम् ॥ ३ ॥

ननु ज्ञानिनो निर्दोषाः समबुद्धय एकान्तस्थितयः तत्सङ्गः साधको भविष्य-तीति तेषामपि मायामोहितत्वात्साक्षात्पुरुषोत्तमसम्बन्धाभावेनासाधकत्वं निरूपयन्तः कर्तृणां तन्निरूपयन्ति—अहङ्कारविमूढेष्विति।

अहङ्कारविमूढेषु सत्सु पापानुवर्तिषु।
लाभपूजार्थयत्नेषु कृष्ण एव गतिर्मम ॥ ४ ॥

ते तु 'अहं ब्रह्मास्मी'त्यहङ्कारेण विशेषेण मूढा, नहि तत्र साक्षात्पुरुषोत्तमस-म्बन्धः, किन्त्वक्षरमात्रसम्बन्धेन तन्मात्रस्यैव परमफलत्वं मन्यन्त इति सेव्यसेवकभाव-स्यापि गतत्वाद्विशेषेण मूढास्तादृशेषु सत्सु। ननु अविद्यानिवृत्तौ अनुभवरूपे विज्ञाने सम्पन्ने ब्रह्मणि लयो भवतीति कथं तेषां मोहः संभवतीति तत्राहुः पापानुवर्ति-ष्विति। 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इतिवाक्यात्पुष्टिमार्गीयाणां फले प्रति-बन्धकत्वात्साक्षात्पुरुषोत्तमज्ञानाभावरूपस्य तादृशज्ञानस्य पापत्वात्तदनुवर्तिनां पापा-नुवर्तित्वमेवेति तथोक्तम्। किञ्च, तादृशस्य पुनरक्षरलयानन्तरं पुष्टिफलसम्भावनैव नेत्यपिज्ञापनाय पापरूपत्वं विशेषेण मूढत्वं चोक्तम्। ननु तथाप्यानन्दानुभवो भविष्य-तीति तत्राहुः—लाभपूजार्थयत्नेष्विति। तन्मार्गे न साधनदशायां न च फलदशायां तदनुभवः, यतो लाभः आत्मलाभः पूजा तत्साधनार्थं मनस्येव कल्पितमूर्तेरुपासनारूपा, तदर्थमेव यत्नो येषां तादृशेषु। तत्रात्मन ऐक्ये सर्वेन्द्रियाणां सार्थकता, नाप्यानन्दानु-भवज्ञानं च, यथा जले निमग्नस्य जलज्ञानम्। बहिरेव पाने तदनुभव इति न तेषामानन्दा-नुभवोपि। भक्तौ तु पुष्टिमार्गीयस्य 'भगवता सहे'त्यादिरूपभावनायामपि सर्वेन्द्रियाणां साक्षात्स्वरूपानुभवो, बहिःप्राकट्ये तदनुभवे किं वाच्यमितिभावः। तदुक्तं 'निरोधवर्णने

'सङ्कल्पादपि तत्र हि' 'दर्शनं स्पर्शनं स्पष्टमि'त्यादिना । एवं सति पुष्टिमार्गीयस्य न
तत्सङ्गः साधक इति शरणमेव निर्दिशन्ति कृष्ण एव गतिः ॥ ४ ॥

ननु ज्ञानिष्वपि केचन भक्ता भवन्ति, तत्रापि प्रेमयुक्ताः, ते पुनर्द्विविधाः केचन
नामनिष्ठाः केचन सेवैकनिष्ठास्तेषां सङ्गः साधको भविष्यति, तथाचोक्तं 'सङ्गस्तेष्वथ
ते प्रार्थ्यः' 'सतां प्रसङ्गा'दित्यादिनेत्याशङ्क्य तयोरपि साधकत्वाभावात्प्रथमं नामनिष्ठा-
नामसाधकत्वं वदन्तो मन्त्राणां तन्निरूपयन्ति अपरिज्ञानेति ।

## अपरिज्ञाननष्टेषु मन्त्रेष्वव्रतयोगिषु ।
## तिरोहितार्थदेवेषु कृष्ण एव गतिर्मम ॥ ५ ॥

यद्यपि 'एकं शास्त्रं देवकीपुत्रगीत'मित्यत्र 'मन्त्रोप्येकस्तस्य नामानि यानी'-
त्युक्त्या भक्तानां नामैव परो मन्त्रः तत्कीर्तनपराः समीचीना एव तेषां तत्कीर्तने तदा-
नन्दानुभवजनिताश्रुपुलकादयोपि भवन्ति तथापि तेषां मर्यादामार्गीयत्वात्स्वरूपतोऽप-
रिज्ञानमेवेति तेषु मन्त्रेषु नामरूपेष्वपरिज्ञानेन नष्टेषु अलक्षितेषु सत्सु । यादृशः
कृष्णपदस्य रसात्मकभावरूपोर्थस्तदपरिज्ञानादलक्षितत्वमुक्तम् । ननु कथं सोर्थो न लक्षि-
तस्तत्राहुः—अव्रतयोगिष्विति । व्रतं अनन्यत्वं पतिव्रतावत्पतिविषयकपरमानुरागज-
नितरसात्मकभावेन तदेकनिष्ठारूपं, तदभावतोऽव्रताः पूर्वोक्ताः, तादृशेषु योगः संयोगो
येषामिति तथात्वमुक्तम् । ननु तेष्वपि नामधर्माणां दृश्यमानत्वात्कथमेवमुच्यते तत्राहुः—
तिरोहितेति । तिरोहितः अर्थो रसात्मकस्वरूपेण यः प्रकटः स यत्र तादृशेषु सत्सु ।
अत एव मुकुन्द ! नारायण ! यज्ञेश्वर ! ज्ञाननिधे ! वासुदेवेत्यादीनि मोक्षेच्छुभिरुच्यन्ते,
नहि पुष्टिमार्गीयैरिव 'व्रजजनार्तिहन् वीरयोषिताम्' 'सुरतनाथे'त्यादीनि रसात्मकानि
तानि । तेषां मर्यादामार्गानुसारेणैव तदनुभवो भवति न पुष्ट्यनुसारेणेति न तत्सङ्गस्तस्य
साधक इति शरणमेवोपदिशन्ति कृष्ण एवेति ॥ ५ ॥

ननु ये सेवापरास्ते तत्सर्वविनियोगेनानन्यव्रतेन सेवां कुर्वन्तीति न तेषाम-
व्रतत्वमिति साधका भविष्यन्तीत्याशङ्क्य तेषामसाधकत्वं वदन्तः कर्मणां तदाहुः—
नानावादेति ।

## नानावादविनष्टेषु सर्वकर्मव्रतादिषु ।
## पाषण्डैकप्रयत्नेषु कृष्ण एव गतिर्मम ॥ ६ ॥

यद्यपि ते पूर्वोक्तापेक्षया सर्वोत्तमास्तथापि तेषां मर्यादामिश्रत्वात्सर्वकर्मव्रता-
दिषु सर्वं पुष्टिमार्गीयं यावत्प्रमेयं कर्म तन्मार्गीया सेवा 'भगवता सहे'त्यादिरूपा धनं

लोकवेदनैरपेक्ष्येण केवलस्वरूपमात्रैकनिष्ठत्वं, आदिपदेन तन्मार्गीयश्रवणकीर्तनादीनि ज्ञेयानि, तेषु नानावादविनष्टेषु सत्सु । नानावादा अनेकविधप्रमाणवचनानि मर्यादामार्गीयाणि आवरणरूपाणि, तैः कृत्वा विशेषेण नष्टा अलक्षितास्तादृशेषु सत्सु । तेषां मर्यादामिश्रत्वेन विहितैकदृष्टित्वात्, न तज्ज्ञानमितिभावः । अत एव 'मर्यादया गुणज्ञास्ते' इति निरूपितं पुष्टिप्रवाहमर्यादायाम् । ननु तेपि भक्तिमार्गनिष्ठया सेवादिकं कुर्वन्तीति कथं तद्धानं तत्राहुः—पाषण्डैकप्रयत्नेष्विति । पाषण्डो नामोपाधिस्तद्रूप एवैकः प्रयत्नस्तदनुकूलसाधनरूपो येषां तादृशेषु । तेषामपि मिश्रत्वेन पुरुषोत्तमसायुज्यैकफलत्वात्तत्प्रयत्नादीनां पुष्ट्यपेक्षयोपाधिरूपत्वमेवेति तथा निरूपितम् । अत एव मध्यमफलत्वं सायुज्यस्य निरूपितं सेवाफले 'सेवायां फलत्रयमि'त्यनेन । किञ्च, सायुज्यस्य मर्यादाभक्तिमार्गैकफलत्वं तत्त्वार्थदीपे निरूपितं 'सर्वत्यागेनन्यभावे' इत्यनेन । पुष्टिफलं तु केवलं तादृशानुग्रहभरेण सर्वात्मना निरुपधिभावैकसाध्यमिति तादृशस्यापि सङ्गो न साधक इति शरणमेव निरूपयन्ति कृष्ण एव गतिर्ममेति ॥ ६ ॥

नन्वेवं सकलमार्गीयसाधनफलानां बाधकत्वेन पुरुषार्थरूपत्वाभावात्पुष्टिमार्गीयस्य के पुरुषार्थाः ? कीदृशया वा कथं वा सिद्धा भविष्यन्तीति प्रश्ने तादृशस्य भगवानेव चतुर्विधपुरुषार्थरूपः, तत्सिद्धौ शरणमेव साधनं नान्यदिति भगवतस्तद्रूपनिरूपणपूर्वकं चतुर्भिः श्लोकैः शरणं निरूपयन्ति । तत्र प्रथमं धर्मरूपत्वेन निरूपयन्ति—अजामिलादिदोषाणामिति ।

अजामिलादिदोषाणां नाशकोनुभवे स्थितः ।
ज्ञापिताखिलमाहात्म्यः कृष्ण एव गतिर्मम ॥ ७ ॥

'पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि । कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद्ध्रुवमि'त्यत्रोक्ताः पुरुषार्था मर्यादामार्गीयेभ्यो भिन्ना उपाधिरहिता इति । तत्र हरेर्दास्यं धर्म उक्तः । तच्च 'पुरुषभूषण देहि दास्यमि'त्यत्र स्वरूपात्मकत्वेन निरूपितमिति भगवतो धर्मरूपत्वं सिद्धम् । एवं सति धर्मेण यथा दोषनिवृत्तिर्निर्दोषतासिद्धिश्च भवति तथा भगवान् स्वरूपेणैव दोषनिवर्तक इष्टप्रापकोपि भवतीति धर्मनिरूपणपूर्वकं शरणं निरूपयन्ति । तथाहि—अजामिलादयः प्रबलदोषदुष्टास्तद्रूपा अत्र सकलेन्द्रियसङ्घातास्तेषां दोषाणां नाशकः स्वरूपेणैव न साधनैः । अयं भावः, पुष्टिमार्गीयस्य स्नेहोत्पत्त्यनन्तरं तत्प्रसननः स्वतन्त्रपुरुषार्थत्वेन क्रियमाणायां 'भगवता सह संलाप' इत्याद्युक्तप्रकारकभावनायामन्तर्लीलासक्तिसाक्षात्स्वरूपप्राकट्ये सति या सेवोत्तमपुष्टिरूपा तत्रेन्द्रियाणां प्राकृतपदार्थसंसर्गदर्शनस्मरणादिना यः प्रतिबन्धः सोत्र दोषपदवाच्यः । यथाऽजामिलस्य नामग्रहेण दोषा दूरीकृतास्तथा भक्ते तादृशस्य, मिथो गुणगान-

लक्षणनामात्मकलीलया तत्तदिन्द्रियाणां दोषं नाशयतीति तथोक्तम् । अनेन दोषनिवृत्तिर्धर्मकार्यमुक्तम् । इष्टप्राप्तिं निरूपयन्ति अनुभवे स्थितं इति । दोषं दूरीकृत्य तत्तदिन्द्रियादिषु स्वयं स्थितो भूत्वा स्वरूपानन्दमनुभावयतीतिभावः । अनेनेष्टप्राप्तिरूपं धर्मकार्यमुक्तम् । एतत्सर्वं निरोधवर्णने 'संसारावेशदुष्टानामि'त्यारभ्य 'हरिवत्सुखमि'-त्यन्तेन स्फुटीकृतम् । ततोपि विशेषमाहुः—ज्ञापिताखिलमाहात्म्य इति । ज्ञापितम-खिलं पुष्टिलीलारूपं माहात्म्यं येन । अत एव व्रजस्थिनानामपि च लीलानुभवः । पुष्टिप-वाहमर्यादायामपि 'पुष्ट्या विमिश्राः सर्वज्ञा' इत्युक्तम् । भगवति साक्षादन्तःप्रकटे तद्धी-धर्माणामप्याविर्भावात्तज्ज्ञानमप्याविर्भवतीति न किञ्चिदनुपपन्नम् । एवं सति तादृशस्य तादृग्भावपोषणादौ ईदृग्धर्मरूपो भगवानेव शरणमिति कृष्ण एव गतिर्ममेत्युक्तम् ॥७॥

ननु तेषामिन्द्रियादीनां प्राकृतत्वात्तदधिष्ठातॄणां च तथात्वात्कथं दोषनिवृत्तिरि-त्याशङ्क्य तेषां सर्वसङ्घातरूपः कृष्ण एव भवतीति तस्यैवार्थरूपत्वं निरूपयन्तः शरणगतिमाहुः—प्राकृता इति ।

प्राकृताः सकला देवा गणितानन्दकं बृहत् ।
पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्मम ॥ ८ ॥

प्रपञ्चनिरूपणप्रस्तावे 'जडे सदंशः प्रकट इतरांशावच्छन्नौ, जीवे आद्यौ प्रकटौ आनन्दांशस्तिरोहित' इतिनिरूपितम् । पुष्टिमार्गीयस्य तु साधनदशायां सेवागुण-गानादिपरस्य स्वत एवानन्दांशः प्रकटो भवति । तथाचोक्तं सिद्धान्तमुक्तावल्यां 'ततः संसारदुःखस्ये'ति । तत्रैव पुनः विवरणे 'यद्यप्यनभिलषिते ते तथापि वस्तुस्वभा-वात' इत्युक्तम् । सिद्धान्तरहस्येपि 'सर्वेषां ब्रह्मता तत' इत्युक्तम् । 'सच्चिदानन्दता स्वत' इति निरोधविवरणेप्युक्तम् । एवं सति ये पूर्वं प्राकृता देवा इन्द्रियाधिष्ठातृ-रस्ते सच्चिदानन्दरूपाश्चात्मकत्वे सम्पन्ने पुरुषोत्तमाविर्भावात्सकला जाताः । फला-रसात्मकफलविद्यारूपा तत्सहिता जाताः । गणितानन्दरूपमक्षरं ब्रह्म, 'क'मत्ययेन ततोपि ह्रस्वोऽतितुच्छो जीवः स बृहज्जातस्तदपेक्षयापि महान् जातः । उभयत्र हेतुः पूर्णानन्दो हरिरिति । यतः सर्वेषां सच्चिदानन्दत्वे सम्पन्ने पुरुषोत्तमाविर्भावात्तत्सम्ब-न्धिरसात्मका भावा उत्पद्यन्त इति तज्जनितप्रचुरार्तिर्धान्त्यर्थमन्तस्तत्तदिन्द्रियादिषु तत्तत्स्वरूपः स्वयमेव भूत्वा सर्वेषु तेषु पूर्णस्वरूपानन्ददानेन दुःखं हरतीति तथोक्तम् । एवं सत्यक्षरात्मत्वेनाप्राकृतत्वे किं वाच्यम् । किन्तु तस्य समस्तमङ्गानः साक्षाद्रसात्मकत्वो-लारूपपूर्णानन्दभगवद्रूप एव भवतीति इतरस्तत्र दोषाशङ्कात्र इतिभावः । तदेव 'श्रीमद्गो-

कुलजीवात्मा श्रीमद्गोकुलस्थानसमि'त्याद्युक्तम् । यत एवं भगवत एवाधेरूपत्वं तस्मात्तस्य तथात्वसिद्ध्यै शरणमेव साधनमिति तन्निरूपयन्ति कृष्ण एवेति ॥ ८ ॥

एवमर्थरूपं निरूप्यैतादृशस्य प्रचुरार्तिशान्त्यर्थं वहिःप्रकटस्य कोटिकन्दर्पलावण्यसाक्षाद्भगवतः सङ्गस्यैवापेक्षितत्वात्कामरूपत्वं निरूपयन्तः शरणं प्रार्थयन्ति विवेकेति।

विवेकधैर्यभक्त्यादिरहितस्य विशेषतः ।
पापासक्तस्य दीनस्य कृष्ण एव गतिर्मम ॥ ९ ॥

अत्रेदमाकूतम् । पुष्टिमार्गीयभावाविर्भावानन्तरं विरहानुभवार्थं त्यागस्यावश्यकत्वात्त्यागानन्तरं पुनः क्रमेण मिथो गुणानुवादजनितप्रचुरभावानामुच्छलितत्वात्तादृशस्य देहप्राणेन्द्रियान्तःकरणादीनि स्वरूपात्मकानि भवन्तीति पूर्वश्लोकद्वयेन निरूपितम् । एतावत्पर्यन्तं विरहानुभवे चक्षूरागादित्रपानाशान्ताः सप्तावस्थाः संपन्नाः । अस्मिञ्छ्लोके उन्मादाद्यवस्थात्रयं निरूप्यते । तथाहि–विवेकः, धैर्यं, भक्त्यादयस्तै रहितस्य । विवेकराहित्ये विकलत्वं भवति यतो वैकल्ये विवेको न तिष्ठति । तच्चोन्मादावस्थायां भवतीति सा निरूपिता । धैर्यराहित्येनाहर्निशं साक्षात्सङ्गाभावजप्रचुरार्तिजनितमस्वास्थ्यं तिष्ठति । ननु पूर्वं गुणगानेऽन्तः साक्षादनुभवस्योक्तत्वात्कथं धैर्याभावेनास्वास्थ्यं तत्राहुः–भक्त्यादिरहितस्येति । गुणगानदशायां पूर्वमन्तःप्राकट्ये साक्षाद्भक्तिरूपमुखारविन्दसुधास्वादात् । आदिपदेन साक्षाद्भोगः । साक्षाद्भोगस्याप्यनुभवात्स्वास्थ्यं स्थितमिदानीं प्रलापावस्थायां फलप्रतिबन्धकत्वेन साक्षात्सुधादानतदुपयोगिबाधकबाधकरणादस्वास्थ्यमेव तिष्ठतीति तद्रहितस्येत्युक्तम् । तत्रापि यत्किञ्चित्स्वास्थ्येपि फलप्रतिबन्धकत्वेन विशेषतो रहितस्येत्युक्तम् । तथाचोक्तं संन्यासनिर्णये ' भगवान् फलरूपत्वात्' 'स्वास्थ्यवाक्यं न कर्तव्य'मित्यादि । एवमस्वास्थ्येपि स्वास्थ्यवाक्याधायकरणे प्रचुरार्त्या मूर्च्छामापतति सा दशा निरूपिता । ततः पुनर्जाग्रदवस्थाया स्वरूपस्थितौ सङ्गाभावेन स्थातुमशक्तं गुणावलम्बितचित्तं पुनर्भवति तेन च यत्किञ्चित्स्वास्थ्ये तदेव फले प्रतिबन्धकं भवतीति तस्य पापरूपत्वमिति तत्रासक्तस्येत्युक्तम् । अत एवोक्तं 'ज्ञानं गुणाश्च तस्यैव वर्तमानस्य बाधका' इति संन्यासनिर्णये । ततः पुनः क्षणानन्तरं स्थितिरेव न भवतीति दशम्यवस्था निरूपिता । एतत्सर्वं फलप्रकरणीयतृतीयाध्यायान्ते स्फुटीकृतम् । तत्र गुणगानानन्तरमनाविर्भावे मूर्च्छान्तावस्थानिरूपणपूर्वकं लीलाप्रवेशप्रलापः स्वरूपस्थितौ गुणगानमिति निरूपितम् । अग्रे पुनरतिदैन्ये जाते 'रुरुदुः सुस्वरं' 'तन्वः प्राणभिरागत'मित्यादिनाप्रिमा सा सूचितेति सर्वमुपपन्नम् । एतादृशस्य पुनः शीघ्रमाविर्भावार्थं शरणमेव मार्गणीयमिति कृष्ण एव गतिर्ममेत्युक्तम् । एतदनन्तरं सर्वथाऽऽविर्भूय परमा-

नन्दं ददातीति ज्ञापनाय कृष्णपदं, शरणं निरूपितम्। तथाचोक्तं 'ब्रह्मा विष्णू रुद्रश्च
भूत्वा पुनः कृष्ण एव जात' इति 'तासामाविरभूत्कृष्ण' इत्यस्याभासे ॥ ९ ॥
एवं दशावस्थाभिः पूर्णविप्रयोगानुभवे जाते प्रतिबन्धकदेहनिवृत्तौ तस्या-
लौकिकं रसात्मकं लीलोपयोगिदेहादिकं संपाद्य स्वयं साक्षात्प्रकटीभूय बहिः स्वरू-
पानन्दं ददातीति मोक्षरूपत्वं निरूपयन्ति सर्वसामर्थ्यसहितः सर्वत्रैवा-
खिलार्थकृदिति ।

**सर्वसामर्थ्यसहितः सर्वत्रैवाखिलार्थकृत् ।**
**शरणस्थसमुद्धारं कृष्णं विज्ञापयाम्यहम् ॥ १० ॥**
**कृष्णाश्रयमिदं स्तोत्रं यः पठेत् कृष्णसन्निधौ ।**
**तस्याश्रयो भवेत् कृष्ण इति श्रीवल्लभोऽब्रवीत् ॥ ११ ॥**

सर्वं यावदलौकिकैश्वर्यवीर्यादिगुणानां कर्तुमकर्तुमन्यथाकर्तुं यत्सामर्थ्यं तत्स-
हितः सन् तं प्रति स्वरूपानन्दं दातुं स्थितो भवतीत्यर्थः। एतदेवोक्तं 'भगवानपि ता रात्री'-
रित्यत्र 'भगव'त्पदेन स्वतन्त्रलिखने। ननु प्रभोः सर्वं संभवति परं तादृशेन प्रभुणा सह
साम्येन स्वरूपानुभवः कथं सुघचो जीवस्य तत्राहुः सर्वत्रैवाखिलार्थकृदिति। 'पुष्टि काये-
ने'तिवाक्याच्चादृशं तं भक्तं साक्षाद्रसात्मकस्वचरणारविन्दमकरन्दरजसाऽलौकिकदेहादि-
सम्पत्तिपूर्वकं लीलासमाजे प्रकटीकृत्य सर्वत्रैव देहप्राणेन्द्रियादिष्वखिलार्थान् रसात्म-
कालौकिकवयोगुणादिरूपानलौकिकैश्वर्यगुणादिसामर्थ्यरूपान करोतीति तथोक्तमव
पत्रालौकिकसामर्थ्यं पुष्टिफलं निरूपितं सेवाफले। एतत्सर्वं 'यथार्भकः स्वप्रतिबिम्बविभ्रम'
इत्यस्य विवरणे स्फुटीकृतं 'स्वसामर्थ्यादियोजने'त्यादि। एवं स्वरूपात्मकतां संपाद्य स्वरू-
पानन्दं ददातीति मोक्षरूपत्वं निरूपितम्। अत एव 'मोक्षः कृष्णस्य चेद्ध्रुव'मित्युक्तम्।
ननु मोक्षे आनन्दमयता तिष्ठति भक्तेनापि तथैव चेत्स्यात्तदा कथं लीलानुभव इत्याहुः शर-
णस्थसमुद्धारमिति। अत्र शरणपदं सर्वात्मभावपरम्। अलौकिकसंदृष्टिः सर्वैतादृग्भाव-
वत्येवेति शरणस्थस्य-सर्वात्मभावस्थस्य-पूर्वोक्तभक्ततत्तल्लीलानन्दसमुद्रमग्नस्य-वत उद्धारं
करोतीति शेषः। अन्यथैकस्यां लीलायां मग्नस्य द्वितीया सानुभूतैव तिष्ठेत्। एतत्सर्वं 'यत
एतद्विमुच्यत' इत्यत्र स्फुटीकृतम्। यद्वा, लीलानुभवदशायामपि तत्प्रभावादेव दैन्यभाव
उत्पद्यत इत्यपि ज्ञापनाय शरणस्थेतिपदम्। अथवा, अतःपरं सर्वांशेन शरणस्था जाता
इति वा ज्ञापनार्थं शरणे स्थित्यर्थं उक्तः। तथासति शरणसमाप्तिर्ज्ञापिता। किञ्च, एवं पूर्ण-
स्वरूपानन्दानुभवानन्तरं श्रीमदुद्धवोपदिष्टज्ञानेन यादृशो निरोधः सिद्धस्तादृशो निरू-
पित इति ज्ञापनायोद्धारे सम्यक्त्वमुक्तम्। एवं सति सदा फलरूपपूर्णनिरोधस्थित्यनन्तरं

तस्य स्वस्मिन् साक्षात्पुरुषोत्तमाभिन्नत्वज्ञानं भवतीति मुक्तिलीला निरूपिता । तत आश्रयलीलां निरूपयन्ति कृष्णमिति । तं पुनः केवलशुद्धभावात्मकत्वेन सद्भावस्य स्वरूपत्वाधारत्वेन स्वस्वरूपात्मकं केवलानुभवान(?)बालकभावरूपं कृष्णं करोतीत्याश्रयलीला निरूपिता । 'कृष्ण'मित्यत्रापि करोतीतिक्रिया योज्या । अत एव 'ततो विमोचनं स्वाश्रयप्रापणं प्रत्यापत्ति'रित्युक्तं 'बर्हापीडे'तिश्लोकविवरणे । एवं सति निरोधलीलानन्तरं 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः' । 'मुक्तानामाश्रयः कृष्णः' इति स्कन्धद्वयार्थरूपं मुक्त्याश्रयलीलाद्वयं निरूपितं पदद्वयेन । एतावदेवेप्सिततममितिपदद्वयस्य कर्मत्वेन निरूपणम् । पूर्वं सर्वसमर्थत्वेन स्वतन्त्रकर्ता प्रभुरिति प्रथमान्तपदं दत्तम् । अग्रे स्वेप्सितत्वेन पदद्वयं द्वितीयान्तमुक्तं, तेन तादृशः प्रभुरेव स्वेप्सितं करोतीतिक्रियाध्याहारेण कर्तृकर्मक्रियान्वयसम्बन्धोऽत्र ज्ञेयः । एवं ग्रन्थार्थोपि सम्यग्योजितो भवतीति सर्वमवदातम् । अतःपरं दशविधलीलानां पूर्णत्वादाश्रयाय सदा कृष्ण इति कृष्ण एवेत्यमेणोक्तम् । अत्र कृष्णावतारलीलानां नित्यफलावधित्वमुद्देशेन लक्षितमिति स्वरूपात्मकत्वेपि लीलानां नित्यत्वज्ञापनाय न कण्ठोक्त उपसंहारः कृत इतिभावः ॥

एवं साधनफलस्वरूपविवेकेनाश्रयं निरूप्य तस्य लोभनिष्ठसुधैकफलत्वेन तस्याश्च भगवद्भोग्यैकभोग्यत्वाददेयतमत्वेन प्रभोर्निवेदनीयमिति तदग्रे कृत्वा निवेदयन्त आहुः विज्ञापयाम्यहमिति । किञ्चिदितिशेषः । किं तदित्याकाङ्क्षायामाहुः इदमिति । पद्ये कृतं तद्विनये मे मत्यसत्वोद्गत्या निर्दिष्टम् । किं ते तदपीति तत्राहुः स्तोत्रमिति । तर्हि समीचीनं कृतं भीतोहं किमियद्विज्ञाप्यत इति चेत्तत्राह कृष्णाश्रयमिति । कृष्ण आश्रयो यस्मिन्निति तत्स्वरूपनिवेदनं कृतम् । एतेनाश्रये कृते आश्रितपक्षपातस्य त्यक्तुमशक्यत्वात्तन्निर्बन्धेनादेयतममपि पराकाष्ठापन्नं वस्तु तस्मै देयं भवतीति स्वकीयानामार्तिघ्नं भवति अतिविनयेन विज्ञापनमेवोचितमिति श्रीमदाचार्याणां हृदयमिति ज्ञापितम् । अत एव एवं विज्ञाप्य तत्पाठफलं निरूपयन्ति य इति । कृष्णस्य भावात्मकस्य सन्निधौ सति पुष्टिमार्गीयस्योद्भूतभावाङ्कुरस्य भावरूपत्वेनान्तस्तत्सान्निध्यं भवतीति तथोक्तम् । तत्सान्निध्यार्थं वा पठेत्तस्यैवाश्रयो भवेदिति । य इति मदतिरिक्तोन्योपि स्वीकृत इत्यर्थः । इदं त्वतिकारुण्यमत्यौदार्यं चरित आचार्याणाम् । नन्वेवं विज्ञापनेपि भगवता तन्नोरीकृतं चेत्तदा कथं फलसिद्धिस्तत्राहुः श्रीवल्लभोब्रवीदिति । इत्तीवि पूर्वोक्तं विज्ञापनं श्रीवल्लभः साक्षाद्गोपीशोऽब्रवीत् अङ्गीकृत्याज्ञप्तवानित्यर्थः । अथवा श्रीवल्लभः स्वयमेव श्रीरूपाणां स्वामिनीनां वल्लभः परमवात्सल्यास्पदीभूतः । अत एव

१ केवलानन्दानुभवात्मकमिति युक्तं स्यात् ।

ताः स्वरहस्यं सर्वं कथयन्तीति तासां गुरुत्वं निरूपितं संन्यासनिर्णये । अतिप्रियाय गुरुः स्वरहस्यं कथयतीत्युक्तत्वात् । एवं सति तद्वल्लभत्वेन प्रभोरपि परमप्रेमास्पदीभूत इति तदुक्तं सर्वमङ्गीकृतं भगवतेति ज्ञापितम् । अत एव यतोङ्गीकृतमिति हेतोरब्रवीदित्याह, फलमित्यर्थः । किञ्च तद्वल्लभत्वेन भगवदुक्ताङ्गीकारः स्वतः सिद्ध एवेति न पुनस्तदुक्तिः कण्ठोक्ता । अनेन फले सर्वथापि निःसन्दिग्धत्वं निरूपितमिति सर्वमवदातम् ॥ १०–११ ॥

अतिमलिनतराशये मदीये किमयमपूर्वतरोदयो विलासः ।
निरुपधिकरुणैकविभ्रमोपि वितरणशीलविभोरतोऽद्भुतं नः ॥ १ ॥
प्रवदतो महती किल ते कृपा मदपराधगणा अपि तादृशाः ।
उभयतौल्यविचारणया विभो विजयते तव सैव गरीयसी ॥ २ ॥
अदेयदानैकपरान् महौदार्यगुणैः स्वके ।
श्रीमदाचार्यचरणान् आश्रये करुणानिधीन् ॥ ३ ॥
प्रणतालोकसंजातकरुणादृष्टिभिः क्षणात् ।
संतापं हरति श्रीमद्विट्ठलेशं तमाश्रये ॥ ४ ॥

इति श्रीकृष्णाश्रयस्तोत्रविवरणं समाप्तम् ।



॥ श्रीः ॥

लल्लुबावामन्दिराधीश्वरगोस्वामिश्रीरणछोडलालजीमहाराजपादानां समाश्रयेण परिष्कृत्य सम्मुद्रय च प्रकटीक्रियमाणप्रबन्धावल्यां क्रमाय स्वीकृतानां प्रबन्धानां नामानि ।

---

१ सेवाफलं, द्वादशविवरणसमेतम् ... ... ... ... १-०-०

२ निरोधलक्षणं, विवरणषट्कसहितं गुर्जरानुवादयुतं च ... ... १-०-०

३ संन्यासनिर्णयः अष्टविवरणसहितः „ „ ... ... १-०-०

४ चतुःश्लोकी सप्तटीकोपेता „ „ ... ... ०-८-०

५ अन्तःकरणप्रबोधः पञ्चटीकोपेतः „ „ ... ... ०-८-०

६ { जलभेदः चतुर्विवरणसमेतः
पञ्चपद्यानि विवरणद्वयसमेतानि
सेवाफलं विवरणत्रययुतम् } ... ... ... १-०-०

७ भक्तिवर्धिनी चतुर्दशटीकोपेता ... ... ... ... २-०-०

८ श्रीसुबोधिनी ( जन्मप्रकरणीया, अ. १-२ ) टिप्पण्यादिसकलपरिकरसहिता ... ... ... ... ... १-४-०

९ श्रीमदाचार्यचतुःश्लोकीविवृतिः श्रीमत्प्रभुचरणप्रणीता टिप्पणीभ्यां प्रकाशेन गुर्जरानुवादेन च युता ... ... ... ... ०-१०-०

१० भक्तिहेतुनिर्णयः गुर्जरानुवादयुतः ... ... ... ... ०-८-०

११ प्रस्थानरत्नाकरः दशदिगन्तविजेतृश्रीपुरुषोत्तमजिविरचितः ... ०-८-०

केवलभाषाग्रन्थाः—

१ षष्ठ्यब्दिमाङ्गलिकः बड़ा हिन्दीभाषा ... ... ... ... १-०-०

२ मूर्तिपूजा „ ... ... ... ... ... ०-१०-०

३ अवतारमीमांसा „ ... ... ... ... ... ०-१०-०

४ षष्ठ्यब्दिमाङ्गलिक गुजराती ... ... ... ... ... ०-४-०

५ उपदेशमीमांसा ... ... ... ... ... छपाय छे.

६ आलोचननिर्णय हिन्दी, गुजराती साथे ... ... ... ०-८-०

पत्रप्रेषणसङ्केतः—

लल्लुबावामन्दिरम्,

भूलेश्वर:—बोंबे नं० २

श्रीकृष्णाय नमः ।

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

# चतुःश्लोकी ।

सप्तभिष्टीकाभिः समलङ्कृता ।



गुर्जरभाषानुवादसमेता च ।

सेयं

विद्यानुरागिगोस्वामिश्रीरणछोडलालचरणानां सम्पूर्णसाहाय्येन


शास्त्री चिमनलाल हरिशङ्कर. "साहित्यभूषण" "शुद्धाद्वैतरत्न" | शास्त्री हरिकृष्ण वीरजी. "शुद्धाद्वैतविशारद"


इत्येताभ्यां संशोध्यानूद्य


श्रीरामपुरीस्थभगवदीय 'सोनी कालिदास मूलजी' इत्यनेन
निजमातृ'रम्भाबाई' इत्यस्या भगवत्स्मरणार्थं दत्तद्रव्यतो
'गुजराती' मुद्रणालये समुद्र्य

श्रीजीवनाचार्यपुष्टिसिद्धान्तकार्यालयात्प्रकाशिता ।

ग्रन्थमाला ४४३, संवत् १९७९

मूल्यम् ०-८-०

પોરબંદરના સોની કાળિદાસ સુલજીભાઇએ પોતાનાં માતુશ્રી રંભાબાઇના
ભગવત્સ્મરણાર્થે આપેલા દ્રવ્યથી આ ગ્રન્થની મુદ્રણયોજના થઇ છે.

---

मोहमय्यां

'मणिलाल इच्छाराम देसाई' इत्यनेन स्वीये
'गुजराती' मुद्रणयन्त्रालये मुद्रिता ।
फोट सासुनबील्डिंग न ८

श्रीकृष्णाय नमः ।

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

# चतुःश्लोकी ।

सप्तभिष्टीकाभिः समलङ्कृता ।



गुर्जरभाषानुवादसमेता च ।

सेयं

विद्यानुरागिगोस्वामिश्रीरणछोडलालचरणानां सम्पूर्णसाहाय्येन


शास्त्री चिमनलाल हरिशङ्कर. "साहित्यभूषण" "शुद्धाद्वैतरत्न"

शास्त्री हरिकृष्ण धीरजी. "शुद्धाद्वैतविशारद"


इत्येताभ्यां संशोध्यानूद्य


श्रीरामपुरीयभगवदीय 'सोनी कालिदास मूलजी' इत्यनेन
निजमातृ'रम्भाबाई' इत्यस्या भगवत्स्मरणार्थं दत्तद्रव्यतो
'गुजराती' मुद्रणालये सम्मुद्य

श्रीजीवनाचार्यपुष्टिसिद्धान्तकार्यालयात्प्रकाशिता ।

वल्लभाब्द ४४४. संवत् १९७९

मूल्यम् ०-८-०

चरमाध्यायसमाप्त्यनन्तरमेव 'कथामिमं हरेरर्च्य'मित्यादिना समाहितं । श्रीविट्ठलचरणैरपि तदर्थविवरणे विविच्य निरणायीति नात्रानुद्यते विस्तरभीतित इति नात्र पूर्वपक्षावसरः । अतो व्यापिवैकुण्ठात्मको व्रज इति व्रजाधिपवत्पदेन ध्वनितम् । अत एवाथर्वणे कृष्णोपनिषदि 'वैकुण्ठं गोकुलवनं तापसास्तत्र ते द्रुमाः' । तैत्तिरीयश्रुतावपि 'ते ते धामान्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः' । 'विष्णोः कर्माणि पश्यत, यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततं'मिति । एतदर्थः सपश्चितः श्रीविट्ठलवरैर्विद्वन्मण्डन इति नास्याभिरत्र विस्तरणीयस्तथापि तदध्ययनमाधुनिकानां सर्वेषां दुर्घटमिति तत एव तमेवार्थमल्पतोऽनुब्रूमः । तथा हि हे भगवन् ते तव ते तानि 'सुप्तिङुपग्रहलिङ्गनराणा'मित्यनुशासनाल्लिङ्गव्यत्ययः । धामानि क्रीडास्थानानि । गमध्यै माप्तुं । उश्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति श्रुतिः । यत्र श्रीगोकुले भूरिशृङ्गा दीर्घशृङ्गा गावो वसन्तीति शेषः । अथवाऽऽरण्यग्राम्यपशूपलक्षणार्थम् । भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगा गावश्च तथा । कीदृशाः ? अयासः शुभाः शोभावहाः शोभाधायका इति यावत् । तस्येति शेषः । अत्र स्थाने भूमौ । तथापि स्वस्य तादृग्भाग्याभावाद्गोचरो न भवतीति खेदेनाहेत्याह श्रुतिः । तल्लोकवेदप्रसिद्धम् । उरुगायस्योरुकीर्तेर्भगवतो, विष्णोर्व्यापकस्य । अत एव भूरेर्बहुरूपस्य, रासोत्सवादौ तथा भाकत्यात् । तच्छ्रीगोकुलं परमं पदं, स्थानं वैकुण्ठं पदं, तस्मादप्यधिकं परमं पदं, प्रकृतिमियत्तेनापि परमं तादृशं पदमवभाति प्रकाशते' । अत्र स्वयं नित्या श्रुतिः 'अवभाती'ति वदन्ती स्वभानविषयस्य श्रीगोकुलस्यापि नित्यत्वमेव ब्रूते । अन्येषामनवभानपक्षेपि वर्तमानप्रयोगतो विषयस्यापि तत्त्वमेवायातीति भावः । एतदनन्तरमेव च 'विष्णोः कर्माणी'ति पठ्यते । तथा पूर्वस्मिन्मन्त्रे 'यत्र भूरिशृङ्गा अयासस्तत्तस्य परमं पद'मित्युक्त्वा, तत्र तदनन्तरं कृतानि विष्णोः कर्माणि यशोदास्तनपानपूतनासुपयःपानरिङ्गणादीनि पश्यत, यूयमिति शेषः । यतः कर्मभ्यो हेतुभूतेभ्यो व्रतानि कात्यायन्यर्चनादीनि, सान्निध्याद्विष्णुरेव पस्पशे स्पृष्टवान् । अयं भावः । तत्फलत्वेन तदग्रेऽप्याविर्भूय तासु सर्वां लीलां कृतवानिति । 'स्पश बाधनस्पर्शयो'रिति धातोर्लिटि रूपम् । यद्वा, अयं धातुरुभयार्थकस्तेन व्रतानि लोकमर्यादाव्रतानि पातिव्रत्यादीनि बबाधे । अयमप्यर्थः । वेदमर्यादात्याजकानां कर्मणां सदोषत्वशङ्कापरिहाराय 'यत' इत्यव्ययप्रयोगः । तथा चैतत्कर्मणामधिकृतत्वमुक्तम् । किञ्च, स्वव्रतानि आत्मारामत्वपूर्णकामत्वादिनियमरूपाणि बबाधे । अस्मिन्नर्थे नञ्प्रश्लेषेऽव्रतानि स्पृष्ट्वानित्यप्यर्थो युज्यते तदा, तानि कर्माणि गोपीभिः सह रमणरूपाणि पश्यतत्युपदेशः । अत्र कथनार्थविरोधस्तत्रैवोपपादित इति तत एव परिभावनीयो, विस्तरभयतो नात्र

वितन्यते। इन्द्रस्य युज्यो योज्योनुकूलः सखा। अयमाशयः। प्रभुणा इन्द्रयागभङ्गे कृते बहुबलाहकासाधारणवर्षणेनेन्द्रेण तद्द्रोहे कृतेपि सर्वसमर्थोपित द्वेतुकतन्मदमेव दूरीकृतवान्, न तु तं तदधिकारं चेति तथा। तदनन्तरमिन्द्राभिषेकगोविन्दनामधारणादिभिस्तत्समानधर्मैस्तथा। एवं निरूप्य तत्पूर्वोक्तं विष्णोः लीलास्थानं परमं पदं सूरयो विद्वांसः, तत्त्वं च शब्दब्रह्मपरब्रह्मस्वरूपविज्ञम्। तत्र परब्रह्मबोधस्तु भक्त्यैवेति सिद्धान्तः, 'भक्त्या मामभिजानाति' 'भक्त्याहमेकया ग्राह्य' इत्यादिवाक्यैः सूरयो भक्ता एव। न'न्वत्राह तदुरुगायस्ये'ति 'सूरयः सदा पश्यन्ती'तिवाक्यैकवाक्यतायां भूमौ तत्परमं पदं भक्ता एव सदा पश्यन्तीत्यर्थोऽवसीयते, एवञ्च काननकालिन्दीतत्पुलिनगिरिवरगह्वराद्यात्मकत्वेनोद्भूतरूपवन्महच्च। तदेव हि द्रव्यं यच्चाक्षुषं, यन्महत्त्वे सति उद्भूतरूपवदिति तर्कोक्तिः। तच्चाक्षुषं द्रव्यात्मकं च तत् परमं पदं कथं भक्तैकदृश्यमेव, न साधारणजनगोचरमित्याशङ्कायां दृष्टान्तमाह–दिवीव चक्षुराततम्। दिवि स्वर्गे यथा आ समन्तात् ततं व्याप्तं 'यन्न दुःखेन संभिन्न'मितिवाक्यात्सुखैकसाधनतद्रूपं तत्पदार्थं तत्रस्थानामेव चक्षुः पश्यति नान्येषाम्, तथैतल्लीलामध्यवर्तिनामेव तद्दृश्यमित्यर्थः। शाखान्तरेपि, 'ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि'। अर्थस्तु, ता तानि, वां युवयोः कृष्णरामयोः गोपीमाधवयोः, वास्तूनि अनेकविधकुञ्जादीन्येव वस्तूनि, गमध्यै प्राप्तुं 'तुमर्थे से स' इत्यनुशासनादेवत् साधु। वृष्णः कामान् वर्षतीति वृषा, तस्य। गोपिकासु कामवर्षकस्य। भूरि बहुरूपं, पदविशेषणम्। अग्रिमार्थस्तूक्त एव। परमपदा'दधिकं तत्रानुप्रविष्टमितिन्यायो ध्वनितः अन्यथा तत्पदमित्येव श्रुतिर्वदेत्। एवञ्च, लक्ष्मीतुल्यतायामपि यथा भक्तेषु तत उत्कृष्टत्वं 'गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्री'रितिवाक्यात्। अत एव 'स्वानन्दानुभवार्थे'मित्यस्य विवरणे श्रीविट्ठलवरै'स्तथा च स्वपदस्य स्वामिनीवाचकत्वे'त्यादि व्याख्यानं कृतम्। तथा च प्रसिद्धतदपेक्षया प्रभो रतिप्रीतिसाधकत्वेनानिर्वचनीयच्छविविधायकत्वेन च तस्य तथात्वमितिभावः। 'न स्त्रियो व्रजसुन्दर्य' इत्यादि तत्रत्यबृहद्वामनपुराणीयकथाप्युक्तार्थेऽनुसन्धेयेत्यलं विस्तरेण। प्रस्तुतमनुसरामः। एतादृशस्याधिपो भजनीयः सेव्य इत्यर्थः। सेवा हि सेवकस्यैव धर्मः। 'भज' धातोः स एवार्थो निरूढः। तथा चार्द्योपजीवानां सहजदासत्वमसूचि। तदकरणे तद्दण्डयोग्याश्च त इत्यपि। उक्तमेवोद्घाटयन्ति स्वस्येति। स्वस्य भगवदीयस्यायमेव भजनाख्य एव धर्मो न तु मार्यादिकः स इतिभावः। एवकारस्तु पुरुषोत्तमभजनधर्मातिरिक्तधर्ममात्रव्यवच्छेदकः। अपरा स्वस्यैवायं धर्मो नेतरेषाम्। तेन भगवदीयव्यतिरिक्ता निवारिताः। ततो गोपनमप्यसूचि। अत एव 'न बुद्धिभेदं जनयेत्', 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारये'त्यादि भगवद्वाक्यमिनम्। एतदर्थमेव शङ्करप्रभृतीनामुद्भवः। यद्वा, अयं धर्म एव

भगवदीयस्य सर्वपुरुषार्थसाधकत्वत एव सजातीयार्थादित्रितयसिद्धेः। अथवाऽयं धर्म एव स्वस्य तथा, न ज्ञानादयः। 'तस्मान्मद्भक्तियुक्तस्ये'तिवाक्यतः। हिशब्दः कैमुतिकन्यायेन युक्तार्थं ध्वनयति। भगवता गीतायां 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' इति स्वधर्मातिरिक्तसर्वधर्मपरित्यागपूर्वकं निजशरणमुपदिष्टं, तत्फलं च पापमोचनमुक्तं, न स्वरूपसम्बन्धादिकमतोऽयमुक्तमार्गो मार्यादिक एव स इत्येवं निश्चीयते। इतरथा स्वयमपि पापमोचनमेव फलत्वेन नोक्तं स्यात्। एवञ्च यत्र निखिलधर्मतो मर्यादामार्गीयोपि शरणमार्गः साधीयाँस्तत्र फलमार्गीयभक्तिमार्गोक्तप्रकारेण सेवाकरणं, तत्रापि श्रीपुरुषोत्तममुखारविन्दविरचितपद्धत्या, सुतरां तदात्मजनिर्मितरीत्या, सेव्योपि श्रीकृष्णः सदानन्दः फलात्मकस्तत्राप्युक्तभावेन भजनं सर्वधर्मपरित्यागपूर्वकं सर्वोत्कृष्टपरमफलं स्वरूपानन्दात्मकमिति किं वाच्यमिति। अतः सर्वात्मनाऽन्यं निराकुर्वन्ति नान्यः क्वापि कदाचनेति। अन्यः प्रेरणादिलक्षणो धर्मो न भगवदीयो भवतीत्यर्थः। मार्यादिकत्वाद्भगवदीयैर्न कार्य इति भावः। क्वापीति देशाश्रमापरिच्छेद उक्तः। कदाचनेति कालापरिच्छेदश्च। उक्तप्रकारेण दासैस्तद्दास्यमेव विधेयमितिभावः। अत एव 'भक्तिमार्गे हरेर्दास्यं धर्मं' इति तन्मार्गमर्महैर्दास्यमेव धर्मत्वेनोक्तम्। अत एव वृत्रासुरेणापि दृष्टपुष्टिफलेन 'अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूय' इति प्रभुं प्रति तदेव प्रार्थितं नेतरत्। प्रभुसाक्षात्कारे साक्षात्प्रार्थनमनुचितं भक्तस्येति परम्परया तत्प्रार्थनम्। एतेन स्वस्य दीनभावो दर्शितः। प्रभुसन्तोषाधायको यतस्तादृग्भाव एवात एव 'भक्तानां दैन्यमेवैकं हरितोषणसाधनमि'ति भाषितं प्रभुचरणैः॥ १॥

एवं श्रीपुरुषोत्तमस्य भक्तिमार्गीयप्रथमपुरुषार्थरूपत्वं सोपपत्तिकं निरूप्य तस्यैवार्थरूपत्वं प्रतिपादयन्ति एवमिति।

एवं सति स्वकर्तव्यं स्वयमेव करिष्यति।
प्रभुः सर्वसमर्थो हि तेन निश्चिन्ततां व्रजेत्॥ २॥

एवं सति उक्तप्रकारेण भजनरूपे धर्मे क्रियमाणे सति। स्वकर्तव्यं स्वामिकार्यं यत्तत्स्वयमेव स्वाम्येव करिष्यति न तु तदंशावतारादि। अतः प्रभोः स्वातन्त्र्यमप्युचि। न जीववत्केवलं पारतन्त्र्यमेव। 'अहं भक्तपराधीन' इत्यादिवाक्यैः कालादिनियामकस्य प्रभोस्तत्केवलं स्वभक्तमाहात्म्यावबोधनायैव नान्यथा। अत एव 'ह्यस्वतन्त्र इव द्विजे'ति तद्वाक्ये इवशब्दः। अस्वतन्त्र इव, नत्वस्वतन्त्र एवेति ध्वनयतैव भगवता तयोक्तमित्यवसीयते। भक्तवात्सल्यतोपि कचिद्यथा, अत एव दामोदरलीलापि। 'यस्य च भावेन भावलक्षण'मित्यनुशासनात्सतीति सप्तमी। ततः स्नेहेनावच्छेदतो दास्यकरणेऽव्यभिचा-

रि नित्यं स्वामिकर्तव्यमिति च ध्वनितम् । नपुंसकलिङ्गोक्त्या स्वयमित्यव्ययोक्तेश्च प्रभुकृतेर्वास्तवत्वपानन्ददायकत्वमविकारित्वं च । अन्यथैवं कृते कृत्येति वा ब्रूयुः । स्वकृतीरिति च । ननु श्रीमदस्मदाचार्यवर्यचरणसरसिजरजोभूषणभूषितैस्सेवकैर्व्रजाङ्घ्रिमधुद्रवास्वादितस्वान्तैस्तद्विश्वासेन [illegible] एव 'किमलभ्य'मित्यादिवाक्यार्थानुसन्धानतः प्रार्थनमन्तरेण भजनोपयोगिनिखिलपदार्थसम्पत्त्या तादृग्भावेन स्वभाग्यसौभाग्यसञ्चयमिव तद्भजनं कर्त्तव्यमेव, 'परन्त्वाधुनिकानां तत्स्वरूपानभिज्ञतया तदनुभवाभावाच्च जीवधर्मत्वेन कदाचिदविश्वासेनोत्कृष्टसेवासाधनरूपतनुजवित्तजसेवासिद्ध्यर्थमर्थापेक्षायां तत्र प्रयत्ने कृते कदाचिद्बाहिर्मुख्यसेवाप्रतिबन्धौ च स्याताम्, 'त्रैवर्गिकायासे'तिवाक्यात्प्रभुकृतप्रतिबन्धोपि सम्भवेत् । न च सेवार्थं यत्ने क्रियमाणे न भगवत्कृतप्रतिबन्धः, अत एव 'त्रैवर्गिके'तिपदम्; आयासमात्रविघातहेतुत्वे 'त्रैवर्गिके'तिपदं न वदेत्; अतो भजनार्थं यत्ने कृतेपि न दोषः; मर्यादाप्रवाहसंवलितानामेव बाहिर्मुख्यादिभावो, न पुष्टाङ्गीकृतानामिति वाच्यं, नवरत्ने 'क्वापी'तिपदव्याख्यानेऽस्मत्प्रभुचरणैरेवैतदुत्तरितत्वात् । अपरञ्च, भगवान् पूर्णपुरुषोत्तमः सर्वकरणसमर्थोपि स्वसेवार्थमप्यर्थयत्नसापेक्षश्चेत्तत्सेवायामेव को विशेषोऽन्यसेवैव कुतो न कार्या, यत्नायासस्य तुल्यत्वात् । तस्याक्लिष्टकर्मत्वं च भज्येत । बाहिर्मुख्यसेवाप्रतिबन्धौ च कथञ्चिदपि दुर्निवारौ स्याताम् । स्वामिकृतप्रतिबन्धस्याप्यतिबलिष्ठत्वतः स्वकृतोपि प्रयत्नोपि व्यर्थः स्यात् । वस्तुतस्तु अस्मिन्फलमार्गीयभक्तिमार्गे सेवैव धर्म इति राद्धान्तः । अत एवात्रैव ग्रन्थेऽस्मत्प्रभुभाषणसुधाधारा, 'स्वस्यायमेव धर्मो ही'ति । इतोऽपि स न कार्य एवेत्युक्तं भवति । 'योगक्षेमं वहाम्यह'मितिवाक्यं च व्याकुप्येत । 'तुष्यतु दुर्जन' इतिन्यायेनास्तु वा मार्यादिक एव स तथा'प्यधिकं तत्रानुप्रविष्टं न तु तद्धानिः' । अत्रायमभिसन्धिः, परमकारुण्यैकसिन्धुः श्रीगोकुलजनैकजीवनः स्वाश्रितस्य स्वल्पमप्यायासमसहमान एव सर्वकरणसमर्थस्तत्प्रयत्नमन्यथाकरोति स्वस्मिन्विश्वासदार्ढ्याय नान्यथा । तथा च यत्र मर्यादाप्रवाहसंवलितानामपि भक्तानां यत्नक्लेशासहिष्णुः करुणाकोमलो हरिस्तत्र पुष्टावेवाङ्गीकृतस्य यत्किञ्चिदपि तदसहिष्णुः श्रीमद्गोकुलजनलोचनचकोरचन्द्र इति किं वाच्यमत एव 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इति वचनामृतं च । 'भगवदर्थापि सा न कार्ये'त्युक्तं नवरत्नेऽस्मत्प्रभुचरणैरत्र एव । किञ्च, व्रजरत्नानामपि निजनाथनिदेशतोपि न निजव्रजगृहगमनमपि । यत्रैवं सूक्ष्मेक्षिका तत्रेतरेषां बाहिर्मुख्यादौ का वार्ता । अत एव तामसप्रकरणीयफलप्रकरणे 'यर्ह्यम्बुजाक्षे'तिश्लोके व्रजरत्नैर्निरुक्तं यत्प्रभृति त्वत्पादतलमस्प्राक्ष्म तत्प्रभृति वयमञ्जसा अन्यसमक्षं स्थातुं न पारयामः । विवृतं चैतदस्मत्प्रभुचरणै'र्यथा देहाभिमानी व्याघ्रस्य देहविघातकत्वात्तत्संनिधौ स्थातुं न शक्नोती'ति । एवं च सर्वोक्तदोषसम्भवप्रभयतो न प्रयत्नं कुर्यात् । अकृते तस्मिन्सेवासाधनानुपल-

विधस्तदनुपलब्धौ भजनोच्छेदस्तदुच्छेदे स्वधर्मात्यन्ताभावादुक्तोपदेशे घट्टकुटीप्रभातवृत्तान्तो वृत्त इति निजजनस्वान्तभ्रान्तिमपनयन्तः प्रवदन्ति—स्वयमेवेति । स्वयं प्रभुरेव सर्वं करिष्यति । स्वाश्रितजनयत्नमन्तरेणापि भजनापेक्षितसकलपदार्थान्संपादयिष्यतीत्यर्थः । सेवकैः सेवोपयोगिसमस्तपदार्थार्थित्वेनेतरतोऽर्थार्थनेन मनो व्याकुलं न विधेयम् । अत्रायमाशयः, आश्रयान्तररहितः स्वाश्रितजनो यदि भजनानुकूलनिखिलन्यासपुरस्सरं तदनुकूलसकलवस्तुविकारतो निजभजनमेव सर्वतोऽधिकं फलरूपं स्वसर्वस्वं ज्ञात्वा विदधाति तदा सर्वात्मरूपः फलात्मा सर्वकरणसमर्थः कालादिनियामको भगवान्पूर्णानन्दो हरिः परमकृपालुर्यतो यत्किञ्चिदपि स्वकीयपरिश्रमासहमान एव स्वसेवासाधकमेव तदपेक्षितसमस्तसामग्रीरूपं कुतो न विदध्यात् । अन्यथा 'योगक्षेमं वहाम्यह'मितिदृढप्रतिज्ञां न वदेदेव प्रभुरकुतोभयः । अप्राप्तस्य प्रापणं योगः । प्राप्तस्य परिपालनं क्षेम इति तयोरर्थः । यद्वा, स्वयमेव स्वत एव सर्वं करिष्यति प्रार्थनानपेक्षः । एतेन सेवकैर्न प्रभुः प्रार्थनीय इतिभावः । अत एव 'निजेच्छातः करिष्यती'ति नवरत्नेऽस्मत्प्रभुचरणैर्गीतं, 'प्रार्थिते वा ततः किं स्या'दिति विवेकधैर्याश्रयग्रन्थे च । यद्वा, स्वयमेवेत्यादि पूर्ववत्, न कस्यचित्प्रेरणया देवतान्तरद्वारा वा । कालादिदेवतान्तरप्रेरकोऽपि हरिरेवेति भावः । अस्मिन्नर्थेऽन्ययोगव्यवच्छेदक एवकारः । अथवा सेवकप्रार्थनस्य दोषावहत्वात्तत्प्रार्थनमन्तरेणैव ततः पूर्वमेव तदभिलषितं कुर्वन्न तत्प्रार्थनावासनां समीक्षते । अन्यथा 'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्', 'आशासानो न वै भृत्य' इत्यादिवाक्यैस्तत्सेवकत्वहानौ स्वस्वामित्वभावस्तत्र दुर्लभ इतिभावः । एतेन प्रभोः परमभक्तपरमहितकारित्वं समसूचि । अत एव 'योगक्षेमं वहाम्यह'मितिवाक्यम् । यद्वा, स्वयं करिष्यत्येवेति क्रियया सहान्वयेनात्यन्तायोगव्यवच्छेदक एवकारस्तेन प्रभुविश्वासेनैव सेवकैः स्थेयमतोऽस्मिन्मार्गे तदभाव एव परमबाधकः । अत एव विश्वासतदभावयो'र्ब्रह्मास्त्रचातकौ भाव्या'विति तयोरनुसन्धानं तत्रैवोक्तम् । ननु सर्वसमर्थोऽपि प्रभुः सर्वथा साधनसम्पत्तिमन्तरेण तादृक्फलदाने कथं समर्थो भवेत्, भवेद्वा यथाकथञ्चित्सम्पत्तावेव । अत एव 'ये यथा मां प्रपद्यन्त' इतिवाक्ये प्रपत्तिरेव तत्सम्पत्तिरिति चेत्, सत्यम् । परं तत्रेदमवधेयम्—यस्य येन प्रकारेण प्रपत्तिस्तस्मै तत्प्रकारेण प्रयच्छतीति प्रभुः 'तांस्तथैव भजाम्यह'मितिवाक्यत एवमेव । एवञ्च, यत्र मर्यादामार्गोक्तरीत्या प्रपत्तिस्तत्र तद्रीत्यैव फलदानं प्रावाहिकेभ्यः प्रावाहिकरीत्या पुष्टौ तद्रीत्या तथेति विवेकः । इतरथा 'यथा तथे'तिपदे न वदेत् । ये जना मां प्रपद्यन्ते तानेवाहं भजामि हीत्युक्तेऽपि चारितार्थ्यं स्यात् । उक्तार्थे यथाशब्द इत्यत्र 'प्रकारवचने थाल्' इतिपाणिन्यनुशासनं जागरूकमेवेति नानुपपत्तिः काचित्, तथाशब्दार्थोऽप्यनेनैव व्याख्यातः । तथा चात्र भजनोपदेशः पुष्टिपद्धत्यनुसारेणेति तथैव फल-

दानमिति दिक्। इत्थं च मर्यादायां साधनापेक्षो भगवान्यथासाधनं फलं ददातीति पुष्टौ तन्निरपेक्ष इति निगर्वः। अत एव श्रीमद्भागवते श्रीगोवर्द्धनोद्धरणप्रस्तावे 'गोपायेत्स्वात्मयोगेन सोऽयं मे व्रत आहित' इति श्रीमद्गोकुलनाथोक्तिः। अन्यथा व्रजजनस्वरूपानन्ददानं च सुतरामशक्यवचनं स्यात्। न च तत्रैव पूर्वोक्त एव प्रस्तावे पूर्वार्द्धेन 'तस्मान्मच्छरण'मित्यादिनोक्तमेव वक्ति चेच्छरणगमनादिकं तत्साधनमप्यस्तीति वाच्यं, 'निस्साधनफलात्माय'मिति प्रभुवाक्यविरोधापत्तेः। यदि ग्रहिलतया तद्वाच्यं तथापि प्रभुणैव तत्सम्पादितं न तु तैरपि किञ्चित्कृतम्। किञ्च, कदाचित्केषाञ्चित्सम्भवेपि तत्रत्योपरिभागस्थशुकमयूरमृगादीनां सुतरां तदसम्भवः। वस्तुतो नास्त्येव तेषामपि तज्जन्यसम्भवोपि, प्रत्युत विपरीतं च तत्। अत एव श्रीमद्गोकुलस्वामिना महता यत्नेनापीन्द्रबलिभागो निवारितः। अत एवा'न्याप्त'मितिवाक्यं च। न च जन्मान्तरीयं तदस्तीति चेत्, न। तथाकल्पने मानाभावात्। न चैतत्फलान्यथानुपपत्तिरेव तदिति चेन्न। उक्तोक्त्युच्छेदापत्तिः। ननु क्वचित्तादृगुक्तिरपि स्यादिति चेत्, न। 'अस्ति चेदुपलभ्येते'तिन्यायो व्याकुप्येत्, प्रत्युत भगवतैव सर्वं सम्पादितमित्युक्तिर्लभ्यतेपि। अत एव 'प्रसन्न एषां स्विदुत स्वयं हरि'रितिवाक्यमिति चेत्,समः समाधिः, 'अहो अमीषां किमकारि शोभन'मितिवाक्यात्। अत्र ब्रूमः। यद्यप्येतद्वचनमपि कोटिद्वयावबोधमवगाहते तथाप्युत्तरदले यथोपोद्धलक'मन्याप्तं', 'निःसाधनफलात्माय'मितिवाक्यं न तथा पूर्वदल इत्यनेनापि भगवत्कृतिरेव निरणायि, न व्रजवासिनामतो मर्यादायां तत्साधनैरेव फलं यतस्तत्रक्षकोपि प्रभुरेव। पुष्टौ तद्विनापि स्वबलेनैव सर्वं कर्तुं समर्थ इति कृतं वाचां विलासैः। इदानीमुक्तार्थमेवोद्धाटयन्त्यस्मत्प्रभुचरणाः प्रभुरिति। प्रभुः सर्वनियामकः। 'अन्ये चांशकलाः पुंसः कृष्णस्तु भगवान्स्वय'मितिवाक्यतः। अत एव समर्थ इति हेतुगर्भं विशेषणम्। सर्वेभ्यः कालादिभ्योपि समर्थः। कालसाध्यपदार्थस्यापि स्वयमेव साधकः। यद्वा, सर्वेष्वाश्रमेषु देशेषु वाहोस्विद्वर्णेषु तथा कालत्रितयेषु वर्णाश्रमादिषु तथा। देशादिषट्साधनानपेक्षः। यद्वा, सर्वस्मिन्साधनविषये तथा। तत्तत्साधननिरपेक्षः। यद्वा, सर्वैः कालादिभिः कृत्वा समर्थः सर्वकरणक्षमः। कालादयोपि तदधीना एवेति तत्साध्यपदार्थस्यापि प्रभोरिच्छामात्रेण त एव साधका न तु विघ्नकर्तारः। अथवा सर्वेषु दैवजीवेषु साधनसम्पत्तिं साधयितुं तथा। स्वस्मिन्नेव ज्ञानादेः सिद्धत्वात्। यद्वा, असाधनमपि साधनं कर्तुं समर्थः, अद्भुतकर्मत्वात्। अत एव तत्त्वार्थदीपे 'असाधनमपि साधनं करोती'त्यस्मत्प्रभुचरणोक्तिः। हिशब्दोपि समर्थमनुमोदते। तथा हि यत्र मर्यादामार्गीयसाधनाभावनपापात्यन्तासक्ताजामिलादिभ्यः स्वांशकलावतारः परम्परासम्बन्धेपि नामवर्णाज्ञानेन कथनेनापि परमस्नेहभरतः केवलस्वपुत्रनाममात्रजल्पनेन स्वसम्बन्धगन्धसम्भावनाऽभावेपि तन्नामवर्णमाहात्म्यावबोधार्थं

तादृक्फलदानं तत्र साक्षात्फलात्मकश्रीपुरुषोत्तमस्यैव पुष्टिमार्गीयस्वमुखारविन्दरूपाचार्योपदेशपूर्वकतदुक्तप्रकारेण भजने स्वयमेव किं किं न विधास्यतीति निखिलमनिर्वचनीयम् । य एतादृक् प्रभुः समर्थः, तेन प्रभुणा कृत्वा तेन कारणेन वा हेतुना वा भक्तो भगवति स्निग्धः निश्चिन्ततां निराकुलतां व्रजेत्प्राप्नुयात् । अत्रायं भावः । पूर्वं श्रीमदाचार्योपदेशमात्रेण तद्विश्वासोद्रेकेण भजन् पश्चाच्चास्वस्तदुद्रेकेण स्निग्धः सन् तथा स्यादित्यर्थः । इदं भजनमेव सर्वस्वमिति ज्ञात्वा यदि भजनमेव कुर्वन्नमुं क्षणमात्रमपि न त्यजेत्तदा स तथात्वं प्राप्नुयादिति भावः । तथा चैतन्मार्गीयो द्वितीयपुरुषार्थोपि सोपपत्तिको निरूपितः । तथैवाभिहितं भक्तिरससारपरिशीलनशीले'र्थो हरिरेव ही'ति ॥ २ ॥

एवं मार्यादिकौ तौ निराकृतौ तथा कृतेऽप्यर्थे सात्त्विकादिभेदेन त्रैविध्यमित्यतः कामस्यापि तत्र तद्दूरूपत्वमाशङ्क्य तदपि प्रभुस्वरूपापेक्षया सुतरामेवाप्रयोजकमिति तृतीयमपि तं तमेव निरूपयन्तस्तत्परिहर्तुमुपक्रमन्ते यदीति ।

यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ।

ततः *किमपरैर्ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥

यदि चेद्गोकुलाधीशो यशोदोत्सङ्गलालितोऽनन्यगोकुलस्वामी । श्रीपदोक्त्या तादृगन्तरङ्गभक्तसहितः । यद्वा, 'श्रयत इन्दिरा शश्वदत्र ही'तिवाक्यतः श्रीयुक्तं यद्गोकुलं, तस्य तथा । पूर्वोक्तवाक्यतः सर्वोत्कृष्टशोभायुक्तं यत्तस्य तथा । तादृशोपि सर्वात्मनेत्युक्तप्रकारेण धृतः भवता त्वया वेति शेषः । धृत इतिपदात्कायवाङ्मानसैस्तदेकपरता ध्वनिता । विशेषतश्चेतस्तत्प्रवणता यतः स प्रभुस्तत्सम्बन्ध्येव । अतः फलप्रकरणेऽस्मत्प्रभुचरणैर्गीतं 'सोऽन्तःकरणसम्बन्धी तिरोधत्त' इति । आश्रयान्तरं परित्यज्य केवलतदेकनिष्ठो जात इति यावत् । तदा ततः पूर्वोक्तफलात्मकप्रभोः सकाशादपरैस्तुच्छैर्लौकिकैर्वैदिकैरपि किं ? न किमपीत्यर्थः । अयमर्थः । लौकिकैर्लोके परमोत्कर्षप्रापकैस्तामसराजससात्त्विकैः । बहुवचनं त्रिविधत्वसूचनाय । वैदिकैस्त्रिविधगुणरूपैर्ब्रह्मलोकयोगसिद्धिमोक्षैः । बहुवचनं पूर्वोक्ताभिप्रायेण । चतुर्विधमोक्षज्ञानादिसूचनायापिशब्दः । उभयविधैस्तैर्ज्ञानादिभिश्च कृत्वा किं ? न किमपीत्यर्थः । अपरमिति पाठे उक्तैस्तैः कृत्वाऽपरमुत्कृष्टं वस्तु किमप्यस्ति । न किमपीत्यर्थः । यद्वा, अपरैर्देवतान्तरैः किं ? सर्वेषां तद्विभूतिरूपत्वात् । अत एवोक्तमस्मत्प्रभुचरणैस्तत्त्वदीपे 'कृष्णशब्देन परं वस्तूच्यते' । 'कृष्णात्परं नास्ति दैव'मित्यन्तःकरणप्रबोधे च । अत्रायमभिसन्धिः । रसालन्दादिषु भूम्यपेक्षयाप्यानन्दाधिक्यं, तदपि वामनावतारेणवोद्धृतमतः प्रभोरनपायिन्याः श्रियः सकाशादपि तदप्रयोजकम् । एवं सर्वभूमिभरत्वं लोके यशस्करं, तच्च यज्ञदानादिसापे-

* 'अपरं'मित्यपि पाठोऽत्र स्वीकृतः ।

क्षमत औपाधिकं सावधि च। न च राज्यमन्ते परलोकोपकारि, 'राज्यान्ते नरकं ध्रुव'मितिवाक्यात्। अतो भगवदनवद्ययशस्सकाशात्तथा। एवमेवेन्द्राधिपत्यमपि परिणामतापायि। भगवदखण्डितैश्वर्याच्चतथा। एवं लौकिकत्रिविधमपि निराकृत्य वैदिकमपि निराकुर्वन्ति। अपरिपक्वयोगिनो हि स्वयोगबलेनाभिलषितपदार्थानाविर्भाव्य तदनुभवं कुर्वन्तस्तस्मादपि भ्रष्टाः सन्तो दुःखिता एव पुनर्जन्मार्हन्तीति भगवज्ज्ञानापेक्षया तदज्ञानमपि तथा। भगवज्ज्ञानस्य नित्यत्वात्। ब्रह्मणो रजोवतारत्वात्तल्लोकोऽपि राजसः, तत्र हि 'ब्रह्मणा सह मुच्यन्त' इतिवाक्यात्तत्साहित्येन पारतन्त्र्यतो भोगफलयोः सिद्धिरिति स्वपराक्रमातिक्रमः। भगवद्वीर्यापेक्षातस्तौ तथा। 'तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुत्या ज्ञानतो मोक्षस्तच्च 'सत्त्वात्सञ्जायते ज्ञानमि'तिवाक्यतस्तज्जन्यं तदपि सात्त्विकमेव भवितुमर्हतीति तत्साध्यो मोक्षोपि तथा। सोऽपि गणितानन्दात्मकोऽतः पूर्णानन्दमभ्यपेक्षया सोऽत्यन्तं स्वल्पतर इति तथेति वैदिकमपि तत्तथाकृतम्। किञ्च, मायादिकवैराग्यमपि प्रभोर्भक्तातिरिक्ते रागाभावाल्लोकोत्तरवैराग्यतः पूर्ववदिति भगवद्धर्मरूपतत्पङ्गुणत। षड्विधास्तेऽकिञ्चित्करा यत्र तत्र किं वाच्यमन्तरङ्गधर्मिरूपतद्गुणतस्तथात्वमिति कैमुतिकन्यायोपि ध्वनितः। किञ्च, 'अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुत्युक्तेर्भगवदानन्दलेशस्तदतिरिक्तसकलार्थेषु निर्णीतः। तर्हि विषयानन्दनिमित्तमात्रपुत्रार्थादिरूपं तदानन्दाभासरूपं वस्तुतो दुःखात्मकमेव तत्तथे'त्यधिकं तत्रानुभविष्टं न तु वक्षानि'रितिन्यायमपि सूचयन्तः स्वान्तरङ्गस्वाश्रितमभिमुखं विधाय मावोचन्–ब्रूहि त्वमेव वद। अत्र नृत्पिदतोऽस्मदाचार्यवर्यकृपामाधुर्यतस्तत्कालावच्छेदेन तस्य स्वरूपानन्दानुभव इत्यनुमीयते। इतरथा ब्रूहीतिप्रश्नः कथमपि न सङ्घटेतेति पूर्वमेवावोचाम। न च तादृग्भाग्यशालिनस्तस्य तादृगाचार्यचरणकृपाकटाक्षपक्षपातततस्तादृकदनुभवो दुर्घटस्तस्य तादृङ्मुखारविन्दरूपत्वात्तद्रसपूर्णत्वाच्च। अत एवास्मत्प्रभुचरणै'स्तत्सारभूतरासस्त्रीभावपूरितविग्रह' इति सर्वोत्तमे तादृगस्मत्स्वामिनाम गीतम्। एवञ्च भक्तोपदेशपक्ष एव साधीयान्नान्तःस्मरणोपदेशपक्षः। फलप्रकरणे 'ब्रूहि किं करवाणि व' इतिवत्। अन्यथा स्वमनोरोधे यथा 'किं स्यादिति विचारये'ति तत्पत्यवदंस्तथात्रापि तत्पदमेव वदेयुः, यतो विचारो ह्यन्तःकरणधर्म एव, परं तादृगन्वेषणीय एवेति यद्दीतिपदं मापितमस्मत्सौभाग्यसुभगभूषणैः श्रीमदाचार्यचरणैरिति दिक्। अत्रायं निगूढाशयः। पूर्वं देहमननमेव दुर्लभं, तत्रापि दैवाधिदेहस्यातिदुर्लभम्। क्व योगिध्येयो भगवान्नमादिदुर्लभो निर्दोषपूर्णगुणविग्रह आनन्दमात्रकरपादमुखोदरादिः, क्व सकल-

१ क्वचित् स्वपि पाठ

दोषात्मको दुःखैकसदनरूप आनन्दशून्यो जीवः । अत एव सर्वधर्मान्परित्यज्येत्यन्यथाकृतौ श्रीविट्ठलवरोक्तिसुधासारो 'ब्रह्मस्तुत्यादिदुरापचरणरेणुरीश्वरः काहं तुच्छो जीव' इति । ततोपि गोकुलेशस्य यशोदोत्सङ्गलालितस्य श्रीगोकुलैकस्वामिनः पुरुषोत्तमस्य श्रीनन्दात्मजस्यात एव 'पुरुषोत्तमस्तु नन्दगृह एवे'त्यस्मत्प्रभुवाक्पीयूषं, तत्रापि श्रीगोकुलेशस्य परमसौन्दर्यसुन्दरस्य सुतरां वक्ष्योक्तभावेन ततस्तरां तत्तया । अत एव श्रीभागवततत्त्वार्थदीपे 'कृष्णशब्देन परं वस्तूच्यते तदेव कदाचित्परमसौन्दर्यं प्रकटं करिष्यामीतीच्छया प्रादुर्भूतं सच्छ्रीकृष्ण' इति श्रीमदाचार्यमधुरं वचः । 'भक्तिमार्गे फलं कृष्णस्तदास्वादस्सुदुर्लभ' इति च । इति च प्रस्तुतासंभावनायां, कदाचित्कस्यचिद्दैवजीवस्य देहस्य च प्रचुरतरभाग्योदयेन 'यमेवैष वृणुते तेन लभ्य' इति श्रुतितः स्वमुखारविन्दनिःसृतसुधासाररूपाचार्यचरणापारकरुणया तदनुग्रहतस्तदुरीकारेण तादृग्भजनतस्तदुद्रेकदशायां श्रीनन्दराजकुमारसुकुमारनिजचरणकुवलययुगलतरलतरलितपरागसंवलितमनोमधुलिह एव तल्लभ्यमिति निगर्वः । एतेनैतादृग्भजनाधिकारी चैतत्कालावच्छेदेन दुर्लभ इति सूचितम् । तथा चैतन्निरूपणेनैतन्मार्गीयदिदृक्षालक्षणवृतीयपुरुषार्थोपि निरूपितोप्यभूत् । न हि तादृक्स्वरूपानन्दानुभवोत्तरं कस्यचिदपि लोकोत्तरपरमानन्दरूपस्य पुनर्दिदृक्षाऽसंभवः, प्रत्युत क्षणमपि तद्दर्शनमन्तरेण स्वरूपानन्दसुधापानपरैस्ततोन्यत्र स्थातुमशक्यं, किं पुनर्वाच्यं दिदृक्षामृते तथात्वं तथेति । अत्रोदाहरणानि व्रजजनरत्नान्येवानुसन्धेयानि । अत एव फलप्रकरणे 'यर्ह्यम्बुजाक्षे'त्यादि तैरेव गीतम् । 'क्षणं युगशतमिव यासां येन विनाभव'दितिवाक्यतस्तासां तद्वियोगकालीनं क्षणमपि सोढुं तावत्परिमाणकमिति पूर्वोक्तमखिलं कमनीयम् ॥ ३ ॥

एवं तृतीयं तं निरूप्य तुर्यं तथा निरूपयन्ति—अत इति ।

अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः ।
स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

अत्रायमाशयः । व्रजजनवृन्दवाञ्छाकल्पतरुशीलः श्रीगोकुलाधिपतिरदेयस्वस्वरूपानन्ददानक्षमोपि प्रभु'र्मनोरथान्तं श्रुतयो यथा ययु'रितिवाक्यतः श्रुतिश्रुतिरूपभक्तवाङ्मनोगोचरातीतपरमानन्ददायको यतः, अतः कारणाद्धेतोर्वा सर्वात्मनोक्तभावेन शश्वन्निरन्तर्येण गोकुलेश्वरपादयोरनन्यगोकुलस्वामिनः पुरुषोत्तमस्य भक्तिरूपचरणसरसिजयोः स्मरणं भजनं सेवनं, स्मरणं नामानुभवजनकसंस्कारावबोधरूपमिति तु तार्किकाः । भगवन्मते त्वनुभवजन्यमेव स्मरणमिति राद्धान्तः । एतत्स्फुटीकृतं 'सद्यो नष्टस्मृतिर्गोपी'त्यत्र सुबोधिन्यामपविश्लदीकरणे भगवद्दासग्रन्थैरित्यलं पल्लवेन । प्रकारान्तरेणोभिन्नरूपणमपि न त्याज्यम् । भक्तैरिति शेषः । यत्र यशःस्यन्दितया

अपि श्रियो यदभिलाषा, तत्रेतरेषां तथात्वे किं वाच्यम् । साक्षाच्छ्रीगोकुलाधिपतिभजनोपयोगिभगवदीयदेहसम्पादकत्वात्तस्येति भावः । अत एव तच्चरणकमलरजसो दुर्लभत्वं सूचितं फलप्रकरणे तदभिज्ञैः ‘श्रीर्यत्पदाम्बुजरजश्चकमे’ इति । तयोस्तथात्वोक्त्या दीनभावत्वेनैव ते कार्ये इत्यसूचि । यथा भगवतो ब्रह्मत्वमानन्दरूपत्वं च तथा तयोरपीति च । अत एव समासोक्तिरपि । अन्यथा गोकुलेशस्येत्येवोक्तं स्यात् । अत एवा‘नन्दं ब्रह्मणो रूपम्’ ‘आनन्दमात्रकरपादमुखोदरादिः’ ‘आनन्दमयोऽभ्यासा’दिति श्रुतिस्मृतिबादरायणाधिकरणानुशासनैर्भगवतो देहेन्द्रियादि निखिलमानन्दमात्रं, न तु लौकिकशरीरवत्कश्चन भेदोऽपीत्येव निरणायि । द्विवचनोक्त्योभयत्र समदृष्ट्या तत्करणे सूचिते न तु वामदक्षिणयोस्तारतम्यमपि लौकिकयोरिव तयोः परिभावनीयमिति भावः । अनेनापि मर्यादातो भगवन्मार्गोत्कर्षो महानेव ध्वनितः । ननु स्मरणभजने स्वरूपानन्दानुभवानन्तरमेव सम्भवेतां न तु तदर्वागिति चेदत्रैतत्तात्पर्यमवधेयं प्रज्ञाविशेषभावनाचतुरैः । उपक्रमोपसंहारयोः केवलं प्रभुमात्रोद्देशतोऽन्तरङ्गभक्तसहितस्य तथात्वेनोक्तप्रकारेण भजँस्तदुत्कर्षदशायां परमकरुणाकरः प्रभुः प्रसन्नः सन्मदीयं परमसौन्दर्यं पश्यत्विति इच्छया मध्ये भजनानन्दानुभवं तस्य कारयतीत्यध्यवसीयत इति तदनुभवस्यापि सिद्धत्वेनोक्तोभयमपि युक्तमेवेति न पूर्वपक्षिपक्षपातावसर इति । किञ्च, स्मरणं मनोधर्मः, भजनं मानसं कायिकं च । अत एव ‘चेतस्तत्प्रवणं सेवा मानसी सा परा मते’ति मुक्तावल्याम् । सैव प्रेमलक्षणा भक्तिः स्वतन्त्रैव, अत एव ‘भक्त्या सञ्जातया भक्त्ये’त्युक्तिः । शाण्डिल्यैरप्येतदेवासूचि ‘सा परानुरक्तिरीश्वरे’ इति । मानसं च तत्प्रभ्वनुग्रहैकसाध्यं न तु ततोऽन्यसाधनसाध्यं, तत्त्वं तु स्वरूपानन्दानुभवभावात्मकमत एव ‘भावो भावनया सिद्धः साधनं नान्यदिष्यत’ इति श्रीवैश्वानरचरणैः । न च ‘भावनये’ति तृतीयान्तेनैव साधनमतः ‘साधनं नान्यदिष्यते’ इति साधनान्तरनिषेधः, इतरथा साधनमितिपदं न वदेयुरेवेति चेत्, सत्यं, तथापि तस्यापि हेतोरवश्यवाच्यत्वेन तदनुग्रह एव तादृग्वाच्यः । तथा तदनुग्रह एव तदास्तां, कृतं तयेति चेदिष्टापत्तिरत एवास्मत्प्रभुचरणैर्गीतं ‘अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिः’ । इतिस्थितिर्नाम भक्तिमार्गीया मर्यादा । तेन भक्तिमार्गे साधनरूपः फलरूपश्च पुरुषोत्तम एव, न तु मार्गान्तरवत्तयोर्भेद इति निरूपितम् । किञ्च, स्मरणं मनोधर्मस्तेन मनसा स्मरणपूर्वकं भजनं कार्यं, न तु वाचतः कायिकमात्रं तदित्यर्थः । एतेन वाचनिकमपि तन्नामसङ्कीर्तनादिरूपमाक्षिप्तं, यतो वाचः पूर्वरूपं हि मनः, ‘यद्धि मनसा ध्यायति तद्वाचा वदती’त्यादिश्रुतेः । अत्र शिष्टावसरे तत्कथाश्रवणादिकं च तथेत्यपि समुचितमत एव ‘तत्कथाश्रवणादौ चे’त्यपि भाषितम् । ‘सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवे’दित्यसदा-

चार्यचरणवचनरचना भक्तिवर्धिन्याम्। ननु 'यमेवैष वृणुते तेन लभ्य' इतिश्रुतेस्तद्वरणेनैवोक्तभावेन तच्चरणस्मरणादिसम्भवेऽप्युपदेशप्रयासः प्रयास एवेति कस्यचिद्बहिर्मुखमौखर्यं परिहरन्तः स्वमतिं प्रमाणयन्ति इति मे मतिरिति। मे मत्सम्बन्धिनी मदीया, मतिःबुद्धिरिति एवंरूपा उक्तप्रकारे व्यवसायात्मिकेत्यर्थः। अत्रायमभिसन्धिः। यद्यपि पूर्वोक्तश्रुत्यादिना तदनुग्रहसाध्यं, तथापि स्वस्य तादृग्भगवन्मुखारविन्दरूपाधिष्ठातृत्वात्तदभिन्नतया मे मतिरित्युक्तिर्भगवदुक्तिरेव। तथा चोक्तप्रकारेण तत्करणेऽनुग्रहं करिष्यत्येव परमदयालुः श्रीमन्नन्दराजकुमारः श्रीगोकुलजनलोचनचातकसन्तोषकरनवनीरदसुन्दरो, यतो यथा श्रीगोकुल उलूखलबन्धनप्रस्तावे प्रसङ्गतो नारदोक्तमपि निजोक्तमेवेति तदवस्थातोऽपि तत्साधनमन्तरेणापि स्वप्रयत्नेन तदुक्तमात्रेण महदायासेन स्वयमेव तत्र गत्वा नलकूबरमणिग्रीवयोस्तरुरूपयोरन्तरगतयोलूखलतत्सङ्घट्टनेन तौ भूमौ पातयित्वा ततो निःसृतलब्धसमृतदिव्यशरीरयोस्तयोस्तादृक्स्तवननमनप्रदक्षिणादीनङ्गीकृत्वैवानुवृत-वानत एव 'तत्तथा साधयिष्यामि यद्गीतं तन्महात्मने'ति श्रीकृष्णचन्द्रोक्तिः। एवञ्च स्वमुखारविन्दोक्तमखिलं स्वोक्तमेव कुतो न कुर्यादिति मद्विश्वासेन पूर्वोक्तमदुक्तकरणेन भगवदीयैर्निश्चिन्ततया स्थेयमिति भावः। यद्वा, मे मतिरिति भेदबोधकषष्ठ्या स्वमतेः स्वातन्त्र्यमसूचि। अत एवासमासोक्तिरपि। अन्यथा मन्मतिरित्येव वदेयुः। तेनायमाशयः। भारते भीष्मयुद्धे पार्थरक्षार्थं श्रीमद्यदुकुलजलधिसुधाकरः स्वमतिज्ञातामप्यस्त्रायरूपां स्वोक्तिं वितथीकृत्य तत्प्रार्थनाभावेपि स्वत एव तत्स्यन्दनकगिरिशिखरतः सत्वरमुत्तीर्णश्चपलजलद इव चक्रपाणिस्तेन सह युद्धार्थं प्रवृत्तस्तत्प्रतिज्ञामेवापालयत्। यत्र मर्यादायामपि तद्भक्तकृतप्रतिज्ञानिर्वाहकरणं तत्र पुष्टौ निजाज्ञया प्रकटीभूतसाक्षात्तत्स्वस्यैव मुखारविन्दाधिष्ठातृरूपस्य वस्तुतः स्वस्यैव तस्य तत्साधनसम्पत्तौ सत्यां स्वयमेव स्वस्यैवाभिलषितसम्पादनेन स्वोक्तमेव तदुक्तं कथं न करिष्यतीतिभावः। स्वानभिलषितमपि वा पूर्वोक्तहेतोर्मदुक्तमिति करिष्यत्येव। एतेन स्वस्य धर्मिमार्गाभिमानप्रौढत्वमपि ध्वनितम्। अत एव सिद्धवत्कारेणास्मत्प्रभुचरणानां तादृग्व्याहार इत्यलं शङ्कान्वेषणाविलासैः। एतेन तदीयत्वसिद्धिस्तत्सिद्धौ पुष्टिमार्गीयचरमपुरुषार्थोऽपि सिद्ध इत्युक्तं भवति। अत एव 'मोक्षः कृष्णस्य चेद्भव'मित्युक्तलक्षणो मोक्षस्तदभिन्नैरेव भाषित इति संक्षेपः॥ ४॥

यद्यप्यनुचितमेतन्मत्यौचित्यं रचितमेतदस्माभिः।
सन्तुं तमपि प्रभवो मन्तुं मे बहुप्रभवः॥ १॥
मया नामानुसारेण महानेवानयः कृतः।
यत्तत्कृतचतुःश्लोकीव्याख्याने विधृता मतिः॥ २॥

कृपालवस्त एवैतदागःक्षन्तुं ममेश्वरः ।
प्रभवो विट्ठलाधीशा मदीयोयमिति स्वतः ॥ ३ ॥
रमणी रुचिरा टीका भूयान्मधुरभाषिणी ।
करसम्बन्धमात्रेण विद्वदानन्ददायिनी ॥ ४ ॥

इति श्रीमद्वल्लभाचार्यचरणशरणैकधनिना श्रीविट्ठलपदकमलप-
रागपरिमललुब्धमधुना निर्मिता
चतुःश्लोकीव्याख्या पूर्त्ता



श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# चतुःश्लोकी।

## श्रीकृष्णरायभट्टविरचितसर्वार्थबोधिकाव्याख्यासमेता।

श्रीमद्वल्लभपादाब्जयुगलं विगलन्मधु।
नमाम्यहं सदानन्दरूपं सर्वार्थसिद्धिदम्॥ १॥
श्रीविट्ठलपदद्वन्द्वं नत्वा मधुसुपूरितम्।
कुर्वेहं श्रीमदाचार्यकृपापूरितवाङ्मनाः॥ २॥
तत्कृतायाश्चतुःश्लोक्या व्याख्यां सर्वार्थबोधिकाम्॥

अथ श्रीमदाचार्यचरणाः स्वीयानां सकलनिरतिशयसाधनसाध्यफलप्राप्त्यर्थं शुद्ध-पुष्टिमार्गीयातिरिक्तसाधनासाध्यफलं चात्र ज्ञापयितुं सकलवेदवेदान्तप्रतिपाद्यशुद्धपुष्टि-मार्गीयभक्तिस्वरूपं तत्साधनं तत्सेव्यस्वरूपं च वक्तुं स्वसिद्धान्तोक्तसुबोधिन्यणुभाष्या-दिरहस्यं सङ्क्षेपतश्चतुःश्लोक्या आहुः—सर्वदेति।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन॥ १॥

सर्वदेति न कालनियमोत्र। सर्वकाले निरन्तरम्। नो चेद्भजनाभावे स्वासुरावेशः स्यादित्यर्थः। सर्वभावेन व्रजाधिपो भजनीयः। यादृशो भावो भगवता सम्पा-द्यते, कोपि भावः। भावो मनोवृत्तिः। यथा नन्दयशोदादीनां वात्सल्यभावः। तथा-भावेन भजनीयः। अथवा, सख्यभावेन। यद्वा, मुख्यस्वामिनीनामिवासाधारणस्नेह-भावेन। तत्र साधनदशायां यावद्भगवति कोपि भावो नोत्पद्यते तावद्भजने क्रियमाणे राजसेवकवद्भयोपि रक्षणीयोपराधाभावार्थम्[1]। नियमस्तु पतिव्रतया इव सर्वथैव भग-वद्भजने रक्षणीयः। यथा पतिव्रतायाः पतिभजनं विहायान्यद्धर्मादिकं गौणं, तथा भग-वद्भजनं विहायान्यद्धर्मादिकं गौणमेवेति। यद्वा, सर्वभावेन सर्वात्मभावेन सर्वप्रकारेणा-त्मनः स्वस्य जीवस्य भावो मनोवृत्तिर्भगवति। यद्वा, सर्वेषु स्थावरजङ्गमेषु आत्मनो

१ भयमपि रक्षणीयमिति पूर्वं, 'भावो, भितीमीः साधनं भयमित्यपरे तस्य मर्त्यश्चङ्कितुरर्थनात्।

भगवतो भावनाभावः । तेन तदुक्तं 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तम' इतिवाक्यात् । भजनीयः सेवनीयः । सेवा कर्त्तव्या । सेवा च स्वामिनो मनोनुकूला स्ववृत्तिः, तस्या ज्ञानं तु शास्त्रद्वारेति विवेकधैर्यपूर्वकं कायवाङ्मनोभिर्भगवदाश्रयपूर्वकं चित्तोद्वेगप्रतिबन्धभोगादिकं विहाय सेवनं कर्त्तव्यम् । यद्वा, 'श्रवणं कीर्त्तन'मितिवाक्याच्छ्रवणादिरूपा नवधा भक्तिः प्रेमरूपा कार्या । सेव्यस्वरूपमाहुः—व्रजाधिप इति । व्रजस्य निस्साधनस्याधिपः स्वामी नियामकः प्रभुः फलात्मा भक्तानां त्रिविधदुःखदूरीकरणार्थमाविर्भूतः साकारो व्यापक आनन्दमात्रकरपादमुखोदरादिरूपः पूर्णः परब्रह्म 'रसो वै स' इतिश्रुत्या रसात्मा युगलस्वरूपः । सर्वात्मभावेन विरहाकुलितहृदयेन 'यच्च दुःखं यशोदाया' इत्यादिभावनया पूर्वोक्तवात्सल्यादिभावान्वितेन सेव्यः । ननु 'धर्मेण पापमपनुदति' 'धर्मे सर्वं प्रतिष्ठित'मित्यादिश्रुतिभि'र्न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशु'रित्यादिना त्यागेनैवामृतत्वप्राप्तेरुक्तत्वात्कथं भजनमेवोपदिश्यत इत्यपेक्षायामाहुः—स्वस्यायमेवेति । स्वस्य जीवस्यात्मनोऽयमेव भगवद्भजनमेव धर्मः । हीति निश्चये । जीवात्मनो भगवदंशत्वादंशिनः सेवा युक्तैव । तस्मादस्यैव मुख्यधर्मत्वम् । अन्ये धर्मास्तु दैहिकाः । तस्मादन्येषां गौणत्वम् । अत एव 'त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे'रित्यस्य व्याख्याने 'अस्वधर्म'मिति पदच्छेदं कृत्वा भगवच्चरणारविन्दभजनमभिहितम् । तदेव स्वधर्म इति द्योतितम् । अत एव धर्मादिभिर्यद्भवति तद्भजनेनैव भविष्यतीति दैहिकधर्माणां गौणत्वं द्योतितम् । अत एव भगवद्वाक्यं 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि', 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसे'ति । 'यन्न योगेन साङ्ख्येन दानव्रततपोध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपी'तीतरसाधनाप्राप्यत्वं स्वस्योक्तम् । धर्मादिप्राप्यं तु भक्तेरानुषङ्गिकफलत्वमुक्तम् । नान्य इति । क्वापि कुत्रापि कदाचिदप्यन्यो धर्मो नास्ति । अन्यच्च, यं भगवान्स्वीयत्वेनानुगृह्णाति 'यमेवैष वृणुत' इतिश्रुते'र्भक्त्या त्वनन्यये'त्यादिवाक्यैश्च भजनमेव स्वधर्मः । किञ्च; 'त्रैवर्गिके'तिवाक्येन यस्मिन् महाननुग्रहस्तस्मिल्लौकिकाशक्त्याजनार्थं त्रिवर्गविघातं स्वयमेव भगवान्करोति । मोक्षस्तु भक्तानामेव नापेक्षितो 'दीयमानमि'तिवाक्यात् । तथा च भक्तिमार्गे कः पुरुषार्थ इत्यपेक्षायां 'हरेर्दास्यं धर्मोऽर्थो हरिरेव हि । कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद्ध्रुव'मिति श्रीमदस्मत्प्रभुचरणै'रहं हरे तव पादैकमूलदासानुदास' इत्यस्य व्याख्यायां निरूपितमिति जीवमात्रस्य भगवद्भजनमेव स्वधर्मः ॥ १ ॥

ननु सर्वेषां भगवद्भजनमेव स्वधर्मश्चेत्तर्हि सर्वे भगवद्भजनमेव किमिति न कुर्वन्तीत्यपेक्षायामाहुः—एवमिति ।

एवं सदा स्म कर्तव्यं स्वयमेव करिष्यति ।
प्रभुः सर्वसमर्थो हि तेन निश्चिन्ततां व्रजेत् ॥ २ ॥

एवमनेन प्रकारेण स्त्रियः स्वपतिभजनवत्सदा निरन्तरं दैवजीवैः सद्भिर्यत्कर्त्तव्यं तदस्माभिरुक्तम् । दैवजीवानां सर्वा सत्पुरुषाणां सम्बन्धी कर्त्तव्यो यो भगवद्भजनरूपो धर्मः सोस्माभिरुक्तः । स्म इति प्रसिद्धिः । दैवजीवानामेवायं धर्मो, नत्वासुरजीवानाम् । आसुरावेशिनां तु व्यभिचारिणीनामिवान्यधर्मेष्वपि प्रवृत्तिः । दैवजीवानां तु गृहाश्रमिणां श्रौतस्मार्त्तादिकर्मानुष्ठाने वेदरूपभगवदाज्ञया देवतान्तरयजने क्रियमाणे भगवदङ्गत्वेन तद्विभूतित्वेन यागकरणस्योक्तत्वान्नानन्यत्वभङ्ग इति । तथा च 'अनन्याश्चिन्तयन्तो मामि'त्यादियायोगक्षेमनिर्वाहकत्वं भगवत एवेति यद्धर्मादिभिरैहिकामुष्मिकफलादिकं तदनायासेन भगवान्स्वयमेव करिष्यति सम्पादयिष्यति । कुत इत्यपेक्षायामाहुः—प्रभुरिति । सर्वेषां ब्रह्मेन्द्ररुद्रादीनामपि प्रभुः स्वामी नियामकः सर्वसामर्थ्यविशिष्टः । सर्वैर्मिलित्वा यत्कर्त्तव्यं तत्स्वयमेव कर्तुं समर्थः । हीति प्रसिद्धिः, क्षीरोदमथने मन्दरानयने । तेन सर्वप्रकारेण देशकालद्रव्यकर्तृमन्त्रकर्माद्याग्रहं परित्यज्य चतुर्विधपुरुषार्थरूपो भगवानेवेति भगवदाश्रयेण भगवद्भजनमेव कुर्वाणो निश्चिन्ततां व्रजेत् । तेन दैवजीवैर्भगवदाश्रितैः कदापि क्वापि चिन्ता न कार्या । चिन्ताया आसुरधर्मत्वात् । सर्वं भगवानेव करिष्यतीति भावः ॥ २ ॥

ननु लौकिकवैदिकधर्माद्याश्रयपरित्यागेन भगवद्भजने क्रियमाणे कदाचिद्भगवानप्येतन्मनोरथं न कुर्याचदा किं भविष्यतीत्यपेक्षायामाहुः—यदीति ।

यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ।
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥

यदि कदाचिच्छ्रीगोकुलस्यानन्यशरणस्यानन्यगतिकस्य 'तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रह'मित्येवं भगवता श्रीनन्दनन्दनेनाङ्गीकृतस्य निस्साधनस्याधीशोधिपतिः स्वामी रक्षकः फलात्मा पालकश्च, सर्वात्मना कायवाङ्मनसा सर्वात्मभावेन वा हृदये धृतो धारितः । येषां भगवन्तं विहाय दारागारसुतधनादिकं किमपि प्रियं नास्त्येव सर्वस्वरूपेण भगवानेव येषामस्ति, भगवदर्थमेव यैः सर्वं त्यक्तं, येषां प्राणादप्यपि भगवदर्थमेव प्रिया नात्मार्थम् । यदीतिपदादेतादृश्यवस्था दुर्लभेति सूचितम् । भगवद्गुणातिरिक्तसाधनासाध्येति भावः । गोकुलाधीश इतिपदेन यथा श्रीगोकुले भक्तवश्यत्वेन भगवता स्थापितं तथैतस्यापि वशे भूत्वा भगवान् वर्तत इति द्योतितम् । अत एव 'एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता । स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे', 'नायं सुखापो भगवान्देहिनां गोपिकासुतः । ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह'

ति। नन्वेवं भगवति हृदि विद्यमाने गृहस्थानां धनाद्यभावाल्लौकिकवैदिककार्यादिः कथं निर्वाह इत्यपेक्षायामाहुः—तत इति। यदा श्रीभगवानेव सर्वसामर्थ्यविशिष्टो हृदये स्थितस्तदा लौकिकैर्व्यवहारादिकर्मभिर्वैदिकैराश्रमवर्णादिविहितैः कर्मभिर्यागदानादिभिर्वैतस्य किं फलमन्यत्? न किञ्चिदपीत्यर्थः। सर्वस्यैव ब्रह्मलोकपर्यन्तस्यापि फल'स्याब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुने'तिवाक्यान्नश्वरत्वमेवेति न किञ्चिदित्यर्थः। ततस्तस्मादपरं किं फलमिति त्वमेव ब्रूह्यतो येषां सर्वभावेन भगवानेव हृदि स्थितस्तेषामैहिकं पारलौकिकं सर्वं भगवानेव करोति 'तेषामहं समुद्धर्त्ते'तिवाक्यात्। 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामी'ति वाक्याच्च ॥ ३ ॥

नतु तर्हि जीवैः सदा किं कर्त्तव्यमित्यपेक्षायामाहुः—अत इति।

अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः।
स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

यतः कर्मयोगज्ञानादिसाध्यं फलं तद्भक्तेरानुषङ्गिकमतः सर्वात्मना सर्वप्रकारेण शश्वन्निरन्तरं गोकुलेश्वरस्य निस्साधनफलात्मनो भक्तवश्यस्य परब्रह्मणो रसात्मकस्य भगवतः पादयोश्चरणारविन्दयोः स्मरणं भजनं चकाराच्छ्रवणं कीर्त्तनं कदापि न त्याज्यम्। स्नेहाभावेपि मनोधर्मत्वात्स्मरणस्य मुख्यतया स्मरणमेवोक्तम्। अत एव 'तस्माद्भारत सर्वात्मे'त्यस्य व्याख्याने श्रवणकीर्त्तनस्मरणानामेवोक्तौ कथं नवधा भक्तिर्नोक्तेति स्वयमेवाशङ्क्य समाहितम्। पादसेवनादारभ्यात्मनिवेदनपर्यन्तानां षण्णां प्रेमोत्तरभावित्वान्मुख्यतया श्रवणकीर्त्तनस्मरणमेवाभिहितम्। तस्मादहर्निशं स्मरणं कर्त्तव्यं लीलाविशिष्टस्य। रासादिलीला अपि सर्वाश्चिन्तनीया भावाविष्टतया। तथैव भजनं सेवनं कर्त्तव्यं, कदापि न त्याज्यम्। 'कृष्णसेवा सदा कार्ये'तिवाक्ये मानस्या एव फलरूपत्वमुक्तम्। अत एव सेवालक्षणं चेतसो भगवत्प्रवणत्वम्। भगवत्प्रवणचित्तसिद्ध्यर्थं तनुवित्तजाकरणम्। तेन सेवाकरणेन संसारदुःखनिवृत्तिपूर्वकब्रह्मज्ञानावाप्तिरवान्तरफलम्। परमफलं तु यथाधिकारतो भगवदनुग्रहेण नित्यलीलाप्राप्तिरेवेति मे मम मतिरिति।

श्रीमदाचार्यकृपया व्याख्या सर्वार्थबोधिका।
मया कृता चतुःश्लोक्याः कृष्णरायाभिधेन हि ॥ १ ॥
तुष्यतां तेन भगवाञ्छ्रीमदाचार्यवल्लभः।
दासे निस्साधने दीने कृष्णराये दयानिधिः ॥ २ ॥

इति श्रीमद्वल्लभदेवविरचितायाश्चतुःश्लोक्याः कृष्णरायभट्टविरचिता सर्वार्थबोधिका व्याख्या

सम्पूर्णा।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# चतुःश्लोकी ।

## मठेशश्रीनाथभट्टकृतटीकया संवलिता

श्रीवल्लभाभिधान्नौमि तान् स्वशास्त्रार्थतो मुदा ।
उपदिष्टा चतुःश्लोकी स्वीयेभ्यो यैः समासतः ॥ १ ॥

अथ श्रीवल्लभाचार्यचरणाः स्वीयजनानां सुग्रहार्थं समासतः स्वात्मधर्ममनुशिक्षयन्तश्चतुःश्लोक्या सर्वशास्त्रार्थं निरूपयन्ति सर्वदा सर्वभावेन भजनीय इति ।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन ॥ १ ॥

परमेश्वरो देवः सेव्य इति सर्वशास्त्रार्थः । स च केषाञ्चिन्मते निराकारः, केषाञ्चिन्मते साकार उपास्यः । तत्र निराकारस्तु नोपपद्यत एव । तथा हि, किमाकारो देह आत्मा वेति विचारणीयम् । तत्र देहस्तु पाञ्चभौतिकः प्राकृतः स नोपपद्यत एव, 'देहेन्द्रियासुहीनाना'मितिवाक्यात्तदीयानां पार्षदानां यत्र तथात्वं तत्र तन्मूलस्वामिनः परस्य ब्रह्मणः पुरुषोत्तमस्य तथात्वे किमु वाच्यमिति कैमुतिकन्यायः । अत एव आत्मैव परः स तथाभूतो दिव्यः स्वीकार्यः । न च दिव्यपदवाच्यो देह एव तत्राकारः स्वीकार्य इति वाच्यं, देहदेहिविभागाभावात् । 'स यथा सैन्धवघन आभ्यन्तरो बाह्यः कृत्स्नो रसघन, एवं वाऽरेऽयमात्मे' त्यादिश्रुतिभिरप्राकृतत्वाच्च । दिव्यपदेन दिवि भवो दिव्य इतिव्युत्पत्त्याग्रहश्चेत्तदा देवानामिव तद्देहस्य प्राकृतत्वापत्तिः, देवेष्वपञ्चीकृततत्त्वस्यैव दिव्यपदवाच्यत्वस्वीकारात् । यत्तु 'जन्म कर्म च मे दिव्यमि'त्युक्तं तदप्यप्राकृतत्वाभिप्रायेण, दिव्यपदस्य रूढार्थकत्वस्वीकारात् । अत एव 'देहेन्द्रियासुहीनानामि'त्यत्र तन्निषेधः । न च तत्र सामान्योक्त्या निषेध एव देहादेरापद्यत इति वाच्यम्, पुनस्तत्कथनात्, 'वैकुण्ठपुरवासिनां पश्यतां कुर्वतां गानमि'त्यनुपदमेव तथाकारत्वेन निरूपणात्, तेन प्राकृताकारस्य निषेधस्तत्र पर्यवस्यति, न त्वप्राकृताकारस्य । प्राकृतभौतिकादिकाकारत्वं न तथा भगवतीतिबोध्यम् । अत एवोक्तं 'साकारब्रह्मवादैकस्थापको वेदपारग' इति

स्वाचार्येनाम सर्वोत्तमे। तत्रैकशब्दो मुख्यार्थवाची। साकारत्वमुक्त्वा यद्ब्रह्मत्वं निरूपितं, तद्यथा ब्रह्म केवलं सच्चिदानन्दमयं तथा तत्करचरणादीनामपि केवलसच्चिदानन्दमयत्वं ज्ञापितम्। साकारत्वकथनेन पुष्टिमार्गीयफलस्य तत्स्वरूपस्य सर्वेन्द्रियास्वाद्यत्वं, फलानुभवप्रकार उक्तः। नन्वियदवधि सर्वशास्त्रार्थविचारकैरपि परब्रह्मणः साकारत्वनिरूपणात् कथमाचार्याणामेव साकारत्वनिरूपकत्वमिति चेत्, उच्यते। ब्रह्मणोऽलौकिकत्वाच्चक्षुरादीनां लौकिकप्रमाणत्वाच्च चक्षुरादिगम्यत्वं ब्रह्मणि, किन्तु स्वेच्छया संभवतीति श्रुतीनामलौकिकप्रमाणत्वेन श्रुतय एव परब्रह्मणि प्रमाणमिति तत्प्रतिपाद्यमेव ब्रह्म। तास्तु 'स ईक्षाञ्चक्रे' 'तस्मादेकाकी न रमते' 'स द्वितीयमैच्छत्' 'स हैतावानास' इति साकारमेव निरूपयन्ति। गीता च 'सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखमि'त्यादि साकारत्वमेव वदति। ननु निराकारवादिभिरपि निराकारप्रतिपादने 'अस्थूलमनण्वह्रस्वमदीर्घमि'त्यादिश्रुतय एव प्रमाणत्वेनाङ्गीक्रियन्ते कथं न निराकारत्वमिति चेत्, उच्यते। निराकारत्वप्रतिपादका अपि श्रुतयो ब्रह्मणि देवाद्याकारवत् प्राकृताकारत्वमेव प्रतिषेधन्ति, नत्वानन्दमात्रकरपादमुखोदराद्याकारम्। यदि सर्वथा निराकारत्वमेव श्रुमं मतं स्यात्तदा निराकारत्वमुक्त्वापि अग्रे 'स ईक्षाञ्चक्रे' इत्यादिना साकारं न प्रतिपादयेयुः। अत एव व्याससूत्रमपि 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति। अस्याप्यर्थः, प्रकृतमेतावत्त्वं प्राकृतं साकारत्वं, तन्निषेधति निराकारश्रुतिः, न त्वानन्दैकाकारत्वं, तत्र हेतुः 'ततो ब्रवीति च भूय' इति। अस्याप्यर्थः ततोऽग्रे। पुनरपि 'स ईक्षांचक्रे' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादि साकारत्वमेव वदतीति निराकारवादिनां यत्किञ्चिच्छ्रुतिज्ञानवत्त्वेपि सर्वशास्त्रीयोपनिषज्ज्ञानाभावाच्चासु च प्रकारभेदतो ब्रह्मनिरूपणात्, तत्र परस्परविरोधपरिहारपूर्वकविषयव्यवस्थया यत्सिध्यति तादृग् ब्रह्म मन्तव्यम्। निराकारवादिनां सर्वशास्त्रीयोपनिषत्तात्पर्यज्ञानाभावात्स्वबुध्यनुसारेण यत्किञ्चिच्छ्रुतितात्पर्यं स्वसिद्धान्तानुसारं कल्पयित्वा निराकारत्वकथनमिति न तदुक्तं प्रमाणम्। स्वाचार्यैस्तु सर्वशास्त्रोपनिषत्तात्पर्यस्य विरोधपरिहारेणावगमाच्च च साकारस्यैव निरूपणात् सर्वमत्तगत्यैव साकारत्वमुक्तमिति सिद्धं साकारत्वम्।

स च साकारः परमेश्वरः को वा भजनीयः, शिवो विष्णुर्वा व्यूहात्मा वा नारायणो ब्रह्माण्डविग्रहो विश्वरूपादिर्वेत्याकाङ्क्षायामाहुः व्रजाधिप इति। अनेन सर्वतो व्याप्तत्वाद्यनारदशापनेष्वपि भगवद्रूपेषु स्वरूपेषु भजनीयः श्रीकृष्णः पुरुषोत्तमो व्रजाधिप एवोक्तः। 'क्वचित्पाण्डित्यमि'तिश्लोके निर्णीतत्वात्। सोपि नोपास्यः किन्तु भजनीयो, 'भज' सेवायामिति धातोः। उपासनायाः धर्मान्तर्गतत्वेन मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविषयीभावत्वं भजनीयस्यायातीति विभूतिरूपं व्यावर्त्यते। भजनञ्च सेवा, सेवा भक्तिपदस्यार्थः। 'धात्वर्थः सेवा, प्रत्ययार्थः स्नेह'

इति निबन्धोक्तेः। 'सा परानुरक्तिरीश्वरे' इतिभक्तिसूत्रात्। 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति नारदपञ्चरात्रोक्तेश्च। ज्ञानपूर्वकत्वे विहितस्नेहो भक्तिपदवाच्यः, अन्यथा त्वविहितः स्नेह इत्यन्यत्र विस्तरः। सा सेवा तनुवित्तजा कायिक्येव केवला संभूतेति मानसीत्वमपि लक्षणे निवेश्यते। 'प्रत्ययार्थः स्नेह' इत्यान्तरो धर्म उक्तः। तथैतदुक्तं सिद्धान्तमुक्तावल्यां 'चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजा' इति। तथा च देहेन्द्रियप्राणान्तःकरणैर्निवेदितात्मभिः संसेव्य इत्यभिप्रायतः सर्वभावेनेत्युक्तम्। सर्वो यो भावो देहेन्द्रियादीनां यथार्हं तत्तद्विनियोगात्मकस्तेन सेव्यः। सर्वात्मभावेनेति केचित्। सोप्यत्र पुष्टिमार्गीय एव। सर्वोपि आत्मनो भावो, न तु सर्वत्रात्मत्वभावनं, तस्य मर्यादामार्गीयत्वादिति विवेचनीयम्। किञ्च, स सर्वदा भजनीयः, न तु कदाचित् कर्ममार्ग इव, नैमित्तिकदेववद्वा।

ननु वेदादिप्रमाणग्रन्थेषु तु तदुपासनं विहितमभिहितं न त्वेतदित्यप्यविहितमेव भजनमिति चेन्न, सर्वतः पृथक्त्वेनैतत्प्रमातो व्यवस्थापितत्वात्। 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व मामि'तिभगवद्वाक्ये भजनविध्युपपादितत्वाच्च। 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे' इत्यादिना। अत एवात्राप्यावश्यकत्वार्थकतयानुशिष्टानां तव्यतव्यानीयर्प्रत्ययानां मध्ये अनीयर्प्रत्यय उपात्तः। तथा विध्यर्थकश्च। न चैवं विध्यधीनत्वप्रसङ्गः। मर्यादातो व्यतिरेकात् पुष्टिमार्गीयत्वाच्च। अत एवोक्तमेकादशस्कन्धे भागवते भगवद्धर्मनिरूपणप्रसङ्गे 'यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित्। धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे'त्यादि। अयमेव धर्मः॥ १॥

इति मटेराश्रीनाथभट्टकृता चतुःश्लोक्याः प्रथमश्लोकटीका समाप्ता।

---

(१) तव्यतव्यानीयरः (३-१-९६) इतिसूत्रात्। (२) नाधिका स्पष्टा।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# चतुःश्लोकी ।

## श्रीद्वारिकेशविरचितव्याख्यायुता ।

---

श्रीगोवर्धनधराय नमः ।

नत्वा श्रीवल्लभाचार्यान्विट्ठलेशांश्च सद्गुरून् ।
स्वसिद्धान्तचतुःश्लोकीं विवृणोमि यथामति ॥ १ ॥

अथ श्रीमद्वल्लभाचार्यचरणाः कृष्णाश्रयग्रन्थे सपरिकरस्याश्रयस्य निरूपितत्वादाश्रितान् स्वमार्गीयप्रमाणप्रमेयसाधनफलानि निर्देष्टुं तद्बोधकधर्मार्थकाममोक्षाँश्चोपदेष्टुं पूर्वश्लोके धर्मं प्रमाणं च निरूपयन्ति सर्वदेति ।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन ॥ १ ॥

सर्वदेति सर्वस्मिन्काले । सर्वभावेनेति पतिपुत्रादिभावेन । तदुक्तं 'प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मे'ति, 'सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वर' इति, 'येषां च त्वं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवतञ्च' । व्रजाधिपः । व्रजस्य निःसाधनस्यानन्यस्वामिनः अधिपः स्वामी । कर्तव्यं निर्दिशन्ति भजनीय इति । कायवाङ्मनोभिरवश्यं सेवनीयः । यद्वा, सर्वेषामिन्द्रियाणां भावेन 'तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः' इतिरीतिकेन, निरोधलक्षणे वक्ष्यमाणरीतिकेन वा सेव्यः । स्वस्येति 'देवोऽसुरो मनुष्यो वे'तिवाक्यात्, 'को नु राजन्नि'तिवाक्याच्च स्वस्यात्मनो जीवमात्रस्य । स्वस्य कृष्णाश्रितजीवस्यायमेव धर्मः । तदेव भक्तिहंसे 'स्त्रियाः स्वपतिभजनव'दिति । अकर्तव्यं निषेधयन्ति..................

न काले श्रौतकर्तव्यस्य । 'वर्णाश्रमवतां धर्मः श्रुत्यादिषु यथोदितः । तथैव विधिकर्तव्यः' वाक्योक्ते 'स्वधर्ममनुतिष्ठन्वै भारद्वैगुण्यमन्यथा' । अत एव सर्वोत्तमेऽपि 'कर्ममार्गप्रवर्तकः' 'यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः'; 'यज्ञभोक्ता यज्ञकर्ते'त्यादिनामानि । तथाकृतिश्च परम्परया दृश्यते । न चैवं 'सर्वदा'पदबाधः शङ्क्यः, भक्तिमार्गे साधनफलयोरैक्येन तेषामपि सेवा मध्यपातिनीति न बाधः ॥ १ ॥

एवं 'सर्वदा सर्वभावेन भजनीय' इत्यनेन प्रमाणं निरूप्य 'धर्मो ही'त्यनेन धर्मं च निरूप्य प्रमेयमर्थं च निरूपयन्ति एवं सतामिति ।

एवं सतां रम कर्तव्यं स्वयमेव करिष्यति ।
प्रभुः सर्वसमर्थो हि तेन निश्चिन्ततां व्रजेत् ॥ २ ॥

उक्तप्रकारेण भजताम् । रमेति प्रसिद्धिः । भगवद्गीतासु 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मितिभगवद्वाक्यात् । एकादशस्कन्धे च 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि, सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसे'तिभगवद्वाक्यात् । कर्तव्यं सेवोपयुक्तपदार्थसम्पादनं स्वयमेव करिष्यति । स्वकर्तव्यमितिपाठे स्वस्य जीवस्य भगवतो वा यद्यत्कर्तव्यं तत्तद्धरिः स्वयमेव अविकृत एव अप्रार्थित एव करिष्यति, न त्वन्यद्वारा । नापि कल्पवृक्षादिवत् । स हि प्रार्थित एव करोति । अत एव दशमस्कन्धे 'व्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः' । सर्वोत्तमेऽपि 'स्वदासार्थकृताशेषसाधन' इति । प्रार्थादिकभक्तेषु नृसिंहप्रहरादिषु तथाकृतमपि श्रूयते । ननु भगवान् केन प्रकारेण करोतीत्याशङ्कायामाह प्रभुरिति । प्रकर्षेण भवतीति । भगवदीयाभिलषितशय्यासिंहासनादिरूपो भवति । यथा मैथिलश्रुतदेवयोर्गृहयोर्कम्पादिवाहनादिसर्वरूपो भूत्वा विवेश । तदुक्तं 'उभयोराविशद्गेहमुभाभ्यां तदलक्षित' इति । यथा च षोडशसहस्रनायिकाविवाहे श्रीवसुदेवादिर्वीरपात्रिकसर्ववस्तुरूपो भूत्वा सर्वत्र विवाहं कृतवान् । तदुक्तं 'अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः । यथोपयेमे भगवाँस्तावद्रूपधरोऽव्यय' इति । ननु सर्ववेदप्रतिपाद्यो भगवानुच्चावचभावं कथं भजते इत्यत आहुः सर्वसमर्थ इति । सर्वं कर्तुं समर्थः । अथवा । सर्वेषूच्चावचभावेषु समस्तुल्योऽर्थो यस्य । 'सर्वं खल्विदं ब्रह्मेति'श्रुत्या वस्तुतः सर्वस्य भगवत्त्वात् । तथा चोक्तमष्टमस्कन्धे 'उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः । नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः' । हि युक्तोऽयमर्थः । एतेन सिद्धमाहुः तेनेति । भगवतैव संपादितेनार्थेन निश्चिन्ततां भगवदेकतानतां व्रजेत् । निश्चिन्तो भूत्वा सेवां कुर्यात् । अत एव भक्तिवर्द्धिन्यां 'अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः' । नवरत्नप्रकारेऽपि 'भगवद्र्यापि सा न कार्या' । विवेकधैर्याश्रयेऽपि 'मासं सेवेत निर्भयः' । गदाधरदासीनां तथाकृतिश्च श्रूयते । एवं प्रभुपदेनार्थं सर्वसमर्थपदेन प्रमेयं च निरूप्य 'भक्तियोगस्य तत्सर्वमन्तरायतयार्भक' इत्युपक्रम्य, 'यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् । आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः । न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिष'इत्युक्तत्वात् ॥ २ ॥

एवं तु भगवतार्थसंपादने कृते भक्तिमार्गान्तरायः, स्वयं कृते सेवाऽनिर्वाह इति प्राप्ते; भक्तिमार्गीयं साधनं निरूपयन्तो दरिद्रिदसारूपं कार्यं निरूपयन्ति यदि श्रीगोकुलाधीश इति ।

यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ।
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ॥ ३ ॥

एतेन दुर्लभतोच्यते। अत एव दिदृक्षा। श्रिया युक्तो गोकुलाधीश, एतेन कामसम्पत्तिर्निरूपिता। 'कामः स्त्रीषु प्रतिष्ठित' इतिवाक्यात्। 'कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तद्'इतिवाक्यात् साधनसंपत्तिर्निरूपिता। तयोः स्वस्मिन्समावेशमाहुः धृतः सर्वात्मना हृदि। 'एकादशेन्द्रियैः काम' इतिवाक्यात्। अत्राऽऽत्मपदं इन्द्रियपरम्। सर्वपदं एकादशपरम्। सर्वेन्द्रियैः कामसाधनसंयुक्तो गोकुलाधीशो हृदि धृतो हृदये कृतस्तदा लौकिकफलस्य स्वाधीनपतित्वस्य वैदिकफलस्य चित्तशुद्धेश्च 'हृदि स्थितो यच्छति भक्तिपूत' इतिवचनादाप्तत्वेन लौकिकैरुद्यमनादिभिः वैदिकैर्यज्ञादिभिरपि किं? नास्ति परमुत्कृष्टं, यस्मादेतादृशमप्युत्कृष्टमस्ति चेद्ब्रूहि ॥ ३ ॥

एवं श्रीपदेन कामं साधनं च निरूप्य भगवदीयत्वरूपं मोक्षं स्मरणसेवारूपं फलं निरूपयन्ति–अत इति।

अतः सर्वात्मना शश्वद्गोकुलेश्वरपादयोः ।
स्मरणं भजनं चापि न त्याज्यमिति मे मतिः ॥ ४ ॥

यतो हृदये श्रीगोकुलाधीशधारणादन्यसाधनं नास्ति, अतः परं सर्वात्मना देहेन्द्रियप्राणान्तःकरणैः शश्वन्निरन्तरं, गवां कुलस्य, गवां बन्धूनां गोपगोपीनां, गोकुलग्रामस्य वा ईश्वरस्य नियामकस्य पादयोर्भगवदीयदेहसंपादकयोः स्मरणमाध्यानं भजनं सेवनं, चकारेण श्रवणं कीर्तनं च, न त्याज्यम्। सादरं सर्वथा विधेयम्। अपिः संभावनायाम्। त्यागसंभावनैव नास्ति। एवं भगवदीयत्वरूपमोक्षं सेवारूपफलं चेति। स्वयं स्वामिप्रामाण्येन ग्रन्थं समापयन्ति–इति मे मतिरिति। मे श्रीकृष्णवल्लभस्य इति एवं प्रकारिका मतिः ॥ ४ ॥

एवं भगवदीयानां धर्मार्थेच्छामृतप्रदा ।
व्याख्यातेयं चतुःश्लोकी प्रमाणादिप्रदर्शिका ॥ १ ॥
तेन श्रीवल्लभाचार्याःस्वदासे मयि यंत्रजे ।
प्रसीदन्तु स्वकृपया सान्वयाः सहसेवकाः ॥ २ ॥

इति श्रीवल्लभाचार्यचरणैकतानश्रीमथुरानाथात्मजद्वारिकेशविरचिता
चतुःश्लोकीव्याख्यान्वयबोधिनी
समाप्ता।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# चतुःश्लोकी ।

## श्रीमद्व्रजराजचरणविरचितटीकानुवादसहित ।

श्रीमद्रासरसामृताब्धिविलसद्गोपीशपादाम्बुज-
द्वन्द्वस्नेहविलासदानकरणे श्रीपारिजातोपमः ।
स्फूर्जद्गोपकदम्बिनीविलसितप्रेमाख्यवर्त्माकरो
भूयान्मे हृदि सन्ततं दुरितहृच्छ्रीविट्ठलो वाक्पतिः ॥ १ ॥

( વસંતતિલકા )

શ્રીરાસના રસમયામૃતના સમુદ્રે
શોભાયમાન પ્રભુના ચરણાબ્જ યુગ્મે;
સેવાવિલાસસુખના શુભ દાનકાજે
શ્રીપારિજાતસમ આપ સદા બિરાજે; (૧)

શોભે જ પ્રેમ બહુ ગોપકદમ્બિનીમાં
તે પ્રેમમાર્ગકર વલ્લભપુત્રરૂપે,
જે વિઠ્ઠલેશ અતિપાપ હરે સદા જો
તે થાઓ આ મમ હૃદે જ સદા બિરાજે. (૨)

આપણા ધર્મ, અર્થ, કામ અને મોક્ષ એ ચારે પુરુષાર્થ ભગવાન્ છે. આ સિદ્ધાન્ત આપણને યથાર્થ સમજાવવા શ્રીમદાચાર્યચરણે પરમકૃપાથી ચાર શ્લોક રચ્યા. તેમાં પ્રથમ શ્લોકથી ધર્મનું સ્વરૂપ દર્શાવે છે.

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन ॥ १ ॥

अन्वयार्थ-(सर्वभावेन) સર્વાત્મભાવથી (सर्वदा) હમેશાં (व्रजाधिपः) વ્રજના અધિપતિ શ્રીકૃષ્ણચન્દ્ર (भजनीयः) સેવવા. (स्वस्य) આપણો (अयमेव) આ જ (धर्मः) ધર્મ

(હિ) નિશ્ચય છે. (क्वापि) કોઈ પણ સ્થલમાં (कदाचन) કોઈ પણ કાલમાં (अन्यः) ઉપર કહ્યો તે શિવાય બીજો (न) નથી.

ભાવાર્થ–સર્વાત્મભાવથી હંમેશાં વ્રજના અધિપતિ શ્રીકૃષ્ણચન્દ્રને સેવવા. ભક્તનો આ જ નિશ્ચિત ધર્મ છે. કોઇ પણ સ્થલમાં કોઇ પણ કાલમાં સેવા વિના અન્ય ધર્મ જ નથી.

## ભગવદ્દાસ્ય એ જ ધર્મ છે.

**વિવેચન**–જીવ ભગવાનનો સહજ દાસ છે, આ જ વાત શ્રુતિ કહી રહી છે. તેથી જ શ્રીપ્રભુચરણે પણ વિદ્વન્મંડનમાં જીવના સહજ સ્વામી શ્રીગોકુલપતિના ચરણકમલદાસ્યને જ જીવના સહજ ધર્મ તરીકેનો નિર્ણય કર્યો.

## ભગવદ્દાસ્ય સદા કરવું.

ભગવાનની સેવામાં કાલનો નિયમ નથી. ધર્મશાસ્ત્ર વિગેરેમાં ધર્મકાર્ય કરવાનો સમય દર્શાવ્યો, કારણ કે તે ધર્મથી થતું ફલ કાલને અધીન છે. નાશયુક્ત છે. ભગવદ્દાસ્ય તેવો ધર્મ નથી; એટલું જ નહિ પણ તે સેવાનું ફલ પણ કાલાધીન નથી. પણ અક્ષય્ય છે. જો ક્ષણ વાર પણ ભગવત્સેવા ત્યજી બીજો ધર્મ કરીએ તો આપણી અનન્યતાનો ભંગ જ થાય. આપણાથી આપણા પતિને છોડીને બીજાની સેવા થાય જ કેમ ! પતિવ્રતાનું ક્ષણ પણ મન અન્યત્ર ચલે તો પતિવ્રતાવ્રતનો ભંગ જ થાય. આ બન્ને તાત્પર્ય 'सर्वदा' પદથી નિકળે છે.

## સર્વાત્મભાવથી ભગવત્સેવન કરવું.

**સર્વાત્મભાવ એટલે શું ?**—(૧) સર્વ પતિપુત્રાદિભાવથી ભગવાનને સેવવા. શ્રીઆચાર્યચરણે પણ આજ્ઞા કરી કે 'તેવી ભાવનાથી પ્રભુસેવા કરવી,' (૨) સ્ત્રીભાવથી પણ ભગવાનને સેવવા. અહીં સર્વભાવનો સમાવેશ એકલા સ્ત્રીભાવમાં થાય છે. કારણ કે 'સર્વ' શબ્દ ક્વચિત્ એકત્વનો બોધક પણ લેવાય છે. તેથી જ શ્રીગોપીજનોએ 'સર્વ વિષયોને ત્યજીને હે ભગવન્ અમે આપના ચરણમાં આવ્યા છીએ' અહીં સર્વ શબ્દનો એક એવો અર્થ કર્યો અને સર્વ વિષયોના સ્થાન પ્રભુને ગણ્યા. ભગવાનમાં જે સ્ત્રીભાવ છે તે જ યોજક છે. શ્રીસ્વામિનીજીએ કરેલા સ્વશૃંગારાદિપ્રકારયુક્ત ભગવાનમાં જે સ્ત્રીભાવ છે તે જ આપણને યોજનાર છે; અર્થાત્ આપણામાં સ્ત્રીભાવનો[1] ઉત્પાદક છે; (ભગવાનમાં ગૂઢ રીતિથી સ્ત્રીભાવ રહેલો છે તે વાત સૌન્દર્યપદ્યની ટીકામાં દર્શાવેલી છે) શ્રીગુસાંઇજીએ પણ શૃંગારરસમંડનમાં આ જ વાત દર્શાવી છે. 'જો[2] કે આપ યુવતીવેષમાં છો છતાં આપનો કટાક્ષ અમર્યાદ છે. કામબાણની લીલાને કરતો એ અમર્યાદ કટાક્ષ વિવેક લજ્જા અને ધૈર્યને

૧ સ્પષ્ટીકરણ–આપણે ભગવાનને સ્ત્રીભાવથી ભજવા એ પ્રસંગ આવે છે. હવે એ સ્ત્રીભાવ આપણામાં શી રીતે ઉદ્ભવે ? એના જવાબમાં પ્રભુમાં બિરાજેલો સ્ત્રીભાવ એજ આપણામાં સ્ત્રીભાવનો ઉત્પાદક છે. આ વાતમાં 'સ્ત્રીભાવયુક્ત પ્રભુના દર્શનથી આપણને સ્ત્રીભાવ થાય' આ શ્રીઆચાર્યચરણનું વચન પ્રમાણ આપ્યું. પ્રભુમાં સ્ત્રીભાવ છે. આ વાત સિદ્ધ કરવા શૃંગારરસમંડનાદિનાં વાક્યોને પ્રમાણ તરીકે આપ્યાં છે.

(૨) यदपि युवतिवेषस्यायमप्राकृतमपाङ्गः । विहितमदनलीलो हन्ति विवेकधैर्यमानान्, ૧૦–૧૦

सर्वदुःखहर्त्रापि येऽन्यविषयेभ्यो विमोच्य स्वस्वरूपलिप्सवो न कृतास्तेषां मन्दभाग्यानामर्थे कथं निरूपणीयमिति भावः । यद्यपि तेषां मार्गान्तरेण यत्किञ्चिदपि फलं जायताम्, तथाप्येतदतिरिक्तफलेषु सामान्यबुद्धिरेव श्रीमदाचार्यचरणानामत एव भवसागरे मग्ना इत्यूचिरेतराम् । श्रीमद्भागवतेपि 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति ॥ ११ ॥

भावनासाधनीभूतां साधनतापन्ननिरोधपदवाच्यां भावनामाहुः ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १२ ॥**

रूपरसादितन्मात्रासु पर्यवसन्नत्वाद् दुष्टानां चक्षूरसनादिज्ञानेन्द्रियाणां निषिद्धनानाक्रियाजनकानां कर्मेन्द्रियाणां तत्तद्दोषनिरसनपूर्वकं तत्तत्फलसिद्ध्यै सदानन्दस्य सर्वान् रूपादीन् पदार्थान् तत्तदिन्द्रिययोग्यान् योजयेदित्यर्थः । नन्वनवरतमन्तरङ्गभक्तैर्भज्यमानस्य भगवतस्तत्र तत्रोपयुक्ताः सर्वे पदार्थाः कथं योजयितुं शक्या इत्याशङ्कायामाहुः भूम्न इति । ईशस्य सर्वसमर्थस्य भूम्नः बहुत्वात् । तथा च युगपदनेकेषु स्थलेषु मायोद्घाटनेनाविर्भवति भगवति सर्वमुपपद्यत इति भावः । योजनप्रकारस्त्वग्रे वक्ष्यते ॥ १२ ॥

ननु मनोमात्रयोजनेन निःप्रत्यूहं ब्रह्मरूपं रूपरसादिविषयवैराग्यजनकमचिदितदुःखं विहाय कथमेवंविधप्रकारे प्रवृत्तिर्जायेतेतिशङ्कानिरासाय ज्ञानमार्गे यत्परमफलं तदत्र गुणवर्णकस्य निविडाच्छन्ननौकया गच्छतोऽनाशास्यमानशीतसदागतिस्पर्श इव मध्येमार्गमिदमवान्तरं फलमित्याहुः ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १३ ॥**

**संसारस्य विरहो** लौकिकविषयवियोगजन्यं दुःखं **क्लेशो** रोगादिजन्यो द्वावपि न भवेतामित्यर्थः । न हि क्षारं कूपपानीयं पिबतः पामरस्यापि पानकपानसम्पत्तौ तादृशकूपपानीयविरहो दृष्टः श्रुतो वा । एवं प्रकृतेप्यवसानविरसान् नश्वररूपादीन् भुञ्जानस्य स्वरूपानन्दानुभवसम्पत्तौ न संसारविरह इति भावः । **हरिवदिति** । स्वरूपानन्दो यो भगवतानुभूयते स एवानेनेति भावः ॥ १३ ॥

ननु गुणमात्रनिष्ठया कुत एवं करोतीत्याशङ्कायामाहुः ।

**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।**
**बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १४ ॥**

यदि गुणमात्रनिष्ठयैवं न कुर्यात्तदा क्रूरता मता । दयालुत्वं न स्यात् । तथा च

निसर्गदयालु भगवत्स्वरूपं कथमन्यथा भवेदित्यन्यथा क्रूरत्वेत्यस्यार्थः । इत्थं च सर्वतो बलवती ह्यन्यथानुपपत्तिरितियुक्तिरुक्तेति भावः । एवं ज्ञानमार्गोपास्येऽव्यक्ते मनोयोजनेन यत्फलं जायते तदत्र गुणमात्रे मनोयोजनेनेति ध्येयम् । निःप्रत्यूहमित्यत्राहुः बाधेति । देशकालादिसापेक्षसाधनसाध्यफले हि कालादिकृतप्रतिबन्धशङ्का स्यादयं तु भगवदनुग्रहातिरिक्तसर्वसाधनरहित इति न तच्छङ्केति भावः । ब्रह्मेत्यत्राहुः तदिति । तदध्यासोऽक्षरात्मता । यद्यपि नेयमिष्टा तथापि गुणगानेन संसारावेशनाशे सति स्वस्वरूपस्फूर्तिरनाशास्यमानापि निसर्गादेव जायते, यतो जीवस्य मूलमक्षर ब्रह्मेति ध्येयम् । तथा चोक्तं सिद्धान्तमुक्तावल्या विवृतौ ब्रह्मबोधनमित्यस्य व्याख्यायां तथापि वस्तुस्वभावाद्भवत इति ॥ १४ ॥

रूपेत्यत्राहुः ।

**भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।**
**गुणैर्हरिसुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥**

ज्ञानमार्गे 'मात्रास्पर्शास्त्वि'तिवाक्येन यत्नपूर्वकमनित्यत्वादिभावनेन बलान्निर्वेदः, अतोऽस्थिरश्च भवति, प्रकृते तु तन्मनस्कत्वादिसिद्ध्यानवरतमानन्दमात्रकरपादमुखोदरत्वादिभगवद्धर्मस्फूर्त्या सर्वेषु मनश्चक्षुरादीनां रागात् प्रवृत्तेः कदर्थ्येषु विषयेषु जायमानो विरागः स्थिर एव भवतीत्यर्थः । अविदितेत्यत्राहुः गुणैरिति । सर्वदुःखहर्तुर्यत्सुखं तस्य स्पर्शादीयत्सम्बन्धमात्रादित्यर्थः । तथा च सर्वांशेन तदनुभवस्य भगवतो निजातीयवपुःसम्पादनेन करिष्यमाणत्वादत्र स्पर्शमात्रमेवोक्तमिति ध्येयम् ॥ १५ ॥

उपसहरन्ति ।

**एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षो हरिवर्णने ।**
**अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥**

उत्कर्षो गुणेति पाठे ज्ञानमार्गाद्गुणवर्णने उत्कर्षोऽस्ति एव ज्ञात्वेत्यन्वयः । अमत्सरैरिति । एतन्मार्गीयभगवद्भक्तेषु द्वेषरहितैस्तेषामनवरतमेतद्भावावेशेन भावात्मकभगवदात्मकत्वात् स द्वेषो भगवत्पर्यवसायी भवतीत्याशयः । अलुब्धैरिति । स्वस्यैवंविधभगवदीयत्वख्यापनेनोदरदरीमपूरयद्भिरित्यर्थः ॥ १६ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमिन्द्रिययोजनप्रकारमाहुः ।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।**
**दर्शनं स्पर्शनं स्पष्टं तथा कृतिगती सदा ॥ १७ ॥**
**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ।**
**पायोर्मलांशत्यागेन शेषभागं तनौ नयेत् ॥ १८ ॥**

१ गान्धकृष्णगुणवर्णनेति पाठः । २ स्पष्टमित्यपि पाठः । ३ शेषभागमित्यपि पाठः ।

मुख्यं तु विजातीयवपुःसाध्यमिति तदसम्भवात् सङ्कल्पादपि दर्शनादि सर्वं भावयेदित्यर्थः । अत्र 'क्षण्वतां फल'मित्येतद्व्याख्यायां 'भगवता सह संलापो दर्शनं मिलितस्य च । आश्लेषः सेवनं चापि स्पर्शश्चापि तथाविधः ॥ अधरामृतपानं च भोगो रोमोद्गमस्तथा । तत्कूजितानां श्रवणमाघ्राणं चापि सर्वतः ॥ तदन्तिकगतिर्नित्यमेवं तद्भावनं सदे'त्येतत्सर्वमनुसन्धेयम् । **स्पर्शनं स्पष्टमिति** पाठे अत्रैव लोके प्रकटमाधिदैविकमुत्तमं 'कामाख्यं सुखमुत्कृष्टं कृष्णो भुंक्ते न चापर' इत्यनुसन्धेयम् । **पुत्र** इति । सङ्कल्पाजातत्वात् सङ्कल्पस्य पुत्रे कामे इत्यर्थः । अत एव 'भगवानपी'तिश्लोकविवरणे 'कामपितामहं मन उत्पादितवा'नित्यनेन कामपितामहत्वमुक्तं मनस इति ध्येयम् । नन्वत्र काम आपामरप्रसिद्धो ग्राह्योऽन्यो वेत्याशङ्कायामाहुः **कृष्ण** इति । अलौकिक इत्यर्थः । उक्तं 'चात्मारामोऽप्यरीरम'दित्येतद्व्याख्यायां 'क्रिया सर्वापि सैवात्र परं कामो न विद्यत' इति श्रीमदाचार्यचरणैरिति ध्येयम् । **रतिरिति** । अलौकिकं तमुद्भाव्य स्पर्शविशेषो भावनीय इत्यर्थः । नन्विन्द्रियेषु पायोरपि सत्त्वात् तस्य का गतिरित्याशङ्कायामाहुः **पायोरिति** । मलांशत्यागमात्रैकप्रयोजनकस्योपरोधजदुःखनिवर्तकस्य तुच्छजनकस्यास्य **शेषभावं** गौणत्वं प्रापयेदित्यर्थः । तथा चाकिञ्चित्करत्वाच्छेषमेवेति भावः । **वायुमिति** पाठे अजामरण्यं नयतीतिवत् स्पष्ट एवान्वयः ॥ १७ ॥ १८ ॥

तर्हि स्त्रीपुमवयवविशेषयोः का गतिरित्याशङ्कायामाहुः ।

**यस्य वा भगवत्कार्ये यदा स्पष्टं न दृश्यते ।**

**तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥**

**विनिग्रह**स्तिरस्कारोऽवगणनेति यावत् । तथा च यथास्यादीनि मलानि च तथानुपयोगात् पुमवयवविशेष इति तस्य निग्रह इति भावः । वेति विकल्पादेकस्यास्तूपयोग इति ध्येयम् ॥ १९ ॥

एवं निरोधमुक्त्वा स्वानुपदिशन्ति ।

**नातः परतरो मन्त्रो नातः परतरः स्तवः ।**

**नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥**

**मन्त्रो** मननीयो नितरां गोपनीयश्च । **स्तवो** भगवत्प्रसाददहेतुः । **विद्या** काम्यमानयावदर्थसाधनम् । **तीर्थं** प्रतिबन्धकीभूतदुरितनिचयनिरसनपूर्वकं तत्प्राप्तिसम्पादकभागधेयोद्बोधकमित्यर्थः ॥ २० ॥

**इतिश्रीविट्ठलेश्वरप्रभुचरणात्मजश्रीघनश्यामतनयश्रीगोपेशगोस्वामिविरचिता निरोधलक्षणविवृतिः समाप्ता ॥**

---

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# निरोधलक्षणम् ।

## श्रीविट्ठलेशात्मजश्रीवल्लभकृतनिरोधलक्षणविवृतिसमेतम् ।

देयास्तु प्रार्थितं मह्यमनुरूपफलद्वयम् ।
व्यासेन च समासेन फलत्रययुता स्वयम् ॥ १ ॥

निरोधलक्षणमिति ग्रन्थनाम । निरोधस्य लक्षणं लक्ष्यते अनेन तादृशमिति करणव्युत्पत्तिरत्र । तथा च लक्षणनिरूपणेन निरोधज्ञापकमित्यर्थः । तत्र लक्षणं द्विविधम्, स्वरूपलक्षणं कार्यलक्षणं चेति । तत्र स्वरूपलक्षणं यथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति । कार्यलक्षणं यथा 'जन्माद्यस्य यत' इति । तत्र स्वरूपलक्षणं दशमस्कन्धे बहुधा निरूपितमिति कार्यलक्षणान्यत्रोच्यन्ते यच्चेत्यादिना ।

**यच्च दुःखं यशोदाया नन्दादीनां च गोकुले ।**
**गोपिकानां तु यद् दुःखं तद् दुःखं स्यान्मम क्वचित् ॥ १ ॥**

**नन्दादीनां** चेत्यत्रादिपदेन उपनन्दादयः । चकारेण अन्तरङ्गगोपाः । तथा च **यशोदाया नन्दस्य** उपनन्दादीनामन्तरङ्गगोपानां च यद्दुःखं येन पूर्वोक्तत्रयाणां दिवा वनगमने भगवच्चिन्तनमन्तरङ्गगोपानां च रात्रौ गुणगानं तद्दुःखम् । चकारात् पूर्वोक्तानां चतुर्णां सुखं लीलानुभवरूपं निरोधलक्षणं भगवदासक्तिकार्यमित्यर्थः । गोपकृतगुणगानस्यासक्तिकार्यत्वमष्टादशाध्यायकारिकासु स्फुटम् । अन्येषु लक्षणेष्वन्यस्यानधिकारात् स्वपरत्वेनैव तानि निरूपयन्ति **गोपिकानां** त्विति । 'निन्युर्दुःखेन वासरा'नित्यत्रोक्तं दुःखं च निरोधकार्यम् । इदं तु क्वचिन्मम स्यात्, अन्यस्य तु सर्वथा दुर्लभमेवेत्यर्थः । अन्यव्यावृत्तये तुशब्दः । चकारपक्षे इदमपि दुःखं निरोधकार्यमिति समुच्चयः ॥ १ ॥

सुखरूपं निरोधलक्षणमाहुः गोकुले इति ।

**गोकुले गोपिकानां च सर्वेषां व्रजवासिनाम् ।**
**यत्सुखं समभूत् तन्मे भगवान् किं विधास्यति ॥ २ ॥**

**गोपिकानां** चकारेण अन्तर्गृहगतानां यत्सुखं पूर्वदलानुभवरूपम् । सर्वव्रजवासिपदेन अन्तरङ्गा अप्युच्यन्ते । पुंल्लिङ्गपदं परोक्षवादाय । तेषां च यत्सुखमनन्त-

रङ्गलीलादर्शनरूपं समभूत् तदपि निरोधलक्षणम् । अन्यस्यायोग्यमतो भगवान् मे किं विधास्यतीत्याशंसेत्यर्थः । अत एव अष्टकान्ते विठ्ठलपदाभिधेये मय्येवेत्येवकार उक्तः ॥२॥

आत्यन्तिकविरहानुभवरूपं मुख्यं लक्षणमाहुः **उद्धवागमने**ति ।

**उद्धवागमने जात उत्सवः सुमहान् यथा ।**
**वृन्दावने गोकुले वा तथा मे मनसि क्वचित् ॥ ३ ॥**

**उत्सव** आत्यन्तिकविरहानुभवरूपः । एतस्य मुख्यफलत्वसिद्धान्तात् **सुमहा**-नित्युक्तम् । अयमुत्सवो गोपिकानां नन्दादीनां च भ्रमरगीतप्रसङ्गे अध्यायद्वयेनोक्त इति **वृन्दावने गोकुले** चेत्युक्तम् । अत्र अन्यस्यानधिकार इति **मे मनसि** स्यादिति उक्तम् । दुर्लभत्वख्यापनाय **क्वचि**दिति । एतेषु स्वाशंसाकथनेन पूर्वं 'यच्च' इत्यर्धेनोक्ते दुःखसुखे अन्येनापि भक्तेन मयि स्यादिति आशास्य इति सूचितम् । तथा च यशोदाया नन्दस्योप-नन्दादीनामन्तरङ्गगोपानां च दुःखसुखानि निरोधलक्षणानि भक्तेन स्वपरत्वेनाशास्यानि । गोपिकानां दुःखसुखे, अन्तरङ्गगोपीनां अन्तर्गृहगतानामन्तरङ्गदासीनां सुखम्, सर्वेषा-मात्यन्तिकविरहानुभवश्च । इमानि निरोधलक्षणानि स्वरूपतो ज्ञेयानि, न तु स्वपरत्वे-नाशास्यानि, तत्रानधिकारादित्युक्तम् । भगवान् कृपया सम्पादयेच्चेदस्तु, स्वयं नाशास्या-नीत्यर्थः ॥ ३ ॥

स्वपरत्वेन आशास्यस्य पूर्वोक्तस्यापि फलस्य दुर्लभत्वेन चिरकालसाध्यत्वात् तत्सिद्धिपर्यन्तं क्लेशाभावायावान्तरं निरोधफलमाहुः **महता**मिति ।

**महतां कृपया यावद्भगवान् दयिष्यति ।**
**तावदानन्दसन्दोहः कीर्त्यमानः सुखाय हि ॥ ४ ॥**

**महता**मत्रत्यगुरूणां स्वामिनीनां **कृपया भगवान् याव**द्दयिष्यति पूर्वश्लोकार्थोक्तं फलं सम्पादयिष्यति **तावत् कीर्त्यमान आनन्दसन्दोहो** भगवान् **सुखाय** भवति । गुणगानजं सुखं निरोधस्यावान्तरफलमित्यर्थः ॥ ४ ॥

मुख्यफलस्य स्वामिनीकृपासाध्यत्वमुक्त्वा अवान्तरफलमप्यत्र तत्कृपासाध्यमेव ज्ञेयमित्याहुः **महता**मिति ।

**महतां कृपया यद्वत्कीर्तनं सुखदं सदा ।**
**न तथा लौकिकानां तु स्निग्धभोजनरूक्षवत् ॥ ५ ॥**

**लौकिकानां** लोके प्रसिद्धानां नारदशुकादीनां **कृपया** जातं कीर्तनम्, तथा स्वामिनीकृपया सञ्जातकीर्तनप्रकारकसुखदं नेत्यर्थः । तत्र हेतुं दृष्टान्तेन स्पष्टयन्ति **स्निग्धे**-ति । स्निग्धभोजनं रूक्षभोजनं च तद्वदित्यर्थः । स्वामिनीकृपया अन्तर्भगवत्प्राकट्यात्

१ श्रीविठ्ठलेश्वरप्रभुचरणप्रकटितस्वामिन्यष्टकोपन्यासोऽत्र ।

कीर्तनस्य स्निग्धभोजनतुल्यत्वम् । अन्यत्र तु मानस्या मूर्तेः कल्पितत्वेन वस्तुतः प्राकट्याभावात् कीर्तनस्य रूक्षभोजनतुल्यत्वम् । महतामित्यस्य कीर्त्यमानेनाप्यन्वयः । तत्कृतं कीर्तनं न त्वन्येनोपनिनद्धमित्यर्थः । मुख्यफलप्राप्तिपर्यन्तं गुणगानं कर्तव्यमित्युक्तम् ॥५॥

तत्र कर्मणापि तावत्पर्यन्तं क्रममुक्तिप्रकारेण स्वर्गादिसुखावाप्तिसिद्धौ किमर्थं गुणगानाग्रह इत्याशङ्क्याहुः गुणगाने इति ।

**गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते ।**
**यथा तथा शुकादीनां नैवात्मनि कुतोऽन्यतः ॥ ६ ॥**

गोविन्दस्य गुणगाने यत्प्रकारिका सुखावाप्तिस्तत्प्रकारिका सुखावाप्तिः शुकादीनां सिद्धज्ञानानां तत्रापि आत्मनि आत्मविचारदशायामपि न जायते, तर्हि अन्यतः कर्मभ्यः कुत० स्यादित्यर्थः । अत एव 'परिनिष्ठितोऽपि नैर्गुण्य' इत्यादि वाक्यानि ॥ ६ ॥

तत्कृतकीर्तने विशेषमाहुः क्लिश्यमानानितिद्वयेन ।

**क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ।**
**तदा सर्वं सदानन्दं हृदिस्थं निर्गतं बहिः ॥ ७ ॥**
**सदानन्दमयस्यापि कृपानन्दः सुदुर्लभः ।**
**हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥**

सदानन्दं सद्रूप आनन्दो यस्मिन् तादृश स्वरूप क्लिश्यमानान् जनान् दृष्ट्वा यदा कृपायुक्तो भवेत् तदा बहिर्निर्गत भवति, स कृपानन्दस्तु सुदुर्लभः । कर्मणा ज्ञानेन वा न भवति, किन्तु क्लेशेनैव भवति, अतस्तथेत्यर्थ० । सदानन्दस्य बहिर्निर्गमनं निरूपयन्ति हृद्गत इति । तत्तद्हृदिस्थो भगवान् स्वगुणान् अन्योऽन्य वर्णितान् श्रुत्वा पूर्णो भवति । इद द्वात्रिंशाध्यायकारिकाया स्फुटम् । स्वय पूर्णः सन् जनान् प्लावयते, स्वरूपानन्दे निमग्नान् करोति, तेषामन्तर्बहिः स्वरूपानन्द प्रकटीकरोति । इद सदानन्दस्य बहिर्निर्गमनमित्यर्थः ॥ ७,८ ॥

सार्वैरत्तुमुपसंहरन्ति तस्मादिति ।

**तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ।**
**सदानन्दपरैर्गेयाः सच्चिदानन्दता ततः ॥ ९ ॥**

सर्वं कर्मज्ञानादिग्राम परित्यज्य निरुद्धैर्भक्तैः सह सदानन्दपरैः कर्तृभिः गुणा गेयाः । एतस्य फलस्य अवान्तरत्व साधयन्ति सच्चिदानन्दतेति । ततो गुणगानात् सच्चिदानन्दता भवति, अर्थोत्तिरोधानात्या परमफले स्वरूपयोग्यता भवतीत्यर्थ० । भवन इति पाठे गुणगानस्वभावादेव भवतीत्यर्थ ॥ ९ ॥

ननु यैः सह गुणा गेयास्ते निरुद्धाः कथं ज्ञेया इत्याशङ्क्य तदभिज्ञापकं कथयामीत्याहुः अहमिति ।

**अहं निरुद्धो रोधेन निरोधपदवीं गतः ।**
**निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ १० ॥**

**रोधेन** निरोधपूर्वावस्थापन्नेन भावविशेषेण **अहं निरुद्धः** निरोधस्य **पदवीं** मार्गं पूर्वोक्तमुख्यफलपर्यन्तं **गतः** प्राप्तः । अतो गोपिकानां स्थित्यादिनोक्तफले इव अभिज्ञापककथने मम न प्रयोजनम्, किन्तु अन्यार्थं कथयामीत्याशयेन कश्चित्सेवकमभिमुखीकृत्याहुः **ते** इति । तत्र **निरुद्धानां** सम्बन्धि यो रोधस्तदर्थं त्वयि तादृग्भावसिद्ध्यर्थमित्यर्थः । **निरोधं वर्णयामि** अभिज्ञापककथनेन कथयामीत्यर्थः ॥ १० ॥

विविच्य कथनाय व्यावर्त्यानामपि अभिज्ञापकमाहुः ।

**हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।**
**ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ ११ ॥**

सर्वदुःखहर्त्रापि **ये विनिर्मुक्तास्ते भवसागरे मग्ना** इति व्यावर्त्यानामभिज्ञापकमुक्तम् । निरुद्धानामभिज्ञापकमाहुः ये इति । अत्र गुणगानादौ इत्यर्थः । यथा सर्वज्ञत्वमलौकिकं तेजश्च ज्ञाने निदर्शनम्, तथा गुणगानादौ मोदो निरोधे निदर्शनम् । एवं निदर्शनेन निरुद्धान् ज्ञात्वा तैः सह गुणगानं 'यत्र' इत्यर्थेनोक्तफलसिद्धिपर्यन्तं कर्तव्यम् । फलप्राप्त्यनन्तरं तु तत्स्वभावप्राप्तमेव सर्वं भविष्यतीति न तत्र कथनापेक्षेति भावः ॥११॥

ननु परमदयालुर्भगवान् कथं कांश्चिज्जीवान् मुञ्चति येन ते भवसागरे मग्ना भवन्तीत्याशङ्क्य धर्मिग्राहकप्रमाणसिद्धमेतदिति आहुः गुणेष्विति सार्धेन ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १२ ॥**
**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।**

समाधानं तु निबन्धे 'आत्मसृष्टेर्न वैषम्य'मित्यनेनोक्तमत्र ज्ञेयम् । येन संसारक्लेशो भगवद्विरहक्लेशश्च निवर्तते, हरेरिव सुखं च भवति, तादृशगुणावेशो यदा भवति तदा भगवतो दयालुत्वं भवेत् । एतावत्फलपर्यन्तं प्राप्ता भक्तिमार्गीया एव भवन्तीति भक्तिमार्गीयेषु दयालुत्वं भवतीत्यर्थः । अन्यथा भक्तिमार्गीयत्वाभावे भगवतः क्रूरता तेषां मोचनम्, येन ते भवसागरे मग्ना भवन्तीत्यर्थः । कर्ममार्गे पुनरावृत्तिकथनात् संसारे मज्जनम् । ज्ञानमार्गेपि 'ज्ञानिनामपि चेतांसी'ति वाक्यात् तथा । इदं निबन्धे द्वितीयप्रकरणान्ते व्यवस्थापितम् । इदं सर्वं प्रमाणसिद्धमेवेति मतेत्युक्तम् ॥ १२ ॥

ननु ज्ञानमार्गे मायेव अत्रापि कश्चिद्बाधेतेत्याशङ्क्याहुः ।

**याधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १३ ॥**

अत्र बाधसम्भावनापि नास्तीत्यर्थः । तत्र हेतुः तदध्यासोपीति । माया हि संसारे अध्याससम्पादनेन मज्जयति, अत्र तु भगवदीयत्वेनैव अध्यासो भवतीत्यर्थः । गृहं सर्वात्मना त्याज्यमिति त्यागपक्षसमुच्चयाय अपिशब्दः ॥ १३ ॥

गुणावेशेन उभयक्लेशाभावे हेतुमाहुः ।

**भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।**
**गुणैर्हरिसुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १४ ॥**

गीयमाना ये भगवद्धर्मास्तत्सामर्थ्यात् विषयवैराग्यं भवति, तेन संसारक्लेशाभावः । गुणैः हरिसुखस्पर्शाद्विरहक्लेशाभाव इत्यर्थः ॥ १४ ॥

मार्गान्तरेभ्य उत्कर्षं स्फुटं कर्तुमुपसंहरन्ति एवमिति ।

**एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षो गुणवर्णने ।**
**अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १५ ॥**

ननु 'पराञ्चि खा'नीतिवाक्यादिन्द्रियाणामन्यपरत्वस्य साहजिकत्वात् तैः सर्वदा विषयभोगे गुणगानं कथं भविष्यतीत्याशङ्क्य तदुपायमाहुः ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १६ ॥**

एतेषां हिताय भगवत्परतासिद्धये कृष्णस्येशस्य वस्तूनि एतैः सह योजयेत् । अपयें ब्रह्मभावनां कुर्यादितिसिद्धान्तमुक्तावल्युक्तोर्थोनुसन्धातव्यः । भूम्नेति चतुर्थी । भूमा सर्वात्मभावस्तदर्थमित्यर्थः । भगवदीयैरेव वस्तुभिः सर्वव्यवहारसिद्धौ सर्वोप्यात्मनो भावो भगवति सिद्धो भवतीत्यर्थः ॥ १६ ॥

भगवदीयवस्तूनामिन्द्रियैः सह योजनेन सिद्धं भूमानं विवृण्वन्ति हरिमूर्तिरिति ।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।**
**दर्शनं स्पर्शनं स्पष्टं तथा कृतिगती सदा ॥ १७ ॥**
**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ।**
**पायोर्मलांशत्यागेन शेषभागं तनौ नयेत् ॥ १८ ॥**
**यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते ।**
**तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥**
**नातः परतरो मन्त्रो नातः परतरः स्तवः ।**
**नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥**

आद्यचरणेन मनसो भाव उक्तः । इन्द्रियाणामाहुः **सङ्कल्पादपीति**। दर्शनस्पर्शनकृतिगतिश्रवणकीर्तनानि चक्षुस्त्वक्पाणिपादश्रोत्रवाक्कार्याणि **सङ्कल्पादपि तत्र** भगवत्येव सम्पादनीयानि । भगवद्विषयकाण्येव दर्शनादीनि सङ्कल्पनीयानि, न तु विषयविषयकाणीत्यर्थः । मुख्यतस्तु भगवद्विषयकाणि तानि कर्तव्यानि । तदसम्भवे सङ्कल्पमात्रमपि कर्तव्यमिति सङ्कल्पस्य ततो गौणत्वसूचनाय अपिशब्दः । भगवद्धर्मसामर्थ्यसिद्धवैराग्यस्वरूपं तेन साध्यं फलं च वदन्तः पायोर्विनियोगमाहुः **पुत्रेति**। **कृष्णप्रिये पुत्रे रतिः** कर्त्री, पायोर्मलत्याजकेन्द्रियाद्धेतोर्मलांशस्य प्राकृतभावस्य त्यागेन **शेषभागं** अलौकिकत्वं **तनौ नयेत्** प्रापयेदित्यन्वयः । मलत्यागस्य पायुकार्यत्वात् पायुग्रहणम् । अत एवा'सिसृक्षोः पुरः पुर्या नाभिद्वारमपानत' इति देहत्यागस्य अपानकार्यत्वमुक्तम् । अपानं इन्द्रियमिति उक्तेरपानं पायुश्चेत्येकमेव । **कृष्णप्रिय** इति । भगवदीयेषु रागो अन्यत्र विराग इति लक्षण वैराग्यस्वरूपमुक्तम् । कृष्णः प्रियो यस्य तादृशे भगवदीये । तथा च भगवदीयत्वेन राग इत्यर्थः । पुत्रपदमुपलक्षणम् । भार्यादिष्वप्येवम् । 'नापुत्रस्य लोकोस्ती'त्यादिवाक्यैः पुत्रे रागस्य प्रमाणसिद्धत्वेन कर्तव्यत्वशङ्कया पुत्रपदम् । अन्यत्र आत्मन एव निरुपधिस्नेहविषयत्वात् पुत्रस्य च 'आत्मा वै पुत्रनामासी'त्यादिवाक्यैरात्मत्वकथनात् तत्र राग उक्तः । अत्र तु भगवत एव निरुपधिस्नेहविषयत्वाद्भगवदीये एव रागोन्यत्र विराग इति भावः । मलं द्विविधम्, प्रतिजन्मनि जायमानं देहरूपमेकम्, प्रत्यहं जायमानमपरम्, उभयविधमलनिवृत्तेः पायुकार्यत्वादेककथने द्वितीयमप्युक्तं जातमिति ज्ञेयम् । घ्राणरसनोपस्थानां विनियोगमाहुः **यस्य** वेति । अन्येषां भगवति विनियोगसङ्कल्पो विषयभोगसङ्कल्पनिग्रहश्चोक्तः । एतेषामधुना भगवति विनियोगसङ्कल्पासम्भवात् निग्रहमात्रं कर्तव्यम् । एतैर्विषयभोगो न सङ्कल्पनीय इत्यर्थः । वाशब्दोऽनादरे । **यस्य** एव इन्द्रियस्य कार्यं भगवत्सम्बन्धि यदा यस्मिन् काले **स्पष्टं न दृश्यते तदा** तस्मिन् काले तस्येन्द्रियस्य **विनिग्रहः कर्तव्यः** । तदिन्द्रियं विषयान्तरे न प्रवर्तनीयम्, पतिव्रतावत्तूष्णीं स्थेयमित्यर्थः ॥ १७,१८,१९,२० ॥

स्वीयेषु कृपयोक्तस्य अन्यस्यास्य महात्मभिः ।
वदनानलदासोक्ता व्याकृतिः पूर्णतामगात् ॥ १ ॥

**इतिश्रीविट्ठलेशात्मजश्रीवल्लभकृता निरोधलक्षणविवृतिः सम्पूर्णा ॥**

---

श्रीकृष्णाय नमः।

# निरोधलक्षणम्।

## श्रीहरिरायकृतनिरोधलक्षणविवृतिसमेतम्।

नमामि श्रीमदाचार्याननल्पकरुणायुतान्। निरोधफलदानाय प्रभुणा प्रकटीकृतान्॥ १॥
यदीयचरणाम्भोजं वरणं मूर्तिमत्प्रभोः। तत्कृपातः करिष्येहं निरोधविवृतिं मुदा॥ २॥
तदाविर्भावितश्रीमत्प्रभुसेवारसात्मकः। अस्मत्प्रभुः कृपयतु प्रियः श्रीविठ्ठलेश्वरः॥ ३॥
वन्दे पितृपदाम्भोजं श्रीमदाचार्यसंश्रितः। यतोऽहममवं सर्वसाधनाभाववानपि॥ ४॥

अथोपोद्घाततया इदं विचार्यते, को निरोधः? किञ्च तस्य कारणम्? कथं वा तस्य फलत्वमिति। तत्रोच्यते। प्रपञ्चविस्मृतिसहिता आसक्तिर्निरोध इति। न च आसक्तिमात्रं स इति वाच्यम्। विषयासक्तौ व्यभिचारात्। न च तत्र प्रपञ्चविस्मृतिः, किन्तु विशेषतः तदभिनिवेश एव। न चासक्तिविषयातिरिक्तप्रपञ्चविस्मृतेरुभयसाधारण्येन अतिव्याप्तिरिति वाच्यम्। प्रपञ्चशब्दस्य तत्सामान्याभिप्रायत्वात्। न च लौकिकासक्तिविषयो न प्रपञ्चः इति वाच्यम्, तद्रूपस्य तादृशशक्त्यैवोत्पादकत्वात्। न च प्रपञ्चमानास्मरणे आसक्तेर्निर्विषयत्वापात इति वाच्यम्। प्रपञ्चातीतस्य तद्विषयत्वात्। न च तद्विषयस्य तदतीतत्वे प्रापञ्चिकजीवासक्तिविषयत्वं न स्यादिति वाच्यम्। योगजधर्मप्रत्यासत्त्या अतीन्द्रियार्थस्य इव भक्त्या प्रपञ्चातीतस्य विषयत्वोपपत्तेः। किञ्च, श्रुतानुरागस्थले लोकेऽपि अतीन्द्रियार्थस्य तद्विषयत्वमस्ति एव। अत एव कल्पतरुकामधेन्वादिमाहात्म्यश्रवणेन दृश्यते अखिलानां लोकानामभिलाषः। वस्तुतस्तु प्रपञ्चातीतस्य अपि ऐन्द्रियकत्वमेव, चक्षुरवेद्यत्वेऽपि श्रवणवेद्यत्वात्। 'कश्चिद् धीर' इति श्रुते'र्दिव्यं ददामि ते चक्षुः' 'तस्मिन् दृष्टे परावरे' 'पश्यन्ति ते मे' 'त एव पश्यन्ति' इत्यादिस्मृतिभ्यश्च विशिष्टचक्षुर्वेद्यत्वाच्च। ननु लक्षणे प्रपञ्चत्याग एव कुतो न निरोधविशेषणतयोच्यत इति चेत्। न। तस्य ज्ञानमार्गीयमोक्षसाधनत्वेन अत्र अनुपयोगात्। अत्र तु भजनान्यथानुपपत्त्या ममतापरावर्तनस्यैव त्यागपदार्थत्वेन तस्य तद्विस्मृतिमात्रपर्यवसितत्वात्। अत एव 'त्वन्मायया मा भजदारगेहेष्वासक्तचित्तस्य' इति वृत्रवचः। उक्तं च प्रभुभिः श्रीभागवतार्थतत्त्वदीपे 'भक्त्यभावात् तु भक्तानां गृहमेव निषिध्यते' इति। तस्मात् तद्विस्मृतिमात्रमेवात्र मृग्यमिति। अत एव भरताचार्योऽप्याह तल्लक्षणं 'या तु व्यसनसम्प्राप्तिर्निरोधः स तु कथ्यते' इति। व्यसनं च प्रपञ्चविस्मृतिपूर्विका आसक्तिरेव। अत

१ चित्तं प्रपञ्चविस्मृतिपूर्वकस्थान निरुक्ता। २ श्रुतानुरागस्थलेतिपाठः।

एव क्षणमपि तत्र तेन विना स्थातुमशक्तिः। अंशतोप्यन्यस्मरणे क्षणं तेन निर्वाहात्। अत एव प्रोचुः परमदुर्लभत्वमेव वदन्तः श्रीमदाचार्याः भक्तिवर्धिन्यां 'यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात् तदैव हि' इति। विशेषेण असनं क्षेपणं सर्वस्य यस्मादितिव्युत्पत्त्यापि तस्य भावस्य प्रपञ्चविस्मृतिरूपत्वमेव सिध्यति।

स च निरोधो द्विविधः। भागवतोऽन्यश्च। अत एवोक्तमाचार्यैः 'निरोधो यदि भक्तानां स्वस्मिन् स्वस्य च तेषु हि, तदोभयसुसम्बन्धात् दृढो भवति नान्यथे'ति। तत्र आद्यो भगवतः प्रपञ्चविस्मृतिपूर्वकभक्तविषयकासक्तिरिति। 'निरोधोऽस्यानुशयनमात्मनः सह शक्तिभि'रितिवचनात्। अस्येति षष्ठ्या भेदेन निर्देशात्'। 'निरोधोऽस्यानुशयनं प्रपञ्चे क्रीडनं हरे'रित्याचार्यचरणैर्विवृतत्वाच्च। लीलारूपेषु सर्गादिषु परिगणितत्वाच्च। 'स च गोपीभिः स्तोभित' इत्यादिना निरूपितः।

नन्वत्र लक्षणमिदमनुपपन्नम्, भक्तानां प्रापञ्चिकत्वेन भगवतस्तद्विषयकासक्तौ प्रपञ्चविस्मरणाभावादिति चेत्, उच्यते। अवधारितं च तेषु त्वया प्रापञ्चिकत्वं केन प्रमाणेन? न तावत् प्रत्यक्षम्, तेषां लीलासृष्टयतिरिक्तजनप्रत्यक्षागोचरत्वात्। भक्तविशेषप्रत्यक्षस्याप्रापञ्चिकतानुकूलत्वात्। 'सदा पश्यन्ति सूरय' इति श्रुतेः, 'यद्धि पश्यन्ति मुनयः' 'ते एव पश्यन्ति' 'पश्यन्ति ते मे' इत्यादिवाक्यैः। एतत्प्रपञ्चान्तःपाते भक्तानां सगुणदृग्विषयताया अनिवार्यत्वात्। अत एवाप्रापञ्चिकत्वं बोधयन् निजैश्वर्यस्य 'दिव्यं ददामि ते चक्षु'रिति प्रभुरुक्तवान्। नाप्यनुमितिः, अनुकूलतर्काभावात्। न च दृश्यत्वादेरनुकूलतर्कत्वमिति वाच्यम्, दृश्यत्वस्य प्रागुक्तप्रकारैर्व्यवस्थापितत्वात्। शब्दस्तु 'जयति जननिवासः', 'तद्विष्णोः परमं पदम्', 'मन्निष्ठं निर्गुणं स्मृतम्', 'तं भजन् निर्गुणो भवेत्', 'मुक्तोपसृप्यव्यपदेशात्', 'मुक्ता अपि लीलाविग्रहं कृत्वा भजन्त' इत्यादिवाक्यैरनुकूल एव इति नानुपपन्नं किञ्चित्। ननु अस्तु भक्तानां तथात्वम्, तथापि भगवतोप्रतिहतज्ञानशक्तेः प्रपञ्चविस्मरणं कथमुपपद्यत इति चेत्, इत्थम्। भगवान् हि पुष्टिमार्गे अङ्गीकुर्वन् स्वधर्मानपि त्यजति, विपरीतांश्च विदधाति। 'आत्मारामोऽप्यरीरमत्', 'आत्मारामोऽप्यखण्डितः', 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्', 'न पारयेह'मित्यादिवाक्यैः। एवं सति यत्र निरोधं चिकीर्षुर्भवति प्रभुः, तत्र तदनुकूलस्वस्वरूपमपि सम्पादयतीति तदर्थमज्ञत्वमपि युक्ततरम्। विविधानन्तशक्तिमत्त्वेन तत्र सर्वोपपत्तेः। न च विरोधादज्ञत्वे सर्वज्ञत्वमनुपपन्नमिति वाच्यम्। विरुद्धविविधधर्माधारत्वस्य भगवति 'तदेजति तन्नैजति' इत्यादिश्रुतिसिद्धत्वात्। एतच्च यथा तथा अस्मत्स्वामिभिर्निरूपितं विद्वन्मण्डने। न च अज्ञत्वस्य अविद्याजन्यत्वनियमेन भगवति तदभावात् तथात्वमसम्भवीति वाच्यम्। अविद्याया अपि 'श्रिया पुष्ट्ये'तिवाक्यात् तच्छक्तित्वेन तदधीनत्वात्। न च 'बन्धोस्याविद्यया अनादि'रिति वाक्यादविद्याश्रयत्वे तया बन्धसम्भव इति वाच्यम्। तस्यास्येति-

पदेन जीवविषयत्वस्य वाक्ये एवोक्तत्वात् । अत एव श्रीमदाचार्यैर्निरूपितं निबन्धे, 'विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते, ते जीवस्यैव नान्यस्य दुःखित्वं चाप्यनीशते'ति । तं च धर्मं प्रभुः पुष्टिमार्गे एव आविर्भावयतीति 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'तिवचनादवसीयते । अत एव निरूपितं केनचित् भगवत्स्वरूपतत्त्वाभिज्ञेन 'संमुष्णन्' इत्यादि । तदेतत् सर्वमाचार्यैर्'यथार्भकः स्वप्रतिबिम्बविभ्रम' इत्यत्र निरूपितमिति सहृदयैस्तत एव विभावनीयम् ।

अथ किं तस्य कारणमिति चिन्त्यते । न तावन्निरोधो लोक इव वासनया जन्यत इति वक्तुं शक्यम् । तस्या अनुभवजन्यत्वात् । भगवतश्च साक्षात्कारात् प्राक् लौकिकविषयविषयीन्द्रियाविषयत्वेन अननुभवात् । साक्षात्कारे तु दिव्यदृष्टिदानेन तथात्वसम्भवात् । 'दिव्यं ददामि ते चक्षु'रिति वाक्यात्, 'कश्चित् धीर' इतिश्रुतेश्च । नापि भक्तिः, सा हि द्विधा, मर्यादापुष्टिभेदेन, तत्र न तावदाद्या, तस्या 'भक्त्या त्वनन्यया,' 'विशते तदनन्तरम्,' 'ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः, द्वयोरप्येक एवार्थो भगवच्छब्दलक्षण' इत्यादिवाक्यैः सायुज्यमुक्तिफलकत्वेन निरोधाजनकत्वात् । ननु 'भक्त्या सञ्जातया भक्त्ये'त्यादिवाक्यैर्मर्यादाभक्तेः पुष्टिभक्तिफलकत्वेन तस्याश्च निरोधसाधकतया कथं न परम्परयैतस्या अपि तज्जनकत्वमिति चेत्, न, पुष्टिभक्तेरपि तज्जनकत्वस्य विचार्यत्वेन मर्यादायामप्रसक्तेः । न हि सापि साक्षान्निरोधं साधयति, किन्तु भगवतः साक्षात् तत्साधनत्वे निमित्तमात्रं सा । अन्यथा 'कृष्णेन चोद्धृता' इतिवाक्यं निरुध्येत । न हि निरोधः कदाचिदपि स्वकृतसाधनैः सिध्यति । अत एवोक्तमाचार्यैः 'आसक्तिः प्रेमपूर्वैव प्रेमापि हरिणा कृत'मिति । अत एव व्रजसीमन्तिनीष्वेव निरोधः सिद्धः, नान्येषु, भगवता तत्रैव तथा सम्पादितत्वात् । अत एव श्रीमदाचार्यैर्भक्तिवर्धिन्यां 'यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात् तदैव ही'ति दुर्लभत्वमेवोक्तम् । तर्हि किमाकस्मिकतैवेति चेत्, न, स्वरूपस्यैवानुग्रहविशेषसहकृतस्य हेतुत्वात् । तद्विशेषश्च सर्वात्मभावसाध्यफलदानेच्छैवेति सङ्क्षेपः । यद्यपि भावनागुणगानादेः साधनता श्रूयते, तथापि फलस्य निःसाधनत्वभङ्गभिया योगक्षेमसाधारणं साध्यत्वमादाय सा वक्तव्येति भावः ।

अथ कथं तस्य फलत्वमिति चिन्त्यते । सुखदुःखाभावान्यतरत्वाभावात् । प्रत्युतासक्तेः स्वविषयाप्राप्त्या दुःखसहकृतत्वाच्चेति । अयमर्थः । निरोधो हि प्रपञ्चविस्मृतिनिगदिता आसक्तिः, सा च स्वविषयविषयकविविधमनोरथजनको भावः, तस्य च रसरूपत्वेन सुखरूपत्वात् । 'रसं ह्येवायं लब्ध्वा आनन्दीभवती'ति श्रुतेः । प्रपञ्चविस्मृतिरूपत्वेन प्रापञ्चिकदुःखाभावरूपत्वाच्च । किञ्च, फलं पुरुषार्थः, तत्त्वं च तेन स्ववृत्तितयेष्यमाणत्वम् । तथा च आसक्तिमध्यपतितदुःखस्यापि आकाङ्क्षणीयत्वेन तथा-

१ [illegible] पाठ ।

त्वम् । 'विपदः सन्तु ताः शश्वत्' इतिवाक्यात् । अन्यथा श्येनादावपि तज्जन्यनरकस्य तदुभयरूपत्वाभावेन फलत्वं न स्यात् । ननु शत्रुविपत्तिरेव तत्र फलम्, न नरक इति चेत्, न । 'भूयान् मे नरकोऽपि शत्रुर्विपद्यतामि'तिधिया श्येनकरणात् । सुखसाधनं तदिति चेत्, तदा प्रकृतेऽपि दीयतां दृष्टिः । न च सुखभ्रमात् प्रवृत्तिरिति वाच्यम् । नरके सुखभ्रमायोगात् । तस्मात् पुरुषार्थस्यैव फलत्वेन दुःखसम्भिन्नस्यापि निरोधस्य फलत्वमिति । वस्तुतस्तु दुःखमेव न, किन्तु रसान्तर्गतत्वेन प्रभुप्राकट्य-साक्षाद्धेतुतया परमानन्द एव । अत एव श्रीशुकैर्दिवा वियोगदुःखानुभवसमयेपि 'रेमिरेऽहःसु तच्चिता' इत्युक्तम् । श्रीमदाचार्यैरप्यभिहित'मतो निरोधो महाफल' इति । तस्मान्निरोधः सकलफलमूर्धन्यं फलमिति सिद्धम् ।

ननु कथमत्र निरोधस्य दशमार्थस्य परमफलत्वसिद्धिः । तदुत्तरवर्तिस्कन्धद्वयप्रतिपाद्यलीलाद्वयरूपमुक्त्याश्रययोरन्यतरस्याश्रयस्यैव वा तथात्वोक्त्यौचित्यादिति चेत्, न । मुक्त्याश्रययोरेतदुपयोगित्वेन स्कन्धद्वयेन प्रतिपादनात् । तथाहि । निरोधे चास्ति प्रकारद्वयम्, सगुणनिर्गुणभेदेन, निर्गुणे त्वन्यैव व्यवस्था । सगुणे तु निरुद्धभक्तदेहस्य भौतिकतया निवर्तनीयत्वेन भक्तिमार्गप्रकारेण निवर्त्य देहमलौकिकं लीलोपयोगिनं सम्पाद्य स्वान्तःस्थापयित्वा ततो लीलेच्छायां स्वस्थानाद्विमोचयति, पुनः तदुपरतौ स्वाश्रितानेव करोतीति लीलाद्वयं सगुणनिरोधोपयोगित्वेन निरूपितमिति न परमफलत्वसिद्धिविरोध इत्यर्थः ।

अतःपरं निरोधरूपपरमफलं निरूपयन्तः तत्साधनं साक्षात्परम्पराभेदेन गौणमुख्यभेदेन वा निरूपयितुं तन्निमित्तकारणभूतयोर्भावभावनगुणगानयोर्मध्ये प्रथमं श्लोकत्रयेण मुख्यं भावभावनं दुर्लभत्वबोधाय स्वविषयकतयैव प्रार्थनारूपेण निरूपयन्ति यच्च दुःखमिति । निरोधे हि साधनद्वयम्, तद्भावभावनं गुणगानं वा । तत्र भावनीयभावश्च सर्वात्मभावेन निरुद्धानां सुखदुःखात्मको, 'विकलत्वं तथास्वास्थ्य'मिति वाक्यात् । तथा च तद्भावनं साधनं निरूपयितुं प्रपञ्चविस्मृतिसम्पादकतया अभ्यर्हितं प्रथमं भावप्रथमांशं दुःखं प्रार्थयन्ते यच्च दुःखमिति ।

**यच्च दुःखं यशोदाया नन्दादीनां च गोकुले ।**
**गोपिकानां तु यद् दुःखं तद् दुःखं स्यान्मम क्वचित् ॥ १ ॥**

यदिति प्रसिद्धं श्रीभागवतादौ परमार्तिरूपं प्रभुप्राकट्यकारणं युगपदनुभूताखिललीलानुभावकं लोकविलक्षणं प्रभुस्वरूपात्मकं वस्तुतः फलरूपं चकारात् तत्संवलितसुखसंवलितमपि **दुःखं यशोदाया** अशास्त्रीयभक्तायाः सर्वथा दयाधिकरणभूतायाः यावद्भावबद्धृदयदेशाधिष्ठितस्थायिभावोत्पत्तिनिमित्तभूतायाः, तथा **नन्दादीनां** श्रीनन्दप्रभृतीनामखिलव्रजवासिनां चकारात् तत्सम्बन्धिनामन्येषामपि यद्दुःखं भगवता परमफलदित्सुना दत्तं येनैवं कथनं 'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रया' इत्यादि; तदपि

गोकुले सर्वथा निरोधस्थाने स्थानस्थितानामेव सम्पादितं दुःखं मम क्वचिदपि स्यादित्यग्रिमेण सम्बन्धः । एवं श्रीयशोदानन्दादिदुःखं भगवतो दानक्रमेण प्रार्थयित्वा अतिदुरापं गोपिकादुःखं प्रार्थयन्ते गोपिकानां त्विति । तुशब्दः पूर्वस्मादौत्कट्यवैलक्षण्यादिबोधकः । गोपिकानां व्रजसीमन्तिनीनामात्मत्वभक्तवश्यत्वादिभिर्धर्मैः सर्वथा निरुद्धानां यत्स्वरूपात्मकं रसात्मकतया प्रसिद्धं श्रीभागवतादौ, वस्तुतो भावांशभूततयानन्दरूपं तद्दुःखं मम क्वचिदपि देहेन्द्रियप्राणान्तःकरणेषु स्यादिति अभिलाष इत्यर्थः । ननु व्रजवासिनो हि सर्वेपि सर्वथा सर्वात्मभावेन भगवन्तमानन्दनिधिं प्राप्ताः परमानन्दसमुद्रनिमग्ना दुःखलेशसम्भावनारहिताः स्वाश्रितशोकनिरसनसमर्थाः आनन्दसृष्टिसमुत्पन्नाः, तद्दुःखप्रार्थनमसम्भावितमिव भातीति चेदुच्यते । 'रसो वै सः' इतिश्रुत्या भगवान् रसात्मक इत्यविवादम् । स च स्वशास्त्रसिद्धप्रकारक एव तथा भवतीति प्रमेयरपि तथा मन्तव्यं रूपमकामेनापि त्वया । तथा च पूर्वरसलीला स्वरूपानन्ददानं 'आत्मना प्रथमा लीले' त्याद्युक्तप्रकारेण पञ्चधा देहेन्द्रियप्राणान्तःकरणादिषु जायत इति तेषामतिव्यक्ततया तन्निष्ठस्वरूपानन्दस्यापि व्यक्तत्वेन पश्यतां तत्र सुखत्वव्यवहारः, यत्रोत्तररीत्या रसदानं तन्मनस्येवेति तस्याव्यक्ततया तन्निष्ठस्वरूपानन्दस्यापि तथात्वेन बहिःप्राकट्याभावात् तत्र दुःखत्वव्यवहार इति तमादाय दुःखमित्युक्तम् । वस्तुतस्तु स महानानन्द इति दशमस्कन्धविवृतावसकृदभिहितमिति सहृदयैः तत एव विभावनीयमिति दिक् ॥ १ ॥

एवं भावनार्थं भावप्रथमांशं दुःखं प्रार्थयित्वा श्रीयशोदानन्दादिसुखप्रार्थनस्य रासस्त्रीभावपूरितविग्रहत्वेन स्वस्यायोग्यतया तदप्रार्थ्य गोपिकानामेव सुखं भावोत्तरांशभूतं प्रार्थयन्ते गोकुले गोपिकानामिति ।

**गोकुले गोपिकानां तु सर्वेषां व्रजवासिनाम् ।**
**यत्सुखं समभूत् तन्मे भगवान् किं विधास्यति ॥ २ ॥**

भगवतो हि स्थानद्वये गोपिकासम्बन्धिनी लीला, सैव ताभिर्विरहे सर्वदा अनुभूयते सहैनेव च तत्र सुखमिति । तत्र प्रथमं गोकुले भगवतो लीलाभिर्वस्त्रपुच्छावलम्बनदृष्टिबन्धनस्तेयनृत्यगीतपीठकानयनादिभिर्गोपिकानां सर्वथा परिगृहीतानां चकारात् तद्वारकमन्येषां गोपादीनां शय्यास्तरणस्थलसमीकरणादिभिरसङ्कोचेन सर्वेषां व्रजवासिनां तत्सम्बन्धिसम्बन्धिनां पश्वादीनां च यत्सुखमनुभूयमानलीलाळयसम्पादकमभूत् तत् किं मे मम मत्सम्बन्धी वा हृदयस्थो भगवान् किं विधास्यति विशेषेण करिष्यति पोषयिष्यतीति वार्थः । किमिति प्रश्नार्थकाव्ययप्रयोगेण एतत्सुखप्राप्तेर्लीलारूपप्रभुप्राकट्याधीनतया पूर्वोक्तदुःखस्यापि दुर्लभत्वं सूचितम् । अन्यत्र तथा करणे सामर्थ्याभावमाशङ्क्याहुः भगवानिति । स हि सर्वत्र सर्व कर्तुं समर्थः, अतः कृपायामन्यत्रापि तथा करिष्यतीत्यर्थः ॥ २ ॥

एवं भावनार्थं मावांशद्वयं प्रार्थयित्वा कदाचिदतितीव्रविरहभावोत्पत्तौ नाशसम्भावनायामुद्धवागमनजनितोत्सवोऽपि तथाभावनिवर्तकतया स्फूर्तिविषयो जात इतिभावान्तःपातेपि लीलाजनितसुखविलक्षणत्वादेकदेशभूतं तमप्यंशं प्रार्थयन्ते **उद्धवागमन** इति ।

**उद्धवागमने जात उत्सवः सुमहान् यथा ।**
**वृन्दावने गोकुले वा तथा मे मनसि कचित् ॥ ३ ॥**

**उद्धवस्य** उत्सवात्मकस्य **आगमने जातः** प्रकटीभूतो यः सर्वविलक्षणो भगवत्स्वरूपावयवदर्शनेन तदीयत्वनिर्धारणात् उत्पन्नः यः स्वार्थदूतप्रेषणाभिमत्यात्मको य **उत्सवो** व्रजसीमन्तिनीनां **यथा** येन प्रकारेण **तथा** तेनैव प्रकारेण तद्भावभावनायां मे **मम मनसि कचित्** कदाचिदपि स्वादिलमिलाप इत्यर्थः । अयमुत्सवो नन्दादीनां गोपिकानां च जात इति व्यवस्थया स्थानद्वयं निर्दिशन्ति **वृन्दावने गोकुले** चेति । **वृन्दावने** पुष्टिस्थाने रहसि व्रजस्त्रीणाम्, **गोकुले** गोष्ठे नन्दादीनामिति व्यवस्था । 'गच्छोद्धव व्रजम्,' 'प्राप्तो नन्दव्रज'मिति सामान्योक्त्यावसीयते । नन्दागमनोत्सवप्रार्थने प्रभ्वागमनसमयोत्पन्न'स्तं विलोक्यागत'मित्यादिनोक्तः स कथं न प्रार्थित इति चेत्, तत्राहुः **सुमहा**निति । प्रियागमनोत्सवापेक्षया विरहे तद्दूतागमनोत्सववैशिष्ट्यस्यानुभवसिद्धतया विरहरसपोपकत्वेन चायमुत्सवः ततोपि सुतरां महानित्यर्थः ॥ ३ ॥

एवं अलौकिकसामर्थ्यरूपो मुख्यो निरोधः स्वस्यैवेति तत्साधननिर्देशः प्रार्थनाव्याजेन स्वविषयतयैव कृतः, अन्येषां तु भगवान् महापुरुषकृपया तदधिकारानुसारेण सायुज्यं सेवोपयोगिदेहं वा दास्यतीत्यभिप्रायेण तावत्पर्यन्तं स्थितिप्रकारमाहुः **महता**मिति ।

**महतां कृपया यावद्भगवान् दययिष्यति ।**
**तावदानन्दसन्दोहः कीर्त्यमानः सुखाय हि ॥ ४ ॥**

**यावत् भगवान् दययिष्यति** फलोन्मुखां दयां करिष्यति **तावत् कीर्त्यमानः** कीर्तनविषयीक्रियमाणः एव स **सुखा**येत्यर्थः । 'महस्ते विष्णो सुमतिं भजामहे,' 'विना महत्पादरजोभिषेकम्', 'किरातहूणान्ध्र,' 'देवर्षिर्मे प्रियतमः' 'त्वत्पादपोतेन महत्कृतेन' 'सदनुग्रहो भवा'नित्यादिवाक्यैर्भगवतो दयायां च नान्यत्कारणमिति वक्तुमाहुः **महतां कृपये**ति । **महतां** भगवद्धर्मैः महत्त्वमापन्नानां **कृपया** करुणयेत्यर्थः । अनवतारदशायां विशेषतो महापुरुषद्वारैवोद्धारात् । एतेन इदानीं भक्तिमार्गस्य ते एव निर्वाहका इत्युक्तं भवति । ननु कीर्त्यमानेपि भगवति फलपर्यन्तं श्रमेण कर्मादिष्विव दुःखमेवेत्याशङ्क्याहुः **आनन्दसन्दोह** इति । भगवत आनन्दसमुदायरूपत्वेन तद्गुणानामपि तदभिन्नतया स्वरूपसमानयोगक्षेमत्वात् साधनदशायामपि तत्कीर्तनेन आनन्द एव भवति, **न कर्मादिभिरिव** दुःखमित्यर्थः । अत एव अवगतभगवत्कथारसः परीक्षित् एतदर्थकमेव

'श्रीरामनोमिरामा'दितिगुणानुवादविशेषणमुक्तवान् । हीति युक्तोयमर्थः । कीर्तनविषयस्यानन्दसन्दोहरूपत्वे सुखस्य युक्तत्वात् ॥ ४ ॥

ननु कीर्तनं हि सुखसाधनम्, तत्र महतां कृपयेति को वाग्रहः यथाकथञ्चिदपि कृतं तत्तथेति प्रश्नेनेत्याहुः **महतां कृपयेति** ।

**महतां कृपया यद्वत्कीर्तनं सुखदं सदा ।**
**न तथा लौकिकानां तु स्निग्धभोजनरूक्षवत् ॥ ५ ॥**

**यद्वत्** यथा **महतां** महापुरुषाणां **कृपया** करुणया लोकविलक्षणानां भगवत्सम्बन्धिनां कृपया निरुपधिपरदुःखप्रहाणेच्छया सदा कालापरिच्छेदेन **कीर्तनं सुखदं** तापत्रयनिवृत्तिपूर्वकपरमानन्ददायकं निरोधजनकं वा **तथा लौकिकानां** लोकसम्बन्धिनां महापुरुषद्वारा अभगवच्छरणागतानाम्, अत एव केवलसंसारासक्तानां **कीर्तनं** न तथेत्यर्थः । वैलक्षण्यं वक्तुं लौकिकं दृष्टान्तमाहुः **स्निग्धभोजनरूक्षवदिति** । स्निग्धञ्च तद्भोजनञ्च स्निग्धभोजनम्, तच्च रूक्षं च, अर्थात् रूक्षभोजनम्, तयोरिव तद्वदित्यर्थः । तथा च यथा स्निग्धभोजनरूक्षभोजनयोस्तारतम्यं तथा महापुरुषकृपाविशिष्टतदविशिष्टकीर्तनयोरपीत्यर्थः । एतेन स्निग्धभोजनस्य पुष्टिसाधकत्ववत् महापुरुषकृपाविशिष्टकीर्तनस्य पुष्टिफलसाधकत्वम्, रूक्षस्य तदसाधकत्ववत् लौकिककीर्तनस्य तत्फलासाधकत्वमुक्तमितिभावः । स्निग्धस्य घृतयुतस्याद्यादेर्भोजने रूक्षः प्रीतिरहितस्तस्य भोजनमित्येत्यर्थः । यथा कस्यचित् ज्वराद्यभिभूतस्य स्निग्धं वस्तु न रोचते तस्य यथा तद्रसानभिज्ञरसज्ञस्य प्रतिदिनं क्षीयमाणशरीरस्य न तद्भोजनं पुष्टिफलं, तथा महापुरुषकृपाऽभावरूपदोषयुक्तानां तादृक्कीर्तने रूक्षाणां लौकिकानां कीर्तनस्य न पुष्टिफलत्वमिति भावः । यद्वा, स्निग्धं भोजनं यस्य स चार्थात् तद्रूक्षश्च तयोरिव तद्वदित्यर्थः । तथा च यथा स्निग्धभोजनरूक्षभोजनयोस्तारतम्यं तथा अलौकिकलौकिककीर्तनकर्त्रोरपीत्यर्थः ॥ ५ ॥

ननु सुखसिद्धौ दयापर्यन्तं कीर्तनं कर्तव्यत्वेन निरूपितम्, तत्र 'तरति शोकमात्मवित्' 'ब्रह्मसंस्थोऽमृतत्वमेती'त्यादिश्रुतिभिः ज्ञानेनैव दुःखनिवृत्त्या सुखप्राप्तेर्ज्ञानाभ्यास एव श्रेयम्, किं गुणगानेन इति चेत्, तत्राहुः **गुणगान इति** ।

**गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते ।**
**यथा तथा शुकादीनां नैवात्मनि कुतोऽन्यतः ॥ ६ ॥**

**यथा गोविन्दस्य** गोगोकुलपतेर्निःसाधनाधिपस्य गुणानां **गाने** स्तुतियुक्त्या कथने **शुकादीनां** सिद्धज्ञानफलानामपि सुखम्, तथा तेषामेव आत्मनि स्वात्मविषये जायमानं ब्रह्मान्यौपयोगेन सुखं न नैवेत्यर्थः । यद्वा यथा भक्तैः क्रियमाणे गुणगाने तच्छ्रवणेन गोविन्दस्य प्रभोः सुखमा'मद्भक्ता यत्र गायन्ती'तिवाक्यात्, तथा तत्कर्तृणामपि शुकादीनां आत्मनि अन्तःकरणे नेत्यर्थः । तथा च प्रभोरतिशयिततोष-

हेतुतया ज्ञानमार्गस्थित्यपेक्षया सुखाधिक्याच्च गुणगानेनैव स्थातव्यमिति भावः । अत एव 'लोकांश्च लोकानुगतान् पशूंश्च हित्वाश्रितास्ते चरणातपत्रम्,' 'परस्परं त्वद्गुणवादसीधु-पीयूषनिर्यापितदेहधर्माः,' 'अथ ह वाव तव महिमामृत,' 'यदनुचरित,' 'तव कथामृतम्,' 'श्रवणाद्दर्शनात्,' 'येऽन्योन्यतो भागवता' इत्यादिवाक्यैर्गुणगानपराणां इतरनैरपेक्ष्यो-क्त्यापि स्वतःपुरुषार्थत्वं सर्वाधिकफलत्वं चावगम्यते गुणगानस्य । इतोऽपि तदेव कर्तव्य-मिति भावः । तदेवाहुः **कुतोऽन्यत्र** इति । अन्यत्र ज्ञानादिभ्यो विषयादिभ्यो वा कुत्र एतत्सुखमित्यर्थः । 'ज्ञाने प्रयासमुदपास्य,' 'निवृत्ततर्षैः,' 'नैषातिदुःसहे'त्यादिवाक्यैः श्रीभागवते तथैव निरूपणात् । ननु 'तरति शोकमात्मवित्,' 'तमेव विदित्वातिमृत्युमेती'-त्यादिश्रुतेः का गतिरिति चेद्, अत्र वदामः । तस्या'मद्भक्तियुक्तस्ये'त्यादिवाक्यैर्भक्तिमतो ज्ञानानपेक्षणात् ज्ञानिनस्तु 'नैष्कर्म्यमपी'त्यादिवाक्यैः सर्वथा भक्त्यपेक्षणात् तन्निरपेक्ष-भक्तिमार्ग एव समीचीनः । तथा च मोक्षरूपाक्षयसुखसाधकत्वं ज्ञानस्यापि भक्तिसहकृतस्यै-वेति केवलज्ञानस्थितिमपहाय केवलभक्तावेव स्थितिः कर्तव्येत्यर्थः । श्रुत्यादिषु ज्ञान-फलोक्तिस्तु दुःखाभावपर्यवसन्नैव । परमानन्दावाप्तिस्तु भक्त्यैव । वस्तुतस्तु दुःखाभावोऽ-प्येतदधीन एव । 'अनर्थोपशम'मितिवाक्यात् । अत एव आचार्यैरानन्दमयाधिकरणे 'एवं सती'त्यारभ्य 'स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्ति-र्भवती'ति निर्णीयत इत्यभ्यधायि ॥ ६ ॥

ननु कृते गुणगाने किं भवतीत्याशङ्क्य तत्र प्रवृत्त्यर्थं परिचायकं फलमाहुः **क्लिश्यमाना**निति ।

**क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ।**
**तदा सर्वं सदानन्दं हृदिस्थं निर्गतं बहिः ॥ ७ ॥**

गुणगाने तत्स्वरूपस्फूत्त्या तदात्यर्थं **क्लिश्यमाना**नुपतपतो **जनान् दृष्ट्वा** अव-लोक्य **यदा** परीक्षासाधनसम्पत्तौ **कृपायुक्तो भवेत् तदा सर्वं** सर्वांशपूर्णं **सदानन्दं** परं ब्रह्म यशोदोत्सङ्गलालितं **हृदिस्थं** परमव्योम्नि प्रादुर्भूतं **बहिः** प्रकटं भवतीत्यर्थः । अत

---

१ धर्मादिभ्य इति पाठः । २ सर्वथा दुःखाभावस्य भक्त्यधीनत्वादेवेत्यर्थः । एवं सतीत्यादिग्रन्थस्या-यमाशयः । 'ब्रह्मविदाप्नोति पर'मित्यत्र श्रुतौ अक्षरब्रह्मविदः परब्रह्मप्राप्तिरित्युच्यते । 'नायमात्मा प्रवचनेन लभ्य' इतिश्रुत्यन्तरे च ज्ञानादीनां साधनत्वनिषेधपूर्वकं वरणस्यैव साधनत्वं प्रतिपाद्यते । एवं सति श्रुतिद्वयविरोधपरिहाराय अक्षरब्रह्मज्ञानेन अविद्यानिवृत्त्या शुद्धत्वसंपादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता संपाद्यत इति ब्रह्मविदाप्नोतीतिश्रुत्याशयः । एवं योग्यतासम्पत्तावपि पुरुषोत्तमप्राप्तिस्तु साक्षाद्वरणो-ऽयमस्य गोविन्देन वरणे सति भक्तिभावोत्पत्त्यैव भवतीति 'नायमात्मे'तिश्रुत्याशय इति भाष्ये एवं सतीत्यादिग्रन्थेन निर्णीयते । एवं च ज्ञानेनाविद्यानिवृत्त्यापि पुरुषोत्तमप्राप्त्यभावाज्ज्ञानेन दुःखं न नश्यति । तस्माद् सर्वात्मना दुःखाभावस्तु भक्त्यैकसाध्य एवेति भावः ।

एव व्रजसीमन्तिनीनां गुणगानेन हृदि प्रादुर्भूय 'तन्मनस्का'इत्यादिना तथाभावसम्पत्तौ कृपया भगवान् प्रादुर्भूत इत्युच्यते । तदेवोक्तमाचार्यैः 'नहि साधनसम्पत्त्या हरिस्तुष्यति कस्यचित् । भक्तानां दैन्यमेवैकं हरितोषणसाधन'मिति । सदानन्दहृदिस्थमितिपाठे सदानन्दस्य भगवतो हृदिस्थं अभिप्रायादिकं बहिर्निर्गतं भवतीत्यर्थः । अयमाशयः । 'रुरुदुः सुस्वर'मित्यादिना गुणगानसमय एवातिदैन्यभावे यदा कृपायुक्तो जातस्तदा तत्र स्वाभिप्रायः प्रभुणैव 'मया परोक्षं भजता,' 'न पारयेऽह'मित्यादिना आविर्भावित इत्यन्यत्रापि गुणगाने क्लेशेन प्रादुर्भूय स्वरूपं ज्ञापयिष्यतीति तदाशया गुणगानमेव कर्तव्यमित्यर्थः ॥७॥

ननु किमिति कृपापेक्षया गुणगानेन क्लेशः सम्पादनीयः, ज्ञाननिष्ठया ब्रह्मनिष्ठतैव सम्पाद्यतामिति चेत्, तत्राहुः **सर्वानन्दमयस्यापी**ति ।

**सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभः ।**
**हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥**

'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतेः सर्वत्र स्थितो य आनन्दः स भगवति प्राचुर्येण वर्तत इति तदाश्रितस्य मात्रुपानन्दमारभ्याब्रह्मानन्दं न कस्यापि दुर्लभत्वम्, 'सर्वं मद्भक्तियोगेन' इतिवाक्यादपि, तथापि **कृपानन्दः** कृपारूपो य आनन्दः, भगवद्धर्माणां स्वरूपाभिन्नतया आनन्दरूपत्वात् । यद्वा, पुष्टिमार्गप्रवेशानुकूलानुग्रहरूपया कृपया य आनन्दो भजनानन्दाख्यः स सुतरां दुर्लभः । ब्रह्मानन्दस्यापि दुर्लभत्वात् । 'सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इतिवाक्यात् । भजनानन्दस्तु दुर्लभ एव । सम्भवति साधनमिह किञ्चिदिति चेत्? गुणगानमेवेति गृहाण । अत एव दुर्लभतैव तस्योक्ता श्रीमदाचार्यैः । 'लौकिकस्त्रीषु ससिद्धस्तद्द्वारा पुरुषे भवेत्, स्वानन्दस्थापनार्थाय योग्यतापि निरूपिता, अतो हि भजनानन्दः स्त्रीषु सम्यग् विधार्यत' इत्यादि । एतदर्थस्तु तत एव विभाव्यताम्, विस्तरभियात्र न लिख्यते । तथा च यत्नेताग्नुग्रहस्तैतदधिकारित्वात् तदानन्दप्राप्तिरित्येतदभिसन्धायोक्तं **कृपानन्दः सुदुर्लभ** इति । श्रीभागवतेपि 'नेमं विरिञ्च्यः,' 'नायं सुखापः,' 'क्रेमाः स्त्रियः' 'आसामहो' इत्यादिवाक्यैर्दुर्लभत्वनिरूपणाच्च । कथं दुर्लभ इति आकाङ्क्षायां तन्निरूपकं तत्स्वार्थमाहुः, **हृद्गत** इति । **हृद्गतः** हृदयप्रविष्टः स कृपानन्दः स्वरूपात्मकः **स्वगुणान्** गीयमानान् **श्रुत्वा पूर्णः** प्रतिक्षणं प्रवर्धमानो रसपूररूपः सन् **जनान्** जननादिधर्मयुक्तानपि **प्लावयते** स्वाविर्भावितरससिन्धौ निमज्जयतीत्यर्थः । अत एव 'बर्हापीडे'तिपद्ये स्वामिनीनां हृदि वेणुपूरितसुधाद्वारा भावात्मकः प्रभुरन्तःप्रविष्टो'ऽक्षण्वता'मित्यादिभिस्तद्दर्शितगुणश्रवणेन देहेन्द्रियप्राणान्तःकरणादिषु 'पूर्णः क्रीडामयतामेव सम्पादितवा'नित्यभिहितम् । अत एवोक्तमाचार्यैर्युगलगीते 'अन्तःप्रविष्टो भगवान् मुखादुद्गत्य कर्णयोः, पुनर्निःसृत्यते सम्यक् तदा भवति सुस्थिर' इति ॥ ८ ॥

एवं सोपपत्तिकं गुणगानकर्तव्यतामभिधायोपसंहरन्ति तस्मादिति ।

**तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ।**
**सदानन्दपरैर्गेयाः सच्चिदानन्दता ततः ॥ ९ ॥**

यस्माद्धेतोः कर्मज्ञानोपासनामार्गेभ्यो भक्तिमार्गो निरतिशयितनिजविषयो 'ये त्विहासक्तमनसः,' 'यदक्षरं वेदविदो वदन्ति,' 'विशन्ति यद्यतयो वीतरागाः,' 'पूजादिना ब्रह्मलोक'मित्यादिवाक्यैः तस्माद्धेतोः सर्वं कर्मज्ञानोपासनादिकं परित्यज्य सवासनं त्यक्त्वा निरुद्धैर्भगवता स्वीयत्वेन वृतैः अत एव किञ्चिद्विस्मृतप्रपञ्चैः, तदर्थं साधनानि विदधद्भिः, सर्वदा निरन्तरं 'सर्वं मद्भक्तियोगेने'ति वाक्यात् सर्वं ददतीति सर्वदाः सर्वेष्टदातारो गुणा एव गेया इत्यर्थः । ननु 'वेदमार्गानुसारेणे'तिवाक्यात् तथा भजने क्रियमाणे तन्मार्गस्य व्याख्यातृभिरन्यथाकृतत्वात् कं पक्षं अवलम्ब्य गुणान् गायेदित्याशङ्कायामाहुः सदानन्दपरैरिति । सदानन्दः साकारानन्दमयः परः परमात्मा परमकाष्ठापन्नो, न तु पुच्छादिभावापन्नो येषां तादृशैरित्यर्थः । अधिकारिविशेषणमेतत् । अनेन मायावादादिमतमनादृत्य ब्रह्मवादे स्थित्वा गुणगानं कर्तव्यमित्युक्तम् । ब्रह्मवादे एवानन्दमयस्यानन्दमयाधिकरणे परमकाष्ठापन्नत्वोक्तेः । ततः किं भवतीत्याकाङ्क्षायामाहुः सच्चिदानन्दता तत इति । ततस्तेभ्य एव गीयमानेभ्यो गुणेभ्यो [1]जीवस्य सच्चिदानन्दता गुणत्रयानिर्भावनाक्षररूपतया पुरुषोत्तमाविर्भावयोग्यता भवतीत्यर्थः । स्वत इतिपाठे गुणगाने क्रियमाणे स्वत एव वस्तुस्वभावात्तथात्वम्, न तु तदर्थं प्रयत्नान्तरापेक्षेत्यर्थः ॥ ९ ॥

एवं निरोधार्थं गीयमाना गुणा निरोधलक्षणलीलासम्बन्धिन एव भवितुं युक्ता इति तत्स्वरूपज्ञापनाय स्वस्य निरोधविवृतिकर्तृत्वमितिवदन्तः फलाव्यभिचारितासिद्ध्यै स्वेषामर्थे प्रश्नं विज्ञापयन्त इव स्वानुभवनिरूपणेन स्ववचनप्रवृत्तिं द्रढयन्ति अहं निरुद्ध इति ।

**अहं निरुद्धो रोधेन निरोधपदवीं गतः ।**
**निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ १० ॥**

अहं रोधेन सर्वं रोधयति प्रतिबध्नाति भगवदतिरिक्तमिति रोधो निरोधलीलानुसन्धानजन्यः सर्वत्र बाधकत्वस्फूर्तिरूप आसक्तिधर्मभूतो भावविशेषः, तेन निरुद्धः प्रपञ्चविस्मृत्या तदासक्तो, निरोधस्य पदवीं श्रुतिविमृग्यां स्वतन्त्रभक्तिरूपां गतः प्राप्त इत्यर्थः । ननु एतादृशस्य किं निरोधवर्णनप्रयासेनेत्यत आहुः निरुद्धानां त्विति । निरुद्धत्वे प्रकारान्तरद्योतनाय तुशब्दः । भगवता शास्त्रानुसारेण महापुरुषद्वारा प्रमेयबलेन यत्नमात्रकृतानां रोधाय निरोधवत्स्वासक्तिधर्मरूपभावविशेषसिद्ध्यर्थं निरोधं लीलारूपं

1 सिद्धविशेष्यमिति पाठः ।

भक्तेषु भगवत्कृतं वर्णयामीत्यर्थः । वर्तमानक्रियापदात् स्वस्य सर्वदैतदभिनिवेशः सूचितः । अत एवातिकरुण इति प्रभुभिः श्रीवल्लभाष्टके विशेषणं निरूपितमाचार्याणाम् । स्वेपामर्थे भगवन्तं विज्ञापयन्तः इवाहुः त इति । त्वत्सम्बन्धिना तेषां त्वत्सम्बन्धिनं निरोधं वा । अत उभयथापि तवैवायं मार इति भावः ॥ १० ॥

नन्वेतादृशेषु गुणेषु विद्यमानेषु कथमत्र सर्वे न प्रवर्तन्त इत्याशङ्क्य तदभाग्यमेव हेतुत्वेनाहुः हरिणेति ।

**हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।**
**ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ ११ ॥**

ये इति भाग्यरहिता यतस्ते हरिणा सर्वदुःखहर्त्रापि भगवता विशेषेण नितरां मुक्ताः सर्वथा त्यक्ताः । उपसर्गद्वयं कथमपि तेषां प्राप्त्यभावाय । 'नियन्धायासुरी मते'ति प्रयोजनाभिधानात् । 'मामप्राप्यैवे'ति शिरश्चालनेनार्थनिरूपणे यथाकथञ्चित् तत्सम्बन्धे सति प्राप्तिस्तु प्रमेयबलेनेतिदिक् । अत एव व्यासोपि श्रीभागवते 'विना पशुघ्ना'दित्युक्तवान् । ननु तेषां किं फलमित्याकाङ्क्षायामाहुः ते मग्ना इति । ते आसुराः कर्मिणो देवा अपि भवः जन्ममरणप्रवाहः स एव सागरस्तत्र मग्नाः सर्वानुसन्धानरहिता इत्यर्थः । तस्य सागरत्वं नक्रादिगिलनसम्भावनया, तत्र तथा पुनरुन्मज्जनासम्भवः, एवमत्रापि कामादिभिर्ग्रासेन पुनर्मोक्षमार्गप्रवेशासम्भव इत्येतद्धर्मसाम्येन निरूपितम् । निरुद्धानां व्यवस्थामाहुः ये निरुद्धा इति । भगवता ये निरुद्धा महापुरुषद्वारा स्वतो वा आत्मसात्कृतास्त एवात्र गुणगाने मोदमानन्दमासमन्ताद् यान्ति प्राप्नुवन्ति । एवकारेणान्येषामनिरुद्धानां कथञ्चिदपि मोदासम्भव इति निरूपितम् । तेषां गुणेष्वरुचेः । तद्रुचिस्तु भगवदनुग्रहेणैव । अत एव नलकूबरमणिग्रीवाभ्यामनुग्रहानन्तरमेव 'वाणी गुणानुकथने' इत्यादि निरूपितम् । उक्तं च तथैवास्मत्प्रभुचरणैर्भक्तिहंसे 'तदर्थित्वस्यैव वरणकार्यत्वा'दिति । अहर्निशमिति । न तेषां क्षणमपि सांसारिकदुःखसम्भव इत्युक्तम् । 'मद्वार्तायातयामाना'मितिवाक्यात् । याममात्रमप्येतद्वार्तापरत्वे गृहादेरबन्धकत्वमित्यहर्निशं तथात्वे किं वक्तव्यमित्यर्थः ॥ ११ ॥

ननु गुणगानं निरोधसाधकतया कर्तव्यमित्युक्तम्, तदिन्द्रियाणां वैमुख्ये न सम्भवतीति तन्निवर्तकमुपायमाहुः संसारावेशदुष्टानामिति ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १२ ॥**

संसारस्य अहन्ताममतात्मकस्य प्रपञ्चासक्तिसम्पादकस्य य आवेश आसमन्तादिन्द्रियेषु प्रवेशनेन दुष्टानां भगवद्वैमुख्यरूपदोषयुक्तानामिन्द्रियाणां चक्षुरादीनां हिताय भगवत्परतया हितं कर्तुं सर्ववस्तूनि दारागारपुत्रादीनि कृष्णस्य

सदानन्दस्य योजयेद् युक्तं कुर्यादित्यर्थः । कर्मादीनां सम्बन्धमात्रविवक्षायां षष्ठ्येवेति सप्तम्यर्थे षष्ठी । ननु कृष्णे सर्ववस्तुसमर्पणेन कथं इन्द्रियाणां दोषनिवृत्तिरित्याशङ्क्य आहुः ईश्वरस्येति । स हि समर्थ आधिदैविकतामपि सम्पादयितुं तस्येन्द्रियमात्रदोषनिवर्तकत्वे किमाश्चर्यमिति भावः । यद्वा, इन्द्रियाणि स्वतो विमुखान्येव, 'पराञ्चि खानि व्यतृणत्स्वयम्भूरि'ति श्रुतेः, तेषां हिताय कृष्णस्य भगवतः सम्बन्धीनि सर्ववस्तूनि लीलासृष्टिस्थानि भावनयेन्द्रियैः सह योजयेदित्यर्थः । एतदेव 'वाक्षण्वता'मित्यस्य विवरणे 'भगवता सह संलाप' इत्यादिना निरूपितमिति तत एव विभावनीयम् । नन्वीश्वरत्वेपि सर्वेन्द्रियादिषु सम्बन्धाभावे कथं दोषनिवर्तकत्वमित्याशङ्क्याहुः भूम्न इति । भूमा सर्वव्यापकोऽतो ये यथा भावयिष्यन्ति तत्र तथा प्रकटीभूय सम्बद्धो भविष्यतीत्यर्थः । यद्वा, भूम्न इति तादर्थ्ये चतुर्थी । तथा च 'भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयती'ति तार्तीयीकाधिकरणनिरूपितभूमशब्दवाच्यसर्वात्मभावरूपफलसिद्धये सर्ववस्तुसमर्पणं कर्तव्यमित्यर्थः । तत्राधिकरणे 'यो वै भूमा तत्सुख'मित्युक्त्वा भूमस्वरूपजिज्ञासायां 'यत्र नान्यत्पश्यती'त्यादिना सर्वात्मभावस्वरूपमेव निरूपितम् ॥ १२ ॥

ननु भगवतो दयावधि महतां कृपया गुणगानं कर्तव्यमित्युक्तम्, सा च पुनर्गुणगाने क्रियमाणे कदा भवतीत्याकाङ्क्षायामाहुः गुणेष्वाविष्टचित्तानामिति ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १३ ॥**
**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ॥ १३॥ ॥**

यदा भगवतो गुणेषु ऐश्वर्यादिषु सौन्दर्यादिषु वा सर्वदा अव्यवधानेनाविष्टचित्तानामन्यानुसन्धानरहितान्तःकरणानां 'तद्गुणेषु प्रसक्ता हि तदासक्ता भवन्ति ही'त्याचार्यवचनादासक्त्या वर्धमानया संसारो लौकिकेष्वहन्ताममतारूपः विरहक्लेशो भगवद्विरहेण क्लेशश्च तावुभौ न स्यातामित्यर्थः । 'शृण्वन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते । क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचित्तो न भवाय कल्पते,' 'परस्परं त्वद्गुणवादः,' 'येऽन्योन्यतो भागवताः,' 'तव कथामृत'मित्यादिवाक्यैर्गुणाविष्टचित्तानां संसारविरहक्लेशाभावोक्तेः । अन्यथा सर्वपरित्यागो वियोगे जीवनं च न सम्भवेत् । यद्वा, संसारस्तेन च यो विरहक्लेशो अभिलषितविनाशे तौ न स्यातामित्यर्थः । अत एवोक्तं श्रीभागवते 'तस्मिन्महन्मुखरिता' इत्यारभ्य 'तान्न स्पृशन्त्यशनतृड्भयशोकमोहा' इत्यन्तम् । अथवा संसारो भगवत्यहन्ताममतारूपस्तस्य विरहेणाभावेन यौ क्लेशौ अन्यसम्बन्धभ्रमसम्बन्धजन्यौ तौ न स्यातामित्यर्थः । गुणाविष्टचित्तत्वे सर्वथा भगवद्विषयकसंसारोत्पत्तेरन्यसम्बन्धाभावाच्च । ननु संसारः सर्वथा हेयः, कथं भगवद्विषयकः फलसाधक इति चेत्, न । भगवद्विषयककामादेरिव तस्यापि फलसाधकत्वेन

सतामपेक्षणीयत्वात् । अत एव 'कुर्वन्ति गोवत्सपद'मित्यत्र वत्सपदमात्रकरणोक्त्या 'अहमेतद्दासो अयं मम स्वामी'त्येतावान् संसारः स्थापितो भवतीति निरूपितमाचार्यैः । गुणाविष्टचित्तत्वेऽनिष्टनिवृत्तिरेव न, किन्तु इष्टप्राप्तिरपीत्याहुः **हरिवत्सुखमिति** । यथा हरेः सर्वदुःखहर्तुः भगवतः सर्वदैवान्तर्धानदशायामपि भक्तसाहित्येन सुखं पूर्णानन्दत्वाच्च, तथा गुणाविष्टचित्तानामपि अन्तस्तदाविर्भावात् सर्वदा प्रभुसाहित्येनान्तररमणेनानन्दपूर्णत्वाच्च, तेषामपि सुखमित्यर्थः । 'सदा सत्सङ्गयुक्तानामवस्थैवं यदा भवेत्, तदा दयालुता दैन्यदर्शनात् तु हरेर्भवे'दित्याशयेनाहुः **तदा भवेद् दयालुत्वमिति** । यदा पूर्वोक्तरीत्या गुणगानं सिध्यति तदा भगवतो दयालुत्वं प्रादुर्भावहेतुभूतं भवेदित्यर्थः । **अन्यथेति** । भक्तानामेवंभूतत्वाभावे भगवतोपि क्रूरता अनवेक्षकत्वेन **मता** सर्वशास्त्रसम्मता इत्यर्थः । अत एव 'नैवात्मन' इति श्लोके भगवत आत्मनः प्रभोर्निजलाभपूर्णस्य विद्वज्जनोपहृतमानाग्रहीतुः करुणया किङ्करनिवेदितानुग्राहकत्वमुच्यते श्रीभागवते । सा च पूर्वोक्तभावेनैव भवतीति सर्वमनवद्यम् ॥ १३,१३॥ ॥

नतु कालकर्मस्वभावादिभिर्बुद्धिनाशोद्वेगादिदोषैः प्रतिबन्धसम्भवे कथं गुणगाननिर्वाह इति चेत्, तत्राहुः **बाधशङ्कापि नास्त्यत्रेति** ।

**बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १४ ॥**
**भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।**
**गुणैर्हरिसुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥**

अत्र गुणगाने कालादिबाधशङ्कैव न, यतो भगवतैवोक्तं श्रीभागवते, 'न कर्हिचिन्मत्पराः शान्तरूपे नंक्ष्यन्ति नो निमिषो लेढि हेति'रिति । अन्यत्रापि 'आयुर्हरति वै पुंसां उद्यन्नस्तमयन्नसौ । तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तये'ति । एवं गुणगाने बाधाभावमुक्त्वा सर्वत्र तदवभासरूपं प्रत्युत साधकं धर्ममाहुः **तदध्यासोपि सिध्यतीति** । गुणगाने तस्य भगवतः अध्यासः सर्वत्रावभासः सोप्यवान्तरफलतया सम्यक् सिद्धिविषयो भविष्यतीत्यर्थः । अध्यासपदं घटादिसर्वपदार्थेषु भगवदवभासस्य भावप्रयुक्तत्वेन वस्तुत आसक्तिभ्रमबोधनाय । अन्यथा घटादेः पुरुषोत्तमाभिन्नत्वं स्यात् । न हि घटादिः साक्षात् तदभिन्नः, किन्तु परम्परया । तस्याक्षरात्मतया तद्द्वारा तथात्वात् । अन्यथा तावद्धर्मविशिष्टत्वं तेष्वप्यभिदध्यात् । ननूच्यन्त एव ब्रह्मधर्माः सच्चिदानन्दादयस्तेष्विति चेत्, अक्षरगतानामेव तेषां तद्वृत्तितया व्यपदिश्यमानत्वात् । अन्यथा यद्योपीडत्वादयोपि व्यपदिश्येरन् । न चेष्टापत्तिः, तदसाधारणधर्माणामन्यत्र कथनश्रवणानुचितत्वात् । किञ्च, सर्वेषां धर्माणां साधारणत्वे तद्गतासाधारणधर्माभावे लक्षणाभावादनिरूप्यत्वं भजनीयत्वं भजनीयवैशिष्ट्येनाभजनीयत्वं च स्यात् । तस्मादभेदस्याक्षरसमानाधिकरणत्वेन तद्धर्मव्यपदेश एव, न पुरुषोत्तमधर्मगन्धोपीति बुध्यस्व । नन्वैश्वर्यादयो व्यपदिष्टा

एव, किं न ते पुरुषोत्तमधर्मा इति चेत्, सत्यम्, तद्धर्मा एव, परन्तु अक्षरस्य चरणरूपत्वेन तदभिन्नतया तेषां तत्र सद्भावात्। यतो व्यासादिष्वपि तदिच्छयैव तत्सद्भावः। 'युक्तं भगैः स्वै'रिति वाक्यात्। एवं सति 'उत्तमः पुरुषस्त्वन्यः,' 'पुरुषः स परः पार्थ,' 'भेदव्यपदेशाच्चे'त्यादिश्रुतिसूत्रमीमांसया अक्षराभेदः पुरुषोत्तमभेद इति भेदाभेदवादोऽस्माकमिति दिक्। ननु 'निवृत्ततर्षैरुपगीयमाना'दिति वाक्यात् वैराग्यस्य गुणगानाङ्गत्वेन अतिदुर्लभस्याभावेङ्गहीनत्वेन कथं फलसिद्धिरित्याशङ्क्य तदप्यनेनैव भविष्यतीति साधनसाधकत्वरूपमुत्कर्षमाहुः **भगवद्धर्मसामर्थ्या**दिति। **भगवद्धर्मा**त्र गुणगान, गीयमाना ये भगवतो धर्मा ऐश्वर्यवीर्यादयः, तस्य तेषां वा **सामर्थ्या**द्वस्तुशक्तेरेव, **विषये** भगवदतिरिक्तविषये, **विरागो** रागाभावः, **स्थिरः** अन्यापरिभाव्यो भवतीत्यर्थः। 'सा श्रद्दधानस्य विवृद्धमाना विरक्तिमन्यत्र करोति पुंस' इति वाक्यात्। यद्वा, भगवद्धर्मा लीलादयः, तत्सामर्थ्यादासक्तिजननरूपादेव विषयविषयकविरागो भवतीत्यर्थः। अत एवोक्तं श्रीभागवते, 'परिनिष्ठितोपि नैर्गुण्य उत्तमश्लोकलीलया गृहीतचेताः,' 'इत्थंभूतगुणो हरि'रित्यादि। ननु भगवद्धर्मसामर्थ्येन सुखसाधनेषु विषयेषु विरागे गुणगायकानां दुःखं स्यादित्याशङ्क्याहुः **गुणैर्हरिसुखस्पर्शा**दिति। गुणानां स्वरूपाभिन्नत्वात् तैरेव हरिसुखस्य प्रभुसम्बन्धिसुखस्य हृदयदेशे **स्पर्शात्** सम्बन्धाद्विषयविरागेण शीतोष्णक्षुधादिसहनेपि कर्हिचिदपि दुःखं न भाति, भगवदानन्देन पूर्णत्वादित्यर्थः॥ १५॥

एवं सोपपत्तिकं गुणगानकर्तव्यतामभिधायोपसंहरन्ति **एवं ज्ञात्वे**ति।

**एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षं गुणवर्णने।**
**अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः॥ १६॥**

**एवं** पूर्वोक्तेन प्रकारेण **ज्ञानमार्गाद्गुणवर्णने उत्कर्षं ज्ञात्वा** सर्वापेक्षां परित्यज्य **सदा** कालाव्यवधानेन **गुणा** एव **वर्णनीयाः**। अत्र बाधकद्वयं त्यागार्थमाहुः **अमत्सरैरलुब्धै**रिति। मात्सर्यलोभयोरत्यन्तबाधकत्वात् त्याज्यत्वम्। 'निर्मत्सराणां सता'मिति वाक्यात्। लोभश्च लौकिकक्षेत्रादितुल्यतापादकतया बाधकः। अत एवोक्तं भक्तिहंसे 'वृत्त्यर्थं चेत् कृषिवल्लौकिक एवे'त्यादि॥ १६॥

ननु गुणगानं रागतानादिवशीकृतचित्ततया न कार्यं निरोधार्थत्वादिति तत्सिद्ध्यर्थं गीयमानलीलाविशिष्टस्वरूपध्यानं साधनमाहुः **हरिमूर्तिः सदा ध्येये**ति।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि।**
**दर्शनं स्पर्शनं स्पष्टं तथा कृतिगती सदा॥ १७॥**
**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः।**
**पायोर्मलांशत्यागेन शेषभागं तनौ नयेत्॥ १८॥**
**यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते।**
**तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः॥ १९॥**

हरेः प्रभोः **मूर्तिः** स्वरूपं सदा **ध्येया** स्मरणीयेत्यर्थः । नन्वदृष्टरूपस्य कथं ध्यानमित्याशङ्क्य तस्मान्याशक्यमनोरथपूर्तेः सर्वथा निःसाधनस्य गजेन्द्रस्येव रक्षार्थं भगवानाविर्भवतीति न दर्शने दौर्लभ्यमिति ज्ञापयितुं **हरी**ति । ननु योग इव कल्पितमूर्तेरुपासनायामिव सम्पादिताप्यस्तक्रियाविशेषप्रयुक्तमूर्तीनां ज्ञान इव सोपधानमूर्तेर्ध्यानमिहापि भविष्यतीत्याशङ्क्याहुः **मूर्तिरि**ति । भक्त्याविर्भूतरूपस्यैव ध्यानम्, न त्वन्यथाभूतस्येत्यर्थः । अन्यथा कल्पिताकारत्वे यथाकथञ्चिद्धरिर्ध्येय इत्येव वदेयुः । **ध्येये**ति कृत्यप्रत्ययेनावश्यकत्वं द्योतितम् । ननु ध्यानसहितगुणगाने किं भवतीत्याशङ्क्य तदवान्तरफलमाहुः **सङ्कल्पादपी**ति । ध्यानस्य का कथा, यतः सङ्कल्पाद्विचारमात्रादपि तत्र ध्यानविषयप्रभुस्वरूपे प्रादुर्भावाद्भगवतो **दर्शनं** सर्वावयवावलोकनरूपम्, **स्पर्शनं** चरणादितद्रूपम्, तथा **कृतिः** शिरसि कराम्बुजधारणादिरूपा, **गतिर्विलास**रूपा, एतत्सर्वं ध्यानपूर्वकगुणगानेन सङ्कल्पमात्रात् प्रादुर्भूतभगवत्स्वरूपे **स्पष्टमबाधितम्**, न तु भ्रमप्रतीत्या, प्रतिक्षणमनुभूतं भवतीत्यर्थः । ननु श्रुतानां पुनः कीर्तनेन स्थिरीकृतानां गुणानां गानं सम्भवतीति तदर्थं श्रवणकीर्तने आहुः **श्रवणं कीर्तनमि**ति । **श्रवणं** हि भगवद्वाचकानां पदवाक्यानां शक्तितात्पर्यनिर्धारः, तदनु **कीर्तनं** श्रुतस्य स्थैर्यसिद्धये पुनः पुनः स्वतः सर्वत्र कथनम्, एतद्द्वयमपि सङ्कोचादिकमकृत्वा कर्तव्यम् । अन्यथा श्रवणकीर्तनयोरसम्भावनाविपरीतभावने स्याताम् । अत एवोक्तं श्रीमदाचार्यैः श्रीभागवततत्त्वदीपे 'सर्वथा तद्गुणालापं नामोच्चारणमेव वा, सभायामपि कुर्वीत निर्भयो निःस्पृहस्तत' इति । श्रोतृसापेक्षं कीर्तनम्, तन्निरपेक्षं गानमिति तयोर्विवेकः । ननु 'काममयोयं पुरुष' इति श्रुतेः सर्वथा ध्याने सङ्कल्पानन्तरं यत्किञ्चित् कामसम्भवात् गुणगाने कीदृशः कामः कर्तव्य इति तमाहुः **पुत्रे कृष्णप्रिय** इति । **पुत्रे** सङ्कल्पपुत्रे सङ्कल्पोत्पन्ने **कृष्णस्य** सदानन्दपुरुषोत्तमस्य अलौकिके सर्वपरित्यागपूर्वकधर्मिस्वरूपमात्राभिलापरूपे कामे **रतिः** प्रीतिः कार्येत्यर्थः । एतेन सर्वात्मभावभावनं सर्वदा कर्तव्यमित्युक्तं भवति । तस्य भाव्यमानस्य कामस्य शरीरपरिवर्तनलक्षणं फलमाहुः **पायोरि**ति । **पायोः** सर्वशरीरगतमलाधिष्ठानस्य स्वमलांशमानेनैवाखिलशरीरलौकिकतापादकस्य सम्बन्धी यो **मलांशो** लौकिकविषयभोगजन्यस्तस्य सर्वात्मभावभावने 'सन्त्यज्य सर्वविषया'नित्यादिवाक्यैः सकारणस्य त्यागेन **तनौ** शरीरे या अलौकिककामरतिः **शेषभागं** मलरहितांशरूपं भगवत्सम्बन्धयोग्यतापादकं **नयेत्** प्रापयेदित्यर्थः । पुत्र इतिसामान्यपदमस्यार्थस्यातिगोप्यत्वेन परोक्षवादसूचनाय । नन्वेतादृशस्यापि 'तादृशस्यापि भजन'मितिवाक्याद् दुःसङ्गादिना भावनाशसम्भवादुपायमाहुः **यस्ये**ति । यस्य पुत्रादेरिन्द्रियादेर्वा भगवत्कार्ये सेवागुणगानादि स्पष्टं प्रातिकूल्येन न दृश्यते शिक्षायामपि, तदा सति सामर्थ्ये तस्य निग्रहेण मरणादिकमकृत्वापि निग्रहः कर्तव्य इत्यर्थः । अन्यथा सत्यां शक्तौ तदनिग्रहे 'अप्रतिषिद्धमनुमतं भवती'ति न्यायेन

तद्रतौ पुत्रे कृष्णप्रिय इत्यनेन विरोधापत्तिरित्यत आहुः **इति निश्चय** इति । इदमुक्तं भवति । भगवत्कार्यानुकूल्ये रतिः, प्रातिकूल्ये निग्रहः, सर्वथा असम्भवे त्यागः, शरणभावन वा कर्तव्यम्, 'प्रतिकूले गृहं त्यजेत्', 'अशक्ये हरिरेवास्ती'तिवाक्यादिति भावः ॥ १७,१८,१९ ॥

एवं निरोधे साधनद्वयं निरूप्य सर्वेभ्यः साधनेभ्यः तयोरुत्कर्षं वदन्त उपसंहरन्ति **नातःपरतरो मन्त्र** इति ।

**नातः परतरो मन्त्रो नातः परतरः स्तवः ।**
**नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥**

मन्त्रे हि कामितफलदत्वं देवतावशीकरणं च प्रसिद्धम्, तदत्र कामनाप्रसरमनोरथान्तफलसिद्ध्या अनिर्वन्धेन प्रभुवशीकरणादतः साधनयुग्माद् मन्त्रः परतरः । अविलम्बेन साधकत्वात् कर्मादिभ्य उत्कृष्टत्वेपि एतस्मादतिशयेन नोत्कृष्ट इत्यर्थः । ननु प्रभुप्रसादहेतुतया अनिर्वन्धेन स्वामिवशीकरणाच्च स्तवस्योत्कृष्टत्व भविष्यतीत्याशङ्क्याहुः **नातः परतरः स्तव** इति । स्तवस्य मन्त्रादिभ्यः प्रसादसाधकतयोत्कृष्टत्वेपि प्रभुवशीकरणाभावादेतस्मादतिशयेन नोत्कर्ष इत्यर्थ' । ननु ब्रह्मविद्याया 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः' 'ज्ञानी त्वात्मैव मे मत' इत्यादिवाक्यै. प्रभुप्रीतिसाधकतया साक्षात्कारहेतुत्वात् सकलपातकभस्मीकाराच्च उत्कृष्टत्वमित्याशङ्क्याहुः **नातः परतरा विद्येति** । विद्या हि पञ्चपर्वा, स्वसिद्धौ साक्षात्कारमात्रं सम्पाद्य तत्र लयं विधाय केवलमनसा ब्रह्मानन्दमनुभावयति । तदुक्त अस्मदाचार्यैः श्रीभागवततत्त्वदीपे 'ब्रह्मानन्दे प्रविष्टानामात्मनैव सुखप्रमे'ति, भावभावनगुणगाने स्वस्मिन् प्रभुः प्रादुर्भावं सम्पाद्य देहेन्द्रियप्राणान्तःकरणादिषु स्वरूपात्मकमानन्द पूरयित्वा सर्वैरिन्द्रियैरन्त.करणैरात्मनापि तदानन्दमनुभावयत इत्यन्येभ्य उत्कृष्टापि विद्या नैतस्मात् साधनयुग्मादुत्कृष्टेत्यर्थः । अखिलपापभस्मीकारस्तु 'दुःसहप्रेष्ठविरहे'तिवाक्यादत्राप्यवगन्तव्य. । नन्वेतत्सर्वं चित्तशुद्धौ सम्भवति, अशुद्धचित्तस्य सर्वसाधनवैफल्यात् तच्छोधकतीर्थाश्रयस्यावश्यकत्वात् तीर्थस्योत्कृष्टतामाशङ्क्य आहुः **तीर्थं नातः परात्परमिति** । तीर्थस्य सकलसाधनमूलभूतमनोमार्जकतयोत्कृष्टत्वेपि गुणगानादेः 'सत्व च शुध्यत्यचिरेण पुंस' इतिवाक्यादविलम्बेन चित्तशोधकत्वात् सर्वतीर्थरूपत्वाच्च साम्प्रत तेषां दुष्टावृतत्वेन विरोहिताधिदेवत्वेन चासाधकत्वादेतस्मात् **परात्** सर्वोत्कृष्टात् साधनयुग्मात् तीर्थं न पर उत्कृष्टमिति स्वसिद्धान्तनिष्कर्षो निरूपित इति दिक् ॥ २० ॥

स्वाचार्यचरणद्वन्द्ववन्दनादरसाधनात् । निरोधलक्षणग्रन्थ विवव्रे हरिदासकः ॥ १ ॥

**इतिश्रीमन्निजाचार्यचरणाभिषेकलब्धमहाराज्यसुखानुभूतिश्रीहरिदासविरचिता निरोधलक्षणविवृतिः समाप्ता ॥**

---

श्रीकृष्णाय नमः ।

# निरोधलक्षणम् ।

## श्रीवल्लभकृतनिरोधलक्षणविवरणसमेतम् ।

भक्तभावात्मरूपाय तन्मार्गव्यञ्जकाय च । तद्दानायात्तदीक्षाय स्वाचार्यप्रभवे नमः ॥ १ ॥
विरागादिन्द्रियाणां वै निग्रहे सति साधनैः । यमादिभिश्च विज्ञाने ज्ञाने भवति सत्फलम् ॥२॥
तदभावेन सर्वेषु प्राकृतांशानिवृत्तितः । भक्तिमार्गे कथं साक्षात् फलं भवति तत्ततः ॥३॥
निःसाधनाङ्गीकृतस्य स्यात् फलं रोधतो यथा । तदर्थं साधनं रूपं तस्य स्वाध्वनि वर्ण्यते ॥४॥

प्रथमं दशमार्थनिरूपणे निरोधशब्देन 'निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः प्रपञ्चे क्रीडनं हरे' रिति वाक्यात् साक्षाद्भगवत्क्रीडनमुक्तम् । तत्क्रीडनं लीलासृष्यन्तर्गतभक्तानां प्रपञ्चविस्मृतिपूर्वकं सकलेन्द्रियनिरोधे सति भवेदिति दशमस्कन्धे भक्तानां चित्तवृत्तिनिरोध उक्तो भक्तिमार्गे । तत्र पुनः प्राकट्यदशायां तु साक्षादङ्गीकृतानां पुष्टिमार्गीयप्रोद्गतभावाङ्कुराणां परमभाग्यवतां व्रजसम्बन्धिनां निरोधः स्वरूपेणैव कृतः, साम्प्रतं तत्प्राकट्याभावादाधुनिकानां स्वाङ्गीकृतानां स्वमार्गीयतत्साधनाज्ञानात् कदाचिद् ज्ञानरीतिनिरोधसाधनेषु प्रवृत्तिर्भवेदिति तदभावार्थं श्रीमदाचार्यचरणाः कृपया ज्ञानमार्गीयसाधननिषेधपूर्वकं स्वमार्गीयनिरोधसम्भवे सर्वथा यदपेक्षितं मूलकारणं तन्निरूपयन्ति यच्चेति ।

> यच्च दुःखं यशोदाया नन्दादीनां च गोकुले ।
> गोपिकानां तु यद् दुःखं तद् दुःखं स्यान्मम क्वचित् ॥ १ ॥

अत्रेदमाकूतम् । गोकुलं तु विविधविहरणेच्छाजनितसहजकृपया साक्षाद्भगवता पुष्टिमार्गेऽङ्गीकृतमतः स्वानन्ददानार्थं लोके प्रकटितमपि तादृशाङ्गीकाररूपबीजस्वभावजनिततद्भावनया तदनुरूपोद्गतभावाङ्कुरमेवासीदिति तद्भावस्वभावाद्दुःखमपि तत्र स्थितम्, येन साक्षाद्भगवत्प्राकट्यमभूत्, अग्रे सुखादिकमपीत्यधुना स्वकीयानामपि तादृशनिरोधमार्गिणां तादृशमेव दुःखं तत्तन्निरोधेन तत्प्राकट्यसाधकम्, अतस्तदेवैवं स्वस्मिन्सम्भावनया सर्वदा भावनीयमिति स्वकीयान् प्रति लक्षयन्ति । तथा हि । अन्वयार्थस्तु स्पष्ट एव । यदित्यनिर्वचनीयत्वमुक्तम् । चकारोऽप्यर्थकः सम्भावनायाम् । तथा च सुखं तु दुर्लभमेव । दुःखमपि चेत्यादिति । एतद्दुःखस्य ब्रह्मानन्दस्यापि तुच्छकर्तृत्वात् सर्वोत्कृष्टत्वेनातिदुर्लभाधिकारज्ञापनाय सम्भावनैवोक्ता, न तु प्रार्थनम् । तत्रापि क्वचित्

१ भगवत्प्राकट्यादीति पाठः । २ निरोधे इति पाठः ।

कदापि भविष्यति, यदि भवेत्तदा किं वाच्यमिति सर्वदोत्कण्ठापेक्षितेति सूचितम् । एवं सति एतद्भावानुरूपं दुःखमेव निरोधसाधकमिति ज्ञेयम् । दुःखं तु भगवत्प्रादुर्भावात् प्रागपि श्रीमातृचरणानां श्रीनन्दादीनां च पुत्रोत्पत्तितल्लालनक्रीडावलोकनादिविविध-मनोरथात्मकमासीदेव, तथैव श्रीस्वामिनीनामपि प्रभुप्राकट्याश्रया तत्तन्मनोरथात्मकं तथा । ततः प्राकट्यानन्तरमपि बाल्ये पूतनादिदर्शनजनितभयेन क्रूरदृष्ट्यादिपतनरूपम् । ततः प्रभोरतिचञ्चलस्वभावेन शृङ्ग्यग्निभयरूपं क्रीडासक्त्या भोजनादिविलम्बजनितार्ति-रूपं च । श्रीस्वामिनीनामपि प्राकट्यानन्तरं क्षणमात्रावलोकनाभावेन स्थातुमशक्त्या विविधकार्यव्याजेन मुहुर्मुहुः श्रीमातृचरणसमीपागमनं तद्धेतुकमेवेति तादृशं तथा । प्रातर्यावत्पर्यन्तमुन्निद्रायतविकसन्नवसरोजदलसदृशमीक्षणयुगलमुन्मीलयेत्प्रभुस्तावत्तत्पा-सहिष्णुतया 'चिरविरहे'त्युक्तप्रार्थनहेतुरूपं च । ततो गोचारणगमनादिषु प्रातरारभ्य सन्ध्यावधि तददर्शनजनिततत्तन्मनोरथात्मकं च । अग्रे नादनिष्ठामृतपानानन्तरं स्वामिनीनां तु स्पष्टमेव । अग्रेऽपि रासलीलायां साक्षात् पूर्णरसदानपर्यन्तं तिरोधानजनितविचित्र-भावात्मकं च । पुनरग्रे विप्रयोगस्फूर्तौ स्पष्टमेव । ततस्तस्य 'संस्मृत्य संस्मृत्ये-' त्युक्तत्वात्तल्लीलानुस्मरणकीर्तनादिना सर्वदा तदात्मकत्वात्तदस्फूर्तौ दुःखभानाभावाद्यथा पूर्वमेव प्रभुस्थितिं मन्यमानानां भक्तानां श्रीमदुद्धवोपदेशेन महद्दुःखार्णवनिमज्जनं चेत्यादि रूपम्, तथा चेदग्रे दुःखे जाते पूर्णो निरोधः सिद्धो भवतीति श्रीमदाचार्यैरेतद्दुःखान्त-र्गतानिर्वचनीयसुखानुभवहेतुभावात्मकैः कृपया स्वकीयानामप्येवमेव तदपेक्षितमिति तदेव सम्भावनीयमिति तथोक्तम् ॥ १ ॥

एवं तेषां दुःखं सम्भाव्य तत्तदनन्तरजनितमनिर्वचनीयं तत्तत्सुखमपि तद्दुःखानु-भवे सम्भावयन्ति गोकुल इति ।

**गोकुले गोपिकानां च सर्वेषां व्रजवासिनाम् ।**
**यत्सुखं समभूत् तन्मे भगवान् किं विधास्यति ॥ २ ॥**

तद्दुःखहेतुकप्राकट्यानन्तरं महोत्सवादिवात्सल्यमारभ्य प्रेङ्खपर्यङ्कान्दोलनादिरिङ्गण-क्रीडादानदधिदुग्धादिचौर्यान्तर्गतयावत्केलिवत्सगोचारणान्तनिलायनप्रभृतिवेणुगीतव्रत-गोवर्धनोत्सवरासान्तं स्वस्वमनोरथपूरकं तथा । तदनन्तरं विप्रयोगे जाते तल्लीलास्मरणेन तदात्मकतया दुःखभानाभावात् तदस्फूर्त्या यथा पूर्वबुद्ध्या स्थितं सर्वविलक्षणं च श्री-स्वामिनीनां तथा सर्वेषां व्रजवासिनां च श्रीगोकुले यत्सुखं सम्यगनिर्वचनीय-मभूत्तन्मे भगवान् किं विधास्यतीति पूर्वोक्तरीत्यैव तदभिलाषोपेक्षित इति भावः । यद्यप्यतिदुर्लभं तथापि सर्वसामर्थ्यवत्त्वेन पूर्वं यथा स्वयमेव कृतवांस्तथाधुनापि करिष्यतीति ज्ञापनाय भगवत्पदम् ॥ २ ॥

**गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते ।**
**यथा तथा शुकादीनां नैवात्मनि कुतोऽन्यतः ॥ ६ ॥**

**गोविन्दस्य** गोकुलेन्द्रस्य रसात्मकलीलाविशिष्टस्य **गुणगाने सुखावाप्तिर्यथा** निरुद्धानां जायते प्रकर्षेण, तथा पूर्णज्ञानिनां तत्राप्येकान्तभक्तानां **शुकादीनामात्मनि** आत्मसुखानुभवदशायां नैव भवति, **कुतोन्यतः** भक्तिरहितेष्वित्यर्थः । एवेति निश्चयार्थः । गानद्वारा सुखप्राप्तौ प्रकर्षः साक्षात्स्वरूपप्राकट्यजनित एवेति ज्ञेयम् । यद्यपि श्रीशुकैरेवेयं लीला वर्णिता, भक्तिरसेनापि ते पूर्णाः, तथाप्येतदानन्दानुभवस्तेषामपि न जात इति मुख्यतया शुकपदमेवादौ दत्तम् । एवं सति तत्कृपयैवायमानन्दः प्राप्य., नान्यथा । तत्रैतद्दुःखमेव साधकमिति तस्यैव परमपुरुषार्थत्वम्, नान्यस्येति । यत्रात्मसुखापेक्षया तद्दुःखस्यापि सर्वोत्कृष्टत्वम्, तत्र किमु वक्तव्यः सुखोत्कर्ष इति कैमुतिकन्यायेनापि ज्ञाप्यते ॥ ६ ॥

ननु परमपुरुषार्थत्वेन सर्वदा तेषु दुःखमेव स्थापयति भगवान्, किं वा कदापि बहिः सुखमपि प्रयच्छति, तत्राहुः **क्लिश्यमानानिति** ।

**क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ।**
**तदा सर्वं सदानन्दं हृदिस्थं निर्गतं बहिः ॥ ७ ॥**

एवं **क्लिश्यमानान्** साक्षात्स्वरूपसम्बन्धाभिलाषजनितप्रचुरार्त्या प्रतिक्षणमूर्छाजागरणाद्यवस्थाभेदेनानिशं क्लेशानुभवं कुर्वतः स्वीयान् **जनान् दृष्ट्वा** प्रभुर्यदा **कृपायुक्तो भवेत्तदा सर्वं सदानन्दं** सर्वांशपूर्णं सदानन्दस्वरूपं तत्तदिन्द्रियेषु भावात्मकतया सर्वांशेनानन्दपोषार्थं **हृदिस्थ**मलौकिककामरूपं वा साक्षात्स्वरूपं **बहिर्निर्गतं** प्रकटं करोति, बहिरानन्ददानार्थं हृदयात् प्रकटो भवतीत्यर्थः ॥ ७ ॥

एवमयमानन्दः कृपैकसाध्य इत्यतिदुर्लभत्वमाहुः **सर्वानन्दमयस्येति** ।

**सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभः ।**
**हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥**

ब्रह्मानन्दपर्यन्तं यत्र यत्रानन्दो गणितस्तन्मयस्यापि **कृपानन्दः** सुतरां दुर्लभः । अथवा सर्वेषां तन्मयस्य स तथा । मुक्त्यादिषु य आनन्दो भवति, सोप्येतदंश एव, परन्तु स साधनैर्भवति, अयं कृपैकसाध्यः, यतो दानं विना न भवति, अतः सुतरां दुर्लभः, न केनापि प्राप्तुं शक्यः । अथवा सुतरां दुःखेन शोभनेन वा लभ्यो लाभो यस्येति । समस्तसाधनासाध्यत्वादन्येषां दुर्लभः, तद्गतानां सुलभ इति सूचितम् । तत्प्राप्तिप्रकारमाहुः **हृद्गत इति** । तादृग्दुःखजनिततापार्त्या मिथो गुणानुवादेन स्वगुणान् श्रुत्वा हृद्गत एव पूर्णः सकलेन्द्रियव्याप्त, तत्रनितोच्छलितरसाब्धिपूरेणान्तःपूर्णः सन् बहिः स्वस्वरूपं

प्रकटीकृत्य जनान् स्वीयान् स्नावयन्ते, तत्तद्रसाब्धितरङ्गेषु तरणं कारयति । यथा यथा सकलेन्द्रियाणां दुःखं जातम्, तथा तथैव तेषु स्वानन्दं पूरयतीति भावः ॥ ८ ॥

अतः परमेतत्कथनप्रयोजनमाहुः अहमिति ।

**अहं निरुद्धो रोधेन निरोधपदवीं गतः ।**
**निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ ९ ॥**

अहं स्वयं साक्षात् प्रभुणा पूर्वं निरुद्धः, निरुद्धानां मार्गेऽङ्गीकृतः, पश्चाद्रोधेन गुणगानद्वारा सकलेन्द्रियाणां रोधेन निरोधस्य पदवीं गतः, फलदशां प्राप्तः । निरुद्धेति पाठे निरुद्धानां पदवीं गतः, तन्मध्यवर्ती सन् सदानन्दानुभवं प्राप्तः । अतस्तदाज्ञया निरुद्धानामाधुनिकानां रोधाय तमेव निरोधं वर्णयामि, कथयामि । एतेन मदुक्तरीतिकरणेन सर्वथा निरोधसिद्धिर्भविष्यतीति ज्ञापितम् । ते इति पाठे तुभ्यं त्वदर्थं वर्णयामीति कमपि भाग्यवन्तं प्रत्युक्तमित्यन्येषामानुषङ्गिकी शिक्षा सूचिता । किञ्च, यतोऽहं प्रभुणा साक्षात् स्वयं निरुद्धः, अतो मम वर्णनशक्तिः, नो चेत्, केन वक्तुं शक्य इत्यपि सूच्यते ॥ ९ ॥

एवं निरोधस्वरूपमुक्त्वा सर्वथा कर्तव्यत्वमाहुः तस्मादिति ।

**तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ।**
**सदानन्दपरैर्गेयाः सच्चिदानन्दता ततः ॥ १० ॥**

यस्मादेवं सर्वोत्कृष्टत्वेन पराकाष्ठापन्नः सर्वदुर्लभः कृपानन्दः तस्मात् सर्वं परित्यज्यैतज्ज्ञापकत्वाभावात् सर्वं सवासनं त्यक्त्वा निरुद्धैः उद्भूतभावाङ्कुरैः सर्वदा गुणा एव गेयाः, तेषामयमेव सहजो धर्म इति तदभिलाषिभिरपि तदेव कर्तव्यम्, नान्यदिति भावः । गुणास्तु तत्तल्लीलात्मका बहुविधा इति कीदृशानां गानं कर्तव्यमित्यपेक्षायां विशेषणमाहुः सदानन्दपरैरिति । सदानन्दः साक्षाद्रसात्मकः पुरुषोत्तमः, तत्परैस्तन्निष्ठैः सद्भिः, न त्वितरस्वरूपनिष्ठैः । रसस्वरूपनिष्ठत्वकथनेन गुणा अपि रसात्मका रासादिलीलारूपा एव गेया इति सूचितम् । सदानन्दपरैस्तादृशैर्भगवदीयैः सहेति वा योज्यम् । तेन तादृग्व्यतिरिक्तैः सह न गेया इत्युक्तं भवति । तत्र कथने सर्वथा हानिरेवेति भावः । सर्वदेति क्षणमात्रमप्यन्यथाभानमग्नन्यगन्धाभावार्थम् । ततः सच्चिदानन्दता भवति, सर्वत्र भगवदावेशात्तत्स्वरूपात्मकतैव भवेदिति भावः । अथवा सच्चिदानन्दता भद्भावसम्पत्तिः, तेनान्तःसाक्षात्पुरुषोत्तमाविर्भावयोग्यता भवति, तस्य तदधिष्ठानत्वादिति सूचितम् । कुत्रापि स्वत इति पाठः । तदा सच्चिदानन्दता भगवद्धर्मरूपता, सा स्वस्मिन्मार्गे स्वत एवानायासेनैव भवतीत्यानुषङ्गिकफलमुक्तम् । यत्र ज्ञानमार्गीयपरमफलमपि गुणगानस्यानुषङ्गिकं फलम्, तत्र साक्षात्फलस्वरूपं किमु वाच्यम् ॥ १० ॥

ननु निरुद्धानामेव सर्वपरित्यागपूर्वकमेतदुच्यते, न अन्येषां साधननिष्ठानाम्, तत्किमिति तत्राहुः हरिणेति ।

**हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।**
**ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ ११ ॥**

**हरिणा** सर्वदुःखहर्त्रा ये विशेषेण त्यक्ताः, स्वानन्ददानेन दुःखदूरीकरणेच्छाऽभावात् त्यक्ताः, **ते तु भवसागरे मग्नाः**, साधनान्तरप्रवृत्ता अपि एतदानन्दाभावात् तन्मग्ना एवेति भावः । ये तद्दानेच्छया **निरुद्धाः** पुष्टिमार्गाङ्गीकृताः, केवलस्वरूपनिष्ठभानैकसाधनाः, **त एव** तत्कृपया तादृश **मोदमायान्ति,** बाह्याभ्यन्तर रसपूर्णाः सन्तस्तदानन्दसमुद्रमग्ना एव तिष्ठन्ति, **तदप्यहर्निशम्,** क्षणमात्रमपि न तदानन्दविच्छेद इति भावः । अतो निरुद्धानामेवायमानन्दः, न साधननिष्ठानामपीति तदर्थमेवोच्यत इति सर्वं सुस्थम् ॥ ११ ॥

ननु निरुद्धानामपि पूर्वस्थितससारस्य विद्यमानत्वात् तत्तद्विषयासक्तेन्द्रियाणां तद्विस्मरणमशक्यमिव भाति, तदभावे गुणगानादिप्रवृत्तिरप्यशक्या, तत्राहुः **संसारेति** ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्नि द्वादश योजयेत् ॥ १२ ॥**

निरोधार्थं केवलपुष्टिमार्गेऽङ्गीकृतस्य साधनान्तरप्रवृत्तिनिवृत्त्योरप्रयोजकत्वादङ्गीकारस्वभावेन यथा स्वरूपे स्नेहात्मिका प्रवृत्तिर्भवति, न तथा विषयेषु, किन्तु तत्सम्बन्धदोषो निवारणीय इति **संसारावेशदुष्टानां** तत्तद्विषयभोगादिषु अहन्ताममतात्मकावेशेन दुष्टानां तज्जनितबन्धेन दुःखज्ञानाभावेन तन्निवर्तकधर्मविमुखानामि**न्द्रियाणां हिताय** प्रीतये पूर्वोक्तखेदेन हेतुना **कृष्णस्य** सदानन्दस्य **सर्ववस्तूनि** प्रकरणादेकादशेन्द्रियाणि सम्पूर्णस्वरूपं च, तानि प्रत्येकसमुदायाभ्यां तत्तन्मनोरथात्मकभावनया भूम्नी समस्तस्वेन्द्रियविषयाधिष्ठानानि कृत्वा स्वकीयान्यात्मसहितानि **द्वादश** तत्र **योजयेत्** । यद्यपि निरुद्धस्य स्नेहस्वभावेनैव भगवत्स्वरूपासक्तिः सकलेन्द्रियेषु भवतीति नियमविधिरयम्, तथापि संसारावेशिनामतिक्लेशं वीक्ष्य एतत्सम्बन्धेन ममापि क्लेशदु खमेव भविष्यति, न तु स्नेहासक्तिजसुखमिति भयेन ततः सांसारिकधर्मेभ्यः प्रत्याहृत्य समस्तेन्द्रियाणि तत्र **योजयेत्** । यत्किंचित्सम्बन्धेनापि त्रिभो मा भूदिति कर्तव्यविधिरुक्त । किंच, इन्द्रियाणां स्वस्वविषयप्रवृत्तिसहजा, तया चातितुच्छ विषय त्याजयित्वा परमानन्दरूपविषयेषु तानि योजनीयानि । तथा चोक्तं 'मक्षण्वता'मित्यस्य विवरणे 'इन्द्रियवतामिदमेव फल'मिति, 'भगवता सह संलाप' इत्यारभ्य 'एवं तद्गानन सदे'त्यन्तम् । अत्र तु द्वादशैव तद्विषया उक्ता इत्यत्रापि तात्पर्य्यमुक्तम् । एवं सत्याधुनिकानामपि सांसारिकधर्मेभ्यः परावर्त्य तानि भगवति

योजनीयानीति शिक्षा सूचिता । एवं योजनेन तदासक्तौ सत्यां साक्षात्स्वरूपसम्बन्धाभावात् तद्गुणेष्वेवासक्तिवशादावेशो भवेत्, न त्वन्यत्रेति भावः ॥ १२ ॥

ननु एवं योजनेपि तत्तदिन्द्रियाणां पूर्वसंसाराध्यासात् तत्तद्विषयेषु यत्किञ्चिदहन्ता-ममतात्मकः संसारस्तिष्ठेदेवेति तत्त्यागजनितक्लेशोऽपि तत्त्यागाभावाद् भवेदिति कथं सुखम्? तत्राहुः गुणेष्विति ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १३ ॥**

एवमासक्त्या गुणगाने क्रियमाणे तत्रैवाविष्टचित्ता भवन्तीति **मुरवैरिणस्तत्र प्रति-बन्धनिवर्तकस्य गुणेष्वाविष्टचित्तानां** तेषां संसारः पूर्वोक्तस्तत्त्यागजनितक्लेशश्च तौ न स्याताम् । तेषां प्रपञ्चविस्मृतिपूर्वकं गुणगानाविष्टत्वेन पूर्वोक्ताध्यास एव नश्यति, कुतस्तत्त्यागजक्लेशसम्भावनेति भावः । एतदेवोक्तं वेणुगीते 'क्रीडास्तन्मयतां ययु'रित्यस्य विवरणे 'जाग्रत्स्वप्नेषु क्रीडामेव पश्यन्ती'ति । ननु तथापि पूर्ववद्विषयभोगेष्वेव तेषामा-सक्त्या तत्सुखमपि पूर्वोक्तविषयजन्यसुखसदृशमेवेति चेत्, तत्राहुः **हरिवदिति** । पूर्वोक्त-भोगासक्त्या संसार एव । अत्र तु हरिर्यथा सर्वदुःखहर्ता नित्यालौकिकरसात्मकानन्दरूपश्च, तथा तस्य सुखमप्यग्रे दुःखसम्भावनारहितं संसारनिवर्तकं तादृशमेव, न तु पूर्वसदृशं भवतीति महद्वैलक्षण्यमुक्तम् ॥ १३ ॥

एवं सर्वेषां विषयवासनारहितदृढासक्तौ यद्भवेत्तदाहुः तदेति ।

**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।**
**बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १४ ॥**

एवं प्रचुरतापात्मकभावासक्त्या सकलेन्द्रियाणां प्रपञ्चाध्यासरहितः पूर्णो निरोधः स्वरूपात्मकतारूपो यदा सिध्येत्तदा दयालुत्वं प्रभोर्भवेत्, स्वास्थ्यादिकरणेन प्रतिबन्धको न भवेदित्यर्थः । अन्यथा तादृशासक्त्यभावे क्रूरता निश्चिता । साक्षात्स्वीय-त्वेनाङ्गीकृतस्य स्वधर्मरूपभगवदभिप्रेताकरणे प्रभोराक्रोशो भवतीत्यपि क्रूरपदेन सूचितम् । *ननु सर्वत्यागेन गुणगानमात्रप्रवृत्तौ कालकर्मादिकृतबाधः सम्भवेत्तत्राहुः* **बाधशङ्केति** । बाधस्य शङ्कापि नास्ति । कुतो बाधः । अत्र गुणगान इत्यर्थः । सकलेन्द्रियेषु भगवत एवा-विष्टत्वेन स्थितत्वाद्बाधः केन कर्तुं शक्यः, स्वयमपि भगवान् न शक्नोति, तदा कोन्य इति नैव शङ्कोदयः । एतदेवोक्तं सन्न्यासनिर्णये 'अत्रारम्भे न नाशः स्या'दित्युपक्रम्य 'हरिरत्रे'-त्यन्तम् । अत्रेति कथनात् तत्तज्ज्ञानमार्गीयभावनेषु बहवो विघ्नाः सन्तीत्यपि ज्ञाप्यते । ननु तथापि स्वरूपमिलनाभिलाषस्य विद्यमानत्वात् स्वस्य भगवता सह भेदज्ञानं तिष्ठत्येव, तच्च तदभिमानेन सम्भवति, न च बाधरूप एवेति चेत्तत्राहुः तदध्यास इति । यथा

१ मत्तासीति पाठः । २ भगवद्विपयभोगे इति पाठः ।

ज्ञाने 'सोऽहं'मिति स्फुरति, तथा स्वस्मिन् सर्वत्र देहादौ तस्य भगवत एवाध्यासः, तद्रूपत्वेनैव भानं 'कृष्णोऽह'मित्यादिरूपः सिध्यति, न तु स्वस्मिन् भिन्नत्वं स्फुरति । सिध्यति सिद्धिं प्राप्नोतीत्युक्त्या यथा ससारावस्थायां तादृशाध्यासः स्थितः, तथेदानीन्तनावस्थायां सत्यां साक्षाद्भगवत्स्वरूपाध्यास एव भवतीति स्वभावपरावृत्तिर्जायत इति सूच्यते । एतदेव 'तन्मनस्का' इत्यस्य विवरणे द्रष्टव्यम् ॥ १४ ॥

ननु तथापि वैराग्याभावे कथं पूर्वोक्तप्राकृतविषयाध्यासनिवृत्तिस्तत्राहुः भगवद्धर्मेति ।

**भगवद्धर्मसामर्थ्याद्विरागो विषये स्थितः ।**
**गुणैर्हरेः सुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥**

**भगवतः** सकलैश्वर्यादिगुणयुक्तस्य **धर्माः** गुणगानद्वारान्तःप्रविष्टास्तेषां **सामर्थ्याद्विषये** प्राकृते तद्भावत्वेन भगवत्यपि वा तादृशस्य **विरागः स्थितो**ऽस्ति । **स्थिर** इति वा पाठः । विषयत्वेन सर्वत्र वैराग्यमेव, किन्तु तेषां पराकाष्ठापन्नालौकिकानन्दरूपे साक्षाद्भगवति निरुपधिस्नेहेन केवलतदीयत्वबुद्ध्यैव तथा प्रपन्नतेति 'सन्त्यज्य सर्वविषया'निति निरूपणेन ज्ञायते । अत एव भगवानपि स्वयं कृपया तादृशानन्दमनुभावयतीति सर्वमवदातम् । तर्हि दुःख कथं भवति ? तत्राहुः **गुणैरि**ति । **हरेः** सर्वदुःखहर्तुर्**गुणैः सुखस्पर्शान्न** कर्हिचिद्दुःखमानम् । तेषामन्तस्तत्स्वरूपानन्दपूर्णानां सर्वदा तदात्मकतया दुःखस्य भानमेव नास्ति, कुतस्तत्सम्भावनेति भावः । तापात्मकं यद् दुःख दृश्यते तस्य रसरूपत्वात् सुखरूपत्वमेव, न दुःखरूपत्वमिति ज्ञेयम् ॥ १५ ॥

अतःपरमुपसंहरन्ति **एवं ज्ञात्वे**ति ।

**एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षो गुणवर्णने ।**
**अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥**

साक्षाद्भगवदानन्दस्य सर्वेन्द्रियास्वाद्यत्वनिरूपणेन तत्साधनरूपगुणगानस्य सुखरूपत्वेन च ज्ञानफलस्याक्षरलयपर्यवसायित्वात् तत्साधनस्य च कष्टसाध्यत्वाच्च ज्ञानमार्गाद्गुणवर्णने महोत्कर्ष इति ज्ञात्वा निरुद्धैः साक्षाद्भगवद्भावरूपाङ्गीकारादारभ्य सर्वपरित्यागेन गुणा एव वर्णनीयाः, न त्वन्यत् । दृढासक्त्यनन्तरं तत्प्रभावात् स्वयमेव गुणगानं भविष्यति, मार्गत्वं तदभावादन कर्तव्यविधिरुक्त इति सर्वमनवद्यम् । तत्र प्रतिबन्धकरूपमान्तरं दोषद्वयं सर्वथा त्याज्यमित्याहुः **अमत्सरैरि**ति । मात्सर्यं परोत्कर्षासहनं लोभश्च तद्रहितैः कर्तव्यम् । भगवदीयेषु मात्सर्येण सौहार्दाभावे गुणवर्णनमशक्यम्, लोभे तु स्वार्थार्थमेवेति कुतस्तदावेशः, प्रत्युत सर्वथानुचितत्वाद्भगवद्भक्तानां सर्वस्वदानेऽपि सर्वथा दोषद्वयं त्यक्तव्यमिति भावः । **सदे**ति कार्यान्तरव्यासङ्गे भावशैथिल्यासम्भावनोक्तम् ॥ १६ ॥

ननु श्रीमुखावलोकनादीनां भावजनकत्वेन सर्वदा भगवत्स्वरूपसेवैव कर्तव्येति भक्तिसिद्धान्तः, प्रकृते मुख्यतया गुणगानमेवोच्यते तत्कथमित्याशङ्क्य तत्राहुः **हरिमूर्ति-रिति** ।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।**
**दर्शनं स्पर्शनं स्पष्टं तथा कृतिगती सदा ॥ १७ ॥**
**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ।**
**पायुर्मलांशत्यागेन शेषभावं तनौ नयेत् ॥ १८ ॥**

अत्रेदं प्रतिभाति । भगवानुद्धारार्थं मर्यादया सर्वानेवाङ्गीकरोति । तेषां स्नेहरूपा मानसी सेवा फलरूपेति तत्साधनत्वेन मार्गनिष्ठया सेवाकरणमावश्यकम् । येषां साक्षात्पुष्टिमार्गे निःसाधन एवाङ्गीकारस्तेषां तदात्व एवोद्भूतस्नेहभावाङ्कुराणां स्वरूपसम्बन्धाभिलाषेण 'भगवता सह संलाप' इत्यादिरूपा भावनैव जायते, भावना तु मनोधर्मः, तद्भावनायां मनसस्तत्परता भवतीति तद्रूपा मानसी सेवा जायते इति पूर्वोक्तसेवाया अधुना प्रयोजकत्वाभावात्तदार्त्यर्थं गुणगानमेव मुख्यमिति तदेवोक्तम् । अत एव भगवद्वरणानन्तरमेवोद्भूतभावाभिः कुमारिकाभिः पूजादि सर्वं विहाय गुणगानमेव कृतमिति 'भूयान्नन्दसुतः पति'रित्यत्र विवरणे विवृतम्, साधनमार्गीयशरणागतानामपि साधनरूपसेवाकरणेन स्नेहानन्तरभावोत्पत्तौ गुणगानद्वारा तदार्त्यर्थं त्याग एवोक्तो भक्तिवर्धिन्यां 'ताद्दशस्यापी'त्यारभ्य 'त्यागं कृत्वे'तीति सर्वमनवद्यम् । किञ्च, पूर्वोक्तसाधनरूपसेवाकरणेन स्नेहभावजनितं तापात्मकं दुःखं जायते, तद्दुःखनिवृत्तिस्तु विरहानुभवे गुणगानेनैव भवतीति तदेव मुख्यत्वेनोक्तम् । तथा च यतस्ताद्दशपुष्टिमार्गाङ्गीकारस्वभावोद्भूतस्नेहभावाङ्कुरजनितमनोरथप्रकारेण **हरिमूर्तिः सदा ध्येया** भावयितुं योग्या भवति, अतस्तज्जनिततापनिवृत्त्यर्थं तदार्त्यर्थं च गुणगानमेवोक्तमित्यन्वयः । तर्हि ज्ञानमार्गेपि ध्यानमेव क्रियते, ततो गुणगाने को विशेषस्तत्राहुः **सङ्कल्पादिति** । सङ्कल्पात्पूर्वोक्तप्रकारकविविधमनोरथकदम्बादपि तत्र भावनायां भावात्मकतया साक्षात्प्रकटस्य भगवतो **दर्शनं स्पर्शनं** स्पष्टमनुभूतं भवति, तथैव **कृति**-स्तदन्तिके गतिश्च, तथैव **श्रवणं** तत्कूजितानां, **कीर्तनं** भगवता सह संलापादिरूपं च तथा । पूर्वोक्तज्ञानसाधनध्याने तु न तथेति स्पष्टमित्युक्तम् । तत्र तु प्रत्यक्षेपि आत्मनि न तथानुभवः । गाने तु मदत्समानादपि स्पष्टमनुभूतं भवतीत्यपिशब्देन द्योत्यते । एवं भावनायां प्रकटीभूय तापात्मकं दुःखं हरतीति ज्ञापनाय **हरिमूर्तिरित्युक्तम्** । ननु भगवदङ्गीकारेण तत्कृपया एतत्सर्वं भवेदिति 'कृपायुतो यदा भवे'दित्यनेनोक्तम्, परन्तु तत्र भगवत्कृपायां मदत्कृपा पूर्वं हेतुत्वेनोक्ता 'महतां कृपये'त्यनेनेत्यस्य तदधीनत्वेन तत्कृपाभावे स कथं प्राप्येतेत्यत आहुः पुत्र इति । यतः पूर्वोक्तप्रकारान्तु परकाष्ठापन्नरसभोक्तारो मात्सर्यादिदोषरहिता भगवत्कृपाविषयेषु मद्जनसम्बन्धिन इति तेषां

तादृशे कृष्णप्रिये कृष्णः प्रियो यस्य कृष्णस्य फलदानसंमुखस्य प्रिये वा पुत्रे पुत्ररूपे रतिः प्रीतिरेव भवति । स्वप्रियप्रीतिहेतुत्वेन कृपया भावदानात्तेषां गुरुत्वात्तस्मिन् पुत्रत्वं सिद्धमेवेति तद्रूपत्वमुक्तम् । तासां गुरुत्वं तु सन्न्यासनिर्णये 'कौण्डिन्यो गोपिका' इति स्फुटीकृतम् । किञ्च, यथा पुत्रस्य कामप्यार्तिं दृष्ट्वा तस्मिन् वात्सल्येन तदुपचारः क्रियते, तथात्रापि तादृशीमार्तिं दृष्ट्वा वात्सल्येन तद्दानं तैरपि क्रियत इति ज्ञापनाय पुत्ररूप इत्युक्तम् । अन्यच्च, पुत्रे यथा तद्विहितविविधापराधादपि वत्सलतैव भवति, तथा तादृशे कृपापात्रे प्रीतिहेतोरपि तथोक्तम् । प्रीतिरपि तेषां भावात्मिकैव भवति, न तु तद्रहितेति ज्ञापनाय रतिपदमुक्तम् । रतिर्हासश्चेति तद्रूपत्वं तस्याः स्पष्टम् । एवं सति तेषामपि कृपा तादृशे जायते इति स रसोपि तेन प्राप्यत इति सुष्ठूक्तं तथा । किञ्च, यथा तादृशानां तादृशे भक्ते पुत्रभावस्तथा तस्यापि तादृशेषु भक्तेषु सर्वदा मातृभाव एव स्थापनीय इत्यपि सूचितम् । अथवाऽत्रायमपि गूढाभिसन्धिरनुमीयते । कृष्णप्रियास्तु बहुविधाः, परन्तु स्फुरत्कृष्णप्रेमेति श्लोकोक्तरूपं कृष्णस्यानन्दरसात्मकस्य प्रियत्वं श्रीमदाचार्येष्वेव विलसति नान्येषु, तद्धेतुकं साक्षात् श्रीस्वामिनीनामपि प्रियत्वं तादृग्वात्सल्यं तेष्वेव सम्भवति, नान्येषु । यतः श्रीमदाचार्याणामेव तद्भावात्मकत्वं तन्मध्यपातित्वं च विजयते । तथा च कृष्णस्य प्रिये वल्लभे मयि पुत्र इव रतिस्तेषां वर्तत इति मदङ्गीकृतेन्यस्मिन्नपि तादृशे भविष्यतीति भावः । अथवा कृष्णप्रिये मयि रतिर्वर्तत इति कथनात् स्वस्य तद्भावात्मकत्वात्तदन्तर्गतत्वाच्चाधुनिकानां स्वकृपयैव भविष्यतीत्यपि सूचितम् । एवं तत्कृपया जनितो रतिरूपो भावो निखिलं प्राकृतांशं त्याजयित्वा क्रमेणालौकिकं साक्षाद्भगवदात्मकं तत्तद्विषयमिन्द्रियेषु योजयतीति सदृष्टान्तं निरूपयन्ति वायुरिति । वायुः सर्वदेहेन्द्रियव्यापी भुक्तमात्रनिखिलवस्तूनां यो मलांशस्तस्य त्यागेनाधोद्वारेण बहिरुत्सर्गेण शेषभावं सारांशं तनौ नाडीद्वारा तत्तदधिष्ठाने यथा प्रापयति तथायमपि प्राकृतांशं त्याजयित्वा शेषभावं सर्वं भगवति नयेदित्यन्वयः । तनावित्युपलक्षणम्, किन्तु देहप्राणेन्द्रियादिष्वित्यर्थः । अथवा ज्ञानमार्गीयस्य योगादिधारणायां प्राणायामादिकरणेन सकलेन्द्रियाणां तत्तत्प्राकृतविषयग्रहणादिरूपं मलांशं त्याजयित्वा वायुः शेषभावभूतं प्राकृततद्विनीभूतं आत्मानं तानि च परमात्मनि यथा योजयति तथात्रापि स भाव इति ज्ञेयम् । [1]भागमिति पाठे स्पष्टमेव । अथवा वायुर्यथा कलुषितजलानां यो मलांशस्तन्मध्यस्थः पङ्कस्तस्य त्यागेन शेषभागं मलांशावशिष्टं जलं तनौ स्वस्मिन्नयति शोषणद्वारा गृह्णाति, तथा स भावोपि प्राकृतांशत्यागेन शेषभागं सर्वं तनौ स्वदेहादिरूपे प्रभौ प्रापयेत्, तदात्मको भवतीति भावः । अथवा तनौ स्वतनौ यत्सर्वं शेषभागं तनुव्यतिरिक्तं मनःप्रभृति तत् सकलं नयेत्, हरिं प्रापयेत्, एतत्स्वरूपात्मको भवतीति पूर्ववत् । एवं पूर्णो निरोधः सिद्धो भवति ॥ १७,१८ ॥

1. विशर्गमिति पाठः ।

ननु तद्भावस्वभावात्स्वत एव भविष्यतीति कर्तव्यविधिः किमर्थमुच्यते ? तत्राहुः यस्य वेति ।

**यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते ।**
**तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥**

वेत्यनादरे । यद्यपि तद्भावस्वभावादेव तादृशस्य सर्वं भवति, तथापि लौकिकजनानुरोधेन यस्येन्द्रियस्य **भगवत्कार्यं** भगवदावेशेन तत्कृतिरिव कृतिर्यदा **स्पष्टं** प्रकटं **न दृश्यते तदा** लौकिकसर्वपरित्यागेन पूर्वोक्तैः भगवदीयैः सह गुणगानेन तस्येन्द्रियस्य **विनिग्रहो**ऽन्यतः प्रत्यावर्त्य स्वरूपग्रहणैकस्वभाव एव **कर्तव्य** इत्येतदर्थं कर्तव्यविधिरुक्त इति निश्चयो ज्ञेय इत्यर्थः ॥ १९ ॥

एवं पूर्णं निरोधस्वरूपं निरूप्य तत्साधकत्वाद्गुणगानस्य सर्वोत्कृष्टत्वमाहुः **नातः परतर** इति ।

**नातः परतरो मन्त्रो नातः परतरः स्तवः ।**
**नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥**

मन्त्रस्तवविद्यातीर्थादीनां लोकवेदोक्तफलप्रापकत्वाल्लोके वेदे च महत्त्वं भवतु, न तु तदतिरिक्ते । गुणगानस्य तदतीतफलप्रापकत्वात्तदतीतसर्वोत्कृष्टत्वमपीत्येतज्ज्ञापनार्थं फलस्तुतिरुक्ता । यद्यपि मन्त्रादिद्वारा चित्तशुद्ध्या निग्रहादिकं भवति, तथापि महता क्लेशेन, तत्राप्येतदपेक्षया फलं स्वल्पतरं, गानद्वारा निग्रहादिकमपि सुखेन भवति, फलमपि महत्, सर्वोत्कृष्टमिति गुणगानस्यैव सर्वातिशयवत्त्वं निरूपितम् ॥ २० ॥

श्रीमदाचार्यचरणसरोजमततस्मृतेः ।
ममार्थावगतिर्जाता दुर्बोधेऽप्यत्र निश्चितम् ॥ १ ॥
तेन सङ्गतमेवाहं मन्येऽथ तदपि स्वतः ।
संशोधयन्तु सुधियः कृपया मयि वत्सलाः ॥ २ ॥
अहर्निशंविचारेऽस्मिन्नेवं तिष्ठति यन्मनः ।
अतो हि लिखने नूनं प्रवृत्तिर्मे न चान्यथा ॥ ३ ॥
श्रीविठ्ठलेश्वरपदाम्बुजरेणुरेव सर्वस्वमित्यनिशमस्तु ममाभिलाषः ॥
यत्स्पर्शतः सपदि दैवजने स्वतः श्रीवैश्वानरोक्तपदवी फलिनाखिला स्यात् ॥ ४ ॥

**इतिश्रीनिरोधलक्षणविवरणं श्रीवल्लभकृतं समाप्तम् ॥**

श्रीकृष्णाय नमः ।

# निरोधलक्षणम् ।

## श्रीपुरुषोत्तमकृतविवृतिसमेतम् ।

प्रणम्य श्रीमदाचार्यान् स्वीयेषु करुणावतः । निरोधलक्षणग्रन्थं तद्दासश्चिन्तयत्ययम् ॥१॥

अथ श्रीमदाचार्यचरणाः सन्न्यासनिर्णये भक्तिमार्गीयत्यागस्य विरहानुभवार्थं कर्तव्यतां गुरुद्वयकथनभिन्नकालफलबोधनाभ्यामधिकारिभेदं च सूचयित्वा, तस्य त्यागस्य प्रेमैकसाध्यत्वं, तत्र साधनाकाङ्क्षायां भावनासिद्धस्य भावमात्रस्यैव साधनत्वं, ततो विलक्षणाधिकारे गुणानां जीवनहेतुत्वं चोक्तवन्तः । तत्र कीदृशस्याधिकारिणः कीदृश्या भावनया जातः कीदृशो भावः साधनतां प्राप्नोति, गुणाश्च तत्र बाधकत्वेनोक्ता अपि कीदृशाधिकारे केन प्रकारेण जीवनहेतुतया साधकत्वं प्राप्नुवन्तीत्याकाङ्क्षोत्पद्यते । किञ्च, भक्तिवर्धिन्यां जातभक्तिदृढबीजभावस्य भगवदुक्तस्वविचारितरीत्या भजमानस्य भक्तिप्रवृद्ध्यर्थं गृहत्यागपूर्वकश्रवणकीर्तनरूपं साधनमुक्तवन्तः । अदृढबीजभावस्य तु गृहे स्थित्वा पूजाश्रवणादिभिः स्नेहासक्तिव्यसनपर्यन्तमुपायं तेन कृतार्थतां चोक्त्वा, अग्रे त्यागकरणादेरावश्यकत्वमुक्तवन्तः । तत्रापि भक्तिवृद्धेः किं स्वरूपमित्याकाङ्क्षोत्पद्यते । तथा सेवाफलविवरणे बाधफलाभावे सेवाया अनाधिदैविकीत्वं हेतुत्वेनोक्तवन्तः । तत्रापि सेवाया आधिदैविकीत्वं कथं स्यादित्याकाङ्क्षोत्पद्यते । एवं तत्र तत्राकाङ्क्षोत्पत्तौ तत्रत्यास्ता आकाङ्क्षाः पूरयितुं यथा भगवानवतारदशायां भक्तदृग्गोचराभिर्गुणलीलाभिः प्रपञ्चविस्मृतिपूर्वकस्वासक्तिरूपं निरोधं क्रमेण विदधानो जीवानुद्धरति, तथेदानीमनवतारदशायामपि श्रवणकीर्तनादिगोचराभिर्गुणलीलाभिरेव क्रमेण निरुन्धानो जीवानुद्धरतीति बोधनाय त्यागपूर्वकं श्रवणजन्यभावनया भजता, त्यागपूर्वकं कीर्तनेन भजता, गृहे स्थित्वा पूजादिना च भजता, यथाधिकारं भक्तिप्रवृद्ध्यात्मकपूर्वोक्तनिरोधार्थं यतमानेन भाव्यम् । तत्रापि त्यागपूर्वकं श्रवणजन्यभावनया भजता कृपा परीक्षणीया, गुणाश्च गातव्याः, स्वावस्था च परीक्षणीया, स्वाधिकारानुसारेण स्वस्मिन् निरोधोत्पत्तिराशंसाविशेषैः परीक्षणीया । कीर्तनेन भजता तु कीर्तनजन्यसुखविशेषैर्भक्तिवृद्धिः परीक्षणीया, कृपा च परीक्षणीया । गेहे स्थित्वा

---

१. तद्भक्तिद्वयोस्तु भावनाप्रधानत्वमिति भाव. । आधिदैविकी सेवा प्रेमद्वारा त्यागप्राधिकेति । २. गच्छमानाश्रम उत्तमा गृहस्थाश्रम आहुः । ३. त्यागतत्यागयोर्भेदो गीतायाम् । ४. तथा फलस्य प्रवर्तकत्वात् तथाहुः । ५. ज्ञानत्वेन दृष्टत्वेन कार्यकारणभावः ।

भजता तु सेवाया आधिदैविकीत्वाय श्रवणकीर्तनध्यानान्यभीक्ष्णं विधेयानीत्युपदेष्टुं निरोधलक्षणग्रन्थमारभन्ते।

नन्वस्य ग्रन्थस्य सन्न्यासनिर्णयादिशेषत्वेन विचारे किं बीजमिति चेत्? उच्यते। अत्र ग्रन्थकरणप्रतिज्ञाऽभावेन यत्किञ्चित् साकाङ्क्षत्वे निश्चिते, सन्न्यासनिर्णयस्थभावनादेः स्वरूपाकाङ्क्षोत्थापकत्वात्, गुणानां जीवनहेतुत्वकथनस्य च प्रकाराकाङ्क्षोत्थापकत्वात्, भक्तिवर्धिनीस्थभक्तिवृद्धिपदस्य च स्वाभिधेयस्वरूपाकाङ्क्षोत्थापकत्वात्, सेवाफलविवरणस्थानाधिदैविकीपदस्य चाधिदैविकीकथंभावाकाङ्क्षोत्थापकत्वात्, अत्रत्याशंसागुणकीर्तनादिकथनस्य चाकस्मिकतया कैमर्थ्याकाङ्क्षोत्थापकत्वात्, परस्पराकाङ्क्षापूरकत्वं दयालुत्वादिशब्दानां तत्रत्यप्रमेयस्यापि प्रत्यभिज्ञानं चेति जानीहि। न च भक्तिवर्धिनीस्थपदप्रत्यभिज्ञाऽभावात् तच्छेषत्वाभावः शङ्क्यः। सन्न्यासनिर्णयप्रमेयेनैव तत्प्रमेयस्यापि क्रोडीकरणाददोषात्। परस्पराकाङ्क्षावशादेव श्रीहरिरायैरपि 'श्रीकृष्णरसविक्षिप्ते'त्यादिश्लोकपञ्चकस्य स्वतन्त्रत्वेन प्रतीयमानस्यापि जलभेदशेषत्वमङ्गीकृतम्। तस्मादेवं शेषत्वैकवाक्यत्वयोरङ्गीकारे न किञ्चिद्बाधकमिति तच्छेषत्वेन व्याख्यायते। तत्र सन्न्यासनिर्णये त्यागिनो भावनामात्रसिद्धभावस्यैव साधनत्वेन साधितत्वात्, त्यागिषु प्रथमाधिकारिकृतस्य त्यागस्य विरहविषयकानुभवार्थत्वात्, विरहस्य च प्राकट्यतिरोभावजनितदुःखात्मकत्वात्, तादृशस्याधिकारिणः कृष्णे आसक्त्या गृहस्थानां बाधकत्वानात्मत्वयोर्भासने कृते, ईषत्प्रपञ्चविस्मृतिपूर्वतया भगवदासक्तौ जातत्वे, व्यसनेन च भगवद्गुणलीलाप्राधान्यं विहाय भगवत्स्वरूपपरतायां जातायां, दैन्ये सति जन्मप्रकरणोक्तरीत्या भक्तदुःखस्यैव भगवत्प्रादुर्भावहेतुत्वज्ञानात्, तादृग्दुःखाशंसैवोत्पद्यत इति। तत्र तादृशदुःखजनकातिशयस्यैव भक्तिवृद्धिरूपत्वं, प्रपञ्चविस्मृतिभगवदासक्त्योराधिक्यात्। अतः तादृशनिरोधस्य प्रस्तूयमानदुःखाशंसारूपं तद्भावनारूपं च कार्यलक्षणमिति प्रथमं तदाहुः यच्चेत्यादि।

**यच्च दुःखं यशोदाया नन्दादीनां च गोकुले।**
**गोपिकानां तु यद् दुःखं तद् दुःखं स्यान्मम क्वचित्॥ १॥**

अत्र दुःखाधारभूतानां त्रयाणां कथनेन तेषां भावत्रैविध्यं द्योतितम्। चकारत्रयेण तत्तत्सजातीयभाववन्तः कंसादेः कालतोऽज्ञानाच्च दुःखभाजः संगृहीताः। तदानीं कंसादिवदिदानीमप्यसुरान्तराणां संभवात्। कालाज्ञानयोरपि संभवाच्च। क्वचिदिति अनिर्णीतदेशविशेषोक्त्या तत्र तत्र भगवद्देशेषु पर्यटितृत्वसूचनेनाधिकारिणस्त्यागित्वं बोधितम्। एवमग्रेऽपि ज्ञेयम्। तथा च ये बालादिभावे, ये च पौगण्डादिभावे, ये च प्रौढादिभावे आसक्ताः, तेषां दुःखं दृष्ट्वा तन्निवृत्त्यर्थं तादृशतादृशरूपेणैव भगवान् तत्तद्भावानुरूपं सुखं दातुं प्रकटीभवतीति भगवत्प्राकट्ये तादृशं दुःखमेव साधनमिति स्वस्मिन् तदाशंसोत्पादको

यः प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपो निरोधः स एव कृष्णे व्यसनस्य फलम् । तदाशंसैव प्रथमाधिकारिणो भक्तिवृद्धिलक्षणमित्यर्थः । अत्र स्यादित्याशंसासूचकम् । यद्यपि आशंसावचने लिङिति सूत्रेण आशंसावाचिन्युपपद एव लिङ् विहितस्तथापि लोके उपपदाभावेपि देवदत्तश्चेदागच्छेद् मत्कार्यं भवेदित्यादिप्रयोगदर्शनान्न दोषः । यदि च लोकोक्तिर्न प्रमाणमिति प्रार्थनायां वा सम्भावनायां वा लिङिष्यते, तदापि तयोराशंसामूलकत्वादाशंसा न व्यभिचरति, तस्माददोषः ॥ १ ॥

अथ मध्यमाधिकारिकृतस्य त्यागस्य विरहसामयिकासक्तिप्रमन्यायकभगवदनुभवार्थत्वात् तस्य भक्तिवृद्धिस्वरूपं तादृशनिरोधलक्षणकथनमुखेनाहुः **गोकुल** इत्यादि ।

**गोकुले गोपिकानां तु सर्वेषां व्रजवासिनाम् ।**
**यत्सुखं समभूत् तन्मे भगवान् किं विधास्यति ॥ २ ॥**

तुशब्दः पूर्वव्यावृत्त्यर्थः । एषोत्यन्त विप्रयोगेण दुःखित इति रसप्रधान इति प्राकट्यजनिका अत्यन्तासक्तिरेव तस्य भक्तिवृद्धिरिति यथाकथञ्चित् दर्शनजन्यसुखाकाङ्क्षारूपं कार्यं तद्भक्तिवृद्ध्यात्मकनिरोधलक्षणमिति ज्ञापनाय पूर्वं **गोपिकापदोक्तिः** । अन्येषां तद्वत् सर्वात्मभावाभावेन ततो न्यूनत्वात् पश्चादुक्तिः । किंशब्दो विकल्पं द्योतयति । 'विकल्पे किं किमुत चे'ति कोशात् । आशंसायां भविष्यत्काले लृट् ॥ २ ॥

अथोत्तमाधिकारिकृतस्य त्यागस्य विरहानन्तरभाविसाक्षात्कारार्थत्वात् तस्य तत्साक्षात्कारोत्तरं यदा पुनर्व्रजस्थानामिव विरहस्तदा तस्य पूर्वानुभूतस्य लीलासुखादिस्मरणसंवलितविरहसामयिकानुभववत्त्वात् तदा भगवतः स्वस्मरणोत्पादको निरोध एव तस्य भक्तिवृद्धिरूप इति तस्य स्वस्मिंस्तदभिज्ञापक लक्षणमाहुः उद्धवेत्यादि ।

**उद्धवागमने जात उत्सवः सुमहान् यथा ।**
**वृन्दावने गोकुले वा तथा मे मनसि क्वचित् ॥ ३ ॥**

अत्रापि पूर्वश्लोकोक्ता स्यादिति क्रिया अनुषज्यते । तथा च तादृशस्मरणोत्सवादिविषयिणी आशैव स्वस्मिंस्तादृशभक्तिवृद्धिज्ञापकं लक्षणमित्यर्थः ।

अथ त्रिष्वपि श्लोकेषु गोकुलपदोक्त्या पूर्वोक्तरीतिको भावः श्रीव्रजनाथस्वरूपासक्तानामेव विवक्षितः, नान्यस्वरूपासक्तानामिति ज्ञापितम् । ते एव परमानुग्रहविषया इति च । तृतीये वृन्दावनपदोक्तिस्तु तेष्वपि आधिक्यज्ञापनार्थेति बोध्यम् । तेनैतादृशपुष्टिमार्गीयविषयक एवायं विचारः, न तु सर्वसाधारण इत्यपि बोधितम् । चाचामते त्वत्र श्लोकत्रयं सुबोधिन्यामुक्तस्य निरोधस्यावस्थात्रयसूचको मनोरथ एवोच्यते । श्रीहरिरायाणां मते तु निरोधनिमित्तस्मरणभजनयोर्भावनगुणगानयोर्मध्ये प्रथमं भावनमुच्यते, तत्र दुर्लभत्वबोधनाय स्वविषयकतया प्रार्थनारूपेणोच्यते । मन्मते त्विदमाशंसात्रय भक्तिवृद्धिज्ञापकलक्षणतात्पर्येणोच्यत इति ततो भेद इति ज्ञेयम् ॥ ३ ॥

एवं त्यागिषु ये श्रवणजन्यभावनामात्रपरास्तेषां भक्तिवृद्धिरूपं भावनात्मकं निरोधमाशंसारूपकार्यमुखेनाभिज्ञानार्थमुक्त्वा, ये त्यागिषु ततोऽधिका गुणगानासक्तास्तेषां भक्तिवृद्ध्यात्मकनिरोधस्य स्वस्मिन्नभिज्ञापकं लक्षणं त्रिभिर्विवदन्त प्रथमं गुणगातृषु प्रथमाधिकारिणः स्वस्मिंस्तदभिज्ञापक लक्षणमाहुः **महतां कृपयेत्यादि ।**

**महतां कृपया यावद्भगवान् दययिष्यति ।**
**तावदानन्दसन्दोहः कीर्त्यमानः सुखाय हि ॥ ४ ॥**

अत्र **यावदिति** पदमुत्तरावधिज्ञापकं **तावत्पदं** च पूर्वावधेः । **महत्पदं** च पारोक्ष्येण व्रजभक्तज्ञापकम् । तथा च तासां **कृपया भगवान् यावद्दययिष्यति** वक्ष्यमाणरीतिकस्वैकतानत्वसंपादिकां दयां करिष्यति **तावत्** ततः पूर्वं **कीर्त्यमानः** 'नामान्यनन्तस्ये'त्युक्तलीला स्मरणपूर्वकं वर्ण्यमानः **आनन्दसन्दोहः** श्रीमद्वृन्दावनेन्दुप्रकटितरसिकानन्दस्य यः समूहः लीलारूपः **हि** निश्चयेन **सुखाय** भवतीति शेषः । अतस्तस्य कीर्त्यमानलीलया सुखजननं व्यसनोत्कर्षरूपस्य निरोधस्य स्वस्मिन्नभिज्ञापकं लक्षणम् । हृतत्रपत्वेन प्रपञ्चविस्मृत्याधिक्यादित्यर्थः ॥ ४ ॥

अथैवकर्तुः पूर्वदशात आधिक्यं कीर्तनपरता च पूर्वोक्तमहत्कृपयाधिका भवतीति तादृशनिरोधस्य स्वस्मिन्नभिज्ञापकं लक्षणमाहुः **महतां कृपया यवदित्यादि ।**

**महतां कृपया यद्वत् कीर्तनं सुखदं सदा ।**
**न तथा लौकिकानां तु स्निग्धभोजनरूक्षवत् ॥ ५ ॥**

**महतां** पूर्वोक्तानां **कृपया यद्वद्** यथा कीर्तनं लौकिकस्याग्रे निषेध्यत्वात् भक्तकृतं लीलाविषयकं **कीर्तनं सदा सुखदं तथा लौकिकानां न,** लौकिककर्तृकं लौकिकविषयकं च कीर्तनं न, सुखदं न । अत्रापि भवतीति शेषः । तत्र दृष्टान्तः । **स्निग्धभोजनरूक्षवदिति** । स्निग्धं भोजनं यस्यासौ स्निग्धभोजनः, स्निग्धभोजनस्य रूक्षेण तुल्यं भवतीति स्निग्धभोजनरूक्षवत् । तथा च लौकिककर्तृके तद्विषयके **न** कीर्तने असुखदत्वमानपूर्वकमलौकिकविषयके भक्तकृते कीर्तने यत्सुखदत्वं 'कथं विना रोमहर्षं द्रवता चेतसा विना, विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशय' इत्युक्तधर्मैर्ज्ञायमानं यत्सुखदत्वं तदेव पूर्वस्मादुत्कृष्टस्य निरोधस्य स्वस्मिन्नभिज्ञापकं लक्षणमित्यर्थः ॥ ५ ॥

अथ ततोप्युत्कृष्टाधिकारे पूर्वस्मादधिकस्य निरोधस्य स्वस्मिन्नभिज्ञापकं लक्षणमाहुः **गुणगान इत्यादि ।**

**गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते ।**
**यथा तथा शुकादीनां नैवात्मनि कुतोन्यतः ॥ ६ ॥**

'महतां कृपये'ति पदद्वयमत्राप्यनुषज्यते । अतो महतां कृपया **गोविन्दस्य गुणगाने** रागानुसारेण भगवद्गुणोपबन्धयुक्तपदवाक्यानां कीर्तने **सुखावाप्तिर्यथा** येन

प्रकारेण **प्रजायते** प्रकर्षेणजायते, **तथा** तेन प्रकारेण **शुकादीनां** ज्ञानिभक्तानां **आत्मनि** हृदये **न, अन्यतः कुतः** । ज्ञानभक्तिभ्यामेव चेन्न भवति तदा तदतिरिक्ताद्धेतोः कुतः स्यादित्यर्थः कैमुतिकेनोक्तः । तथा च भगवद्गुणगाने तादृशसुखावाप्तिः पूर्वस्मादुत्कृष्टस्य निरोधस्य स्वसिन्नभिज्ञापकं लक्षणमित्यर्थः । एवं च त्यागकर्तॄणां मध्ये कीर्तयितृषु गुणगातृषु च महत्कृपा हेतुत्वेनापेक्षितेति बोधितम् ॥ ६ ॥

सा कृपा तत्कार्यभूतं गुणकीर्तनादिजन्यं सुखं च कथं स्यादित्यपेक्षायां तत्र भगवत्कृपारूपं हेतुं प्रकारभेदेनाहुः **क्लिश्यमानानित्यादि** ।

**क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ।**
**तदा सर्वं सदानन्दं हृदिस्थं निर्गतं बहिः ॥ ७ ॥**

**जनान्** जननधर्मवतः स्वकीयान् **क्लिश्यमानान्** स्वप्राप्त्यर्थं दुःखितान् **दृष्ट्वा यदा कृपायुक्तो भवेत्** अत्यनुग्रहं कुर्यात् **तदा हृदिस्थं सर्वं सदानन्दं बहिर्निर्गतं** भवेत् । पूर्वोक्ता भवनक्रियाऽत्राप्यनुपज्यते । तथा च कीर्तयितॄणां भगवद्दयया भावनाप्राबल्ये दहरविद्योक्तस्येव सर्वस्यान्तरस्य बहिःप्राकट्येन महतामपि प्राकट्यात् तत्कृपया स निरोधः फलमुपदधातीत्यर्थः । तेनेदमपि फलोपधायकस्य निरोधस्यैव लक्षणम् ॥ ७ ॥

अतः परं कीर्तयितृषु ततो विशेषं वक्तुं तथा तमाहुः **सर्वेत्यादि** ।

**सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभः ।**
**हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥**

उक्तरीत्या सर्वस्य सदानन्दरूपस्य बहिः प्राकट्ये जाता या सदानन्दता, तेन सर्वानन्दप्रचुरस्यापि कृपाजनितो य आनन्दः सः सुतरां दुर्लभः । कुत इत्याकाङ्क्षायां तस्य भगवद्दानहेतुकत्वं स्फुटीकुर्वन्ति हृद्गत इत्यादि । हृदि स्थितो भगवान् कीर्त्यमानान् स्वगुणान् श्रुत्वा पूर्णः यद्रूपा निविष्टः, कृपापदस्य पूर्वमुक्तत्वात् कृपया वा पूर्णः सन् जनान् स्वकीयान् प्लावयते, अन्तर्बहीं रमच्याप्तान् करोति । अत्र श्रुत्वेति पदाद्गुणानां कीर्त्यमानत्वमार्थिकम् । तथा च तेषु कृपया जनितो यो भगवदानन्दः तेन तद्भवति, नान्यत इत्यतो दुर्लभ इत्यर्थः । अत इदं फलात्मकस्य निरोधस्य लक्षणम् । एवं च भक्तिवृद्धेः स्वरूपमत्र पर्यवसितम् । तेन पूर्वोक्तेषु त्यागकर्तृषु साधनांशतौल्येपि 'छन्दत उभयाविरोधा'-दिति न्यायेन यत्र भगवतन्मदनुकर्तृकस्वगुणगानकीर्तनयोः श्रवणेच्छा तेषां गुणगानादौ प्रवृत्तिः, यत्र च सा न तेषां भावनामात्र एव प्रवृत्तिरिति मुख्याधिकारिषु व्यवस्था बोध्या । एतेन कृपापरीक्षाप्रकार उक्तः ॥ ८ ॥

एवं नानाविधस्य निरोधस्य लक्षणान्युक्त्वा तत्र साधनमुपदिशन्ति **तस्मादित्यादि** ।

**तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ।**
**सदानन्दपरैर्गेयाः सच्चिदानन्दता स्वतः ॥ ९ ॥**

यस्माद्भावनापेक्षयापि भगवान् गुणगानेन अधिकं प्रसीदति **तस्मात् सर्वं परित्यज्य** भक्तिमार्गरीत्या प्रेम्णा सर्वं गृहादिकं सवासनं त्यक्त्वा **निरुद्धैः** प्रपञ्चविस्मृतिपूर्वकभगवदासक्तियुक्तैः **सदानन्दपरैः** हृदयस्थलीलासृष्टैकतानैः **सर्वदा** अभीक्ष्णं कालाविच्छेदेन वा **गुणाः गेयाः** गानविषयीकार्याः । तत्रावान्तरफलमाहुः **सच्चिदानन्दता स्वत** इति । स्वतो यदृच्छातः गुणगानातिरिक्तसाधनं विनैव **सच्चिदानन्दता** अक्षरब्रह्मता भवति । **ततः** इति पाठे गुणगानादेवेत्यर्थो बोध्यः । एतेन गुणगातुः स्वावस्थापरीक्षणप्रकारश्चोक्तः । एवं च सिद्धान्तमुक्तावल्यां 'ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधन'मित्यनेन यदवान्तरफलमुक्तं तदीदृशानामेव भवतीति बोधितम् ॥ ९ ॥

एवं त्यागिषु मुख्याधिकारिणां यादृग्निरोधस्य सिद्धिः तत्स्वरूपमुक्त्वा तत्र स्वानुभवमग्रिमसिद्ध्यर्थं प्रमाणयन्तस्तद्वर्णनप्रयोजनमाहुः **अहमित्यादि** ।

**अहं निरुद्धो रोधेन निरोधपदवीं गतः ।**
**निरुद्धानां तु रोधाय निरोधं वर्णयामि तम् ॥ १० ॥**

**अहं निरुद्धः** पूर्वोक्तरीत्या भगवदासक्तः **रोधेन** संसारावेशराहित्यादिन्द्रियनिग्रहेण **निरोधपदवीं गतः** निरोधमार्गं प्राप्तः सन् **निरुद्धानां रोधाय** संसारावेशराहित्यार्थं **तं** पूर्वोक्तनिरोधं **वर्णयामि** । **तु**ः प्रयोजनान्तरशङ्कानिरासे । त इति पाठे तु चतुर्थी । तथा च यः कथं भक्तिवृद्धिरित्यादिकं पूर्वं पृष्टवान् तस्मै तुभ्यं तदर्थमग्रे वर्णयामीत्यर्थः ॥ १० ॥

एवं मध्यमार्थं निरोधवर्णनं प्रतिज्ञायोपपादनपूर्वकं तदुपयोगिनिरोधस्वरूपमाहुः **हरिणेत्यादि** ।

**हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।**
**ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ ११ ॥**

**विनिर्मुक्ताः** विशेषेण त्यक्ताः, स्वीयत्वेन नाङ्गीकृता इति यावत् । **अत्रे**ति गुणगाने भावनायां च । तथा च संसारावेशस्य भगवदनङ्गीकृतलक्षणत्वात्तद्विरुद्धा या गुणगाने भावनायां चाहर्निशं मोदप्राप्तिः, सा निरुद्धानां सामान्यलक्षणमित्यर्थः सिध्यति॥११॥

एवं लक्षणं निरूप्य भावकापेक्षया गुणगातृषु विशेषमाहुः **गुणेष्वित्यादि** ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १२ ॥**

१. यमेवैषप्रवृत इति श्रुतेः ।

मुरवैरिणः जडदोपनिवर्तकस्य गुणेषु गोवर्धनोद्धरणादिषु सर्वदासक्तचित्तानां संसारश्च विरहक्लेशश्च न स्यातां किन्तु हरिवत् सुखम् । तथा च भावकानां दुःखाशंसया सुखाकाङ्क्षया भगवत्कृतस्मरणाकाङ्क्षया च विरहकृतं दुःखमेव बहुलम्, तत एव च शीघ्रं लयः । गातॄणां तु संसारावेशाभावाच्च लौकिकं दुःखम्, विरहस्फूर्तावन्तर्निष्ठा, बहिरनुभवे च गुणगानम् । अतो भगवत इव सुखमित्यर्थः ॥ १२ ॥

एवं भावयितृगात्रोर्विशेषमुक्त्वा तस्य कृपाहेतुकत्वं निगमयन्ति, मध्यमाधिकारे हेतुं तद्व्यवस्थां च वदन्ति तदेत्यादि ।

तदा भवेद्दयालुत्वमन्यथाऽक्रूरता मता ।
बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १३ ॥

यदा पूर्वोक्ता रीतिः तदा भगवतो दयालुत्वं भवेदिति पूर्वोक्तस्य निगमनम् । अथ मध्यमस्य व्यवस्थोच्यते अन्यथेत्यादि । अन्यथा यदि न गुणाविष्टचित्तता तदा अक्रूरता भगवतः, अघातकता तस्मिन् भक्तिमार्गच्युत्यभावहेतुतेति यावत् । सा मता संसारावेशाभावगुणाविष्टचित्तत्वाभावाभ्यां युक्तिभ्यामनुचिन्तिता । तथा च तेन मध्यमाधिकार इत्यर्थः । एतद्व्यवस्थामाहुः बाधेत्यादि । अत्र अक्रूरतायां बाधशङ्का भगवद्विषयकाज्ञानकृता निरोधच्युतिशङ्का, अपिशब्दात् भावनाप्राबल्यकृतो लयश्च नास्ति, तदध्यास आसक्तिभ्रमन्यायको भगवदध्यासश्च सिध्यति । तेनेयं सर्वात्मभावप्राकट्यवती मध्यमाधिकारिव्यवस्थेत्यर्थः । एतदेव कार्यं तज्जनकस्य तादृशनिरोधस्य लक्षणं ज्ञेयम् । एतावता भक्तिवर्धिन्यां 'बीजभावे दृढे तु स्यात् त्यागाच्छ्रवणकीर्तनात्'दित्यनेन यद्भक्तिवृद्धिसाधनमुक्तं तस्य फलमुपपादितं ज्ञेयम् ॥ १३ ॥

अथादृढबीजभावस्य पूजादिभिर्यतमानस्य संसारावेशसत्त्वात् तस्य व्यवस्थां त्रिभिर्वदन्तः तत्कृतसेवाया आधिदैविकीत्वाय पूर्वमुद्वेगनिवर्तकं सर्ववस्तुसमर्पणरूपं साधनमाहुः संसारावेशेत्यादि ।

संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।
कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १४ ॥
भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।
गुणैर्हरिसुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥
एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षं गुणवर्णने ।
अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥

साधनेन हि संसारावेशदुष्टानीन्द्रियाणि निग्राह्याणि । तानि च निगृह्यमाणानि क्षोभं

१ मत्स्यापोद्धारवाद्, गुणेषु । २ श्रुतौ दुष्टानीन्द्रियाणि ध्यापारप्रापकाणि न भवन्ति, तदिन्द्रियाणि तु भापकाणि ।

जनयन्ति, अतस्तदभावार्थं तेषां **हिताय वै** निश्चयेन सर्वाणि **वस्तूनि** स्वीयानि **कृष्णस्य भूम्न ईशस्य योजयेत्** । समर्प्य भगवत्सम्बन्धमिश्रितान्यनुसन्दध्यात् । फलात्मकत्वबोधनाय कृष्णस्येति । अवतारादिवारणाय भूम्न इति । एतावन्मात्रसाधनकरणेपि विषयव्यासंगनिवारणसामर्थ्यबोधनाय ईशस्येति । 'तं यथा यथोपासत' इति श्रुत्या तत्क्रतुन्यायेन चोक्तधर्मपुरस्कारेण चिन्तनस्यावश्यकत्वात् पदत्रयकथनम् । तेन फलमुपपादयन्ति **भगवदित्यादि** । एकादशस्कन्धे 'दारान् सुता'निति प्रबुद्धवाक्ये सर्ववस्तुसमर्पणस्य भगवद्धर्मत्वकथनात्, कविवाक्ये च 'भक्तिः परेशानुभवो विरक्ति'रित्यादिश्लोकद्वये विषयवैराग्यस्य फलत्वेन कथनात्, सर्ववस्तुसमर्पणस्य भगवद्धर्मस्य सामर्थ्यो**विषये विराग स्थिरो** भवति । तथा च भक्तिवर्धिन्यां 'स्नेहाद्रागविनाशः स्या'दित्यनेन यत्फलमदृढबीजभावस्य स्नेहादुक्तम्, तस्यैवैकथनेन तज्जनकस्य स्नेहस्य दार्ढ्यभवनमत्र फलत्वेन बोधितम् । एवं सर्वसमर्पणात्मकं योजनमेतादृशस्य निरोधलक्षणमिति च । आसक्तिदार्ढ्याय साधनान्तरमाहुः **गुणैरिति** । द्वितीयस्कन्धे 'विचक्षणा यच्चरणोपसादना'दिति शुकवाक्ये कीर्तनप्रणालिकया भगवद्गतिं प्राप्नुवतां गतक्लमत्वकथनेन कीर्त्यमानैर्गुणैः **हरिसुखस्पर्शात्** लौकिकं दुःखं कर्हिचिदपि **न भाति, न** ज्ञानविषयीभवतीत्यर्थः । अत्र सर्ववस्तुयोजनस्य पूर्वं कथनेन तस्याधिकाररूपता बोधिता । तेन 'श्रद्धामृते'त्यारभ्य आत्मनिवेदिनां भक्तिफलबोधकमेकादशस्कन्धीयं भगवद्वाक्यजातं स्मारितम् । तेनात्मनिवेदनपूर्वकं क्रियमाणेन गुणगानेन दुःखानुसंधानाभावरूपं फलं सिध्यतीति बोधितम् । एवं फलमुपपाद्य दार्ढ्यार्थं तत्कृतिमुपदिशन्ति **एवमित्यादि** । एवं पूर्वोक्तरीत्या **गुणवर्णने ज्ञानमार्गादुत्कर्ष**मवधार्य, **अमत्सरैरलुब्धैश्च** परोत्कर्षासहनं मत्सरः, लोभो गर्धः, अत्यन्ताभिलापः, ताभ्यां दोषाभ्यां रहितैः, सर्वदा **गुणा वर्णनीयाः** । उत्कर्ष इति प्रथमान्तपाठे तु गुणैः हरिसुखस्पर्शात् दुःखाभानं ज्ञात्वा गुणवर्णने ज्ञानमार्गादुत्कर्षः सिध्यतीति शेषेण वाक्यं पूरणीयम् । तथा चैतदज्ञात्वा गुणवर्णने दुःखाभानमात्रम्। ज्ञात्वा वर्णने त्वेष उत्कर्ष इत्युक्तं भवति । तथा चैव गुणवर्णने तेष्वासक्तौ 'तद्गुणेषु प्रसक्ता हि तदासक्ता भवन्ति ही'ति न्यायेन भगवदासक्तिदार्ढ्ये भक्तिवर्धिन्युक्ता गृहारुचिर्गृहस्थानां बाधकत्वानात्मत्वमानं च दृढीभवतीत्यर्थबलेन बोधितम् । एवं गुणगानं चासक्तिमतो निरोधलक्षणमित्यपि ।

अथ व्यसनदार्ढ्याय भगवति साक्षात् परम्परया च स्वीयेन्द्रियविनियोगादिरूपं साधनान्तरमाहुस्त्रिभिः **हरिमूर्तिरित्यादि** ।

**हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।**
**दर्शनं स्पर्शनं स्पष्टं तथा कृतिगती सदा ॥ १७ ॥**

१ दुःखानुसन्धानरूपमिति पाठः ।

**श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः । पायोर्मलांशत्यागेन शेषभावं तनौ नयेत् ॥१८॥ यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते। तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥ १९ ॥**

योऽदृढबीजः व्यसनार्थं यतते, तेन हरेर्भगवतो मूर्तिः स्वयं सेव्यमाना **सदा**भीक्ष्णं निरन्तरं वा ध्येया, भगवदभिन्नत्वेन ध्यातव्या। हि यतो हेतोः। **तत्र मूर्तौ संकल्पा**दभिन्नताविचाराद्दर्शनं स्पर्शनं चक्षुषस्त्वचश्च कार्यं **स्पष्टं** स्वरूपदर्शनेन तत्स्पर्शनेन च भगवत्सम्बन्धितया स्फुटम्। पूजाप्रवाहेण तत्र सन्निधाने लब्धे अन्तर्यामिब्राह्मणोक्तन्यायेन, गुणोपसंहारे कार्याख्यानाधिकरणे 'सम्बन्धादेवमन्यत्रापी'ति सूत्रेङ्गीकृते, निबन्धे च 'तद्रूपं तत्र च स्थित'मित्येतद्बोधिते भगवदावेशे, वह्न्ययोगोलकन्यायेन च भगवतस्तद्व्याप्य बहिर्भावात् स्फुटमित्यर्थः। एतदेव हस्तपादयोः कार्येऽतिदिशन्ति **तथा कृतिगती सदे**ति। उक्तन्यायेन यथा पूर्वोक्तं द्वयं भगवत्सम्बन्धि स्फुटम्, तथा **कृतिगती** हस्तपादयोः कार्ये भगवत्सेवायां तदर्थं चलने च **सदा** भगवत्सम्बन्धिनी स्पष्टे। पूर्वोक्तं **स्पष्ट**पदमत्र विभक्तिलिङ्गविपरिणामेन सम्बध्यते सन्दंशात्। श्रोत्रवाक्कार्ययोस्तथात्वमाहुः **श्रवणं कीर्तनं स्पष्ट**मिति। एतयोः प्रकारान्तरेणापि भगवत्सम्बन्धित्वस्य सर्वसम्मतत्वं बोधयितुं स्पष्टपदस्य पुनरुक्तिः। उपस्थे भगवदुपयोगित्वस्यास्फुटत्वात् तस्य भगवत्सम्बन्धित्वाय प्रकारमाहुः **पुत्रे कृष्णप्रिये रति**रिति। 'कामः सङ्कल्पजः स्मृतः,' 'सङ्कल्पप्रभवान् कामा'नित्यादिवाक्यैः सङ्कल्पस्य पुत्रे कामे कृष्णस्य प्रिये सति **रति**रुपस्थकार्यं भगवत्सम्बन्धि भवतीति शेषः। गोपालतापनीये 'यं मां स्मृत्वा निष्कामः सकामो भवती'ति गान्धर्वी प्रति भगवद्वाक्यस्य श्रावणाद्भगवद्ध्यानात् तादृशसङ्कल्पेन भगवद्विषयककामोत्पत्तौ सापि भवतीत्यर्थः। भगवद्विषयककामाभावे तु यथोपस्थहितं भवति तथा प्रकारस्तत्र वाच्यः। पायोर्विनियोगमाहुः **पायो**रित्यादि। **पायोः** कार्यं हि विसर्गः, स चात्र मलांशत्यागरूपः, तेन कार्येण तज्जनकस्येन्द्रियस्य **तनौ शेषभावं नयेत्**। भगवति विनियोज्यमाने स्वशरीरे तच्छोधनद्वारा गुणभावं प्रापयेत्। अयमर्थः। वेणुगीते 'अक्षण्वता'मित्यत्र सुबोधिनीस्थास्विन्द्रियफलबोधिकासु कारिकासु मङ्गोमोद्गमरूपं पायुकार्यमुक्तम्, तथा 'एषां तु भाग्यमहिमे'ति अक्षिप्ताध्यायश्लोकविवरणे 'रोमाञ्चस्वेदौ दशमकार्ये' मित्युक्तम्। यच्च तृतीयस्कन्धे 'मुञ्चन्मीलदृशाऽश्रु च' इत्यत्रानन्दाश्रुमोचनरूपं तत्कार्यमुक्तं, तत् प्रथमाधिकारे न सम्भवति, द्वितीयस्कन्धे 'तदश्मसारं हृदय'मित्यत्र तथा निर्णयात्। अतोत्र 'अन्नमशितं त्रेधा भवती'त्यादिच्छन्दोगश्रुत्युक्तोऽन्नयोः स्थूलधातुः मूत्रपुरीषात्मको यश्च 'कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च। कर्णविट्दूषिका चेति धातूनां क्रमशो मला' इति वैद्यकोक्तो मलांशः, स हि पायुनैवेन्द्रियेण तत्तदेहच्छिद्रद्वारा निर्गच्छति। तावतैव तस्येन्द्रियस्य विनियोग इति गौणत्वेन शेषता। किञ्च, पूर्वं 'संसारावेशदुष्टाना'मितीन्द्रियविशेषणेन मध्ये चामत्सरैर-

लुब्धैश्चेति कथनाद्गुणवर्णनकर्तृषु तत्सत्ताबोधनेनान्ते चोक्तपायुकार्यकथनेन चैतेषां जघन्या-
धिकारित्वं बोधितम् । तेन ये भक्तिवर्धिन्यामदृढबीजभावा उक्तास्तदर्थोयमुपदेश इति
सूचितम् । किञ्च, अत्र मनःप्रभृतीनां नवानां विनियोजनप्रकार उक्तः, घ्राणरसन-
योस्तुविनियोगः कोपि नोक्तः । किञ्च, भगवत्प्रिये कामे उपस्थविनियोगकथनात्
तदभावे तदभावः सूचितः । तथा सति तेषां भगवदुपयोगाभावे किं कार्यमित्याकांक्षाया-
माहुः यस्य वेत्यादि । वेत्यनादरे । यस्येन्द्रियस्य भगवत्कार्यं यदा स्पष्टं न
दृश्यते तदा तस्येन्द्रियस्य विशेषेण निग्रहः संयमः कर्तुमावश्यक इति निश्चयः ।
तथा च यदि तत्र तेषां निग्रहं न कुर्यात् तदा, नो चेत् 'प्रमत्तमसदिन्द्रियवाजिसूता'
इत्युक्तन्यायेन विषयदस्युषु पाते संसारावेशरूपं महदेवानिष्टं स्यात्, अतस्तदावश्यकमि-
त्यर्थः । एवञ्च जघन्याधिकारिणां यदुक्तोपदेशरीत्या करणं तदपि तदुचित्तनिरोधस्यैव लक्ष-
णम् । तत्रापि सुखासिश्चेत्, तदा सुतरां तथेति बोध्यम् । एवं करणे उद्वेगनिवृत्त्या क्रमेण
सेवाया आधिदैविकीत्वं सम्पद्यत इत्येतदेव जघन्याधिकारिणां मुख्यं साधनमिति सिध्यति ।

एवं सर्वमुपदिश्य जघन्याधिकारिणामेतत्प्रवृत्तिमुत्पादयितुं ग्रन्थान्तर उपदिष्टेभ्यः
साधनान्तरेभ्य एतस्य साधनस्योत्कर्षं वदन्ति नात इत्यादि ।

**नातः परतरो मन्त्रो नातः परतरः स्तवः ।**
**नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥**

नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥

**नातः परतरा** विद्या तीर्थं नातः परात्परम् ॥ २० ॥

जघन्याधिकारिणामतः उक्तात् साधनजातात् परतर उत्कृष्टतरः मन्त्रोष्टाक्ष-
रादिर्न । तदावर्तनं हि सेवाकरणाङ्गत्वेनोक्तम्, अनुकल्पत्वेन च, अतस्तथेत्यर्थः । एवमग्रेपि
बोध्यम् । स्तवः कृष्णाश्रयादिस्तोत्रपाठः, सोपि तथा, अनुकल्पत्वादङ्गत्वाच्च, विवेक-
धैर्याश्रये तथैवाङ्गीकारादिति । विद्या उपासना, तीर्थं गङ्गादि, तयोरपि भगवत्कृपाभावे
विलम्बेन फलसाधकत्वात्, श्रुतौ तत्क्रतुन्यायादरणात्, भारते च यज्ञतीर्थयोः समान-
फलत्वेन कथनात् तयोरत्र पृथगुक्तिः । तेन जघन्यानामधिकारिणामत्रोक्तं योजनादि
साधनत्रयमेवात्यावश्यकम् । तेनैव स्नेहासक्तिव्यसनानां क्रमेण गृहत्यागोत्तरं पूर्वोक्तनिरोधा-
त्मकमरितवृद्धिसिद्धिरिति निष्कर्षः । चाचा गोपीशाः श्रीहरिरायाश्च 'हरिणा ये विनिर्मुक्ता'
इति श्लोकोत्तरं 'संसारावेशश्लोकं' पठन्ति, तदग्रे च 'गुणेष्वाविष्टचित्ताना'मित्यादीन्
क्रमेण श्लोकान् पठन्ति । व्रजराजास्तु येन क्रमेण पेठुः, तेन क्रमेण मया व्याख्यातम् ।
व्याख्यानप्रकारस्तु सर्वेषां नैकविध इति मया स नानूदित इति दिक् ॥ २० ॥

आचार्यवर्यकृपया हृदयस्थितेन यत् प्रेरितं भगवता व्रजनायकेन ॥
तद्वाङ्मयजातमलिखत् पुरुषोत्तमाख्यः श्रीविठ्ठलेश्वरचरणाम्बुजदासदासः ॥ १ ॥

इति श्रीपीताम्बरात्मजेन श्रीपुरुषोत्तमेन विरचिता निरोधलक्षणवर्णनविवृतिः ।

अनया सर्वात्मभाव[illegible] सिद्धान्तमुक्तावल्युक्तः स नाविद्यमिति यावदेव

१ इत्यादिरूपाधिर्मानतिकी । २ सर्वात्मभावात्मकं योजन तदादि । ३ व्याख्याने प्रकारद्वयम् ।
विवृत', विच्छिद्यते चेदाद्याभिव्यक्ति । [illegible] । तत्रार्थ द्वितीयः ।
भगवद्गुणः, सान्यार्थलीला प्रभुत्सुबोधकत्व ।

श्रीकृष्णाय नमः ।

# निरोधलक्षणम् ।

## श्रीश्यामलात्मजश्रीव्रजराजकृतविवरणसमेतम् ।

व्रजस्त्रीहृदयगिरिषु रोमालियमुनातटे । तद्बाहुलतिकावृन्दे क्रीडन्कृष्णो विराजते ॥ १ ॥
गोपीशरतिमार्गाब्जमार्तण्डाचार्यसंस्कृतः । मयि श्रीगोपिकाधीशनिरोधोऽस्तु महाफलः ॥२॥
स्वाचार्यचरणाम्भोजकृपया तन्निरूपितः । स्वीयसौकर्यबोधाय निरोधः क्रियते स्फुटः ॥३॥
श्रीविट्ठलेशपादाब्जकृपारससुवृष्टिभिः । निरोधकल्पवृक्षो मे सिञ्चितः फलितोऽभवत् ॥ ४ ॥

श्रीमदाचार्यचरणाः स्वीयेषु कृपया निरोधफलदित्सया निरोधस्वरूपं विवृण्वन्ति । तस्य फलात्मकानुशयनरूपत्वात्तत्र च प्रथमं प्राकट्यमपेक्ष्यत इति यथा प्राकट्यपूर्वकः सिद्धो भवेत्तथा निरूपयन्ति । यच्चेति पूर्वं येन प्रकारेण व्रजे निरोधार्थं प्रभुराविर्भूतः स मयि नास्तीति तदभावजदैन्येन तत्प्राप्त्यर्थं तथा प्रार्थनीयो यथा स भावो भवतीत्याहुः यच्च दुःखमिति ।

> यच्च दुःखं यशोदाया नन्दादीनां च गोकुले ।
> गोपिकानां तु यद् दुःखं तद् दुःखं स्यान्मम क्वचित् ॥ १ ॥

यद्दुःखं यशोदाया नन्दादीनां गोपिकानां गोकुले भगवदाविर्भावात्पूर्वमभूत् तद्दुःखं मम क्वचित्स्यादिति सम्बन्धः । भगवदाविर्भावाज्ज्ञायते यत्सर्वेषां तत्रत्यानां तादृशं दुःखमभूद्येन भगवदाविर्भावोऽजनि । अन्यथा भगवान्निःसाधनः दुःखाभावेन प्रकटो भवेत् । चकारत्रयेण तत्सम्बन्धिनामपि तादृग्दुःखमभूदिति भावो ज्ञाप्यते । अन्यथा संसर्गतोऽपि दोषः स्यात् । क्वचिदिति स्वस्य दैन्याधिक्यार्थमयोग्यत्वज्ञापनाय । गोकुल इति पदात्सर्वथा तत्रत्यानां निर्दोषत्वं ज्ञापितम् । यतस्तत्रानभिज्ञतेति न चातुर्यकापट्यादिना दुःखमभूत्, किन्तु साहजिकमेव ॥ १ ॥

एतद्दुःखानन्तरभावि भगवदाविर्भावजं सुखं तत्रत्यानामिव भवेदिति प्रार्थनीयं दैन्येनेत्याशयेनाहुः गोकुल इति ।

> गोकुले गोपिकानां तु सर्वेषां व्रजवासिनाम् ।
> यत्सुखं समभूत् तन्मे भगवान् किं विधास्यति ॥ २ ॥

गोपिकानां गोकुले इन्द्रियकुले, पुनः सर्वेषां व्रजवासिनां भगवदाविर्भावे जाते

यत्सुखं समभूत्तत्सुखं भगवान् किं मे विधास्यति । अत्रायं भावः । गोपिकानामिन्द्रियकुले 'आत्मानं भूषयाञ्चक्रु'रिति न्यायेन जात आनन्दो भगवान् षड्गुणैश्वर्ययुक्तः सर्वं कृत्वा सर्वदानसमर्थस्तादृक्स्वरूपं सम्पाद्य तथा दानं करिष्यतीति समग्रो मनोरथः । तस्य भावस्यात्यन्तं दुर्लभत्वात्क्रमेण भविष्यतीति भावः । तु पुनः सर्वेषामेव व्रजवासिनां भगवदाविर्भावे जाते य आनन्दो जातः, येन वृद्धा बालाश्च उल्लसितहृदयाः नृत्यं कृतवन्तस्तादृशं मे भगवान् विधास्यति ॥ २ ॥

ततो भगवन्नित्यस्थित्यात्मकानन्दसुखप्रार्थनामाहुः उद्धवेति ।

**उद्धवागमने जात उत्सवः सुमहान् यथा ।**

**वृन्दावने गोकुले वा तथा मे मनसि क्वचित् ॥ ३ ॥**

उद्धवागमने जाते वृन्दावने व्रजस्त्रीषु गोकुले नन्दादिषु यथा सुमहानुत्सवो जातस्तथा मे मनसि क्वचिद्भगवान्करिष्यतीति सतापमनोरथः । सुमहानिति पदेन पूर्वोत्सवाद्विशिष्टत्वं ज्ञाप्यते । तथा हि, उद्धवागमनात्पूर्वं मथुरास्थानां ततो भगवानत्रागत इति तत्रत्या न भगवदीया इति ज्ञानं भगवतो व्रजनित्यस्थित्यज्ञानेन भवेत्तत्र च श्रीमदुद्धवैरत्र नित्यस्थितिर्निर्दिष्टेति तथैव ज्ञानं भविष्यतीति मनस्युत्सवः पूर्वस्माद्विलक्षणो जातस्तथाचार्यैः श्रीभागवतविवृतौ प्रपञ्चितम् । तादृश उत्सवो मम मनसि क्वचित्स्यादिति भावः । यद्वा, गोकुले वृन्दावने वा उद्धवसमागमने जाते सति तत्रत्यभक्तदर्शनेन तद्भावप्राप्त्यर्थं तच्चरणरजःसम्बन्धयोग्यजन्मप्रार्थनात्मक उत्सवो जातस्तथा मम मनसि स्यादिति भावः । यद्वा, उद्धवो भगवता सर्वात्मभावार्थमत्र प्रेषितस्तेनात्रत्यभक्तानामाधिक्यं स्वस्य च नित्यस्थितिर्ज्ञापिता, तेन तस्यागमने जाते सति य उत्सवो वृन्दावने गोकुले वा जातस्तथेति भावः । यतो सर्वात्मभावस्तथैव भवत्येतदेव निरोधस्थानं, तेन तथा दानेच्छा येषु तथैव प्रेम्यन्त इत्युत्सवो भवति तद्दानार्थं या तथा मे मदुपरि भगवन्मनसि तासां वा स्यादिति भावः ॥३॥

नन्वेतावान्मनोरथो भावनयैव कथं सिध्येदित्याशङ्क्य श्रीमदाचार्यकृपयैव सेत्स्यतीति निश्वासपूर्वकं भावनीयं, तेन भविष्यत्येवेत्याहुः महतामिति ।

**महतां कृपया यावद्भगवान् दययिष्यति ।**

**तावदानन्दसन्दोहः कीर्त्यमानसुखाय हि ॥ ४ ॥**

महतां कृपया भगवान्यावत् दययिष्यति दयां करोति तावदानन्दसन्दोहः कृपारूपः कीर्त्यमानसुखाय पूर्वोक्ताय स भावो भवतीत्यर्थः । यद्वा, भगवान्यावत् महतां कृपां करोति तावत्कृपया जीवस्य सतापदैन्यदर्शनेन दयां करिष्यति तदा आनन्दसन्दोहः कीर्त्यमानसुखाय स्यादिति भावः । भगवान् कीर्त्यमानसुखाय यावन्महतां कृपया दययिष्यति तावद्वा स्यात् । अयमर्थः । यावत् भगवान् दयां करिष्यति तावत् महतां कृपया पूर्वभेव दयातः कीर्त्यमानसुखाय आनन्दसन्दोहः स्यादिति भावः ॥ ४ ॥

१ भाषदेति पाठः । २ निरूपितेति पाठः ।

ननु श्रीमदुद्धवागमनजातोत्सवस्य विप्रयोगस्फूर्त्या दुःखसम्भावनरूपत्वात् सुखस्य महत्कृपया जातेपि तस्मिन् कथं निर्वाह इत्याशङ्क्याहुर्महतामिति । -

**महतां कृपया यद्वत्कीर्तनं सुखदं सदा ।**
**न तथा लौकिकानां तु स्निग्धभोजनरूक्षवत् ॥ ५ ॥**

महतां कृपया सदा कीर्तनं सुखदं भवतीति शेषः । अयं भावः । सदा तस्मिन्नपि समये कीर्तनं तेषामेव कृपया सुखदम्, प्राणबाधायां जीवनार्थं भवतीति भावः । यद्वन्महत्त्वमित्यर्थः । ननु विप्रयोगे गुणानां जीवनत्वं नानुभवसिद्धमित्याशङ्क्यासालौकिकत्वात्तथा भवति । लौकिकानां न तथात्वमित्याहुः न तथेति । तु पुनः लौकिकानां न तथा सुखं भवतीत्यर्थः । तत्र निदर्शनमाहुः स्निग्धभोजनरूक्षवदिति । स्निग्धभोजकस्य रूक्षवत्, रूक्षभोजनं यथा न सुखं जनयति तथेत्यर्थः ॥ ५ ॥

ननु ज्ञानस्य दुःखनिवारकत्वं श्रूयते, न गुणगानस्येत्याशङ्क्याहुः गुणगान इति ।

**गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते ।**
**यथा तथा शुकादीनां नैवात्मनि कुतोन्यतः ॥ ६ ॥**

गोविन्दस्य गुणगाने यथा सुखावाप्तिः प्रजायते तथा शुकादीनामात्मनि नैव जायते, अन्यतः कुतः स्यादित्यर्थः । शुकस्य चेद्गुणगानेन सुखं स्यात्तदा स्वानुभूतं स्वयमेवावदयः कथयेत्र तु स्वामिन्य एवं गानं कुर्वन्तीति वदेत् । यद्वा, गुणगाने कृते गोविन्दस्य भगवतोपि यथा सुखावाप्तिः प्रजायते तथा शुकादीनामात्मनि नैव भवतीत्यर्थः । अन्यथा भगवानिव तेपि तद्दुःखदुःखिता भवेयुः । भगवतस्तथात्वं 'मणिधर' इति श्लोकादिषु निरूप्यते । यद्वा, गोविन्दस्य गुणगाने या सुखावाप्तिः पुष्टिस्थानां भवति, सा शुकादीनां भगवद्गुणगानानन्दसुखानामपि नेत्यर्थः । अयमर्थः । गोविन्दपदेन व्रजवधूनामिन्द्रियस्य ये गुणास्तद्गुणगानेनैवासां तथा भवति । शुकादीनां सर्वावतारचरित्रमिश्रगुणगानात्तथात्वं न भवतीति भावः । अत एव निरोधचरित्रकथनप्रस्तावे प्रथमाध्याये सूतोक्तौ तदन्तःस्थितो भगवानेनोत्तरं प्रयच्छतीति 'समभवानय विष्णुरात'मित्यस्मिन्पद्ये निरूपितम् ॥६॥

गुणगानमात्रेणैव कथं भगवान्निरोधात्मके कृपां कुर्यादित्याशङ्क्य तत्स्वरूपमाहुः क्लिश्यमानानिति ।

**क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत् ।**
**तदा सर्वसदानन्दं हृदिस्थं निर्गतं बहिः ॥ ७ ॥**

जनान् क्लिश्यमानान् दृष्ट्वा यदा कृपायुक्तो भवेत्तदा हृदिस्थं सर्वसदानन्दं बहिर्निर्गतं कुर्यादिति सम्बन्धः । अयमं भावः । गुणगानस्य विप्रयोगतापे जीवनैकरूपगानत्वात्तातापर्यं भगवदिच्छाकारतया तापमहत्त्वे गुणगाने कृते सति जनान् लौकिकदेहयुक्तान्, यतो लौकिकदेहे तापस्यानन्दरूप एव भवति, तान् क्लिश्यमानान् दृष्ट्वा, यदेति तस्य

दुर्लभत्वात् कृपायुक्तो भवेत्तदा हृदिस्थं स्वहृदिस्थं सर्वसदानन्दमाधिदैविकशक्तिरूपं बहिर्निर्गतं कुर्यादित्यर्थः । गुणगानकर्तुर्भावात्मकस्वरूपं तद्धृदिस्थं बहिः प्रकटं कुर्यादिति वा ॥ ७ ॥

ननु भगवतः सर्वमेवानन्दरूपमिति गुणा अप्यानन्दरूपाः, तेन गुणगानस्याप्यानन्दरूपत्वात्कृपया भावात्मकानन्दस्य बहिःप्रकटकरणरूपस्य को विशेष इत्याशङ्क्याहुः **सर्वानन्दमयस्यापीति** ।

**सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभः ।**
**हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् ॥ ८ ॥**

सर्वानन्दमयस्यापि कृपानन्दः सुदुर्लभ इत्यर्थः । सर्वानन्दमयशब्देन भगवतो गुणादयोपि भगवद्रूपा जीवेषु रसरूपप्रतिपादकपूर्वकरसदातार इति ज्ञाप्यते । एतज्ज्ञापनायैव मयट्प्रयोगः । मयट् प्राचुर्ये । तेन सर्वमेव भगवदीयमानन्दप्रचुरमित्यर्थः । अत एव गुणगानेन रमणं फलप्रकरणान्तर्गतद्वितीयाध्याये निरूपितम् । अपिशब्देन बहिःस्वरूपप्राकट्यात्मककृपानन्दस्य कथनविशेषो ज्ञाप्यते । स च कुमारिकाप्रवायावान्तरफलपरमफलरूप इति भावः । तासां च गुणगानानन्तरं परमफलप्राप्तिस्तथैव सर्वत्र निरोधाधिकारिणामित्याशयः । कृपानन्दस्य दुर्लभत्वोक्त्याऽनुग्रहैकलभ्यत्वं ज्ञाप्यते । नन्वनुग्रहेतरासाध्यत्वे गुणानामपि तथात्वं स्यादित्याशङ्क्याहुः **हृद्गत** इति । हृद्गतः स्वगुणान्कृत्वा पूर्णो भूत्वा जनान् प्लावयते मग्नान् कुरुते । रसाब्धाविति शेषः । कृपयैव पूर्वमष्टादशाध्यायोक्तन्यायेन वेणुद्वारा हृद्गतो भवति, ततस्तथैव तद्गुणेन स्वयं तत्तापयुक्तो भवति, एतदेव पूर्णत्वम् । अत एव द्वात्रिंशाध्यायेऽस्मद्भावप्राणनाथे'द्वात्रिंशेऽन्तर्गोपिकाना'मित्यारभ्य 'तेनैव पूर्णानन्दइतीर्यते' इत्यन्तं पूर्णत्वं निरूपितं पूर्ववदभावज्ञापकम् । यद्वा, स्वगुणान् तद्गुणेन तापकान्कृत्वा विप्रयोगदलेनापूर्णत्वात्स्वरूपस्य द्वितीयं दलं प्रकटीकृत्य पूर्णः सन् रसैः प्लावयत इति भावः । स्वगुणोद्भूततापानां स्वस्य तेषां दुःखदूरीकरणं युक्तमेवेति भावः । भगवद्गुणानां रसात्मकानां रसरूपतापोद्बोधकता तु 'पूर्णाः पुलिन्द्य' इत्यादिषु स्फुटमेव निरूपिता । तेन गुणगानस्य तत्साधकत्वमिति भावः । गुणानां च भगवद्रूपत्वादनुग्रहेतरकोटिसम्भावना न कर्तव्या ॥ ८ ॥

यस्माद्गुणानां तत्साधकत्वं तस्माद्गुणगानं स्वरूपज्ञानपूर्वकं कर्तव्यमित्याहुः **तस्मादिति** ।

**तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः ।**
**सदानन्दपरैर्गेयाः सच्चिदानन्दता स्वतः ॥ ९ ॥**

यतो गुणास्तत्साधकास्तस्मात्सर्वं परित्यज्य सर्वदा सर्वकालनिरुद्धैस्तद्भावापन्नैर्गुणा गेया इत्यर्थः । सदानन्दत्वेन परिज्ञेया इति भावः । अयं भावः । 'सन्त्यज्य सर्वविषया'निति

तत्सर्वं परित्यज्य निरुद्धैः सहेति शेषः । 'स्वसखीभ्योन्ववर्णय'न्निति वक्तैः सह गुणा गेया इति भावः । गुणान्विशिनष्टि स्वरूपज्ञानार्थम्, सदानन्देन कृष्णेन परिज्ञेया इति भावः । अयमर्थः । गुणगानगुणाः प्रभुणैव ज्ञेया येन तान् श्रुत्वा स्वयं तद्वशो भूत्वा स्वरूपरसदानं करोति । ननु गुणेषु सदानन्दत्वाभावादेतज्ज्ञाने कथं तत्र तत्त्वं स्यादित्याशङ्क्याहुः **सच्चिदानन्देति** । स्वतस्तेषु सच्चिदानन्दता सिद्धेत्यर्थः । यतस्तेषु स्वतःसच्चिदानन्दता, अतस्तथा ज्ञात्वा गेया इति भावः ॥ ९ ॥

ननु निरुद्धानां गुणगानं युक्तमिति सिद्धं, फलासाधकानां साधनदशायां कथं गुणगानं स्यादित्याशङ्क्य स्वानुभवात्मकपूर्वश्लोकनिरोधस्वरूपमाहुः **अहमिति** ।

**अहं निरुद्धो रोधेन निरोधपदवीं गतः ।**
**निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ १० ॥**

अहं रोधेन निरुद्धः, निरोधपदवीं गत इत्यर्थः । अत्रायं भावः । भगवता येषु जीवेषु कृपया निरोधो विचार्यते, स च निरुद्धभक्तसंगेनैव सिद्धो भवति, नान्यथेति निरुद्धाना-ज्ञापयति भुवि प्राकट्यार्थं, तत्संगेन जातो यस्तीव्रतापः सः रोधपदवाच्यो भवति । श्रीमदा-चार्याणामपि दैवजीवभक्तिनिरोधार्थं प्राकट्यात्प्रभ्वाज्ञाद्याकरणात्सत्सङ्गजनिततापस्य रोधत्व-मिति भावः । एवं च सत्युक्तरीत्या तेषां रोधेनानुरोधेन भगवता निरुद्धः निरोधपदवीं पुरः प्रकटरूपेणैव गत इति भावः । निरोधफलस्य विप्रयोगतापानन्तरभावित्वादाचार्याणां च लीलामध्यपातिस्वरूपस्य विप्रयोगासम्भवाद्भगवता जीवेषु कृपया तद्दर्शनार्थं तथा प्राकट्यार्थमाज्ञप्तं, श्रीमदाचार्यैरपि तद्दर्शनार्थं स्वानुभव एव प्रदर्श्यते । यथा अहं रोधेन रुद्धस्तथाभूवम् । तथा लौकिके निरुद्धानां रोधार्थं निरोधं कथयामीत्याहुः **निरुद्धानां** त्विति । लौकिक इति शेषः । यद्वा, निवेदनेनैतत्स्वरूपेणैव निरोधयोग्यता भवती-त्याशयेनाहुः **निरुद्धानामिति** । निरुद्धानां स्वनिवेदितानां रोधाय भगवत्कृतलौकिका-सत्त्वमावाय निरोधं वर्णयामीति भावः । ते तवेत्यर्थः । त इत्येकवचनेनैतच्छ्रोतुर्दुर्लभत्वं ज्ञापितम् ॥ १० ॥

एवं प्रतिज्ञाय निरुद्धस्वरूपमेवाहुः **हरिणा य इति** ।

**हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।**
**ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ ११ ॥**

हरिणा ये विनिर्मुक्तास्ते भवसागरे मग्ना भवन्तीत्यर्थः । अत्रायं भावः । अकारणं गर्वदुःसहर्षा तन्मायनमविचार्य दुःखहरणशीलेन ये विशेषेण निर्मुक्ताः मायात्मकस्वरूपो-द्धोधरहिताः कृताः, येन च सागरे संसारसागरे मग्ना दुःखमेव प्राप्नुवन्तीत्यर्थः । ये तु अत्र अस्मिन्नेव जन्मनि मायात्मकस्वरूपेण निरुद्धास्ते अहर्निशं मोदमायान्ति, सन्तोषं प्राप्नु-वन्तीत्यर्थः । अहर्निशपदेन मायात्मकतया गोपस्त्रीवद्दोषवच्च मोदं प्राप्नुवन्तीति व्यज्यते । अहनि प्रजररसितामिनीनन्, रात्रौ गोपवत् ॥ ११ ॥

ननु तासां तेषां च विप्रयोगक्लेशे गुणगानदशासमयः (स) तस्य कथं मोदरूपतेत्या-शङ्क्याहुः गुणेष्विति ।

**गुणेष्वाविष्टचित्तानां सर्वदा मुरवैरिणः ।**
**संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १२ ॥**

मुरवैरिणः गुणेषु आविष्टचित्तानां सर्वदा संसारविरहक्लेशौ न स्यातामिति सम्बन्धः । अत्रायं भावः । मुरस्य जलदोषात्मकत्वात्सागरस्थितस्य वैरित्वोक्त्या रससागरदोषनिवारकत्वं व्यज्यते । तस्य गुणेष्वानन्दमयेषु विरहसामयिकोत्कटतापनिवारकजीवनहेतुभूतेष्वाविष्ट-चित्तानां तौ न स्यातामिति भावः । चित्ते ह्यावेशोक्त्यान्यावेशाभावो बोध्यते । अत एव सर्वदेत्युक्तम् । भगवत्सेवार्थव्यावृत्तावपि तत्परत्वार्थम् । यथोक्तं जीवोत्कटतापनिवर्तका-चार्यैर्भक्तिवर्धिन्यां 'व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदे' त्यादिना । एवं गुणाविष्टचि-त्तानां भगवति संसारस्याहन्ताममतात्मकस्य विरहाभाव इति यावत्, विप्रयोगजः क्लेशश्च तावुभावपि न स्याताम् । अयमर्थः । भगवत्यहन्ताममतासहितनित्यसंयोग एव भवेत्, सुखं भवेदिति शेषः । तत्र निदर्शनमाहुः **हरिवत्** । हरिवत्तौ न स्यातां, सुखं भवेत् । अत्रायं भावः । भगवतो जीवेष्वहन्ताममताभावो कदापि यथा न भवति स्वकीयत्वात्तेषां तद्वि-प्रयोगजक्लेशोपि तथा । 'भवतीनां वियोगो मे न हि सर्वात्मने'ति भगवतैवोक्तस्तदभावः । निवेदनानन्तरं भगवत्स्वरूपात्मकतैव सिध्यति । एवं सति भगवानिव तौ न स्यातां, सुखं च स्यादेवेति भावः ॥ १३ ॥

भगवत एवं करणे दयालुतां हेतुत्वेनाहुः तदेति ।

**तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।**
**बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यति ॥ १४ ॥**

यदा पूर्वोक्तप्रकारेण सुखं स्यात्तदा भगवति दयालुत्वं भवेत् । अन्यथा मर्यादा-दिप्रवेशेन क्रूरता मता सम्मता, पुष्टिस्थानामिति शेषः । भगवता एवं करणेभिमाना-दिबाधशङ्का मर्यादाद्यतिक्रमात्कृतबाधो वा भवेदित्याशङ्क्य नेत्याहुः । **बाधशङ्कापीति** । अत्र अस्मिन्मार्गे बाधशङ्कापि नास्ति । अपिशब्देन तच्छङ्कैव नास्ति कुतः पुनर्बाध इति भावो व्यज्यते । भगवदध्यासस्य दृढत्वाद्देहाध्यासाभावाच्च बाधशङ्केत्याहुः तदिति । तस्य भगवतोऽध्यासोऽपि सिध्यतीति भावः । अपिशब्देन भगवतोप्येतदध्यासो रसरीत्या सिध्यतीति बोध्यते ॥ १४ ॥

ननु भगवतो दयालुत्वे सुखोत्पादकता भवतु, परमस्य लौकिकत्वाद्भगवतो-लौकिकत्वात्कथमेतस्य लौकिकनिरुद्धा निरोधसिद्धिरित्याशङ्क्याहुः **संसारेति** ।

**संसारावेशदुष्टानामिन्द्रियाणां हिताय वै ।**
**कृष्णस्य सर्ववस्तूनि भूम्न ईशस्य योजयेत् ॥ १५ ॥**

एवं निरोधस्वरूपं निरूप्यान्यनिषेधपूर्वकमेतत्करणार्थमस्य सर्वाधिकत्वमुक्त्वोपसंहरन्ति नात इति ।

नातः परतरो मन्त्रो नातः परतरः स्तवः ।
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ २० ॥

अतः परतरो मन्त्रो नास्ति, तेन मन्त्रादिषु विश्वासं विहायायमेव ग्रन्थो जाप्यः । एतदुक्तप्रकारेण सेयमित्यर्थः । अतः परतरोन्यः स्तवो न । तेनैतदुक्तप्रकारेणैव प्रभुः स्तुत्य इत्यर्थः । अतः परतरा विद्यापि न । या विद्यैकोनविंशाध्याये व्रतप्रस्तावे निरूपिता सेयमेवेत्यर्थः । अतः परतरं तीर्थमपि न । तीर्थे प्रतिबन्धकपापनिवर्तकत्वमस्ति, न त्वाधिदैविकप्रतिबन्धनिवर्तकत्वम्, अस्य चाधिदैविकतन्निवर्तकत्वमस्तीति नातः परतरं तन्निवारकमन्यदिति भावः । तस्मात्प्रतिबन्धकापगमार्थमेतदेव स्तोत्रं सेव्यमिति भावः ॥ २० ॥

इति श्रीगोपिकाधीशवल्लभाचार्यसूचितः ।
निरोधो विवृतस्तेन सदा तुष्यन्तु ते मयि ॥ १ ॥
निरोधसंशयोऽनेन प्रकारेण सदा बुधैः ।
छेत्तव्य इति हि ज्ञात्वा तत्कृपातो विवेचितः ॥ २ ॥

इति श्रीश्यामलात्मजश्रीव्रजराजविरचितं निरोधलक्षणविवरणं सम्पूर्णम् ॥

---

# परिशिष्टम् ।

## 'निरोधलक्षणकी टीका प्रथम श्रीहरिरायजुने कीनीथी पत्र २२'

अथ विचार्यते, को निरोधः ? किञ्च तस्य कारणम् ? कथं वा फलत्वमिति । प्रपञ्चविस्मृतिपूर्विका आसक्तिर्निरोध इति । न चासक्तिमात्रं निरोध इति वाच्यम् । विषयासक्तौ व्यभिचारात् । न च तत्र प्रपञ्चविस्मृतिः, किन्तु तदभिनिवेश एव । न चासक्तिविषयातिरिक्तप्रपञ्चविस्मृतेर्विषयसाधारण्येनातिव्याप्तिरिति वाच्यम् । प्रपञ्चशब्दस्य तत्सामान्याभिप्रायत्वात् । न च लौकिकासक्तिविषयो न प्रपञ्चः । न च प्रपञ्चमात्रास्मरणे आसक्तेर्निर्विषयत्वापात इति वाच्यम् । प्रपञ्चातीतस्य तद्विषयत्वात् । न च तद्विषयस्य तदनीतत्वे प्रापञ्चिकत्वीयासक्तेरविषयत्वमिति वाच्यम् । योगजधर्मप्रत्यासत्त्या अतीन्द्रियार्थस्येव भक्त्या प्रपञ्चातीतस्य विषयत्वोपपत्तेः । ननु प्रपञ्चत्याग एव कुतो न निरोधविशेषणमिति चेत् । न । तस्य ज्ञानमार्गीयमोक्षसाधनत्वात् । 'भक्तानां गृहमेव विशिष्यत' इत्युक्तत्वाच्च । तस्माद्विस्मृतिमात्रमेवात्र श्रेयमिति । स च निरोधो द्विविधः । भागवतोऽन्यश्च । तत्र भागवतो भगवतः प्रपञ्चविस्मृतिपूर्वकं भक्तविषयकासक्तिरिति । 'निरोधोऽस्यानुशयनमात्मनः सह शक्तिभि'रिति वचनात् । अस्येति षष्ठ्या भेदेन निर्देशाच्च । 'निरोधोऽस्यानुशयनं प्रपञ्चे क्रीडनं हरे'रित्याचार्यचरणैर्विवृतत्वाच्च । लीलारूपेषु सर्गादिषु परिगणितत्वाच्च । नन्वत्र लक्षणमिदमनुपपन्नम्, भक्तानां प्रापञ्चिकत्वेन भगवतस्तद्विषयकासक्तौ प्रपञ्चविस्मरणाभावादिति चेत्, उच्यते । प्रापञ्चिकत्वं केन प्रकारेण ? न तावत् प्रत्यक्षम्, भक्तदादिप्रत्यक्षागोचरत्वानुभवात् । भक्तविशेषप्रत्यक्षत्वस्याप्रापञ्चिकत्वानुकूलत्वात् । अत एव तथात्वं बोधयन् भगवान् भक्तानामर्जुनं प्रति 'दिव्यं ददामि ते चक्षु'रित्युक्तवान् । 'यद्धि पश्यन्ति मुनयो गुणापाये समाहिता' इति श्रीभागवतवाक्याच्च । नाप्यनुमितिः, अनुकूलतर्काभावात् । न च दृश्यत्वादेरनुकूलतर्कत्वमिति वाच्यम्, दृश्यत्वस्य प्रागुक्तप्रकारेण व्यवस्थापितत्वात् । शब्दस्तु 'जयति जननिवासः', 'तद्विष्णोः परमं पदम्' 'तद्धिमान,' 'सविशेषं निर्गुणं स्मृतम्,' 'तं भजन् निर्गुणो भवेत्,' 'मुक्तोपसृप्यव्यपदेशात्,' 'मुक्ता अपि लीलाविग्रहं कृत्वा भजन्त' इत्यादिवाक्यैरनुकूल एवेति नानुपपन्नं किञ्चित् । ननु अस्तु भक्तानां तथात्वम्, तथापि भगवतोऽनिहतज्ञानशक्तेः प्रपञ्चविस्मरणं कथमुपपाद्यत इति चेत्, इत्थम् । भगवतोऽनन्तशक्तिमत्त्वेन यदा यदर्थं यां शक्तिमाविर्भावयति, सा तदा तत्कार्यानुगुणा भवति । एवञ्च सति 'धिया पुष्टये'ति वाक्ये मुख्यशक्तिप्रायपाठादविद्याया अपि तत्त्वेन तदाविर्भावनादनन्तरत्वमप्युपपन्नम् । न च निरोधादशायां सर्वज्ञत्वमनुपपन्नमिति वाच्यम् । विरुद्धानिधर्माधारत्वस्य 'तदेजति तन्नैजती'त्यादिश्रुतिसिद्धत्वात् । एतच्च यथा तथा सन्निरन्तरमस्माभिर्निरूपितं विद्वन्मण्डने । न च 'बन्धोऽस्यानिद्यया' नादिरिति वाक्यादविद्याश्रयत्वे तथा बन्धसम्भव इति वाच्यम् । तस्य मुख्यमायाशक्तिजन्याविद्याशक्तिजन्यत्वात् । 'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्, बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते' इति वाक्यात् । 'विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते, ते जीवस्यैव' । तदेव श्रीमदाचार्यैर्निरूपितं निबन्धे, 'विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते, ते जीवस्यैव नान्यस्य दुःखित्वं चाप्यनीशते'ति । तां च प्रभुः भक्तिमार्ग एव आविर्भावयतीति 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति वचनादवसीयते । अत एव निरूपितं यत्किञ्चिद् भगवत्स्वरूपतत्त्वविशेषेण 'मंगुण्य' इत्यादि । तदेतत् सर्वमाचार्य'यथायोग' स्वप्नावस्थावदिति' इत्यत्र निरूपितमिति मद्गदैवत्व एव विभावनीयम् । अथ किं तस्य कारणमिति चिन्त्यते । न तावल्लोक इव वासनया जन्यत इति वक्तुं शक्यम् । तस्या अनुभवजन्यत्वात् । भगवतश्च साक्षात्कारात् प्राक् लौकिकविषयविषयीन्द्रियातिविषयत्वेन अनुभवात् । साक्षात्कारे तु दिव्यदृष्टिदानेन तथात्वसम्भवात् । 'दिव्यं ददामि ते चक्षु'रिति वाक्यात्, 'कश्चिद् धीर' इति श्रुतेश्च । नापि भक्तिः, सा च द्विविधा, मर्यादापुष्टिभेदेन, तत्र न तावदाद्या, तस्या,

१ नि. द.

'भक्त्या त्वनन्यया,' 'विशते तदनन्तरम्' 'ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः,' इत्यादिवाक्यैः पुरुषोत्तमसायुज्यफलकत्वेन निरोधाजनकत्वात्। 'ननु भक्त्या सञ्जातये'त्यादिवाक्यैर्मर्यादाभक्तेः पुष्टिभक्तिफलकत्वेन, सा च निरोध इति कथं न निरोधजनकत्वमिति चेत्, उच्यते, तस्या अनुग्रहसहकारित्वेन परम्परासाधनत्वात्। अन्यथा 'नोपासितमहत्तमा' इति वाक्यं विरुध्येत। महदुपासनस्य मर्यादाभक्तिरूपत्वात्, न द्वितीया। तस्यास्तदसिद्धत्वात्, न हि स्वमेव स्वं प्रति साधनं भवति। तर्हि किमानुग्रहैकसाध्यत्वमेवेति चेत्, न, तादृशविशेषानुग्रहस्य कारणत्वात्, तादृशत्वं गुणगानसहकृतत्वं विशेषश्च तथा फलदानेच्छैवेति संक्षेपः। वस्तुतस्तु न गुणगानादेरपि साधनत्वं, निःसाधनत्वभंगात्, तथापि योगक्षेमसाधारणसाध्यत्वमादाय तथोक्तम्। अथ कथं निरोधस्य फलत्वमिति। सुखदुःखाभावान्यतरभावात्। भगवदासक्तेः स्वविषयाप्राप्त्या दुःखसहकृतत्वाच्चेति। उच्यते। निरोधो हि प्रपञ्चविस्मृतिसहिता भगवदासक्तिः, सा च स्वविषयविषयकविविधमनोरथजनको भावः, तस्य च रसरूपत्वेन सुखरूपत्वात्। 'रसं ह्येवायं लब्ध्वा आनन्दी भवती'ति श्रुतेः। प्रपञ्चविस्मृतिरूपत्वेन प्रापञ्चिकदुःखाभावरूपत्वाच्च। किञ्च, फलं हि पुरुषार्थः, तत्त्वं च तेन स्ववृत्तितयेष्यमाणत्वम्। तथा च आसक्तिमध्यपतितदुःखस्य आकाङ्क्षणीयत्वेन तथात्वम्। 'विपदः सन्तु ताः शश्व'दिति वाक्यात्। अन्यथा श्येनादावपि तज्जन्यनरकस्य तदुभयरूपत्वाभावेन फलत्वं न स्यात्। 'भूयान् मे नरकः शत्रुर्विपद्यता'मिति धिया श्येनकरणात्। सुखसाधनं तदिति चेत्, तदा प्रकृतेऽपि दीयतां दृष्टिः। न च सुखभ्रमात् प्रवृत्तिरिति वाच्यम्। नरके सुखभ्रमायोगात्। तस्मात् पुरुषार्थ एव फलम्। वस्तुतस्तु दुःखमेव न, किन्तु परमानन्द एव। अत एव श्रीशुकैः सर्वान्ते 'रेमिरे' इत्युक्तम्। अत एव श्रीमदाचार्यैः 'रसो निरोधो महाफल' इत्यभिहितम्। एवं सति भक्तिमार्गे निरोधस्यैव फलत्वात् तत्साधनतन्निरूपणं कुर्वन्तः श्रीमदाचार्याः तस्य दुर्लभत्वज्ञापनाय प्रार्थनारूपेण निरूपयन्ति 'यच्च दुःख'मिति। निरोधो हि प्रपञ्चविस्मृतिपूर्वकं भगवदासक्तिः। सा च भगवदर्शनाभ्यां सुखदुःखात्मिका। यदिति पदात् दुःखं च लोकविलक्षणं स्वरूपात्मकत्वात् कोटिकोट्यानन्दरूपं युगपत्सर्वलीलानुभावकं भगवद्भाविर्भावकम्, अतो निरोधस्य प्रथमांशो दुःखं प्रपञ्चविस्मृतेर्भगवदर्थदुःखजन्यत्वात्। अतो मूलभूतत्वादन्तेऽप्यस्यैव फलत्वावृत्त्यहितत्वेन प्रथमांशं दुःखं प्रार्थयन्ति 'यच्च दुःख'मिति। यद् दुःखं यशोदाया नन्दादीनां चकारादन्येषां गोकुले अस्ति तद्दुःखं मम क्वचिदपि स्यादिति सम्बन्धः। नन्वेतत्सर्वं निरोधस्य फलत्वे, तदेव तु न, सुखयादेरस्यैव तथात्वसम्भवादिति चेत्। न, अनाकलनात्। 'मानसी सा परा मता' 'चेतस्तत्प्रवणं सेवे'त्यादिभिः सिद्धान्तमुक्तावल्यामाचार्यैर्निरोधपदार्थस्यैव फलरूपसेवात्वेनोक्तत्वात्, अतो न काचिदनुपपत्तिरिति भावः। मातृचरणदुःखस्य श्रीमद्भावतोऽधिकत्वात् प्रथमोक्तिः। ननु पूर्वक्लेशेन भगवदानन्दनिधिप्राप्ताः किं क्लिष्टा एवेति चेत्। अत्रायं भावः। भगवति मथुरां प्रति प्रस्थिते, तत आरभ्य मातृचरणादीनां स्वस्वरूपात्मकविप्रयोगदानेन ते क्लिष्टा एव, परं स महारसो विलक्षणानन्दः। फलस्येयमेव पर्यवसितिरित्यैवमानन्दानुभवः, अतस्तन्मनोरथं कुर्वन्ति 'स्यान्मम क्वचि'दिति ॥ १ ॥ एवं यशोदादिदुःखं प्रार्थयित्वा अतिदुरापं गोपिकादुःखं प्रार्थयन्ति 'गोपिकानां ति'ति। तुशब्दः पूर्वस्मादुत्कृष्टत्वद्योतकः। गोपिकानां प्रसर्पत्तद्विरहिणीनां यत् श्रीभागवतादौ निरतिशयत्वेन प्रसिद्धं स्वरूपात्मकं तत् क्वचिदपि देहेन्द्रियप्राणेषु स्यादिति मनोरथः। यशोदानन्दादीनामेतत्सुखस्य स्वस्य रामसीमासप्रीतिविप्रहाणेन भर्गोत्तमतया अप्रार्थनीयत्वाद् गोपिकादीनामेव सुखांशं प्रार्थयन्ति 'गोकुले गोपिकानां चे'ति। गोकुले भगवतो लीलाभिर्वेणुनादादिरूपाभिर्गोपिकानां, चकाराद्गोपानां सर्वेषां व्रजवासिनां यावित्यगुणमनुभूतमानन्दं तल्लक्षणत्वादक्षमभूत्, तत् किं मे भविष्यतीति। अन्यत्र तथाकरणे सामर्थ्याभावमाहुः 'भगवा'निति। स हि सर्वं कर्तुं समर्थः। अतोऽन्यत्रापि तथा करिष्यत्येवेत्यर्थः ॥ २ ॥ एवं दुःखं प्रार्थयित्वा लीलाभिर्यत्सुखं तदपि प्रार्थयित्वा आत्यन्तिकविप्रयोगदानानन्तरं यासुखं तदपि प्रार्थयन्ति, उद्धवागमन इति। उद्धवस्यागमने जाते यथा गोपिकानां भवति सम्भवत्साहस्य-

गानद्वारा निरुद्धः भगवता स्वगुणेरावृत्तसर्वेन्द्रियः निरोधपदवीं निरोधस्य मार्गं गतः प्राप्त इत्यर्थः। गत इति कर्तरि क्तः। यद्वा निरोधेन भगवता भक्तेषु कृतेन निरोधेन तद्भावनया अहं तथेत्यर्थः। अत एवोक्तं 'भावो भावनया सिद्धः साधनं नान्यदिष्यते' इति। नन्वेतादृशस्य किं निरोधवर्णनप्रयासेनेत्यत आहुः निरुद्धानां त्विति। निरुद्धत्वे प्रकारान्तरद्योतनाय तुशब्दः। भगवता शास्त्रानुसारेण प्रमेयबलेन चात्मसात्कृतानां निरोधाय प्रपञ्चविस्मृतिपूर्वकं स्वासक्तिसिद्ध्यर्थं निरोधं निरोधलक्षणं भक्तेषु भगवत्कृतं वा वर्णयामीत्यर्थः। वर्तमानक्रियापदात् सर्वदा एतदभिनिवेशः सूचितः। तेषामर्थं भगवन्तं विज्ञापयन्त इवाहुः स इति। स्वसम्बन्धिनां तेषां स्वसम्बन्धिनं निरोधं वा। अत एव उभयथापि तवैवार्थं भार इति भावः॥ १०॥ नन्वेतादृशेषु गुणेषु विद्यमानेषु कथमत्र सर्वे न प्रवर्तन्त इत्याशंक्य तद्भाग्यमेव हेतुत्वेन वदन्त आहुः हरिणेति। थ इति भाग्यरहिताः। यतस्ते हरिणापि सर्वदुःखहर्त्रापि भगवता विशेषेण नितरां मुक्ताः। उपसर्गद्वयं कथमपि तेषां प्राप्त्यभावाय। निबन्धायासुरीं मतेति प्रयोजनाभिधानात्। मामप्राप्यैवेति तु प्रमेयबलेनेति दिक्। अत एव श्रीभागवते 'विना पशुघ्ना'दिति शुको विशेषणमुक्तवान्। ते आसुराः कर्मिणो देवा अपि भवोजन्ममरणप्रवाहः स एव सागरस्तत्र मग्नाः। तस्य सागरत्वं नक्रादिगिलनसम्भावनया, तत्र यथा पुनरुन्मज्जनासम्भव एवमत्रापि कामादिभिर्ग्रासेन पुनर्मोक्षमार्गप्रवेशासम्भव इत्येतद्धर्मसाम्येन दुर्लभत्वं वदन्तो निरुद्धानां व्यवस्थामाहुः ये निरुद्धा इति। भगवता ये निरुद्धा गुणैरात्मसात्कृताः त एवात्र गुणगाने मोदमानत्वं आसमन्तात् यान्ति प्राप्नुवन्ति। एवकारेण अनिरुद्धानामनीदृशत्वमित्यभाणि। तेषां गुणेष्वरुचेः। तदुक्तिस्तु भगवदनुग्रहेणैव। अत एव अर्जुनाभ्यां भगवता स्वपदाम्बुजस्पर्शेन देवर्षिवाक्यानुग्रहे कृते वाणी गुणानुकथन इत्यादिना प्रार्थितम्। उक्तं च तथैव श्रीमत्प्रभुचरणैर्भक्तिहंसे, 'तदर्थित्वस्य चरणकार्यत्वा'दिति। अहर्निशमिति। न तेषां क्षणमपि सांसारिकदुःखसम्भवः। 'मद्वार्तायातयामाना'मिति वाक्यात्॥ ११॥ ननु पूर्वं गुणगानस्य सुखजनकत्वोक्त्या तस्य च मनोधर्मत्वेन मनस्येवोदयात् तेन तन्निरोधसम्भवः सर्वेन्द्रियाणामहमहमिकया तत्परतायाः निरोधपदार्थत्वेन आचार्यैर्लक्षयिष्यतां फलमित्यस्य विवरणे निरूपितत्वान्मनसस्तथात्वोपायसिद्धावपि कथं चक्षुरादीनां तथात्वमित्याशङ्क्य तदुपायमाहुः संसारावेशदुष्टानामिति। संसारस्याहंताममतात्मकस्य य आवेश आसमन्तात् इन्द्रियेषु प्रवेशस्तेन दुष्टानां विकृतानां भगवद्विमुखानामिन्द्रियाणां चक्षुरादीनां हिताय भगवत्परतया हितं कर्तुं सर्ववस्तूनि दारागारपुत्रादीनि कृष्णाख्य सदानन्दस्य योजयेत् युक्तं कुर्यादित्यर्थः। कर्मादीनां सम्बन्धमात्रविवक्षायां षष्ठ्येवेति षष्ठी। ननु कृष्णे समर्पणेन कथं तेषां दोषनिवृत्तिरित्याशङ्काहुः ईशस्येति। सति समर्थः। आधिदैविकतामपि सम्पादयितुम्। तस्य दोषनिवर्तकत्वे किमाश्चर्यमिति भावः। ननु कृष्णस्येशत्वेपि न परमकाष्ठापन्नत्वमित्यत्र समाधानमाहुः भूम्न इति। समर्पणे प्रयोजनान्तरमाहुः भूम्न इति तादर्थ्ये चतुर्थी। तथा च भूमशब्दवाच्यसर्वात्मभावप्राप्तये सर्ववस्तूनि समर्पयेदित्यर्थः। अत एवाचार्यैः साधनाध्याये 'भूम्नः क्रतुवज्ज्यायस्त्वम् तथाहि दर्शयति' त्यधिकरणे। ननु सुखस्वरूपजिज्ञासायां यत्र नान्यत्पश्यतीत्यादिना सुखस्वरूपजिज्ञासायां यो वै भूमा तत्सुखमित्युक्तम्। भूमस्वरूपजिज्ञासायां यत्र नान्यत्पश्यतीत्यादिना तन्निरूपितं तत् सर्वात्मभावस्वरूपमिति निरूपितम्। यद्वा भूम्न इति भूमा भगवानेव सर्वाधिकः, अत एव भूमा सम्प्रसादादध्युपदेशादित्यधिकरणे भूमा भगवानेवेति निर्णीतमाचार्यैः॥ १२॥ नन्वेतस्त्वं भगवता स्वस्मिन् दयालुत्वधर्मं प्रादुर्भाविते सार्थकमन्यथा कृतमपि गुणगानादिकं व्यर्थमेवेत्याशंक्य यथा भगवति दयालुत्वं सिध्यति तं प्रकारमाहुः 'गुणेष्वाविष्टचित्ताना'मिति। सर्वदाऽव्यवधानेन भगवतो गुणेष्वैश्वर्यादिषु वा सौन्दर्यादिषु वा आविष्टचित्तानां अन्यानुसन्धानरहितान्तःकरणानां 'तद्गुणेषु प्रसक्ता हि उदासक्ता भवन्ति ही' त्याचार्यवचनाद् गुणैर्मदासक्तया वर्धमानया संसारो लौकिकेषु अहन्ताममतारूपः विरहक्लेशः भगवद्विरहेण क्लेशश्च तौ उभौ न स्यातामित्यर्थः। 'अपवन् गृणन् संस्मरयंश्च चिन्तयन् नामानि रूपाणि च मङ्गलानि ते, क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते' 'तव कथामृत'मित्यादिवाक्यात्। यद्वा, संसारस्तद्विरहश्च ताभ्यां यौ क्लेशौ तौ

तथेत्यर्थः । अयमर्थः । गुणाविष्टचित्तानां सर्वत्र संसारेण अहन्ताममतारूपेण अभिलषितप्राप्तितदभावाभ्यां यः क्लेशः यश्च संसाराभावेन भगवत्यपि तदभावेन भवति सोपि तथेत्यर्थः । भगवद्विषयकसंसारस्य सततमप्यपेक्षणीयत्वात् । अत एव 'कुर्वन्ति गोवत्सपद' मित्यत्रत्यस्य गोवत्सपदमात्रकरणोक्त्या अहमेतद्दासोऽयं मम स्वामीत्येतावान् संसारः स्थापितो भवतीति निरूपितमाचार्यैः । [redacted] च क्लेशः 'क्लेशोऽधिकतरस्तेषा' मित्यादिना भगवता गीतायामेव वर्णितः ॥ १३ ॥ ननु गुणाविष्टचित्तत्वेप्यनिष्टनिवृत्तिरेव किमित्याशंकायामाहुः 'हरिवत्सुख'मिति । हरेः सर्वदुःखहर्तुर्भगवतो यथा सर्वदैव भक्तसाहित्येन सुखं पूर्णानन्दत्वाद्भगवतस्तथा गुणाविष्टचित्तत्वेऽन्तस्तद्भाविर्भावाद्भगवत्साहित्येन तथैव सुखमित्यर्थः । 'सदा सत्संगयुक्तानामवस्थैवं यदा भवेत् । तदा दयालुता दैन्यदर्शनात्तु हरेर्भवे' दित्याशयेनाहुः तदा भवेद् दयालुत्वमिति । अन्यथेति । एवं भावाभावे भगवतोपि क्रूरता भवकृपालुता अनपेक्षकत्वेन मतास्माकं सम्मतेत्यर्थः । अत एव नैवात्मन इति श्लोके भगवत आत्मनः प्रभोर्निजलाभपूर्णस्य अविद्वज्जनोपकृतोऽपराग्रहीतुः करणया किङ्करनिवेदितानुग्राहकत्वमुच्यते श्रीभागवते । सा च पूर्वोक्तभावेनैव भवतीति सर्वमनवद्यम् । ननु कालकर्मस्वभावादिभिर्बुद्धिनाशभयप्रमोद्वेगादिदोषसम्भवे कथं गुणगाननिर्वाह इति चेत्, तत्राहुः बाधशङ्कापि नास्त्यत्रेति । अत्र गुणगाने कालादिबाधशङ्कैव न, यतो भगवतैवोक्तं श्रीभागवते 'न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेति'रिति । किञ्च । नात्र भगवतापि बाधः कर्तुं शक्यः, तत्र के वराकाः कालादय इत्यर्थः । अत एवोक्तमाचार्यैः 'हरिरपि न शक्नोति कर्तुं बाधां कुतोपर' इति । ननु सर्वकृतिसमर्थस्य भगवतः कथमेतन्नाशबाधकृत्यसमर्थत्वमिति चेत्, सत्यम्, परन्तु सर्वस्य वशीति श्रुत्या सर्ववश्यस्य भगवतो भक्तवश्यतैव सर्वसमर्थस्य भक्तबाधाऽसमर्थत्वमिति भावः । एवमनिष्टनिवृत्तिमुक्त्वा इष्टप्राप्तिमाहुः तदभ्यासोपि सिध्यतीति । गुणगानेन तस्य भगवतः अध्यासः सर्वथाऽवभासः सोप्यवान्तरफलतया सम्यक् सिद्धिविषयो भवतीत्यर्थः । अभ्यासपदं घटादिषु तदवभासस्य भावनाप्रयुक्तत्वेन वस्तुत आसक्तिभ्रमबोधनाय । अन्यथा घटादेः पुरुषोत्तमाभिन्नत्वं स्यात्, नहि घटादिः साक्षात्तदभिन्नः, किन्तु परम्परया । तस्याक्षरात्मतया तद्द्वारा तथात्वात्, अन्यथा तावद्धर्मविशिष्टत्वं तेष्वप्यसिद्ध्यात् । ननूच्यन्त एव ब्रह्मधर्माः सच्चिदानन्दादयस्तेष्विति चेत्, अक्षरगतानामेव तेषां तद्वृत्तितया व्यपदिश्यमानत्वात् । अन्यथा यत्रापीदन्त्वाद्योपि व्यपदिश्येरन् । न च इष्टापत्तिः । तदसाधारणधर्माणामन्यत्र कथनस्यानुचितत्वात् । किञ्च, सर्वेषां धर्माणां साधारणत्वे तदसाधारणधर्माभावे लक्षणाभावादनिरूप्यत्वं जीवसमत्वसम्भजनीयत्वं च स्यात् । तस्मादेतद्व्याक्षरसमानाधिकरणत्वेन तद्धर्मव्यपदेश एव, न पुरुषोत्तमधर्मसम्भोपीति दुरुक्तम् । ननु धर्मादयो व्यपदिष्टा एव, किं न ते पुरुषोत्तमधर्मा इति चेत्, सत्यम्, तद्धर्मा एव, परंत्वक्षरस्य चरणरूपत्वेन तद्गमितया तेषां तत्र सद्भावात् । यतो व्यामादिष्वपि तदिच्छया तद्भावः, युक्तं भर्ग: स्वैरिति पाठात् । एवं सति 'उत्तम पुरुषस्त्वन्य' 'भेदव्यपदेशाच्चे'त्यादिस्मृतिसूत्रमीमांसया अक्षराभेदः पुरुषोत्तमभेद इति भेदाभेदवादोऽस्माकमिति दिक् ॥ १४ ॥ ननु वैराग्यस्य गुणगानाद्यङ्गत्वेन तदभावे भक्तिदीनत्वेन न सफलत्वमित्याशङ्क्य तत्प्यनेनैव भवतीति साधनसम्पादकत्वमप्युत्कर्षमाहुः भगवद्धर्मसामर्थ्यादिति । भगवद्धर्मा गुणगानं तत्सामर्थ्याद्गुणगानेनैव विषये भगवद्व्यतिरिक्तविषये विरागो रागाभावः स्थिरः, अव्यापरिमार्ग्यो भवतीत्यर्थः । 'सा श्रद्दधानस्य विवृद्धमाना विरक्तिमन्यत्र करोति पुंस' इति वाक्यात् । यद्वा, भगवद्धर्माः भगवल्लीलादयः, तत्सामर्थ्यादेव तत्स्वभावादेव विरतो भवतीत्यर्थः । अत एवोक्तमिप्य भूतगुणो हरिरिति ॥ १५ ॥ एवं सोपपत्तिकं गुणगानकर्तव्यतामभिधाय तदुपसंहरन्ति एवं कार्यमिति । एवं पूर्वोक्तेन प्रकारेण ज्ञानमार्गेण गुणवर्णने उक्तं ज्ञात्वा गर्वापेक्षां परित्यज्य सदा कालावच्छेदेन गुणा एव वर्णनीयाः । अत्र वाक्यद्वयं स्मारार्थमाहुः समन्तर्दरेनुर्धर्तिन । भाग्यर्थेऽभयोरथ्यस्तावाधकत्वात् त्याज्यत्वम्, निर्मत्सराणां सतामिति वाक्यात् ॥ १६ ॥ ननु गुणगानं रागाभावादिबलीकृतचित्तत्वया कार्यं इत्यत्रापि सारते गुणगानस्य

पूर्वोक्तमुख्यनिरोधाधिकारूपत्वात् तदनुक्त्वा भगवत्स्वरूपध्यानमात्रमेव साधनमाहुः हरिमूर्तिः
सदा ध्येयेति । एवं कृते तदेकशरणस्य अन्याशक्यपूरणमनोरथस्य सर्वथा निःसाधनस्य गजेन्द्रस्येव
रक्षार्थं भगवानाविर्भवतीति ज्ञापयितुं हरिरिति । ननु योग इव कल्पितमूर्तेरुपासनायामिव सम्पादिता-
ध्यस्तक्रियाविशेषयुक्तमूर्तेर्नो ज्ञान इव सोपधानमूर्तेर्ध्यानमिहापि भविष्यतीत्याशङ्क्याहुः हरिमूर्ति-
रिति । भक्त्याविर्भूतस्वरूपस्यैव ध्यानम्, न त्वन्यथाभूतस्येत्यर्थः । ध्येयेति विध्यर्थककृत्यप्रत्ययेन आव-
श्यकत्वं द्योतितम् । ननु ध्यानपूर्वकगुणगानमात्रेण किं भवतीत्याशङ्क्याहुः सङ्कल्पादपीति ।
सङ्कल्पाद्विचारमात्रादपि तत्र भगवन्मूर्तौ प्रादुर्भावात् भगवतो दर्शनं स्पर्शनं स्पष्टमबाधितं भवति ।
तथा कृतिः कटाक्षक्षेपणादिरूपा, गतिः विलासगतिः, एतत्सर्वं ध्यानपूर्वकतादृशगुणगानेन निरोधा-
त्मकभगवत्स्वरूपे स्पष्टमबाधितं अनुभूतं भवतीत्यर्थः । निरोधोपयोगिसाधनान्तराण्याहुः, श्रवणं कीर्तन-
मिति । श्रवणं श्रीभागवतादेः, कीर्तनं, एतद्द्वयमपि स्पष्टम्, सङ्कोचादिकमकृत्वा कर्तव्यम् । अन्यथा
श्रवणे कीर्तने असम्भावनाविपरीतभावने स्याताम्, तथा च अनर्थः स्यादिति भावः । श्रोतृसापेक्षं
कीर्तनं, तन्निरपेक्षं गानमिति तयोर्विवेकः । किञ्च पुत्रे कृष्णप्रिये कृष्णस्य प्रियः कृष्णः प्रियो वा यस्य
तथाभूते रतिः कार्येत्यर्थः । पुत्रे कृष्णप्रिय इति व्यत्यासेन कृष्णप्रियत्वेनैव रतिः कार्या, न पुत्रत्वेनेति
भावः सूच्यते । अतः परं साधनसमुदायफलं निरूपयन्तः शरीरपरिवर्तलक्षणं प्रतिबन्धनिराकरणमाहुः
यावदिति । सपरिकरेण गुणगानेन प्रकटे भगवति तच्चरणमकरन्दगन्धवाहः स्वविवरैः प्रविशन् शरीरग-
तमलांशं शोषणयोग्यं शोषयित्वा तदयोग्यं स्वयेनोत्क्षिप्य तनौ शोषमाणं शेषः अवशिष्टो यश्चरणरेणु-
सम्बन्धी भागः तं भवेत् प्राप्नुयात् । तथा सति अस्मिन्नेव शरीरे अलौकिकत्वसम्पत्त्या पुरुषोत्तमानन्दा-
नुभवयोग्यता भवतीत्यर्थः । एतैस्तदतिरिक्तसाधनैरयं प्रतिबन्धो न निवर्तत इत्युक्तम् । पुत्रादेरप्यपि
दुःसंगादिना भावनाशसम्भवात्तदुपायमाहुः यद्येति । यस्य पुत्रादेर्भगवत्कार्यं सेवादिरूपं स्पष्टं प्रकटं
प्रातिकूल्येन न दृश्यते शिक्षायामपि, तदा सति सामर्थ्ये तस्य विशेषेण भरणादिकमकृत्वापि निग्रहः
कर्तव्य इत्यर्थः । अन्यथा सति सामर्थ्ये तदनिग्रहे 'अप्रतिषिद्धमनुमतं भवती'ति न्यायेन तत्कृतौ पुत्रे
कृष्णप्रिये रतिरित्यनेन विरोधापत्तेरित्यत आहुः इति निश्चयः । सति सामर्थ्ये निग्रह एव कर्तव्य इति
भावः । इदमुक्तं भवति । कृष्णप्रियत्वे रतिरस्पष्टप्रभुकार्यकरणे औदासीन्यं प्रातिकूल्ये सति सम्भवे
त्यागस्य सेवाप्रतिकूलतया निग्रहः, असम्भवे तु त्यागं कृत्वा आन्तरभक्तिमार्गे प्रवेश इति ॥ १७ ॥
॥ १८ ॥ १९ ॥ अतः परं साधनरूपं निरूपयन्तः साधनान्तराणामप्रयोजकत्वं वदन्ति[1] ।



१. एतावत्येव टीका मिलिता ।

॥ श्रीकृष्णाय नमः ॥

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# निरोधलक्षणम् ।

## गोस्वामी श्रीपुरुषोत्तमजीकृत टीकाना भाषांतरसहित.

निज जनउपर कृपावंत श्रीमद्वल्लभाचार्यजीने प्रणाम करीने तेओश्रीनो आ दास (श्रीपुरुषोत्तमजी) निरोधलक्षण ग्रन्थनो विचार करे छे.

श्रीमद्वल्लभाचार्यजी संन्यासनिर्णय ग्रन्थमां भक्तिमार्गीय त्याग प्रभुना विरहना अनुभवनेमाटे कर्तव्य छे एम सूचवे छे; कौण्डिन्यऋषि अने श्रीगोपिकाओ ए बे गुरु छे एम कहे छे; बन्नेना समय अने फल जूदा जूदा छे एम बोध करे छे, अने तेपरथी अधिकारीओनो भेद सूचवे छे; ए भक्तिमार्गीय त्याग मात्र प्रेमथी ज सिद्ध थाय छे एम आज्ञा करे छे; ए प्रेमनुं साधन शुं, एम आकांक्षा थतां आज्ञा करे छे के भावनाथी सिद्ध थयलो भाव ज मात्र साधन छे; अने भावभावनाथी विलक्षण (उच्च) अधिकार प्राप्त थतां प्रभुना गुणगान ज विरहमां जीवन टकावी राखे छे एम आज्ञा करे छे.

त्यां एम आकांक्षा थाय छे के केवा अधिकारीने केवी भावनाथी उत्पन्न थयलो केवा प्रकारनो भाव साधनरूपे उपयोगी थइ पडे छे? वळी प्रभुना गुणो पण त्यां बाधक कहेला छतां केवा अधिकारमां केवा प्रकारे जीवन टकावी राखवामां साधनभूत थइ पडे छे? एम पण आकांक्षा थाय छे. वळी भक्तिवर्धिनी ग्रन्थमां श्रीमद्वल्लभाचार्यजीए आज्ञा करीछे के जे भक्तने भक्तिनो बीजभाव दृढ थयो होय अने जे भगवाने आज्ञा करेली अने आपे विचारेली रीतिए भजन करतो होय एवा भक्ते भक्तिनी प्रवृद्धिने माटे गृहत्याग करीने श्रवण कीर्तनरूप साधन करवां; जेनो बीजभाव दृढ न थयो होय तेणे तो घरमां रहीने पूजा श्रवण वगेरे करीने प्रभुनुं भजन करवुं, अने एम करतां करतां प्रभुतरफ स्नेह आसक्ति अने व्यसन थाय त्यारे ते कृतार्थ थाय एम कह्युं. आगळ जतां त्याग करवा वगेरेनी आवश्यकता बतावी. त्यांपण भक्तिवृद्धिनुं स्वरूप शुं, भक्तिनी वृद्धि थई छे एम केम मालम पडे, एम आकांक्षा थाय छे. अने सेवाफलविवरणमां आज्ञा करी के जो आद्य फल (अलौकिक सामर्थ्य)

न प्राप्त थाय तो सेवा आधिदैविकी थइ शकती नथी, तेथी ज फल प्राप्त थयुं नथी एम समजवुं. त्यां पण एम आकांक्षा थाय छे के सेवा आधिदैविकी केम थाय ?

एप्रमाणे उपर कहेला ग्रंथोमां आ सर्व आकांक्षाओ उत्पन्न थाय छे ते पूर्ण करवाने आप एम बोध करे छे के जेवी रीते भगवान् अवतार दशामां भक्तने दर्शन थाय एवा गुणलीलाओवडे प्रपंचनी विस्मृति करावी पोतामां आसक्ति करावी निरोध धीमेधीमे क्रमवार करावे छे अने जीवोनो उद्धार करे छे तेम हाल अनवतार दशामां ज्यारे पोते भूतलपर प्रकट बिराजता नथी त्यारे पण श्रवण कीर्तन वगेरेथी अनुभवमां आवे एवा गुणलीलाओवडे ज धीमेधीमे क्रमवार निरोध प्राप्त करावे छे अने जीवोनो उद्धार करे छे; माटे त्यागपूर्वक श्रवणथी उत्पन्न थती भावनाथी भजता भक्ते, तेमज त्यागपूर्वक कीर्तनथी भजता भक्ते, तेम ज घरमां रहीने सेवापूजा वगेरेथी भजता भक्ते सर्वेए पोतपोताना अधिकार प्रमाणे भक्तिनी वृद्धिरूप उपर कहेलो निरोध प्राप्त करवाने प्रयत्न कर्या करवो.

तेमां पण जे भक्त त्यागपूर्वक श्रवणथी उत्पन्न थती भावनाथी भजतो होय तेणे पोतापर प्रभुनी केटली कृपा थइ तेनी परीक्षा करवी, ( पोताना मनमां विचारथी समजवुं ), प्रभुना गुणगान गावा, पोतानी अवस्थानी परीक्षा करवी, एटले पोते केटले दरजे पहोंच्यो छे तेनो मनसाथे विचार करवो, अने पोताना अधिकारप्रमाणे पोताना मनमां प्रभुपरत्वे उत्पन्न थता मनोरथोपरथी पोतामां निरोधनी उत्पत्ति क्यांसुधी थइ तेनो विचार करवो.

जे भक्त कीर्तनवडे प्रभुनुं भजन करतो होय तेणे कीर्तनथी पोताने अनुभवमां आवता सुखविशेषथी पोतामां भक्तिनी वृद्धि केटली थइ तेनी परीक्षा करवी, अने प्रभुकृपा पोतापर केटली थइ तेनो विचार करवो.

जे भक्त घरमां रही प्रभुनुं भजन करतो होय तेणे पोते जे सेवा करे छे ते आधिदैविकी पर्यंत पहोंचे तेमाटे श्रवण कीर्तन ध्यान निरंतर कर्या करवां.

आ सर्वने उपदेश करवाने आप निरोधलक्षण ग्रन्थनो आरम्भ करे छे. कोइने एम शंका थाय के आ निरोधलक्षण ग्रन्थ संन्यासनिर्णय वगेरे बीजा ग्रन्थोना शेष-अङ्गरूप छे एम धारवानुं शु कारण छे? जेम बीजा ग्रन्थो एकएकथी स्वतंत्र छे तेम आ ग्रन्थ पण स्वतंत्र छे एम शामाटे न मानवुं ?

आ शङ्काना समाधानमां कहेवानुं के आ ग्रन्थमां ग्रन्थ करवानी प्रतिज्ञा नथी, तेथी कोईपण कारणने लीधे आ ग्रन्थ कर्यो एम तो आपणे मानवुं ज पडशे; वळी संन्यासनिर्णयमां कहेली भावना वगेरेनु स्वरूप शुं एम आकांक्षा थाय छे, तेम ज प्रभुना गुणगान जीवनना हेतुरूप थइ पडे छे ते कये प्रकारे थाय छे, एम आकांक्षा

थाय छे, तेमज **भक्तिवर्धिनीमां** कहेला **भक्तिवृद्धि** पदमां भक्तिवृद्धिनुं स्वरूप शुं एम आकांक्षा थाय छे, तेमज **सेवाफलविवरणमां** कहेला **अनाधिदैविकी** पदमां सेवा **आधिदैविकी** केम थाय, एम आकांक्षा थाय छे–तेमज आ **निरोधलक्षण** ग्रन्थमां श्रीयशोदा वगेरेने थयला दुःखनी आशंसा गुणकीर्तन वगेरेनुं जे वर्णन छे ते अकस्मात् एटले प्रयोजनवगरनुं थइ पडे छे, माटे ए सर्व शामाटे कह्युं एम आकांक्षा थाय छे, माटे आ **निरोधलक्षण** ग्रन्थ उपर लखेला **संन्यासनिर्णय भक्तिवर्धिनी** अने **सेवाफलविवरण** ग्रन्थोमां उत्पन्न थती आकांक्षाओ पूर्ण करे छे तेथी, अने आ ग्रन्थमां **दयालुत्व** वगेरे शब्दो छे तेनुं विशेष ज्ञान करावे छे अने ते ते ग्रन्थोमांना **प्रमेयनुं**[1] पण विशेष ज्ञान करावे छे तेथी, आ ग्रन्थ **संन्यासनिर्णय** वगेरे ग्रन्थोनो शेषभूत छे एम निश्चय थाय छे.

कदाचित् कोइ कहे के **भक्तिवर्धिनीमां** कहेला कोइपण शब्दनुं विशेष ज्ञान **निरोधलक्षणमां** थतुं नथी, माटे **भक्तिवर्धिनीना** शेपतरीके **निरोधलक्षण** नथी, तो ते बरोबर नथी, केमके **संन्यासनिर्णयना** प्रमेयमां ज **भक्तिवर्धिनीनुं** प्रमेय आवी जाय छे.

परस्पर आकांक्षा पूराती होवाथी ज श्रीहरिरायजीए पण 'श्रीकृष्णरसविक्षिप्त' ए पांच श्लोक जो के स्वतंत्र जणाय छे तो पण जलभेदना अङ्गभूत गणेला छे. तेथी एप्रमाणे अङ्गरूप गणवामां अने एकवाक्यतानो अङ्गीकार करवामां कांइपण बाधक नथी; तेथी आ **निरोधलक्षण** ग्रन्थनुं **संन्यासनिर्णय भक्तिवर्धिनी** अने **सेवाफलविवरणना** शेपरूपे व्याख्यान करवामां आवे छे.

**संन्यासनिर्णयमां** सिद्ध कर्युं छे के त्यागी भक्तने भावना मात्रथी सिद्ध थयलो भाव ज साधनरूप छे, त्यागीओमां प्रथम अधिकारीए करेलो त्याग प्रभुना विरहना अनुभवने माटे ज होय छे, अने विरह ए प्राकट्यना तिरोभावथी थयला दुःखरूप छे, एवा ( विरही ) अधिकारीने श्रीकृष्णमां आसक्ति होवाथी घरमां रहेला मनुष्यो बाधक अने अनात्मरूप ( पोतानी साथे संबंधविनाना ) भासे छे, तेथी प्रपञ्चनी कांइक विस्मृति थइ भगवान्मां आसक्ति थाय छे, अने पछी व्यसन थायछे, त्यारे भगवान्ना गुण अने लीलानुं प्राधान्य छुटी जइ भगवान्ना स्वरूपमां आसक्ति थायछे, अने भगवान्ना स्वरूपनी प्राप्ति नहि होवाथी दीनता थाय छे, भगवान्नो प्रादुर्भाव तो जन्मप्रकरणमां कथाप्रमाणे भक्तना दुःखथीज थाय छे एवुं ज्ञान होवाथी एवा दुःखनी इच्छा उत्पन्न थाय छे. एवुं दुःख अतिशय थाय तेज भक्तिनी वृद्धिरूपछे, केमके ते स्थितिमां भग-

[1] प्रमेय एटले ग्रन्थमां जे विषयनुं प्रतिपादन कर्युं होय ते विषय.

लोके शब्दार्थसम्बन्धो रूपं तेषां च यादृशम्।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत् ॥ २ ॥
ब्रह्मवादे निरुक्तिस्तु न वक्तव्यैव कुत्रचित् ।
वस्तुतो ब्रह्म सर्वं हि व्यवहारस्तु लोकतः ॥ ३ ॥
ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित् ॥ ४ ॥
काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिरुच्यते ।
'स्वाध्यायोऽध्येतव्यः ।' 'अष्टवर्षं ब्राह्मणमुपनयीत
तमध्यापयीत ।' 'सांगो वेदोऽध्येयो ज्ञेयश्चे'ति ।
वाक्यत्रयं तथा वेदेऽनारभ्योक्तमेव हि ॥ ५ ॥

---

वैदिकस्तत्सादृश्येन बोध्यते इति बोधने उपकारकः। अतो लोके शब्दार्थयोर्यः सम्बन्धः साङ्केतिकः । च पुनः तेषां यादृक् रूपं तत्र विवादो न कार्यः । यतस्तत्र विवादे क्रियमाणे लोकोच्छित्तिर्भवेत्। 'युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथे'ति 'नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा, एवं विवदतां हेतुः शक्तयो मे दुरत्यया' इति भगवदुक्तन्यायस्य तत्रापि तुल्यत्वात्। अतः सिद्धरूपस्य लौकिकस्योपकारकत्वमात्रं ग्राह्यम्, न तु तेन कश्चित्तत्त्वनिश्चय इति। तत्र विवादो व्यर्थत्वान्नास्माभिः कार्य इत्यर्थः ॥१,२॥

तर्हि ब्रह्मवादे न कार्य इत्यत आहुः ब्रह्मेत्यादि । तथा चाखण्डब्रह्मवादेनापि वैदिकव्यवहारासिद्धेस्तेनापि न कार्यः, किन्तु सखण्डब्रह्मवादे लोकस्य 'ममायेये'-तीच्छया सिद्धत्वात्तत्सिद्धेन शास्त्रसम्मतेन लोकेन कार्य इत्यर्थः ॥ ३ ॥

तत्र प्रकारमाहुः य इत्यादि ॥ ४ ॥

एवं शब्दकरणप्रकारं चतुर्भिरुक्त्वा निरोधविषयमाहुः काण्डेत्यादि । अर्थसिद्ध्यर्थमिति । प्रयोजनसिद्ध्यर्थम्। न ह्यन्यप्रकारेणाधीते वेदे धर्मस्तज्जन्यं फलं वा सिध्यतीति तदर्थं स्वाध्यायविधिः स्वाध्यायप्रकार उच्यते वेदे निरूप्यत इत्यर्थः। तत्र प्रमाणमाहुः स्वाध्यायेत्यादि । प्रथमेति प्रकारबोधकम् । आद्यं वाक्यं तैत्तिरीयब्राह्मणस्थम्। अन्यतरत् शाखान्तरीयम् । तत्र केचिदध्यापयीतेत्यत्र अध्यापयेदिति पठन्ति । तृतीयं च 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'तिपठन्ति । एतेषां सर्वसाधारणतामाहुः अनारभ्योक्तमेवेति। तथा प्रकरणनियामकाभावात् सर्वशाखिसाधारणमित्यर्थः।

एकार्थता तु सर्वत्र विशेषोप्युच्यते स्फुटः ।
स्वाध्यायशब्दो वेदे हि रूढो योगोऽपि वर्तते ॥ ६ ॥
सुष्ठ्वासमन्तादध्येयः शोभनैर्नियमैर्युतः ।
देशे काले गुरौ स्वस्मिन्नपेक्ष्यन्ते गुणा इह ॥ ७ ॥
आ सर्वतः पुनस्तत्र यथा शङ्का न जायते ।
शब्दे ह्यर्थे ह्यनुष्ठाने तथाध्येयो हि वैदिकैः ॥ ८ ॥
अपर्णताद्यपहतपाप्मादिसकलैर्गुणैः ।
प्रजापतिमुखैर्वेदो यथा हि पठितः पुरा ॥ ९ ॥

---

अन्यथैतदुक्तप्रकारेण न सर्वे पाठयेयुः पठेयुश्चेति । तर्हि वाक्यत्रयस्य किं प्रयोजनमि-
त्यत आहुः एकार्थतेत्यादि । तुरुक्तशङ्कानिरासे । सर्वत्र त्रिष्वपि वाक्येषु स्वाध्या-
यप्रकारबोधनेन यद्यप्येकार्थता एकवाक्यत्वम्, तथापि विशेषः स्फुट उच्यते ।
अतः स एव प्रयोजनमित्यर्थः ॥ ५-½ ॥

कथं तस्य प्रयोजनत्वमित्याकांक्षायां प्रथमं पूर्ववाक्यगतं विशेषं पञ्चभिर्विवृण्वन्ति
स्वाध्यायेत्यादि । तथा च सुष्ठु आसमन्तात् यथा स्यात्तथा योधीयते ,सः स्वाध्याय
इत्ययं योग इत्यर्थः। सु इत्यस्यार्थः शोभनमित्यादि । तत्र अध्ययनेऽपेक्षितदेशकाल-
गुरुशिष्यगतगुणविशिष्टत्वम् । आङोर्थस्तु पुनस्तत्रेत्यादिनोच्यते। हिः सर्वत्र निश्चया-
र्थः । तथा च शब्दार्थानुष्ठानेषु शङ्काराहित्यमाङर्थः । तेन स्वाङ्द्योतितार्थपूर्वकं योधीयते
वेदः स स्वाध्याय इत्यर्थः । एवमध्ययनेन द्योतितशयोऽध्येतरि यश्च वेद आधीयते तमाहुः
अपर्णतेत्यादि । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यः,
यज्ञेन देवेभ्यः, प्रजाभिः पितृभ्यः, एष वा अनृण' इति श्रुत्या 'ऋणैस्त्रिभिर्द्विजो जातो
देवर्षिपितृणां प्रभो, यज्ञाध्ययनदानैस्तानतिस्तीर्य त्यजन् पते'दित्यादिस्मृतिभिश्च ब्रह्म-
चर्यपूर्वकाध्ययनेनापर्णता । आदिपदोक्तो वेदोक्तसाधनकरणतत्फलास्योः स्वरूपयोग्यता-
रूपोधिकारश्चाध्येतुर्भवति । 'अपहतपाप्मा स्वाध्यायो देवपवित्र'मितिश्रुत्युक्तमपहत-
पाप्मत्वमादिपदोक्तमयातयामत्वं तत्पठिते वेदे भवतीत्युभाभ्यां अध्येतृधर्मवेदधर्माभ्यां
साक्षात्परंपरया च वेदस्य संस्कारेण स्वाध्यायत्वं तस्य भवति, अन्यथा तु 'छन्दांस्येनं
प्रजहन्ति काले नीडं शकुन्ता इव जातपक्षा ' इतिन्यायः स्यादित्यर्थः । तेन सिद्धमाहुः
प्रजापतीत्यादि । स्वाध्यायेधिकारिणं बोधयितुं अध्येतव्य इति तव्यप्रत्यर्थमाहुः

तादृग्गुणविशिष्टोत्र वेदः स्वाध्याय उच्यते ।
तव्यस्त्वावश्यके प्रोक्तो न विधिर्ज्ञातृबोधनात् ॥ १० ॥
स्वाध्यायपदतो ज्ञेयं तन्माहात्म्यं फलं तथा ।

तव्य इत्यादि । स्वाध्यायब्राह्मणे 'यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठत' इति ब्रह्मयज्ञं लक्षयित्वा, तत्फलं तस्य यज्ञत्वसंपत्तिप्रकारं चोक्त्वा, अग्रिमानुवाके कानिचित्तस्य पूर्वाङ्गानि विधाय, तेषां फलं चोक्त्वा, 'प्राङासीनः स्वाध्यायमधीयीत'ति विधाय, अग्रे चतुर्भिरनुवाकैस्तत्प्रकारं वदन् स्वाध्यायस्यापहतपाप्मत्वं 'अपहतपाप्मा स्वाध्यायो देवपवित्रम्' तदध्ययनं विना व्रात्यभागं स्वर्गाभावं च प्रतिपाद्य, पश्चादाह 'तस्मात्स्वाध्यायोऽध्येतव्यो यं यं क्रतुमधीते तेन तेनास्येष्टं भवती'त्यादि । तेन ज्ञानपूर्वकस्याध्ययनस्यात्रोक्तत्वान्न विधिः । यदि तद्वाक्यं भिन्नमेवोपेयते, तदाप्यनेनोपसंहारान्न विधित्वम् । न च तव्यस्यावश्यकत्वार्थाङ्गीकारे 'अनधीयाना व्रात्या भवन्ती'तिवाक्यवैयर्थ्यापत्तिः । तव्यस्य भावकर्मविध्यनुवादमात्रकालावश्यकाद्यर्थेषु विधानदर्शनादत्र तदर्थनिश्चायकत्वेनास्यावैयर्थ्यात् । अतः पूर्वोक्त एवार्थ इत्यर्थः । न च स्वाध्यायवाक्यासन्निहितस्यानधीयानवाक्यस्य कथं तदर्थनिर्णायकत्वमिति वाच्यम् । बाधलक्षणे 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्या'दित्यत्र जैमिनिनैव दूरस्थस्यापि यजतिषु 'ये यजामहे करोति नानुयाजेष्वि'त्यस्य 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इति वाक्यशेषतायास्तदर्थनिश्चायकत्वेनाङ्गीकारात् । भट्टवार्तिकेऽपि 'येन यस्यार्थसंबन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारण'मिति कथनाच्चेति दिक् । एतदेव निगमयितुं स्वाध्यायपदयोगार्थज्ञानस्यावश्यकत्वं च ज्ञापयितुमाहुः स्वाध्यायेत्यादि । तथा च यथा दर्शादिपदैः समुदायप्रज्ञापनम्, एवं स्वाध्यायपदेन तन्माहात्म्यज्ञापनम् । तस्मिन् ज्ञाते फलं भवति, नान्यथेत्यतो योगादर आवश्यक इत्यर्थः । यत्पुनः सायणीये 'स्वस्यासाधारणत्वेन पितृपितामहादिपरंपराप्राप्ता शाखा स्वाध्याय' इति योगान्तरमुक्तम्, तत्रापि श्रुतिस्मृत्याद्युक्तानामध्ययननियमानां वेदार्थादिसन्देहनिरासस्य चावश्यकत्वादुक्तो योगो नियत इति स योग इदानीन्तनानां मन्दबुद्धीनां तावता संकोचेनापि फलसंपे फलतीति बोध्यम् ॥ १०-½ ॥

---

१ क-पु: मध्ययनमध्ययनोपकारबोधनात् । २ तदर्थनिश्चायकोऽपि पाठः ।

ज्ञातृज्ञापनतासिद्ध्यै द्वितीयं वाक्यमीर्यते ॥ ११ ॥
वसुरुद्रादित्यैर्वर्षैस्त्रयो वर्णाः क्रमाद्द्विजाः ।
अध्याप्या इति तस्यापि नियोगः श्रुतिचोदितः ॥ १२ ॥
पराधीनतया बाले न विधिः श्रुतिचोदितः ।
तथाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते ॥ १३ ॥
साङ्गेऽधीते तथा ज्ञाते स्वाध्यायस्तस्य सिध्यति ।
अध्यापनप्रयुक्तं हि प्रथमं लिङ्प्रयोगतः ॥ १४ ॥

---

एवं तादृशाध्ययनस्य माणवकाधिकारकत्वं नित्यार्थाध्ययनविध्यभावे माणवकस्याध्ययनार्था प्रवृत्तिर्न स्यादिति शंकां वारयितुं द्वितीयवाक्यस्थं विशेषं स्फुटीकुर्वन्ति द्वाभ्यां ज्ञाप्तिस्यादि । ज्ञातुराचार्यस्य ज्ञापनतासिद्ध्यै । नन्वादित्वाहुः । वैदिकशब्दादिज्ञापकत्वसिद्ध्यर्थं आष्टवर्षवाक्यमीर्यते, तच्च न ब्राह्मणमात्रपरम्, किन्त्वग्रे राजन्यवैश्ययोरप्युपनयनस्य तत्तद्रूपे कथनात्तादृशस्मृतेश्च त्रयोपि वर्णा द्विजत्वादध्याप्या इति । एतदर्थं तस्य आचार्यस्यापि नियोग अध्यापनात्मके कार्ये प्रवर्तनरूपः । श्रुतिचोदितः 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्यनेनाचार्यकरणे विहितस्यात्मनेपदस्य श्रुत्या अध्यापयीतेति लिङ्श्रुत्या च चोदितः । अतः स्वस्याचार्यत्वाय ज्ञात्रा तेऽध्याप्याः । अतो माणवकाध्ययनमध्यापनविधिप्रयुक्तमिति न माणवकस्याध्ययने प्रवृत्तिविघात इत्यर्थः । अत्र नियोगपदोक्त्या प्राभाकरमतस्यास्मिन् स्थले साधुत्वं बोधितम् । ननु किमनेन निर्बन्धेन, अध्ययनविधिनैव माणवकप्रवृत्तौ किं बाधकमत आहुः पराधीनेत्यादि । यतस्तत्र तथांगीकारे विधिव्यापारः कुण्ठो भवतीत्यतो नाद्रियत इत्यर्थः । एवं द्वितीयवाक्यगतो विशेषो विशदीकृतः ॥ १२½ ॥

एवमध्यापनविधिना माणवकस्याध्ययनप्रवृत्तौ साधितायामपि गुरुमुखादक्षरग्रहणमात्रमायास्यति, 'उपनीय ददद्वेदमाचार्यः स उदाहृत' इति याज्ञवल्क्योक्तात्तल्लक्षणात्, न त्वध्ययनस्यार्थज्ञानपर्यन्तत्वम्, तथासत्यनर्थकः स्वाध्यायपदप्रयोगादरः इत्याकांक्षायां तृतीयवाक्यगतं विशेषं व्याकुर्वन्ति प्रमाणोपन्यासपुरःसराभ्यां सार्धाभ्यां तथेत्यादि । साङ्गस्य वेदस्यार्थज्ञापनपूर्वकाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते, यतः स्वयं गुरुणा साङ्गेऽधीते ज्ञाते वेदे तथा तेन प्रकारेण स्वाध्यायः सम्यक्फलकारकमागमन्तादध्ययनं तस्य शिष्यस्य सिध्यति, हि यतो हेतोः प्रथममध्ययनं अध्यापनप्रयुक्तं

एतर्ह्यपि तथैवैतन्न कार्या कल्पना ततः ॥ १८ ॥

अध्ययनं अध्यापनप्रयुक्तं तस्मादध्यापनमेव पूर्वोक्तदोषनिवारकं गुणजनकं च मतम् । अध्ययनं मतमिति पाठे तु यस्मात् केचिच्छब्दार्थमनपेक्ष्य तथा जगुः, तस्मात् हि निश्चयेन अध्ययनमध्यापनप्रयुक्तं मतमिति यत्तदोर्नित्यसम्बन्धेन यस्मादित्यध्याहृत्य योजनीयम् । एतर्हीदानीमपि तथैवाध्ययनम् । ततो दृष्टानुरोधादुक्तरीत्या कल्पनं न कार्यम् । अयमर्थः । यदुक्तं त्रैवर्णिकाः कर्तव्यमपेक्षन्ते, अध्ययनं च कर्तारमपेक्षत इत्यस्ति परस्पराकांक्षेति, तत्तथैव, परन्त्वेतद्विचारणीयम्, किमध्ययनं विद्वत्तायोग्यं कर्तारमपेक्षते, तदयोग्यं वेति । नान्त्यः । तादृशे फलानिष्पत्तेः । आद्यश्चेत्, तदा माणवकं नापेक्षत इत्येव वक्तव्यम् । फलोपधायिकाया योग्यतायास्तत्राभावात् । नच त्रैवर्णिकाधिकारनियमव्याहतिः । अष्टवर्षत्वान्य उपनयनाध्यापनयोः सन्निधानादध्ययनं विना चाध्यापनासिद्धेस्तदाक्षिप्तेनैवाध्ययनेनोक्ताधिकारनियमसिद्धेः । अतोऽध्ययने पुनर्विधिकल्पनं व्यर्थम् । न चाध्ययनवाक्यवैयर्थ्यम् । वेदस्य स्वाध्यायत्वाय तदावश्यकताबोधनेनार्थवत्त्वादित्युक्तम् । न चावश्यकार्थेऽनुशासनाभावः शंक्यः । 'आवश्यकाधमर्ण्ययोर्णिनि'रित्येतदनन्तरं पठितेन 'कृत्याश्चे'तिसूत्रेण तत्रानुशासनात् । नचाध्यापननियोगे नियोज्याभावादध्यापनसमभिव्याहृतेनोपनयीतेत्यात्मनेपदेनाचार्यकरणलाभे तत्कामिना नियोज्याकांक्षा पूरणीया । तथा सत्यध्यापनस्याचार्यत्वसिद्धिरेव प्रयोजनम्, नन्वर्थज्ञापनम्, ततश्च सिद्धे आचार्यत्वे तस्यार्थज्ञापनावश्यकत्वाभावान्माणवकस्याविद्वत्तायां यज्ञाद्यनधिकारतादवस्थ्यमिति वाच्यम् । आचार्यलक्षणस्मृतिस्थस्य सरहस्यमित्यादिविशेषणस्य बलेनाचार्यत्वशरीर एवार्थज्ञापनस्य प्रविष्टतया तस्य ज्ञापनावश्यकत्वे शिष्यस्य सुखेन विद्वत्त्वसंभवात् । न च सकृदुच्चारितस्य लिङ्प्रत्ययस्य विध्यंत्वमर्थज्ञापनार्थत्वं चेति साध्यद्व्यापत्त्या वैरूप्यमितिशंक्यम् । अर्थज्ञापनस्य आचार्यत्वलाभादर्थादेव प्राप्त्या विधेस्तादर्थ्यस्याकल्पनात् । नचैवं वैरूप्याभावेऽप्यध्यापनाक्षिप्तमध्ययनं किमर्थज्ञानार्थम्, उताचार्यत्वार्थम् । आद्ये अध्ययनस्य स्वाध्यायसंस्कारत्वाद् गुणकर्मत्वम्, द्वितीये तु नियोगार्थत्वात्प्रधानकर्मत्वमिति वैरूप्यापत्तिरितिवाच्यम् । व्यक्तिभेदेनादोषात् । आद्यस्य प्रधानकर्मताया अनन्तराणां गुणकर्मतायाः सुखेन वक्तुं शक्यत्वात् । नन्वष्टवर्षत्वोक्तेः विधिद्वये नियोज्यानुक्तावप्युपनयीतेत्यस्य समभिव्याहारादाचार्यत्वकामिन एवोभयत्रापि नियोज्यत्वोच्यते । कर्मता त्वाद्ये त्रैवर्णिकमाणवकस्य, द्वितीये तु तस्यैवोपनयनसंस्कृतस्येत्येतावान् विशेषः । प्रतीयते चोपनयनाध्यापनयोरुभयो-

१ निर्दिष्टमेवाध्यापनस्याभावादित्यर्थः ।

रपि माणवकप्राधान्यबोधिकया द्वितीयया माणवकसंस्कारत्वात् गुणकर्मत्वम् । नियोज्यविचारे तूभयोरप्याचार्यत्वसिद्ध्यर्थत्वात्प्रधानकर्मत्वमिति वैरूप्यं तु दुर्वारमिति चेत् । न । द्वितीयायाः प्राधान्यबोधकत्वस्यानियतत्वात् । 'विमाय गां ददाती' त्यादौ व्यभिचारात् । अतो न द्वितीयया संस्कारकर्मत्वनिश्चयः, किन्तूपनयनस्य संस्कारेषु स्मरणात्संस्कारकर्मत्वम् । तस्य च माणवकसमवेतत्वेनान्तरङ्गत्वादध्ययनाङ्गत्वेपि तमिति द्वितीयान्तेन संस्कारविशिष्टमाणवकपरामर्शात्'तस्य च वत्समालभेते'त्यत्र वत्सस्यालभनाङ्गत्ववदध्यापनाङ्गत्वे सिद्धे तद्विशेषणस्योपनयनस्यापि परंपरयाध्यापनाङ्गत्वं निर्बाधम्, तथापि न साक्षादाचार्यताहेतुत्वम्, तावन्मात्रेण तदसंभवात्, अत आत्मनेपदेनापि परंपरयाङ्गता बोध्यते, न तु साक्षादङ्गता । अध्यापनस्य तु साक्षादेवाचार्यताहेतुत्वम्, तद्विना तदभावात् । अतस्तस्य प्रधानकर्मत्वमिति साक्षात्परंपराविभागे कोपि न वैरूप्यलेशः । एवं चात्मनेपदस्य विशेषविधानमपि सार्थकं भवति, उपनयनफलस्याध्ययनस्य कर्त्रगामित्वात् । उपनयनस्याचार्यताहेतुत्वे तु जित्वादेव नयतेरात्मनेपदसिद्धेर्विशेषविधानवैयर्थ्यमेव स्यात् । न च 'अग्नीना दधीते'त्यत्र यथा आधानफलस्याहवनीयत्वादेरग्निसमवेतत्वेपि न तादर्थ्यमित्यात्मनेपदबलादध्यवसीयते, तथात्राप्युपनयनफलस्य संस्कारस्य माणवकसमवेतत्वेपि न तादर्थ्यम्, अपि त्वाचार्यत्वमेवेति विशेषविधानवैयर्थ्यमाशङ्कनीयम् । साक्षादाचार्यार्थस्वभावस्योक्तत्वात् । परंपरया तादर्थ्यस्य चाप्रयोजकत्वात् । विधिद्वयसमभिव्याहारेण तादर्थ्यपरंपराया अध्यापनाङ्गतायामेव पर्यवसानात् । परंपरयापि नाध्यापनाङ्गत्वमिति न वक्तुं शक्यम्, तमित्येतेन पूर्वपरामर्शस्य विरोधापत्तेः । एतेनैव 'यदेतमिद्दतो यूपं परिव्ययामेयं सवनीयं पशुमुपाकरोती'ति यूपपरिव्याणं यूपार्थम्, न तूपाकरणार्थम्, तथोपनयेति स्मृत्युक्तमुपनयनं माणवकसंस्कारार्थम्, नत्वध्यापनार्थमित्यपि प्रत्युक्तम् । तमितिश्रौतेन पदेन प्रमितायाः परंपराङ्गतायाः दृष्टान्तमात्रेण बाधितुमशक्यत्वात् ।

यत्तु उपनीतव्यापारापेक्षायामुपनयनं प्रक्रम्य विहितस्याध्ययनस्याध्यापनोपकारकत्वे तच्छेपत्वादर्थज्ञानार्थता न स्यात् । साध्यद्वयस्यैकत्रासंभवादित्युक्तम् । तदपि शिथिलम् । एकस्मिन्नेव भोजने प्रतिकवलं तुष्टिपुष्टिक्षुदपायानां दर्शनात् । एकेनैव वाहनकरणकेन गमनेन सुखविशेषस्यापीष्टदेशनाप्तेश्च दर्शनादिति । यदप्यध्यापनस्याध्ययनमन्तरेणासंभवात्पदार्थस्वभावाक्षिप्तमध्ययनं लौकिकमेवाङ्गीकार्यम्, तावताप्यध्यापनसंभवात्, विधिनस्यापि तत्र एतांगीकारे तु ततो नापूर्वं सिध्येत्, उद्देशाभावादित्युक्तम् । तदपि तथा । लौकिकस्य तस्याङ्गीकारे आचार्यत्वासिद्धेः । वेदाध्यापनेनैव तत्स्मरणात् । न

१ माणवकसंस्कारे इतः । २ कर्मफलत्वेपि पाठः । ३ इत्यर्थः । ४ पश इति ।

तत्र संशयमापन्ना बुद्धिर्वाक्यार्थनिर्णये ।
एकवाक्यत्वसंदेहादैकार्थ्याभावतः स्फुटम् ॥ १९ ॥
स एकोर्थोत्र वक्तव्यो यच्छरीरप्रवेशतः ।
एकार्थतां श्रुतिर्याति तदभावे तु निष्फला ॥ २० ॥
कुण्ठितेव भवेन्नूनं वेदाध्ययनबोधने ।
वेदोखिलो धर्ममूलं 'धर्मो यस्यां मदात्मकः' ॥ २१ ॥
एवं पूर्वर्षिभिः प्रोक्तं जैमिनिः प्रथमं स्वयम् ।
निश्चित्य लोकशिक्षार्थमर्थप्राधान्यतस्तथा ॥ २२ ॥
धर्मं विचारयामास प्रामाण्यादिपुरःसरम् ॥

---

चापूर्वासिद्ध्यापत्तिः, आचार्यकृतोद्देशेनापि तत्संभवात् । जातेष्टौ पितृकृतोद्देशवदिति । किञ्च, वेदस्याध्ययनं सर्वं गुर्वध्यापनपूर्वकम्, वेदाध्ययनसामान्यादधुनाध्ययनं यथेत्याधुनिकाध्ययनं दृष्टान्तयद्भिरध्ययनस्याध्यापनप्रयुक्तत्वेऽपि स दृष्टान्तोऽङ्गीकार्यः । तस्मादध्ययनेधिकारनियमस्याध्यापनविधिनैव सिद्धेः कृत्ये विध्यर्थत्वकल्पनं वृथैव । उक्तप्रकारं विना तावन्मात्रेण वेदस्य स्वाध्यायत्वासिद्ध्या ततः फलासिद्धेरिति ॥ १८ ॥

एवं प्रकारबोधनपूर्वकं मतान्तरनिराकरणेन वेदस्य यथा स्वाध्यायत्वसिद्धिः, तद् साधितम् । तन्मध्ये शब्दार्थानुष्ठानेषु शङ्काराहित्यं प्रविष्टम् । तत्र शब्दे तद्राहित्यस्य गुरुपरंपरया सिद्धेः पदार्थेऽनुष्ठाने च तद्राहित्यस्याप्यङ्गविचारादिभिरेव सिद्धेर्वाक्यार्थे संदेहोवतिष्ठते, तदाहुः तत्रेत्यादि ऐकार्थ्याभावत इति । यागदानादिरूपाणां नानार्थानां तत्र नानाफलानां च प्रतिपादनेन तथात्वात् ॥ १९ ॥

तथा सति को दोष इत्याकांक्षायां सार्धेन तन्निराकृतेरावश्यकत्वमाहुः स इत्यादि । तथा च तदभावे वेदाध्ययनबोधकवाक्यस्यैवैयर्थ्यमेव दोष इति तदभावाय वेदस्यैकार्थ्यमवश्यमेव विचारणीयम् । तथात्वे न सिध्यतीत्यर्थः ॥ २० १/२ ॥

तर्हि तत्र का गतिरित्याकांक्षायां मीमांसैव गतिरित्याहुः वेदोऽखिल इत्यादिद्वाभ्याम् । अत्र प्रथमं वाक्यं मानवम्, द्वितीयमेकादशस्कन्धीयं भागवतम् । तत्सर्वं पूर्वोक्तं जैमिनिः प्रथमं स्वयं निश्चित्य पश्चाल्लोकशिक्षार्थमर्थप्राधान्यमङ्गीकृत्य प्रामाण्यादिपुरःसरं को धर्मः कथं तस्य धर्मत्वं कथं च वेदस्य तत्प्रमितिजनकत्वं कथं च

---

१ कथंचनविचारयमप्राहु ।

संदेहस्तु पुनर्जातो वेदान्तेषु यथा पुरा ॥ २३ ॥
एकवाक्यत्वमेषां हि धर्मकाण्डे कथं भवेत् ।
धर्मः पञ्चविधो द्वेधा षड्भिः संपद्यते तु सः ॥ २४ ॥
देशकालद्रव्यकर्तृमन्त्रकर्मविभेदतः ।
सर्वो वेदस्तेषु लीनो वेदान्तेषु विचार्यते ॥ २५ ॥
'यदेव विद्यये'त्याह 'ब्रह्मा ब्रह्मिष्ठ' एव च ।
तज्ज्ञानं तेषु हि प्रोक्तं कर्तृशेषास्ततस्तु ते ॥ २६ ॥

---

वेदस्य निर्दुष्टत्वं येन प्रमाणान्तरविरोधेपि तदुक्तमेवादर्तव्यमित्यादिसर्वविचारपूर्वकं धर्ममेव तथा सर्ववेदार्थत्वेन विचारयामासेत्यर्थः ॥ २२ ३ ॥

तर्हि किमवशिष्टं येनायमुद्यम इत्यत आहुः सन्देहस्तु पुनरित्यादि यथा पुरेति । ऐकार्थ्यप्रभावतः हि निश्चयेन ब्रह्मबोधकानामेषां वेदान्तानां धर्मकाण्डे एकवाक्यत्वं कथं भवेदिति, तदर्थमयमुद्यम इत्यर्थः । कथं ऐकार्थ्यप्रभाव इत्याकाङ्क्षायां संदेहबीजं व्युत्पादयन्ति धर्म इत्यादिना सार्धेन । अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमभेदेन धर्मः यज्ञात्मकः पञ्चविधः । स एव प्रकृतिविकृतिभेदेन द्विधा । देशादीनि षट् तत्साधनानीति तैः षड्भिः संपद्यते इति सिध्यति । अतः सर्वो वेदः पूर्वकाण्डरूपस्तेषु सर्वेषु लीनः धर्मं धर्मसाधनानि च बोधयन्नैकार्थ्यं प्राप्य स्वतः निराकाङ्क्षतामापन्नो वेदान्तान्न संगृह्णातीत्येतत्सन्देहबीजमित्यर्थः । ननु यथा एकार्थत्वमेकवाक्यतानियामकम्, तथा विभागे साकाङ्क्षत्वमपि नियामकान्तरम् । तथा भट्टकारिकापि 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' इति । तदभिप्रेत्य मतान्तरमाहुः वेदान्तेष्वित्यादिसार्धेन । विचार्यत इति । मीमांसकैर्विचार्यते । आहेति । 'यदेव विद्यया करोति तदेवास्य वीर्यवत्तरं भवती'ति 'ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीत' इति क्रमेण वेदान्तश्रुतिः फलश्रुतिश्चाह । तथा च वेदान्तस्यांगिभूतकर्मापेक्षा, वेदस्य चांगभूतज्ञानापेक्षा, अतस्तेषां ज्ञानस्य कर्तृद्वारेण तेषां कर्तृशेषत्वादस्त्येवैकवाक्यता । किञ्च, 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेने'ति भट्टः प्रकारान्तरमप्येकवाक्यतामाहेति कुतः संदेह आपाद्यत इत्यर्थः ॥ २६ ॥

---

१ तादर्थ्यज्ञानस्मृत्वेन ।

ज्ञाननिष्ठाय देयानि कव्यानीति यथा तथा ।
फलश्रुत्या पूर्वकाण्डसमाप्त्या चावगम्यते ॥ २७ ॥
ब्रह्मविद् ब्रह्म भवति परं वाप्नोति कुत्रचित् ।

एतमेकवाक्यताप्रकारं दूषयन्ति ज्ञाननिष्ठायेत्यादिभिः सार्धैस्त्रिभिः । इदं वाक्यं सप्तमस्कन्धीयम् । तत्र यथा पितॄणां तृप्त्यानन्त्याय ज्ञाननिष्ठाय कव्यदानमुक्तम् । तावता न ज्ञानस्य श्राद्धशेषत्वं सिध्यति । दानफलानन्त्येन कर्त्रनुग्रहार्थं संप्रदानतया अनुमतिमात्रत्वात् । अन्यथा ज्ञाननिष्ठः कव्यानि भुञ्जीतेत्येव विदध्यात् । एवं ब्रह्मिष्ठवाक्येऽप्यनुमतिरेव क्रियते । ब्रह्मदृष्ट्या कर्मवैषम्यनिवृत्त्या तदनुग्रहार्थम् । वस्तुतस्तु तत्र ब्रह्मशब्दो वेदपर इति न तेन वेदान्तस्य कर्तृशेषत्वसिद्धिः । नापि यदेवेति श्रुत्या । तस्या उद्गीथप्रकरणापठितत्वेन विद्यान्तरासंग्राहकत्वात् । उद्गीथविद्यायाः कर्माङ्गत्वेऽप्यक्षतेः । अतोऽनुमतस्य प्रासंगिकत्वेन ग्रामं गच्छतस्तृणस्पर्शवद्भिक्षां चरतस्तस्य कव्याशनस्य प्रासंगिकत्वान्न तेन शेषत्वसिद्धिः । भट्टकारिकोक्तप्रकारस्तु भाष्यप्रकाशे दूषित इति नात्र दूष्यते । तथा च पारार्थ्यमेव जैमिनीये मते शेषलक्षणम् । तच्च श्रुत्यादिभिरवगम्यते । तथा सति 'कर्माण्यपि जैमिनिः फलार्थत्वा'दिति सूत्रे कर्मणः फलशेषत्वं पूर्वकाण्डे प्रतिपाद्यत इति न तस्य ज्ञानशेषत्वम्, तथा ज्ञानस्यापि फलशेषत्वमुत्तरकाण्डे प्रतिपाद्यते, 'ब्रह्म वेद ब्रह्मैव भवती'ति, 'ब्रह्मविदाप्नोति पर'मिति । अन्येऽपि देशकालादयो य उच्यन्ते 'विविक्तदेशे च सुखासनस्थ' इत्यादौ, तेऽपि तत्साधनभूता इति सर्वे वेदान्ता ज्ञानमेव सफलं बोधयन्तो निराकाङ्क्षतामापद्यमाना न शेषित्वेन कर्मापेक्षन्ते । नापि वेदो ज्ञानं शेषत्वेनापेक्षते । ब्रह्मशब्दस्य शब्दब्रह्मण्यपि वृत्तेर्ब्रह्मिष्ठशब्देनापि वेदार्थनिष्णातस्य ग्रहीतुं शक्यत्वात् । तस्मान्न कर्तृशेषत्वम् । नापि विविक्तात्मस्वरूपबोधकत्वेन । वैराग्यापरपर्यायनिष्कारापादकत्वात् । देहविशिष्टस्तु न तत्र बोध्यत इति कथमपि वेदान्तानां न वेदशेषता । किञ्च, 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ती'ति शीक्षोपनिषदि तैत्तिरीयाणां श्रूयते । तत्र 'चानूच्ये'ति वेदपाठनसमाप्तिबोधनादपि शेषत्वं न युक्तमित्यर्थः । किञ्च । शाखान्तरेऽपि एकमेव फलभेदेन समाप्तिभेदेन च शास्त्रभेदोऽवगम्यते । तथा वैदिकानामप्येवमेव भेदो ब्राह्मणान्तरकाण्डानां मतः । अतो भेदकानां बहूनां सत्त्वात् संहर्तुर्हेतोश्चाभावात् अनन्तरतोपनिषदां वाच्या । भिन्नशास्त्रत्वमेवास्थेयम् । तथा चेत् युक्तिभिः प्रमाणैश्च तथा निश्चितं चेत्, तदा नैकवाक्यता घटते । अतस्तदुक्तः प्रकारो न युक्त इत्यर्थः ॥ २७ ॥

१ पुरुषार्थोऽतः शब्दादित्यधिकरणस्य भाष्यप्रकाशे ।

'वेदमनूच्य आचार्यः' इत्युक्तोपनिषद्वचः ॥ २८ ॥
शास्त्रान्तरेऽप्येवमेव वैदिकानां मतं तथा ।
अतः स्वतन्त्रता वाच्या तथा चेन्नैकवाक्यता ॥ २९ ॥
'वेदोऽखिलो धर्ममूल'मित्यादिश्च विरुध्यते ।
वैदिकानामभिध्यानं स्वरादिनियमैर्युतम् ॥ ३० ॥
वेदा एव न चान्यार्था वाच्या बुद्धिमता क्वचित् ।
अतो वेदान्तवाक्यान्यप्रसिद्धिः । वैदिकानामपि तथैव प्रसिद्धिरितिचेत् ।

किञ्च । शास्त्रभेदानङ्गीकारे पूर्वोक्तस्मृतिविरोधोपीत्याहुः वेद इत्यादि । अत्र स्मृतावखिलपदात् धर्मस्य च क्रियारूपत्वात् ज्ञानप्रतिपादकवेदान्तसंग्रहे तस्य बाधात् । द्वितीयवाक्ये धर्मपदाच्च विरुध्यत इत्यर्थः ॥ २९$\frac{1}{2}$ ॥

अत्र पुनर्मतान्तरमुपक्षिप्य दूषयन्ति वैदिकेत्यादि । यतो वैदिकाः स्वरपूर्वकमनध्यायादित्यागनियमपूर्वकं वेदान्तान् पठन्ति पाठयन्ति चेति वैदिकानां वेदान्तेषु वेद इत्यभिध्यानं स्वरादिनियमैर्युतं वर्तते, अतो वेदा एव क्वचित् वेदान्तभागे अन्यार्था धर्मव्यतिरिक्तब्रह्मार्थाः बुद्धिमता न च वाच्या नैव वाच्याः । अत इदं मतमप्रयोजकम् । तत्र हेतुः अत इत्यादि । अतः वेद इति प्रसिद्धेः सकाशात् वेदान्तवाक्यानामन्याप्रसिद्धेः । शिष्टा हि वेदान्तवाक्यान्युपन्यस्य इतिश्रुतेरितिश्रावणादित्येव वदन्ति । यदि हि वेदान्तवाक्यानि अन्यार्थानि स्युः, तदा वेद इति प्रसिद्धिं न लभेयुः । वेद इति प्रसिद्धेः धर्मार्थतामूलकत्वात् । अतो वैदिकाभिध्यानाद्वेदान्तेषु यदि वेदत्वमङ्गीकार्यम्, तदा अन्यार्थता त्याज्या । यद्यन्यार्थताङ्गीक्रियते, तदा वैदिकाभिध्यानं नादर्तव्यम् । शास्त्रभेदस्य श्रुतिस्मृतिरूपप्रबलप्रमाणप्रमितत्वादभिध्यानस्य च सदाचारे प्रवेशेन ततो निर्बलत्वात् । पूर्वोत्तरवाक्यद्वयसंहर्तुरर्थैक्यस्याभावे वेद इति प्रसिद्धिमात्रेण तयोरेकवाक्यताया असिद्धेरित्यर्थः । ननु सत्यमभिध्यानस्य श्रुत्याद्यपेक्षया निर्बलत्वम्, तथाप्यनादिप्रसिद्धिर्वाच्यं तु वक्तव्यमित्याशयेन पर्यनुयुङ्क्ते वैदिकानामित्यादि । वैदिकानामपि तथैव वेद इतिवत् वेदान्त इत्येव प्रसिद्धिः । तथा च वेदान्तेषु वेदत्वानङ्गीकारे प्रसिद्धिवैयर्थ्यमापद्यमानं तस्यै प्राबल्यं कल्पयिष्यति । 'आनर्थक्ये प्रमाणानां विपरीतं बलाबल'मितिन्यायात् ।

१ वैदिकाभिध्यानस्य सदाचारसंबन्धः ।

एवं लोकसिद्धस्य जगतो लोकप्रतीतिं बाधित्वा ब्रह्मत्वे-नालौकिकत्वं संपाद्यत इति । अर्धजरतीयन्यायात्तदन्तत्वम् ।

ननु लोकनिपुणाः कथं मन्यन्ते ।

शब्दार्थविचारेणेति ब्रूमः ।

कथम् । शब्दानामर्थे विचार्यमाणे ब्रह्मैव सर्वं भवति । घटपटादि-शब्दा धर्मवाचका एव भवितुमर्हन्ति । घटत्वादिविशिष्टवाचका ह्येत इति

---

'वैतानं प्रक्षिपेदप्स्वि'तिस्मृत्या 'आहिताग्निमग्निभिर्दहन्ती'ति श्रुतिबाधदर्शनाच्च । अतो वैदिकप्रसिद्ध्या अपौरुषेयशब्दत्वेन च वेदान्तेषु वेदत्वमवश्यं वक्तव्यम् । ततश्च मीमांसकोक्तरीत्यैकवाक्यत्वाभावेऽपि 'तमेतं वेदानुवचनेने'ति वेदान्तश्रुत्या वेदान्तानामेव वेदापेक्षा वक्तव्या । तथा सति अपेक्षया सिद्धे एकवाक्यत्वे वेदस्यान्तो यत्रेति योगेन वेदोपरभागत्वाद्वेदान्त इति प्रसिद्धेरपि सेत्स्यतीति न कश्चिद्दोष इतिचेत् ।

एवं पर्यनुयोगे वेदान्त इति प्रसिद्धिमन्यथा वक्तुं प्रकारान्तरं प्रतिजानन्ति एवमित्यादि । वक्ष्यमाणप्रकारेणेत्यर्थः । तमाहुः लोकेत्यादि । तथा च यथा लोकसिद्धस्य व्रीह्यादेर्लोकप्रतीतिं बाधयित्वा प्रोक्षणादिना अलौकिकत्वं संपाद्यते । तथा वेदान्तेषु उक्तरीत्या जगतो ब्रह्मत्वं संपाद्यते । साधनं तु प्रोक्षणवत्तदर्थं नोच्यते इत्यतोऽर्धजरतीयन्यायात्तथेत्येतेन प्रकारेण प्रसिद्धिः संभवतीति वेदान्त इति प्रसिद्धेः प्रकारान्तरेण संभवे तामादाय श्रुतिस्मृतिविरुद्धोऽन्यार्थताङ्गीकारो न युक्तः । 'तमेत'मितिवाक्ये यज्ञादीनां विविदिषापर्यन्तत्वश्रावणेन विविदिषापात्रस्य च ब्रह्मज्ञानजनकत्वाभावेन तथापि संहननस्य वक्तुमशक्यत्वादेकवाक्यतादुर्घटेत्यर्थः ।

एवं प्रसिद्धिप्रकारमनुपपन्नं मन्यमानः पुनः शङ्कते ननु लोकेत्यादि । मीमांसका नैयायिकाश्च ते प्रतीतिबाधितं कथमङ्गीकरिष्यन्ति । तथा च परप्रतिपत्त्यर्थो ह्ययं यत्नः, स तु मदनङ्गीकारादव्यर्थ इत्यर्थः ।

अत्र [illegible]मोत्तरमाहुः शब्देत्यादि । तथानाप्तवाक्यप्रामाण्यस्य तैः सर्वैर-वोधगम्यानर्थविचारेणोपगन्तव्यम्, अतो न पर्यवसितं व्यर्थम् ।

पुनः [illegible] कथमित्यादि । तत्रोत्तरं व्युत्पादयन्त आहुः घटेत्यादि । अत्र धर्मवाद[illegible] नित्यो यो धर्मस्तद्वाचका इत्याहत्यधिकरणसिद्धो

लोकप्रसिद्धिः । घटत्वमिति घटगतो धर्मः कश्चिद्यत्सद्भावात् घटपदवाच्यता धर्मिणः । 'तस्य भावस्त्वतलौ' इति त्वो भावप्रत्ययः । भाव इति भूधातोर्घञि रूपम् । भूधातुः सत्तायां व्याप्तौ वा । उभयथापि व्यापकस्य सतो वा धर्मस्य वाचको भवति । घञ् च स्वार्थे । अन्यथा अनवस्था स्यात् । तथा च घटत्वं नाम सतः व्यापकस्य वा धर्म इत्युक्तं भवति । एवं पटत्वादिष्वपि । तथा च प्रकृत्यर्थः सन् व्यापको वा यदा भवति, तदैव प्रत्ययार्थेनैकवाक्यता भवति ।

ततश्च सर्वेषामेकार्थता स्यात् ।

अत आकृतिविशेषव्यङ्ग्या धर्माः । ते भिन्ना एव शक्तिसङ्को-

---

मीमांसकसिद्धान्तः । लोकप्रसिद्धिरिति । नैयायिकादीनां प्रसिद्धिः । एवं तत्तन्मतीयः शब्दार्थ उक्तः । एवं मतद्वयेपि धर्मस्यैव मुख्यतया तत्तच्छब्दप्रवृत्तिनिमित्तत्वमित्याहुः घटत्वमित्यादि । अतःपरं तद्विचारेण सर्वस्य ब्रह्मत्वप्रकारं व्युत्पादयन्ति तस्येत्यादि एकवाक्यता भवतीत्यन्तम् । घञ् च स्वार्थ इति । विधीयमानो यो भावस्तस्मिन्नेव, न तु भावान्तरे । अन्यथाऽनवस्था स्यादिति । यदि भावान्तरेङ्गीक्रियते, तदा त्वशब्दो भावे भावशब्दश्चघञा निष्पन्नो भावान्तरे घञ्सूत्रस्थो भावशब्दश्च भावान्तरे इत्येवमनवस्था स्यात् । यदि च तत्रागत्या स्वार्थेङ्गीक्रियते, तदा प्रथम एव तथास्तु । आत्माश्रयस्तु नाशङ्कनीयः । पूर्वपक्षवादेपि तौल्यात् । व्यवहारोच्छेदप्रसङ्गाच्च । तदेतत्सागेवोक्तं लोके शब्दार्थसंबन्ध इति कारिकया । एवं स्वार्थेङ्गीकाराद्यत्सिध्यति, तदाहुः तथाचेत्यादि । अत्र तदैवेत्येवकारेण पदार्थानां सद्भिन्नत्वाङ्गीकारे त्वतलादिप्रत्ययोक्तः धर्मोऽन्यधर्मत्वाद्यथा घटत्वं न पटावच्छेदकम्, तथा घटाद्यवच्छेदको न स्यात् । ततश्च व्यवहारः सर्वोपि प्रतिरुध्येतेति बोध्यते । अतः पदप्रवृत्तिनिवृत्तिनिमित्तानुरोधेन सर्वेषां व्यापकसत्पदार्थाभिन्नत्वमवश्यमङ्गीकार्यम् । ततश्च शब्दार्थविचारेण सर्वं ब्रह्मैव भवतीत्यर्थः ।

अत्र पुनः पर्यनुयुङ्क्ते तत इत्यादि । तथा च यदि त्वतलाद्युक्ता भावाः सद्धर्मा इति सर्वं सदेव, तदा सर्वेषां पदानां घटकलशादिपदवदेकार्थतायां व्यवहारप्रतिरोधस्तुल्य इति व्यर्थः सर्वः प्रयास इत्यर्थः ।

अत्र समादधते अत इत्यादि । अतः पदप्रवृत्तिनिमित्तभूतधर्मस्वरूपानुरोधेन

चेन व्यवहारसिद्ध्यर्थमङ्गीकर्तव्याः । तथा च घटादिशब्दा अरुणादिशब्दवद्धर्मवाचकाः ।

न च स्वरूपतः सतो भिन्नाः प्रत्यक्षतः स्वीकर्तव्या इति वाच्यम् । कारणीभूतस्य सतः एकत्वात्कार्ये कुतो भेदः समायाति ।

---

सर्वेषां सद्धर्मवाचकतया लोकयात्रानिर्वाहाय व्यवहारसिद्धेश्चावश्यकत्वात् आकृतिविशेषव्यंग्याः कंबुग्रीवायातानवितानादिसास्नादिमदाकृतिविशेषप्रकाश्याः सतो धर्मास्ते घटपटगवाद्या भिन्नाः सतः सकाशाद्व्युत्पत्तिकरणेन विलक्षणप्रतीतिविषयाः, एवं शक्तिसंकोचेन अयं शब्द एतदाकारकमेव सद्धर्मं बोधयतु, नान्याकारकमित्येवंप्रकारकेणेश्वरकृतेन वाचकशक्तेर्नियमनेन व्यवहारसिद्ध्यर्थमङ्गीकर्तव्याः । तथा च घटादिशब्दा अरुणादिशब्दवद्धर्मवाचका इत्यङ्गीकारे सर्वेषां ब्रह्मत्वस्य ऐकार्थ्येऽपि व्यवहाराप्रतिरोधस्य च सिद्धेर्न भयावैयर्थ्यमित्यर्थः ।

ननु शब्दः प्रत्यक्षं चेत्युभयमपि प्रमाणम् । तयोः शब्दापेक्षया प्रत्यक्षमेव प्रबलम्, शब्दोपजीव्यत्वात्सर्वसंमतत्वाच्च । अतः प्रत्यक्षतः प्रतीयमानं स्वरूपतो भेदेन सत्त्वं भेदं च न्यकृत्य शब्दार्थविचारेण सर्वस्य ब्रह्मात्मकत्वसाधनमप्रयोजकमित्याशंकायां तन्निषेधन्ति न चेत्यादि । तत्र हेतुः कारणीत्यादि । अयमर्थः । सत्यं प्रत्यक्षं प्रबलम्, तथापि नास्य प्रामाण्यं सार्वत्रिकम् । देहात्मनोर्भेदेऽप्यभेदस्य घटाकाशमठाकाशयोरभेदेऽपि भेदस्य प्रत्यापनात् । अतस्तन्निश्चयार्थं प्रमाणान्तरमाश्रयणीयम् । तत्र प्रत्यक्षविषया अर्थाः पृथक्सन्तः सतो भिन्नाः भिन्नकारणकत्वात् घटपटस्तंभादिवदिति तु न युक्तम् । एते सदभिन्नाः सदेककारणकत्वात्, सौवर्णकटककुण्डलादिवदिति प्रतिसाधनेन बाधात् । कारणताग्राहकस्य सदन्वयस्यानानुकूलतर्कत्वेनास्य प्रबलत्वात् । न च सतो नानात्वम्, मानाभावात् । न चैवं सत्ताख्यजातिमत्त्वस्यैव सिद्धिः, न सत्कारणकत्वस्येति वाच्यम् । सत्ताया जातित्वाभावात् । सामान्यादिष्वपि वर्तमानत्वात् । न च सा प्रतीतिर्भ्रम इति वाच्यम् । नियामकाभावात् । तस्या जातित्वाभिमानस्यैवाभ्युपगमेऽपसरणेन भ्रमत्वस्य युक्तत्वात् । अतः सद्धर्म एव सत्ता । सा चेत्सर्वत्र, तदा सर्वं सदेवेत्युपपादनमन्तरेणैव सिद्धम् । वस्तुतस्तु सत्तायां सत्तान्तराभावात् सदेव सत्तेति तद्योगादेव सर्वत्र सदिति प्रत्ययः । सदेव च कारणम् । असतः कारणत्वायोगात् । अतः कारणीभूतस्य सत एकत्वात्तस्मिन् भेदाभावे कार्ये कुतो भेदः समायाति । कारणगुणानामेव कार्यगुणारंभकत्वादिति ।

मृद इवांशभेदादिति चेत् ।

अस्तु ।

तर्हि अंशेन भेदः । अस्ति । कः संदेहः । कार्यकारणयोर्भेद इति चेत् ।

न । कार्ये समवेतत्वात्कारणमप्यस्तीति मन्तव्यम् । तथा च कार्ये द्विगुणगुरुत्वापत्तिः । न वा भेदः प्रतीयते । पिण्डावस्थागता घटावस्था जातेत्येव प्रतीतिः । तथाचाकृतिरेव भिन्नेति धर्मभेद एव जात इति वक्तव्यम् । तथा च सतोप्यंशेन धर्मभेद एव जगज्जा-तमिति सदेकमेव । न चांशांशिनोर्भेदः सिध्यति । पूर्ववदेव द्विगुण-भारापत्तेः ।

---

एवं सर्वस्य सद्भेदे साधितेपि भेदं विना भिन्नार्थक्रियाकारित्वासंभ-वात्तदुपपादनाय कारण एव कुतश्चन भेदोऽभ्युपेय इत्याशयेनाह मृद इवेत्यादि । तत्रेष्टमभ्युपगच्छन्ति अस्त्विति । ततः प्रत्यवतिष्ठते तर्हीत्यादि । अंशेन भेद इति । अंशेन कृतो भेदः । तथाच कार्यस्य कारणीयांशजन्यत्वादंशांशिनोर्भेदेऽभ्युपगते कार्यकारणयोर्भेदोऽप्यर्थादेव सिद्ध इति भेददूषणं व्यर्थमेवेत्यर्थः । तन्निषेधन्ति नेत्यादि । तथाचेति । कारणगुणानां कार्यगुणारंभकत्वात् । तथा च तदभावान्न भेद इत्यर्थः । नन्वयं न नियमो यत्कारणगुणैः सर्वैरेव कार्ये गुणा आरंभणीया इति । अतः कारणगुरुत्वस्य गुरुत्वान्तरानारंभकत्वान्न कार्ये द्विगुणं गुरुत्वम् । अतस्तदभावो नाभेदसाधक इत्यत आहुः न वेत्यादि, एकमेवेत्यन्तम् । तथाचेति । प्रतीतेः प्रामाण्याङ्गीकारेपि । तथा-चेति । प्रतीतिबलादपि । तथा च सज्जगतोर्धर्मभेदकृतैव भेदप्रतीतिः, न स्वरूपभेदकृता । अतः प्रतीतिबलेनापि विचारे सदेकमेवेत्यर्थः । नन्वंशानां भेदस्योपगतत्वात्कुतो न स्वरूपभे-दकृतेत्यत आहुः न चेत्यादि । तथाचांशांशिनोः स्वरूपभेदे सति तयोर्गुरुत्वस्य भिन्नत्वादंशे अंशिनोंऽशिनि चांशस्य प्रत्ययेन सत्त्वाद्गुरुत्वारंभाभावेपि स्वरूपगुरुत्वादेव द्विगुणभारा-पत्तिः । अतस्तयोरपि न स्वरूपभेदाद्भेदः, किन्त्वल्पत्वमहत्त्वादिधर्मभेदादेव भेद इति तदुभ-यमपि स्वरूपत एकमेवेत्यर्थः । अत एव सुवर्णजिघृक्षुस्तच्छकलमपि गृह्णातीति युज्यते ।

१ कार्ये । २ कार्यं ।

अंशानामिव परस्परं भेदो नाम नानात्वं चेत्। ओमिति केचित्। 'बहु स्याम्' इति श्रुतेः। वस्तुतस्तु 'पूर्णात्पूर्णमुदच्यत' इति श्रुतेर्नांशेन नानात्वम्। कार्यावस्थायां व्यापकत्वस्य तिरोभाव एव।

अथान्योन्याभावः। स च प्रतियोगितावच्छेदकारोपापवादलक्षणः। तथा च घटत्वं पटत्वं चैकत्र नास्तीत्युक्तं भवति।

नैतत्सारम्। सति द्रव्ये पार्थिवे च द्वयोर्विद्यमानत्वात्। सर्व-

---

एवं स्वरूपतः सर्वस्य सदात्मकत्वे साधितेप्यंशानां परस्परं भेददर्शनेन पुनः प्रत्यवस्थानाभावाय भेदस्वरूपं निश्चेतुं विकल्पयन्ति अंशानामित्यादि। केचिदिति। भास्कराचार्याः। ततोपि कञ्चिद्विशेषमाहुः वस्तुत इत्यादि। उदच्यत इति। उद्गच्छति। 'अञ्चु गतिपूजनयोः'। 'अच इत्येके' इति धातुपाठात्। तथाचात्र श्रुतावुद्गमनेपि पूर्णत्वश्रावणान्नांशेन कृतं नानात्वम्, किन्तु 'बहु स्या'मितीच्छया कार्यावस्थायां व्यापकत्वे तिरोभाविते नानात्वमुद्गतं भवति। भगवतः सर्वत्र सर्वरूपत्वात्। अन्यथा असत्कार्यवादापत्तेः। तद्दूषणं तु विद्वन्मण्डनटीकायामाविर्भावतिरोभाववादे प्रपञ्चितं मयेति नानोच्यते। तस्मादागन्तुकं नानात्वम्, किन्त्वेकत्वाविरोधि, तदिच्छया प्रकटीभवतीति न स्वरूपैकत्वबाधकम्। न च युक्तिविरोधादयुक्तत्वं शंक्यम्। तद्विरोधस्यात्र भूषणत्वात्। 'तदेजति तन्नैजति' 'आसीनो दूरं व्रजति शयानो याति सर्वत' इत्यादिश्रुतिसिद्धत्वात्। 'न हि विरोध उभयं भगवती'त्यादिस्मृतिसिद्धत्वाच्च। तस्मादेकत्वाविरोधि श्रौतं नानात्वम्, न भेद इत्यर्थः।

तर्हि अन्योन्याभाव एव भेदोस्त्विति विकल्पमनुवदन्ति अथेत्यादि। इदं प्राचां लक्षणम्। नव्यास्तु तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभाव इत्याहुः। तत्र तादात्म्यं यदि भेदसहिष्णुरभेदः, तदा घटादिषु तादृशाभेदसंबन्धस्याभावाल्लक्षणे असंभवदोषः। तथा भेदस्य तत्र प्रवेशेन ज्ञाताज्ञातमाश्रयदोषश्च। अतः स चासावात्मा तदात्मा तस्य भावस्तादात्म्यमित्येव वाच्यम्। तथा सति स्वरूपसंबन्धादनतिरेकः। ततश्च प्रतियोगितावच्छेदकारोपापवाद एव पर्यवस्यतीति तथोक्तम्।

एवं तदनूद्य तद्दूषयन्ति नैतत्सारमित्यादि। द्वयोरिति। विरुद्धयोर्धर्मयोः। न च घटस्वरूपं पटस्वरूपं न भवतीति स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमेव तल्लक्षणमस्त्विति वाच्यम्। सर्वस्य सद्रूपत्वेन सदात्मकत्वेन च तत्संबन्धावच्छिन्नप्रतियोगि-

गुणप्रसिद्ध्यै तथा प्रकटस्य धर्मवैलक्षण्यनिबन्धना प्रतीतिः । श्रुतिस्मृतिविद्वत्प्रतीत्या वस्तुन एकत्वे सिद्धे प्रतीतिस्तन्निबन्धनैव ।

तर्हि धर्माः स्वतो धर्मिणश्च भिन्ना इति सिद्धम् ।

नैतदप्यस्ति । तस्यैव प्रथमं धर्मरूपेणाविर्भावात् । नटस्येव

---

तया वस्तुमशक्यतया तल्लक्षणकस्य तत्स्वरूपस्यैवासिद्धेः । न चाभाव एव सन्निम्न इति वाच्यम् । तथा 'सति घटाभावोस्ति' 'घटभेदोस्ती'त्यादिप्रतीतिविबाधापत्तेः । न च व्यवहारे तस्याः भ्रमत्वं शंक्यम्, व्यावहारिकदोषाजन्यत्वात् । तर्हि कुत इयं भेदप्रतीतिरित्याकांक्षायां तद्धेतुमाहुः सर्वेत्यादि । तथा प्रकटस्येति । तेन तेन रूपेण प्रकटस्य । ननु धर्मवैलक्षण्यनिबन्धनैवेयं प्रतीतिः, नान्योन्याभावनिबन्धनेत्यत्र किं गमकमत आहुः श्रुतीत्यादि । 'सदेव सोम्येदम्' 'सन्मूलाः सौम्येमाः प्रजाः' 'पुरुष एवेद९ सर्वं' मित्यादिश्रुत्या, 'भूतानि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । नद्यः समुद्राश्च स एव विष्णुर्यदस्ति यन्नास्ति च विप्रवर्य' 'विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायये'त्यादिस्मृत्या, वामदेवशुकादीनां सर्वत्रैकरूपत्वप्रतीत्या च वस्तुन एकत्वे सिद्धे यान्येषामभ्रान्ता भेदप्रतीतिः, सा धर्मवैलक्षण्यनिबन्धनैव । श्रुत्यादौ वस्त्वैक्यस्य वैलक्षण्यस्य च बोधनात्तदेव नियामकमित्यर्थः ।

अत्र पुनः शङ्कते तर्हीत्यादि, सिद्धमिति । तैरेव प्रमाणैः सिद्धम् । तथा च वृथैवायं भेददूषणाडम्बर इत्यर्थः ।

तद्दूषयन्ति नैतदित्यादि । 'सोकामयत स तपोतप्यते'त्याद्युत्तरं स्वबहुभवनस्योक्तत्वात्स्वयमेव धर्मरूपेणाविर्भवतीति धर्मा न धर्मिणः सत्ताश्चाद्भिन्नाः । नापि स्वतो भिन्नाः । स्वरूपैक्यस्योपपादितत्वात् । किन्तु भगवत एव तथा माहात्म्येन परस्परविलक्षणत्वान्नटरूपवद्भिन्नाः प्रतीयन्ते । अतो न भेददूषणं व्यर्थमित्यर्थः । अत्र यद्यप्येतावतैव निर्वाहो भवति, तथाप्युपसंहारे 'मायावादो निराकृत' इति कथनादत्र च प्रथमपदादितोऽग्रे एतावती त्रुटिरिति प्रतिभाति । प्रथमं धर्मरूपेणाविर्भावादित्युक्ते प्रायम्यस्य कालकृतत्वात्तेन भेदमापादयेत् । ततस्तन्निरासाय 'सदेव सोम्येदमग्र आसी'दित्यत्रोक्तस्य कालस्य बोधनार्थत्वप्रतिपादनेन भिन्नतानिराकरणम्, तत्प्रसङ्गेन एकपदस्य मुख्यार्थतानिराकरणम् । ततः 'अस्ति भाति प्रियं रूपं नाम चे'त्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपम्, द्वयं मायिकमुच्यत इति मतं जगतोऽब्रह्मत्वायोपक्षिप्य, तयोर्मायिकत्वनिरा-

---

१ धर्म । २ भेद दूषणेति पाठः ।

नानारूपेण प्रकटस्य रूपद्वये भेदप्रतीतिवत् । नाब्रह्मैवार्थः प्रतीयते ।
अतः कृतापि जिज्ञासा कुण्ठितैव भवेत् ध्रुवम् ॥ ३१ ॥
अनारभ्याधीतगार्ह्यस्मार्ता इव भवेद्यदि ।
प्रक्रिया महतां वृत्तिः स्वातन्त्र्यं चात्र तेन न ॥ ३२ ॥
धर्मार्थकाममोक्षाख्यं श्रेयः स्मार्तं न वैदिकम् ।
पुरुषेच्छावशेनैते साध्यसाधनतां गताः ॥ ३३ ॥
अलौकिको हि वेदार्थः प्रमाणान्तरगो न हि ।

---

रणमिति । एवं भेदवादे मायावादे च निराकृते तदग्रे अयं ग्रन्थः नाब्रह्मैवार्थः प्रतीयत इति । एवं प्रपञ्चस्य ब्रह्मभिन्नत्वे मायिकत्वे च निराकृते सति अब्रह्मैवार्थः प्रतीयत इति न । तथाच लोकनिपुणा मायावादिनश्चैवं मानयितुं शक्याः । अतोऽर्धजरतीयन्यायाद्वैदिकानां वेदान्तत्वमसिद्धिः, नतु भवदुक्तप्रकारकादेकवाक्यत्वादित्यर्थः ।

तेन सिद्धमाहुः अत इत्यादि । यतो भवदुक्तरीत्या वेदवेदान्तयोरेकवाक्यताया वक्तुमशक्यतया वेदान्तेषु वेदत्वस्यासिद्धत्वाज्जैमिनिकृता धर्मजिज्ञासा वेदान्तानसंगृह्णाना तदंशे ध्रुवं निश्चयेन कुण्ठितैव भवेत् । स्वाध्यायाध्ययनविधिना तदध्ययनस्याप्राप्तेः । ततश्च वैदिकाभिध्यानेन कृतमपि तेषां वेदत्वसमर्थनं वृथैवेत्यर्थः ।

ननु वेदान्तानामनारभ्याधीतत्वात्तदुक्ता आत्मज्ञानाद्यो धर्मा गार्ह्यस्मार्ता इवेति स्मृतिपादे स्मृतिविचारेणैव तेऽपि विचारिता एवेति न धर्मजिज्ञासायाः कुण्ठितत्वमित्येवं समर्थने, तदपि दूषयन्ति अनारभ्येत्यादि । वेदान्ता अनारभ्याधीता गार्ह्यस्मार्ता इव यदि भवेयुः, तदा महतां पृथक्कृता स्मृतिकृता च या प्रक्रिया प्रकारः वृत्तिर्वर्तनं व्यवहारः, स च तथा भवेत्, तेषां स्वातन्त्र्यं वेदभिन्नत्वं च भवेत् । सूत्रकाराः यत्र धर्मान् विचारयन्ति, तत्र 'अथ कर्माण्याचारादीनि गृह्यन्ते' 'अथ गार्ह्याणि वक्ष्यामः' 'अथातो गृहस्थाश्रमिणां धर्म'इत्येवं प्रतिज्ञाय तत्तत्कर्मकालादिकं वदन्ति । स्मृतिकाराश्च यत्र वदन्ति, तत्र महतीषु स्मृतिषु 'अथातः सामयिकाचारिकान् धर्मान् व्याख्यास्यामः,' 'योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् । अथातो हिमशैलाग्रे देवदारुवनालये । व्यासमेकाग्रमासीन'मित्येवं धर्मप्रश्नं प्रतिज्ञाय, स्थानविशेषे तत्तत्प्रश्नेन वदन्तीति प्रकारो दृश्यते । अमुकगृह्यसूत्रं अमुकस्मृतिरिति कर्तृनामपूर्वको व्यवहारश्च दृश्यते, तेषां वेदभिन्नत्वं च दृश्यते, तादृशं वेदान्तेष्वपि भवेत्, येन तद्वत् वेदान्तेषु दृश्यते, तेन गार्ह्यस्मार्ता इव न । तथाच स्मृतिविचारेण तद्विचारसिद्ध्यभावा-

परमात्मविचारेण ते चत्वारो ह्यलौकिकाः ॥ ३४ ॥
धर्मे ब्रह्मणि च प्रोक्ताः फलत्वेन तथैव ते ॥ ३४ ½ ॥

'विराजमभिसंपद्यते ।' 'अमृतीभवति ।' 'प्रजापतेरेव सायुज्यमुपैति ।' 'इदं सर्वं प्रजापतिः ।' 'न स पुनरावर्तते' । 'वशीयान् भवति ।' 'सनिमेषान् कामुका एनं स्त्रियो भवन्ति ।' 'य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन' इत्यादि ।

जिज्ञासाकौण्ठ्यं दुर्वारमेवेत्यर्थः । कासुचित्स्मृतिषु प्रकारादर्शनात् । 'यद्वै किञ्च मनुरवदत्तद्भेषज'मितिश्रुतावपि मन्वादरदर्शनाच्च । प्रकारादिरप्रयोजक इत्याशंकायां युक्त्यन्तरमाहुः धर्मेत्यादि । प्रकारादर्शनेपि कचिदादरेपि स्मार्तं धर्मादिकं श्रेयो वैदिकं न । तत्र हेतुः जीवविचारितत्वम् । यत एते स्मार्ता धर्मादयः पुरुषेक्षावशेन पुरुषाणामृषीणां स्मरणपूर्वकविचारवशेन साध्यसाधनभावं प्राप्ताः । अतः प्रकाराभावेपि श्रुतौ कचिदादरेपि न सर्वे वैदिकाः । वेदान्तानां त्वपौरुषेयत्वाच्चदुक्तो वेदार्थः स यतो हेतोरलौकिकः अतो हेतोः प्रमाणान्तरगो योगादिप्रमाणगम्यो न । अतस्तद्विचारस्यावश्यकत्वेऽपि यस्मान्न विचारः, तस्मात्सा तदंशे कुण्ठितैवेत्यर्थः । ननु फलं हि यज्ञैर्वेदे प्रतिपाद्यते, वेदान्तेषु तु यज्ञाप्रतिपादनात् फलाभावेन तेषां वेदोपरत्वम्, अतः किं तद्विचारेणेत्यतस्तदविचारेपि न धर्मजिज्ञासायाः कुण्ठितत्वमत आहुः परमात्मेत्यादि, धर्मे ब्रह्मणि चेति । धर्मकाण्डे ब्रह्मकाण्डे च । तत्र काण्डद्वयस्थाः श्रुतीर्दर्शयन्ति 'विराज'मित्यादि । अत्र विराजमित्यादयः पूर्वकाण्डस्थाः । 'न स पुनरावर्तत' इतिछान्दोग्योपनिषत्स्थम् । 'य एवं वेद प्रतितिष्ठती'ति भृगूपनिषत्स्थम् । तथा च पूर्वकाण्डवदुत्तरकाण्डेपि चतुर्णां फलानां श्रावणाद्रूपरत्वमसंगतमिति मीमांसकमते धर्मजिज्ञासाकौण्ठ्यमपरिहार्यमेवेत्यर्थः । एवमत्र जिज्ञासाया कुण्ठितत्वसाधनेन धर्मो न सर्वस्य वेदस्यार्थः, किन्तु पूर्वकाण्डस्यैवार्थ इति सिध्यति । तथा सति वेदान्तेषु वेदत्वमपौरुषेयशब्दत्वाद्वा परमात्मवाक्यत्वाद्वा वक्तव्यम् । तदाप्येकार्थत्वाभावाद्विभागे साकांक्षत्वाभावाच्च तयोरेकवाक्यत्वाभावेन भिन्नशास्त्रत्वमेवेति कथं द्वयोरेकवाक्यत्वमिति तान् प्रत्याक्षेपः पर्यवस्यति । तत्र यदि 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एतं विदन्ति वेदेन तस्माद्वेदस्य वेदते'ति सायणीय ऐतरेयब्राह्मणभाष्ये संमतित्वेनोपन्यस्तात् श्लोकात् प्रत्यक्षाद्यगम्यश्रेयःसाधनस्यैव सर्ववेदार्थत्वमुपगम्यते, तदाप्यथातोऽलौकिकोपायजिज्ञासेत्यकथनाज्जिज्ञासायाः कुण्ठितत्वं दुर्वारमेवेति सिध्यति ।

अथ वेदाध्ययनं ब्रह्मचर्ये, वेदान्ताध्ययनं संन्यास इति तद्विचारः पृथगेव ।

समाप्तिश्च श्रूयते । शिक्षायां 'वेदमनूच्याचार्योन्तेवासिनमनुशास्ति' इत्यादिना उपनिषदनन्तरं पठिता । आचार्यान्तरेपि गुणोप-

---

तत्र व्यवहारे भट्टनयमंगीकुर्वन् मायावादी वा जैमिनीप्रणीतसंकर्षणकाण्डाभिमानी वा कुण्ठतां समाधत्ते, तदनुवदन्ति अथेत्यादि । नात्र वेदान्तार्थविचाराभावेन कुण्ठता । वेदाध्ययनस्य उपनयनानन्तरमध्ययनादिविधिना प्राप्तत्वात्तस्य चार्थज्ञानार्थत्वादर्थज्ञानस्य च विचारमन्तरेणासंभवात्तत्र विचारः पूर्वकाण्डस्यैवाध्ययनादिविधिनाक्षिप्यत इति तदर्थस्य धर्मस्यैवात्र जिज्ञासा प्रतिज्ञाता, न वेदान्तार्थस्यापि । वेदान्ताध्ययनं तु तैत्तिरीये भार्गव्यां विद्यायां 'भृगुर्वै वारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति, तस्मा एतत्प्रोवाचे'ति, छान्दोग्ये 'अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामी'त्यध्यापनाध्ययनलिंगात् सन्यास इति पूर्वं तदाधिकाराभावात् । पश्चान्मुमुक्षुत्वादिसाधनचतुष्टयसंपत्तिरूपे वा संकर्षणकाण्डोक्तेऽन्यस्मिन्वाधिकारे संपद्ये तदर्थं व्यासेन जैमिनिना च तद्विचारः पृथगेव कृत इति विषयभेदान्न धर्मजिज्ञासायाः कुण्ठता । नापि पृथग्विचारादेकवाक्यत्वस्य वेदत्वस्य वा हानिः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण यज्ञेन तपसा श्रद्धयाऽनाशकेने'तिवाक्येन वेदानां वेदान्तशेषत्वेनैकवाक्यत्वस्य वेदान्तेषु च मन्त्रब्राह्मणात्मकत्वेन वा अपौरुषेयशब्दत्वेन वा परमात्मवाक्यत्वेन वा वेदत्वस्य च सत्त्वादित्यर्थः ।

एवं मतान्तरेण प्रतिज्ञान्तरमालंब्य दोषे परिहृते तन्मतीयमेकवाक्यत्वप्रकारं दूषयितुं पूर्वोक्तं स्मारयन्ति समाप्तिश्चेत्यादि अनन्तरं पठितेति । एतदनुशासनमुक्त्वा समाप्तौ 'सैषा वेदोपनिष'दिति वाक्येन पठिता । तथा च यदि भवदुक्तरीत्यैकवाक्यत्वमभिमतं स्यात्, वेदसमाप्तिं अनन्तरभागस्योपनिषत्त्वं च न वदेत्, अतो न तथैकवाक्यत्वमित्यर्थः । ननु शिक्षायां 'वेदमनूच्ये'ति क्त्वाप्रत्ययेन वेदाध्यापनोपनिषदध्यापनयोरेककर्तृकता वेदाध्यापनस्य पूर्वकालिकता च लभ्यते, त्वक्त्वनैवानुशासनात्, ननु शास्त्रसमाप्तिरपि, अतो यत्रैवाचार्यकृता, तत्रोपनिषदां पश्चात्पाठोऽर्थप्राप्तोनूद्यत इति न तयोः शास्त्रभेदकत्वम्, आचार्यान्तरेण तत्पाठने तदभावात्, अत कथमेकवाक्यत्वाभाव इत्यत आहुः आचार्यान्तरेपीत्यादि । आचार्यान्तरे यदध्ययनमापाद्यते, तत्किं ब्रह्मचर्ये

---

१ इत्यधिकमपाठो ।

संहारन्यायेन पूर्वकाण्डाध्ययनमेव ब्रह्मचर्ये । नोत्तरकाण्डस्य । सौकर्यार्थमेव पाठान्तरम् । इदानीं विचारस्तु पश्चादेवेति नैकवाक्यता । अत एव विचारोऽपि पृथगेव । 'साङ्गोपनिषद' इति पृथक्पुराणेषु निर्देश इति । अथवा । कुत्रापि आश्रमे विचारोऽस्तु । नैकवाक्यता । न

उत संन्यासे । तत्र यद्याद्यः पक्षः, तदा तु गुणोपसंहारन्यायेन पूर्वकाण्डाध्ययनमेव ब्रह्मचर्ये, ब्रह्मचर्ये विहितं यत्पूर्वकाण्डाध्ययनं ब्रह्मचारिणः, तदध्यापनं वा तद्गुणभूतस्याचार्यान्तरस्य समानविषय एवाध्ययन अध्यापने उपसंहारप्राप्तेः । 'उपसंहारोऽर्थाभेदा'दितिसूत्रे तथैव सिद्धत्वात् । नोत्तरकाण्डस्य । समानविषयत्वाभावात् । अत आचार्यान्तरेऽपि तदध्ययनानन्तरं 'वेदमधीत्य स्नाया'दिति समावर्तनस्य प्राप्तेर्न तस्य शास्त्रसमाप्तिबाधकत्वम्, न वा उपनिषदानन्तर्यबाधकत्वम् । अतः शास्त्रभेदो निराबाधः । अथ संन्यासे, तदा तु तन्मते केवलज्ञानस्यैव मोक्षहेतुत्वाङ्गीकारात् 'विविदिषन्ती'ति श्रुत्या विविदिषायामेव वेदोक्तसाधनानामङ्गीकारेण ज्ञानशेषताया अपि वेदेष्वभावान्न तथाप्येकवाक्यत्वम्, इच्छाया अपुरुषार्थत्वे वेदानामपुरुषार्थपर्यवसायित्वं वेदप्रयोगाभावापत्तिश्चेत्यधिकं दोषद्वयमित्यर्थः । ननु यदि नैकवाक्यत्वम्, तदेदानीं कुत एकस्मादाचार्यादाचार्यान्तराद्वा ब्रह्मचर्य एव पठन्ति, तदैव शिष्टाः पाठयन्ति चेत्यत आहुः सौकर्येत्यादि । पश्चादेवेति । साधनचतुष्टयसंपत्त्यानन्तर्यादिभेदवद्भिरङ्गीकारात्तथेत्यर्थः । ननु तर्हि विचारपश्चात्त्वमधिकारभेदकृतम्, न शास्त्रभेदकृतमिति यदुक्तम्, तदप्याद्रियतामित्यनाप्तिरित्यत आहुः अत एवेत्यादि । अत एवेति । शास्त्रभेदादेव । तत्र हेतुः साङ्ग इत्यादि । तथा च स्वकल्पितयुक्त्यपेक्षया उपबृंहणसिद्धस्य बलिष्ठत्वाद्वाक्यभेदपक्ष एव युक्त इति तन्नाद्रियत इत्यर्थः । ननु तर्हि यन्मते आश्रमान्तरेऽपि विचार इत्यङ्गीक्रियते, अलौकिकोपायनेदकत्वरूपं वेदत्वमादाय, तन्मते नैकवाक्यत्वमस्त्विति चेत्, तत्राहुः अथवेत्यादि । न वेदत्वमित्यादि । तन्मतेऽपि तादृशं वेदत्वमुपनिषदां न । यदि तथा जैमिन्यभिप्रेतं स्यात्, तदा जैमिनिः पूर्वं धर्मजिज्ञासां प्रतिज्ञाय तदवान्तरविचारत्वेन 'अथातः शेषलक्षणम्' 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे'ति यथा पश्चादुक्तवान्, तथा पूर्वं 'अथातोऽलौकिकोपायजिज्ञासे'ति प्रतिज्ञाय पश्चादेव तद्विशेषविचारत्वेन धर्मजिज्ञासामुपासनाजिज्ञासां च प्रैविनानीयात् । तथा तु नास्तीति तादृशोपायविशेषवेदकत्वरूपं वेदत्वं तस्य नाभिप्रेतमुपनिषदाम् । अतो न तन्मतेऽपि वैदेकवाक्यत्वं वेदान्तानामित्यर्थः । एवं सर्वं तन्मतं दूषयित्वा वैदिकाभिधानाद्यत्वेन प्रत्यवस्थितम्, तस्य शैथिल्येन तदुत्तरस्य पूर्वमनुक्तत्वादिदानीं तत्स्मृत्वा कदाचिद्युनः प्रत्यवतिष्ठेदि-

वेदत्वमुपनिषदाम् । स्वरादिनियमस्तदन्तानामपि आचारपरंपरया । वाक्येन तूपयोगो 'यदेव विद्यया करोति' इति । तथापि कथमुपयोग इति चेत् । उच्यते । लौकिकेषु पदार्थेषु साङ्गो यज्ञोऽध्यस्यते, वैदिके तत्रार्थे वैदिकता संपद्यत इति । ब्रह्मवादेन सर्वस्यापि ब्रह्मत्वेऽवगते ब्रह्मण्येव यज्ञः प्रतिष्ठितोऽपि भवति । अयज्ञकालेऽपि वैदिकत्वं सिध्यति । ननु वेदान्तत्वं कथम् ।

---

त्यतस्तत्स्वरूपमाहुः स्वरादीत्यादि । अपिः गर्हायाम् । मूर्खः प्रत्यवस्थातेति । इदं तु प्रागेव विवृतमिति न पुनरुच्यते । तथा च तस्य शैथिल्यान्न तेन प्रत्यवस्थानं युक्तमित्यर्थः ।'यदेवे'तिवाक्योत्तरस्य पूर्वं सम्यगभासत्वाच्चेन प्रत्यवतिष्ठासन्तं प्रत्याहुः वाक्येनेत्यादि । अनेन वाक्येन तूपयोगमात्रमुच्यते, न तु शेषता नियन्तुं शक्यते । तथा सति फलश्रुतिकाण्डद्वयसमाप्त्योर्विरोधापत्तेरिति प्रागेवोक्तमिति न तेनापि प्रत्यवस्थानावकाश इत्यर्थः । ननु श्राद्धे ज्ञानोपयोग आनन्त्यार्थः, 'ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छते'ति कथनात् । सोपि संप्रदानपुरुषद्वारा । अत्र तु वाक्ये कर्ममात्रपौष्कल्यं फलत्वेनोच्यते। तत्र द्वारं चेन्न वक्तुं शक्ष्यन्ति, तदा परा जेष्यन्तीत्याशयेनाह तथापीत्यादि। तद्योत्तरत्वेन सोपपत्तिकं प्रकारमाहुः उच्यत इत्यादि । लौकिकैः पदार्थैर्यज्ञो न सिध्यतीति गुणकर्मबोधकैः'व्रीहीन्प्रोक्षती'त्यादिवाक्यैः साङ्गो यज्ञो लौकिकेषु पदार्थेष्वारोप्यते, वैदिके कर्मणि तदुपकरणभूतस्य पदार्थस्य मूर्तैर्देवतासन्निधानेन देवतात्ववत् वैदिकता संपद्यत इत्येतदर्थम्। एतत्पूर्वकाण्डे सिद्धम्। उत्तरकाण्डे 'सन्मूलाः सोम्येमाः प्रजाः' 'इदं सर्वं यदयमात्मे'त्यादिवाक्यश्रावितेन ब्रह्मवादेन सर्वस्य प्रपञ्चस्य प्रापञ्चिकस्य च वस्तुनो ब्रह्मत्वे प्रगते यज्ञोपि सद्रूपत्वात् ब्रह्मात्मक एव भवति। किञ्च । यजमानस्यापराभावाय प्रतिष्ठितोपि भवति । तदुक्तं तैत्तिरीयसंहितायां 'वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सं जयान्बहूयाजिनो यीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपाय यज्ञपताविति स होवाच यज्ञपतावििति सत्याद्वै सृंजयाः पराबभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावायेती'ति। किञ्च। अयज्ञकालेपि पदार्थानां ब्रह्मात्मत्वावगतौ तेषां वैदिकत्वं सिध्यति। तथाचापराभावादिफलार्थं ब्रह्मवादेन सर्वस्य ब्रह्मात्मतावगतिद्वारमित्यर्थः। एवमुत्तरदानेन वैदिके मते वेदान्तानां पूर्वोक्तार्थप्रतीपन्यायाद्वेदान्तत्वमुपसंहृतम् । तेन काण्डद्वयस्यापि 'सर्वे वेदा यत्पदमामनन्ती'ति, 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यान'मित्यादिश्रुतिभिः, 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे, परो-

तच्च कृष्णप्रसादेन मायावादो निराकृतः ॥ ३५ ॥
आवैदिको महादेवस्तत्र साक्षी न संशयः ।
ये वैदिका महात्मानस्तेषां चानुमतिस्तथा ॥ ३६ ॥
अवेदविन्न मनुते मया चोपेक्षितः पुनः ।
स्थापितो ब्रह्मवादो हि सर्ववेदान्तगोचरः ॥ ३७ ॥
काशीपतिस्त्रिलोकेशो महादेवस्तु तुष्यतु ।
कस्यचित्त्वत्र सन्देहः स मां पृच्छतु सर्वथा ॥ ३८ ॥

---

ऋवादा ऋषयः परोक्षं च मम प्रिय'मित्यादिस्मृतिभिश्च ब्रह्मविषयत्वेन, 'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्, श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचन'मित्यादिभिर्मोक्षैकप्रयोजनत्वेन चैकवाक्यत्वम्, नान्यथा । तच्चेन्नाङ्गीक्रियते, तदा कथमपि नैकवाक्यत्वमिति तन्मते उत्तरकाण्डस्य वेदान्तत्वं न कथमपि सिध्यतीति तान् पर्यनुयुञ्जते ननु वेदान्तत्वं कथमिति । कर्ममीमांसकमायावादिनोर्मतमालम्ब्य मां पर्यनुयुञ्जानैरुत्तरकाण्डस्य वेदान्तत्वं स्वस्वमतेन समर्थनीयमित्यर्थः ।

एवं पर्यनुयुज्य पत्रावलम्बनमुपसंहरन्ति तच्चेत्यादि । तत् एकवाक्यतापादकं मीमांसकादिमतं मायावादश्च कृष्णप्रसादेन निराकृतः, न तु युक्तिमात्रेण । कृष्णप्रसादबीजं त्वत्र भगवन्मतब्रह्मवादस्थापनम् । 'एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रह' इत्युद्धवं प्रत्येकादशे भगवद्वाक्यात् । ब्रह्मवादस्वरूपं तु 'सर्वे वेदा यत्पदमामनन्ति' 'इदं सर्वं यदयमात्मा' 'वेदैश्च सर्वैरहमेव वेद्यः' 'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे,' 'अहमेवासमेवाग्र' इत्यादिश्रुतिस्मृतिप्रतिपादितं बोध्यम् । अत्र मानमाहुः आवैदिक इत्यादि । महादेवस्य आसमन्ताद्वैदिकत्वं तु 'वेदः शिवः शिवो वेदः' 'वेदाध्यायी सदाशिव' इतिशिवपुराणवाक्याद्बोध्यम् । अनुमतिरिति । साक्षिणीति शेषः । ननु यच्छब्दार्थविचारेणोक्तम्, तद् मीमांसकादिभिर्वैदिकैर्मन्तव्यम्, न तु नैयायिकाद्यैः, अतो नैतावता निर्वाह इत्यत आहुः अवेदविदिति । तथा च 'एतेन शिष्टापरिग्रहा व्याख्याता' इतिसूत्रे तेषां तथात्वबोधनात्तेऽप्रयोजका इति तदनादरेऽप्यक्षतिरित्यर्थः । ननु महादेवादेः साक्षित्वं कुतो हेतोरित्यत आहुः स्थापित इत्यादि । तथा च तोषादेव साक्षित्वं करिष्यतीत्यत उच्यते इत्यर्थः । ननु शिवनोपार्थं इदं चेदेवं पत्रावलम्बनस्य किं प्रयोजनमत आहुः कस्यचिदित्यादि । प्रतिवादिनः संदेहनिराकरणमेतत्प्रयोजनमि-

न भयं तेन कर्तव्यं ब्राह्मणानामियं गतिः ।
डिण्डिस्तु वादितो द्वारि विश्वेशस्य मयात्र हि ॥ ३९ ॥
विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः ॥ ३९ ॥

इति श्रीमद्वल्लभाचार्यविरचितं पत्रावलम्बनं संपूर्णम् ।

---

त्यर्थः । वादे जयपराजयसंभवात्तत्कृतं भयं न कर्तव्यमित्यर्थः । तत्र हेतुः ब्राह्मणानामियं गतिरिति । पूर्वं याज्ञवल्क्यादिभिस्तथैव करणात्तत्र न दोष इत्यर्थः । डिण्डिस्त्विति । एतद्वादस्याप्रच्छन्नत्वादित्यर्थः । एवं करणप्रयोजनमाहुः विद्वद्भिरिति तथा च सन्मार्गरक्षणमेतत्करणप्रयोजनमित्यर्थः ।

एष पुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ।
निवेदितो मया तेन चापलं मे क्षमन्त्विति ॥ २ ॥

इतिश्रीमद्वल्लभाचार्यचरणैकतानपीताम्बरात्मजपुरुषोत्तमेन विरचितं पत्रावलम्बनविवरणं संपूर्णम् ।

# मुद्रितपुस्तकानि ।

| | |
|---|---|
| १ सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १-०-० |
| २ निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १-०-० |
| ३ संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. १-०-० |
| ४ { जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । } | रु. १-०-० |
| ५ भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २-०-० |
| ६ सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १-०-० |
| ७ सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १-०-० |
| ८ पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १-०-० |
| ९ नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १-०-० |
| १० श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । | रु. २-०-० |
| ११ श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । | रु. २-०-० |
| १२ श्रीसुबोधिनी दशमोत्तरार्धराजसफलप्रकरणम् । | रु. २-०-० |
| १३ श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. २-०-० |
| १४ रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. १-०-० |
| १५ दशमतामसफलयोजना । श्रीलालूभट्टकृता । | रु. ०-८-० |
| १६ वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १-०-० |
| १७ भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः प्रथमाध्यायः । श्रीकृष्णचन्द्रकृता । | रु. १-०-० |
| १८ भावप्रकाशिका । द्वितीयाध्याय । | रु. ०-८-० |
| १९ तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १-०-० |
| २० भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयम् । | रु. १-०-० |
| २१ शृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. ०-८-० |
| २२ श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| २३ { प्रेमामृतम् । श्रीविठ्ठलेश्वरकृतविवृतिसमेतम् ।<br>पारसूदाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । } | रु. ०-८-० |
| २४ रसार्थमहामाहात्म्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १-०-० |
| २५ मनांदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०-८-० |
| २६ त्रिविधनामावली । टीकासमेता । | रु. १ ४-० |
| २७ श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१० ० |
| 28 Discuss how far Sankaracharya truly represents the view of the author of the Brahma-Sutras | Rs. 1-0-0 |

१. पंडित गट्टूलालजीनी पाठशाला, कैंपिंग्स्ट्रीट भूलेश्वर, मुंबई.
२. नडीयाद पुष्टिमार्गीयपुस्तकालयः, नडीयाद.
३. चुनीलाल कुबेरदास, मदनमंदिर भूलेश्वर, मुंबई.


[illegible] at the 'Gu[illegible]' [illegible] Press
[illegible] 23–24 [illegible] Lane, Fort [illegible]

[illegible] B. A., LL. B., [illegible], High Court,
[illegible] Bombay

श्रीकृष्णाय नमः।

# पुष्टिप्रवाहमर्यादा।

श्रीमद्वल्लभाचार्यचरणप्रणीता।

चतुर्विवरणसमेता।



'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी., वकील हाइ कोर्ट' 'सुरतिस्थ धैर्यलाल व्रजदास सांकलीया, बी. ए., एल्एल्. बी., वकील हाइ कोर्ट' इत्ये-ताभ्यां संशोध्य निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकटीकृता।


श्रीवल्लभाब्दाः ४४६. संवत् १९८१.

मूल्यमेकमुद्रिका।

प्रवाहेण क्रियारता इति । ये स्वभावतः काम्यकर्मरताः काम्यकर्मनिष्ठाः सन्तः प्रवाहेण मिश्रा जाताः, तदा विशेषेण काम्यकर्मनिष्ठाः काम्यकर्मरताः काम्यकर्मजडा एव भवन्ति । यथा सर्वज्ञाः पुष्ट्या विमिश्रा भवन्ति, तद्वदेव प्रवाहेण विमिश्रास्ते कर्मजडा एव भवन्ति । न तु मार्गान्तरविमिश्रा भवन्ति । त एवोक्ताः प्रवाहेण क्रियारता इति । एवं प्रवाहविमिश्रणप्रकारमुक्त्वा मर्यादाविमिश्रणप्रकारमाहुः मर्यादया गुणज्ञा इति । ये शुद्धमर्यादामार्गीयास्ते मर्यादामार्गीयभक्तसङ्गविमिश्रणेन भगवद्गुणपरा भवन्ति भगवद्गुणज्ञा इति । एवं मिश्रभेदान्निरूप्य सर्वतः सर्वोत्कृष्टत्वज्ञापनाय केवलपुष्टिमार्गीयान् निरूपयन्ति शुद्धाः प्रेम्णेति । शुद्धाः प्रेम्णा पुष्टिमार्गीयभावातिरिक्तभावान्तररहितास्ते अतीव दुर्लभाः । अतीव दुर्लभाः इत्यत्रातीवशब्दात् भगवदनुग्रहैकलभ्या इत्यर्थः । एवं मिश्रभेदप्रकारेण मार्गत्रयं निरूप्य शुद्धपुष्टिप्रकारनिरूपणेन पुष्टिमार्गस्य सर्वोत्कृष्टत्वं निरूपितम् ॥ १५½ ॥

एवं तेषां मार्गत्रयाणां सर्गभेदप्रकारमुपसंहरन्ति एवं सर्ग इति ।

एवं सर्गस्तु तेषां हि फलं त्वत्र निरूप्यते ॥ १६ ॥
भगवानेव हि फलं स यथाविर्भवेद्भुवि ।
गुणस्वरूपभेदेन तथा तेषां फलं भवेत् ॥ १७ ॥
आसक्तौ भगवानेव शापं दापयति क्वचित् ।
अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय हि ॥ १८ ॥
न ते पाषण्डतां यान्ति न च रोगाद्युपद्रवः ।
महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे ॥ १९ ॥
भगवत्तारतम्येन तारतम्यं भजन्ति हि ।
लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नान्यथा ॥ २० ॥
वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः ॥ २०½ ॥

एवं अनेन प्रकारेण सर्गभेदमुपसंहृत्य तेषां फलनिरूपणं प्रतिजानते फलं त्वत्र निरूप्यत इति । अत्र मार्गत्रयनिरूपणप्रस्तावे मार्गत्रयस्य फलं निरूप्यते । तत्र पूर्वं पुष्टिमार्गस्य फलमाहुः भगवानेव हि फलमिति । अत्र भगवत्पदेन साक्षात्पुरुषोत्तम उक्तः । एवकारेण साक्षात् स एवानन्दमात्रकरपादमुखोदरादिरूपेण प्रकट एव फलम् । स यथा पूर्वोक्तस्वरूप एव भुवि पुष्टिमार्गीयभक्तक्षितिस्थाने आविर्भवेत् प्रकटो भवेत् । कदाचित् ज्ञानिभक्तन्यायेन हृद्येव भावनाप्रकारेण प्राकट्यं भविष्यतीत्याशङ्कानिरासायाहुः गुणस्वरूपभेदेनेति । गुणाः ईक्षणभाषणादिलीलारूपाः, स्वरूपं तु पूर्वोक्तमेव, तद्भेदेन तत्तत्प्रकारभेदेन यथा प्रकटो भवेत्, तथा तेन प्रकारेण प्रकारभेदेन तेषां फलानुभवहेतुर्भवेदित्यर्थः । पुष्टिमार्गीयाणां साक्षात्सम्बन्धस्यैव फलत्वमेव यु-

१. शीता । २. प्रयभेदम् ।

ज्ञापनाय हिशब्दः । ननु पुष्टिमार्गस्य सर्वोत्कृष्टत्वं यद्यपि सर्वप्रमाणसिद्धम्, तथापि तन्मार्गीयस्यापि वृत्रस्यासुरयोनिप्रवेशे को हेतुरित्याशङ्कानिरासायाहुः आसक्तावपीति । पुष्टिमार्गीयस्य स्वमार्गीयभगवत्स्वरूपातिरिक्तासक्तेरनुचितत्वात् वृत्रस्य पूर्वजन्मनि सङ्कर्षणस्वरूपासक्तत्वात् तस्य च साक्षात् पुरुषोत्तमत्वाभावात् तदासक्तिनिवृत्त्यर्थं शापं दापितवान् । अथवा । अहङ्कारे सत्यपि क्वचित् लोके भक्ताय शापं दापयति । यथा परीक्षिति । क्वचिदितिपदात् अहङ्काराभावेपि क्वचित् शापो दृश्यते । यथेन्द्रद्युम्ने अगस्त्यशापः । शापायोग्येष्वपि भगवद्भक्तेषु शापानिमित्तोद्गमनदर्शनेन यत् शापदानम्, तद्भगवदिच्छयैव, नतु प्रकारान्तरेणेति ज्ञापनाय भगवानेवेत्यत्र एवकारः । तत्र शापदाने हेतुमाहुः तन्मार्गस्थापनाय हीति । यस्य यस्मिन् मार्गे अङ्गीकारः, तस्य शापानन्तरमपि तन्मार्गाङ्गीकारस्य नित्यत्वेन तन्मार्ग एव स्थापनम्, न तु मार्गान्तरसम्बन्धस्तदर्थमित्यर्थः । नित्यपदार्थस्य परावृत्त्यभावो युक्त इति ज्ञापनायोक्तं हीति । अतःपरं शापानन्तरमपि मार्गाङ्गीकारस्थितिनित्यत्वज्ञापनप्रकारमाहुः न ते पाषण्डतां यान्तीति । यदि भगवदङ्गीकारस्य नित्यत्वं न स्यात्, तदा तेषां भगवत्सम्बन्धाभावात् पाषण्डित्वमेव स्यात् । यदि तेषां भगवदङ्गीकारो न स्यात्, तदा कल्माषपादवत् ब्रह्मद्रोहरूपं दुष्टकर्माचरणं स्यात् । अत एवोक्तं न ते पाषण्डतां यान्तीति । ते पाषण्डमार्गप्रविष्टा न भवन्तीत्यर्थः । एवमेकं मार्गाङ्गीकारनित्यत्वज्ञापकलक्षणमुक्त्वान्यान्यपि लक्षणान्याहुः । शापस्य क्लेशहेतुत्वमाशङ्क्याङ्गीकारनित्यत्वेन तदभावमाहुः न च रोगाद्युपद्रव इति । तेषां व्याध्याद्युपद्रवो न भवति । अत एव वृत्रस्य सर्वाभिभावुकत्वम्, न तु केनाप्यभिभाव्यत्वम् । लक्षणान्तरमाहुः महानुभावा इति । महान् अनुभावो येषाम् । यद्यपि शापयुक्तास्तथापि ते महानुभावा एव । अत एव भगवन्मार्गतत्त्वज्ञैर्महादेवैः शापदानानन्तरं पार्वतीं प्रति तेषामनुभाव उक्तः । 'दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः । माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् । नारायणपरा लोके न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति । ननु यदि तेषां महानुभावत्वं तर्हि कथं शापसम्भव इत्यत आहुः प्रायेण शास्त्रं शुद्धत्वहेतवे इति । शास्यते अनेनेति व्युत्पत्त्या शास्त्रमिति, शापस्य शास्त्ररूपत्वात् पूर्वजन्मापराधनिवृत्तिहेतुत्वेन शुद्धिहेतुत्वमुक्तम् । प्रायेणेति सम्भावना । एवं भगवदङ्गीकारस्य नित्यत्वं मर्यादामार्गेपि ज्ञेयम् । नित्यत्वज्ञापका धर्माः 'न ते पाषण्डतां यान्ती'त्यादयो मर्यादामार्गेपि ज्ञेयाः । परीक्षिति गजेन्द्रे च । ननु यदि शापानन्तरमपि भगवदङ्गीकारस्य नित्यत्वेन त्रिष्वपि पूर्वधर्मसमानत्वम्, तर्हि फलेपि साम्यं भविष्यतीत्याशङ्कानिरासायाहुः भगवत्तारतम्येनेति । भगवत्स्वरूपतद्भजनप्रकारतारतम्येन फलेपि भक्तास्तारतम्यं भजन्ति हि । तत्र भजनतारतम्यप्रकारः । पुष्टिमार्गभजने वेद एव नियामकः । मर्यादामार्गीयभक्तभजने मर्यादामार्गीयभक्तस्य यद्यपि भजनीयः पुरुषोत्तम एव, तथापि तत्र विधिरेव नियामकः, न तु वेदोपीति तारतम्यम् । इन्द्रद्युम्नस्य

पूजापरत्वात्, तत्र पूज्यस्य पुरुषोत्तमविभूतिरूपत्वात् पूजायाश्च कर्ममार्गत्वात् तत्रापि विधिरेव नियामक इति । भगवत्स्वरूपतद्भजनप्रकारतारतम्येन तारतम्यं भजन्ति । भजनतारतम्येन फलतारतम्यस्य युक्तत्वज्ञापनाय हिशब्दः । फलतारतम्यं तु 'गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात्' । आद्यो भगवतो रूपं पीतवासश्चतुर्भुज'मित्यादिवाक्येषु प्रसिद्धमिति नात्र विचारः । ननु यदि तेषां केवलं भगवत्परत्वमेव, तर्हि श्रौतस्मार्तकर्माचरणे को हेतुरिति चेत्, तत्राहुः लौकिकत्वं वैदिकत्वमिति । यद्यपि ज्ञानमार्गीयस्यापि भक्तस्य 'तावत्कर्माणि कुर्वीते'त्यनेन श्रौतस्मार्तकर्माचरणस्यानावश्यकत्वं श्रूयते, पुष्टिमार्गीयाणामपि 'यानास्थाये'तिवाक्यात् । अत्र 'आस्थाये'ति, आस्थानं नाम कायवाङ्मनसां तदेकपरत्वम्, तादृशानामपि श्रौतस्मार्तकर्माचरणानावश्यकत्वेपि यत्कर्माचरणं तत्र को हेतुरित्याशङ्क्य हेतुमाहुः वैदिकत्वं लौकिकत्वं कापट्यादिति । वैदिकत्वं वैदिककर्माचरणम्, लौकिकत्वं लौकिकव्यवहारादिप्रतिपालनम्, तच्चेषु कापट्यात् कापट्याद्धेतोरित्यर्थः । कापट्यं नाम लोकसङ्ग्रहः । अत एव भगवताप्युक्तं 'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम् । न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्' इति भगवद्वाक्यात् तत्तन्मार्गीयपूर्णभक्तिमतां लौकिकवैदिककर्माचरणं लोकसङ्ग्रहार्थमेव, न तु कर्मासक्तानामिव परमपुरुषार्थरूपत्वेन । यद्यपि तेषां पूर्वोक्तकर्मकरणमनासक्तिपूर्वकं लोकसङ्ग्रहार्थमेवेत्युक्तम्, तर्हि तेषां कस्मिन् कर्मणि आसक्तिपूर्वकं करणमिति चेत्, तत्राहुः वैष्णवत्वं हि सहजमिति । वैष्णवत्वं नाम पुष्टिमर्यादामार्गप्रवर्तकाचार्योपदेशपूर्वकं तदुक्तप्रकारेण तन्मार्गानुवर्तित्वम्, तदेव तेषां सहजो धर्मः स्वाभाविको धर्मः, सहजमिति । तेन तन्मार्गीयाणामेव धर्माणामासक्तिपूर्वकं करणम्, ततोऽन्यत्र ततः वैष्णवधर्मातिरिक्तधर्मेषु विपर्ययः पूर्वोक्तप्रकारः अनासक्तिपूर्वकं करणम्, लोकसङ्ग्रहार्थं करणमित्यर्थः ॥ २०½ ॥

एवं मार्गद्वयजीवानां फलपर्यवसानान्तां कृतिं निरूप्य पुष्टिमर्यादामार्गाङ्गीकाररहितानां दैवजीवानां साधारणानां स्वरूपं कृतिं चाहुः सम्बन्धिनस्त्विति ।

सम्बन्धिनस्तु ये जीवाः प्रवाहस्थास्तथापरे ॥ २१ ॥
चर्षणीशब्दवाच्यास्ते ते सर्वे सर्ववर्त्मसु ।
क्षणात् सर्वत्वमायान्ति रुचिस्तेषां न कुत्रचित् ॥ २२ ॥
तेषां क्रियानुसारेण सर्वत्र सकलं फलम् ॥ २२½ ॥

सम्बधिनः दैवजीवत्वेन पुष्टिमर्यादामार्गाङ्गीकृतजीवसम्बन्धिनो, न तु तन्मार्गप्रवृत्ताः । तथा अपरे प्रवाहस्थाः । ते सर्वे चर्षणीशब्दवाच्याः सर्वमार्गेषु परिभ्रमणशीलाः । त एव सर्ववर्त्मसु मार्गत्रयेष्वपि क्षणात् कालविशेषं प्राप्य सर्वत्वं तत्तन्मार्गीयत्वं प्राप्नुवन्ति, तत्तन्मार्गीयधर्मानुकरणं कुर्वन्ति । ते मार्गत्रयधर्मानुकरणमेव कुर्वन्ति ।

न तु तेषां कुत्रचित् रुचिः । रुचिः क्वापि न भवतीत्यर्थः । न तु क्वापि श्रद्धेत्यर्थः । तेषां फलपर्यवसानमाहुः तेषां क्रियानुसारेणेति । तेषां तत्तन्मार्गीयक्रियानुकरणेन सर्वत्र सकलं कामितं कामनाविषयं फलं भवतीत्यर्थः । तेषां भगवदङ्गीकृतानां साधारणानां कामासक्तत्वात् तत्तत्क्रियानुसारेण सकलं तत्तत्कामितं फलं भवतीत्यर्थः ॥ २२½ ॥

एवं सम्बन्धिनां स्वरूपमुक्त्वा केवलप्रवाहस्थानां स्वरूपमाहुः प्रवाहस्थान् प्रवक्ष्यामीति ।

प्रवाहस्थान् प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतान् ॥ २३ ॥
जीवास्ते ह्यासुराः सर्वे 'प्रवृत्तिं चे'ति वर्णिताः ।
ते च द्विधा प्रकीर्त्यन्ते ह्यज्ञदुर्ज्ञविभेदतः ॥ २४ ॥
दुर्ज्ञास्ते भगवत्प्रोक्ता ह्यज्ञास्ताननु ये पुनः ।
प्रवाहेऽपि समागत्य पुष्टिस्थस्तैर्न युज्यते ॥ २५ ॥
सोऽपि तैस्तत्कुले जातः कर्मणा जायते यतः ॥ २५½ ॥

कथनप्रकारमाहुः स्वरूपाङ्गक्रियायुतानिति । तेषां स्वरूपमाहुः जीवा इति । ते प्रवाहस्था जीवा आसुराः, ते सर्वे भगवतैव 'प्रवृत्तिं च निवृत्तिं चे'ति वर्णिताः । आसुरेष्वपि प्रकारभेदमाहुः ते द्विधेति । द्वैविध्यमेव प्रदर्शयन्ति ह्यज्ञदुर्ज्ञविभेदत इति । यथा दैवजीवेष्वपि केचन पण्डिताः, केचन न, तद्वत् केचन आसुरेष्वपि दुर्ज्ञाः, केचन अज्ञाः । दुर्ज्ञानां लक्षणमाहुः दुर्ज्ञास्त इति । 'प्रवृत्तिं च निवृत्तिं चे'ति भगवत्प्रोक्तलक्षणा दुर्ज्ञाः । अज्ञानाहुः तानन्विति । ये तान् अनु तदुक्तप्रकारानुवर्तिनस्ते अज्ञाः । नन्वासुरेष्वपि जीवेषु म्लेच्छादिषु कस्यचिद्भगवत्परतादर्शने को हेतुरित्याशङ्क्याहुः । वस्तुतस्तु स नैवासुरजीवः, शुद्ध आसुरजीवे भगवद्भावस्यासम्भवात् । किन्तु भगवदपराधाद्भगवद्भक्तापराधाद्वा सोऽपि पुष्टिमार्गीयः प्रवाहे समागत्य प्रवाहस्थैः सङ्गं प्राप्यापि, तत्कुले जन्म वा प्राप्यापि, तैर्न युज्यते, आसुरभावैर्योगं न प्राप्नोति । ननु यदि स आसुरभावैर्न युज्यते, तर्हि तस्यासुरकुलोत्पत्तौ को हेतुरिति चेत्, तत्राहुः कर्मणा जायते यत इति । कर्मणा पूर्वोक्तभगवदपराधरूपेण, अथवा, तज्जनितप्रारब्धकर्मणा, जन्मनः प्रारब्धकर्माधीनत्वात् । तत्रासुरकुले जन्मानन्तरमपि तद्भावसम्बन्धाभावः कथं सम्भवतीति चेत्, उच्यते । तस्य पूर्वजन्मनि पुष्टिमार्गीयत्वेन भगवदङ्गीकृतत्वात् । भगवदङ्गीकारस्य नित्यत्वात् । अत एव गीतायां भगवताप्युक्तम् 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भया'दिति । तस्य पूर्वजन्मनि भगवद्धर्माचरणाल्पसंस्कारस्य बलिष्ठत्वात् आसुरकुले जन्मानन्तरमपि नासुरभावप्रवेशः । किञ्च । गीतायां 'अयतिः श्रद्धयोपेतो योगाच्चलितमानस' इत्यारभ्य'त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते' इत्यन्तेन पार्थपृष्टेन भगवता 'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति । प्राप्य पुण्यकृतान् लोकान् उषित्वा शाश्वतीः समाः । शुचीनां

श्रीमतां गेहे योगभ्रष्टोभिजायते । अथवा योगिनामेव कुले भवति धीमताम् । एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् । तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् । यतते च ततो भूयः संसिद्धौ कुरुनन्दन । पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः । जिज्ञासुरपि योगस्य परं ब्रह्मातिवर्तते'इत्यन्तेन पार्थसंशयो निवारितः । यत्र योगभ्रष्टस्यापि पूर्वजन्मयोगधर्माचरणसंस्कारानिवृत्तिः, तत्र भगवदङ्गीकृतस्य पुष्टिमार्गीयस्य पूर्वजन्माचरितभगवद्धर्मस्य सर्वतोधिकप्राबल्यात् आसुरसङ्गेन तत्कुलजन्मनापि पूर्वजन्मसंस्कारनिवृत्त्यभावात्, यावज्जीवं तत्संस्कारसत्त्वेन अन्तकालेपि तत्संस्कारस्य विद्यमानत्वात् 'अन्ते या मतिः सा गति'रिति शास्त्रात् 'यं यं वापि स्मरन् भाव'मिति भगवद्वाक्याच्च तस्य भगवत्प्राप्तिरेव, न तु आसुरभावजनितः कोप्यन्तराय इति सर्वमनवद्यम् ॥ २५३ ॥

यद्यप्यत्र ग्रन्थोपसंहारदर्शनाभावादग्रेपि ग्रन्थोस्तीति ज्ञायते, तथाप्यग्रिमग्रन्थस्याप्रसिद्धत्वाद्यावत्प्रसिद्ध एव व्याख्यात इति नानुपपत्तिः काचित् ।

श्रीमत्कृष्णास्यवागर्थो दुर्बोधः सर्वथा स्वतः ।
तत्कृपातस्तदीयस्य बुद्धिगम्यो न चान्यथा ॥ १ ॥
नत्वा पितृपदाम्भोजं कृपामधुसुपूरितम् ।
तदालोडितबुद्ध्यैव श्रीमदाचार्यभाषितम् ॥ २ ॥
पुष्टिप्रवाहमर्यादाभेदकं शास्त्रमद्भुतम् ।
श्रीवल्लभेन व्याख्यातं तत्कृपातो यथामति ॥ ३ ॥
तेनाचार्याः प्रसीदन्तु मयि निःसाधने स्वतः ।
तेनैव मम नैश्चिन्त्यमैहिके पारलौकिके ॥ ४ ॥

इति श्रीपितृचरणैकतानश्रीवल्लभविरचितं पुष्टिप्रवाहमर्यादाविवरणं समाप्तम् ।

---

श्रीगोपीजनवल्लभाय नमः।

# पुष्टिप्रवाहमर्यादा।

## श्रीरघुनाथकृतविवरणसमेता।

नमो भक्तभयाभावभाविने भक्तिदायिने।
श्रीमदग्निकुमाराय पारावाराय सत्कृते ॥ १ ॥

इदानीं भगवत्प्राप्तिलक्षणमुख्यफलतदभावौ किंनिबन्धनाविति संशयं निवारयितुं मार्गभेदविचारमारभन्ते पुष्टिप्रवाहमर्यादा इति।

पुष्टिप्रवाहमर्यादा विशेषेण पृथक् पृथक्।
जीवदेहक्रियाभेदैः प्रवाहेण फलेन च ॥ १ ॥
वक्ष्यामि सर्वसन्देहा न भविष्यन्ति यच्छ्रुतेः।

पुष्टिरनुग्रहो धर्म्यैकनिष्ठः, स एको मार्गः। प्रवाहो 'जायस्व म्रियस्वे'त्येवंरूपः। मर्यादा वेदोक्तवचनोत्थो मार्गः। एतान् पृथक् पृथक् प्रत्येकं तेषामसाधारणलक्षणैर्जीवदेहप्रवाहक्रियाफलरूपैर्विशिष्य यथा ज्ञायन्ते, तथा वक्ष्यामि, यतो यच्छ्रवणानन्तरं पूर्वसन्देहाः सर्वविषयका न भविष्यन्तीत्यर्थः। अत्र जीवप्रवाहयोर्विशेषणविशेष्यभावेनैक्यं ज्ञेयम्, न भेदः। देहक्रिययोरप्येवमेव ज्ञेयम्। भेदानग्रे स्वयमेव वदिष्यन्ति ॥ १ ॥

मार्गत्रयसद्भावं प्रमाणयन्ति भक्तिमार्गस्येति।

भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चयः ॥ २ ॥
'द्वौ भूतसर्गा'वित्युक्तेः प्रवाहोपि व्यवस्थितः।
वेदस्य विद्यमानत्वान्मर्यादापि व्यवस्थिता ॥ ३ ॥

कथनादिति। श्रीभागवतगीतादौ। अत्र भक्तिरूपकार्येण कारणं पुष्टिरस्तीति निश्चीयते। इदं धर्मिनिष्ठं पुष्टिमार्गे प्रमाणमुक्तम्। 'द्वौ भूतसर्गौ लोकेस्मिन् दैव आसुर एव चे' त्याद्युक्तेः प्रवाहाख्योपि मार्गः प्रमाणसिद्धोस्तीति निश्चीयते। काण्डत्रयात्मकवेदस्य विद्यमानत्वाच्छ्रूयमाणत्वान्मर्यादामार्गेपि सप्रमाणत्वं सिद्धम् ॥ ३ ॥

प्रमाणागमसङ्कीर्णमितरेतरभेदकं लक्षणमाह कश्चिदिति।

कश्चिदेव हि भक्तो हि 'यो मद्भक्त' इतीरणात्।
सर्वत्रोत्कर्षकथनात् पुष्टिरस्तीति निश्चयः ॥ ४ ॥

१. पुष्टिदायिने। २. पारः भक्तानन्दपारावारकारकेत्यर्थः। ३. प्रवाहेणेनादि ४. अतः। ५. भेदौ [illegible]

न सर्वोतः प्रवाहाद्धि भिन्नो वेदाच्च भेदतः।
'यदा यस्ये'ति वचनान्नाहं वेदै'रितीरणात्॥ ५॥

'मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रिय' इति वचनाद्भक्तिमार्गीया विरला एव भवन्ति। न हि भगवत्प्रियत्वं स्वल्पसाध्यम्, अतः प्रवाहाद्भिन्नः पृथगेव। प्रवाहस्य सर्वसाधारणत्वाद्भक्तेरनुग्रहैकलभ्यत्वान्महानेव भेदोस्तीति मन्तव्यम्। मर्यादयाप्यसङ्कीर्णत्वं वेदाच्च भेदत इत्यारभ्य निश्चय इत्यन्तेनाह। 'यदा यस्ये'ति श्रीभागवते। 'नाहं वेदैर्न तपसे'ति गीतायाम्। सर्वत्र भगवच्छास्त्रादौ भक्तिमार्गस्य कर्माद्यपेक्षयोत्तमत्वकथनात् पुष्टिमार्गो भिन्नोस्तीति निर्धारितम्। अभेदे तूत्कर्षवैयर्थ्यात्॥ ५॥

मर्यादाप्रवाहयोर्भक्तावन्तर्भावमाशङ्क्य निषेधन्ति मार्गैकत्वेनेति।

मार्गैकत्वेन चेदन्त्यौ तनू भक्त्यागमौ मतौ।
न तद्युक्तं सूत्रतो हि भिन्नो युक्त्या हि वैदिकः॥ ६॥
जीवदेहकृतीनां च भिन्नत्वं नित्यता श्रुतेः।
यथा तद्वत्पुष्टिमार्गे द्वयोरपि निषेधतः॥ ७॥
प्रमाणभेदाद्भिन्नो हि पुष्टिमार्गो निरूपितः।

अन्त्यौ प्रवाहमर्यादे। तनू भक्तिः प्रलङ्गभूते, साधने इति यावत्। एवंविधे भूत्वा भक्त्यागमौ भक्तिशास्त्ररूपौ मतौ चेत्, तन्न युक्तमिति योजना। तत्कुतो नेत्याशङ्क्याह सूत्रतो हीति। वैदिको मर्यादामार्गो भिन्नः, भक्तेः पृथगित्यर्थः। अत्र प्रमाणं ब्रह्मसूत्राणि। द्वितीयं तदर्थानुरुद्धा युक्तयः साधकवाक्यानि। तत्र 'अथातो ब्रह्मजिज्ञासा' इत्यादिषु जीवब्रह्माभेदः प्रतिपाद्यते। भक्तौ तु तवाहमिति स्वस्वामिसम्बन्धः प्रतिपाद्यते, अतः स्फुटो भेदः। युक्तयस्तत्तर्कास्ते च शास्त्र(प्र)सिद्धा ज्ञेयाः। भक्तेरपि शाण्डिल्यसूत्रतो वैलक्षण्यं श्रूयते। तथाहि। 'अथातो भक्तिजिज्ञासा' इत्युपक्रम्य 'सा परानुरक्तिरीश्वरे' 'द्वेषप्रतिपक्षाद्रसभावाच्च राग' इति द्वितीयतृतीयसूत्राभ्यां स्नेहरूपत्वमुक्तम्। तच्च कर्मज्ञानकाण्डादिविरुद्धमेव। अतोपि मर्यादायाः पृथक्त्वम्। हिशब्द उभयत्रापि प्रसिद्ध्यर्थः। भेदकान्तरमप्याह जीवेति। आसुरजीवानां दैत्यदानवप्रभृतीनामपि वेदेधिकारप्रवृत्ती दृश्येते। भक्तिमार्गे तेषां गन्धोपि न। प्रत्युत तद्वस्तु द्वेष एव, अतो जीवभेदः स्फुटः। वेदे स्त्रीशूद्रादीनामनधिकारः श्रूयते। भक्तौ तु ब्राह्मणादिसाधारण्येन सं दैवजीवमात्रस्य। 'देवोऽसुरो मनुष्यो वे'ति वचनात्। 'यो मद्भक्तः स मे प्रियः' 'मां हि पार्थ व्यपाश्रित्य' इत्यादौ तथैवाम्नानात्। भक्तौ स्नेहनिबन्धनकृतेरियत्ताया अभावाद्देहवत् कृतिभेदोपि स्फुटः। किञ्च। श्रुतेर्वेदस्य नित्यता। अकरणे प्रत्यवायजनकत्वात्। श्रुतिपदेन तदुक्तधर्मा उच्यन्ते। उक्तप्रकारेण वेदे अन्यमार्गापेक्षया यथा भेदः, तद्वत् तथैव पुष्टिमार्गे

१. भक्त्या त्वनन्ययेति गीतायाम्। २. अधिष्ठात्री आधेयप्रवृत्तिरिति, पाठद्वयम्। ३. देवोति पाठः।

भेद इति शेषः । कथमित्यपेक्षायां **द्वयोरपीति** । द्वयोर्मर्यादाप्रवाहयोर्निषेधतः तल्लक्षणाप्रवेशादित्यर्थः । **प्रमाणभेदादिति** । वस्तुसाधकं प्रमाणमित्युच्यते । वेदे तु स्वतःप्रामाण्यम् । तद्विरोधिप्रत्यक्षादीनामप्यतथात्वम् । पुष्टौ तु धर्मितदनुग्रहभक्तानुभवातिरिक्तप्रमाणाभावात् साधकभेदादपि पुष्टिमार्गो भिन्नो भवतीत्यर्थः । अत एवैतन्मार्गीयाणां वैलक्षण्यं भगवतैवोक्तम् । तथाहि 'केवलेन हि भावेन' 'ते नाधीतश्रुतिगणा' इति । नहीदं मर्यादयोपपद्यते, कुतस्तरां तुच्छः प्रवाहः ॥ ७ ॥

प्रवाहमार्गमाह **सर्गभेदमिति** ।

**सर्गभेदं प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतम् ॥ ८ ॥**
**इच्छामात्रेण मनसा प्रवाहं सृष्टवान् हरिः ।**
**वचसा वेदमार्गं हि पुष्टिं कायेन निश्चयः ॥ ९ ॥**

सर्गशब्देन लौकिकः प्रवाह उच्यते । अत्रापि स्वरूपाङ्गक्रियाशब्दैर्यथाक्रमं जीवदेहकृतयो विवक्षिताः । स्वरूपं जीवः, अङ्गं देहः, क्रिया कृतिः, एतैर्युतं विशिष्टमित्यर्थः । ननु प्रवाहः सर्ग उक्तः । स च पुष्टिमर्यादयोरप्यस्तीति कथं वैलक्षण्यमिति चेत्, तत्राह **इच्छामात्रेणेति** । 'सोऽकामयत, बहु स्यां प्रजायेयेति, स द्वितीयमैच्छत्, स हैतावानास' इत्यादिभिर्भगवान् सङ्कल्पमात्रेण मनसैव बाह्योपादानकारणानपेक्षेण प्रवाहाख्यं सृष्टवान् । मनसः सृष्टिकर्तृत्वं सर्वस्यापि मनोजन्यत्वं श्रुतिराह 'असतोऽधि मनोऽसृजत, मनः प्रजापतिमसृजत, प्रजापतिः प्रजा असृजत, तद्वा इदं मनस्येव परमं प्रतिष्ठित' मिति, 'मनसो ह्येव खल्विमानि भूतानि जायन्ते,' 'मनसो वशे सर्वमिदं बभूव' 'कामस्तदग्रे समवर्ततताधी'त्यादि ज्ञेयम् । एवं कारणभेदान्न सर्गैक्यम् । मर्यादासर्गमाह **वचसेति** । वाण्या मूलभूतवागिन्द्रियेण वेद एव मार्गस्तं सृष्टवान् । हिशब्दः पुराणादिप्रसिद्ध्यर्थः । पुष्टिसर्गमाह **पुष्टिमिति** । साक्षादव्यवहितस्वरूपेणेत्यर्थः । इतिनिश्चयः । 'फलमत उपपत्ते'रित्यादिनेश्वर एव शुभाशुभफलदातेति सिद्धम् ॥ ९ ॥

तत्र मार्गत्रये केन रूपेण कुत्र फलदानमिति संशये निश्चितमाह **मूलेच्छात इति** ।

**मूलेच्छातः फलं लोके वेदोक्तं वैदिकेऽपि च ।**
**कायेन तु फलं पुष्टौ भिन्नेच्छातोऽपि नैकता ॥ १० ॥**
**'तानहं द्विषतो' वाक्याद्भिन्ना जीवाः प्रवाहिणः ।**
**अत एवेतरौ भिन्नौ सान्तौ मोक्षप्रवेशतः ॥ ११ ॥**
**तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः ।**
**भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत् ॥ १२ ॥**

लोके प्रवाहाख्ये मार्गे, मूलेच्छा पुष्टिमर्यादानिरिक्तसाधनसाध्यफलभावनेच्छा,

१. स्वरूपं स्यादिति पाठः । २. पुष्टिमार्गीययोरिति पाठः ।

यथा 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इति । वैदिके मार्गे वेदोक्तं तत्तत्काण्डाभिनिविष्टस्य तत्तदनुरूपं स्वर्गादिकं फलं तत्तत्साधनसापेक्षेच्छात इत्यर्थः । कायेन साक्षात् स्वरूपेण सच्चिदानन्दविग्रहेण । स्वरूपमात्रनिष्ठलीलाभिनिविष्टभक्तभावसापेक्षेच्छातः फलं पुष्टावित्यर्थः । भिन्ना इति । दैवाद्भिन्ना आसुरा इत्यर्थः, 'द्वौ भूतसर्गौ' इत्युक्तत्वात् । उक्तरीत्या पुष्टेर्धर्मिमात्रनिष्ठत्वेनेतरापेक्षयाभ्यर्हितत्वं ज्ञेयम् । अत एवेति । यत उक्तरीत्यान्योन्यं लक्षणाप्रवेशाद्वैलक्षण्यमत एव इतरौ मर्यादाप्रवाहौ पुष्टेः परस्परं च भिन्नौ । अन्तपदेन पर्यवसानमुच्यते । तेन सान्तौ अन्तसहितौ । कस्य कुत्रेत्याकाङ्क्षायां मोक्षप्रवेशतः मोक्षात् प्रवेशाच्चेत्यर्थः । प्रवेशपदेन प्राकृतो लयो विवक्षितो, न मोक्षः । तत्र वैदिकस्य मोक्षे पर्यवसानम्, प्रवाहस्य (प्रकृतौ) लय इति विवेकः । यथा द्वयोः सान्तत्वम्, न तथा पुष्टेः, मोक्षोत्तरकालमपि विद्यमानत्वात् । अत एवोक्तं 'आत्मारामाश्च मुनयः' इत्यादौ । यतो मुक्तानामपि अधिकारो भक्तौ । अत एव तन्मार्गीया जीवाः भिन्नाः, ब्रह्माण्डादपि बहिर्भूताश्चेत्, किं वाच्यं मर्यादाप्रवाहातिरिक्तत्वे । अत एव वाराहेप्युक्तम्, 'भिन्नैव काचित् सा सृष्टिर्विधातुर्व्यतिरेकिणी'ति । एवंविधपुष्टिस्थजीवानां सर्गो भगवता स्वात्मभजनार्थमेव कृत इति सङ्गच्छते, नत्वन्यथापीत्यर्थः ॥ १२ ॥

एवंविधभक्तानां सर्वांशेन भगवत्साम्यमाह स्वरूपेणेति ।

> स्वरूपेणावतारेण लिङ्गेन च गुणेन च ।
> तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वा ॥ १३ ॥
> तथापि यावता कार्यं तावत्तस्य करोति हि ।

स्वरूपमन्तरात्मस्वरूपम् । यथा काष्ठं वह्निसाद्भवति, एवं भक्ता अपि स्वरूपैकनिष्ठास्सन्तस्तदभिनिविष्टास्तदात्मत्वमेवाभिपद्यन्ते । अत एवोक्तं 'यो यच्छ्रद्धः स एव सः' इति । यथा भगवदवतारो धर्मसंरक्षणार्थम्, तद्विरुद्धोत्सादनार्थं च, एवं भक्तानामपि अवतारो जीवोद्धारार्थमेवेत्यवतारेणापि साम्यम् । लिङ्गं वेषस्तद्विहानि सर्वाण्यपि । तद्यथा । 'तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् । पीताम्बरं पुष्करमालिन' मित्यादि । गुणाः पतितपावनत्वादि, भगवच्चेष्टितान्यपि विज्ञेयानि । तथापीति । एवं सर्वांशेनान्यूनत्वेपि यावता न्यूनत्वादिना स्वस्मरणसिद्धिः, तावदेव तस्य स्वापेक्षया सेवकत्वसिद्ध्यर्थमुभयरसार्थं च तारतम्यं करोति । अत एवेदमपि सङ्गच्छते, 'नोद्धवोण्वपि मन्न्यूनः,' 'मद्भक्तपूजाभ्यधिके'ति, 'न पारयेहं निरवद्यसंयुजा' मित्यादि । 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह' मित्यादौ प्रसिद्धार्थो हिशब्दः ॥ १३ ॥

> ते हि द्विधा शुद्धमिश्रभेदान्मिश्रास्त्रिधा पुनः ॥ १४ ॥
> प्रवाहादिविभेदेन भगवत्कार्यसिद्धये ।

ते हीति । ते पूर्वोक्तास्त्रयोपि मार्गा द्वेधा द्विप्रकारकाः, ये मार्गान्तरसंवलितास्ते मिश्राः, ये पुनस्तन्मात्रास्ते शुद्धाः । मिश्रणमपि प्रत्येकं त्रिभिस्त्रयाणामपीत्येकैकशस्त्रिप्रकाराः । एवं भेदानां प्रयोजनं किमित्याकाङ्क्षायां भगवत्कार्यसिद्धिरेवेति मतम् । तच्च कार्यं रमणरूपमेव । 'क्रीडाभाण्डमिदं विश्वम्,' 'एकाकी स न रमत' इत्यादौ प्रसिद्धम् ॥ १४½ ॥

पुष्टेर्भेदानाह पुष्टेति ।

**पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारताः ॥ १५ ॥**
**मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णातिदुर्लभाः ।**

पुष्टिस्थास्तु पूर्वमनुगृहीता एव भवन्ति । पुनरनुग्रहान्तरं यदा तेषु प्रविशति, तदा ते पूर्वपुष्ट्यतिरिक्तपुष्टिसद्भावात् पुष्ट्या विमिश्रा भवन्ति । तल्लक्षणं सर्वज्ञा इति । एवंविधत्वं प्रह्लादादौ प्रसिद्धम् । प्रवाहेण मिश्रिताः लोकवेदक्रियारता भवन्तीति तेषामेतल्लक्षणम् । मर्यादया मिश्रा गुणज्ञाः भगवन्माहात्म्ययाथातथ्यज्ञा इति लक्षणम् । प्रेम्णा स्वरूपैकनिष्ठा इति लक्षणम् । ते शुद्धपुष्टिमार्गीयास्तेऽत्यन्तदुर्लभा एवेत्यर्थः ॥ १५½ ॥

**एवं सर्गस्तु तेषां हि फलं त्वत्र निरूप्यते ॥ १६ ॥**
**भगवानेव हि फलं स यथाविर्भवेद्भुवि ।**
**गुणस्वरूपभेदेन तथा तेषां फलं भवेत् ॥ १७ ॥**

एवमिति । उक्तप्रकारेण तेषां त्रयाणां सर्गः सहेतुकः निरूपित इति शेषः । अत्र शुद्धमिश्रपुष्टौ फलं निरूप्यते भगवानिति । गुणाः ऐश्वर्यादयो धर्माः, स्वरूपं धर्मी । भवन्ति भावा अस्मिन्निति भूरन्तःकरणं विवक्षितम्, तदुपलक्षितहृदयदेशो वा । तेनायमर्थः । भगवानैश्वर्यादिषड्गुणोपेतो यस्य भक्तस्यान्तःकरणे यथा येन भावेन प्रकटो भवति, तत्प्रियं कर्तुं तत्स्वरूपमेव फलमित्यर्थः । 'ये यथा मां प्रपद्यन्ते तांस्तथैवे'ति प्रतिज्ञानात् ॥ १७ ॥

**आसक्तौ भगवानेव शापं दापयति क्वचित् ।**
**अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय हि ॥ १८ ॥**
**न ते पाषण्डतां यान्ति न च रोगाद्युपद्रवः ।**
**महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे ॥ १९ ॥**
**भगवत्तारतम्येन तारतम्यं भजन्ति हि ।**
**लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नान्यथा ॥ २० ॥**
**वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः ।**
**सम्बन्धिनस्तु ये जीवाः प्रवाहस्थास्तथापरे ॥ २१ ॥**

**चर्षणीशब्दवाच्यास्ते ते सर्वे सर्ववर्त्मसु ।**
**क्षणात् सर्वत्वमायान्ति रुचिस्तेषां न कुत्रचित् ॥ २२ ॥**
***तेषां क्रियानुसारेण सर्वत्र सकलं फलम् ।***

आसक्ताविति । पुष्टिस्थस्य अहङ्कारे तत्पूर्वककार्ये, अथवा लोके भजनविरुद्धे आसक्तौ सत्यां तद्दोषपरिहाराय, अत एव तन्मार्गस्थापनाय तत्र स्थिरीकरणाय ब्राह्मणादिद्वारा भगवानेव क्वचित्, न सर्वत्र, शापमन्तरायापादकं दापयति । पुनरेवं कदापि न कुर्यामिति यथा तस्य मनसि सततमनुवर्तेत । यथेन्द्रद्युम्नस्यागस्त्यमुखाद्गजेन्द्रत्वम् । एवं शिक्षाकरणे भक्ताः पाषण्डतां न यान्ति । नापि तज्जनितापराधभोगाय रोगाद्युपद्रवस्तत्पीडानुभवः । एवंविधाः शास्त्रोल्लङ्घनाद्भवन्ति । ये पुनर्महानुभावाः नारदादयस्ते प्रायेण बाहुल्येन, भगवदधीनत्वात् प्रायिकत्वोक्तिः, शुद्धत्वहेतवे देहान्तःकरणादिशुद्ध्यर्थं शास्त्रं भगवदीयं गीताभागवतादिकं भजन्ति सेवन्ते सततमवगाहन्त इत्यर्थः । किंच । येषु येषु भक्तेषु यथा यथा भगवदाविर्भावः, तेन तारतम्येन स्वस्मिन् तरतमभावमपि भजन्ते स्वीकुर्वन्ति, न तु स्वस्मिन्नाधिक्यं सद्भ्युद्भावयन्ति । सर्वदा भगवत्सम्बन्धिषु नम्रा एव भवन्तीत्यर्थः । तेषु महानुभावेषु यल्लोकवेदकुलप्रासाचारदर्शनमात्रेण लौकिकत्वं वैदिकत्वं च व्यवह्रियते, तत्कापट्यात् अज्ञानादेव । नान्यथा अन्यप्रकारेण नेत्यर्थः । वैष्णवत्वं तेषु सहजं नैसर्गिकम्, तल्लक्षणसद्भावात् । वैष्णवलक्षणं श्रीभागवतविष्णुपुराणादितोऽवगन्तव्यम् । ततः महानुभावेभ्यः अन्यत्र अन्येषु विपर्ययः कापट्याद्वैष्णवत्वम् । लौकिकत्वं वैदिकत्वं सहजमित्यर्थः । सम्बन्धिनस्त्विति । ये जीवाः सम्बन्धिनो भगवद्विभूत्यंशलेशसम्बन्धवन्तस्तथापरे अन्ये केवलप्रवाहस्थाश्च ये ते सर्वे चर्षणीशब्देनोच्यन्ते, परिभ्रमणस्वभावात् । अत एव ते सर्वेऽपि क्षणादेव यादृशः सङ्गः, तादृशा एव सर्ववर्त्मसु प्रविष्टाः सन्तः सर्वत्वं तत्तन्मार्गानुसारित्वं यान्ति । तेषां रुचिरत्याग्रहः कुत्रापि नास्ति । अत एव तेषां क्रियानुसारेणैव सर्वत्र यत्र यदा रुचिस्तत्र वर्तमानानां फलं सकलं, कलया सह, लेशमात्रं, न पूर्णमित्यर्थः ॥ २२½ ॥

प्रवाहस्थान्निरूपयन्ति प्रवाहस्थानिति ।

**प्रवाहस्थान् प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतान् ॥ २३ ॥**
**जीवास्ते ह्यासुराः सर्वे 'प्रवृत्तिं चे'ति वर्णिताः ।**
**ते च द्विधा प्रकीर्त्यन्ते ह्यज्ञदुर्ज्ञविभेदतः ॥ २४ ॥**
**दुर्ज्ञास्ते भगवत्प्रोक्ता ह्यज्ञास्ताननु ये पुनः ।**

पूर्ववदेव स्वरूपं जीवात्मा, अङ्गं देहः, क्रिया कृतिः, एतैः युतान् विशि- नित्यर्थः । ते प्रवाहमार्गानुसारिणो ये जीवास्ते आसुरा ज्ञेयाः, 'प्रवृत्तिं च निवृत्तिं च ज

1. भोगार्थं पदं नष्टः ।

न विदुरासुरा' इति वचनात् । ते च द्विप्रकारकाः । एके अज्ञाः, स्वतः किमपि न जानन्ति, आसुराणां दुष्टाचरणं दृष्ट्वा स्वयमाचरन्ति । एके पुनर्दुर्ज्ञाः, दुष्टमात्मपातकारणमेव कर्तुं जानन्ति, नतु भगवत्प्राप्तिसाधनमपि । ते च भगवता प्रोक्ताः 'प्रवृत्तिं च निवृत्तिं चे'त्यादिना ॥ २४½ ॥

प्रासङ्गिकमाह प्रवाहेऽपीति ।

प्रवाहेऽपि समागत्य पुष्टिस्थस्तैन युज्यते ॥ २५ ॥
सोपि तैस्तत्कुले जातः कर्मणा जायते यतः ॥ २५½ ॥

पुष्टिस्थो यदा दैवयोगादासुरसंज्ञात्तन्मार्गे प्रविशति, तदा तेन भावेन युज्यते लिप्तो भवति । तद्वस्त्रमालिन्यवत् प्रक्षालनस्थानीयभगवद्भक्तभाविसंसर्गाच्छुध्यत्येवेति मन्तव्यम् । अन्यथा विरोधः स्यात् । सोपि तद्धर्मस्तेषां कुले जात उत्पन्नो भूत्वा पश्चात् स्वीयपुष्टिसंस्कारोद्बोधे सति तदर्थमेव यतिष्यत इति शेषः । जन्ममात्रं तु प्रारब्धकर्माधीनत्वादनिवार्यम् । अत एव भगवताप्युक्तं 'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यत' इत्यादिना । इत ऊर्ध्वं ग्रन्थत्रुटिः ॥ २५½ ॥

पुष्टिप्रवाहमर्यादाः पृथक् पृथगुदीरिताः ।
कृतिना रघुनाथेन श्रीवल्लभपदेप्सुना ॥ १ ॥

इति श्रीवल्लभनन्दनचरणैकशरणश्रीरघुनाथानां कृतौ पुष्टिप्रवाहमर्यादाविवरणं सम्पूर्णम् ।

---

१. नेतरर्थात् । २. उक्तं च, 'प्रवाहो लौकिको धर्मो मर्यादा वेद उच्यते । कृष्णे प्रेम च वै पुष्टिर्मार्गभेदास्त्रयोऽत्र हि ॥' इत्यभियुक्तम् ।

श्रीकृष्णाय नमः ।

# पुष्टिप्रवाहमर्यादा ।

---

## श्रीकल्याणरायकृतटीकासमेता ।

श्रीविट्ठलेश्वरं नत्वा स्वेषां सफलसिद्धये ।
पुष्टिप्रवाहमर्यादाविवृतिः क्रियते मया ॥ १ ॥

लोके कति मार्गाः कीदृशाः किं च तेषां फलमिति जिज्ञासूनां स्वकीयानां ज्ञानार्थं श्रीवल्लभाचार्याः पुष्टिप्रवाहमर्यादा विशेषेण वक्तुं प्रतिजानते ।

**पुष्टिप्रवाहमर्यादा विशेषेण पृथक् पृथक् ।**
**जीवदेहक्रियाभेदैः प्रवाहेण फलेन च ॥ १ ॥**

पुष्टिर्नाम भगवदनुग्रहः फलप्रापकत्वात् फलार्थं मृग्यत इति स एको मार्गः । प्रवाहो नाम जन्मादिप्रवाहरूपः लौकिकफलप्रापकत्वात् सोपि मार्गः । मर्यादा वेदोक्तः कर्ममार्गः । एता विशेषेण व्यावर्तकधर्मेण पृथक् पृथक् वक्ष्यामि । अत्र के व्यावर्तका धर्मा इत्याकाङ्क्षायामाहुः । भक्तिमार्गे जीवा भगवदनुगृहीता भिन्नाः । तेषां देहाः भगवच्चरणरेण्वादिनिष्पादिता भिन्नाः । तेषां क्रिया भगवत्परा भिन्नाः । एवं प्रवाहासक्ताः संसारिणो जीवा भिन्नाः, तेषां देहा अपि संस्कारादिरहिता भिन्नाः, तेषां क्रिया लौकिक्यो भिन्नाः । मर्यादामार्गे दैवा जीवा भिन्नाः, तेषां देहाः संस्कृता भिन्नाः, तेषां वेदोक्ताः क्रिया भिन्नाः । प्रवाहासक्तत्वेन प्रवाह एव प्रावाहिकाणां भेदकः । 'मद्भक्ता यान्ति मामपी'त्यादिवाक्याद्भक्तिमार्गे पुरुषोत्तमप्राप्तिः फलम् । मर्यादामार्गे वेदोक्तकर्मभिर्निःकामानां तत्त्वज्ञानद्वारा अक्षरप्राप्तिः फलम् । सकामानां क्षयिष्णु स्वर्गादिः फलम् । प्रवाहस्थानां स्वकर्मानुसारि जन्मादिः फलम् । भिन्नैरेतैर्मार्गा अपि भिन्ना भवन्तीत्यर्थः ॥ १ ॥

**वक्ष्यामि सर्वसन्देहा न भविष्यन्ति यच्छ्रुतेः ।**
**भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चयः ॥ २ ॥**

कथनस्य प्रयोजनमाहुः । यस्योक्तस्य श्रवणात् मार्गतत्साधनफलेषु सन्देहा न भविष्यन्तीत्यर्थः । मार्गसत्त्वे प्रमाणानि वक्तुं प्रथमं पुष्टिसत्त्वे प्रमाणमाहुः । 'ते नाधीतश्रुतिगणा' इत्यादिना निःसाधनत्वेन निरूपितानां व्रजस्थितानां 'केवलेन हि भावेने'त्यादिवाक्यैः स्नेहनिरूपणात् भक्तिरूपस्य मार्गस्य कथनात् भक्तिकारणत्वेन पुष्टिर्निश्चीयत इत्यर्थः । ननु दाननतादिभिः भक्तेः श्रूयमाणत्वात् कथं भक्तिकारणत्वेन पुष्टिर्निश्चीयत इति चेत्, न, अनुग्रहव्यापारत्वेनैव दानादीनां भक्तिसाध-

१. रायव्येति पाठः । सवत्सिद्धय इति पाठः स्यात् ।

करत्वात् । ननु कथमेवम्? इत्थम् । पुष्टेर्भगवदनुग्रहरूपत्वेन भक्तेर्भगवदनुग्रहैकसाध्यत्वान्निःसाधनोनुग्रहः पुष्टिरित्युच्यते । साधनमिश्रभावात् साधनानुग्रहो भक्तिमार्गे मर्यादेत्युच्यते । अत एवोक्तमाचार्यैः **श्रीभागवततत्त्वदीपे** 'पुष्टिरत्र द्विरूपा हि मर्यादापुष्टिभेदतः । विश्वरूपस्तु मर्यादा द्वितीयो वृत्र उच्यत' इति । तेन स ससाधनानुग्रह एव दानादिसाधनद्वारा भक्तिं जनयतीति नानुपपन्नं किञ्चित् । एतदेवोक्तं भक्तिहंसे श्रीमत्प्रभुचरणैः 'वरणे चास्ति प्रकारद्वयं मर्यादापुष्टिभेदेने'ति । प्रावाहिकभक्तिस्तु भक्तस्य फलार्थं भगवति सापेक्षत्वमात्रेण स्नेहाभावेन भक्तिमार्गे किञ्चिद्धर्मसाम्येन प्रावाहिकभक्तौ भक्तिपदप्रयोगात् पूजातुल्येति । तेन पुष्टिभक्तिरेव मुख्या । परमानुरागरूपत्वात् । 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रात् । मर्यादाभक्तिस्तु भक्तिदेशीया परमानुरागाभावात् । प्रावाहिकभक्तिस्तु सापेक्षतारूपेति पूजातुल्या, परं भक्तिमार्गसम्बन्धाद्भक्तिरूपेति । एतदेवोक्तं भक्तिहंसे 'भक्तिमार्गीयभक्तकृत(भक्ति)साम्प्रदायिकदीक्षापूर्वकं मोक्षसाधनत्वेन क्रियमाणः श्रवणादिः प्रावाहिकी भक्तिरुच्यत' इति । मर्यादामार्गस्थं ज्ञानमार्गस्थं वा जीवं यदि भगवाननुगृह्णाति, तदा स पुष्टिमार्गं प्राप्य तन्मार्गीयं फलं प्राप्नोति । एतदेवोक्तं सिद्धान्तमुक्तावल्यां 'उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यती'ति । तेनानुग्रहसाध्या भक्तिरिति सिद्धम् । अतः सुष्ठूक्तं 'भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चय' इति ॥ २ ॥

प्रवाहसत्त्वे प्रमाणमाहुः ।

**'द्वौ भूतसर्गा'वित्युक्तेः प्रवाहोपि व्यवस्थितः ।**
**वेदस्य विद्यमानत्वान्मर्यादापि व्यवस्थिता ॥ ३ ॥**

'द्वौ भूतसर्गौ लोकेस्मिन् दैव आसुर एव चे'ति वाक्यात् प्रवाहोपि सिद्धः । मर्यादासत्त्वे प्रमाणमाहुः । काण्डद्वयात्मकस्य वेदस्य श्रूयमाणत्वान्मर्यादामार्गोपि सिद्धः ॥

भक्तेः पुष्टिसाधकत्वमुक्त्वा दुर्लभत्वमाहुः ।

**कश्चिदेव हि भक्तो हि 'यो मद्भक्त' इतीरणात् ।**
**सर्वत्रोत्कर्षकथनात् पुष्टिरस्तीति निश्चयः ॥ ४ ॥**

कश्चिदेव हि भक्तो भवति, न सर्वः । अन्यथा भगवान् 'यो मद्भक्त' इति न वदेत् । भक्तेः पुष्टिसाधकत्वमुक्त्वा भक्तिभक्तयोरुत्कर्षस्यापि पुष्टिसाधकत्वमाहुः । सर्वत्र गीताश्रीभागवतादौ 'भक्त्या मामभिजानाति,' 'भक्त्या त्वनन्यया शक्य' इत्यादि 'यत्कर्मभिर्यत्तपसे'त्यारभ्य 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसे'त्यन्तेन । 'भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते' । 'मय्यनन्ते गुणे ब्रह्मण्यानन्दानुभवात्मनि । नालं द्विजत्व'मित्युपक्रम्य 'प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बन'मित्यन्तेन । 'मय्यावेश्य'इत्यारभ्य 'ते मे युक्ततमा मता' इत्यन्तेन, 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्,' 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति,' 'ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः,' 'ये त्यक्तलोकधर्मांश्च मदर्थे तान् बिभर्म्यहम्', 'अहं भक्तपराधीन'

1. प्रवाह[illegible] पाठः ।

इत्युपक्रम्य, 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे'त्यन्तेन, 'एताः पर'मित्यारम्य, 'पुनाति भुवनत्रय'मिति श्लोकषट्केन च उत्कर्षकथनात् पुष्टिरस्तीति निश्चीयत इत्यर्थः। नहि भक्तिर्भक्तत्वमेतादृशोर्थो भगवदनुग्रहं विना प्राप्यते ॥ ४ ॥

पुष्टिमार्गीयस्य प्रवाहमर्यादामार्गस्थाभ्यां भेदमाहुः।

**न सर्वोतः प्रवाहाद्धि भिन्नो वेदाच्च भेदतः।**
**'यदा यस्ये'ति वचनान्नाहं वेदै'रितीरणात् ॥ ५ ॥**

'यदा यस्यानुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वेदे च परिनिष्ठिता'मिति वाक्यार्थं भगवाननुगृह्णाति, स पुष्टिमार्गीयो भवति, न सर्वः। अतः प्रवाहाद्भेदः। हि युक्तोयमर्थस्ततो वैलक्षण्यात्। 'नाहं वेदै'रित्यारभ्य 'परन्तपे'त्यन्तेन अनन्यभक्त्यैव भगवान् ज्ञातुं द्रष्टुं शक्यः, नान्यसाधनैरिति भेदतः वैलक्षण्यात् वेदाच्च भिन्नः, वेदोक्तमर्यादामार्गस्थादपि पुष्टिमार्गस्थभक्तो भिन्न इत्यर्थः ॥ ५ ॥

**मार्गैकत्वेपि चेदन्त्यौ तनू भक्त्यागमौ मतौ।**
**न तद्युक्तं सूत्रतो हि भिन्नो युक्त्या हि वैदिकः ॥ ६ ॥**

कस्यचित्पूर्वपक्षं निराकुर्वन्ति। तथाहि। ननु प्रवाहमर्यादामार्गयोरपि व्यवहारशुद्धिसाधकत्वेन भक्त्युपयोगात् अङ्गाङ्गिभावेनैको भक्तिमार्ग एवास्त्विति चेत्, न। मार्गैकत्वे स्वीक्रियमाणे प्रवाहमर्यादामार्गाङ्गत्वेन भक्तिफलप्रापकत्वेन तव सम्मतौ, तन्न युक्तम्। यदि प्रवाहमर्यादामार्गयोर्भक्तिफलेन फलवत्त्वं स्यात्, तदा तदङ्गत्वं स्यात्, तदेवाङ्गं भवति यत्प्रधानफलेन फलवद्भवति, न स्वतः, प्रयाजादिवत्, 'फलवत्सन्निधावफलं तदङ्ग'मित्यङ्गलक्षणात्। अत्र भक्तिमार्गे 'तन्निष्ठस्य मोक्षोपदेशा'दिति व्याससूत्रेण भगवत्परस्य मोक्षः फलत्वेनोच्यते। तथा भक्तिमीमांसायां शाण्डिल्यसूत्रं 'तत्संस्थस्यामृतत्वोपदेशा'दिति। अस्यार्थस्तु। तस्मिन्नीश्वरे यस्य भक्तिर्यस्य तस्यामृतत्वं फलमुपदिश्यते। 'ब्रह्मसंस्थोऽमृतत्वमेती'ति। एतद्विचारेण भगवत्प्राप्तिफलकत्वात्। प्रवाहमर्यादामार्गयोः जन्मादिसंसारस्वर्गादिफलकत्वात्। परम्परया निमित्तकारणत्वेन देशादिवदुपयोगात्तयोर्न भक्त्यङ्गत्वमिति नाङ्गाङ्गिभावेन मार्गैकत्वसिद्धिः। युक्तिस्तु यदि मर्यादामार्गो भक्तिमार्गोभिन्नः स्यात्, तदा भक्तिमार्गीयमेव फलं दद्यात्। स्वर्गादिफलदातृत्वाद्वैदिको मार्गो भिन्नः। अलौकिकफलदातृत्वाभावात् प्रवाहो नोक्तः ॥ ६ ॥

पुष्टिमार्गस्य भेदज्ञानार्थं तत्रत्यानां वैलक्षण्यमाहुः।

**जीवदेहकृतीनां च भिन्नत्वं नित्यता श्रुतेः।**
**यथा तद्वत्पुष्टिमार्गे द्वयोरपि निषेधतः ॥ ७ ॥**

यथा श्रुतेर्वेदस्य लौकिकवाक्यसमानत्वेन गृह्यमाणस्यापि नित्यता, 'स्वयंभूरेष भगवान् देवो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः।' 'वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम' इत्यादिवाक्यैर्लौकिकवाक्यभिन्नत्वं च, तथ

१. निरोधस्था।

पुष्टिमार्गे 'जयति जननिवास' इत्यादिवाक्यैर्लीलाख्यानां जीवदेहकृतीनां नित्यत्वं भिन्नत्वं चेत्यर्थः । अथवा । यथा श्रुतेः 'ते ते धामान्युश्मसि गमध्यै गावः' इति वेदात् लीलाख्यानां जीवदेहकृतीनां नित्यता भिन्नत्वम्, तद्वत् पुष्टिमार्गेऽपि लीलान्तर्गतौ जीवदेहकृतीनां नित्यता भिन्नत्वं च भवतीत्यर्थः । द्वयोरपि निषेधत इति । 'स जहाति मतिं लोके वेदे च परिनिष्ठिता'मितिवाक्येन भगवदनुग्रहानन्तरं प्रवाहमर्यादामार्गयोर्निषेधात् प्रवाहमर्यादामार्गस्थयोर्देहादीनां भिन्नत्वं नित्यता च न भवतीत्यर्थः ॥ ७ ॥

**प्रमाणभेदाद्भिन्नो हि पुष्टिमार्गो निरूपितः ।**

अतः कारणात् । पुष्टिमार्गे भगवाननुग्रहेण पुष्टिमार्गस्थं यथा ज्ञापयति, यथा प्रेरयति, तथा स प्रवर्तते । अतः पुष्टिमार्गे भगवान् प्रमाणम्, भगवदनुग्रहश्च । तस्मात् प्रमाणभेदादपि पुष्टिमार्गो भिन्न इत्यर्थः ॥ ७½ ॥

**सर्गभेदं प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतम् ॥ ८ ॥**

त्रयाणां सर्गभेदमाहुः । जीवदेहक्रियासहितं भिन्नं सर्गं प्रवक्ष्यामीत्यर्थः ॥ ८ ॥

**इच्छामात्रेण मनसा प्रवाहं सृष्टवान् हरिः ।**
**वचसा वेदमार्गं हि पुष्टिं कायेन निश्चयः ॥ ९ ॥**

त्रयाणां सर्गाणां भेदे किं निमित्तमित्याकाङ्क्षायामाहुः । इच्छामात्रेण सामान्येच्छया, मल्लादियुद्धवत् न तु स्वयं रन्तुम्, हरिः मनसा प्रवाहं सृष्टवान् । 'सोऽकामयत बहु स्यां प्रजायेये'तिश्रुतेः वचसा वेदवाण्या वेदमार्गं सृष्टवान् । कायेन स्वरूपेण पुष्टिमार्गस्थान् सृष्टवान् । 'स वै नैव रेमे, तस्मादेकाकी न रमते, स द्वितीयमैच्छत्, स हैतावानास'ेति श्रुतेः । अत एव वाराहपुराणे 'भिन्नैव काचित् सा सृष्टिर्विधातुर्व्यतिरेकिणी'ति । अथवा । स्वयमाविर्भूय भक्तैः स्वसेवां कारयित्वा तन्मार्गं प्रकटितवानित्यर्थः ॥ ९ ॥

त्रयाणां मार्गाणां फलभेदादपि भेदमाहुः ।

**मूलेच्छातः फलं लोके वेदोक्तं वैदिकेऽपि च ।**
**कायेन तु फलं पुष्टौ भिन्नेच्छातोऽपि नैकधा ॥ १० ॥**

मूलं सृष्टिकारणं ब्रह्म, तस्य सर्गादौ अस्यानेनैवमेवं करिष्यामीतीच्छा, तत एव प्रवाहस्थानां फलमित्यर्थः । वैदिके कर्ममार्गे वेदोक्तं स्वर्गापवर्गरूपमपि फलं भवतीत्यर्थः । पुष्टौ पुष्टिमार्गे कायेन स्वरूपेण फलं भवतीत्यर्थः । तदुक्तं 'गोपीभिः स्तोभितोऽनृत्य'-दित्यादिना । पुष्टौ प्रवाहमर्यादाभ्यां भिन्नेच्छातोऽपि जातं फलं कौमारलीलादिरूपेणानेकविधं भवतीत्यर्थः ॥ १० ॥

**'तानहं द्विषतो' वाक्याद्भिन्ना जीवाः प्रवाहिणः ।**
**अत एवेतरौ भिन्नौ सान्तौ मोक्षप्रवेशतः ॥ ११ ॥**

प्रमाणपूर्वकं प्रवाहस्थान् जीवान् भिन्नानाहुः । भूतसर्गे दैवजीवेषु भगवदनुगृहीता

1. तत ।

भक्तिमार्गीया भवन्ति, अन्ये दैवा एव कर्मिणः वेदोक्तफलभाजो भवन्ति । अवशिष्टा जीवाः 'प्रवृत्तिं च निवृत्तिं च'त्यारभ्य 'प्रद्विषन्तोऽभ्यसूयका' इत्यन्तेन निरूपितानां 'तानहं द्विषतः क्रूरा'नित्यारभ्य 'ततो यान्त्यधमां गतिं' मित्यन्तेनाधममतिमत्त्वेन निरूपणात् प्रवाहस्था आसुराः पूर्वोक्तेभ्यो भिन्ना इत्यर्थः । अत एवेतरौ पुष्टिमार्गीयमर्यादामार्गीयजीवौ एभ्यो भिन्नौ । तत्र हेतुः । सान्तौ अन्तः फलपर्यवसानं तत्सहितौ, कुतः, मोक्षप्रवेशात इति । मर्यादामार्गीयस्य मोक्षात् पुष्टिमार्गीयस्य लीलाप्रवेशात इत्यर्थः ॥

तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः ।
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत् ॥ १२ ॥

इत्युक्तपादपि पुष्टिमार्गीयाणां भेदमाहुः । यस्मात् सर्वोत्कृष्टास्तस्मात् पुष्टिमार्गीयजीवास्तेभ्यो भिन्ना एवेत्यर्थः । विपक्षे बाधकं तर्कमाहुः भगवद्रूपसेवार्थमिति । यदि पुष्टिमार्गीयाः सर्वोत्कृष्टा न स्युः, तदा साक्षात्पुरुषोत्तमस्वरूपसेवार्थं तत्सृष्टिर्न भवेत् ॥

शुद्धपुष्टिमार्गीयाणां सेवार्थं सहकारियोग्यतामाहुः ।

स्वरूपेणावतारेण लिङ्गेन च गुणेन च ।
तारतम्यं न स्वरूपे देहे वा न क्रियासु वा ॥ १३ ॥

लीलासृष्टेर्भगवद्रूपत्वात् स्वरूपसाम्यम् । यथा भगवदवतारः प्रादुर्भावो न जीववज्जन्म, तथा मुख्यभक्तानामपीत्यवतारसाम्यम् । अलौकिकत्वज्ञापकस्य भगवता समं नृत्यादिसामर्थ्यस्य विद्यमानत्वात् चिह्नसाम्यम् । गुणाः सौन्दर्यादयस्तत्साम्यं स्पष्टमेव । तेन तासां क्रियासु स्वरूपे देहे वा न तारतम्यमित्यर्थः । भगवतो लीलान्तःपातिनां भक्तानां च स्वरूपादिभिस्तुल्यत्वम्, न तूत्कर्षापकर्षाविति श्लोकार्थः ॥ १३ ॥

तथापि भगवान् स्वार्थं तारतम्यं करोतीत्याहुः ।

तथापि यावता कार्यं तावत्तस्य करोति हि ।

स्वरूपादेस्तुल्यत्वेऽपि भगवान् स्वस्य कार्यं रमणं स्वस्य भक्तानां च यावता तारतम्येन सिध्यति, तावत्तारतम्यं प्रकटयति । हि युक्तोयमर्थः । उत्कर्षापकर्षवैचित्र्यैर्विना सम्यग्रमणासिद्धेः । अत एव बाललीलादयो युक्तरूपा भवन्तीति दिक् ॥ १३½ ॥

एवं विशेषलीलायास्साधनानि प्रकारं चोक्त्वा सामान्यलीलायाः साधनानि प्रकारं चाहुः ते हीत्यारभ्य, भवेदित्यन्तेन ।

ते हि द्विधा शुद्धमिश्रभेदान्मिश्रास्त्रिधा पुनः ॥ १४ ॥
प्रवाहादिविभेदेन भगवत्कार्यसिद्धये ।
पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारताः ॥ १५ ॥
मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णातिदुर्लभाः ।
एवं सर्गस्तु तेषां हि फलमत्र निरूप्यते ॥ १६ ॥
भगवानेव हि फलं स यथाविर्भवेद्भुवि ।
गुणस्वरूपभेदेन तथा तेषां फलं भवेत् ॥ १७ ॥

ते पूर्वोक्ताः त्रयोपि मार्गाः द्विधा द्विप्रकाराः शुद्धमिश्रभेदात् । अन्यमार्गधर्मसंवलिता मिश्राः, तदसंवलिताः शुद्धाः । मिश्रा अपि परस्परं त्रयाणां मिश्रणेन प्रत्येकं त्रिप्रकाराः । एवं भेदानां प्रयोजनमाहुः भगवत्कार्यसिद्धय इति । 'क्रीडाभाण्डमिदं विश्व'मित्यादिवाक्यैः विश्वस्य क्रीडार्थत्वात् । पुष्ट्यादीनां त्रयाणां स्वतः परतः मिश्रणे ज्ञापकान् धर्मानाहुः पुष्ट्या....दुर्लभाः । पूर्वं सामान्यतोनुगृहीता विशेषानुग्रहं प्राप्ताः पुष्ट्या विमिश्राः । ते भगवदभिप्रायादिसर्वज्ञातारो भवन्ति, नारदादय इव, सर्वज्ञत्वमेव तेषां लक्षणम् । पुष्टिस्था मर्यादामिश्रिताः भगवद्धर्मज्ञातारो भवन्ति, कविप्रभृतयो नवयोगेश्वरा इव । पुष्टिस्थाः प्रवाहमिश्रिताः यत्किञ्चिद्भगवद्धर्मं ज्ञात्वा तीर्थाटनपरा भवन्ति । प्रवाहस्थाः पुष्टिमिश्रिताः भगवद्भजनानुकूलक्रियानुसारिणो भवन्ति । प्रवाहस्थाः मर्यादामिश्रिताः सत्कर्मकर्तारो भवन्ति । प्रवाहस्थाः प्रवाहमिश्रिताः केवलं लौकिककियारता भवन्ति । त एव आसुराः । मर्यादामार्गीयाः पुष्टिमिश्रिताः माहात्म्यज्ञानात् भगवत्प्रीत्यर्थं कर्मकर्तारो भवन्ति । मर्यादामार्गीयाः मर्यादामिश्रिताः स्वर्गाद्यर्थं कर्मकर्तारो भवन्ति । मर्यादामार्गीयाः प्रवाहमिश्रिताः लौकिकार्थं कर्मकर्तारो भवन्ति । प्रेम्णा स्नेहेन शुद्धाः प्रेमविषयातिरिक्तस्फूर्तिरहिताः ते शुद्धपुष्टिस्थाः । तेऽतिदुर्लभा इत्यर्थः । भगवत्कार्यसिद्धये एवंप्रकारेण तेषां सर्गो निरूपितः । हि युक्तोयमर्थः । वैचित्र्यं विना रमणासिद्धेः । तेषां फलमत्र निरूप्यते । तेषां फलमाहुः भगवानेवेति । धर्मधर्मिणोरभेदात् सर्वेषां धर्मधर्मिरूपेण भगवानेव फलं स यथा भुवि भक्तानां एद्दादौ हृदये च यथा प्रकटो भवेत् गुणस्वरूपभेदेन, भक्तानां वा गुणस्वरूपभेदेन स्वरूपैकनिष्ठानां पुष्टिमार्गीयाणां स्वरूपेण आनन्दमात्रकरपादमुखोदरादिरूपेण प्रकटो भूत्वा फलं ददाति, धर्मज्ञानादिषु धर्मादिरूपेण स्थित्वा यथा फलं ददाति, तथा तत्तत्फलं तेषां भवतीत्यर्थः । यद्वा । भगवानिति । गुणा ऐश्वर्यादयो धर्माः, स्वरूपं धर्मि । भगवानैश्वर्यादिषड्गुणयुक्तो यस्य भक्तस्यान्तःकरणे यथा येन भावेन प्रकटो भवति तन्निष्ठं कर्तुं स्वरूपमेन तस्य फलमित्यर्थः । 'ये यथा मां प्रपद्यन्ते तांस्तथैव'ेति प्रतिज्ञानात् ॥ १७ ॥

प्रमेयप्रमाणलीले तयोः प्रकारांश्चाभिधाय भक्तिमार्गविरोधं परिहर्तुं आसक्तावित्यारभ्य सार्धश्लोकत्रयेण समादधते ।

आसक्तौ भगवानेव शापं दापयति क्वचित् ।
अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय हि ॥ १८ ॥
न ते पाषण्डतां यान्ति न च रोगाद्युपद्रवः ।
महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे ॥ १९ ॥
भगवत्तारतम्येन तारतम्यं भजन्ति हि ।
वैदिकत्वं लौकिकत्वं कापट्यात्तेषु नान्यथा ॥ २० ॥
वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः ।

प्रवाहस्था ये च अदीक्षिताः, ते चर्षणीशब्दवाच्याः सर्वमार्गेषु परिभ्रमणशीलत्वात् ते सर्वधर्मेषु सर्वेषु मार्गेषु क्षणात् अल्पकालादेव तन्मार्गीयसङ्गं प्राप्य तन्मार्गधर्माचरणात् तन्मार्गीयसदृशा भवन्ति, नतु तेषां कुत्रापि रुचिः स्नेहोऽस्ति। तेषां तत्तन्मार्गीयक्रियानुरूपं कामितं फलं भवतीत्यर्थः ॥ २० ॥

लक्षणप्रमाणाभ्यामासुरान् जीवानाहुः प्रवाहस्थानित्यारभ्य श्लोकद्वयेन।

**प्रवाहस्थान् प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतान् ॥ २३ ॥**
**जीवास्ते ह्यासुराः सर्वे 'प्रवृत्तिं चे'ति वर्णिताः।**
**ते च द्विधा प्रकीर्त्यन्ते ह्यज्ञदुर्ज्ञविभेदतः ॥ २४ ॥**
**दुर्ज्ञास्ते भगवत्प्रोक्ता ह्यज्ञास्ताननु ये पुनः।**

प्रवाह एव तिष्ठन्ति स्वोदरपोषणमात्रपराः, स्वरूपदेहक्रियातत्पराः, न तु धर्मादिपराः, ते जीवा आसुरा ज्ञेयाः। ते च 'प्रवृत्तिं च निवृत्तिं चे'त्यादिना भगवता वर्णिताः। ते आसुराः द्विप्रकाराः अज्ञदुर्ज्ञभेदात्। 'प्रवृत्तिं चे'त्यादिनोक्ता दुर्ज्ञाः। तान् ये अनुसरन्ति तदुक्तकारिणो भवन्ति, ते तु अज्ञाः ॥ २४½ ॥

ननु आसुराणामपि भक्तिः श्रूयते, सा कथं सम्भवतीत्याशङ्कायां समाधानमाहुः।

**प्रवाहेऽपि समागत्य पुष्टिस्थस्तैर्न युज्यते ॥ २५ ॥**
**सोऽपि तैस्तत्कुले जातः कर्मणा जायते यतः ॥ २५½ ॥**

वस्तुतो यस्य भक्तिर्दृश्यते, स आसुरजीवो न भवति, किन्तु भगवदपराधेन भक्तापराधेन वेदादिनिन्दया वा प्रवाहेपि समागत्य प्राप्तोपि तैः प्रवाहस्थैर्न युज्यते न मिलति। तत्कुले जातोपि स पुष्टिस्थस्तैः प्रवाहस्थकुलधर्मैर्न युज्यते, न युक्तो भवति। 'न वै जनो जात्वि'ति वाक्यात्। तर्हि भक्तिमतः कथं प्रावाहिकेषु जन्मेत्यत आहुः कर्मणा जायते यत इति। यतः यस्मात् कारणात् भगवदपराधादिना प्रारब्धकर्मणा वा जायते उत्पद्यते। देहस्य कर्माधीनत्वाद्यादृशं कर्म, तादृशो देहो भवतीत्यर्थः ॥ २३ ॥

इति श्रीवल्लभाचार्यैः साधनादिविभेदतः।
मार्गाः प्रोक्ता विचार्यैषु प्रविशन्तु फलार्थिनः ॥ १ ॥
भक्त्या श्रीवल्लभाचार्यचरणाब्जयुगं प्रभून्।
प्रणम्य कृपया तेषां यत्नात्त्रर्काः सुखावहाः ॥ २ ॥
श्रीमत्कल्याणरायेण श्रीगोविन्दसुतेन हि।
पुष्टिप्रवाहमर्यादाविवृतिः कृतिना कृता ॥ ३ ॥

इति श्रीविठ्ठलेश्वरचरणकमलैकतानश्रीकल्याणरायविरचिता पुष्टिप्रवाहमर्यादाविवृतिः समाप्तिमसर्पत् ॥

१. साधु।

श्रीकृष्णाय नमः ।

# पुष्टिप्रवाहमर्यादा ।

## श्रीपीताम्बरकृतविवृतिसमेता ।

नमः श्रीवल्लभाचार्यचरणाब्जनखेन्दवे ।
पुष्टिप्रवाहमर्यादासारका येन शोभिताः ॥ १ ॥

न भेदस्ते कुत्राप्यतिरुचिर किन्तु प्रियतया
विभेदोऽतः स्वामिन् कृपय मयि दासेऽतिविधुरे ।
विभेदः केन स्यात् स्वकृतनिजपुष्टेरितरथा
प्रवाहादेः स्वीयप्रणतचरणप्रापक विभो ॥ २ ॥

श्रीवल्लभसुतचरणाम्भोरुहमकरन्दमत्तमधुपो यः ।
जयति निगूढत्रिसरणिमालत्यां तस्य झङ्कारः ॥ ३ ॥

इह हि चिद्रूपत्वेन भगवदंशत्वेन च तुल्येषु जीवेषु केषाञ्चित्पुरुषोत्तमप्राप्तिः, केषाञ्चिदक्षरस्य, केषाञ्चित्स्वर्गादेः, केषाञ्चिदन्धन्तमसः, सा श्रूयत इति कुत. फलभेदः, कुतो वा स्वभावभेदः, कथं वा केषाञ्चित्स्वभावविरुद्धे देहक्रिये, इतरेषां च तदनुरूपे इत्यादिप्रकारेण सेवाफलविवरणादिग्रन्थश्रवणादन्यतश्च सन्दिहानानां सन्देहवारणाय तदुपायभूतमार्गत्रयसाङ्कर्यं निरूपयितुं बहूनां सन्देहानां भेदज्ञानादेव निवृत्तिं हृदि कृत्वा मार्गत्रयभेदनिरूपणं श्रीमदाचार्याः प्रतिजानते पुष्टीत्यादि ।

पुष्टिप्रवाहमर्यादा विशेषेण पृथक् पृथक् ।
जीवदेहक्रियाभेदैः प्रवाहेण फलेन च ॥ १ ॥
वक्ष्यामि सर्वसन्देहा न भविष्यन्ति यच्छ्रुतेः ।

एतन्मार्गत्रयं विशेषेणोत्कर्षादिरूपव्यावर्तकधर्मेण जीवादिभेदैः प्रवाहेण सर्गपरम्पराया अविच्छेदेन फलेन च पृथक् पृथक् भिन्नं भिन्नं यथा स्यात्तथा वक्ष्यामीत्यर्थः । भेदकथनफलमाहुः सर्वेति । यच्छ्रुतेः उक्तभेदकचतुष्टयश्रवणात् । एतेन जगत्यनेके मार्गाः कथं त्रय एवोच्यन्त इत्यपि सन्देहोऽनेनैवापयास्यतीत्यपि बोधितम् । ज्ञाते स्वरूपे अन्यान्तर्भावस्यापि सुखेनैव ज्ञानात् । न चैकेनैव भेदसिद्धावितरेषां वैयर्थ्यं शङ्क्यम् । स्वरूपसाधनफलैक्यनिरासकत्वेन सर्वेषामेव सार्थक्यात् । अत्यन्तविविक्तत्वज्ञान एव सर्वसन्देहनिरासात् ॥ १½ ॥

नन्वाश्रयसिद्धौ भेदकं वक्तव्यम्, प्रकृते तु पुष्ट्यादिशब्दवाच्यानां मार्गाणामप्रसि-

द्धत्वात्तद्भेदनिरूपणं गगनकुसुमसौरभमनुकरोतीत्याशङ्कायामाश्रयसत्त्वं सिसाधयिषवः पुष्टेः पूर्वमुद्दिष्टत्वात्तत्रैव पूर्वं प्रमाणमाहुः भक्तीत्यादि ।

## भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चयः ॥ २ ॥

दशमस्कन्धे भ्रमरगीतस्थसन्देशे 'या मया क्रीडते'त्यारभ्य 'अचिरान्मामवाप्स्यथे'त्यन्तस्य, 'युवां मां पुत्रभावेन ब्रह्मभावेने'त्यादेः, 'दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृतानुवृत्ति'रित्यादेः, एकादशस्कन्धे च 'अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामी'त्यारभ्य 'तस्मात्त्वमुद्धवोत्सृज्ये'ति श्लोकद्वयान्तस्य 'भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ । पुनश्च कथयिष्यामि मद्भक्तेः कारणं पर'मित्यादिभिर्भगवता भक्तिमार्गस्य कथनात्, 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृत' इति तृतीयस्कन्धे उक्तायाः 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन्मनःकल्पनमि'त्याथर्वणोपनिषदि च श्राविताया भक्तेर्यो मार्ग उपायः प्रकारश्च तस्य कथनात्, पुष्टिरस्ति 'पोषणं तदनुग्रह' इति वाक्यादनुग्रहापरपर्याया तत्तद्भक्तिबीजभूता कृपा भगवति वर्तत इति निश्चयः । अन्यथा भगवानेवं भक्तिमार्गं न वदेत् । 'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनामि'ति वाक्यादुभयोस्ताभ्यां फलसिद्धेरुक्तत्वात् 'न निर्विण्णो नातिसक्त' इत्यनेनोक्तस्यैतत्सक्तस्य कामसद्भावात्कर्मणा कथञ्चित्तेन तदपूर्तौ निर्वेदे ज्ञानेन च यदाकदाचिद्यथाकथञ्चित्फलसिद्धेः सम्भवात् । लोकेऽपि सत्स्वधनसाधमर्णस्य तावद्धनग्रहणादिभिर्महर्णविमोकस्योत्तमर्णानुग्रहेण दर्शनात् । कष्टसाध्ये प्रायश्चित्तादौ पर्षदनुग्रहेणैव सुकरसाधनोपदेशस्य स्मृतिष्वपि सिद्धत्वात् । 'भवन्तावनुगृहीतां याता योऽनुग्रहादिवे'मित्यादिषु तत्प्रार्थनादर्शनाच्च सुकरसाधनोपदेशबीजभूतानुग्रहे सिद्धे पुष्टिर्भगवत्यस्ति । सुकरसाधनरूपस्य भक्तिमार्गस्य कथनात् । यत्र यत्र हितरूपसुकरसाधनकथनं तत्र तत्र वक्तर्यनुग्रहसत्ता । यथा उक्तपरिषदि । यत्र नैवं तत्र नैवम् । यथा नृगसम्प्रदानविप्रादिषु, इत्यनुमानेन भक्तिरूपसुकरसाधनोपदेशाद्भगवति तत्सत्तायां न सन्देह इत्यर्थः । स च धर्मान्तरमेव । न तु फलदित्सा । 'यस्यानुग्रहमिच्छामी'ति वाक्यात् । दित्सात्वे इच्छाकर्मत्वायोगात् । अत एव न परदुःखप्रहाणेच्छापि । नापि तदर्थको यत्नः । कृपयामि न तु यते इति तदुत्तरं व्यवसायदर्शनात् । कृपया यते दित्स इत्यादिप्रयोगाच्च । नापि ज्ञानम् । दुःखं जानन्नपि न दुष्टे कृपयति, नास्य दुष्टस्य दुःखमिति जानन्न कृपयतीत्यादिप्रयोगात् । दृष्टत्वाच्चादृष्टविशेषः । द्वेषादिवैलक्षण्याच्च न द्वेषादि । न च कृपयत्यनुगृह्णातीति भिन्नशब्दाभिलाप्यत्वाद्भिन्नानुव्यवसायगम्यत्वाच्च कृपानुग्रहयोर्भेदः शङ्क्यः । लोके कृपाभिन्नतया तत्प्रसिद्ध्यभावे धातुभेदप्रयोगादेस्तद्भेदाप्रयोजकत्वादिति । तस्मात्स्वीकारपदार्थ्य दित्सादिप्रयोजकं कृपापरपर्यायं धर्मान्त-

१. कर्मविनेऽपि मनि ।

मेवेति निश्चयः । स च भक्त्युपदेशस्येव भक्तेरपि कारणम् । यत्रानुग्रहाभावस्तस्य भक्तेरदानात् । 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मितिवाक्यात् । इदं यथा तथा भक्तिहेतुनिर्णये प्रपञ्चितं प्रभुचरणैः । तथा च सति भक्त्युपदेशो वक्त्रनुग्रहपूर्वकः । सुकरसाधनोपदेशत्वात् । पर्षट्कसुकरप्रायश्चित्तोपदेशवत् । व्यतिरेके कष्टसाध्यदितिपयोव्रतोपदेशवत् । अयमनुग्रहविषयः । भक्तिमत्त्वात् । नारदवत् । व्यतिरेके सात्वादिवदित्यनुमानमपि तत्र प्रमाणं ज्ञेयम् । यद्यपि 'यमेवैष वृणुते तेन लभ्य' इति श्रुतिर्भगवत्प्राप्तेर्वरणैकसाधनत्वं वदन्ती 'स वरस्तया वृतः' 'कन्यां वृणीते' इत्यादिप्रयोगदर्शनात्स्वीकारात्मकत्वेन सिद्धस्य वरणस्यानुग्रहजन्यत्वात्तत्र प्रमाणं भवति, तथापि 'तस्यैष आत्मा विवृणुते तनूं स्वा'मित्युक्तस्य विवरणस्य स्वस्वरूपप्रकाशनात्मकत्वात्तत्र यत्फलं लाभात्मकं ग्रहणं तस्य 'भक्त्याहमेकया ग्राह्य' इत्यादिस्मृत्या भक्तिसाध्यताबोधनात्पर्यवसानतो भक्तिद्वारैव जातस्य ग्रहणस्य प्रमितिरूपत्वं बोधयति । भक्तिश्च मार्गेणैव प्रमीयते । स चोपदेशादेवेति हृदि कृत्वाचार्यैरेवमुक्तम् । श्रुतेर्वादकवलितत्वेन पुनः प्रयासकरणापाताच्च ॥ १ ॥ २ ॥

एवं पुष्टिसत्तां साधयित्वा प्रवाहसत्त्वे प्रमाणमाहुः द्वौ भूतसर्गाविति ।

**'द्वौ भूतसर्गा'वित्युक्तेः प्रवाहोऽपि व्यवस्थितः ।**
**वेदस्य विद्यमानत्वान्मर्यादापि व्यवस्थिता ॥ ३ ॥**

प्रवहणं प्रवाहः । सर्गपरम्परया अविच्छेदः । सोऽप्युक्तवाक्याद्दैवासुरविभेदेन व्यवस्थितः कृतविभागः । यदि स न प्रवहेदाप्रलयम्, तदा विभागो मुधैव स्यात् । अतः सोऽप्यस्तीत्यर्थः । मर्यादासत्त्वे प्रमाणमाहुः वेदस्येत्यादि । नियमानतिक्रमो मर्यादा । सात्र कर्मज्ञानादेस्तत्तत्प्रकारनियमस्य बोध्या । सापि वेदस्य विधिमन्त्रनामधेयनिषेधार्थवादात्मकस्यापौरुषेयनित्यशब्दस्य विद्यमानत्वात् व्यवस्थिता, 'स्वर्गकामो यजेते'त्यादिभिर्विध्यादिभिः स्वर्गार्थं ज्योतिष्टोमं कुर्यात्, मन्त्रेणैव देवतां स्मरेत्, अग्निनाम्नैव स्वाहाकारे वदेत्, ब्राह्मणं न हन्यात्, श्रीप्रगामिनीं देवतां ज्ञात्वैव वायव्यालम्भः कर्तव्यो, नान्यथेत्यादिरूपेण नियमेन कृतविभागा । यदि सा न स्यात्, तद्विभाजको वेदो न स्यात् । अतो विभाजकस्य[1] वेदस्य विद्यमानत्वात्साप्यस्तीत्यर्थः । तथाच यद्यपि प्रवाहोऽस्ति । द्वौ भूतसर्गावित्युक्तेर्व्यवस्थितत्वात् । यद्व्यवस्थितं तदस्ति दायादिवदिति मर्यादास्ति । तद्व्यवस्थापकस्य वेदस्य विद्यमानत्वात् । यद्व्यवस्थापकस्य वेदस्य विद्यमानत्वं तस्य सत्त्वम् । यथा यज्ञादेरित्यनुमानाभ्यां तयोः सत्तापि सिध्यति, तथापि प्रवाहे प्रत्यक्षं मर्यादायां या व्यतिरेकः प्रमाणत्वेन वर्तत इत्यनयोरुभयसत्तासाधनाय नास्माभिः प्रयासः कृत इति भावः । अनेनं स्वरूपनिश्चायनेन यावन्तः पुष्टिप्रयुक्ता मार्गा भक्तिरूपास्ते पुष्टिमा-

---

१. विभागसार्थकस्यात्साप्यस्तीत्यर्थः इति पाठः ।

गेऽन्तर्भवन्ति, ये लौकिकाः सर्गपरम्परां न विच्छिन्दन्ति, ते प्रवाहेऽन्तर्भवन्ति, ये वेदनियमं नातिवर्तन्ते ते मर्यादायामन्तर्भवन्तीत्येवं बुद्धिसौकर्यात्त्रयो मार्गा ज्ञेयाः सन्देहनिरासेप्सुभिरिति बोधितम् । न च भगवद्वाक्ये 'योगास्त्रयो मया प्रोक्ता' इति ज्ञानकर्मभक्तीनामेवोपायतया मार्गत्वबोधानादेतेषां कथं मार्गत्वमिति शङ्क्यम् । भक्तेर्विचारे तन्मूलभूतानुग्रह एव मार्गत्वस्य पर्यवसानेन, सर्गपरम्पराविचारे 'जायस्व म्रियस्वे' ति श्रुत्युक्तजन्माद्यनुच्छेदरूपफलहेतुतायाः प्रवाह एव पर्यवसानेन, ज्ञानकर्मफलस्य चोक्तविधिनियमादेव भवनेन तद्धेतुतायास्तदनतिक्रम एव पर्यवसानेन, तात्पर्यतस्तेषां मार्गत्वस्याप्रत्यूहत्वात् । एतेनैव 'प्रवाहपुष्टिमर्यादाः कुत उत्प्रेक्षिताः किल । द्यां वा कुत्रचिद्ग्रन्थे मूलमत्र निरूप्यता' मिति भ्रान्तपर्यनुयोगोऽप्यपास्तो बोध्यः ॥ ३ ॥

अतः परं भेदसाधनार्थं यतन्ते । तत्र, नन्वस्तु पुष्ट्यादिसत्ता । तावता परस्परविवेकस्तु न सेत्स्यति । तथाहि । 'फलमत उपपत्ते'रिति न्यायेन फलमात्रं भगवतः सकाशादेव । ब्रह्मवादे च चैतन्यभेदाभावान्नामभेदमात्रं नोपास्यभेदः । अतो लोकास्तत्तन्नाम्ना भजन्तोऽपि तत्तत्फलार्थं तमेव भजन्ते प्रावाहिका अपि । ततः फलं च लौकिकमलौकिकं प्राप्नुवन्तीति सर्वेषां भक्तत्वाविशेषाद्भक्तिमार्गस्य चानुग्रहप्रयुक्तस्य सर्वान् प्रति तुल्यत्वाच्च प्रवाहाद्विवेकः शक्यवचनः । मर्यादा तु वेदोक्तत्वाद्विविक्तैवेति द्वावेव मार्गावभ्युपगन्तव्यावित्याशङ्कायामाहुः कश्चिदेव हीति ।

> कश्चिदेव हि भक्तो हि 'यो मद्भक्त' इतीरणात् ।
> न सर्वतः प्रवाहाद्धि भिन्नो वेदाच्च भेदतः ॥ ४ ॥
> 'यदा यस्ये'ति वचना'न्नाहं वेदै'रितीरणात् ।
> सर्वत्रोत्कर्षकथनात् पुष्टिरस्तीति निश्चयः ॥ ५ ॥

गीतायां 'यो मद्भक्तः स मे प्रिय' इति भगवता यच्छन्दोपपन्नेन कस्यचिदेव भक्तत्वं बोधितम् । अतो न सर्वोऽपि लोको भक्तः । एवं परिसंख्याते भक्ते तत्प्रयोजको मार्गोऽपि प्रवाहाद्भिन्नः असङ्कीर्णः । तथाच भजनमात्रं न भक्तिः । किन्तु प्रियत्वप्रयोजकं भजनम् । अत एव 'अनपेक्षः शुचिर्दक्षः' 'मय्यर्पितमनोबुद्धि'रित्यादि विशिनष्टि । 'प्रियो हि ज्ञानिनोऽत्यर्थ'मित्यत्रापि 'चतुर्विधा भजन्ते मा'मिति भक्तिमेवोपक्रम्य ज्ञानिनो भक्तस्यात्यर्थं वक्ति, न केवलज्ञानिनः । तेन तादृशभक्तेरेव मार्गत्वात्तद्रूपायाः पुष्टेः प्रवाहेणासाङ्कर्यात्सिद्धास्त्रयो मार्गा इत्यर्थः । नन्वस्त्वेवम्, तथापि मर्यादया साङ्कर्यं दुर्वारम् । तथाहि । भक्तिमार्गो नाम किं श्रवणादिरूपनिरूपः, उत 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति पद्यरत्नोक्तमाहात्म्यज्ञानपूर्वकस्नेहरूपनिरूपः । आद्यश्चेत्, 'पारयन्ति रमन्ति भजन्ती'त्यादिश्रुतिसिद्धः । द्वितीय-

१. सर्वेऽपि पाठः ।

श्रेत्, सृष्ट्यादिवाक्यैर्माहात्म्यस्य 'आत्मनस्तु कामाय सर्वं प्रियं भवती'त्यादिभिर्निरुपाधिप्रीतिविषयत्वस्य च प्रतिपादनान्माहात्म्यज्ञानपूर्वकस्नेह एव श्रुतेस्तात्पर्यमिति तद्गोचरः । पुराणानां श्रुत्युपबृंहणत्वात्तदुक्तत्वेऽपि श्रुतिमूलकत्वेन विधिविषयत्वान्मर्यादातो नातिरिच्यते । यत्पुनर्देवान्तरभजनम्, तदपि 'एकं सद्विप्रा बहुधा वदन्ती'ति श्रुतेर्भगवद्भजनमेवेति द्वावेव मार्गावित्याशङ्कायामाहुः वेदाच्च भेदत इति । वक्ष्यमाणहेतुभिः वेदात् वेदोक्तमर्यादामार्गाच्च । लोकादपि भेदं प्राप्य पुष्टिरस्तीत्यन्वयः । अनुग्रहः स्वविषयं पुष्णातीति पुष्टिः । कर्तरि क्तिच् । सेतुर्विधृतिरितिवत् । वेदादिति वाच्यवाचकयोरभेदोपचारान्निर्देशः । तथाच, 'यदा यस्यानुगृह्णाति भगवानात्मभावितः । स जहाति मतिं लोके वेदे च परिनिष्ठिता'मित्यत्र लोकवेदौ पृथङ्निर्दिश्य भगवदनुगृहीतस्य तयोरास्थात्यागं वक्ति । यद्यनुग्रहो लौकिकेषु वैदिकेषु वा साधनेषु प्रविशेत्, तदैवं सामान्येनारुचिं न वदेत् । किञ्च । 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'त्यत्र वेदादिपदैरुक्तानां ब्रह्मचारिवनस्थगृहस्थधर्माणां 'श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तपे'ति वचनादिहेज्यापदसङ्गृहीतस्य यतिधर्मस्य ज्ञानस्यापि दर्शनसाधनत्वमुपलक्षणविधया निषिध्य स्वविषयकस्य ज्ञानस्य ज्ञानफलयोर्दर्शनप्रवेशयोश्चानन्यभक्तिसाधनकत्वं वदति । तेनापि ज्ञायते, अनन्या भक्तिर्नोक्तधर्मेषु प्रविशति, केवलैव च फलं साधयतीत्यतोऽपि तत्कारणभूता पुष्टिस्तथा । किञ्च । 'नायमात्मे' ति श्रुतावपि प्रवचनादिनिषेधपूर्वकं वरणैकलभ्यत्वं वृतं प्रत्येव स्वस्वरूपविवरणं चोक्तम् । तेन वरणस्यैवोत्कर्ष उक्तः । वरणं चानुग्रहप्रयुक्तोऽङ्गीकार एव । तथा 'अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि' 'रमेण सार्धं' 'श्रीपतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्' 'भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते' 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा' 'केवलेन हि भावेन' 'ता मन्मनस्का' इत्यादिषु भक्त्युत्कर्षकथनेनापि तत्कारणीभूतपुष्टेरेवोत्कर्षः सिद्धः । अतो वेदोक्तत्वेऽपि वेदतात्पर्यगोचरत्वेऽपि जीवकृतवैधसाधनेष्वप्रवेशात्तत्साध्यसाधनात्फलवैलक्षण्याच्च स्वरूपतः कार्यतः फलतश्चोत्कर्षाच्च वेदोक्तसाधनेभ्योऽपि भिन्नैव तदाकारिका पुष्टिरस्तीत्यतो हेतोः सिद्धं मार्गत्रयमित्यत्र न सन्देह इत्यर्थः ॥ ४ ॥ ५ ॥

ननु भवत्वेवं स्वरूपविवेकः, तथापि 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्' । 'श्रेयः स्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्' 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जन'मित्यादिभिः केवलस्यैव निन्दास्मरणात् 'निम्नगानामुरी भवे'त्यादौ प्रवाहिकेदेशस्यैव तयात्याद्यशमेत्राद्यत्वाद्याधनत्वमोधनेन 'यदा यस्ये'त्यादीनां चारितार्थ्यादियमर्गस्यानिन्दया 'सर्वेऽधिकारिणो ह्यत्र

विष्णुभक्तौ यथा नृपे'त्यादिभिश्च तस्य सर्वस्यापि भक्त्यनुकूलत्वेन 'दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते' 'ज्ञानी च भरतर्षभ' 'आत्मारामाश्च मुनय' इत्यादिभिर्भक्तिसाधनतास्मरणाच्चाङ्गभावेन प्रवाहमर्यादयोर्भक्तिशरीरप्रवेशे एको मार्ग एवास्तु, न त्वत्यन्तविवेक इत्याशङ्कामनूद्य दूषयन्ति मार्गैकत्वेऽपीति ।

मार्गैकत्वेऽपि चेदन्त्यौ तनू भक्त्यागमौ मतौ ।
न तद्युक्तं सूत्रतो हि भिन्नो युक्त्या हि वैदिकः ॥ ६ ॥

अपिः पूर्वपक्षगर्हायाम् । उक्तरीत्या मार्गैकत्वे अन्त्यौ मर्यादाप्रवाहौ भक्त्यागमौ भक्तेरागमोऽभिव्यक्तिर्याभ्यां तादृशौ तनू अङ्गभूतौ मतौ त्वयाङ्गीकृतौ । यद्वा । तनू न्यूनफलसाधनत्वादल्पौ । हेतुगर्भं विशेषणम् । तनुत्वात् उक्तरीत्या भक्तिहेतू शास्त्रसम्मतौ चेत्, तदङ्गत्वं हेतुत्वं वा न युक्तम् । हि यस्माद्धेतोः वैदिको मार्गः सूत्रतः कर्मज्ञानविचारकेभ्यो मीमांसाद्वयसूत्रेभ्यो युक्त्या तत्तत्फलयोजनया हि निश्चयेन भिन्नः । सूत्रे हि जैमिनीये 'शेषः परार्थत्वादि'ति लक्षयित्वा 'कर्म फलार्थत्वादि'ति कर्मणः फलशेषत्वमुक्तम् । फलं च ज्योतिष्टोमादिवाक्ये स्फुटम् । विश्वजिदादिवाक्ये तु 'स स्वर्गः स्यात्सर्वान्प्रत्यविशेषादि'त्यनेन व्यवस्थापितमिति कर्माणि तावता चरितार्थानि शेषित्वेन भक्तिं नापेक्षन्ते । एवं 'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तमि'ति वैयासे सूत्रे 'परं ब्रह्मैतद्यो धारयति रसति भजति ध्यायति प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवती'ति भगवद्धर्माणां मुक्तिसाधनत्वमाथर्वणोपनिषदि श्रुतम् । 'तमेवं विद्वानमृत इह भवती'ति तैत्तिरीये श्वेताश्वतरे च ज्ञानस्य श्रुतम् । तत्र किं सर्वेषां कारणता, उत ज्ञानस्यैवेति सन्देहे, 'नान्यः पन्था विद्यतेऽयनाये'त्यन्यनिषेधात् साधनवैजात्ये फलवैजात्यस्य दृष्टस्य मुक्तावयुक्तत्वात् 'भक्त्या मामभिजानाती'ति भक्तेर्ज्ञानोपक्षीणत्वाच्च ज्ञानादेव मोक्ष इति प्राप्ते, 'एतद्वै तदक्षरं गार्गि अस्थूलमनणु' 'अथ परा यया तदक्षरमधिगम्यते' 'अदृश्यमग्राह्यमि'त्यादिश्रुत्युक्तानामक्षरधियामक्षरविषयकज्ञानानाम् । तुः पूर्वपक्षनिरासे । अवरोधो मुक्तिसाधनेषु सङ्ग्रहः । सः सामान्यतद्भावाभ्याम् । उक्तश्रुतौ यथा धर्माणां पुरुषोत्तमसम्बन्धित्वं श्रुतम्, तथा तैत्तिरीयखिले 'अम्भस्यपारे' इत्युपक्रम्य, 'तदक्षरे परमे व्योमन्नि'ति भगवत्स्थानत्वेनाक्षरस्यापि श्रुतम् । अतो भगवद्धर्माक्षरयोः सामान्यम् । तथा 'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुतौ यस्तद्भावः ज्ञानिनो ब्रह्मभाव उक्तः, सोऽपि 'ब्रह्मभूतः प्रसन्नात्मे'त्यत्र परमभक्तिप्राप्तौ स्वरूपयोग्यतासम्पादकत्वेन स्मृत इति ताभ्यां हेतुभ्याम्, न तु साक्षात्पुरुषोत्तमप्राप्तिसाधनत्वेन । नन्वेवं स्मृतावुच्यते । श्रुतौ तु तत्र विधाम्यते इति विरोधः । किञ्च । अक्षरमप्यविशिष्टमिति तद्विदु केषाञ्चित्तत्सायुज्यम्, केषाञ्चिद्भक्तिरित्याम इति निर्हेतुकं वैषम्यम् । तदुभयं कथं निरसनीयमित्याशङ्कायां दृष्टान्तेनाह औपसदवदिति । यथा उपसदाख्यकर्माङ्गमन्त्रविधिः तानूनप्त्रदर्शाख्ये कर्मणि 'अनाधृष्टमस्यनाधृष्यमि'ति मन्त्रेण तानूनप्त्रं सीवान्वा-

स्रुचि चतुरवत्तमाज्यं षोडशर्त्विजः 'अनु मे दीक्षामि'ति मन्त्रेण यजमानश्च स्पृशन्ति। तत्र कल्पे श्रुतौ च श्रूयते 'यमृत्विजं कामयेत यज्ञयशसमृच्छेदिति तं प्रथममवमर्शये'दिति। अत्र सर्वेषामृत्विजां तुल्यत्वेऽपि यथा यजमानेच्छया फलवैषम्यम्, एवमिहापि भगवदिच्छया। अत्र सम्मतिमाह तदुक्तमिति। गीतास्विति शेषः। 'यदक्षरं वेदविदो वदन्ती'त्यादिना, 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'त्यन्तेन तथाचोपबृंहणत्वान्न विरोधो, नापि निर्हेतुकं वैषम्यमिति प्रतिपादितम्। अतो मर्यादामार्गीयं ज्ञानमपि स्वारस्येन मोक्षमेव शेषित्वेन गृह्णाति, न भक्तिम्। तथाच मीमांसाद्वये कर्मज्ञानयोस्तत्तन्मुख्यफलस्य पृथङ्निरूपणेन केवलाङ्गभूतप्रयाजादितुल्यत्वाभावात्सूत्रतो वैदिकमार्गो भिन्नो, 'दानव्रततपोहोमे'त्यादिवाक्यसिद्धोऽनुग्रहयुतश्च भिन्नः। एवं दैवसर्गात्मा प्रवाहोऽपि मोक्षशेष एव, 'दैवी सम्पद्विमोक्षाये' ति वाक्यात्। इतरस्तु बन्धशेष इति दूरापास्तं भक्तिशेषत्वम्। यदि प्रवाहो भक्तिशेषः स्यात्, भगवानेवम्भावं तत्सम्पत्तेर्न वदेदिति युक्त्या वैदिकः सर्गोऽपि भिन्नोऽनुग्रहयुतश्च भिन्न इत्यनुपदं साधनीयम्। अतः केवलानां त्रयाणां स्वरूपमत्यन्तविविक्तमेवेति सिद्धं मार्गत्रयमित्यर्थः ॥ ६ ॥

एवं स्वरूपं विविच्य उक्तवाक्यैः संयोगपृथक्त्वेन भक्तिशेषत्वे मार्गैक्यं दुर्वारमित्याशङ्कायां पूर्वोक्तविवेकोपष्टम्भाय युक्तिमप्याहुः जीवेत्यादि।

जीवदेहकृतीनां च भिन्नत्वं नित्यता श्रुतेः।
यथा तद्वत्पुष्टिमार्गे द्वयोरपि निषेधतः ॥ ७ ॥
प्रमाणभेदाद्भिन्नो हि पुष्टिमार्गो निरूपितः।

'ध्रुवासो अस्य कीरयो जनास' इति श्रुतौ स्तुतिक्रियावतां जननशालिनां चेतनानां नित्यत्वश्रावणाद्यथा पुष्टिमार्गे भिन्नत्वं इतरवैलक्षण्यम्, तद्वत् 'नायं सुखापो भगवान् देहिनां गोपिकासुतः। ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिहे' ति वाक्ये द्वयोर्देहिज्ञानिनोर्निषेधतः सुखेन भगवत्प्राप्तिनिषेधादपि भिन्नत्वम्। यदि सर्वजीवदेहकृतीनां नित्यत्वं स्यात्, कीरय इत्यादि विशिष्य श्रुतिस्तन्नित्यत्वं न वदेत्। ब्रह्मवादे नित्यत्वस्य विशिष्टाद्वैतद्वैतवादयोरनित्यत्वस्य मायावादे मायिकत्वस्य सर्वेष्वविशिष्टत्वात्। एवं सत्यपि यदेवं वदति, तेन तादृशतद्विशिष्टः पुष्टिमार्गो भिन्न एव। किञ्च। यदि पुष्टिमार्गस्येतरविवेको न स्यात्, उक्तवाक्ये द्वयोः सुखेन भगवदाप्तिं न निषेधेत्। यस्मादेवम्, तस्मान्मार्गो भिन्न इति। पूर्वश्लोकस्थयुक्तिपदस्यैवायं प्रपञ्चः। एवञ्च ज्ञानादिमार्गो यदि पुष्टिमार्गः स्यात्, साक्षादेव पुरुषोत्तमप्रापकः स्यात्। यदि तथा स्यात्, 'यतो वाचो निवर्तन्त' इति श्रुतिर्वागाद्यप्राप्यत्वं न वदेत्। 'नैतन्मनो विशती'त्यादि योगेश्वरा न वदेयुः। तथा उक्तवाक्ये ज्ञानिनां देहिनां च तां न निषेधेत्। निषेधो यद्यन्यार्थः स्याद्, 'यथा भक्तिमता' मिति न वदेत्। 'भक्त्या त्वनन्यये'ति 'यमेवैष वृणुत' इति स्मृतिश्रुती न वदेताम्। यस्मादेवं

१. तस्मात्सूत्रतो वैदिकमार्गो भिन्नोऽनुग्रहयुतश्च भिन्न इति पाठः। २. अत्यन्तविभक्तमेवेति पाठः

तस्मात्तथेत्यादयोऽप्यनुसन्धेयाः । एवं नानाप्रमाणैर्मार्गस्वरूपभेदे सिद्धे मर्यादामार्गीयाणां 'श्रोतव्य' इत्यादिषु श्रवणादीनां यद्दर्शनसाधनत्वमुच्यते, तत् 'नायमात्मे'त्यादिपूर्वोक्तश्रुतिस्मृत्यनुरोधाद्भक्तिरूपाणामेव । न तु केवलानाम् । परमात्मनस्तत्राप्रकाशादक्षरात्मन्येव पर्यवसानात् । 'क्लेशोऽधिकतर' इति वाक्याद्दुःखसाहचर्यं च कंचित् । ततो मर्यादामार्गीयाण्येव तानि । 'ब्रह्मविदाप्नोति पर'मित्यत्रापि तदनुरोधात्स्वकरणकमेव ज्ञानमुच्यते । यथाविर्भवेत्तदा विद्यादिति । आविर्भावस्तूक्तप्रनाडीकमक्त्यैव । 'तमेव विदित्वे'त्यत्रापि 'ते ध्यानयोगानुगता' इत्युपक्रमात् मध्ये च 'तस्याभिध्यानाद्योजनात्तत्त्वभावादि'ति कथनात्सर्वभावेनाश्रयणरूपामुपासनामपेक्ष्यैव ज्ञानमुच्यत इति तादृग्ज्ञानकारणीभूतभावस्य बीजभूतानुग्रहमन्तरेणाभावादुक्तैव प्रनाडी । एवं धर्मदानादयो भक्त्युत्पादकसंहितोक्तरीतिबोधकैकादशस्कन्धोदितप्रकारेणानुष्ठीयमाना भक्तिसाधनतां यान्ति । स प्रकारोऽप्यनुगृहीतानामेवार्थे भगवतोक्तो भिन्न एव । न तु मीमांसितः । तत्र तथानुसन्धानस्य विचारादर्शनात् । अतो विचारितास्तत्तत्फलसाधका एवेति यथाविचारं मर्यादां प्रवाहं वा नातिवर्तन्ते । तथैव योगादयो यागादीनि बाह्यानि च स्वस्वशास्त्रोक्तफलसाधनाय प्रवृत्तानि । अतः सर्वाण्यसङ्कीर्णानि । तदेतत्सर्वं हृदिकृत्य व्यावर्तकधर्मेण पुष्टिमार्गभेदसाधनमुपसंहरन्ति प्रमाणभेदादित्यादि । अत्र यद्यपि पुष्टिमार्गस्वरूपभेदनिरूपणस्यैवोपसंहारः कण्ठादुक्तः, तथापि मर्यादाप्रवाहयोरपि प्रसङ्गात्सिद्धो ज्ञेयः । अग्रे 'प्रवाहस्थान्प्रवक्ष्यामि स्वरूपाङ्गक्रियायुता'निति स्वरूपादिभेदयुतजीवभेदनिरूपणस्यैव प्रतिज्ञानात् । अन्यथा सोऽपि व्यावर्तकप्रमाणभेदैः स्वरूपबोधनाय प्रतिज्ञातः स्यात् ॥ ७ ॥

एवं प्रमाणबलेन मार्गस्वरूपभेदः साधितः । तेन मार्गत्रयप्रमितौ जनितायां प्रमेयबलेनापि सिद्ध एवेत्यतः साधनभेदेन मार्गत्रयभेदं साधयितुं जीवादिभेदयुताविच्छिन्नसर्गेण पुष्टिभेदसाधनाय सामान्यतः सर्गभेदनिरूपणं प्रतिजानते सर्गभेदं प्रवक्ष्यामीति ।

सर्गभेदं प्रवक्ष्यामि स्वरूपाङ्गक्रियायुतम् ॥ ८ ॥
इच्छामात्रेण मनसा प्रवाहं सृष्टवान् हरिः ।
वचसा वेदमार्गं हि पुष्टिं कायेन निश्चयः ॥ ९ ॥

ननु 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा' इति श्रुतौ जीवमात्रस्योत्पत्तिरेकप्रकारिकैवोक्तेति तेषु वैलक्षण्यस्यासम्भवे तद्देहेषु भौतिकत्वादेस्तुल्यत्वात्तत्क्रियास्वपि तदनुरूपत्वादेस्तुल्यत्वात्साधनसाधर्म्यस्य वज्रलेपायितत्वेन सर्गभेदनिरूपणं व्यर्थम् । तथा सति नात्यन्तं विवेक इत्यत आहुः स्वरूपाङ्गक्रियायुतमिति । तथा चैतत्सन्देहनिरासाय तद्भेदोऽपि प्रमाणगोचरीकरिष्यत इति भावः । तदेवाहुः इच्छामात्रेणेत्यादि । अत्रेच्छामात्रेणेत्यनेन 'बहु स्यां प्रजायेये'ति श्रौतमालोचनं निमित्तत्वेनोक्तम् । तेन तदाकारिकेच्छारूपो भगवानेव

१. अत्र परं प्रमेयबलेन साधनभेदेन च मार्गत्रयभेदमित्यादिः पाठः । २. अर्थभावात्, एवं भेदो- ... देहक्रियास्वपीत्यर्थः ।

निमित्तम् । तेन हेतुना मनआदिभिः स्वस्य रूपैः समवायिभिः प्रवाहादीन् सृष्टवान् । तत्र मनसा प्रवाहसृष्टिरेकादशस्कन्धे 'पुरुषः प्रकृतिश्चेति विकल्पः पुरुषर्षभ । एष वैकारिकः सर्गो गुणव्यतिकरात्मक' इत्यनेनोक्तेति ज्ञायते । विकल्पत्वकथनात् । श्रुतौ च 'असतोऽधि मनोऽसृज्यत, मनः प्रजापतिमसृजत, प्रजापतिः प्रजा असृजत, तद्वा इदं मनस्येव परमं प्रतिष्ठितमि'ति जाग्रति बहिः सृष्टिरुच्यते । तथा 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत' इति स्वप्ने उच्यते । यत्र मनसा बहिः सृजति, तत्र मायापि सहोपादीयते । अत एव नृसिंहतापनीयश्रुतौ वटबीजदृष्टान्तमुक्त्वा 'तथेयमपि स्वाव्यतिरिक्तानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'त्याद्युच्यते । अत एव 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमय'मिति भगवतापि उभयमयत्वमुच्यते । अत एवासुराः सृष्टिकर्तृत्वं ब्रह्मलक्षणमस्यां दृष्ट्वा मायामेवोपासते । तदपि श्रावितं मण्डलब्राह्मणे 'मायेत्यसुरा' इति । इयमेव सृष्टिरन्तरमन्यदित्यादिशब्दैर्व्यवह्रियते श्रुतौ—'यद्युष्माकमन्तरं बभूवे'ति । 'मायया ह्यन्यदिवे'ति । मायावादिनश्चैतामेवावलम्ब्य ब्रह्मवादिभिः प्रत्यवतिष्ठन्ते । इयं च सत्यसृष्टिमुपधाय तदुत्तरं च जन्यते । अत एव नृसिंहतापनीये योनित्वमात्मन एवोच्यते । अनुमानं च, विमतः प्रपञ्चः सत्यसृष्ट्युत्तरकालीनः । मायामनोमयत्वात् । स्वाप्निकैन्द्रजालिकवत् । व्यतिरेके, तत्तन्मतस्थसत्यप्रपञ्चवत् । एतेनैवार्थादेव सत्यसृष्टिसिद्धिरपि । इयमेव निबन्धे 'महेन्द्रजालवत्सर्वं कदाचिन्माययासृजदि'त्यनेन सङ्गृहीता । तथाच व्यामोहिका स्वतः सत्कार्याक्षमा सदुपधानेन तत्तत्क्षमा सृष्टिः प्रवाहसर्ग इति सिद्धम् । तथाच मनसा व्यामोहबहुलं प्रवाहं सृष्टवानित्यर्थः । वचसा सृष्टिश्च 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄन् तिरःपवित्रमिति ग्रहानाशव इति शस्त्रं विश्वानीति स्तोत्रमभिसौभगेत्यन्याः प्रजा इति, स मनसा वाचं मिथुनं समभवदिति, स भूरिति व्याहरन् भूमिमसृजते'त्यादिश्रुतिषु, 'सर्वेषां स तु नामानि रूपाणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे । नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर'इत्यादिस्मृतिषु च स्फुटा । न चात्र तृतीयाप्रयोगात्करणत्वमेव, नोपादानत्वमिति वाच्यम् । 'मृदा घटं निर्मिमीत' इत्यादावपि तथा प्रयोगात् । न चैवं ब्रह्मोपादानत्वश्रुतिव्याकोपः । 'वाचाऽविरूपनित्यया' 'वेदो नारायणः साक्षादि'त्यादिभिर्भगवद्रूपताबोधनेन तन्निवृत्तेः । न च शब्दस्यार्थोत्पादकत्वमसङ्गतमिति वाच्यम् । शब्दतन्मात्रादाकाशोत्पत्तेः स्मृतिशतसिद्धत्वात् । तथा वर्णात्मकादपि तदुत्पत्तौ बाधकाभावात् । वस्तुतस्तु 'वेदा यथा मूर्तिधरास्त्रिपृष्ठ'इति वाक्याद्वेदाभिमानिदेवतै-

१. तै. ब्रा. १-२-६-१९.
६ पु. प्र. म.

घोपादीयते । अत एव 'ॐमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम् । भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत्रिकालातीतं तदप्योङ्कार एव । सर्वं ह्येतद्ब्रह्मे'ति माण्डूक्येऽपि श्रूयते । नामसृष्टौ तु नाद एव प्रणवद्वारोपादीयते । अत एव द्वादशस्कन्धे ॐकारमुपक्रम्य 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातन'मित्युक्तम् । 'स एष जीव' इत्यादि च । तेन वेदपुराणाद्यात्मकसृष्टेः प्रणव एवोपादानम् । एवञ्च, 'मनः पूर्वो वागुत्तर' इत्यादिश्रुत्या वाचो मनःपूर्वकत्वश्रावणात्, 'वचसा वेदमार्गं ही'त्यनार्थादेव मनःपूर्वकत्वसिद्धिः । तथाच मनस्समाधिपूर्वकं वचसा वेदमार्गं सृष्टवान् । हि युक्तश्चायमर्थः । तेन मार्गेण भगवान् प्राप्यत इति । यतो हरिः सर्वदुःखहर्ता । तथाच वेदमार्गं विना जीवानां दुःखनिवृत्तिर्न स्यादतस्तथा कृतवानित्यर्थः । एतदेव 'तेने ब्रह्म हृदे'त्यनेनोच्यते । अत एव 'जन्माद्यस्य यतः शास्त्रयोनित्वा'दिति सूत्रकारोऽपि रूपसृष्टेर्नामसृष्टेर्भेदं क्रमेणाह । तथा 'रूपप्रपञ्चकरणादासक्तस्तांशवारणे । श्रुतिमात्मप्रसादाय चकारात्मानमेव स' इत्याचार्यैर्निबन्धे निरूपितम् । इदमत्राकूतम् । 'स वै नैव रेमे' इति श्रौते सन्दर्भे रमणार्थमेव प्रपञ्चरूपेणाविर्भाव उच्यते । तथाच रमण वैचित्र्यं विना न सम्भवतीति सर्वेषामविद्यया स्वशक्त्या तत्तदासक्तिरूपं धर्मं सम्पादितवान् । पश्चात्सर्वे एते दुःखिता एव भविष्यन्तीति करुणया वेदमार्गकरणं दुःखनिवर्तकम् । अतो मनस्समाधिपूर्वकत्वमुच्यते । तथाच येषां वेदमार्गेण मुक्तिस्ते दैवजीवाः । येषां बन्ध एव ते आसुराः । 'दैवी सम्प'दिति वाक्यात् । पुष्टिं तु कायेन । 'कस्य रूपममूद्द्वेधा तत्कायमभिचक्षत' इति कायपदनिर्वचनात् । 'स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवता' मिति पुरुषविधब्राह्मणे श्रवणात्स्वरूपस्यैवानेकधा भवनम्, स्वरूपं चानन्द एवेत्यानन्देनेत्यर्थः । तत्रापि निश्चयः नितरा चय एकीभावो यस्य तादृशोऽतिसावधानः । तेन मनोवचःपूर्वकत्वमर्थादेव सिद्धम् । गोवर्धनोद्धरणप्रसङ्गे तथात्व स्पष्टम् । तस्यामानन्दांशादेर्न तिरोभावः । एतद्यथा तथा विद्वन्मण्डने निबन्धे च स्पष्टम् । यद्यपि पूर्वत्र समवायित्व भगवत एवेति तस्यापि कायेनैव सृष्टिरायाति, तथापि तत्र समवायित्वे सचितोरेव प्राधान्यम्, अत्र तु केवलानन्दस्येति भेदः । अथवा । मर्यादायाः समवाय्यप्यक्षरमेव । 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः' 'अव्यक्तोऽक्षर इत्युक्त' 'अव्यक्ताद्व्यक्तयः सर्वा' इत्यादिवाक्यैर्मर्यादासृष्ट्युपादानकारणत्वेनाक्षरं ब्रह्म निरूपयित्वा, 'परस्तस्मात्तु भावोऽन्य' इत्यादिना तस्य क्षरात्परत्वमुक्त्वा, तस्य स्वधामत्वं चोक्त्वा, अग्रे 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'ति स्वस्य ततो भिन्नत्वं भणितवान् भगवान् । अत एव 'एकांशेन स्थितो जग'दिति स्पष्टमेव सङ्गच्छते । अत्र 'एकांशेने'ति कथनाद्भगवदंशस्याक्षरस्य मर्यादामार्गावतारगम्यते । कालपक्षेऽपि तस्याभिन्नत्वादविरोधः । अत एव बृहद्वामनपुराणे ब्रह्मवाक्यं 'अक्षरं ब्रह्म परमं वेदाना स्थानमुत्तम'मिति । अत एव 'द्विरूपं तद्धि सर्वं

स्या' दिति सिद्धान्तमुक्तावल्यामाचार्यैर्निरूपितम् । एवं प्रवाहेऽपि मायामनोरूपः समवायी । 'द्वे अस्य बीजे'इत्यारभ्य 'मायामयं वेद स वेद वेद'मिति भगवता निरूपणात् । न च मिथ्यात्वं सर्वस्य । मायामात्रस्यैव तथात्वात् । सन्न्याधिकरणेन तथा निश्चयात् । अत्र मात्र-पदाभावात् । कात्स्न्र्येनाभिव्यक्तस्वरूपत्वाच्च । मायायाः शक्तितया सतीत्वेन मयटो विकारार्थत्वेऽप्यदोषाच्च । अतोऽहङ्कारस्य चिदचिद्ग्रन्थिरूपत्ववद्व्यावहारिकप्रवाहस्य सदसद्ग्रन्थिरूपतया सत्यत्वस्यापि विद्यमानत्वान्न कोऽपि शङ्कालेशः । पुष्टौ तु पुरुषोत्तम एव सर्वांशेन कार्यकारणरूप इत्यभिप्रेत्य कायेनेत्युक्तम् । अत एव श्रुतौ साक्षात्परम्पराभ्यां सृष्टिः स्वस्यैव सर्वरूपेण भवनं चेति प्रकारत्रयेण सृष्टिकथनम् । अत एव तैत्तिरीये ब्रह्मविद्प्रपाठके 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति 'सोऽकामयत बहु स्यां प्रजायेयेति' 'स आत्मानꣳस्वयमकुरुते'ति वारत्रयं सृष्टिरुक्ता । वैजात्याभावे तथा कथनमप्रयोजनकं स्यात् । तस्मान्न कोऽपि शङ्कांशः । कारणवैजात्ये फलवैजात्यस्यायस्य तुल्यत्वात् । अवान्तरभेदास्त्वेतेष्वेवान्तर्भवन्ति । एतच्च लीलासृष्टेर्भगवदात्मकत्वं 'नारायणसमो गुणै'रित्यत्र 'तमद्भुत'मित्यत्रापि च निर्णीतं श्रीमदाचार्यचरणैः । अत एव 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' 'दहर उत्तरेभ्य' इत्यादिश्रुतिसूत्रैर्भगवल्लीलासृष्टेर्भगवद्रूपत्वमुच्यते । बृहद्वामनपुराणे 'आनन्दमात्रमिति यद्वदन्तीह पुराविदः । तद्रूपं दर्शयास्माकं यदि देयो वरो हि न' इति श्रुतिभिः प्रार्थितो भगवान् 'स्वलोकं प्रकृतेः परम् । केवलानुभवानन्दमात्रमक्षरमव्ययम्' मित्युपक्रम्य 'किशोराकृतिरच्युत' इत्यन्तेन वृन्दावनगोवर्धनयमुनादिसर्वभक्तसहितं स्वस्वरूपं दर्शितवानिति सर्वस्या एव लीलासृष्टेस्तद्रूपत्वमायातीत्येतत्सर्वं विद्वन्मण्डने स्पष्टम् । ननु भवत्वेवं सर्गभेदः, तथापि सर्वेषां जीवानां भगवदंशत्वाविशेषात्प्रावाहिकाणामेव अतिदुष्टत्वे को हेतुः । न च रमणेच्छैव हेतुः । तथा सति स्वरतीच्छाया तेषां लयः स्यात् । न च जायत एवेति वाच्यम् । तथा सति अतिदुष्टता न स्यात् । यथा कर्मिणाम् । न चेष्टापत्तिः । तथा सति 'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गति'मिति भगवद्वाक्यविरोधः स्यात् । एवकारस्य सर्वमुक्तिदशायामपि प्राप्त्यभावद्योतको विरुध्येत । कर्मिणामपि सर्वमुक्तिनोऽर्वाक् भगवत्प्राप्त्यभावादुच्चनीचकर्मणा चाधमादिगतेरपि जायमानत्वादविशेषश्च स्यात् । मामित्यस्य पदस्याक्षरपरत्वेऽपि न निस्तारः । उक्तदोषतादवस्थ्यात् । वस्तुतस्तु लयाभावोऽप्यशक्यवचनः । 'यथाग्निप्रभवा' इति वाक्यात् । अथोक्तगीतावाक्यानुरोधा'द्यथाग्नी'ति वाक्यस्थे गतिपदे सङ्कोचः कार्यः । तथा सति तेषामन्धतमःप्रवेश एव मुक्तिः । तथाच सर्वमुक्तिदशायामपि न भगवति तेषां लय इति स्वीक्रियत इति चेत् । तर्हि 'यतो वा इमानी'त्यादि 'अव्यक्तादीनि भूतानी'त्यादिश्रुतिभगवद्वाक्ययोर्भगवत एवोत्पत्तेर्भगवत्येव च लयस्य कथनात्तेषां तत्र लयानङ्गीकारे तत्र उत्पत्तिरपि न स्यात् । यदि चोभयसामञ्जस्यार्थमन्धतमसस्तत्तोऽतिरेकेण प्रलये स्थितिरङ्गीक्रियते, तदा 'भवानेकः शिष्यतेऽशेषसंज्ञ' इति श्रीभागवतवाक्यविरोधः । न च सर्वस्य भगवदात्मकत्वा-

दन्धतमसोऽपि तथात्वादेकपदस्य मुख्यवाचकत्वेनाप्युपपत्तेस्तत्स्थितौ को दोष इति वाच्यम् । अन्धतमसो विकारत्वात्तस्य ब्रह्मत्वाङ्गीकारे 'वाचारम्भणं विकार'इत्यादि 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवा'नित्यादिश्रुतिभगवद्वाक्यविरोधात् । 'बृहदुपलब्धमेतदवयन्त्यवशेषपतये'त्यादि 'निर्दोषपूर्णगुणविग्रह'इत्यादिवाक्यानि च विरुध्येरन् । अतो भगवति लयानङ्गीकारे भगवतो न तदुपादानत्वमिति सिध्येत् । किञ्च । रमणेच्छापेतदुत्पत्तौ न कारणीभवितुमर्हति । यतो रमणेच्छया स्वयं तावद्रूपो भूत्वा क्रीडतीत्युच्यते । एतेषां च केवलं दुःखित्वान्न रमणलेशोऽपि । अत एव 'केवलं नित्यदुःखा' इति श्रीवल्लभाष्टकोक्तिरपि सङ्गच्छते । न च भगवद्भिन्ना एव केचनैव जीवाः सन्ति येषामियं व्यवस्थेति वाच्यम् । अद्वैतश्रुतिविरोधात् । तस्मादुत्पत्तेरेवाभावान्मार्गभेदव्यवस्था कर्तुमेवाशक्येति चेत् । अत्रोच्यते । भगवान् हि सर्वरसभोक्ता राजवद्रमणार्थं स्वस्वरूपात्मकं प्रपञ्चं कृतवान् । तत्र च वैरिणोऽप्यपेक्षिताः । अन्यथा वीररसभोगो न स्यात् । स्वांशाश्च वैरिणो न भवन्त्येव । 'यो यदंशः स तं भजते' इति वाक्यात् । तथाच पूर्वोदाहृतश्रुतिस्मृतिभिर्भगवता स्वसामर्थ्यरूपया मायया केचन जीवा मायांशा एव 'जीवेशावाभासेन करोती'ति श्रुत्युक्ता व्यावहारिकास्तद्योग्यव्यावहारिकसकलसामग्रीयुक्ताः सृष्टाः सन्तीत्यवगम्यते । व्यवहारश्च लौकिको गुणानां सन्निपातः । 'अदृष्टान्यतम'मित्यस्य देवक्युद्देशेनोक्तस्य भगवतो वाक्यस्य विवरणे 'यद्यपि मत्तोऽन्ये ये केचन सम्भवन्ति मायया दृष्टा' इत्यत्र स्पष्टमिदम् । सप्तत्रिंशाध्यायेऽक्रूरस्तुतौ 'म्लेच्छप्राये'त्यस्य विवरणे च 'म्लेच्छा ये सहजा दैत्यास्ते गुणवन्तोऽपि हन्तव्या' इत्यनेन । अत एव श्रीमदाचार्यैरपि सृष्टिभेदनिरूपणे निबन्धे 'महेन्द्रजालवत्सर्वं कदाचिन्माययासृजत्' । तदा ज्ञानादयः सर्वे वार्तामात्रं न वस्तुत' इति पद्याभासे 'स्वप्नादिदृष्टिसङ्ग्रहार्थमाहे'त्यादिपदमेतदभिप्रायकमेवोक्तम् । अत एव 'मायेत्यसुराः' 'यो यदंशः स तं भजत'इत्यादिश्रुत्यादयोऽपि सङ्गच्छन्ते । अत एव श्रीगोकुलनाथचरणैरपि सिद्धान्तमुक्तावलीविवृतिस्थायाः 'सेवा हि सेवकधर्मस्तदुक्त्वा जीवानामशेषाणां सहजदासत्व ज्ञापित'मिति फक्किकाया व्याख्याने 'आसुरव्यतिरिक्तानामशेषाणा'मित्युक्तम् । अत एव 'पुमान् विरज्येत विना पशुघ्ना'दिति श्लोकव्याख्याने 'अनिवर्त्यदोषेण चाप्रवेश' इत्युक्तिराचार्याणामस्माकमाश्रयः । 'सहजासुरत्वेनेत्यर्थ' इति प्रभुचरणतद्विवृतिरपि । अत एव 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दिति 'न सत्यं तेषु विद्यत' इत्यादिश्रुतिभगवद्वाक्ये तेषां व्यावहारिकं सत्त्वं वदतः । अत एव देवकीसुतानयनाय गमनन्तं भगवन्तं स्तुवतो बलेर्वाक्यविवृतौ श्रीमदाचार्यैरुक्तम्, 'ते चेद् द्वेषिणस्तदा तेषां नरकपात आवश्यक इत्या'सुरीं योनिमापन्ना' इति वाक्यानुसारेण कदाचिदप्यमुक्तौ कथं भगवान् सर्वात्मे' ति । तथाच इच्छामात्रेण निमित्तेन मायोपादानकं प्रवाहं सृष्टवान् । न तु स्वयं तत्र प्रविष्टः । तथाच मायया निर्मितेषु नरकादिरूपविकारेषु ते पतन्तीति न कोऽपि दोष इत्यर्थः । ये च मुच्यन्ते ते च नासुराः । किन्त्वासुरावेशिनः ।

तथाच ते भगवदंशा एवेति निष्कर्षः । यदा च स्वरतीच्छा तदा मायामप्युपसंहरतीति तेऽपि न प्रतिभासन्ते । वस्तुतस्तेषामसत्त्वात् । तथाच ये प्रपञ्चं मायिकमेवाहुस्त आसुरा एव । यतस्तेषां तथैव भासते । 'पुण्यो गन्ध' इत्यादिवाक्यविचारेण दोषप्रतीतिमात्रस्य मायिकत्वमिति न कोऽपि दोषः । ननु सामर्थ्यस्य स्वरूपानतिरिक्तत्वात्प्रावाहिकाणां विकारस्य च मायोपादानकत्वाद्विकारित्वं ब्रह्मणो दुर्वारमिति चेत् । न । न हि तेषां सामर्थ्यरूपत्वम् । असत्त्वात् । किन्तु सामर्थ्यात्प्रतीयमानत्वम् । अन्यथा सत्यता स्यात् । दृश्यतेऽपि नटैः प्रदर्श्यमानस्य मिथ्यात्वं क्षणिकत्वात्तत्सामर्थ्यस्य च सत्यत्वमिति न मार्गभेदानुपपत्तिः । यद्वा । वीररसभोगार्थमुत्पादिता अपि जीवाः सत्या एव । 'जीवेशावाभासेने'ति श्रुत्युक्तस्याप्याभासस्याभास्यसमानाकारत्वात् । तयोः समानाकारत्वस्यैव लोके दर्शनात् । अत्राभासाभास्ययोरुभयोरप्यान्तरत्वेन द्वेषरूपधर्मप्रतिबिम्बेऽपि बाधकाभावात् । न च वीररस उपयुज्यमानस्य तद्धर्मस्य द्वेषस्य तेष्वभावः शङ्क्यः । द्वेषस्याप्यानन्दतिरोभावात्मकत्वेन तेषु तत्सत्त्वात् । अतस्तद्विशिष्टा एव ते । किञ्च । 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः । स्थितिसर्गनिरोधेषु गृहीता मायया विभो'रिति द्वितीयस्कन्धोक्ता भगवदुत्पन्ना गुणाः कार्यार्थं मायया यथा गृह्यन्ते, तथा भगवत्कार्यार्थं तया ते जीवा अपि स्वजन्यया अविद्याशक्त्या गृह्यन्ते । अत एव विद्वन्मण्डने 'यस्मिञ्जीवे यादृशीच्छा तदनुरूपा एवाविद्यादिशक्तयः सत्त्वादिभेदेन तं व्याप्नुवन्तीति महदैश्वर्यं भगवत' इत्युक्तम् । तेन ते 'प्रवृत्तिं च निवृत्तिं चे'त्युक्तासुरधर्माणो भवन्ति । तद्धननादिना भगवानपि वीररसादिकं भुङ्क्ते । तादृशभगवदिच्छावशादेव तेषां तथात्वमिति 'यो यदंशः स तं भजत' इति वाक्यस्यापि न विरोधः । तैर्भजनकारणे भगवदिच्छाभावात् । तेन तेषां देहादिकं सदसद्ग्रन्थिरूपं प्रागेव साधितम् । एवं सति ते स्वकर्मणान्धे तमसि प्रविशन्ति । अन्धंतमश्च प्रलयेऽविद्यायां प्रविशति । अविद्या च मायायाम्, माया च ब्रह्मणि । प्रलयस्य श्रुतौ पुराणेषु च प्रतिसञ्चरत्वेन सृष्टिविपरीतक्रमतया सिद्धत्वात्तदापि ते भगवन्तं न प्राप्नुवन्तीति 'मामप्राप्यैवे'ति वाक्यमप्युपपद्यते । न च विकारस्य सत्यत्वे ब्रह्मणो विकारित्वापत्तिः । विकारस्य वाचारम्भणत्वेन तदनन्यतया तदभावात् । तस्य दुष्टताया अपि लीलार्थमैच्छिकत्वात् । वस्तुविचारे दोषस्य प्रतीतिमात्रत्वात् । तदनन्यत्वाधिकरणे तथैव सिद्धत्वात् । द्वितीयस्कन्धसुबोधिन्यामपि 'यत्किञ्चिद्दूषणं तत्र दूष्यं चापि हरिः स्वयम् । विरुद्धपक्षाः सर्वेऽपि सर्वमत्रैव शोभत' इति निर्णीतत्वाच्च । अत एवं विचारेऽपि न मार्गभेदानुपपत्तिः । न च पक्षद्वयमध्येऽन्यतरवैयर्थ्यं शङ्क्यम् । कल्पभेदेनोभयथापि सामञ्जस्यात् । तथाच पूर्वोक्तरीतिकेनेच्छामात्रेण निमित्तेन मनसा सहजासुरानसुरावेशिनो दैवांश्च सृष्टवान् । तथाच द्विधा प्रवाहोऽत्रोक्तः सहजासुरावेशिभेदेनेति ज्ञेयम् । अन्यत्स्पष्टम् । ननु 'तदिच्छामात्रतस्तस्माद्ब्रह्मभूतांशचेतना' इत्यादिना दैवसृष्टिर्नि-

बन्धे इच्छामात्रत एव निरूपितेति कथं त्वया मनस्त उच्यते । उच्यते त्वभिप्रायज्ञानात्। तथाहि । निबन्धे यदिच्छामात्रेति पदं तदनुपहितस्य स्वतन्त्रस्य निर्गुणस्य कारणताबोधाय। अत्र तु यत्तत्पदं तदस्यां स्वसमवायिकारणताकत्वनिरासार्थम् । अत एव निबन्धे तत्र 'ब्रह्मभूतांशे'त्यादि जीवविशेषणमुक्तम् । अत्र तु नोक्तमित्येवं विनिगम्यते । न च तत्त्व-मेवात्रातिदेश्यम् । असुरसृष्टित्वात् । 'प्रवाहस्थान्प्रवक्ष्यामी'त्यादिना प्रावाहिकसृष्टेरासु-रत्वनिर्धारणात् । तस्मादेवं सर्गभेदेन भूतभेदाद्देहादिवैलक्षण्यसिद्धेः साधनसाङ्कर्याभावाच्च सर्गभेदनिरूपणवैयर्थ्यमिति मार्गाणामत्यन्तविवेक उपपन्नः प्रामाणिक एवेति भावः ॥ ८॥

ननूपादानभेदेऽपि निमित्तसाजात्ये कार्यं फलं च तुल्यमेव लोके दृष्टम् । यथा सौवर्णराजतताम्रघटास्ततो जलाहरणं च । वेदेऽपि यथा व्रीहियवप्रकृतिकपुरोडाशाभ्यां समानो यागोऽदृष्टं च । तद्वदत्रापि निमित्तसाजात्यादैक्याद्वा फलमेकमेव चेद्व्यर्थः सृष्टिभेद-मार्गभेदसाधनप्रयास इत्याशङ्कायामुपोद्घातसङ्गत्या फलनिमित्तयोर्भेदमाहुः मूलेच्छात इति।

**मूलेच्छातः फलं लोके वेदोक्तं वैदिकेऽपि च ।**
**कायेन तु फलं पुष्टौ भिन्नेच्छातोऽपि नैकधा ॥ १० ॥**

'प्रजायेये'त्याकारिकया मूलेच्छया । सिसृक्षयेति यावत् । तया कृत्वा फलं लोके भवति । न त्वलौकिकम् । 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदा-वर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति । अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति । धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्ष'मित्यादिश्रुतेः । 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' 'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्वि'त्यादिस्मृतेश्च । न च त्रयीधर्मानुप्रपन्नत्वे कथमासुरत्वमिति शङ्क्यम् । दैवावेशेन तत्सम्भवात् । आसुरलक्षणेषु 'यक्ष्ये दास्यामि मोदिष्ये' 'यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वक'मित्युक्तत्वादिति । वैदिके मर्यादामार्गे वेदोक्तं स्वर्गमोक्षादिरूपं फलं भवति । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिरभिसम्भवन्ती'ति 'यन्न दुःखेन सम्भिन्न'मिति 'ब्रह्म वेद ब्रह्मैव भवति' 'न स पुनरावर्तत' इत्यादिश्रुतेः । 'त्रैविद्या मा'मित्यादिस्मृतेश्च । अत्रापि 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती'त्यादिश्राविता उन्निनीषाधोनिनीषा च कारण-त्वेनानुसन्धेया, अज्ञानरूपकार्यान्मुमोचयिषा चानुमातव्या । कायेन आनन्दमात्रकरपादमु-खोदरादिरूपेण फलं नानाविधं तल्लीलानुभवरूपं पुष्टौ भवति । तत्र लौकिकवैदिकप्रकार-द्वयं निरस्त्रम् । तथाच यथा यथा पुष्टिमार्गीया वाञ्छन्ति, तथा तथाताननुरुध्य ददाति । न त्वीश्वरत्वेन । यथान्यत्र । अत एव प्रभुचरणैर्नवरत्नस्य 'निजेच्छातः करिष्य-ती'त्यस्य व्याख्याने 'निजानामिच्छातः स्वेच्छातश्चे'त्युभयथा व्याख्यातम् । 'गोपीभिः स्तोभितोऽनृत्यत्' 'यां गोपीमनय'दित्यादौ स्पष्टं च तथा । अत्रापि 'गोपाये स्वात्मयोगेन' 'मदत्वमिदमुद्वये तेषां कृपयैतदचिन्तयत्' 'वीक्ष्य रन्तुं मनश्चक्र' इत्यादिभिरनुमापितोक्ता-पेक्षा कारणत्वेन बोध्या । एवञ्च यत्र धूममार्गीयमर्चिर्मार्गीयमन्यद्वा सङ्कीर्णं फलं तत्र तदे-

तुभूता सङ्कीर्णेच्छानुमातव्या । अत एवं भिन्नेच्छातः अपिशब्दात्फलभेदतश्च नैकधा सर्गो मार्गाश्च एकविधा नेत्यर्थः । नैकत्वेति पाठे सर्गाणां मार्गाणां चैकता नेत्यर्थः । एवमुत्पत्तिमारभ्यान्तं मार्गप्रवाहभेदात्प्रमेयबलेन मार्गत्रयभेदः साधितः । तेन प्रमीयमाणावस्थासम्बन्धिनः सन्देहा निवारिताः ॥ ९ ॥

अतः परमनुष्ठीयमानावस्थासम्बन्धिनः सन्देहान्परिहर्तुं मार्गसाधनीभूतजीवदेहक्रियाभिर्भेदः पूर्वप्रतिज्ञातो वक्तव्यः । तेषु जीवानां मुख्यत्वात् प्रथमं तद्भेदं वदिष्यन्त इच्छाभेदेऽपि जीवेषु वैलक्षण्याभावात्कथं फलभेद इत्याशङ्कामपि परिहरिष्यन्तश्चिद्रूपत्वाविशेषेपि तत्तदसाधारणधर्मभेदाज्जीवा भिद्यन्ते, तेन फलभेद इति हृदिकृत्य अत्यन्तविविक्तो धर्मः प्रावाहिकाणामेवेति प्रथमं तानाहुः तानहमित्यादि ।

**'तानहं द्विषतो' वाक्याद्भिन्ना जीवाः प्रवाहिणः ।**
**अत एवेतरौ भिन्नौ सान्तौ मोक्षप्रवेशतः ॥ ११ ॥**

तथाच येषां भगवद्द्वेषोऽसाधारणधर्मस्तेन सार्वदिकोऽतिघोरः संसारस्ततोऽन्धतमःप्रवेशः पर्यवसाने ते प्रवाहिणः । भगवद्द्वेषश्च त्रिविधः । मूलरूपावताररूपद्वेषो विभूत्यादिद्वेषो जगद्रूपद्वेषश्च । तत्र मूलरूपावताररूपान्यतरद्विषो भगवन्तं पश्यन्तः कालं प्राप्य शुध्यन्त इति 'मन्येऽसुरान् भागवता'नित्यत्र व्यवस्थापितम् । 'कामं क्रोध'मिति वाक्याच्च । 'तदेव रूपं दुरवापमाप' 'लेभे गतिं धात्र्युचिता'मिति कंसपूतनयोर्मुक्त्युक्तेश्च । विभूतिद्विषस्तु द्वेषत्यागे क्रमेण शुध्यन्ति । 'अत्यागे धर्महीनाः पतन्ति' 'सम्मुखन्तु हरद्विष' इत्यस्य निबन्धे शिवद्विषां तथा व्यवस्थापनात्समानन्यायेनान्यत्रापि युक्तिसिद्धत्वात् । एते उभयेऽप्यासुरावेशिन इत्यग्रे सेत्स्यति । जगद्विषस्तु जायमाना अन्ततोऽन्धन्तमः प्रविशन्ति । इदमपि सुबोधिन्यां स्थापितम् । 'ये चान्धन्तमः प्रविशन्ति, ते केवला एव प्रविशन्ति, न तु प्राणादिसहिता' इत्यपि धृतराष्ट्रं प्रत्यक्रूरवाक्ये 'अक्रूतार्थं प्रहिण्वन्ती'त्यस्य सुबोधिन्यां निर्णीतम् । आर्तभागब्राह्मणे मुक्तेरनुपक्रान्तत्वेन 'अत्रैव समवनीयन्ते' 'स उ च्छ्वयत्याध्मायत्याध्मातो मृतः शेत' इति श्रुतेस्तादृशपरत्वस्य महता विचारेण व्यवस्थापनात् । इदमत्राग्रिमग्रन्थस्य त्रुटितत्वाद्यथाबुद्धि परबोधनायोक्तम् । प्रकृतमनुसरामः ।

अत एव द्वेषभेदादेव । इतरौ मर्यादापुष्टिस्थौ जीवौ । जात्यभिप्रायेण द्विवचनम् । तेभ्यो विविक्तौ । अत्रापि पूर्ववत्फलभेदमाहुः सान्तौ मोक्षप्रवेशतः । मोक्षोऽक्षरप्राप्तिः । प्रवेशः पुरुषोत्तमस्वरूपे । 'विशते तदनन्तर'मिति वाक्यात् । ताभ्यां सान्तौ पर्यवसाने निवृत्तजीवभावौ । प्रावाहिकास्तु ताभ्यां न तथेति प्रयोऽपि जीवा भिन्ना इत्यर्थः । एवं चात्र मोक्षप्रवेशत इति कथनान्मर्यादिनामेव वेदोक्तमुक्तेरुक्तत्वाद्भगवति साधारणभावेन प्रमाणेऽभिनिवेशेन यथाविधि वेदोक्तकर्मज्ञानादिप्रवृत्तिस्त्वमेव येषां

लक्षणम् । अतस्तेऽपि भिन्ना इत्युन्नेयम् । इदं हि पुष्टिप्रकरणम् । अतः पुष्टिभेदनिरूपणाय यावत्तत्स्वरूपनिरूपणमुपयुज्यते, तावत्क्रियते । विशिष्य तु तत्तत्प्रकरण एव निरूप्यमिति न दोषः । भगवत्प्रियत्वसाधकभक्तिमत्त्वं पुष्टिजीवानां लक्षणं तु पूर्वोक्तवाक्यविचारादेव फलतीति न विशिष्योक्तम् ॥ १० ॥

**तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः ।**
**भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत् ॥ ११ ॥**

एवं लक्षणफलयोर्भेदेन यत्सिद्धं तदाहुः तस्मादिति । यस्मादेवं लक्षणभेदस्तस्मात्पुष्टिमार्गीया जीवा मार्गान्तरीयजीवेभ्यो भिन्ना एव । एतावता सर्वथा भेदसिद्धौ मेलने प्रकारान्तरासम्भवादाहुः न संशय इति । यद्यपि 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति श्रुताविति शब्देन प्रकारवाचिना द्वेषादयः सङ्ग्रहीतुं शक्या इति सोपाधिकानामेव भेदः समायाति, न केवलानाम् । न च जीवपदोक्तिविरोधः । 'एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते' इति चतुर्थस्कन्धे नारदवाक्ये जीवपदस्य तादृशेऽपि प्रयोगात् । 'तानह'मिति गीतावाक्ये द्वेषादिधर्मोक्तेश्च । तथापि 'कर्ता शास्त्रार्थवत्त्वा'दित्यधिकरणे उपादानसूत्रे बुद्धिसम्बन्धात्कर्तृत्वमिति निराकृत्य, जीवगतमेव कर्तृत्वं बुद्धिसम्बन्धादुद्गच्छतीत्याकरे व्यवस्थापितम् । तद्वदेते द्वेषसाधारणमात्रभक्तयोऽपि ज्ञेयाः । अत एव फलवैजात्यम्, अन्धतमःप्रवेशो मुक्तिः पुरुषोत्तमप्राप्तिरिति । पर्यवसितं फलं केवलस्यैवेत्यनुपदमेव व्युत्पादितम् । तदेतदुक्तं न संशय इति । ननु 'यदा यस्य' 'यस्यानुग्रहम्' 'यमेवैष वृणुत' इत्यादिषु यच्छब्दस्य यदाशब्दस्य चोपबन्धात्कश्चिदेव जीवं कस्मिंश्चित्काले भगवाननुगृह्णातीति सिध्यति । तेनानुगृहीतः पुष्टिमार्गे प्रविश्य पुष्टिजीवो भवतीति न जीवभेदः । न चानुग्रहविशिष्टस्य केवलापेक्षया भेदान्न दोष इति वाच्यम् । विशिष्टस्यानतिरिक्तत्वात् । देवदत्तः कुण्डलीतिवत् । विशेषणविशेष्यसम्बन्धस्यैव पर्यवसानतोऽतिरेकः सेत्स्यति, न जीवानामिति जीवभेदाङ्गीकारो व्यर्थ इति चेत् । न । प्रामाणिकत्वात् । 'त्रयाः प्राजापत्या देवा मनुष्या असुराश्चेति' बृहदारण्यके श्रावणात् । पञ्चरात्रेऽपि 'उत्पन्नास्त्रिविधा जीवा देवदानवमानवाः । तत्र देवा मुक्तियोग्या मानुषेपूत्तमा अपि । मध्यमा मानुषा ये तु सृतियोग्याः पुनः पुनः । अधमा निरयायैव दानवास्तु तमोलयाः' इति कथनात् । नन्वत्र देहस्य देहविशिष्टस्य वा भेद उक्तो, न केवलस्येति चेत् । न । फलोक्त्या तन्निश्चयात् । केवलस्यैव पर्यवसितं फलमिति पूर्वमेव व्युत्पादितत्वात् । न च पञ्चरात्रस्याप्रामाण्यं शङ्क्यम् । भारते मोक्षधर्मे नारायणीये तत्प्रामाण्यस्य कण्ठत एवोक्तत्वात् । तर्कचरणेऽपि विरुद्धांशमात्राप्रामाण्याङ्गीकारेण शेषाभ्यनुज्ञानात् । जैमिनीयस्मृतिपादेऽपि स्मृतीनां तथैव प्रामाण्यसाधनात् । किञ्च । 'यदा यस्ये'त्यादिषु न तदैव पुष्टिजीवत्वमित्युच्यते, किन्तु साधनसम्पत्त्यत्र वैराग्यमनर्थनिवृत्तिः सदाभक्ष । अतोऽपि तथा । तस्माद्यदानुग्रह ततः

स्वस्वरूपे प्रवेश्य पुनः पुष्टिसृष्टावुत्पादयति, तदा पुष्टिजीवत्वम्, न त्वनुग्रहमात्रात्। एतत्सर्वं वृहद्वामनीयसन्दर्भविचारे 'उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गता' इत्यत्र विद्वन्मण्डने स्पष्टम्। अत एव निबन्धेऽपि 'आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यये'त्युक्तम्। अन्यथा पूर्वमार्गसङ्कीर्णत्वानिवृत्तेः। न चैवमनुग्रहस्यानित्यत्वापत्तिः। फलबलेन प्रवाह्या अपि विचारितत्वनिश्चयात्। तस्मात्सुष्ठूक्तं भिन्ना एवेति। ननु भवत्वेवं जीवभेदः फलभेदश्च, तथापि गीतायां सर्गद्वयस्यैव कथनात्पुष्टिमार्गीयः सर्गोऽपि दैवसर्ग एव निवेशनीयः, तथा सति दैव्या सम्पदा मोक्षः, अनुग्रहसाहचर्ये भक्त्या सायुज्यमिति फलविभागोऽपि सेत्स्यति, तथा सति सर्गस्वभावात्साधनसाङ्कर्यमेव, न तु विवेक इत्याशङ्कायां तत्सर्गप्रयोजनमाहुः भगवदिति। भगवतो रूपस्य या सेवा, रूपेण स्वसौन्दर्येण वा या सेवा तदर्थं तत्सृष्टिः। नान्यथा भवेत्, एतत्सृष्टिकरणाभावे अधिकार्यभावाद्भगवतो रूपसेवैव न भवेत्। तथा रूपसेवां चेन्न कारयितुमिच्छेत्तान्न सृजेत्। नामसेवाया दैवान्तरैरपि सम्भवात्। तथा तादृशरूपाभावे तत्कृता या रमणोपयुक्तसेवा सापि न भवेत्। इदं च प्रयोजनं 'स वै नैव रेमे' इति श्रुत्यैव सूचितम्। तथाच दैवत्वाविशेषेऽपि स्वसेवार्थं तेषामालोचितत्वादन्येषामन्यार्थमालोचितत्वात्स्वार्थपरार्थत्वाभ्यां दैवसर्गभेदः केन वार्यते। सिद्धे च तद्भेदे न साधनसाङ्कर्यगन्धोऽपि। तादृशसृष्टिश्च पूर्वमेव साधिता। 'स आत्मानं स्वयमकुरु'तेति श्रुत्युपन्यासेन। एवश्चासुरेण प्रावाहिकेण सर्गेण विप्रकृष्टा क्रीडा। मार्यादिकेन परम्परिता। पुष्टिसर्गेण साक्षादित्युत्कर्षोऽपि फलितः। किञ्च। 'द्वौ भूतसर्गौ लोकेऽस्मि'न्नित्यत्राप्यस्मिँल्लोक इत्यनेन अमुक्तसम्बन्धी विधातृकृतो लोकः परामृश्यते। अन्यथैतद्वैयर्थ्यं स्यात्। तस्मात्तत्र द्वौ। तावता तदतिरिक्ते मुक्तसम्बन्धिनि तादृग्दैवसर्गस्य केन वारणम्। न च 'न स पुनरावर्तते' 'अनावृत्तिः शब्दा'दिति श्रुतिन्यायविरोधात्पूर्वोक्तमुक्तसर्गोऽनुपपन्नः। 'सम्पद्याविर्भावः स्वेन शब्दा'दित्यधिकरणे आकरे व्यवस्थापितत्वात्। तत्र हि ब्रह्मसम्पन्नानां 'सोऽश्नुते सर्वान् कामा'नित्युक्त आनन्दानुभवोऽन्तर्बहिर्वेति सन्दिह्य, 'न स पुनरावर्तत' इति श्रुत्या पुनरिहागमननिषेधादिहागमनं विना च बहिरनुभवासम्भवादन्तरेवानुभव इति पूर्वपक्षे, सम्पद्य ब्रह्म प्राप्यापि स्वेन भगवतैवाविर्भावो बहिः प्राकट्यं तेषां भवति। यत उक्तश्रुत्युक्तः सर्वकामाशनरूपो भोगः स्वप्राधान्येन ब्रह्मणो विपश्चितो विविधचातुर्यवतः सहभावेन यः स यदिहैव स्यात्तस्य इत्यशनवाचकादश्नुत इति शब्दादेव निर्णीयते। शक्तेश्च व्यवस्थापकता पूर्वतन्त्र एव नामधेयपादे 'अर्थाद्वा कल्पनैकदेशत्वा'दित्यधिकरणे निर्णीता। 'अञ्जलिना सक्तून् प्रदाव्ये जुहुया'दिति होमे देवताप्रसादनादाविव संयुक्तहस्तद्वयसाध्यत्वेऽशक्तत्वाद्धस्तयोर्विकासनं विना होमासम्भवाद्याकोश एवाञ्जलिः शक्तः। आख्यातानामर्थं ब्रुवतां शक्तेः सहकारित्वादिति। किमोपकोशलविद्यायां 'एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इत्यत्रेमं मानवमिति पदाभ्यां संसार एवानावृत्तिरुच्यते। अन्यथैत-

त्पदद्वयवैयर्थ्यं स्यात् । तेन 'न स पुनरावर्तते' इति सामान्यशास्त्रमप्युपसंह्रियत इति न तस्यापि विरोध इति । एतमेव चार्थं 'मुक्ता अपि लीलाविग्रहं कृत्वा भजन्त' इति वाक्यं 'न कर्मबन्धनं जन्म वैष्णवानां च विद्यते । विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण' इति पाद्मवाक्यं चोपोद्बलयति । न चोक्तवाक्यानां जीवन्मुक्तपरत्वं शङ्क्यम् । जीवन्मुक्ते तादृशभोगानुपलब्धेः । मुख्ये सम्भवति गौणकल्पनस्याप्रयोजकत्वात् । उक्तवाक्यादि-र्मुख्ये बाधाभावाच्च । एवञ्च 'ब्रह्मविदाप्नोति पर'मित्यत्रापि ज्ञानमुक्त्योर्व्याप्त्या एको-क्त्योभयप्राप्तेर्ब्रह्मविरपदेन पुरुषोत्तमे प्राप्तसायुज्योऽपि शक्यवचनः । तथाच स तथा भवतीत्यर्थः । अयमेवार्थः 'अस्मिन्नस्य च तद्योगं शास्ती'ति सूत्रेऽभिप्रेयते । स चास्मिन्ना-नन्दमये ब्रह्मणि अस्य प्राप्तसायुज्यस्य जीवस्य तद्योगं तत्स्वरूपस्य योगं शास्ति फलत्वेन श्रुतिर्वदतीति विद्वन्मण्डनोक्तदिशावगन्तव्यः । अस्य तद्योगं शास्तीत्येतावतैव चारितार्थ्ये यदस्मिन्निति पदं तस्यान्यथा वैयर्थ्यापत्तेः । इदं यथा तथानन्दमयाधिकरणस्य वर्णके स्वतन्त्रे प्रभुचरणैर्विशदीकृतम् । अतो जीवन्मुक्तव्यावृत्त्यर्थमेवास्मिन्निति पदम् । न हि जीवन्मुक्त-स्याभेदात्मिका मुक्तिरस्ति । येन योग्यतानुभवस्य स्यात् । किन्तु ज्ञानाध्यासाभावयोः कारणकार्ययोर्भाविफलप्राप्तिज्ञापकयोः सत्त्वात्तयोच्यते । ज्ञानेन स्वरूपयोग्यतायां मुक्ति-र्भगवता दीयत इति न ज्ञानमात्रसाध्या । 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति' 'मोक्ष-मिच्छेज्जनार्दना'दित्यादिवाक्यैः । तथा सति चरमवृत्तिरूपमपि ज्ञानं स्वरूपयोग्यता-सम्पादन एवोपक्षीयमाणं न फलोपहितं कारणतां स्वस्मिन्नवरोद्धुमीष्टे । अतो मुक्तिरपि भगवदिच्छयैवेति सेवायै निचारितान् शुद्धान् विधायाविर्भावयतीत्यत्रापि न किञ्चिदनुपपन्नम् ॥

ननु भवत्वेवं सृष्टिभेदात्साधनसाङ्कर्याभावः, तथापि लीलासृष्टावुत्पन्नानां स्वरूपदेह-क्रियासु न कश्चिद्विशेषो दृश्यत इति साधितपूर्वः सृष्ट्यादिभेदोऽपार्थ एवेत्याशङ्कायां तत्प-रिहाराय विशेषमाहुः स्वरूपेत्यादि ।

स्वरूपेणावतारेण लिङ्गेन च गुणेन च ।
तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वा ॥ १३ ॥
तथापि यावता कार्यं तावत्तस्य करोति हि ।

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्त-रोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'आनन्दरूपममृतं यद्विभाती'त्यादिश्रुतिभिर्यथा भगवान् सच्चिदानन्दघनः, एवं तेऽप्यनिरोहितसच्चिदानन्दा इति न स्वरूपेण तारतम्यम् । यथा भगवतोऽलौकिकरीत्या सत्त्वाधिष्ठानेऽवतारः, एवं तेषामपीत्यवतारेणापि न तथा । यथा भगवतो ध्वजवज्रादीनि लिङ्गानि, एवं तेषामिति न लिङ्गेन तथा । यथा भगवत ऐश्वर्यादयः सौकुमार्यादयश्च, तथा तेषामपीति गुणेनापि न तथा । इदमपि 'न प्रयोजनवत्त्वा'दिति सूत्रेण भगवत आप्तकामत्वश्रवणात्सृष्टिकरणं विरुद्धमित्याक्षिप्य, 'लोकवत्तु लीला-कैवल्य'मिति सूत्रेण पूर्वपक्षनिरासपूर्वकं लोके यथा ईश्वरो लीलां करोति, तत्र न तदति-

रिक्तं प्रयोजनान्तरम्, तथात्रापीति समाधाय, लीलास्वरूपमाह कैवल्यमिति । स्वरूपानतिरिक्ता । तथाच समाधानोत्तरं स्वरूपकथनं सपरिकरायाः स्वरूपात्मकत्वज्ञापनाय । तेन 'अहिकुण्डल'सूत्रे वक्ष्यमाणान्न्यायाद्भगवानेव तावद्रूपतया क्रीडतीति फलितम् । एतदेव आथर्वणे कृष्णोपनिषदि 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै विभुः । भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिन'मिति मन्त्रे परस्परामेदकथनादुक्तम् । वाराहपुराणे च 'अन्यैव काचित्सा सृष्टिर्विधातृव्यतिरेकिणी'ति तस्या विधातृव्यतिरेकित्वकथनात्तदुपबृंहितम् । तथाचास्माद्विशेषात्र साधितपूर्वमपार्थतामापद्यत इत्यर्थः । 'लिङ्गेन च गुणेन चे'ति चकारद्वयेन यथा भगवल्लीलाश्रवणादिना कृतार्थता, तथैव तेषामपीति बोधितम् । तदपि गर्भस्तुतौ 'शृण्वन् गृण'न्नित्यस्य सुबोधिन्यां चकारसूचितार्थनिरूपणे भगवत्सम्बन्धिनामप्यन्येषां श्रवणादिकं फलसाधकमित्यनेनोक्तम् । तर्हि प्रत्यक्षस्य का गतिरित्यत आहुः तथापीत्यादि । यावता तारतम्येन । कार्यं तत्तत्प्रकारकविविधित्सितलीलारूपम् । सिध्यतीति शेषः । तावत्तारतम्यं तस्य जीवस्य स्वरूपे देहे वा तत्क्रियासु वा करोति । हि यतो हेतोः । तथाच कार्यसाधनार्थेन तारतम्येन सर्वमेव सङ्गच्छते । तेन प्रत्यक्षं तावदंशे यथार्थमपि तु न तावत्तस्य नियामकम् । अतो न प्रत्यक्षशब्दयोर्विरोध इत्यर्थः । अयं च सार्थकारिकोक्तोऽर्थो 'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दःस्तुत्युपगानवत्तदुक्त'मित्यत्र विचारितः । तेन यं जीवं मर्यादादिभ्यः पृथक्कृत्यानुग्रहेण पुष्टौ प्रवेशयति, तस्येयं व्यवस्था बोध्या । तत्र हि 'निरञ्जनः परमं साम्यमुपैती'त्याथर्वणिके श्रुतं साम्यं किमशेषधर्मैः, उत कतिपयधर्मैरिति सन्देहे, अत्र परमपदोक्त्या अशेषतद्धर्मैरिति पूर्वपक्षे, तुना पूर्वपक्षं निरस्य, हानौ भगवता स्वधर्म जीवानां त्यागे विभाग इति यावत्, तस्मिन् कृते ये धर्मास्तिरोहिता ऐश्वर्यादयः, ते ब्रह्मसम्बन्धा आविर्भवन्ति । तैः साम्यमुपचर्यते । न तु सर्वथा साम्यम् । तत्र हेतुः । उपायनशब्दशेषत्वादिति । अत्र यत्साम्यमुच्यते, तदुपैतीत्युपायनशब्दशेषत्वेनोच्यते । तथा सति पूर्वं न स्थितमिदानीं प्राप्नोति । तेन परमुपेत्य साम्यमुपैतीति सिध्यति । तेन पूर्वोक्तमेव दृढीभवति । उचितं चैतत् । अन्यथा 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिर्विरुध्येत । तत्र दृष्टान्तः । कुशाच्छन्दःस्तुत्युपगानवदिति । औदुम्बर्यः समिधः कुशाशब्देनाभिधीयन्ते । ता ज्योतिष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते । तत्र 'अभि त्वा शूर नोनुम' इति ऋकूस्थानेऽच उपसंहृत्य मकारेण गानं क्रियते । तथा सति कुशानां, या छन्दसा स्तुतिस्तन्नोपगानकरणभूतो यो मकारस्तत्स्वधर्मान्वयत्वेन यथा नर्मूपता, तद्वदत्रापीत्यर्थः । ननु तत्त्वमस्यादिवाक्यैरभेदो बोधितस्तस्य का गतिरित्यत्राह तदुक्तमिति । 'तद्गुणसारत्वात्तद्व्यपदेश' इति सूत्र एवोक्त गौण्योच्यत इति । इयं या मुक्त्यवस्था सा सानुग्रहीते बोध्या । नित्यलीलास्थानां तूक्तैव पूर्वश्लोके । एतेन रसशास्त्रोक्तनिकुञ्जलीलायां वैचित्र्यासम्भवे साम्यकृतरमणासम्भवे स्वरूपवद्गुणैकत्वकृतरमणासम्भवे सर्वेषामेकविधत्वेन कार्यान्तरासम्भवादौ च ये सन्देहास्तत्प्रसङ्गानुप्रसक्तपतिताश्च ते

सर्वं सामान्येनाप्राकृता बोध्याः । 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष' इति श्रुतेः 'यत्परोक्षप्रियो देवो भगवान् विष्णुरव्यय' इत्यादिस्मृतेश्च रहस्यलीलास्थलत्वान्न विशेषतो विव्रियन्ते ॥

एवं स्वभावभेदादिसन्देहानपाकृत्य, केषाञ्चिद्भगवदुक्ते भक्तिमार्गे, केषाञ्चित्तादृशे ज्ञानमार्गे, केषाञ्चित्तादृशे कर्मणि, तत्रापि केषाञ्चित्स्वतः प्रवृत्तिरासक्तिश्च, केषाञ्चिद्विधिवलात्, केषाञ्चित्स्वभावविरुद्धा देहादयः, इतरेषामनुकूला इत्यादीन् विशेषतो निराकर्तुं पुष्टिजीवान् विभजन्ते ते हि द्विधेति ।

**ते हि द्विधा शुद्धमिश्रभेदान्मिश्रास्त्रिधा पुनः ॥ १४ ॥**
**प्रवाहादिविभेदेन भगवत्कार्यसिद्धये ।**

ते पुष्टिजीवादयः हि यतो हेतोः भगवत्कार्यस्य लीलावैचित्र्यस्य सिद्ध्यर्थं शुद्धमिश्रभेदेन द्विप्रकाराः । मिश्राः पुनः प्रवाहमर्यादापुष्टीनां यो विभेदः विशिष्टः शुद्धादतिरिक्तः सङ्कीर्णो भेदस्तेन त्रिप्रकाराः प्रवाहमिश्रा मर्यादामिश्राः पुष्टिमिश्रा इति । तथाचैवंविधवैचित्र्यार्थमवान्तरभेदात्ते सन्देहा निवार्या इत्यर्थः ॥ १४ ॥

**पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारताः ॥ १५ ॥**
**मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णातिदुर्लभाः ।**

कथं निवार्या इत्याशङ्कायां तदभिज्ञापकं रूपमाहुः पुष्ट्येत्यादि । अत्र पुष्ट्यादिशब्दैर्मार्गा उच्यन्ते । तत्र भक्तिज्ञानकर्मणां विजातीयसंवलितानां मार्गत्वं केवलत्वे भगवद्धर्मत्वमित्येकादशस्कन्धसुबोधिन्यां स्थितम् । पुष्टिशब्दवाच्योऽनुग्रहोऽपि फलबलात्केवलो मिश्रश्चावधार्यते । तत्र केवलो निःसाधनेष्वङ्गीकृतेषु । यथा गोकुलस्थेषु व्रजरत्नेषु सर्वथा प्रपन्नेषु च । 'अहृत्याप्तं निशि शयानमतिश्रमेण' 'केवलेन हि भावेन' 'मत्कामा रमणं जारम्' 'सर्वधर्मान् परित्यज्य' 'तस्मात्त्वमुद्धवोत्सृज्य नोदना'मिति वाक्येभ्यः । द्वितीय उक्तरीत्या त्रिविधः । उभावप्यवान्तरभेदैरनन्तविधावित्यपि 'तथापि यावते'त्यनेन सूचितमेव । एवं सति एते मामभिजानन्त्वित्यभिध्यापूर्विका या पुष्टिस्तया मिश्रा ये पुष्ट्यङ्गीकृतास्ते सर्वज्ञा यथा तथा भगवत्स्वरूपज्ञातारो भवन्ति । तेन सर्वज्ञत्वं तदभिज्ञापकं लिङ्गम् । उदाहरणं तु नारदर्षभादयः । ज्ञानमिश्राः परमभक्ता इति यावत् । 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इत्यादिवाक्यानामेते विषयाः । मद्गुणादिपरा एते भजन्त्वित्यभिध्यापूर्वकेण प्रवाहेण मिश्रा ये पुष्ट्यङ्गीकृतास्ते क्रियारताः भगवदुक्तयज्ञादिप्रसिद्धकर्मपराः । प्रावाहिकभक्ता इति यावत् । तादृशक्रियापरत्वं तदभिज्ञापकम् । उदाहरणं श्रुतदेवनिमिप्रभृतयः । मद्गुणान् जानन्त्वित्यभिध्यापूर्विका या मर्यादा भगवदुक्तमर्यादमर्यादास्तया मिश्रा ये पुष्ट्यङ्गीकृतास्ते गुणज्ञा भगवत उत्पत्त्यादीनां गुणानां मत्स्यादीनां भगवदीयानां सद्गुणैश्वर्यादीनां ज्ञातारो भवन्तीति तदभिज्ञापकम् । मार्यादिकभक्ता इति यावत् । उदाहरणं भीष्मादयः । शुद्धास्तु प्रेम्णा उपलक्षिताः । निरुपधिप्रेमैव तेषामभिज्ञापकः । ते अतिदुर्लभाः । तान् भगवान् कदापि न त्यजति । 'ये दारागारपुत्राप्त-

प्राणान् वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे' 'विसृजति हृदयं न यस्य साक्षाद्धरि'रित्यादिवाक्यानां विषयाः । निबन्धेऽपि 'एतादृशस्तु पुरुषः कोटिष्वपि सुदुर्लभः । यो दारागारपुत्राप्तप्राणान् वित्तमिमं परम् । हित्वा कृष्णे परं भावं गतः प्रेमप्लुतः सदे'त्यनेनोक्ताः । न च ज्ञानिभक्तापेक्षया तेषां निकर्षः शङ्क्यः । 'अविज्ञातं विजानतां विज्ञातमविजानता'मित्यादिश्रुतिभिः स्वरूपावित्त्वेऽप्यत्युत्कर्षस्य सिद्धत्वात् । किञ्च । अतिदुर्लभा ब्रह्मादिदुरापचरणरेणवः । 'षष्टिवर्षसहस्राणी'ति बृहद्वामनपुराणवाक्यात् । अत्र येऽवान्तरभेदास्ते फलबलादूह्याः । तथा ये निरुपधिप्रेमाणोऽपि विक्षिपन्ति कदाचित्ते जीवाः शुद्धाः मनस्तेषां मिश्रम् । ये चैकमनसोऽपि देहेनाशक्ताः सेवितुं तेषां देहा मिश्राः । ये पुनस्तादृशाः समर्था अपि क्रियामन्यादृशीं विदधति, तेषां क्रिया मिश्रेत्याद्यप्यूह्यम् । भक्तिभेदा भक्तिहंसाद्यावभेदा जलभेदादवगन्तव्याः ॥ १५ ॥

एतेन साङ्कर्यदर्शनजाः सन्देहा निराकृता इत्याशयेन साधननिरूपणमुपसंहरन्ति एवमिति ।

**एवं सर्गस्तु तेषां हि फलमत्र निरूप्यते ॥ १६ ॥**

**भगवानेव हि फलं स यथाविर्भवेद्भुवि ।**
**गुणस्वरूपभेदेन तथा तेषां फलं भवेत् ॥ १७ ॥**

एवम्प्रकारकं सर्गभेदमनुसन्धाय ते सन्देहा निवारणीया इत्यर्थः । अतः परं शुद्धानामपि बाल्यादिभेदेन नानाविधं फलं दृश्यते । तत्कथम् । किञ्च । 'कायेन तु फलं पुष्टा'वित्यत्र तृतीयानिर्देशात् किं स्वरूपातिरिक्तं फलमित्याद्याशङ्कानिरासाय च फलनिरूपणं प्रतिजानते फलमिति । तदाहुः भगवानेव हीति । 'यो वै भूमा तत्सुखम्' 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रित्यादिश्रुतेः । 'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य' इति सूत्रे सेतुर्विधृतिः । 'यावान् वा अयमाकाशस्तावानेषः' 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'य एषोऽन्तरादित्ये हिरण्मय' इत्यादिभिः सेत्वादिव्यपदेशैः फलान्तरसन्देहे, 'सामान्यात्त्वि'ति सूत्रेण संसारतरणसाधनत्वनिर्लेपत्वातिदुर्लभत्वदिव्यत्वाद्यर्थं ते धर्मा मधव्युच्यन्ते । तावता तदतिरिक्तस्य फलस्य न सिद्धिरिति व्यवस्थापनाच्च भगवानेव फलम् । स्वर्गमोक्षादयस्तु मार्गान्तरे । तान्यपि 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेर्भगवदानन्दांशभूतानि । मोक्षोऽप्यात्मसुखात्मा ब्रह्मानन्दात्मा च तथा । पुष्टिमार्गे तथा न, किन्तु मूलरूपो भगवानेव फलम् । तत्र प्रमाणभूतां युक्तिमाहुः हीति । मार्गभेदसाधनावसर उक्तैः प्रमाणैरेव तथा निश्चयादित्यर्थः । तृतीयानिर्देशस्तु फलस्य साधनासाध्यत्वबोधाय । अतो न विरोधः । तत्र विशेषमाहुः स इत्यादि । स भगवान् भुवि हृदयभूमौ लीलास्थाने वृन्दावनादौ च गुणस्वरूपभेदेन यदर्थं यथा आविर्भवेत्, तेषां तथा तादृशगुणस्वरूपभेदेन फलं भवेत्, फलरूपो भवेत् । तथाच यदर्थं यद्गुणरूपेणाविर्भवति नृसिंहरामवामनादिरूपेण, तेषां मुक्तावपि तेन रूपेण फलति । यदर्थं च बाल्यपौगण्डकिशोररूपेणाविर्भवति, तेषां मुक्तावपि तथैव फलति । तेन तदर्थकतयाविर्भाव एव तादृक्फलगमकः । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' । 'तद्वैनान् भूत्वावती'ति स्मृति-

श्रुतिप्रमाणकश्च । तेन 'मन एव मनुष्याणां पूर्वरूपाणि शंसति । भविष्यतश्च भद्र ते तथैव न भविष्यत' इति न्यायेन यथा पूर्वं तद्धृदि प्रकटीभूतः, तथैवाग्रे मुक्त्यनन्तरमपि पूर्ववदेव तेषु तां लीलामनुभावयतीति । तेन नित्यत्वमपि लीलायाः स्थापितम् । प्रपञ्चितमेतद्विद्वन्मण्डने लीलानित्यत्ववाद आकरे च । एवं फलतः पुष्टिमार्गस्यान्यमार्गसाङ्कर्यं निराकृतम् ॥

अतः परमवान्तरसाङ्कर्येण मिश्रेषु क्वचिच्छापो दृश्यते. स पुष्टिमार्गीयत्वात् 'तथा न ते माधव तावका' इति वाक्यविरोधाचानुचितो निकर्षजनकश्चेत्याकाङ्क्षायां समादधते ।

**आसक्तौ भगवानेव शापं दापयति क्वचित् ।**
**अहङ्कारेऽथवा लोके तन्मार्गस्थापनाय हि ॥ १८ ॥**

आसक्ताविल्यादि । अन्यासक्तौ सत्यां भगवानेव शापं दापयति । यथा नलकूबरादेः । क्वचिदिति । यत्र तस्या औत्कट्यं तत्र । एवमहङ्कारे । यथा चित्रकेतुपरीक्षितोः । तथाच तद्दोषपरिहाराय भगवत्कृत एवाय तत्तद्द्वारको दण्डः । तेन न निकर्षजनकः । तर्हि यत्र नोभयं तत्र कथं शाप इन्द्रद्युम्नादौ । तत्राहुः लोक इत्यादि । यद्येवं न कुर्यात्, तदा लोके मर्यादादिमार्गा न तिष्ठेयुः । तथा सति लोकोच्छित्तिः स्यात् । अतो लोकसङ्ग्रहार्थं तथा करणम् । अत्र गमकमाहुः हीति । 'यद्यदाचरति श्रेष्ठ' इति वाक्येन तथा निश्चयादित्यर्थः । शापस्य भगवत्प्रयुक्तत्वं मौसले स्फुटम् । तेनान्यत्राप्यनुसन्धेयम् ॥ १८ ॥

**न ते पाषण्डतां यान्ति न च रोगाद्युपद्रवाः ।**
**महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे ॥ १९ ॥**
**भगवत्तारतम्येन तारतम्यं भजन्ति हि ।**

ननु गमकमन्तरेण तथानुसन्धानमशक्यमित्यत आहुः न ते इत्यादि । ते शापविषयाः पाषण्डतां न यान्ति । ये शप्तास्ते पुनरत्यन्त भक्ता एव जाताः । अतो ज्ञेयं भगवतैवायं दण्डः कृत इति । ननु दण्डस्थले युक्तमेतत्, शेपे तु नायं समाधिरित्यतस्तत्राहुः न चेत्यादि । तेषामपि रोगाद्युपद्रवा न भवन्ति । प्रायेण महानुभावा एव भवन्ति । महानुभावत्वाभावेऽपि रोगाद्यभावस्तु भवत्येव । एतेनान्यार्थं भक्तद्रुह्यदात्तृत्वदोषोऽपि निराकृतः । तथापि स्वस्यार्थमेवान्यकरण न कृपालोरुचितमित्यत आहुः शास्त्रमित्यादि । शिष्यतेऽनेनेति शास्त्रं शापदापनम् । तत् शुद्धत्वस्य हेतुर्निरुपधिरमात्मक प्रेम तदर्थम् । यद्येवं न कुर्यात्, तदा मार्गान्तरमिश्रत्वनिवृत्त्यभावाच्छुद्धपुष्टत्वं न भवेत् । तथाच तथापि पश्चोन्मुग्धा कृपैव बीजम्, अतो न भगवति दोषलेशोऽपीत्यर्थः । ननु युक्तमेतत्, तथापि येषां शुद्धत्व चिकीर्षितं ते मिश्रेष्वप्युत्कृष्टा एव वाच्याः, तथा सति तेषां कथमीदृशो भावः । न हि तादृशेषु कर्म आरब्धादिरूप प्रभवति, न वा ते भगवज्जानन्तीति सन्देहे, तेषामेतस्मात् बीजमाहुः भगवदित्यादि । 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्या भगवाननन्तरूपः । 'अयं शिरः शिराप्यायिवनमेकमेकेन यथारात्रशापेन न मम शिशो वैश्वानरः प्रथमः पाद' इत्यादिश्रुतिभिर्व्यूहादिबोधकस्मृतिभिश्च

तेषु तरतमभावयुक्तश्च । एवं सति प्रकारान्तरेणापकर्षाभावे तत्कतुन्यायेनोपास्यतारतम्यप्रयुक्तं तारतम्यं केन वार्येत । एवं तारतम्ये उत्कृष्टानामप्येवम्भावो न दुर्घटः । अत एव सङ्कर्षणोपासकस्य चित्रकेतोः सङ्कर्षणचरणे मनोनिवेशो वृत्रेन्द्रयुद्धे । निर्विशेषोपासकस्येन्द्रद्युम्नस्य गजेन्द्रत्वेऽपि निर्विशेषोपवर्णनम् । तदेवदुक्तं हीति । तथाच तन्निवृत्त्यर्थमेवङ्करणमित्यर्थः ॥ १९ ॥

एवं प्रासङ्गिकं परिहृत्य इदानीन्तनेषु पुष्टिजीवत्वज्ञापकं लक्षणं वदन्तः प्रसङ्गात्सर्वेषामाहुः।

**वैदिकत्वं लौकिकत्वं कापट्यात्तेषु नान्यथा ॥ २० ॥**
**वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्ययः ।**

वैदिकत्वमित्यादि । कापट्यमन्तर्बहिर्विसंवादः । स च स्वभावस्य गोपनाय तत्तत्प्रकाशनमित्येकः, स्वस्य प्रयोजनाभावेऽपि तत्करणमित्यपर इत्युभयविधात्कापट्यात्तेषु वैदिकत्वं लौकिकत्वम् । सहजं तु वैष्णवत्वं भगवदाज्ञाकारित्वम् । ततः वैष्णवत्वादन्यत्र विपर्ययः । एकत्र वैदिकत्वमितरत्र लौकिकत्वं सहजम् । तदतिरिक्तत्वं कापट्यादिति । तेन तेन लक्षणेन ते ते बोध्या इत्यर्थः । एवञ्च तेषां फलं भगवत्तारतम्येनेत्युक्तरीत्या तत्कतुन्यायेन भावनानुरूपं भवति । तत्राप्येतन्मार्गीयाणां भगवतो भजपतेरेव भावनेति व्रज एव सेवौपयिकदेहप्राप्तिर्भवति । परं तत्कृतसेवानुरूपा । सेवाफलग्रन्थे तथैव सिद्धत्वादिति ॥ २० ॥

**सम्बन्धिनस्तु ये जीवाः प्रवाहस्थास्तथापरे ॥ २१ ॥**
**चर्षणीशब्दवाच्यास्ते ते सर्वे सर्ववर्त्मसु ।**
**क्षणात् सर्वत्वमायान्ति रुचिस्तेषां न कुत्रचित् ॥ २२ ॥**
**तेषां क्रियानुसारेण सर्वत्र सकलं फलम् ।**

ननु यदि त्रिविधा एव जीवास्तर्हि कथं केचन सर्वत्र तुल्यदर्शनाः सर्वाभिनिविष्टा दृश्यन्ते, तत्राहुः सम्बन्धिन इति । तुशब्दस्त्रैविध्यपक्षं व्यावर्तयति । ये जीवाः सम्बन्धिनः उक्तत्रिविधमार्गसम्बन्धभाजः, तथा अपरे इतोऽपि हीनाः प्रवाहस्थाः, ते चर्षणीशब्दवाच्याः । 'चृषि प्रजननैश्वययो'रिति धात्वर्थोऽजननस्वातन्त्र्याभ्यां युक्ताः । तेन तद्योग्यत्वाच्चर्षणीभिः परिभ्रमणशीलाभिः शक्तिभिर्व्याप्तास्तच्छब्देनैवोच्यन्ते । तदभिज्ञापकमाहुः ते सर्व इत्यादिपादत्रयेण । तेषां फलमाहुः तेषामिति । तथाच पञ्चमे मध्यमा अधमाश्च ये मानुषा उक्तास्त एते । अत एव 'संयमने त्वनुभूयैनरेषामारोहावरोहौ तन्निदर्शना'दिति सूत्रेण यमनियता तेषां गतिर्विचारिता । 'वैरस्ते निविश्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिन' इति । अतस्तेषां यथाकर्म सकलं फला खण्डमत्वमदितं खण्डितं फलं सर्वत्र भवति । तथा तदनुभवन्तः सम्बन्धिनः संसरन्त्येव । स्वनियोग्यत्वात् । प्रवाहस्थास्तु तथानूता निरविवोऽपि भवन्तीत्यर्थः ॥ २२ ॥

एवमन्त्रानुभवरूपत्विनं सर्वमुक्त्वा क्रमप्राप्तं प्रवाहभेदं वदिष्यन्तो व्यावर्तकधर्मैः प्रवाहेण च स्वरूपभेदस्य सिद्धत्वात्पाधनादिभेदं वक्तुं प्रवाहिकजीवदेहक्रियाभेदनिरूपणं प्रतिजानते प्रवाहस्थानिति ।

प्रीतिरविवेकानां विषयेष्वनपायिनी त्वामनुस्मरतः सा मे हृदयान्मापसर्पत्वि'ति । **तादृशस्यापीति** । उक्तस्नेहादिमतोपि गृहस्थस्य गृहरूपं स्थानं सततं सर्वदैव विनाशकं विनाशहेतुः । स्नेहादिसम्पत्तेः पूर्वमेव विनाशकत्वेपि तत्सम्पत्त्यनन्तरं तथा न भविष्यतीति मनसि गृहस्थैनं धार्यमिति भावः । अत्र विनाशकत्वं प्रतिबन्धकत्वमेव । यद्वा । तादृशस्यापि सततं गृह एव स्थानं स्थितिरिति । ईदृशगृहस्थेन मध्ये मध्ये भगवद्भक्तपुण्यक्षेत्रनद्यायतनेष्वटनं कार्यम् । न तु गृहमात्रैकस्थितिशीलतया भाव्यमिति भावः ॥ ६ ॥

पूर्वं गृहस्थितस्यैव श्रवणाद्युक्तमिदानीं तस्य बहुप्रतिबन्धकत्वानुसन्धानेन समीहितासिद्धिमाशङ्क्य निःप्रत्यूहोपायमाहुः त्यागं कृत्वेति । लभेतेति ।

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥**

**लभेत सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।**

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

यः पुरुषः सकलदुःखाकरगृहत्यागं कृत्वा पूर्वोक्तश्रवणादिषु यतेत्, सः सुदृढामत्यन्तदृढामन्यैः प्रतिबन्धसहस्रैरप्यतिरस्कृताम् । सर्वतोपि ज्ञानादिभ्योप्यधिकामधिकफलदायिनीं परां भगवत्प्राप्तेश्चरमकारणभूतां भक्तिं लभेत प्राप्नुयादित्यर्थः । तं विशदयन्ति **तदर्थार्थैकमानस** इति । स भगवानेवासावर्थश्च तदर्थः, अर्थः प्रयोजनं उद्देश्यमिति यावत् । स चासावेकश्चार्थः । तदर्थः स एवार्थैकः, तदर्थार्थैकः, तस्मिन्मानसं मनो यस्येति । एवंविधः सन् यतेदिति पूर्वेणान्वयः । यतेदिति यत्नार्थं कं कृत्वा पश्चात् नामधातुत्वात्परस्मैपदं ज्ञेयम् । ननु त्यागरूपोपाये विद्यमाने किमन्योपायकथनमित्यत आहुः त्याग इति । त्यागसिद्धौ सर्वं सुकरम् । सैव तु नोपपद्यते । तत्र हेतुः । बाधकानां प्रतिबन्धकानां भूयस्त्वं बाहुल्यादित्यर्थः । तत्र हेतुः **दुःसंसर्गात्** । दुष्टानां भगवद्बहिर्मुखाणां यः संसर्गः सम्बन्धः शारीरादिस्तस्मादित्यर्थः । तथैवान्नतः दुष्टादन्नादित्यर्थः । अन्नदोषास्तु पञ्चमहायज्ञाकरणाद्भगवदनिवेदनाच्चोद्भवन्तीति ज्ञेयम् । श्रुतिरपि 'मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी'ति । अर्थस्तु अप्रचेताः मूढः मोघं व्यर्थमन्नं विन्दते प्राप्नोति । यतः सो अन्नलाभस्तस्य वध एव । इदं तु सत्यमेवाहं ब्रवीमि । न मृषेत्यर्थः । किञ्च । अर्यमाणं सूर्यं न पुष्यति, देवयज्ञाकरणात् । उपलक्षणमेतत्, देवतामात्रमपि । सखायं अतिथिं नो न पुष्यति, मनुष्ययज्ञाकरणात्, किन्तु स्वयमेव अश्नाति, अतः केवलादी पुमान् केवलाघ एव भवति । तदन्नं नाति, किन्तु पापमत्तीत्यर्थः । इममर्थं भगवानप्याह 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणा'दिति । अनिवेदितभक्षणेपि दोषः श्रूयते । 'अम्बरीष नवं वस्त्रं फलं अन्नाद्यमौषधम् । अनिवेद्य हरेर्भुञ्जन् सप्तजन्मानि नारकी'ति पुराणान्तरे ॥ ७ ॥

२ भक्ति.

त्यागस्याशक्यत्वं उक्त्वा सुशक्योपायमाहुः अत इति ।

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**
**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**
**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**

उक्तहेतोर्हरिस्थाने भगवदधिष्ठितप्रदेशे तत्परैर्भगवदेकपरैः तदीयैर्भगवदीयैर्भक्तैः सह अदूरे नैकट्यं यथा स्यात्तथा स्थेयमित्यर्थः । अतिनैकट्यासम्भवे विप्रकर्षे वा, किञ्चिद् दूरेपि स्थेयम्, नत्वतिदूर इति भावः । नन्वेवं स्थितौ किमत आहुः यथेति । येन प्रकारेण स्थितिरुक्ता तथाकरणे चित्तमन्तःकरणं न दुष्यति, न दोषग्रस्तं भवतीत्यर्थः । एवं भगवदीयैः सह स्थितौ यस्य परमभाग्यवतः सेवायां स्वशरीरसाध्ये भगवद्भजने कथायां तद्गुणश्रवणे वा आसक्तिः तद्विहाय स्थातुमशक्तिः दृढा निश्चला भवेत् तस्य पुंसो यावज्जीवं आदेहपातं क्वापि कस्मिंश्चिद्देशे काले वा नाशः अन्यथाभावो न भवतीति । अस्मिन्नर्थे मम मतिः सम्मतिरेवेत्यर्थः । वाशब्दावन्योन्यं समुच्चिनुतः ॥ ८ ॥ ९ ॥

नन्वेवं सति पूर्वोक्तत्यागस्य वैयर्थ्यमेवेत सार्थकत्वमपीत्याकांक्षायामाहुः बाधेति ।

**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

त्यागे सर्वथा बाधः सम्भावितश्चेद्भवेन्न तत्कृतस्तदा एकान्ते वासः सर्वत्यागपूर्विका स्थितिररण्यादौ नेष्यते न सम्मतेत्यर्थः । तदभावे स्थिरैवेति भावः । नन्वेकान्तस्थितौ व्याघ्रादिभिरपमृत्युरपि सम्भाव्यते, वरं तदपेक्षया गृहस्थितिरित्यत आहुः हरिस्त्विति । हरिशब्दार्थस्तु पूर्वोक्तोनुसन्धेयः । तुशब्दः प्रसिद्धौ । सर्वतः सर्वदुःखहेतोः रक्षणं करिष्यत्येव, न संशय इत्यर्थः ॥ १० ॥

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।**
**य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥**

उपसंहरन्ति । एवमुक्तप्रकारेण भगवच्छास्त्रं भगवत्सम्बन्धिशास्त्रं शिक्षणम् । गूढं गुप्तं तत्त्वं यस्य तादृशं निरूपितम् । यः पुमानेतदुक्ताचरणेऽशक्तः सन्नेतच्छास्त्रमुपादित्सुः सम्यगधीयीत, अर्थानुसन्धानपूर्वकं पठेत्, तस्याप्येतच्छास्त्रोक्ता रतिर्दृढा भवेदित्यर्थः ॥ ११ ॥

भक्तपङ्क्तिचित्तस्य तदुद्रेकाय साम्प्रतम् । श्रीआचार्यसामृतोद्धृता विवृता भक्तिवर्धिनी ॥१॥

इति श्रीवल्लभनन्दनचरणैकशरणश्रीरघुनाथकृतं भक्तिवर्धिनीविवरणं संपूर्णम् ॥

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीकल्याणरायविरचितविवृतिसमेता ।

वामे करे गिरिं स्त्रीषु मुदमिन्द्रे च साध्वसम् । धारयन्तमहं वन्दे चित्रं गोपेषु गोप्रियम् ॥१॥
यदङ्गीकृतितो भक्त्या स्वानन्दं नन्दनन्दनः । ददाति तान्प्रभून् वन्दे सर्वकामार्थसिद्धये ॥ २

श्रीकृष्णभक्तिस्पृष्टान्तःकरणानां स्वकीयानां तत्फलविलम्बासहिष्णवः श्रीवल्लभाचार्या एकादशेन्द्रियशोधिका भक्तिरित्येकादशभिः श्लोकैर्भक्तिप्रवृद्ध्युपायनिरूपणं प्रतिजानते यथेति ।

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

येन प्रकारेण भक्तिः प्रकर्षेण वृद्धिं प्राप्नुयात्तेन प्रकारेण साधनं विनिरूप्यत इत्यर्थः । वृद्धौ प्रकर्षोत्र फलोन्मुखत्वम् । भक्तिप्रवृद्धेरुत्तरावधिः क इत्याकांक्षायामाहुः **बीजभावे दृढे तु स्यादि**ति । बीजरूपो भावोऽल्पस्नेहः, तस्मिन् दृढे व्यसनात्मके सति प्रवृद्धिः पूर्णा स्यादित्यर्थः । भावे बीजत्वोक्तिः फलेऽस्य निदानत्वबोधनाय । प्रथमतस्तत्र किं साधनमित्याकांक्षायामाहुः **त्यागाच्छ्रवणकीर्तनादि**ति । भक्तिमार्गविरोधिनोऽन्यभजनादेस्त्यागात् । श्रवणं कीर्तनं च ताभ्याम् । इदमुपलक्षणम् । स्मरणमाचार्यभक्तिर्विश्वासश्चेत्यपि ज्ञातव्यम् । श्रवणकीर्तनयोरेकवद्भावः कर्मणोरिव नात्र विरोध इति ज्ञापयति । न हि यथैकस्मिन्कर्मणि क्रियमाणे नान्यत् क्रियते, तथा श्रवणकीर्तनयोरपि ॥ १ ॥

भक्तिप्रवृद्धौ साधनान्युक्त्वा प्रकारमाहुः बीजदार्ढ्यप्रकारस्त्विति ।

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

बीजरूपस्य भावस्य दृढतासिद्ध्यर्थमयं वक्ष्यमाणः प्रकारः । इममेवाहुः । गृहस्थितेर्भजनानुकूलत्वात् । 'श्रुतिस्मृती ममैवाज्ञे' 'वर्णाश्रमाचारवता पुरुषेणे'त्यादिवाक्यैः स्ववर्णाश्रमाचारधर्मेण गृहे स्थित्वा व्यावृत्तिः कार्यान्तरव्यासङ्गस्तद्रहितोऽव्यावृत्तः । श्रवणादिभिः सहितया परिचर्यया कृष्णं सदानन्दं पुरुषोत्तमं भजेत् । कृष्णपदात्फलत्वेन भजनं,

१ साधनमपि निरूप्यत इति पाठः ।

न साधनत्वेनेति ज्ञाप्यते । तत्राद्युक्तपूजायां शीतलशंखोदकस्नानादिमत्त्वेन भक्तिमार्गीयाणामनधिकारात् । स्नेहाभावे सेवापि पूजातुल्यैव भातीति ज्ञापनार्थं पूजापदोक्तिरत्र ज्ञेया।

'तज्जन्म तानि कर्माणि तदायुस्तन्मनोवचः । नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः' इत्यादिवाक्यैर्भगवद्भजनाभावे जन्मादिवैयर्थ्यात् व्यावृत्तिराहित्येन सेवाया असंभवेपि यथासंभवं शक्त्यनुसारेण श्रवणादिकमेव कार्यम्, नत्वन्यथा स्थातव्यमित्याशयेनाहुः व्यावृत्तोपि हरौ चित्तमिति ।

**व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा ।**
**ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥**
**बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।**

कार्यान्तरव्यासक्तोपि हरौ दुःखहरणशीले चित्तं निधाय श्रवणादौ यत्नं कुर्यादित्यर्थः । यत्तु प्रयत्ने । यतेदिति पाठे अनुदात्तेत्त्वात्मनेपदानित्यत्वात् साधुत्वम् । एवं वर्तमानस्य प्रेमादिकं भवतीत्याहुः ततः प्रेमेति । भगवत्सेवया श्रवणादितोपि चित्तसञ्जावस्थायत् प्रेम भवति । स्वविषये स्वतः प्रवर्तको भावः प्रेमशब्देनोच्यते । प्रेमानन्तरं तथा पूर्वोक्तादेव सङ्कल्पावस्थावदासक्तिर्भवति । स्वविषये विविधमनोरथजनको भाव आसक्तिः । व्यसनं च यदा प्रभुकृपया भवेत्, तदा तद्बीजं बीजरूपो भावः शास्त्रे भगवच्छास्त्रे दृढमन्यापरिभूतमुच्यते, यत्फलं जनयति, दुष्टसंसर्गादिना नश्यत्यपि न । व्यसनं स्वविषयं विना स्थातुमशक्तिजनको भावः ।

प्रेमासक्त्योर्ज्ञापके आहुः स्नेहादिति ।

**स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥**
**गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।**
**यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥**
**तादृशस्यापि सततं गेहस्थानं विनाशकम् ।**

यथा यथा भगवति स्नेहस्तथा तथान्यत्र हीयत इत्यर्थः । भगवत्यासक्त्या भगवदनुपयोगिगृहादिषु अरुचिरप्रीतिर्भवति । भगवति प्रेमासक्त्योः सर्वपुरुषार्थसाधिकयोरपि गृहस्थानां गृहासक्तानामविवेकिनां गृहादिषु रागाभावजनकत्वेन स्त्रीपुत्रादिपोषणासंभवरूपदोषोद्भावनेन बाधकत्वं, स्वस्य प्रवृत्तिमार्गीयत्वेनानात्मधर्मत्वं च भासते । अथवा । सर्वेषामात्मरूपे हितकारिणि भगवत्यनात्मत्वं भासते । वस्तुतस्तु 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' 'न मे भक्तः प्रणश्यति' 'किमलभ्यं भगवती'त्यादिवाक्यैर्भगवानैहिकपारलौकिकसाधक इति तेषामेवेदमज्ञानमिति भासत इत्युक्तम् ।

यदा कृष्णे पूर्णानन्दे व्यसनं स्यात्, तदैव जीवः कृतार्थः पूर्णार्थः स्यात् । एवकारेण प्रेमासक्त्योर्व्युदासः । हि युक्तोयमर्थः । यतः तादृशस्यापि प्रेमासक्तिमतोपि सततं निरन्तरं गेहस्थानं गेह एवावस्थानं विनाशकं भावस्येति शेषः । तेन सत्सङ्गादिकं कर्तव्यमिति भावः ।

भक्तिप्रवृद्धिसाधने प्रकारान्तरमाहुः त्यागं कृत्वेति ।

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥**

**लभते सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।**

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

यस्तु पुरुषो गृहे भगवद्भजनप्रतिबन्धं ज्ञात्वा गृहत्यागं कृत्वा श्रवणादौ यतेत् यत्नं कुर्यात् । 'यतेदि'ति पाठे पूर्ववज्ज्ञेयम् । तदर्थार्थैकमानसः तदर्थं भगवन्निमित्तं योर्थः श्रवणादिः तस्मिन् । यद्वा । भगवतोर्थः प्रयोजनं लीला तदर्थार्थं तन्निमित्तं एकमनन्यं मानसं यस्य एतादृशः सन् सुदृढां विषयाद्यपरिभूतां सर्वतोपि ज्ञानयोगादिभ्योप्यधिकामधिकफलदायिनीं परां प्रेमलक्षणां फलरूपां भक्तिं लभेत प्राप्नुयादित्यर्थः । तर्हि निर्विशेऽस्मिन् प्रकारे विद्यमाने किमर्थं प्रकारान्तरमाश्रयणीयमित्यत आहुः **त्यागे बाधकभूयस्त्वमिति** । दुःसङ्गसर्गात् । दुष्टानां भगवद्बहिर्मुखादीनां सहभोजनादिना सङ्गात् । तथान्नतः दुष्टान्नात् । वैश्वदेवभगवच्चरणामृतप्रक्षेपादिनाप्यन्नदोषनिवृत्तेः संभवात्सङ्गदोषोऽधिक इति तस्य प्रथमनिर्देशः । गृहत्यागे बाधकभूयस्त्वं बाधकानामन्तरायहेतूनां बाहुल्यमस्ति, तेन यावद्गृहे भजनं संभवति, तावद्गृहत्यागो न कर्तव्यः, सर्वथा भजनाऽसंभवे कर्तव्यः । तदुक्तं श्रीभागवतार्थतत्त्वदीपे 'भार्यादिरनुकूलश्चेत्कारयेद्भगवत्क्रियाम् । उदासीने स्वयं कुर्यात्प्रतिकूले गृहं त्यजे'दिति ।

तेन गृहस्य त्यागेऽत्यागेपि यावद्व्यसनं संपद्यते, तावत्सत्सङ्गादिकं कर्तव्यमिमित्याहुः *अतः स्थेयं हरिस्थान इति ।*

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**

**अदूरविप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

यतः पूर्वोक्तं बाधकमनः कारणात् हरिस्थाने व्रजमथुरादौ तदीयैर्भगवन्मार्गीयैरनन्यैः तत्परैः सेवाकीर्तनादिना भगवत्परैः सह अदूरं निकटं यथा भवति तथा स्थेयम् । निकटस्थित्यसंभवे दूरेपि स्थित्वा तदनुसरणं कर्तव्यमित्याहुः **विप्रकर्षे** वेति । भक्तिमार्गस्थत्वाभावे त्ववैष्णवसङ्गात् स्वस्य कार्यं न सिध्येत्, तत्परत्वाभावे भगवत्सेवाकथाद्यभावात् स्वस्य लाभो न स्यादिति द्वयमुक्तम् । निकटे दूरे वा स्थित्वा तादृशभगवदीयानुसरणे तत्कृपया चित्तं दुष्टं न भवतीत्याहुः **यथा चित्तं न दुष्यतीति** ॥ ८ ॥

एवं सत्सङ्गे सति केवलमनिष्टनिवृत्तिरेव न, किन्त्विष्टप्राप्तिरपि भवतीत्याहुः सेवायामिति ।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**

यस्य महत्कृपया सेवायां स्वशरीरसाध्यश्रीकृष्णभजने, कथायां तद्गुणलीलादिश्रवणे दृढा विषयाद्यनभिभूता आसक्तिर्भवेत्, यावज्जीवमादेहपातं, तस्य क्वापि कुत्रापि देशे कालेऽपि नाशः भगवद्भजनानुरूपफलप्राप्तिर्न भवति । अथवा । भावस्य नाशो भावान्तरोत्पत्तिर्वा न भवति इति मम मतिः । प्रभुः कृपया को वेद किं दास्यति । वाशब्दावनुक्तस्मरणादिसमुच्चयार्थौ ॥ ९ ॥

ननु भगवदीयानामपि सङ्गः किमर्थं कर्तव्यः, एकाकिना अरण्यादौ भगवल्लीलादिचिन्तनं कुर्वता कथं न स्थेयमित्यत आहुः बाधसम्भावनायामिति ।

**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

तुशब्दः त पक्षं व्यावर्तयति । बाधोत्र चित्तोद्वेगविक्षेपादिः, स चेन्न सम्भवति तदा तथैव स्थेयम् । बाधसम्भावनायां सत्यामेकान्तेऽरण्यादौ वासो नेष्यते, न इष्टः । नवीनतनबाधाभावेपि यद्दिश्चौरव्याघ्रादिभयसम्भवे सति कथं स्थेयमित्यत आहुः हरिस्त्विति । सर्वदुःखहर्ता प्रभुः सर्वतः सर्वस्मात् सुदर्शनादिना रक्षां करिष्यति । 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।' 'न मे भक्तः प्रणश्यती'त्यादिवाक्यैरस्मिन्नर्थे न संशय इत्यर्थः ॥ १० ॥

श्रीवल्लभाचार्याः सगुणनिर्गुणभेदेन दशधा भक्तिरिति दशभिः श्लोकैर्भक्तिवर्धिनीप्रक्रियां निरूप्य, एतदुक्ताचरणैतत्पाठयोः फलमाहुः इत्येवमिति ।

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।**
**य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥**

इतीदं गूढं गुप्तं तत्त्वमनारोपितं रूपं यस्यैतादृशं भगवच्छास्त्रं भक्तिप्रतिपादकम् । अथवा । गूढतत्त्वं यथा स्यात्तथा, एवममुना प्रकारेण निरूपितम् । य एतदुक्तमाचरेत्तस्य भगवति दृढा रतिः प्रीतिः स्यात् । यो नैतदुक्ताचरणाशक्तः स त्वेतद्भक्तिवर्धिनीरूपं समधीयीत श्रद्धाभक्तिपूर्वकं पठेत् । तस्याप्यग्रे दृढा रतिः स्यादित्यर्थः ।

श्रीमत्कल्याणरायेण श्रीगोविन्दात्मजेन वै । गुरून् नत्वा यथाबुद्धि विवृता भक्तिवर्धिनी ॥

इति श्रीविट्ठलेश्वरचरणैकतानश्रीकल्याणरायविरचिता भक्तिवर्धिनीविवृतिः ।

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीहरिरायविरचितभक्तिवर्धिनीविवृतिः ।

---

श्रीवल्लभाचार्यपदानुकम्पाबलेन किञ्चित् परिचिन्त्य चित्ते ।
निरूप्यते भक्तिविवृद्ध्युपायनिरूपणग्रन्थनिरूपितोर्थः ॥ १ ॥

प्रकृतिप्रत्ययार्थाभ्यां भक्तिः सप्रेमसेवनम् । चेतस्तत्प्रवणं तच्च तनुवित्तप्रसाधितम् ॥ २ ॥
तत्र मूलं हरेरङ्गीकारोथ शरणागतिः । ततः समर्पणं जीवदेहसम्बन्धिवस्तुनः ॥ ३ ॥
ततो योग्यत्वसम्पत्त्या सेवनं तु प्रवर्तते । पूर्वोक्तरूपतद्वृद्धिस्तनुवित्तजसेवनात् ॥ ४ ॥
तदुपायापरिज्ञाने सा कथं वृद्धिमेष्यति । अतस्तद्वृद्ध्युपायोत्र ग्रन्थे प्रभुभिरुच्यते ॥ ५ ॥
यथा येन प्रकारेण चेतस्तत्प्रवणात्मिका । भक्तिर्व्यसनपर्यन्तं वृद्धा भवति सर्वथा ॥ ६ ॥
तथा तेन प्रकारेण य उपायः स कथ्यते । उपायस्तु स एवात्र तनुवित्तजसेवनम् ॥ ७ ॥
त्यागात्यागविभेदेन गृहे भक्तगृहे तथा । बीजभावः प्राथमिको यतः सेवा प्रवर्तते ॥ ८ ॥
स्वामिसेवकभावात्मा तद्दार्ढ्याद्वृद्धिसंभवः । अथवा त्यागपक्षेण कृतश्रवणकीर्तनात् ॥ ९ ॥
अनायासेन सुदृढभक्तिप्राप्तिर्न संशयः । अत्यागपक्षे क्रमशो भक्तिवृद्धिरिहोच्यते ॥ १० ॥
अतो हि बीजदार्ढ्यस्य प्रकारोत्र निरूपितः । गृहे स्थितिः स्वधर्मेण वर्णाश्रमगतेन हि ॥ ११ ॥
विधेया नापि सेवार्थमधर्मेण कथञ्चन । अधर्मे स्थितितो बुद्धिनाशाद्दुःसङ्गतस्तथा ॥ १२ ॥
ततो दुष्कर्मकरणे चेतस्तत्प्रवणं कुतः । अतस्तथाविधं कृष्णं सदानन्दं परं बृहत् ॥ १३ ॥
लोकवेदफलाद्यर्थव्यावृत्तिरहितो जनः । भजेत्सेवेत तन्वाद्यैस्तत्र व्यावृत्तियोजनम् ॥ १४ ॥
प्रेम्णैव भजनं तत्र माहात्म्यज्ञानसिद्धये । पूजा प्रोक्ता निबन्धे या मर्यादारहिता हरौ ॥ १५ ॥
बाहिर्मुख्योद्भवाभावसिद्धये श्रवणादयः । अयं तु मुख्यकल्पो हि सर्वथा साधको मतः १६
यथा रोगशतार्तस्य कुपथ्यरहितौषधम् । एवंविधस्य निर्वाहं स्वयमेव करोति हि ॥ १७ ॥
योगक्षेमोद्वहे स्वीयप्रतिज्ञापरिपालकः । सेवकस्यापि विश्वासः कर्तव्योऽवश्यमेव हि ॥ १८ ॥
नहि सेवकनिर्वाहं विदधाति न हि प्रभुः । तथापि जीवप्रकृतिवशतो न त्यजत्यसौ ॥ १९ ॥
व्यावृत्ति दृढविश्वासाभावतो लोकवेदयो । तस्य भक्तिप्रवृद्ध्यर्थमनुकल्पोपि रूप्यते ॥ २० ॥

---

१ कारणमित्यर्थः । २ यथा वृक्षबीजे सूक्ष्मरूपेण फलपर्यन्तावस्थास्थितौ वृक्षस्य फलपर्यन्ता वृद्धिः स्थूलरूपस्य भवति, तथा भक्तिबीजे स्वामिसेवकभावे व्यसनपर्यन्तावस्थानां सूक्ष्मरूपेण स्थितौ भक्तिद्रुमस्य स्थूलरूपस्य व्यसनपर्यन्ता वृद्धिर्भवतीति भावः । ३ स्थूलस्येति शेषः । ४ तदनन्तरमित्यर्थः ।

व्यावृत्तिसहितो वापि चित्तमात्रं हरौ परे । सर्वकार्येषु सततं यत्नेन स्थापयेत्पुनः ॥ २१ ॥
तथापि भगवत्कार्यातिरिक्त उपयोगिनि । तथाभावाभाववतां चित्तवैमुख्यसंभवः ॥ २२ ॥
तदर्थं स्थापयेत्तत्तु श्रवणादावपि स्वतः । एवंविधा तु सततं प्रेमासक्तिक्रमेण हि ॥ २३ ॥
भवेद्व्यसनसंसिद्धिः प्रवृद्धासौ तदा रतिः । यदेति वचनात्तत्र व्यसनं दुर्लभं मतम् ॥ २४ ॥
प्रभुणापि यतो दत्तं रासस्थास्वेव तत्पुनः । यद्धि व्यसनपर्यन्तावस्थं बीजं तदुच्यते ॥ २५ ॥
बीजं भावात्मकं शास्त्रे दृढं सङ्गान्न नश्यति । कुत उत्पादयेद्भावान्तरमित्यपि नोदितम् २६
आसक्तावपि दुःसङ्गो बाधकत्वेन चोदितः । श्रीस्वामिनीभिरप्युक्तं पञ्चाध्याय्यां प्रभुं प्रति २७
त्वयाभिरमिताः स्यातुं पारयामोन्यतो न हि । विवृतं तत्तथाचार्यैर्व्याघ्रदेहिनिदर्शनात् ॥ २८ ॥
किं प्रेम का तथासक्तिः किं वा व्यसनमुच्यते । व्यतिरेकमुखेनैव तल्लक्षणमुदीर्यते ॥ २९ ॥
नहि भावे हरिर्वाच्यो 'यतो वाच' इति श्रुतेः । निषेधमुखतो वाच्यो नेतिनेतीति वाक्यतः ॥३०॥
यतो रागविनाशः स्यादौदासीन्येन च स्थितिः । हरिभिन्ने विना हेतुं स भावः प्रेमशब्दितः ३१
आसक्तिर्येन भावेन गृहादिष्वनुयोगिषु । अप्रीतिश्च तथा तेषां गृहस्थानां निरोधनात् ॥ ३२ ॥
प्रियान्तिकगतौ तेषु बाधकत्वेन बोधनम् । स्वासंबन्धितया भानं स भावः सा निगद्यते ॥ ३३ ॥
स्वबाधकतया वापि यदा स्फूर्तिर्निवर्तते । गृहस्थानां तदा कृष्णे व्यसनं तदुदीर्यते ॥ ३४ ॥
तदैव पूर्णसर्वार्थो ह्याविर्भाववतो हरेः । अपेक्षिता शरीरस्यालौकिकस्याप्तिरुत्तमा ॥ ३५ ॥
तदभावे तादृशस्य निरन्तरगृहस्थितिः । बहिःसंवेदनाद्भावनाशिका समुदाहृता ॥ ३६ ॥
अस्याप्येवं तदान्येषां का वार्तेत्यपि नोदितम् । अतस्त्यक्त्वा गृहं क्वापि भगवत्सन्निधौ स्थितिः ३७
कार्या कदाचिन्न ततो भवेद्भावविनाशनम् । एवमेकप्रकारो हि भक्तिवृद्धेरुदीरितः ॥ ३८ ॥
दृढभक्तिप्राप्तिफलो द्वितीयोपि निरूप्यते । भार्यादिप्रातिकूल्येन गृहे सेवाद्यसम्भवे ॥ ३९ ॥
त्यागं कृत्वा तु यः सेवायत्नं कुर्यात्स दुर्लभः । हर्यर्थमात्रचित्तस्तु नांशतोऽन्यगमानसः ॥ ४० ॥
अनेनास्मिन्नपि प्रोक्ता कल्पेऽव्यावृत्तिरुत्तमा । लभते च स्वतः सिद्धदार्ढ्यां भक्तिं परां हरौ ४१
मोक्षादितो भक्तितश्चाधिकां व्यसनरूपिणीम् । ननु त्यागं विधायैव कुर्याच्छ्रवणकीर्तने ४२
किमर्थं सेवना कार्या तनुवित्तयुता हरेः । चेत्तत्त्यजनं सेवा सा तु तैरपि सिध्यति ॥ ४३ ॥
इति चेन्न यतस्त्यागे बाधकानन्त्यमीक्ष्यते । दुःसंसर्गान्नदोषाभ्यां दोषहेतुतया तयोः ॥४४॥
अतो यथा न दुःसङ्गदुष्टान्ने प्रतिबन्धके । स्यातां तथा हरिस्थाने देशदोषनिवारके ॥ ४५ ॥
स्थेयं यतो हरिर्भक्तदुःखाभावाय हि स्थितः । तत्रापि चित्तदोषस्य सर्वथा विनिवृत्तये ॥४६॥
तदीयैः कृष्णसम्बद्धैः समर्पितनिजात्मभिः । तत्रापि कृष्णकथया सेवया चापि तत्परैः॥४७॥
यतः सत्सङ्गमो भक्तधर्मबोधेन साधितः । तथा सहपदोक्त्यात्र सद्भावेन च स्थितिः॥४८॥

---

१ तथा च निरोधो व्यसनमिति भाव.। २ भक्तधर्माः सत्सङ्गेन पुष्यन्ते, एवंप्रकारेण सर्वत्र सत्सङ्गः साधित इत्यर्थ.। ३ एकमात्रमप्यत्रापि सद्भावः सम्भवतीति सहस्थितिबोधनार्थं मूले सहपदमिति भाव.।

न्यथा कृष्णसेवायाः कथायाश्चाप्यसम्भवः । यदि ते भगवद्भक्ताः कृपयेयुः स्वभाग्यतः४९
दा दूरे तद्गृहे तत्सेवनाद्यैः सहस्थितिः । तदाद्यदोषदुःसङ्गौ बाधेयातां न सर्वथा ॥ ५० ॥
त्रैव देहनिर्वाहस्तत्सङ्गेनैव च स्थितिः । तथाविधमहाभाग्याभावेन यदि तादृशाः ॥ ५१ ॥
न स्थापयेयुर्निकटे विप्रकर्षे तदा स्थितिः । वाशब्दोक्त्या न कोप्यत्र विशेषः पक्षयोर्द्वयोः५२
यथाकथञ्चित्संतोष्याः सन्तः सन्मार्गवर्तिभिः । यथा तेषां सतां चित्तं न स्वस्योपरि दुष्यति।
तथा विनयसौजन्यसेवाभक्त्यादिभिः स्थितिः । अथवा स्वस्य वा चित्तं यथा तदुपरि स्वतः ५४
न दुष्यति तथा स्थेयं तद्दोषापरिभावनैः । यद्वान्यदीयसंसर्गं चित्तदोषकरं परं ॥ ५५ ॥
विहाय भगवद्भक्तैः सह स्थेयं विशेषतः । यथा प्रथमपक्षे तु प्रेमासक्त्यादिसम्भवे ॥ ५६ ॥
बीजदार्ढ्यं तथात्रापि सेवया कीर्तनेपि च । दृढासक्तौ न भावस्य देहादेर्वापि नाशनम् ५७
यस्येति दुर्लभा त्यागपक्षे प्रोक्ताधिकारिता । यतस्तस्मिन्हि कल्पे तु क्रमेणासक्तिसम्भवः ५८
अत्र तु स्यात्स्वतो दार्ढ्ययुता भाग्ये तथाविधे । क्वापीति पदतो लोकवेदौ भक्तिश्च रूपिता ।
सम्यक्प्रकारकस्थित्या कीर्त्या लोके न नाशनम् । त्यागपक्षस्थितौ कर्मत्यागाच्च श्रुतिनाशनम् ।
भगवद्भक्तसङ्गेन भक्तिमार्गे न नाशनम् । दुःसंसर्गान्नदोषौ च नैव प्रभवतो यतः ॥ ६१ ॥
तादृशस्यापीति वाक्ये यथापूर्वं गृहस्थितिः । बाधिकोक्ता तथात्रापि विच्छेदो बाधको मतः ।
यावज्जीवमिति प्रोक्तमत एव पद पुनः । एतेन त्यागपक्षाणामन्यासक्तिर्निवारिता ॥ ६३ ॥
तथैव चात्र विच्छेदस्तदभावे न नाशनम् । मतिर्ममेति यच्चोक्तं तदभिप्राय ईदृशः ॥६४॥
कदाचिद्दूरदृष्टेन भगवत्प्रियरोपतः । दुर्बुद्धौ तदतिद्रोहाद्भगवत्प्रतियन्धतः ॥ ६५ ॥
नाशोपीति यतो वाक्ये संदेहो विनिरूपितः । ननु त्यागं विधायान्यसङ्गः किमिति योधितः ।
ज्ञानिनामिव संसर्गमात्रत्यागो न चोदितः । त्यागे त्वेकान्तवसतिर्विशेषेण च साधिका ॥६७॥
तत्रोत्तरं तु भावस्य बाधनं हृदयस्थितैः । कामादिभिर्जीवधर्मैर्यावत्सम्भाव्यते पुनः ॥ ६८ ॥
तावदेकान्तवासस्तु नेष्टो बाधानिराकृतेः । कामाद्यो भावनाभिर्नाशयन्ति क्षणान्मनः ६९
न तत्र दोषनाशाय सहायोस्ति रहःस्थितौ । भक्तिमार्गप्रकारेण हरिश्चापि तिरोहितः ॥७०॥
भक्तिमार्गीयकार्याय न व्यापकतया स्थितिः । अतो न रक्षकः कोपि तस्यैकान्तस्थितौ भवेत् ।
तुशब्देन ततोन्योपि त्यागपक्षोत्र सूचितः । अत्र प्रबलबाधोपि दुर्बलत्वेन रूपितः ॥ ७२ ॥
हरिरत्र न शक्नोति कर्तुं बाधां कुतोपरे । अतो न रक्षकापेक्षा सिद्धत्यागे विधीयते ॥ ७३ ॥
स्वास्थ्यहेतोः परित्यागादिति वाक्यात्प्रमुदितात् । यदा तु साधनदशा तदापेक्ष्यं हि रक्षणम् ।
भक्तानां रक्षकः कृष्णो नान्य इत्येष निश्चयः । स तु सन्निहितो नित्यं लीलास्थाने तथा पुनः ।
यत्र वा भगवद्भक्ताः सेवया कथया युताः । स्वभावतो दुःखहर्ता निजाश्रितजनाश्रितान् ७६
नोपेक्षते यतस्तत्र स्थेयं यत्र स्थितो हरिः । तत्रापि सर्वतो रक्षा नान्यसाध्या न संशयः ७७

---

१ हरिस्थानवासपक्षादिदं पक्षान्तरं, न तु त्यागपक्षात् । २ अत्यागपक्षे । ३ हरिस्थानवास', सेवापरता, कथापरता चेति त्यागे त्रय पक्षा उक्ताः । ४ मुख्ये सर्वथा त्यागपक्षे ।

यतः कालवशाः कालकर्मादिभ्यो न रक्षकाः । तुशब्देन स्वभावोपि हरेरेव निरूपितः ७८
संशयाभावकथनं तत्र भक्तवशो हरिः । भक्तभक्तानपि सतो रक्षति स्वगतानिति ॥ ७९ ॥
रक्षणं कालकर्मादेस्तथा भावान्तरादपि । पक्षद्वयेन भक्तेस्तु वृद्धिरेवं निरूपिता ॥ ८० ॥
इतिशब्दः समाप्त्यर्थोन्यप्रकारनिषेधकः । एतावता हि भगवच्छास्त्रमेव निरूपितम् ॥८१॥
यतस्तद्गूढतत्त्वं हि ततोन्येषां सुदुर्गमम् । तत्त्वमेतावदेवास्य तस्मिन्नत्र निरूपिते ॥ ८२ ॥
तदेव सकलं शास्त्रं निरूपितमितीरितम् । एतदध्ययनात्सम्यग्वृद्धिं याति रतिर्हरौ ॥ ८३ ॥
सम्यक्त्वं श्रद्धया भक्त्या तथा विश्वासतो गुरौ । य इत्यनेन वर्णादिनियमोधिकृतौ न हि ८४
अपिशब्देन कैमुत्यन्यायोप्यत्र निरूपितः । ग्रन्थपाठादपि रतेर्वृद्धिर्यत्र तदा किमु ॥ ८५ ॥
वाच्यमाचरणे साधु सभायामुपदेशने । तत्रापि भक्तिर्वृद्धापि इदोक्ता पाठमात्रतः ॥ ८६ ॥
इति श्रीवल्लभाचार्यकरुणालब्धशक्तितः । स्वसन्तोषाय भावस्य पोषायातिप्रयत्नतः ॥ ८७ ॥
श्लोकरूपेण सर्वापि विवृता भक्तिवर्धिनी । यथामति निजाचार्यचरणाश्रयणादपि ॥ ८८ ॥
एतेनास्मत्कुलपतिः प्रभुः श्रीविठ्ठलेश्वरः । प्रसीदतु सदा दासे हरिदासे स्ववंशगे ॥ ८९ ॥

इति श्रीहरिदासविरचिता भक्तिवर्धिनीविवृतिः समाप्ता ।

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीगोपेश्वरविरचितविवृतिसमेता ।

श्रीवल्लभाचार्यचरणवारिरुहेभ्यो नमः । श्रीविठ्ठलपदपङ्केरुहेभ्यो नमः ।

यत्पदाम्भोजभजनाद्भवन्ति समसिद्धयः । कलयामि कृपावाधिं तं प्रभुं भक्तिवृद्धये ॥
निधाय श्रीमदाचार्यचरणाब्जयुगं हृदि । तत्कृपातो यथाशक्ति व्याकुर्वे भक्तिवर्धिनीम् ॥
भगवद्रसपीयूषपायिनो यत्कृपायुजः । भवन्ति..........भक्त्या तं श्रीविठ्ठलमाश्रये ॥
श्रीमत्कल्याणरायास्त्याननुकम्पापयोनिधीन् । नमामि तातचरणानहं स्वाभीष्टसिद्धये ॥

अथ मायावादादिदुरध्वेतिवाजालमहेन्द्रजालजनितजनताव्यामोहमूलनिर्मूलेन समर्थमितागमनिगमान्तस्मृतिपुराणतत्त्वसूत्रादिप्रमाणव्रातप्रतिपन्नप्रपन्नजनप्रतिक्षणक्षेमंकरप्रम्नायाद्दुर्मोचिततद्भक्तिमार्गेणानिकरालकलिकालविद्धसकर्माघधिकारान् भगवदीयकृपारूपा-

1 'यनारि भक्ति इदारि शास्त्रे गुरवा हरौ। पाठमात्रेणवेनैपा वीरेव्या भक्तिवर्धिनी ।' इत्यधिकं क्वचित्। 2 अनाद्युदमिव क्वचि।

तसंजातभक्तिमार्गश्रद्धाधिक्यसमधिगततदधिकारानपि भक्तितत्प्रवृद्धिकरोपायविशेषपरिचयाभावप्रभवप्रचुरक्लेशकवलितान्तःकरणान्प्राणिनः समुद्दिधीर्षवः परमकृपालवः श्रीवल्लभाचार्यचरणा भक्तितत्प्रवर्धकोपायनिरूपणं प्रतिजानते यथेति ।

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

यथा येन प्रकारेण भक्तेः प्रकृष्टा वृद्धिर्भवति, तथा तेन प्रकारेण उपायो निरूप्यते, विविच्य कथ्यत इत्यर्थः । ननु श्रीभागवतगीतादिषु भक्तितद्वृद्धिनिदानभूतदानव्रतादीनामुपवर्णितत्वेन तत एव तदवगतेरनर्थकमेतन्निरूपणमिति चेत् । अत्र वदन्ति । भक्तिर्हि द्विविधा, साधनरूपा फलरूपा च । तत्राद्यायां दानव्रताद्युपायपूर्वकत्वमिति तदुत्पत्तिवृद्धिप्रकाराः सुप्रसिद्धाः, न द्वितीयस्याः । अतस्तस्याः स्वयं प्रकटिताया वृद्धिप्रकारनिरूपणमुचिततरं भवतीति । वस्तुतस्तूभयविधभक्तिवृद्ध्युपाय एव निरूपणीयत्वेनात्राभिमत इत्याभाति, श्रवणकीर्तनाद्युभयसाधारणसाधनानामत्रेऽभिधानात् । न चैषामुभयरूपत्वमनुपपन्नमिति वाच्यम्, स्वतन्त्रफलत्वफलान्तरसाधकत्वप्रतिसन्धानपूर्वकविधानेनोभयरूपतायाः सम्भवात् । नन्वेवं सत्येतेषामन्यत्र निरूपितत्वेनात्रापि निरूपणे क्रियमाणे पौनरुक्त्यदोषो दुष्परिहर इति चेत् । न । अन्यत्र धर्मान्तरव्यतिकरेणानिर्लुठिताकाराणामेषां व्यक्तमवश्यं वक्तव्यतयोक्तदोषस्य वक्तुमनुचितत्वात् । न पुनरुक्तता महान्दोषः, शतकृत्वोपि पथ्यं वक्तव्यमिति न्यायात् । भक्तिप्रवृद्धिः कदा भवेदित्याकांक्षायामाहुः बीजभावे दृढे तु स्यादिति । बीजभावे स्वल्पस्नेहे दृढे व्यसनरूपे सति भक्तेः सर्वांशेन वृद्धिर्भवेदित्यर्थः । यद्वा । बीजभावे स्वाचार्यानुग्रहसंसिद्धभगवन्निवेदनानन्तरभाविभगवदङ्गीकारे दृढे अतिस्थिरे केनाप्यचाल्ये सति सा स्यादित्यर्थः । न च भक्तेर्मुक्तिहेतुत्वाद् ज्ञानेनैव तदवाप्तेर्भक्तिवृद्धिरनभिलषितेति वाच्यम् । भक्तेः स्वतन्त्रफलत्वेन तद्वृद्धेः सर्वाकांक्षणीयत्वात् । कथमन्यथा मुक्तमूर्धाभिषिक्तः श्रीशुको भृशं भक्तावनुरक्तोऽभूत् । कथं वानारतनिवृत्तिनिरताः सनकादयोपि भक्तावत्यासक्ता आसन् । अत एव 'परिनिष्ठितोपि नैर्गुण्ये' 'आत्मारामाश्च' 'नैकात्मतां मे स्पृहयन्ती'त्यादिवाक्यानि । नापि भक्तिं विना कृतं ज्ञानं कैवल्यकारणीभवितुमर्हति, भक्तिसहितस्यैव तस्य मुक्तिसाधकत्वात् । 'श्रेयःसृतिं भक्तिमुदस्ये'ति वाक्यात् । ननु यथाकथञ्चिन्मुक्तिहेतुत्वोक्तावपि भक्तेः स्वतन्त्रफलत्वं न सुप्रतिपदमिति चेत्? भ्रान्तोसि । स्वतः पुरुषार्थत्वेन कृतायास्तस्यास्तथात्वस्य दुर्वारत्वात् । अत एव प्रभुचरणैरपि भक्तिहंसे 'स्नेहोत्पत्त्यनन्तरं स्वव्यसनतः स्वतन्त्रपुरुषार्थत्वेन क्रियमाणः श्रवणादिरुत्तमः पुष्टिरूप' इति । एवं सति 'मत्सेवया प्रतीतं च' 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत' 'मधुद्विट्सेवानुरक्तमनसामभवोपि फल्गुः,' 'अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी' 'भगवान्भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' 'एवं

धर्मैर्मनुष्याणाम्’ ‘भक्तिं लब्धवतः’ ‘भक्त्या सञ्जातया भक्त्या,’ ‘तस्मान्मद्भक्तियुक्तस्ये’-त्यादिवचनानि सङ्गच्छन्ते । तद्वृद्धावतिरिक्तानि साधनान्याहुः त्यागाच्छ्रवणकीर्तनादिति । भक्तिमार्गविरोधिदेवान्तराश्रयादेस्त्यागाद्भगवन्नामचरित्रादेः श्रवणात्कीर्तनाच । कर्मणोरिव श्रवणकीर्तनयोर्विरोधो नास्तीति बोधनार्थमेकवद्भावः । श्रवणकीर्तनयोरुप-लक्षणत्वेन स्मरणस्वाचार्यभक्तिविश्वासादीनामपि संग्रहः । न चाप्रमाणसिद्धान्यन्याश्रय-त्यागश्रवणादीनीति वाच्यम् । ‘यो वै स्वां देवतामतियजते, प्रस्वायै देवतायै च्यवते, न परां प्राप्नोति, पापीयान्भवति’ ‘यावदन्याश्रयस्तावत्’, ‘अनन्यचेताः सततं,’ ‘अनन्या-श्चिन्तयन्तो माम्,’ ‘प्र तत्ते अद्य शिपिविष्टः नामार्यः शंसामि वयुनानि विद्वान्, तं त्वा गृणामि तवसमतव्यान्क्षयंतमस्य रजसः पराके’ ‘तस्मात्सर्वात्मना राजन्’ ‘तस्माद्भारत’ ‘तस्मादेकेन’ ‘तमु स्तोतारः’ ‘शृण्वन्गृणन्संस्मरयन्’ ‘शृण्वन्ति गायन्ती’त्यादिश्रुतिपुरा-णवाक्यसिद्धत्वात् ॥ १ ॥

भक्तिवृद्धौ साधनान्यभिधाय तत्प्रतिभुवं प्रकारमाहुः बीजदार्ढ्यप्रकारस्त्विति ।

> बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।
> अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥

तुशब्दः प्रकारान्तरव्यवच्छेदकः । बीजस्य भगवद्भावस्य दार्ढ्यजनकः प्रकारो भगवद्भजनलक्षण इत्यर्थः । यद्वा । बीजस्य पूर्वोक्तरूपस्य स इत्यर्थः । तमेवाहुः गृहे स्थित्वा स्वधर्मतः अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिरिति । स्वध-र्मतोऽग्निहोत्रादेर्गृहे अव्यावृत्तः कर्तव्यान्तरव्यासक्तिशून्यः स्थित्वाऽचञ्चलो भूत्वा कृष्णं सदानन्दं, ‘कृषिर्भूवाचक’ इति वाक्यात्, श्रवणादिभिः पूजया भजेदित्यर्थः । इह स्नेहा-धिक्यवैधुर्येण विधीयमानायाः सेवायाः पूजासाम्यात्पूजापदमुक्तम् । तन्त्राद्युक्तपूजायां शीतलशङ्खसलिलस्नानाद्यभिधानेन भक्तिमार्गविरोधात् । अथवा । ननु कृष्णभजनप्रकारे सद्विमृतिविषयकागमाद्युक्तयज्ञोक्तेरयुक्तत्वेन प्रकृते कथं पूजापदोपादानमुपपद्यत इति चेत् । इत्थम् । सन्ति हि बहवो मानभजनप्रकाराः, तदन्तर्निविष्टा भवति भावपूर्विका पूजापि । अत एव शुद्धपुष्टिमार्गाचार्यैः प्रमेयप्रकरणीयसप्तमाध्याये ‘पूजां दधुर्विरचितां प्रणयावलोकै’रित्यत्र गुणगाने हरिणीमाननिरूपणानन्तरं तद्भावदृशः पूजारूपता निरू-पिता । नहि तत्र तान्त्रिकी पूजा युज्यते जातुचित्, तस्याः पृथग्भूतत्वात् । तेनैवंभूतभावा-नुसारिणी सात्राभिधित्सितेति तदुपादानमविरोधि । न चैवमप्यन्ततो भक्तौ पर्यवसानेन तस्या एव वाच्यत्वात्संशयितपूजोक्तिरयुक्तेति वाच्यम् । श्रवणाद्यभक्तिनवकान्तर्गतस्वत-न्त्रभावपूजायाः प्रकृते पुरस्करणीयत्वेन क्षतेरभावादिति । यद्वा । धर्मान्तराणां परधर्मत्वेन परिहार्यत्वेनात्मधर्मतो भगवद्धर्मतः सेवानुकूले गृहेऽव्यावृत्तस्त्यक्तान्यव्यासक्तिरिति यावत्, तथाभूतः सन्, कृष्णं सदानन्दं पूर्वोक्तया पूजया श्रवणादिभिर्भजेदित्यर्थः । अत्र कृष्ण-

पदेनोक्ता भजने फलरूपता। सूचितोकरणे प्रत्यवायो लिङ्गव्यत्ययेन च। न चास्मिन्पक्षे विहितवर्णाश्रमधर्मत्यागे प्रत्यवायपाषण्डित्वादिदोषप्रसङ्ग इति वाच्यम्। सेवासमयाभावे यथाधिकारं सर्वधर्मसम्पादनेनैव दोषापाकरणसम्भवात्। सेवासमये च सर्वधर्माणामनवकाशनिराकृतत्वेन तदभावेपि हानेरभावात्। 'मत्कर्म कुर्वतां पुंसा'मिति वाक्यात्। कदाचिद्दोषापातेपि भगवतैव तदपगमोपपत्तेश्च। 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः। विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्ट' इति वाक्यात्। मर्यादामार्गीयव्यवस्थैषा। शुद्धपुष्टिमार्गमभिनिविशमानस्य तु प्रभुचरणतामरसैकतानचेतसः कृत्स्नकर्मकलापं परित्यजतोपि प्रभोरशिथिलपरिग्रहेण न कश्चिद्दोषः, यतस्तथाभूत एव स पन्थाः। 'यदायमनुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वेदे च परिनिष्ठिता' मिति वाक्यात्॥ २॥

एवं तद्वृद्धिप्रकारं व्यासक्तिविरहितभगवद्भजनलक्षणमुक्त्वा, 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृ'दितिन्यायेन क्वचित्कव्यापृतावपि चित्तं भगवति निधाय भजनप्रयत्नमत्यजन्नासीतेत्यभिप्रायेणाहुः—

**व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा।**
**ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत्॥ ३॥**

व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदेति। व्यावृत्तो लौकिककर्मव्यापृतोपि हरौ स्वकीयदुःखहरणस्वभावे चित्तं निधायेति शेषः, सदा निरन्तरं श्रवणादौ तन्निमित्तं यतेत्प्रयतेतेत्यर्थः। यत्तु प्रयते तेन, यथा केनचिदुक्तं, 'परव्यसनिनी नारी व्यग्रापि गृहकर्मणि। तदेवास्वादयत्यन्तः परसङ्गरसायन'मितिवद्धृदये हरिं धृत्वावश्यकसांसारिककार्यव्यापृतेनाप्यनन्तरमनवरतं श्रवणादिप्रयत्नप्रवणान्तःकरणेन भवितव्यमित्यर्थः। यद्वा। भगवत्कार्यव्यापृतोपि तत्परिसमाप्त्योर्वरितसमये श्रवणाद्यर्थमुद्यमं विदध्यादित्यर्थः। यतेदिति क्वचित्पाठः। तत्र परस्मैपदमनुदात्तेतामात्मनेपदानित्यत्वात्प्रत्येतव्यम्। एवं प्रयतमानस्यानुपूर्व्येण प्रेमासक्तिव्यसनानि भवन्तीत्याहुः ततः प्रेमेति। ततः श्रवणादिभ्यः प्रथमं प्रेम चित्तासङ्गवद्भवति, पश्चात्तयैव सङ्कल्पवदासक्तिर्भवति, व्यसनं च पुनर्यदा भवेदतिप्रचुरप्रभुप्रसादप्राप्यत्वात्तस्य। कीदृशानि पुनः प्रेमासक्तिव्यसनानि। स्वगोचरे स्वतः प्रवर्तको भावः प्रेम। तथानेकविधमनोरथजनको भाव आसक्तिः। विषयेण विना स्थातुमशक्तिर्येन स भावो व्यसनमित्येवमाकलय। अत्र संग्रहश्लोकौ। 'स प्रेम यः संविदधाति भावः स्वतःप्रवृत्तिं विषये स्वकीये। यश्चाभिलाषान् जनयेदनेकान्भावः स आसक्तिरिति प्रसिद्धः। स्थातुमेव न शक्नोति विषयव्यतिरेकतः। येन भावेन तं भावमाहुर्व्यसनसंज्ञकम्॥ ३॥

एतत्सम्पत्तौ बीजं दृढं भवतीत्याहुः बीजमिति।

बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।
स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥

भगवत्कृपादिना यदि व्यसनसमुद्भवस्तदा यद्भगवच्छास्त्रे बीजं स्नेहाङ्कुरस्वरूपमुच्यते तद्दृढमशिथिलं भवति, अत एव विषयादिसंसर्गेण नश्यत्यपि न । व्यसनभावस्य बीजभावदार्ढ्यपरमावधिरूपत्वादिति भावः । यद्वा । बीजं यत्प्रभुपरिग्रहात्मकं तद्यदि व्यसनं समुत्पद्यते, तदा भक्तिशास्त्रे दृढं केनापि शिथिलीकर्तुमशक्यमुच्यते । अत एव कालासत्सङ्गेत्यादिनापि न विनश्यतीत्यर्थः । नहि भगवान्निजाङ्गीकृतान्कदाचिदपि विहातुमुत्सहते । तदङ्गीकारस्य नित्यत्वात् । एवमुत्तरोत्तरबलवत्तराणामेतेषामाधयोः कार्यमाहुः स्नेहेति । स्नेहाद्भगवद्विषयकप्रेम्णः प्रभुसेवाप्रतिकूले गृहे रागस्य विनाशो भवति । भगवद्रागस्य प्रागेव गेहानुरागनाशोपायत्वात् । 'तावद्रागादयः स्तेना' इति वाक्यात् । आसक्त्या चोक्तरूपया गृहेऽरुचिरासक्त्यभाव उपजायते । भगवदासक्तेस्तदतिरिक्तासक्तिनिराकरणशीलत्वात् । 'कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेष्वि'तिवाक्यात् । न च प्रेमासक्तिमतामपि गेहस्नेहादिसद्भावदर्शनादसङ्गतमिदमिति वाच्यम् । तादृशां भगवद्विषयकस्नेहसङ्गोपनार्थमेव सांसारिकतत्प्रकाशनादनेवभावे च भगवत्यपि तदभावादेवेत्युभयथापि दोषाभावात् । लोकसङ्ग्रहार्थमपि भक्तानामसत्यव्यापारदर्शनात् । भजनौपयिकभवनाद्यनुरागस्य स्वधर्मपर्यवसायित्वेनौचित्याच्चर्जितत्वाच्च ।

एवं सति गृहाद्यनुरागिणामेवान बाधकत्वास्वधर्मत्वे स्फुरत इत्याहुः गृहेति ।

गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।
यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥
तादृशस्यापि सततं गेहस्थानं विनाशकम् ।

भगवत्सम्बन्धिप्रेमासक्त्योर्गृहस्थानां निवेकनैकल्येन गृहेनुरागाधिक्यात्तनैव तिष्ठतां बाधकत्व, तत्र स्नेहाभावोत्पादकतया कलत्रपुत्रादिपोषणसामर्थ्याभावलक्षणदोषोद्भावनाप्रवृत्तिमार्गातिमाननिष्ठानत्तयानात्मधर्मत्व च, भगवति वानात्मत्व भासत इत्यर्थः । वस्तुतस्तु, 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' 'न मे भक्तः प्रणश्यति' 'न कर्हिचित् मत्पराः शान्तरूपे नङ्क्ष्यन्ति' 'तस्मिन्प्रसन्ने सकलाशिषां प्रभौ', 'तस्मिन्सन्तुष्टे किमप्राप्यमितरत्य भगवती'त्यादिवाक्येभ्यो भगवानेव निजभक्तनिखिलकार्यनिर्वाहाय जागरूक इति वास्तवसर्वभावेन भजनीय इति वस्तुगतिमविदुषाममीषामेवेयं कुमनीषेति । अत एव श्रीमदाचार्यैर्भासत इत्युक्तमपि । अथवा । भगवदासक्तियुक्तानामतादृशशास्त्रादिषु बाधकत्वप्रतिमन्धान भवतीत्याहुः गृहस्थानामित्यादि । अत्र गृहस्थपदेन भार्यापुत्रादयस्तारभ्यागृह्यन्ते । तथा च सति तेषां विजातीयभावतया तद्वारम्भ समानप्रतिद्वद्विलेन स्वात्म-

भावस्वाभाव्येन च निजभावभङ्गभीरूणां तेषु बाधकत्वं भासतेऽनात्मत्वं च । तथाभूतानां भगवत्येव स्फुरत्स्वात्मभावतया तदीयेष्वात्मीयताविर्भावात् । अत एव श्रीमदस्मदाचार्यैरुक्तं 'पुत्रे कृष्णप्रिये रति'रिति । एतेन 'न वारे पुत्राणां कामाय पुत्राः प्रिया भवन्ति, किन्त्वात्मनः कामाय पुत्राः प्रिया भवन्ती'त्यादि श्रुतेरात्मसम्बन्धितया पुत्रादीनां प्रियत्वेन बाधकत्वमसम्भवीत्याशङ्का व्युदस्ता । एवं प्रेमासक्त्योः कार्यमुक्त्वा व्यसनस्य तदाहुः यदेति । यदा परमदुरापमनुपममुक्तमात्रात्मकं व्यसनं कृष्णे सदानन्दे स्वलीलासहिते स्यात्, तदैव कृतार्थः पर्याप्तार्थः स्यात्, कर्तव्यान्तरपरिशेषाभावात् । अत एव व्रजस्थितानां तथाभावः श्रूयते श्रीभागवते, 'तदर्थविनिवर्तितसर्वकामाः,' 'सन्त्यज्य सर्वविषयांस्तव पादमूलम्' 'क्षणं युगशतमिवे'त्यादिना । एवकारः प्रेमासक्तिमतोर्व्यवच्छिनत्ति । हिशब्देनात्र युक्तार्थतोक्ता, तद्भावविघातकसङ्गाभावात् । तदेतदाहुः । तादृशस्यापि प्रेमादिमतोपि सततमविच्छेदेन सत्सङ्गाद्यभावेन गेहस्थानं भावस्य विनाशकं भवति । सत्सङ्गाद्यसचिवस्य तस्य तादृशत्वात् । न च व्यसनवतोपीदृशबाधकास्तित्वं शक्यशङ्कम् । तद्भावस्यैव स्वतन्त्रकार्यक्षमत्वेन सत्सङ्गादिभावाभावायत्तैर्वृद्धिह्रासैस्तद्व्यतिरिक्तभावानामेव साधकबाधकादिसम्बन्धितया प्रकृते बाधशङ्कानवतारात् ।

गृहादेर्भावान्तरायरूपत्वं विदित्वा तदपहाय फलाय प्रयतेत यस्तस्य तदाहुः ।

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ९ ॥**
**लभेत सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।**

तुशब्दः प्रकारान्तरव्यावर्तकः । यः पुमान्गृहादिषु भगवद्भजनप्रतिबन्धं विबुध्य तत्त्यागं कृत्वा भगवल्लीलाश्रवणचिन्तनादिनिमित्तं यतेत् यत्नं कुर्यात्, कीदृशः ? तदर्थार्थैकमानसः । तस्य भगवतो योर्थः श्रवणादिरूपस्तदर्थं एकं मानसं यस्य तादृश इत्यर्थः । यद्वा । भगवतोर्थो लीला, तदर्थं तन्निमित्तं तदर्थेषु तत्सम्बन्धिपदार्थेषु वा तथेत्यर्थः । अथवा । स चासावर्थश्चेति कर्मधारये तदर्थो भगवान् तदर्थं तथेत्यर्थः । स एवार्थः शास्त्रस्कन्धादिषु यत्र । तादृशं श्रीभागवतं 'शास्त्रे स्कन्धे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे । एकार्थं सप्तधा जानन्नविरोधेन मुच्यत' इति श्रीभागवतार्थतत्त्वदीपवचनात् । तदर्थं वा तथेति वार्थः । स एवार्थो धनं येषां ते । तदर्था भगवद्भक्तास्तेषामर्थेषु कार्येषु वा तथेत्यर्थः । एतादृशः सन् भक्तिं सुदृढां विषयाद्यनभिभाव्याम्, 'प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयत' इति वाक्यात्, सर्वतो ज्ञानादिभ्योप्यधिकामुत्कृष्टाम् । न चाधिक्ये मानाभावः । 'तस्यान्मद्भक्तियुक्तस्य' 'ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः' 'नैकात्मतां मे स्पृहयन्ति' 'परिनिष्ठितोपि नैर्गुण्ये' 'आत्मारामाश्चे'त्यादिवाक्यशतसिद्धत्वात् । विस्तरस्तु श्रीमदस्मत्प्रभुचरणैरन्यत्र कृत इति नेह तन्यते । परामभिव्यक्तापरिच्छिन्नानन्दरसस्वरूपां लभेत प्राप्नुयादित्यर्थः ॥ ९३ ॥

तर्हि निरन्तरायेऽस्मिन्नुपाये सति किमित्युपायान्तरमुपादेयमित्यत आहुः त्याग इति।

त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥
अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।
अदूरं विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥

न हि त्यागो निष्प्रत्यूह फलाय कल्पते, त्यागे यतो बाधकानि दुःसंसर्गदुष्टान्नभक्षणादीनि सद्बुद्धिप्रतिक्षेपकारीणि भूयांसि सन्ति । न हि भगवत्पराङ्मुखानामनेकदोषदन्तुरितस्वान्तानां सङ्गस्तूर्णं भावभङ्ग न विधत्ते । न वा तथाभूतानामन्नादिक भक्षयतो भगवत्यभीक्ष्णमविक्षिप्त मनो भवति । अत एवावैष्णवादीनामन्न न परिग्राह्यम् । तदुक्त पद्मपुराणे 'अवैष्णवानामन्न च पतितानां तथैव च । अनर्पित तथा विष्णोः श्वमांससदृश भवे'दिति । ननु बाधकानां बहुत्वे द्वावेव कथ कथितौ । दुष्टसंसर्गान्नदोषयो प्रबलत्वादिति बुध्यस्व । तेन यदि भगवद्भजन गृहादिषु निर्बाध सम्पद्यते, तदा न परित्यागः श्रेयान् । तच्चेत्तत्र भार्याद्यभिद्वेषादिना सम्पद्य न निर्वहति, तदा पूर्वोक्तप्रणालिकया त्याग एव कर्तव्य इति विवेकः । अत एव श्रीमदाचार्यैस्तत्त्वदीपनिबन्धेऽभ्यधायि 'भार्यादिरनुकूलश्चेत्कारयेद्भगवत्क्रियाम् । उदासीने स्वय कुर्यात्प्रतिकूले गृह त्यजे'दिति । द्वितीयस्कन्धविवरणे च 'दाम्पत्य भगवद्भजनार्थमपेक्षित'मिति । एव त्यागे दु सङ्गादेर्विघातकत्व निरूप्य तद्दोषनिराकरिष्णुः सता सङ्गः क्वचिद्भगवत्स्थाने सम्पादनीय इत्याहु अत इति । यतस्त्यागे बाधकानां बहुत्वमत कारणात्क्वचिद्दूरे, सर्वदुःखहर्तुः स्थाने श्रीगोकुलश्रीगोवर्धनादौ तदीयैस्तत्सम्बन्धिभिस्तत्परैः, स एव परः सर्वापेक्षयोत्कृष्टो येषा तादृशैः, परमकाष्ठापन्नवस्तुनिष्ठैः सह स्थेयमित्यर्थः । न च तत्राप्यसत्सङ्गादिसम्भवादुक्तदोषानिवृत्तिरिति वाच्यम् । सर्वसमयसत्सङ्गवस्तु दुःसङ्गादिदोषाणामनवकाशविधायितत्वात् । न हि प्रतिदिन सत्सङ्गरसास्वादिनः क्वचिदन्यत्र चित्तप्रसादमासादयन्ति । अत एव सत्सङ्गोत्कर्ष श्रीभागवते गीयते । 'तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः' इति । ननु यत्र क्वचित्सत्सङ्गेन कार्यसिद्धे सम्भि सद्भावस्थान हरिस्थान एव कार्यमिति निर्बन्धो यत्नेनान्यथवन्निरर्थक इति चेत् । नैवम् । तत्र बाहुल्येन तेषां सङ्गते सम्यक्सम्भवेन तदनुवृत्तेरावश्यकत्वात् । अन्यत्र तेषां प्रायशोऽनुरागविरहेणानवस्थानात् । बहिर्मुखजनकृतोपद्रवशङ्कया स्थातुमशक्यत्वाच्च । अत एवोक्त पञ्चमस्कन्धे 'न यत्र वैकुण्ठकथा सुधापगा न साधवो भागवतास्तदाश्रयाः । न यत्र यज्ञेशमखा महोत्सवा सुरेशलोकोऽपि न याति सेव्यता'मिति । एव सति तेषां सन्निधौ स्थिति कथ कर्तव्येत्याकाङ्क्षायामाहु अदूरमिति । यथा भगवदीयानां चित्त न दुष्यत्युद्वेगादिना, न विकृतिमाप्नोति, तथाऽदूर निकट यथा स्यात्तथा, विप्रकर्षे दूरे वा स्थानमित्यर्थः । अत्रायमाशयः । सन्तो हि नितान्तमेकान्ते भगवत्कथा मिथः कुर्वन्तस्-

द्रसरभसविवशा भवन्ति, ताननुसरन्यदि कश्चित्स्वलाभं निश्चित्य तेषामासत्तिमालम्बते, ते चेदतिगूढरसं तदग्रतः प्रकाशयितुमशक्यमाकलयन्तः, स्वयं ततो विरमन्ति चित्तोद्वेगवन्तः, तदा तस्य दूरस्थितिरेवानुसरणे श्रेयसी, अन्यथा मनीषितानिष्पत्तेः। अथ दयार्द्रहृदयतयातिनिकटागमने नियोगं विदधते, तर्हि तत्सामीप्यमेव समीचीनम्, अनुसरणानुकूलतया समीहितसिद्धिहेतुत्वादिति। यद्वा। स्वस्य चित्तं यथा दुष्टं न भवति तथा सन्निकर्षेण विप्रकर्षेण वा स्थेयमित्यर्थः॥ ७, ८॥

एवं सत्सङ्गापगताशेषदोषस्याग्रिमव्यवस्थामाहुः **सेवायामिति**।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत्।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम॥ ९॥**

यस्य सत्सङ्गादिकमनुतिष्ठतः श्रीकृष्णसेवायां स्वतन्त्रपुरुषार्थत्वपरिस्फूर्त्या दृढा निश्चलासक्तिर्भवेत्, कथायां वा, तस्या अपि सेवासमत्वात्, तस्य यावज्जीवं प्राणस्थितिपर्यन्तं नाशः फलाभावः क्वापि न स्यादिति मम मतिः। अतो नेह सन्देहः कर्तव्य इति भावः। यद्वा। मम मतिरेवं भगवान्परमकृपालुः कथं वा तस्य दयेतेति न वेवितुं शक्यमिति भावः। ननु सेवायाः कथायाश्च कथं साम्यम्। इत्यत्र। तथाहि। सेवा नाम चित्तस्य तदेकप्रवणत्वम्। 'चेतस्तत्प्रवणं सेवे'ति लक्षणाभिधानात्। तत्सम्पादिकायाः कृतेरपि तथात्वम्, अन्यथा तस्याः परत्वानुपपत्तेः। अत एव 'मानसी सा परा मते'त्यभाणि। तेन यथैतस्या भगवद्भावतद्भक्तसङ्गादिसाधकत्वं नान्तरीयकानन्तकार्यसाधकत्वं च, तथा कथाया अपीति साम्यं दुरपवादम्। अत एवैतादृशाभिप्रायेण 'कथारतिषु सक्तस्य कथका अपि मिलन्ति, प्रेमापि भवति, आनुषङ्गिकं चान्यद्भवेव भवती'त्युक्तमाचार्यैः॥ ९॥

ननु क्वचित्काननादावेकान्ते वासं विधाय भगवन्नामलीलादिकमेव चिन्तनीयमेकाकिना, किं भगवद्भक्तसङ्गेनापीति चेत्तत्राहुः।

**बाधसंभावनायां तु नैकान्ते वास इष्यते।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः॥ १०॥**

तुशब्दः शङ्काव्युदासकः। यदुक्तमेकान्तेन नामचिन्तनमेव कार्यं, न सत्सङ्ग इति तत्सत्यम्, परन्तु यदि बाधस्य भोगचित्तोद्वेगलक्षणस्य सम्भावना न भवेत्, सा चेत्स्यात्, तदैकान्ते वासो नेष्यते, चित्तचाञ्चल्यादिना नामचिन्तनायनिर्वाहात्। अतः सत्सङ्ग एव कर्तव्य इति भावः। ननु चित्तविक्षेपादिरान्तरो बाधः सत्सङ्गादिना निवर्तताम्, बाह्यं चौरव्याघ्रादिभयं तु दुःपरिहरमिति चेत्तत्राहुः **हरिरिति**। तुशब्दः प्रकारभेदावेदकः। हरिर्भक्तदुःखहर्ता सर्वतो बाह्यादान्तराच्च बाधकाद्रक्षां करिष्यति। अस्मिन्नर्थे संशयो नास्तीत्यर्थः। न हि भगवान्भक्तदुःखं क्षणमात्रमप्युपेक्षितुं क्षमते? निरुपम-

परमानुकम्पापूर्णत्वात् । अत एव हरिपदमुपात्तम् । भक्तदुःखहर्तृत्वस्य तदसाधारणधर्मत्वात् । तदाहुराचार्याः 'यथा गन्धः पृथिव्याः, एवं भगवतो भक्तदुःखनिवर्तकत्व'मिति । यद्वा । सर्वतः सुदर्शनादिना रक्षां हरिः करिष्यति, नात्र संशय इत्यर्थः । 'अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तं, रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः । सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती'त्यादिवाक्येभ्यः ॥ १० ॥

एवं प्रस्तुतमशेषं शास्त्रमुपवर्ण्यैतदर्थपरिज्ञानपूर्वकपाठफलोपन्यासपुरःसरमुपसंहरन्ति ।

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।**
**य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥**

इत्येति समाप्तौ । एवमुक्तप्रकारेण भगवच्छास्त्रं भगवद्भक्तिप्रकारप्रतिपादनात् निरूपितमपि गूढतत्त्वं गुप्तस्वरूपम्, भगवदनुगृहीतैरेवैतदभिप्रायस्यावगन्तुं शक्यत्वात् । एतद्यः पुमानुदितभाग्यो भगवदीयानुग्रहेण विचारेण वा सम्यगर्थावगमपूर्वकमधीयीत पठेत्तस्य भगवति दृढा स्थिरा रतिः स्यादित्यर्थः ॥ ११ ॥

श्रीमत्कल्याणरायाङ्गजन्मा गोपेश्वराभिधः । विवृतिं भक्तिवर्धिन्याः कृतिनिर्वृतये व्यधात् ॥
यद्यप्यतिहृद्यास्याः पितृचरणैर्निर्मिता विवृतिः । तदुपरिकरणेऽन्यस्या आग्रहो भूयतेनत्पम् ॥
तेषामतिकरुणानां तथापि यत्नेन संरचिता । निजपाठितगुणनेव प्रीत्यै नित्यं भवित्रीयम् ॥
इमां श्रीवल्लभाचार्यपदपङ्कजकिङ्कराः । पश्यन्तः सन्ततं सन्तः सन्तुष्यन्तु मुहुर्मुहुः ॥

इति श्रीमद्गोकुलाधीशपदपङ्केरुहनिरतिशयरतिवर्त्मप्रवर्तकोद्वेलद्भगवल्लीलामहारसाब्धिसमुच्छलद्भावकल्लोलसंवलितसकलस्वरूपश्रीवल्लभाचार्यवदनचन्द्रचञ्चचारुतमवचनमरीचिनिचयप्रोदञ्चिनिःसीमानन्दनिकुरुम्बकरम्बितीकृतनिजभृत्यनिकरचेतश्चकोरकानवधिकानुकम्पानिधानश्रीविठ्ठलाभिधानप्रभुचरणपयोरुहरेणुकणमात्रसर्वस्वश्रीकल्याणरायतनुजगोपेश्वरविरचिता भक्तिवर्धिनीविवृतिः समाप्तिमुपागमत् ।

श्रीविठ्ठलपदपद्मजकिङ्करगोपेशसुरचिता या । तां श्रितानां तोषाय रोषाय द्वेषिणामस्तु ॥
अनया कृपया तेषां कृतयामितया मया । सदार्या वल्लभाचार्याः प्रसीदन्तु सदा मयि ॥१॥

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीपुरुषोत्तमकृतविवृतिसमेता ।

---

प्रणम्य गोकुलाधीशमक्तिमार्गाब्जभास्वतः ।
आचार्यांस्तद्दयादृष्ट्या व्याकुर्वे भक्तिवर्धिनीम् ॥ १ ॥

अथ श्रीमदाचार्यचरणा भगवता एकादशस्कन्धे चतुर्दशाध्याये 'न साधयति मां योग' इत्यत्रोपलक्षणविधया सर्वेषां योगादीनामुपायानां स्वासाधकत्वमुक्त्वोर्जितायाः भक्तेः स्वसाधकत्वमुक्तम्, तत्र किं नामोर्जितत्वमित्याकांक्षायां प्रवृद्धत्वमेवोर्जितत्वमित्यभिसंधाय भक्तिवृद्ध्युपायं स्वीयानामर्थे वक्तुं प्रतिजानते यथा भक्तिरित्यादि ।

यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।

तत्र भक्तिशब्दो माहात्म्यज्ञानपूर्वकसुदृढस्नेहे रूढः । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति पञ्चरात्रस्मृतेः, 'सा परानुरक्तिरीश्वर'इति शांडिल्यसूत्रोक्ताद्भक्तिलक्षणात्, 'रतिर्देवादिविषया भाव इत्यभिधीयत' इति भावलक्षणस्मृतेश्च । स्नेहश्च ज्ञानादिभ्योतिरिक्तो मनोधर्मविशेषः । प्रीणाम्यनुरज्यामि स्निह्यामीत्यनुव्यवसायेन मानसप्रत्यक्षगम्य इति शांडिल्यसूत्रभाष्ये स्वप्नेश्वराचार्यैर्व्यवस्थापनात् । नचैवं सति स्नेहमात्रमेव भक्तिरिति शंक्यम् । 'गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो' इति सप्तमस्कन्धीयनारदवाक्ये भक्तिस्नेहयोर्निर्देशभेदस्य विरोधापत्तेः । उक्तपञ्चरात्रस्मृत्यादिपूक्तानां तद्विशेषणानां वैयर्थ्यापत्तेश्च । तस्मात्तावद्विशेषणविशिष्टस्नेह एव रूढो, न केवल इति निश्चयः । योगविचारे तु 'भज सेवाया'मिति धातोर्भावे क्तिन्प्रत्यये कृते भक्तिरिति भवति । भावश्च क्रियासामान्यम् । प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येनेति वैयाकरणनियमात् धात्वर्थव्यंग्या या प्रधानभूता क्रिया तत्र पर्यवस्यति । प्रधानभूता च क्रिया मानस्येव । 'अन्यत्रमना अभूवन्नाश्रौषम्, अन्यत्रमना अभूवन्नापश्यमि'तिवाजसनेयश्रुतौ मनसः प्राधान्यश्रावणेन तत्क्रियाया एव प्राधान्यस्यौचित्यात् । तथाच सेवाभिव्यंग्या प्रेमरूपा मानसी सेवा भक्तिरिति तत्र योगरूढः सिध्यति ।

१ तृतीयस्कन्धे च 'सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः । हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते' इति । २ साम्यमिति पाठः ।

तथाच श्रवणादिनवकेपि पारिभाषिकः । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणे'ति सप्तमस्कन्धे प्रह्लादवाक्यात् । अन्ये तूपासनायामपि भक्तिशब्दं प्रयुञ्जते । नैयायिकास्तु आराध्यत्वेन ज्ञानं भक्तिरित्याहुः । तन्मते बुद्धिविशेष एव भक्तिः । वस्तुतस्तु तत्र सारूप्यप्रयुक्ता गौणी । पूर्ववद्द्रव्यादिज्ञापक[१]प्रमाणाभावात् । तृतीयस्कन्धे पञ्चविंशाध्याये श्रीकपिलदेवैस्तु 'काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरे'ति देवहूतिप्रश्ने 'देवानां गुणलिङ्गानामानुश्रविककर्मणाम् । सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या, अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी, जरयत्याशु या कोशं निगीर्णमनलो यथे'ति स्वरूपकार्यलक्षणाभ्यां बोधिता । तत्र एकमनसः पुंस इन्द्रियाणां स्वाभाविकी अनिमित्ता सत्त्वोपाधौ भगवति वृत्तिर्निष्ठेति स्वरूपलक्षणम् । कोशजरणं च कार्यलक्षणमिति सिध्यति । तत्सुबोधिन्यां सत्त्वपदं सांख्यानुसारात् 'वस्तुतस्तु मूलरूप' इति व्याख्यातत्वात्स्पष्टम् । [२]अष्टाविंशाध्याये तु 'भक्तियोगो बहुविध' इति पुरुषस्वभावभेदकृतमार्गभेदेन भक्तियोगस्य बहुविधत्वं प्रतिज्ञाय, त्रिविधं सात्त्विकराजसतामसभेदेन तदेव नवधा त्रिभिः श्लोकैरभिधाय ततो 'मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये । मनोगतिरविच्छिन्ना यथागंगांभसोम्बुधौ लक्षणं भक्तियोगस्य निर्गुणस्याप्युदाहृत'मित्यनेन भगवद्गुणश्रवणमात्रात् भगवत्यविच्छिन्ना मनोगतिं यो जनयति सः [३]भावः निर्गुणभक्तियोगाख्य इत्येव लक्षितः । ततः 'अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे । सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जना' इति सार्धाभ्यां कालकर्माद्यव्यवहिता पुरुषोत्तमविषयिणी स्वतः पुरुषार्थरूपा या सेवा सा आत्यन्तिकभक्तिरित्येवलक्षिता । अत्र च भक्तिशब्दः प्रेमसेवायां योगरूढो गृहीत इति 'सालोक्ये'तिवाक्यादवसीयते । अयमेव चैकादशस्कन्धे द्वादशाध्याये 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'त्यादिभिः श्लोकैर्भगवता परामृष्टो ज्ञेयः । एवं भक्तिशब्दस्यानेकार्थत्वे सति प्रकृते का वा निवक्षितेति चेत् ? उच्यते । आचार्याणां भगवदाज्ञया एकादशस्कन्धे भगवदभिसंहितो यः सुगोप्यः सत्सङ्गलभ्यो भाव उक्तः, स एवाभिसंहितः । सिद्धान्तमुक्तावल्यां 'चेतस्तत्प्रवणं सेवे'ति कथनात्, तद्विवरणे प्रभुचरणैरपि 'ता नाविद'न्निति द्वादशाध्यायवाक्यस्योदाहरणात्, प्रकृतग्रन्थेपि तत्रत्यचतुर्दशाध्यायवाक्योक्तसत्सङ्गश्रवणकीर्तनात्मकसाधनानामभिधानाच्च । न च चतुर्दशाध्यायोक्तसाधनानां द्वादशाध्यायोक्तभावं प्रति साधनत्वं कथमिति शंक्यम् । चतुर्दशाध्याये तस्यैव भक्तिशब्देन परामर्शात् । द्वादशाध्याये 'न रो-

---

१ प्रमाणाभावादिति पाठः । २ एकोनत्रिंशाध्याय इति पाठः, अष्टाधिको विंशो यत्रैकोनत्रिंशोऽध्यायस्तादृशे ध्याये । ३ येन मनसो गतिर्येन भावेनेति विग्रहः । एवं 'भक्तिरस्य भजन'मित्यत्र कल्पतरावुक्तेऽपि । ४ पुष्टिस्य गर्भनेऽप्यपि, अतो न प्रवाहानुग्रहणाप्रत्वविरोधः ।

नयति मां योग' इत्याद्युक्तस्य योगादीनामसाधकस्यात्रापि 'न साधयति मां योग' इत्यनेन प्रत्यभिज्ञानेन तथा निश्चयात् । अतस्तस्य या पूर्वावस्था 'माहात्म्यज्ञानपूर्वस्त्वि'ति मञ्चरात्रवाक्ये उक्ता, सात्र विवक्षिता, तस्याः पूर्वोक्तरूपोर्जितत्वार्थमेव प्रयतनात् । तथाच सा **यथा** येन प्रकारेण **प्रवृद्धा** ऊर्जिता **स्यात् तथा** तेन प्रकारेण **उपायो** बुद्धिस्थो निरूप्यत इत्यर्थः ।

एव प्रतिज्ञाय अधिकारिभेदेन प्रकारद्वयं वदिष्यन्तो मुख्याधिकारिणो भक्तिप्रवृद्धेरधिकारबलादेव सिद्धत्वात्तदनुक्त्वा प्रथमं मध्यमाधिकारिण उपायमाहुः **बीजभाव** इत्यर्धेन ।

**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

बीजरूपो भावः भगवदनुग्रहजन्यः प्रेमा । तस्मिन्वक्ष्यमाणरीतिकव्यसनरूपतया दृढे सति । तुः साधनान्तराशङ्कानिरासे । तदा त्यागाच्छ्रवणकीर्तनात्स्यात् । विरहानुभवार्थं सन्यासनिर्णयोक्तप्रकारकः सवासनगृहपरित्यागस्तं कृत्वा तदुत्तरं यच्छ्रवणसहित कीर्तनं तस्मात्स्यादित्यर्थः । अत्र श्रवणानन्तर कीर्तनस्य कथनाच्छ्रुतानां स्वरूपगुणलीलानां भावन कीर्तनात्पूर्वमर्थबलात्प्राप्यते । एतदभिप्रायेणैव सन्यासनिर्णये 'भावो भावनया सिद्धः साधन'मित्युक्तम् । निरोधलक्षणे चाशसाः प्रथमतो निरूपिताः । तथाचैतैश्चतुर्भिर्भक्तिरूर्जितलक्षणवती प्रवृद्धा भवतीत्यर्थः । एतदेव निरोधलक्षणग्रन्थे 'महतां कृपया याव'दित्यारभ्य 'तदभ्यासोपि सिध्यती'त्यन्तेन फलानुभवपर्यन्तं प्रपञ्चित ज्ञेयम् । तन्मया तत्रैव विवृतमिति नेहोच्यते ।

प्राञ्चस्तु । पुष्टिमार्गाचार्यानुग्रहपूर्वकभगवन्निवेदनानन्तरभाविनमङ्गीकारं बीजभावत्वेन केचिदाहुः । अन्ये तु भक्त्यसाधारणकारणमहदनुग्रहसत्ताम् । इतरे चाल्पं स्नेहम् । तथा त्यागपदेन भगवदतिरिक्तत्याग केचिदाहुः । अन्ये तु एतन्मार्गीयातिरिक्तसाधनत्यागम् । इतरे तु भक्तिमार्गविरोधिनोन्यभजनादेस्त्यागम् । तेन तन्मते गृहस्थित्यविरोधी त्याग आयाति । मन्मते तु गृहस्थितिविरोधीतिभेदो बोध्यः ॥ १ ॥

अतःपरं जघन्याधिकार्यर्थं प्रकारं वदिष्यन्तः पूर्वं बीजदार्ढ्यप्रकारमाहुः बीजेत्यादि ।

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

बीजं पूर्वोक्तम् । तद्दार्ढ्यप्रकारस्तु निरूप्यत इति शेषः । गृहे गृहस्थाश्रमे स्थित्वा स्वधर्मतः वर्णाश्रमधर्मतः पूर्वसिद्धादव्यावृत्तः अपरावृत्तः । 'आचार्यकुलाद्वेदमधीत्य गुरोः

१ साधारणसत्तारूपप्रेमव्यावर्तक विशेषणम् । 'नासतो विद्यते भाव' इति गीतायां तदुक्तम् । प्रेमापि सत्तारूप विषयभेदव्यावृत्त । विशेषणादित्युक्तम् । २ एकादशस्कन्धैकादशेध्यायेतिध्वनि । ३ व्यसनरूपप्रेमपरिणामान्तिमेन पूजादिमध्य सपक्व कारिकोक्ता भक्तिवृद्धि स्यादिति नोपक्रमविरोध ।

कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो [धार्मिकान्] विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते' इति छान्दोग्यस्थे गृहिणोपसंहारसूत्रविषय वाक्ये तथा सिद्धत्वात् । एकादशस्कन्धे उद्धवप्रश्ने भगवताप्याचारलक्षणस्य वर्णाश्रमधर्मस्य भजनाङ्गत्वेनोक्तत्वाच्च । तं कुर्वन् कृष्णं पुरुषोत्तमं भजेत् । तत्र साधनं पूजाश्रवणादिकं च । तदाहुः **पूजया श्रवणादिभिरिति** । अत्र पूजा यथालब्धोपचारैः स्नानालंकरणादिरूपं स्वरूपसेवनम्, अर्चनापरपर्यायम् । तत्रैव पूजनप्रयोगदर्शनात् श्रवणादि तु नवविधं प्रसिद्धमेव । तैर्भजेत् सेवेत । प्राथमिकभगवदनुग्रहेण जातामङ्कुरूपां भक्तिमनया साधनमर्यादयाभिव्यञ्जयन् वर्धयेदित्यर्थः । यद्यपि नवस्वर्चनमपि प्रविशति तथापि तस्यावश्यकत्वाय विशेषफलसाधकत्वाय च प्रथमं पृथङ्निर्देशः । नचोक्तश्रुतिभगवद्वाक्यबोधितप्रकारकस्य वर्णाश्रमधर्मस्येदानीमभावाद्भजनस्य व्यङ्गत्वं शङ्क्यम्, सप्तमस्कन्धे 'स्वधर्माचरणं शक्त्ये'ति नारदवाक्येन, निबन्ध आचार्यैरपि 'स्वधर्माचरणं शक्त्ये'त्यङ्गीकारेण च यथाशक्ति तत्करणेपि भक्तेर्व्यङ्गतापरिहारस्य निःप्रत्यूहत्वात् एवमेकः प्रकार उक्तः ॥ २ ॥

अतःपरं वैधुर्यादिना तदशक्तौ प्रकारान्तरमाहुः व्यावृत्तोपीत्यादि ।

**व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा ।**

वैधुर्यादिना व्यावृत्तः स्वाशक्त्या वर्णाश्रमधर्मान्निवृत्तोपि हरौ भगवत्स्वप्रभर्तरि चित्तं स्थापयित्वा श्रवणादौ श्रवणाद्यर्थम्, तादर्थ्ये सप्तमी, यतेत् यत्नं कुर्यात् । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदम् । न तु परार्थत्वात् । स्वतः पुरुषार्थत्वेनैव तत्करणस्य सिद्धान्तत्वात् । सदेति । निरन्तरमभीक्ष्णं वा । एवञ्च जघन्याधिकारिणोमध्ये यस्य सेवकसाधनसंपत्तिः तस्य पूजा श्रवणादिकं च बीजव्यक्तिसाधनम् । यस्य तु न पूजासाधनसंपत्तिः, तस्य तु भगवच्चित्ततापूर्वकं श्रवणादिकमेव साधनम् । एतदेवाभिप्रेत्याय निरोधलक्षणग्रन्थे 'संसारावेशदुष्टानामिन्द्रियाणां हिताय वै' इत्यारभ्य आन्तं प्रपञ्चितं ज्ञेयम् । तन्मया तद्विवरणे व्युत्पादितमिति नेह पुनरुच्यते ।

प्रायस्तु अव्यावृत्तशब्दस्य व्यासङ्गरहित इत्यर्थमाहुः, व्यावृत्तशब्दस्य च व्यासक्त इति । सोप 'आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्ये'ति श्रुत्यैव सिध्यतीत्युपेक्षितः । व्यासक्त इति तु 'हरौ चित्त'मित्यादिनैव निवार्यत इत्युपेक्षितः । लक्षणाप्रसंगाच्चेति बोध्यम् ॥ २३ ॥

---

१ मार्गान्तराणीति भावः । २ 'यदेव विद्यया करोति तदेवे'ति श्रुत्युक्तं विशेषफलम् । कर्मादिरीत्या भेद ? 'तमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति श्रुत्युक्तात् फलात् । ३ विपरीतलक्षणाप्रसंगात् ।

एवं बीजदार्ढ्यसाधनमुपदिश्य बीजाभिव्यक्तिप्रकारमाहुः **ततः प्रेमेत्यादि ।**

**ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥**
**बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।**

तत उक्तविध(मध्यम)जघन्याभ्यां कृताद्युक्तविधसाधनात्प्रेम हरौ भवेत् । पूर्वोक्तो हरिशब्दोऽत्राप्यनुषज्जते । एवमग्रेपि बोध्यम् । प्रेम च भावकन्दलरूपं बोध्यम् । **तथासक्तिः** तदुत्तरं तादृशेन तत्करणेन तदुत्कर्षावस्था रागादिरूपा भवेत् ।

कल्याणरायास्तु स्वविषये स्वतः प्रवर्तको भावः प्रेमशब्देनोच्यते, स्वविषये विविधमनोरथजनको भाव आसक्तिरिति तयोर्लक्षणमप्याहुः । तदपि युक्तम् । तथानुभवस्य सर्वजनीनत्वादिति ।

**च** पुनः यदा व्यसनं तद्विना स्थातुमशक्तिरित्याकारकं यदा भवेत्, तच्छास्त्रे भक्तिपरमकारणबोधके 'श्रद्धामृतकथायां मे' इत्यादिरूपे भगवता साधनपर्याप्तिकथनात् दृढं बीजमित्यस्माभिरुच्यते । दृढत्वे गमकमाहुः **यन्नापि नश्यतीति ।** नश अदर्शने । यद् दुःसंगादिना परिभूतं सद्दर्शनागोचरतां न प्राप्नोति, किन्तु सर्वदैव दृश्यते, स्वयं चानुभूयते । तथाचैतदेव दार्ढ्यलक्षणम् । अदृढस्यैव कादाचित्कत्वादिति । अत्र पूजाश्रवणादिकं दशमस्कन्धोक्तरीतिकमेव ग्राह्यमित्यभिप्रेतम् । नामावलीसमाप्तौ 'बाललीलानामपाठात् श्रीकृष्णे प्रेम जायते । आसक्तिः प्रौढलीलाया नामपाठाद्भविष्यति । व्यसनं कृष्णचरणे राजलीलाभिधानतः । तस्मान्नामत्रयं जाप्यं भक्तिप्राप्तीप्सुभिः सदे'ति कथनात् । एवं कीर्तनस्य निरोधलीलाविषयत्वे निश्चिते श्रवणस्यापि तद्विषयत्वमेव निश्चितं भवति । तथा श्रवणमपि यत्र यन्नामसिद्धं, यथा च नामावल्यां यत्रोक्तं, तदनुसंधानपूर्वकमेव संपादनीयमिति च । तथा पूजाया अपि । तेन नवानामप्येकरूपत्वं निश्चितं भवतीति मम प्रतिभाति । न च 'यस्याः संकीर्तनाद्विष्णुरात्मानं संप्रयच्छती'त्युपक्रमोक्तफलविरोधः शंकनीयः । तत्प्रावर्तनसिद्धात्कीर्तनात्सिद्धेः । उपसंहारे निरन्तरं जाप्योक्त्या तथावसायादिति ।

एवं दृढबीजलक्षणमुक्त्वा तत्सिद्ध्यर्थं तदुत्पादकानां प्रेमाद्यवस्थानां सिद्धिज्ञापकं लक्षणं क्रमेणाहुः **स्नेहादित्यादि ।**

**स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥**

**गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।**

**यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥**

---

१ 'बीज तदुच्यते' इत्युत्तरग्रन्थात् । 'सेवाया वा कथाया वे'त्यत्र सेवाश्रवणादिसाधनरूपा भक्तिरुक्ता । २ 'प्रातरुत्थो विचेरयु'रित्यारभ्य 'बीजी बसिते'त्यन्तम् । ३ तत प्रेमेत्यत्रोक्तयायनेषु नामात्मकसाधनप्रवेशात् तत इत्यस्य नामात्मकसाधनमाहु ।

अत्रैतद्बोध्यम् । भक्तिः स्नेहविशेष इति पूर्वं व्युत्पादितम् । तत्कारणं तु भगवद्धर्मविशेष एवानुग्रहाख्य इति भक्तिहेतुनिर्णये स्थितम् । सा चानुग्रहजन्या भक्तिः क्वचित्सहसैवाभिव्यज्यते, क्वचिच्च सत्सङ्गश्रवणादिसाधनद्वारा । तत्र ये शुद्धपुष्टावंगीकृतास्तेषु तु सहसैवाभिव्यज्यते, यथा गोकुलस्थेषु । ये पुनर्मिश्रपुष्टावंगीकृतास्तेषु तु साधनद्वाराभिव्यज्यते, किञ्चित्कार्यार्थं तेषु प्रतिबन्धतन्निवृत्त्योर्दर्शनात् । तथापि 'लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नान्यथा । वैष्णवत्वं हि सहज'मिति लक्षणं तु न व्यभिचरति । एवं सति येषु साधनद्वारा भक्त्यभिव्यक्तिः, तेषु साऽनुद्भूता भावरूपेण मनसि तिष्ठति, ततः पूजादिषु साधनेष्वनुष्ठीयमानेषु प्रेमादिरूपेण क्रमादुद्भूता भवति । अभियुक्तास्तु भावस्यावस्थासप्तकमाचक्षते । 'भावः प्रेम प्रणयः स्नेहो रागानुरागव्यसनानी'ति । अत्र च पूर्वं बीजाभिव्यक्तिप्रकारकथने 'ततः प्रेमे'ति प्रेमशब्देन पूर्वावस्थां निर्दिश्यात्र तदभिज्ञापककथने यत्स्नेहशब्दः प्रयुक्तः, तेन प्रेमप्रणयस्नेहाख्यास्तिस्रोवस्था यदा भवन्ति, तदा भगवच्छ्रवणाद्यतिरिक्तेषु रागविनाशो भवतीति सूच्यते । तथा च इतररागविनाशस्तत्प्राचुर्याभिज्ञापकं लक्षणम् ।

रागानुरागात्मकावस्थाद्वयरूपासक्तिप्राचुर्याभिज्ञापकं लक्षणत्रयमाहुः आसक्त्या स्याद्गृहारुचिरित्यादि । रुचिराकांक्षा गृहारुचिर्गृहाकांक्षाऽभावः उपेक्ष्यत्वमिति यावत् । सा आसक्त्या स्यादिति । तदासक्तिप्राचुर्याभिज्ञापकं लक्षणम् । लक्षणान्तरमाहुः गृहस्थानामित्यादि । गृहस्थानां चेतनाचेतनानां भगवति समर्पणानन्तरं भगवदीयत्वानुसन्धानेपि तेष्वंशतः स्वीयत्वाभिमानस्यापि विद्यमानत्वात्तमादाय तेषां पूजाश्रवणादिसाधनबाधकत्वं स्वस्य भासते, सर्वेषां चित्रकर्मत्वात्स्वभावभेदेनान्यविनियोगसंभवात्तच्चिन्ताया अकरणेपि तेषु स्वाभिमानस्य सहसाऽनिवृत्तेरनायत्त्यापि तच्चिन्तादिसंभवेन 'गृहेष्वतिथिवत् वसे'दिति न्यायस्य तदानीमसंभवादपि तेषां श्रवणादिबाधकत्वं स्वस्य भासते । किञ्च, अन्यविनियोगादीनां स्थूललिङ्गशरीरधर्मत्वात्तेषां तत्प्राधान्ये जीवस्यानुंस्मृतिः सतीत्युक्तसात्मधर्मस्य गौणत्वान्मूर्खे पाषाणकल्पत्ववदनात्मत्वं च तेषु भासते । तथाचैतदुभयभानं गृहस्थितिं शिथिलीकुर्वदासक्तिदार्ढ्यं संपादयतीति पूर्वोक्तमुभयविधं भानमासक्तिप्राचुर्यलक्षणमित्यर्थः । अत्र लक्षणत्रयकथनेन त्रितयभवने आसक्तिपर्याप्तिर्बोध्या ।

प्रायस्तु केचिदिमं मानं आसक्तिलक्षणत्वेनाहुः । अन्ये पुनर्व्यसनलक्षणत्वेन । अयं च स्वस्वरीत्या तं तमाहुः । मम तु भगवानेवं प्रेरितवानिति मयैवं व्याख्यातम् । गृहत्याग एवाचार्याणामाशयस्य स्फुटत्वादिति ।

व्यसनस्य तदाहुः यदेत्यादि । यदि एवं प्रेमासक्तिप्रकर्षोत्तरं व्यसनं 'तद्विना

१ गंगादिमध्यस्थेन वर्णाना 'अन्तरा भूतग्रामवत् स्वात्मनः' इति सूत्रात् । 'भगवानवाति'रित्यत्र भगिन्यादेन । २ निरोधलक्षणे तथोक्तं । ३ द्वितीयवदभावस्य मुख्यत्वादित्यर्थः ।

श्यातुमशक्तिः' । सा भगवद्गुणलीलादिप्राधान्यं विहाय, कृष्णे स्यात्, कृष्णे इति तादर्थ्ये सप्तमी, भगवत्स्वरूपार्थं स्यात्तदैव कृतार्थः स्यात्, कृतः अर्थः पुष्कलसाधनरूपो येन तादृशः स्यात्, तादृशत्वं विना साधनपौष्कल्यं नेति । 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोन्योर्थोस्यावशिष्यत' इत्यत्रेवात्रापि साधनपौष्कल्येर्थशब्दप्रयोगः । तथाच गुणलीलादिप्राधान्यं विहायैवं सर्वात्मभावपूर्वकक्षारूपं स्वरूपपरत्वं व्यसनोत्कर्षाभिज्ञापकं लक्षणमित्यर्थः । अयं च गुणलीलादिप्राधान्यत्यागो गुणोपसंहारे 'प्रदानवत्सूत्रे' प्रभुचरणैर्व्युत्पादितः 'प्रकृतेपि सर्वात्मभाव' इत्यादिना । तेनैवं दैन्य-पूर्वकशरणभावनेन स्वरूपैकपरत्वं व्यसनोत्कर्षलक्षणं पर्यवस्यति । एतावता दृढबीजस्वरूपमुक्तम् ॥ ५ ॥

एवं बीजभावे दृढे सति भक्तिवृद्धिः स्वत एवाग्रे भविष्यतीति न मन्तव्यम्, किन्तु गृहं त्यक्तव्यमेवेत्याहुः तादृशस्यापीत्यादि ।

**तादृशस्यापि सततं गेहस्थानं विनाशकम् ।**

तादृशस्य सर्वं विहाय स्वरूपपरस्यापि सततं निरन्तरं गृहस्थानं विनाशकं तादृशस्वरूपपरतानाशकम् । एकादशस्कन्धे भगवता 'बाध्यमानोपि मद्भक्तो विषयैरजितेन्द्रियः । प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयत' इत्यादिभिर्भक्तेर्माहात्म्यमुक्त्वा, अग्रे 'स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् । क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः' 'न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गत' इति द्वाभ्यां स्त्र्यादिसङ्गपरित्यागपूर्वकं निरुपद्रवे विविक्तस्थाने स्थित्वा स्वचिन्तनस्य कथनात् स्त्र्यादिसङ्गस्य क्लेशबन्धहेतुत्वकथनाच्च । तस्मान्निरन्तरं गृहस्थितिस्त्याज्यैव । किन्तु मध्ये मध्ये गृहान्निर्गत्य, यत्र भगवत्सान्निध्यं, तत्र गत्वा, भगवद्दर्शनसेवादिविधानेन गृहस्थितिं शिथिलीकुर्यादित्यर्थः । एतेन बीजदार्ढ्यनिर्वाहप्रकार उक्तः ।

अतः परं यत्पूर्वं 'त्यागाच्छ्रवणकीर्तनादि'त्यनेन भक्तिवृद्धिप्रकार उक्तस्तं व्युत्पादयन्ति त्यागं कृत्वेत्यादि ।

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥**

**लभते सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।**

संन्यासनिर्णये 'विरहानुभवार्थं तु परित्यागः प्रशस्यत' इत्यादिना आरंभदशाया

---

१ आर्तिविशेषो दैन्यम् । २ 'मुमुक्षुर्वै शरणमनुव्रजे'दिति गोपालतापिनीये माहात्म्यं शरणत्वम् । ३ सोहमित्यैक्यपरत्वं सञ्चारिभावरूपम् । उभयं भक्तिकारणं बीजभावे निरूपितम् । ४ भक्तिरसस्यालम्बनोद्दीपनानुभावसञ्चारिभावरूपम् । ५ गृहे स्थित्वा स्वधर्मतो गृहस्थाश्रमे भजनं संयोगरूपं, विप्रयोगरूपं त्याग इति द्विदलात्मकभक्तेर्द्वितीयदलप्रकारम् । ६ भक्ति.

यत्प्रकारकस्त्याग उक्तस्तं कृत्वा, यथाधिकारं श्रवणकीर्तनाभ्यां यतेत्, भक्तिप्रवृद्ध्यर्थं यत्नं कुर्यात् । तत्रापि न भक्तिवृद्धावेव पर्यवसन्नः, किन्तु **तदर्थैकमानसः** । पूर्वं कृष्णशब्दस्योक्तत्वादत्र तच्छब्देन स एव परामृश्यते, अर्थश्च प्रयोजनम्, स अर्थो यस्याः सा तदर्था, स्वरूपमात्रफला गुणातीतभक्तिरिति यावत् । तस्याः य अर्थो भगवान्, तस्मिन्नेवैकं केवलं मानसं यस्य सः तथा । तथा च तादृशीं भक्तिं यो भगवत्साधकत्वेन न करोति, किन्तु स्वरूपदिदृक्षयैव करोति, स तथेत्यर्थः । तस्य सिद्धिमाहुः लभत इत्यादि । सः सुदृढां इतराप्रतिबध्यां सर्वाभ्योपि भक्तिभ्योधिकां निरोधलक्षणग्रन्थ उत्कृष्टत्वेन सूचितां परामूर्जितां भगवत्साधिकां भक्तिं लभते । तथाच दिदृक्षातिरिक्तयावदपेक्षारहितस्य परमभक्तिप्राप्तिर्भवति । तेनेदमेव भक्तिप्रवृद्धेः स्वरूपमित्यर्थः ॥ ६३ ॥

एवं भक्तिप्रवृद्धिस्वरूपपर्यन्तं तद्वृद्ध्युपायमुक्त्वा, तत्र प्रतिबन्धेऽनधिकारे च तदनुकल्परूपमुपायान्तरमाहुः त्यागेत्यादि ।

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**
**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**
**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**
**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**
**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

त्यागे करिष्यमाणे कालाद्यदृष्टादिकृतदुःसंसर्गात्, तथाऽन्नतः प्राणपोषकाद्यन्नाद्यतो बाधकभूयस्त्वं भक्तिवृद्धिबाधकबाहुल्यम्, अतस्तद्बाहुल्याद्धेतोः हरिस्थाने स्थेयम्, 'मन्निकेतं तु निर्गुण'मिति भगवद्वाक्येन तत्र देशदोषाभावात् । अत्र कथं स्थेयमित्याकांक्षायां प्रकारमाहुः तदीयैरित्यादि । तत्रापि तत्परैस्तदीयैः सहेति कथनेनानन्यतया सेवाकृतिः स्वस्यापि सूचिता । तेन 'सावधानैः परस्परं सस्नेहैरचद्भिर्दृष्टिभिर्भगवत्सेवैकपरैः स्थेयम् ।' तथा च तादृशस्थित्यां दुःसंसर्गस्याभावात्प्रसादादिना वा अंघ्रिपतुल्यवैष्णवादिभ्यो भिक्षया वा देहनिर्वाहेऽन्नदोषस्याप्यभावाद्भक्तिवृद्धिरित्यर्थः । एतेन नलकूबरप्रसंगे वैराग्याद्यस्त्यागो निर्णीतस्तस्यायं प्रकार इत्यपि बोधितम् । तस्याप्यसंभवे तदनुकल्पान्तरमाहुः, तत्र स्थितौ वा प्रकारमाहुः अदूरे विप्रकर्षे वेति । भगवन्मन्दिराद् भगवदीयेभ्यश्चादूरे, दूरे वा । यादृश्या सेवया स्वस्य सेवाभिमानो न भवति, भगवदीयेषु च निकर्षबुद्धिनिरुद्धबुद्धिदोषदृष्टिक्षोभादिर्भिर्यथा चित्तं न दुष्यति, तथा स्थेयमित्यर्थः । यदि च कालाद्यदृष्टादिदोषेण तादृशां सङ्गो न भवति, तदा तत्र स्थितौ प्रका-

१ स्वभावमारभ्यपर्यन्तम् ।

रान्तरं तदनुकल्पं वा आहुः सेवायामित्यादि । तादृशभगवदीयसङ्गाभावेपि यद्यद्दूरायां विप्रकृष्टायां वा सेवायां आसक्तिर्दृढा भवेत् । अन्यकृतोपहासन्यक्कारादिभिरनपनोद्या भवेत् । एवं कथायां श्रूयमाणायां कीर्त्यमानायां वा तस्यामासक्तिर्दृढा भवेत्, सापि यावज्जीवम्, यावत्सामर्थ्यम्, जीवपदेन सामर्थ्यादिकमप्यर्थादाक्षिप्यते । अतस्तावत्पर्यन्तम्, न तु कञ्चित्कालम् । क्रियाविशेषणमेतत् । तस्य यावज्जीवं तत्कर्तुः पुंसः क्वापि नाशो न । इह लोके यथाधिकारं स्वरूपपरतायाः साधनपरतायाश्च नाशो न । परलोके च यथाधिकारं फलप्रतिबन्धश्च नेत्यर्थः । दृढकथासक्तिप्रकारश्च प्रक्षिप्ताध्यायेषु तृतीये 'ज्ञाने प्रयासमुदपास्येति' श्लोके आचार्यैर्विवृतः । 'अयमेको मार्गः सर्वेषां पुरुषार्थसिद्ध्यर्थं प्रसिद्धः सुगमः । आदौ स्थानस्थितानां जीविकोपद्रवाभावादिः स्वतःसिद्धः । सन्तश्च सर्वत्र भगवदाज्ञया परिभ्रमन्ति, तेषां चैवदेव कृत्यम् । भगवद्गुणगाने ते मुखरा एव भवन्ति । तत्रापि कथायां ज्ञात्वा वक्तव्यमिति न नियमः । केवलं भगवदीया भगवत्सम्बन्धिनी वार्ता भवतु, न तूपपन्नाऽनुपपन्ना चेति । तत्राप्यनायासेन स्वकर्णे समागता भवति । परं कायवाङ्मनोभिर्नमस्या सा, तदनुगुणतया कायवाङ्मनांसि स्थापनीयानि, न तु तत्र विरोध आचरणीयः । एतावदेव कृत्यम् । अत्र साधनं जीवनमेव, न तु कर्मकरणादिकमपि । प्रायश इति ते चेद्भावान्तरं न कुर्युः । कालादयश्च प्रतिबन्धकत्वाद्वा । अतोनेनैव प्रकारेणाप्रेतनानां निस्तारः ।' किञ्च, सेवादृढासक्तिप्रकारोपि तत्रैव 'पुरेह भूम'न्निति श्लोके विवृतः । 'हे भूमन् व्यापक पूर्वमपि विद्यमान इहास्मिन्मार्गे बहवोपि सहस्रशो योगिनो योगेनावधृतभक्तिसामर्थ्याः, अत एव त्वय्यर्पिता ईहा चेष्टा यैः । तेनैव समर्पणलक्षणेन कर्मणा त्वत्सेवालक्षणकर्मणा वा लब्धया प्राप्तया भक्त्यैव विबुध्य स्वरूपं ज्ञात्वा, हे अच्युत केनापि प्रकारेण च्युतिरहित, ते गतिं मार्गं, येन प्रकारेण त्वं गच्छसि, तां प्रपेदिरे । पश्चात्तदनुगानां न कापि चिन्ता । अञ्जः अनायासेनैव परां लोकातीतां प्रपेदिरे प्राप्तवन्तः । अत आत्मज्ञानापेक्षायामप्ययमेव मार्ग उचितः ।' अत्र नान्येषां सम्मतिः, किन्त्वहमेव वदामीत्याहुः मतिर्ममेति । 'श्रद्धा'मुपक्रम्य 'मत्सेवायां तु निर्गुणे'ति । संवादसमाप्तौ च 'नह्यङ्गोपक्रमे ध्वंस' इति 'यो यो मयि परे धर्म' इति च भगवद्वाक्यात् सदादृतभक्तिप्रश्ने, तामुपक्रम्य 'मत्कथाश्रवणे श्रद्धा' 'श्रद्धामृतकथायां मे' इति च भगवद्वाक्यात् मम बुद्धिस्त्वद्दासेऽप्याशामार गमयति, तेन तथेत्यर्थः । यदि च जाते पीजभावदार्ढ्ये अजाते वा पूर्वोक्तानां तदर्थानां साधनानां कालादृष्टादिना प्रतिबन्धात्करणाशक्तिः, तदोपायान्तरमाहुः बाधेत्यादि । मुख्यः कल्पस्तु भगवत्कृपयैव सिध्यतीति न तत्र बाधसम्भावना । 'तदा भवेद्यालुत्व'मिति निरोधलक्षणे निष्कर्षात् । दयायां च सत्यां प्रतिबन्धासम्भवात् । यत्र पुनस्त्यागे बाधकभूयस्त्वमित्यादिनोक्तेनुकल्पे करिष्यमाणे क्रियमाणे वा बाधस्य निपटनस्य सम्भावना उत्कटकोटिकः संशयः, तदा तु एकान्ते भगवत्स्या-

नादौ वासो नेष्यते । तदा गृहे वा अन्यत्र वा यत्र क्वचित्स्थित्वा हरिरेव शरण भावनीयः । 'हराम्यघं यत्स्मर्तॄणामिति' भारते भगवद्वाक्यात् । 'सर्वधर्मान्परित्यज्ये'ति गीतायां भगवद्वाक्याच्च । हरिरेव सर्वतो रक्षां करिष्यति । तुः संशयाविश्वासादिनिरासे । न संशयः, रक्षाकरणे संशयो नास्ति । तथा च पूर्वोक्तरीत्या भक्तिमार्गे प्रवृत्तिः संपाद्या । तत्र बाधे सत्यनुकल्पः करणीयः । तत्रापि बाधे तदनुकल्पः । तत्रापि बाधे शरणगमनं सर्वानुकल्परूपं करणीयम्, न तु पूर्वमेव सेवादिकं त्यक्त्वानुकल्पे प्रवर्तनीयम्, भगवदिच्छाया ज्ञातुमशक्यत्वादिति ॥ ७–१० ॥

एवं सर्वं भक्तिवृद्ध्युपायं निरूप्य तदुपसंहरन्त एतद्विचारफलमाहुः इतीत्यादि ।

इत्येवं भगवच्छास्त्रं मया गुप्तं निरूपितम् ।
य एतत्समधीयीत तस्यापि स्याद् दृढा रतिः ॥ ११ ॥

इतिः समाप्तौ । एवं पूर्वोक्तप्रकारेण भगवच्छास्त्रं गीतायामेकादशस्कन्धेऽन्यत्र च भगवदुपदिष्टं शास्त्रं मया गुप्तं निरूपितं प्रकटीकृतम् । यः सदा एतद्गुप्तं शास्त्रं समधीयीत सम्यक्प्रकारेण चिन्तयेत्, इक् स्मरणे, इङिकावध्युपसर्गतो न व्यभिचरतः । तस्यैतद्विचारयितुरपि रतिः प्रेमात्मिका दृढा स्यात् । तथा च तया दृढया संसाररागविनाशे जाते क्रमादन्यदपि भगवान् सम्पादयिष्यति । 'न ह्यङ्गोपक्रमे ध्वंस' इति भगवद्वाक्यात् । तथा चात इदमभीक्ष्णं विचारणीयमित्यर्थः ।

इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ।
परप्रेरणयामात व्यवृणोत्पुरुषोत्तमः ॥ १ ॥

इति श्रीवल्लभाचार्यचरणैकतानश्रीपीताम्बरात्मजपुरुषोत्तमविरचिता
भक्तिवर्धिनीविवृतिः सम्पूर्णा ॥

---

१ [illegible]

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीवल्लभकृतटीकासमेता ।

शश्वत्प्रियासितापाङ्गध्यानावस्थितचेतसा ।
प्रातरतन्निजरूपाय गोविन्दाय नमो नमः ॥ १ ॥

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

भक्तिवर्धिन्याम् । यथेति । यथा येन प्रकारेण । भक्तिः शास्त्रीया । प्रवृद्धा मानससेवारूपा सती फलोन्मुखा भवेत्तथोपायस्तत्प्रकारभूत उपायस्तनुवित्तजसेवया बीजभावदार्ढ्यसम्पादनरूपस्त्यागेन श्रवणकीर्तनरूपश्च निरूप्यत इत्यर्थः । तस्य साधनासाध्यत्वसिद्धान्तादुपायपदम् । अत्र बीजं रत्याख्य आद्यः कोमलो भावः भगवानेव शरणमित्याकारकः । येन भगवद्धर्मेषु रुचिर्भवति । भक्तिर्द्रुमः । फलं स्वाधिकारानुसारेणालौकिकसामर्थ्याद्यन्यतरप्राप्त्या भगवद्भजनम् । स उपायो द्विविध इत्याहुः बीजेति । बीजरूपे रत्याख्ये भावे तनुवित्तजसेवया दृढे नाशसंभावनारहिते जाते तस्य भक्तिद्रुमस्य प्रवृद्धिः । फलोन्मुखत्वं स्यादित्यर्थः । अतस्तद्दार्ढ्यं सम्पादनीयमित्येक उपायः । द्वितीयनिर्धारमाहुः त्यागादिति । त्यागाद्धेतोः सिद्धान्तच्छक्तितात्पर्यरूपाच्छ्रवणसहितकीर्तनादित्यर्थः । हरिस्थानवासे तदीयैः सह स्थितौ शक्तितात्पर्यनिर्धारो भवतीति भावः । द्वितीयपक्षेपि दार्ढ्यमपेक्षितमेवेति तुशब्दः । परन्त्वाद्यपक्षे गृहस्थित्या भावनाशशङ्कया तनुवित्तजसेवया तद्दार्ढ्यं सम्पादनीयं भवति । द्वितीयपक्षे तु तदभावात्स्वत एव दार्ढ्यं सिध्यतीति विभेदः ॥ १ ॥

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

आद्यमुपायमाहुः बीजदार्ढ्येति । द्वितीयपक्षादयं पक्षः पृथगिति तुशब्दः । पाषण्डित्वाभावाय स्वधर्मतो वर्णाश्रमधर्मेण गृहे स्थित्वाऽव्यावृत्तो भोगार्थव्यावृत्तिरहितः । आश्रमधर्मत्वेन आसमृतुगमनादिकमेव कुर्वन्निति यावत् । श्रवणादिभिः सहितया पूजया द्रव्येषु भावात्मकत्वभावनरूपया कृष्णं फलात्मकं भजेत्सेवेत । तनुवित्तजसेवां कुर्यादित्यर्थः । ज्ञानमयद्रव्यसम्पादितायाः पूजात्वं 'धन्यास्त्वि'ति श्लोके निरूपितम् ॥२॥

व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति।

व्यावृत्तोपीति । कामादिभावत्ये तत्कृतप्रतिबन्धाभावाय भोगार्थव्यावृत्तिसहितोपि सेवाऽनवसरेऽनिषिद्धप्रकारेण नित्यमपि भोगं कुर्वन्नित्यर्थः । हरौ चित्तं स्थापयित्वेति शेषः । श्रवणादौ यतेत्, प्रतिबन्धनिवृत्तिमात्रार्थमेव भोगं कुर्वन् सदा सेवानवसरेपि यत्नं श्रवणादिविषयकमेव सम्पादयेदित्यर्थः । एवं कृते बीजभावस्य दार्ढ्यं भवति । तन्नाभिज्ञापकमाहुः ततः प्रेमेति । एवं कृते सा भक्तिः प्रेमशब्दवाच्या भवति । पूर्वं लोकेपि स्नेहः स्थितो, भगवति परमधिकः । 'सर्वतोधिकः स्नेहो भक्ति'रितिलक्षणात् । एवं कृते तु सर्वतो निवृत्तो भगवन्मात्रविषयको भवतीत्यर्थः । तदनन्तरं सासक्तिशब्दवाच्या भवति। अनायासेनापि भगवानेव स्मृतो भवति येन तादृशस्नेहो भवतीत्यर्थः । 'चित्तस्वभाव आसक्तिर्यस्त्यक्तुं नैव शक्यते । स्नेहो रतिरिति प्रोक्त' इति तृतीयस्कन्धसुबोधिन्यामुक्तम् । आसक्तित्वसाधकोपि पूर्वोक्त एव प्रकार इति तथैत्युक्तम्। व्यसनं चेति । अत्रापि स एव प्रकार इति चकारः । विशेषेणासनं क्षेपणं येन । येन भावेनान्यास्फुरणं भवति । प्रपञ्चविस्मृतिरिति यावत् । आसक्तिः प्रपञ्चविस्मृतियुता सती व्यसनम् । तथाच निरोधो व्यसनशब्दवाच्यस्तत्त्वं भक्तेर्यदा भवेत् । ततदा बीजं दृढं भगवच्छास्त्रे उच्यते । भक्तेर्व्यसनत्व बीजदार्ढ्यस्याभिज्ञापकमित्यर्थः । दार्ढ्यस्वरूपमाहुः नापीति । नाशाप्रतियोगीत्यर्थः । सततगृहस्थितौ नाशसम्भावनामपि वक्ष्यन्तीत्यपिशब्दः ॥ ३½ ॥

प्रेमादित्रयस्याभिज्ञापनाय तत्कार्याण्याहुः स्नेहादिति ।

स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥

सर्वतो निवृत्ताद्भगवन्मात्रविषयकस्नेहादित्यर्थः । रागविनाशगृहारुचिकृतार्थतानां क्रमात्प्रेमाद्यभिज्ञापकत्वमिति भावः । रागविनाशो विषयवैराग्यम् । स्नेहस्य विषयेभ्यो निवृत्तौ तेषु वैराग्यमुदासीनता भवतीत्यर्थः । आसक्त्या गृहारुचिर्भवति ॥ ४ ॥

अत्र नञर्थो निरुद्धत्वमित्याशयेनारुचिपदार्थं विवृण्वन्ति ।

गृहस्थानां बाधकत्वमनात्मत्वं च भासते।
यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥
तादृशस्यापि सततं गेहस्थानं विनाशकृत्।

गृहस्थानामिति । अभगवदीयानामिति शेषः । एतेषां भावबाधकत्वेनानात्मत्वेन च भानमरुचिपदार्थं इतिभावः । भार्यापुत्रयोरात्मत्वे शास्त्रसिद्धे अपि भक्तानां भगवानेवात्मरूपो, न तु तावितिभावः । अत एव सेवाप्रातिकूल्ये भार्यादीनामपि त्यागोऽ-

न्नोक्तः । यदा भक्तिर्व्यसनरूपा स्यात् । बाधकत्वेनाप्यन्यास्फुरणं स्यात् । तदैव कृष्णे कृतः समर्पित ऐहिकपारलौकिकः सर्वोप्यर्थो येन तादृशः सिद्धात्मनिवेदो भवतीत्यर्थः । पूर्वं सामान्यतो निवेदने कृतेपि तत्सिद्धिर्व्यसने एव जाते भवति । तथाचात्मनिवेदनरूपा भक्तिर्व्यसनकार्यमितिभावः । यथा गोपाः सर्वस्य भगवदर्थत्वज्ञानेन प्रपञ्चविस्मृतेर्जातत्वात्सर्वार्थे भगवानेव वक्तव्य इति ज्ञानयुक्ताः क्षुन्निवृत्त्यर्थमपि भगवन्तमेव प्रार्थितवन्तः । अत एव 'व्यसनान्नान्यगामिन' इति तत्र निबन्धे निरूपितम् । पूर्वयोः किञ्चित्कालं व्यवधानमपि । इदं तु व्यसनसिद्धौ शीघ्रमेव भवतीति यदा तदैवेत्युक्तम् । तत्र किञ्चिदन्यदप्याहुः । तादृशस्यापीति सिद्धात्मनिवेदनस्यापीत्यर्थः । गृहस्य भगवति समर्पितत्वेन सर्वथा बाधकत्वाभावान्न सर्वात्मना त्यागः, किन्तु सततस्थितौ भोगदृष्टिसम्भवात् भोगस्य च सेवाफलग्रन्थे बाधकत्वनिरूपणान्मध्ये मध्ये लीलास्थलेषु गोवर्धनादिषु गच्छेदिति सततमित्युक्तम् । विनाशकृत् । भोगसम्भावनया बीजभावनाशकृदित्यर्थः । एवं तनुवित्तजसेवया बीजदार्ढ्यसम्पादने भक्तिर्व्यसनान्तावस्थां प्राप्ता चेतस्तत्प्रवणलक्षणमानससेवारूपा दृढा सती अलौकिकसामर्थ्यान्यतरफलोन्मुखा भवतीत्येक उपाय उक्तः । अत्र भार्यादिप्रातिकूल्ये यः प्रतिकूलस्तस्य त्यागो, न तु गृहस्य । अत एव 'प्रतिकूले गृहं त्यजे'दित्यत्र गृहं भार्यादिकमिति व्याख्यातम् ॥ ५½ ॥

त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
लभते सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।

द्वितीयमाहुः त्यागं कृत्वेति । गृहत्यागं कृत्वा । स चासावर्थश्च तदर्थः । आद्यश्लोके उद्देशत उक्तः श्रवणकीर्तनरूपो योर्थस्तदर्थं तद्विषयकमेवैकं मानसं यस्य तादृशः सन् । श्रवणकीर्तनार्थमेव हरिस्थाने भगवद्भक्तसंनिधौ तिष्ठन्निति यावत् । एतादृशः सन् यो यतेत् । श्रवणादाविति शेषः । स भक्तिं सुदृढां व्यसनत्वं प्राप्तां लभते । ततः सर्वतोऽधिकां परां फलोन्मुखामपि लभत इत्यर्थः । भक्तेः पूर्वमपि सिद्धत्वात्सविशेषणे हीतिन्यायेन विशेषणलाभो विधीयत इति ज्ञेयम् । 'गृहं सर्वात्मना त्याज्य'मिति वाक्यादेतस्य पक्षस्य मुख्यत्वम् । अत एव प्रथमपक्षे नाशसम्भावनाप्यस्तीत्युक्तम्, अत्र तद्व्यावर्तनाय तुशब्दः । मुख्यांशं विशदयन्ति सुदृढामिति । आद्यपक्षे सततगृहस्थितौ नाशसम्भावनाप्यस्तीति तदकृत्वा बीजदार्ढ्यसम्पादनेन भक्तेर्दार्ढ्यं व्यसनत्वं सम्पादनीयं भवति । अत्र पक्षे तु गृहाभावेन नाशसम्भावनाऽभावात्पूर्वोक्तबीजदार्ढ्ये यत्नं विनैव सुदृढा व्यसनत्वं प्राप्ता भवतीत्येतावदंशमादाय 'पाक्षिकोपि दोषः परिहरणीय' इति न्यायेन मुख्यत्वम् । फलसाधने तु साम्यमेवेति वक्ष्यते ॥ ६½ ॥

ननु त्यागमात्रमेव वक्तव्यं भवति, हरिस्थानवासो भक्तसङ्गश्च पुनः किमर्थं घोष्यत इत्यत आहुः त्याग इति ।

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**
**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**

धर्मद्वयरहितकेवलत्यागे बाधकभूयस्त्वमस्त्यतो हेतोः । तथान्नतो दुःसंसर्गाद्धेतोः हरिस्थाने तदीयैः सह स्थेयमित्यन्वयः । हरिस्थानवासराहित्ये बाधकभूयस्त्वं 'सहायसङ्गसाध्यत्वा'दित्यारभ्य 'नैव त्यागः सुखावह' इत्यन्तं संन्यासनिर्णयोक्तमस्तीति शेषः । अतो हरिस्थाने स्थेयम् । तत्र ते दोषा न भविष्यन्तीति भावः । तथा भक्तसङ्गराहित्ये अन्नतो हेतोः अन्नार्थं दुःसंसर्गात् दुष्टानां संसर्गसम्बन्धाद्धेतोस्तदीयैर्भगवदीयैस्तत्रापि तत्परैर्भगवत्परैर्नतु हिरण्यकशिपुप्रभृतिवदतत्परैः सह स्थेयम् । तदान्नार्थमपि तेषामेव संसर्गो भविष्यति, न तु दुष्टानामिति भावः ॥ ७३ ॥

हरिस्थानस्य द्वैविध्याशयेनाहुः अदूरे इति ।

**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

पूजाप्रवाहवति गोवर्धननाथजगन्नाथादिस्थाने भगवतः अदूरे पूजाप्रवाहरहितयमुनातटादिषु लोकदृष्ट्या भगवतो विप्रकर्षे वा स्वस्य चित्तं यथा न दुष्यति, दोषयुक्तं न भवति, तथा स्वयमेव विचार्य स्थेयमिति पूर्वेणान्वयः ॥ ८ ॥

अन्योक्तपक्षद्वयमुपसंहरन्ति ।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**

सेवायामिति । आद्ये बीजदार्ढ्यसम्पादनपक्षे सेवायां क्रियमाणायां, द्वितीये त्यागपक्षे कथायां वा क्रियमाणायां सत्यां यस्य आसक्तिरासक्तित्वं प्राप्ता भक्तिर्दृढा व्यसनत्वं प्राप्ता भवेत्, तस्य पुरुषस्य भक्तिबीजस्य नाशो न । तथा च व्यसनरूपा नाशसम्भावनारहितबीजा भक्तिश्चेत्तत्स्वरूपवणलक्षणमानससेवारूपा सती अलौकिकसामर्थ्यान्यतरफलं यथाधिकारं सम्पादयतीति भावः । नात्र वर्णादिनियम इत्याहुः यावज्जीवमिति । सर्वानेव जीवान् मर्यादीकृत्येत्यर्थः । व्यसनसिद्ध्यनन्तरं हरिस्थानवासनियमोपि तथा नास्तीति क्वापीत्युक्तम् । किन्तु सततगृहस्थितिर्निषिद्धेति पूर्वमुक्तम् । वर्णादिसाधारण्यं प्रमाणेन निरूप्यत इत्याशंक्यात्र प्रमाणबलाभावायाहुः मतिर्ममेति । अस्मन्मतिसिद्धोयं पक्षः, अतः प्रमेयबलसिद्धः । वाचा कथनेपि मनसिसिद्धत्वमेव मुख्यमिति भावः ॥ ९ ॥

पक्षद्वयस्य व्यवस्थामाहुः बाधेति ।

**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

कामादिभिर्दोषसम्भावनायाम् । इन्द्रियजयसामर्थ्याभाव इति, यावत् । तदा एकान्ते वासस्त्यागपक्षो नेष्यते । तथाचेन्द्रियजयसामर्थ्याभावे पूर्वोक्तपक्षेण स्थेयम् । तत्सामर्थ्ये त्यागपक्षेण हरिस्थाने तदीयैः सह स्थेयमिति व्यवस्थेति भावः । एवं व्यवस्थायां 'गृहं सर्वात्मने'ति श्लोकसंमतिसूचनाय तुशब्दः । नन्वत्यागपक्षे गृहे स्थितौ तत्रासक्तिरनिवार्या । त्यागपक्षे च गृहत्यागस्याश्रमान्तराग्रहणे प्रमाणविरुद्धत्वात्पापसम्भावनेत्याशंक्याहुः हरिस्त्विति । सर्वतो गृहासक्तेः सर्वपापेभ्यश्चेत्यर्थः । 'अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' इत्यस्यार्थोऽनुसंधेयः । एतद्वाक्यानुसंधानेन न संशय इत्युक्तम् । हरित्वाद्रक्षणं युक्तमेवेति तुशब्दः ॥ १० ॥

उपसंहरन्ति इत्येवमिति ।

इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।
य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥

य एतदिति । एतदध्ययनेनापि रतिर्बीजभावरूपा दृढा स्यादिति । बीजदार्ढ्यसम्पादनस्यायपक्षस्यायमप्येकः प्रकार इति तस्यापीत्यपिशब्दः ॥ ११ ॥

स्वीयेषु कृपयोक्तस्य ग्रन्थस्यास्य महात्मभिः ।
वदनानलदासोक्ता व्याकृतिः पूर्णतामगात् ॥ १ ॥

इति श्रीविठ्ठलेशात्मजश्रीवल्लभकृता भक्तिवर्धिनीटीका समाप्ता ॥

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## मठपतिश्रीजयगोपालभट्टकृतटीकासमेता ।

बर्हिबर्हलसन्मौलि वेणुवादविशारदम् ।
दुःखं दलयतादुच्चैस्मिमद्दलितं महः ॥ १ ॥
श्रीवल्लभतत्सुतवरगुरुपितृकृष्णान् मुहुः प्रणमन् ।
टीकामतीव रम्यां कुर्वे श्रीभक्तिवर्धिन्याः ॥ २ ॥
सगुणा भक्तिर्नवधोक्तैकविधा निर्गुणा ततो दशभिः ।
पद्यैरुक्तो वृद्धिप्रकार एकेन चोपसंहारः ॥ ३ ॥

अथ दशविधैर्भक्तभावैर्दशविधा भक्तिरिति दशश्लोकैर्भक्तिवर्धिनीशास्त्रे भक्तिवृद्धि-

प्रकारं एकेन श्लोकेन तदुपसंहारं तत्पाठफलं चाहुः श्रीवल्लभाचार्याः **यथा भक्तिः प्रवृद्धा स्यादि**त्यादिना ।

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

**यथा** येन प्रकारेण **भक्ति**र्भावरूपा **प्रवृद्धा** अवस्थाविशेषविशेषाविर्भावेन रसरूपतापर्यन्तं प्राप्ता भवति, तथा मया उपायः साधनं **निरूप्यते** कथ्यत इत्यर्थः । ननु भक्त्युत्पत्तिसाधनं पूर्वमनुक्त्वा भक्तिवृद्धिसाधनोपदेशः कथं क्रियत इति चेत् । अत्रोच्यते । पुष्टिमार्गे प्रभो 'रसो वै स' इति श्रुत्या एकवचनाविरुद्धसामान्यरसशब्दप्रयोगेणानेकविधरसरूपावशिष्टैकरसरूपत्वं सिध्यति । अत्र प्रभुरनेकरसविशिष्टोपि प्राधान्यतः कीदृशरसरूप इति जिज्ञासायां शृङ्गाररसरूप एवेत्यायाति । यतः श्रुतिभिः परमकाष्ठापन्नानन्दस्वरूपफलरूपदर्शने प्रार्थिते भगवतोद्दीपनविभावरूपश्रीगोवर्धनश्रीयमुनादिविशिष्टे प्रकृत्यतीताक्षरब्रह्मान्तर्गतब्रह्मानन्दमध्यव्यापिवैकुण्ठान्तर्गतश्रीमद्वृन्दावने 'नानारासरसोन्मत्तं यत्र गोपीकदम्बक'मित्यादीदृशोऽनुभावरूपो यो रासस्तद्रसोन्मत्तः शृङ्गाररसालम्बनीभूतनायिकारूपगोपीकदम्बकयुक्तमेव परमकाष्ठापन्नफलरूपं स्वस्वरूपं ताभ्यः प्रदर्शितमिति बृहद्वामनपुराणे श्रूयते । अन्यरसस्वरूपत्वेनैव प्राधान्ये तद्विभावादिविशिष्टमेव स्वरूपं प्रदर्शितं स्यात् । न च तस्य स्वरूपस्य परमकाष्ठापन्नत्वे प्रमाणाभाव इति वाच्यम् । 'कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ । पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान्वो रासमण्डल' इति बृहद्वामनपुराणे सारस्वतकल्पे स्वावतार उक्तो भगवता श्रुतीनामनुग्रहार्थम् । तत्कल्पानुसार्येव श्रीभागवतं तत्स्वरूपदर्शनेनैव च निखिलवेदपुराणधर्मजिज्ञासाब्रह्मजिज्ञासादिभिरप्यजातचित्तप्रसादानां श्रीमतां व्यासचरणानां चित्तप्रसादो जातो, न त्वन्यस्वरूपदर्शनेनेत्यर्थापत्तिरूपप्रमाणेन तस्य स्वरूपस्यैव परमकाष्ठापन्नत्वे सिद्धे तत्स्वरूपस्य परमकाष्ठापन्नत्वे प्रमाणाभावाभावात् । एवं च सिद्धे शृङ्गाररसरूपत्वस्यैव प्राधान्येन धर्मित्वेऽन्यरसस्वरूपाणां च तदङ्गत्वेन धर्मत्वे, शृङ्गाररसस्य तु रतिरूपस्थायिभावात्मकत्वात् रतिरूपस्थायिभावस्य च भगवद्रूपत्वेन ब्रह्मत्वात् ब्रह्मणश्च व्यापकत्वात् भगवद्विषयकरतेरपि व्यापकत्वे सिद्धे सर्वजीवेषु तत्स्थितत्वं सिद्धम् । तत्र रतेर्ब्रह्मत्वेनानन्तरूपत्वाद्भगवद्विषयिणी श्रीमद्व्रजभक्तादिनिष्ठारतिः शृङ्गाररसरूपा भवति । अस्मदादिनिष्ठा भगवद्विषयिणी रतिर्भक्तिरसरूपा भवति । सैवास्मदादिनिष्ठा सपरिकरभगवदतिकृपायां स्वस्य पूर्वरूपं तिरोधाप्य शृङ्गाररसरूपतामपि प्रकटीकरोति । एवं च 'प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयते' । 'रतिर्देवादिविषया भाव इत्यभिधीयते ।' 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति वाक्येभ्यः प्रेमप्रथमावस्थारूपत्वात् प्रभुविषयकत्वाच्च भावशब्दवाच्या स्नेहरूपत्वेन भक्तिशब्दवाच्यापि

भवति। तत्र सा भक्तिर्द्विविधा । मर्यादापुष्टिमार्गीया शुद्धपुष्टिमार्गीया च । तत्र 'यमेवे'ति श्रुतिसिद्धं मर्यादापुष्टिमार्गीयं वरणं शुद्धपुष्टिमार्गीयं च वरणमिति वरणेपि द्वैविध्यमिति सिद्धान्तात् मर्यादापुष्टिमार्गे मर्यादानुग्रहाभ्यां मिलिताभ्यामेव कार्यसिद्धिः । शुद्धपुष्टिमार्गे तु विशुद्धानुग्रहमात्रेणैव कार्यसिद्धिः । एवञ्च मर्यादापुष्टिमार्गे मर्यादापुष्टिमार्गीयभगवद्व-रणप्रेरिततादृशजीवकृततादृगाचार्यसंश्रयसञ्जाततादृङ्नामनिवेदनमात्रेणैवातिमात्राच्छादकमा-यारूपावरणभङ्गे पूर्वोक्तरसापरपर्यायभावस्याविर्भावः । 'दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इत्यादिवाक्यात् । शुद्धपुष्टिमार्गे तु शुद्धपु-ष्टिमार्गीयश्रीमद्व्रजभक्तकृपाविष्टभगवत्कृपाप्रेरिततादृशजीवकृते शुद्धपुष्टिमार्गीयाचार्यसंश्रयस-ञ्जाततन्मार्गीयनामनिवेदनमात्रेणैव । न चैतन्मार्गीयनामनिवेदनेपि न सूक्ष्मबीजरूपभावो दृश्यत इति वाच्यम् । तादृङ्नामनिवेदनादिभिः प्रतिबन्धकाविद्यापगमेपि सूक्ष्मतस्त-दैव तद्दर्शनाभावात् । समयविशेषसमुद्भतकिञ्चिदश्रुपुलकादिभिस्तद्वुन्नयनाच्च रतिमात्रा-च्छादकमायारूपावरणभङ्गे पूर्वोक्तभावस्याविर्भावः । 'न रोधयती'त्यारभ्य 'यथाऽ-वरुन्धे सत्सङ्ग' इत्यादिवाक्यात् । एवं च भावस्याविर्भावमात्रमेव, न तूत्पत्तिरिति नोत्पत्तिप्रकार उक्तः । किन्तु वृद्धितत्प्रकार एवोक्त इति । न चाविर्भाव एव उत्पत्तिरिति वाच्यम् । 'अनित्ये जननं नित्ये परिच्छिन्ने समागमः । नित्यापरिच्छिन्नतनौ प्राक-ट्यमिति सा त्रिधे'ति त्रिविधोत्पत्तौ घटादिवदनित्यत्वाभावान्न जननरूपोत्पत्तिः । जीवात्मवन्नित्यपरिच्छिन्नत्वान्न समागमरूपोत्पत्तिः । नित्यापरिच्छिन्नत्वेपि धर्मरूपस्य भावस्य तनुत्वाभावान्न प्राकट्यरूपोत्पत्तिः । किन्तु वेदस्य यथा प्रलये सूक्ष्मरूपेणाव-स्थानमेवमेव भावस्यापि पूर्वसूक्ष्मरूपेणावस्थानं पश्चात्सृष्टौ वेदस्य विस्तर इव स्वका-रणैः प्रवृद्धिमात्रमित्याविर्भावस्य उत्पत्तिरूपत्वाभावात् । तस्माद्भक्तेः सूक्ष्मबीजरूप-भावरूपेण सर्वजीवेष्वपि नित्यस्थितत्वात्तस्य च आचार्यकृपामात्रेणैव आविर्भावस्यैव जातत्वात् साधनान्तरानपेक्षत्वाच्च तद्वृद्धिप्रकार एवोच्यते, न तु तदुत्पादनप्रकारः, त्रिवि-धोत्पत्तेरप्यसम्भवात् । न च 'पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया य' इत्यादिना कथासुधापानस्य भक्तिवृद्धिहेतुत्वमप्युच्यत इति व्यर्थो भवत्प्रयास इति वाच्यम् । अत्रैव श्लोके 'वैराग्यसारं प्रतिलभ्य बोध' मित्यत्र उक्तत्वादस्य वृद्धिप्रकारस्य मर्यादामार्गीयभक्तिविषयत्वात् । शुद्धपुष्टिमार्गीयभक्तेस्तु 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वाक्याद्वैराग्यज्ञानानपेक्षत्वादिति जानीहि । वृद्धौ प्रकर्षस्तु फलानुभव-पर्यन्तसम्पादकत्वरूपः ।

ननु सा भक्तिप्रवृद्धिः कदा भवतीत्याकाङ्क्षायामाहुः **बीजभावे दृढे तु स्या-त्त्यागाच्छ्रवणकीर्तनादि**ति । तत्र त्यागात् भगवद्भजनप्रतिबन्धकगृहादित्यागात् । अथ च श्रवणकीर्तनाच्च प्रेमासक्तिव्यसनरूपावस्थाविशेषविशेषाविर्भावेन पूर्वोक्त-

प्रकारकरत्वपरपर्यायबीजरूपो यो भावस्तस्मिन् दृढे केनापि तिरोधापयितुमशक्ये सति शुद्धपुष्टिमार्गीया भक्तिः प्रवृद्धा स्यात् । रासरूपतारूपवृद्धिप्राप्ता स्यादित्यर्थः । न चात्र त्यागपदेन सर्वत्याग एव कुतो नोच्यत इति वाच्यम् । अग्रे 'गृहे स्थित्वा स्वधर्मत' इत्यनेन वैदिकलौकिकधर्मसाहित्येन गृहस्थितस्यैव भजनस्य बोधितत्वेन तथाव्याख्यानस्य कर्तुमशक्यत्वात् । अत्रेदं तत्त्वम् । त्यागस्तावत्त्रिविधः । भगवद्भजनाननुकूलानामेव गृहादीनां त्यागः, न तु तदनुकूलानामपि । द्वितीयस्तु भगवद्भजनाननुकूलगृहमात्रस्यैव त्यागः, न तु भगवद्भजनानुकूलानां स्वगृहस्थितान्यभगवदीयानामपि । तृतीयस्तु भगवद्भजनानुकूलगृहस्थितभगवदीयानामिव तद्भजनानुकूलतदन्यभगवदीयानामपि त्यागः । तत्र प्रथमस्त्यागो बीजदार्ढ्यप्रकारे तनुजवित्तजसेवारूपप्रारम्भदशासामयिकः । द्वितीयस्त्वासक्तिदशाविर्भावरूपमध्यदशासामयिकः । तृतीयस्तु व्यसनदशाविर्भावरूपपूर्णदशासामयिकः । तत्रैव तच्छ्लोकोक्तस्त्यागो बीजदार्ढ्यप्रकारप्रारम्भदशात्यागः । अग्रे 'तादृशस्यापि सततं गेहस्थानं विनाशकम् । त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानस' इत्यनेन वक्ष्यमाणः स मध्यमदशात्यागः । 'विरहानुभवार्थं तु परित्यागः प्रशस्यत' इति संन्यासनिर्णयोक्तत्यागस्तु फलदशात्याग इति बोध्यम् । अत्रायं श्लोकः सूत्ररूपः, अग्रिमग्रन्थो व्याख्यानरूप इति ज्ञेयम् ।

केचित्तु बीजं नाम 'यमेवे'ति श्रुतेर्निरुपाधिकरूपणया पुष्टिमार्गीयं भगवद्वरणम्, अन्यथा तत्र प्रवृत्तिरेव न स्यादित्यादिप्रकारेण व्याचक्षते । तच्चिन्त्यम् । वटादिवृक्षस्य वटादिबीजमेव बीजम्, न तु पिप्पलादिबीजं बीजम् । एवं च जीवस्य वृक्षसजातीयत्वमुत्सर्गतः सर्ववादिसिद्धम्, अन्यथा पिप्पलादिबीजेभ्योपि वटाद्युत्पत्तिः स्यात् । तथात्रापि स्नेहरूपभक्तेरपि स्नेहरूपभक्तिरूपमेव बीजं भवितुं योग्यम्, सजातीयत्वात् । अत एवोपसंहारे 'तस्यापि स्याद्दृढा रति'रित्यनेनोपक्रमोक्तभावपर्यायरतिशब्देन भावस्यैव दार्ढ्यमुक्तम्, न तु पुरुषोत्तमवरणादीनाम् । एवं च यथा वर्षासमयो नववारिसेकेन क्षेत्रान्तःस्थितं बीजं क्षेत्रनिष्ठं प्रतिबन्धकरूपं काठिन्यं दूरीकृत्य स्वकार्योन्मुखं करोति, तथा च निरुपाधिपुरुषोत्तमवरणादिकं शुद्धपुष्टिमार्गीयाचार्यानुग्रहद्वारा जीवान्तःस्थितं तत्परपर्यायं सूक्ष्मरूपत्वात् बीजरूपभावं मायातिरस्करिणीरूपं प्रतिबन्धकं दूरीकृत्य स्वकार्योन्मुखं करोतीत्यसाधारणनिमित्तकारणरूपमेव, न तु भाववत् । तत्समवायि तु इदमेवेति ज्ञापयितुं बीजपदमुक्तम् । अत्र अन्यथा मूलकारणदार्ढ्ये स्यादित्याद्येव श्लोकनिबन्धः कृतः स्याच्छ्रीमदाचार्यचरणैः । न च वटादिबीजानामपि वटादिवृक्षं प्रति निमित्तत्वमेव दृष्टम्, न [illegible] समवायिकत्वम्, कार्यस्य वटादेस्तत्समवेतत्वाभावात्, तथैव भावरूपबीजस्यापि निमित्तत्वमेवेति सिद्धे समवायित्वोक्तिर्विरुद्धेति वाच्यम् । यथा वटादिबीजानां निमित्तत्वेपि कन्दरूपबीजानां समवायित्वदर्शनेन समवायित्वम्, एवमेव भावरूपबीजस्यापि प्रसरणेन

'स हैतावानास' इति श्रुतेः, अथ च समवायित्वेनानुभवाच्च समवायित्वोक्तिर्विरुद्धत्वाभावात् । तस्मादुपक्रमोपसंहारपर्यालोचनया युक्तिपर्यालोचनयापि बीजरूपो यो भाव इत्येव व्याख्यातमस्माभिरित्यास्तां तावत् ॥ १ ॥

ननु बीजदार्ढ्योपाय उच्यतामित्याकाङ्क्षायामाहुः बीजदार्ढ्यप्रकारस्त्विति ।

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

अत्र पूर्वोक्तो भावो बीजम्, तस्य दार्ढ्यप्रकारस्त्वयं यत् 'भार्यादिरनुकूलश्चेत् कारयेद्भगवत्क्रियाम् । उदासीने स्वयं कुर्यात् प्रतिकूले गृहं त्यजे'दिति श्रीभागवततत्त्वदीपनिबन्धे सिद्धान्तितत्वात् । भगवद्भजनानुकूले गृहे स्थित्वा स्वधर्मतः वर्णाश्रमधर्मतो भगवद्भजनानुकूललौकिकवैदिकधर्मतश्च अव्यावृत्तः अनिवृत्तः सन् कृष्णं श्रीमद्गोपीजनविशिष्टं कृष्णपदार्थं फलरूपं भजेत्, कृष्णविषयिकीं सेवां कुर्यादित्यर्थः । अत्र यद्यपि स्वधर्मत इत्यत्र स्वपदस्यास्मात्मीयवाचकत्वात् स्वधर्मपदेनात्मधर्मरूपो दासधर्मोऽप्यायाति, तथापि न व्याख्याने संगृह्यते, किन्त्वात्मीयधर्मरूपवैदिकलौकिकधर्मा एव संगृह्यन्ते । यतो भजेत्पदार्थस्य सेवाकारणस्य सेवकधर्मत्वात् भजेत्पदेनैवात्मधर्मरूपदासधर्मसंग्रहस्य जायमानत्वादिति बोध्यम् । कृष्णशब्दस्य श्रीमद्गोपीजनविशिष्टकृष्णपरत्वं तु मत्कृतप्रथमस्कन्धसुबोधिनीटिप्पण्यां 'कर्ता ज्ञः सकलस्ये'ति पद्यव्याख्याने मया सप्रपञ्चमुक्तमिति तत्रैवावलोकनीयम् । अत्र वर्णाश्रमधर्मत्यागेन भजने यद्यपि पापं न भवति, 'तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदना'मित्यादिवाक्येन विहितत्वात्, तथापि स्वधर्मत्यागेन भजने गृहस्थितानां पुत्रकलत्रादीनां तादृग्विश्वासाभावात् स्वस्मिन्नसद्बुद्ध्या सेवौदासीन्येन बहिर्मुखजनितमार्गनिन्दया स्वचित्तक्षोभेन च सेवाया अनिर्वाहः स्यात् । न च तर्हि पुत्रकलत्रादीनां निन्दया स्वचित्तक्षोभजनकानां बहिर्मुखानां सङ्गत्यागस्य कर्तुं शक्यत्वे 'प्रतिकूले गृहं त्यजे'दित्युक्तत्वात् सेवाप्रतिकूलतायामेव पुत्रकलत्रादीनां त्यागस्य सिद्धान्तत्वेनौदासीन्ये गृहे स्थित्वा स्वयं कर्तव्यस्य बोधितत्वात् । न च स्वयमेव सर्वं क्रियतामिति वाच्यम् । स्वयमेव सेवासामग्रीसम्पादनस्य कर्तुमशक्यत्वात् । स्वधर्मत्यागेन तेषामौदासीन्याच्च सेवाबाधः प्रसज्येतेति । अथ च स एवोत्तमः सेवको यः स्वामिन आयासं न सहते । एवंस्थिते गृहस्थे सेवकेन वैदिकलौकिकधर्मत्यागेन भजने क्रियमाणे तं दृष्ट्वान्यैरपि तदनुयायिभिस्तथैव भजने कृते सरपार्थकवैदिकलौकिकधर्मनाशे जायमाने 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह'मिति वाक्यात् धर्मरक्षार्थं भगवतः प्रयत्नकरणे महायास उत्पद्येत । स चायासः स्वदत्त एवेति गृहस्थसेवकस्यानुत्तमसेवकत्वं च प्रसज्येतेत्यनेनापि हेतोः स्वधर्मत अव्यावृत्तो भजेदित्युक्तमित्यवधेहि ।

ननु केवलमेव सेवनं कर्तव्यम्, अथवा किञ्चिदन्यदन्यदपि कर्तव्यमित्याकाङ्क्षायामाहुः **पूजया श्रवणादिभिः**। अत्र विनापि सहयोगं तृतीयेत्युक्तत्वात्सहशब्दाप्रयोगेपि तृतीया। तथा पूजया श्रवणादिभिः सहेत्यर्थः सम्पन्नः। अथाप्रधानतृतीयानिर्देशात्सेवाया एव प्राधान्यम्। पूजायाः श्रवणादेश्च गौणत्वमेव। अत्र पूजापि 'गृहस्थितानामनौदासीन्यसम्पादनार्थं बहिर्मुखजनितमार्गनिन्दया स्वचित्तक्षोभाभावार्थमेवोक्ता। अन्यथा शुद्धपुष्टिमार्गीयसेवामात्रकरणे विध्युक्तत्वाभावज्ञाने तेषामौदासीन्यं स्यात्। तस्मात् पूजासाधनैः शङ्खघण्टाद्युपचारैरपि सह सेवा कर्तव्येत्युक्तम्, परन्तु शुद्धपुष्टिमार्गीयसेवाविरोधिपूजासाधनैर्न कर्तव्येति। न च पुष्टिमार्गविरोधिपूजासाधनत्यागेपि तेषामौदासीन्ये का गतिरिति वाच्यम्। पञ्चोपचारषोडशोपचाराष्टादशोपचारचतुःषष्ठ्युपचारैः पूजा विहितेति उपचाराणामनियतत्वेन कमपि पक्षं करोतीति तेषामौदासीन्याभावात्। अत एव अप्रधानतृतीयया श्रवणादित्रयमपि सेवाविधेर्न कर्तव्यम्। मुख्यतया सेवां कृत्वा सेवासमयातिरिक्तसमये श्रवणादिकं कर्तव्यमिति तस्यापि गौणत्वमिति।

यत्तु स्वधर्मतो दासधर्मतो भजेत्, अव्यावृत्तः लौकिकव्यावृत्तिरहितः सन् इति व्याख्यानं, तत्र गृहे स्थित्वा भजने लौकिकव्यावृत्तिराहित्यं सर्वथा न भवतीति विचार्यम्। यद्वा। कृष्णं फलात्मकं पूजया पूजासाधनैर्भजेत्। सेवां कुर्यात्, न तु पूजयेत्। तथा च सेव्यसेवकभावेनैव कृतिं कुर्यात्। न तु 'देवो भूत्वा देवं यजेदि'ति वाक्यात् स्वस्मिन् देवत्वं भावयेत्। किन्तु दासत्वमेव। न च भजेदित्येतावतैवायमर्थ आयात्येव, तथा च पूजयेदिति वचनं व्यर्थमिति वाच्यम्। भजेदित्येतावत्युक्ते कया सामग्र्या भजेदित्याकाङ्क्षायां पूजया पूजासाधनैरेव भजेदिति बोधनेन तस्य सार्थक्यात्। एवमेव श्रवणादिभिरपि भजेत् श्रवणादिकमपि सेव्यसेवकभावेनैव कुर्यात्, न तु सेवकत्वमात्रबुद्ध्या। तत्र प्रथमव्याख्याने तु सेवानुकूलसाङ्गपूजासाधनैः सह भजनम्, न तु गृहस्थितानामौदासीन्याभावाय बहिर्मुखजनितचित्तक्षोभाभावाय मार्गनिन्दाभावाय चेति ज्ञेयम्। द्वितीयव्याख्याने तु प्रायशो यैरेव स्तुतिभिः पूजा भवति, तैरेव स्तुतिभिः सेवा भवति। परन्तु पूजाविहितत्वेन समर्पणम्, न तु दासोपयोग्युचितानुचितत्वविचारेण। सेवायां तु दासोपयोगिशुद्धपुष्टिमार्गीयाचार्यस्नेहसद्धावात्रतया समर्पणं स्वस्य स्नेहाभावेपीति विशेषः। न च स्नेहाभावे कथं फलं भविष्यतीति वाच्यम्। स्नेहवच्छुद्धपुष्टिमार्गीयाचार्यमार्गीयत्वपक्षपातात्। इदं यथा तथा 'स्वयं समुत्तीर्य सुदुस्तर'मिति दशमस्कन्धीयगर्भस्तुतिपद्यव्याख्याने भक्तिद्रुमे प्रपञ्चितमस्मत्प्रभुभिरिति तत्रैवावलोकनीयम्। अत एवोक्तं भजेदित्येव, न तु पूजयेदिति। अत्र यथा पूजासाधनानां शुद्धपुष्टिमार्गीयेण समर्पणम्, स प्रकारस्तु मत्कृतशुद्धपुष्टिमेवासरणौ द्रष्टव्यः, रहस्यत्वादत्र नोक्त इति ज्ञेयम्।

ननु सेवा हि सेव्यसन्तोषजनककियया सिध्यति। सा च क्रिया पादसंवाहनादि-

रूपा । श्रवणादौ तु क्रियात्वाभावात्कथं तेन सेवा सिध्यतीति चेत् । अत्र ब्रूमः । सेव्यसन्तोषजनकधर्ममात्रेणैव सेवा सिध्यति लोके, न तु क्रियामात्रेण, तथैवानुभवात् । तथा च श्रवणादेरपि तादृशधर्मत्वात्तेनापि सेवासिद्धिर्भवत्येवेति जानीहि । यद्वा । श्रवणादिभिः सेवानुकूलभावभगवत्स्वरूपसेवाप्रकारादीनां ज्ञानस्य कृतिपर्यवसायित्वमेवेति क्रियात्वमेव ज्ञेयम् । न च सिद्धान्तमुक्तावल्यां तु 'तत्सिद्ध्यै तनुवित्तजे'त्यत्र तनुवित्तजसेवैवोक्ता, न तु श्रवणादिजा सेवापीति वाच्यम् । तनुजसेवायामेव श्रवणादिजसेवाया अन्तर्भावात् । तथा हि । तत्र तनुजावित्तजा सेवा द्विविधा मुख्या गौणी च । तत्र प्रभुसुखमात्रोद्देशेनैव कृता प्रसङ्गात् स्वधर्मपर्यवसायिनी मुख्या । स्वधर्मस्वमात्रोद्देशेनैव कृता प्रसङ्गात् प्रभुसुखपर्यवसायिनी गौणी । तत्रेन्द्रियदेहप्राणान्तःकरणसङ्घातरूपतनौ ज्ञानेन्द्रियकर्मेन्द्रियसत्त्वात् ज्ञानेन्द्रियैर्घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोभिर्भगवत्सेवोपयोगिषु स्वविषयेषु सदसद्विवेचनजा सेवा, अथ च कर्मेन्द्रियैर्वाक्पाणिपादैर्भगवत्सेवोपयोगिवचनकथनार्थगमनचरणसंवाहनवस्त्वानयनादिकसेवा, अथ च कर्मेन्द्रियाभ्यां पायूपस्थाभ्यां सेवाप्रतिबन्धकमलकामनिवृत्तिद्वारा स्वच्छसङ्घातजा सेवा, अथ च शरीरावयवेन मूर्ध्ना त्वयातिसमीचीना भगवद्भोग्यसामग्री सम्पादनीया सम्पादितेति स्त्रीपुत्रादीनामपि वन्दनजा सेवा च स्वकृतालङ्कारादिष्वपि स्वस्मिन् दासत्वेन तत्तत्सामग्रीसम्पादकत्वात् स्वान्तःस्थितप्रियप्रियतमाभ्यामेव परस्परकृतत्वबुद्ध्या अतिसौन्दर्यावलोकनजनितानन्देन प्रियस्य प्रियायाश्च वा वन्दनजा सेवा, अथ च क्षुधातृषादीनां प्राणधर्मत्वात् चानुभावेन तत्तत्समयानतिक्रमेण सपरिकरे प्रभौ भोजनजलादिसमर्पणेन प्राणजा सेवा, अथ च दाससखित्वाभ्यामात्मनिष्ठाभ्यां बहिरङ्गान्तरङ्गसमयेष्वपि सर्वदा प्राणप्रियासहितप्रभुसन्निधौ निःशङ्कगमनसम्पादिता तत्तद्वस्तुसम्पादनजा सेवा, अथ च सङ्घातविशिष्टोहम् मत्सम्बंधिनः सर्वे प्रभुमात्रभोग्याः, नान्यभोग्या इत्यात्मसमर्पणजा सर्वविधा सेवा च भगवत्सुखोद्देशेनैव कृतत्वादियं तनुजा मुख्यसेवा । स्वधर्मत्वमात्रोद्देशेन कृता चेदृशी सेवा गौणीतनुजा सेवा ज्ञेया । एवमेव श्रवणकीर्तनस्मरणजा सेवापि द्विविधा, मुख्या गौणी च । तत्र मद्धृदिस्थः सपरिकरः प्रभुः स्वप्रियतममत्कृतविशिष्टलीलाश्रवणेनानन्दातिशयमनुभवतामिति प्रतिबुध्य श्रवणजा सेवा मुख्या । स्वेतरभक्तहृदिस्थो मत्प्रभुस्तादृशलीलाकीर्तनेनानन्दातिशयमनुभवतामिति प्रतिबुध्य तत्तल्लीलागोपनाय तादृशलीलाविशिष्टप्रभुस्मरणजा सेवा मुख्या । भगवत्सुखमात्रोद्देशेनैव कृतत्वात् । स्वधर्ममात्रोद्देशेन कृता तु श्रवणकीर्तनस्मरणजा गौणीत्युच्यते । अत्राद्या सर्वविधापि सेवा शुद्धपुष्टिमार्गीयाणाम्, द्वितीया तु मर्यादापुष्टिमार्गीयाणामिति ज्ञेयम् । एवं च श्रवणादिजाया अपि सेवायाः श्रोत्रवागिन्द्रियान्तःकरणसाध्यत्वात्तनुजसेवायामन्तर्भाव इति श्रवणादिजमेवादिकमेवेति । न त्वदुक्तपक्षाश्र इति दिक् ।

एवं वित्तजापि द्विविधा । मुख्या गौणी च । तत्र स्वार्जितसर्वविधसर्ववित्तेन परिकरविशिष्टप्रभूपयोगिवस्तुसम्पादनजा मुख्या । वित्तजा सेवा स्वार्जितद्रव्यस्य शास्त्रोक्तविभागं कृत्वा विभागागतभगवद्द्रव्येण तादृशप्रभूपयोगिवस्तुसम्पादनजा गौणी वित्तजा सेवा । अत्राप्याद्या शुद्धपुष्टिमार्गीयाणाम्, द्वितीया मर्यादापुष्टिमार्गीयाणां ज्ञेया ।

स्यादेतत् । 'सर्वस्य वशी सर्वस्येशान' इति श्रुत्या भगवत ईशत्वेन जीवानां सहजदासत्वेन दासेन सेवा कर्तुं शक्या । सख्यात्मसमर्पणयोस्तु भगवदङ्गीकारसाध्यत्वात् सख्यात्मसमर्पणाभ्यां निःशङ्कतया जीवेन स्वयं सेवा कर्तुमशक्येति चेत् । अत्र वदामः । 'स नो बन्धुर्जनिता स विधाते'ति 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युत'मिति तैत्तरीयोपनिषच्छ्रुतिभ्याम् 'भर्ता संभ्रियमाणो बिभर्ति' 'एको देवो बहुधा निविष्ट'इति श्रुतिभ्यां 'द्वा सुपर्णा सयुजा सखाये' ति मुण्डकोपनिषच्छ्रुत्या च 'पिताहमस्य जगतो माता धाता पितामहः । गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वर' इत्यादिभगवद्गीतावाक्येभ्यः । 'येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमि'ति तृतीयस्कन्धीयवाक्येन । 'सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा । सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाये'त्याद्येकादशस्कन्धीयपिङ्गलावाक्यैश्च । 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः' इत्यादि तत्रत्यभगवद्वाक्यैश्च सर्वविधबन्धुत्वसखित्वपतित्वप्रभुत्वभर्तृत्वदेवत्वमातृत्वपितृत्वपितामहत्वधातृत्वविधातृत्वगतित्वसाक्षित्वनिवासत्वशरणत्वसुहृत्त्वोपदेष्टृत्वानुमन्तृत्वभोक्तृत्वप्रियत्वात्मत्वसुतत्वगुरुत्वेष्टत्वप्रेष्ठतमत्वरमणत्ववित्तरतिदातृत्वादिधर्मा भगवति प्रतिपाद्यन्ते । ते च धर्मा भगवद्धर्मत्वात् नित्याः । नित्यधर्मवत्त्वं च तदैव घटते, यदि तत्प्रतियोगिनो धर्माः सर्वविधबन्धुत्वसखित्वदासत्वसेवकत्वपोष्यत्वाराधकत्वपुत्रत्वपौत्रादिकत्वाधेयत्वविधेयत्वप्रापियोग्यत्वद्वितीयत्ववास्तव्यत्वदीनत्वसुहृत्त्वोपदेश्यत्वमन्तृत्वभोग्यत्वासक्तत्वपितृत्वशिष्यत्वेष्टत्वपरमासक्तत्वरत्याकाङ्क्षितत्वार्थित्वरत्यार्थित्वादयो जीवेषु नित्या भवन्ति । एवं च पूर्वोक्तनित्यसिद्धधर्माणां भगवति सत्त्वाज्जीवेष्वेते धर्मा नित्या निरुद्धा इति भगवति सखित्वभोक्तृत्वयोः सत्त्वाज्जीवेष्वपि सखित्वभोग्यत्वयोरपि सत्त्वात्तयोश्च नामनिवेदनाभ्यामाविर्भावितत्वाद्भगवदङ्गीकारस्यापि सत्त्वान्निःशङ्कतया सख्यात्मसमर्पणसेवासिद्धिरिति बुध्यस्व । तथा च यतः सर्वविधोऽपि सम्बन्धो जीवानां भगवता सह वर्तते, अतएव 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि'ति भगवता गीतायां येन केनापि प्रकारेण प्रपन्नस्यापि फलदानमुक्तम् । न चैवं भगवतो जीवैः सह सर्वविधे सम्बन्धे सति भगवान् स्त्री अहं पुरुष इति भावेनापि भजनं प्रसज्येतेति वाच्यम् । 'पतिपुत्रसुहृद्भ्रातृपितृवन्मित्रवद्धरिम् । ये भजन्ति सदोद्युक्तास्तेभ्योऽपीह नमोनमः । नारी वा पुरुषो

यापि भर्तृभावेन केशवम्। हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशयः। येषामहं प्रियतम आत्मा सुतश्च सखा,गुरुः सुहृदो दैवमिष्टम्। पिताहमस्य जगतो धाता माता पितामहः। गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्। उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वर', इत्यादि नारायणव्यूहस्तवीयवृहद्वामनपुराणीयश्रीभागवतीयश्रीभगवद्गीतादिस्थवचननिचयेषु स्वद्विवीतभावेन भजनस्यानुक्तत्वात्। 'यावद्वचनं हि वाचनिक'मिति न्यायात्। एतादृशभाववद्भक्तस्याश्रुतत्वाच,।, एवं सति स्वयमेवैतादृशभावेन भजने 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं ,पापं चौरेणात्मापहारिणे'ति वचनेन दोष आपद्यते। एवं च 'ये यथा मामि'ति श्लोकस्यापि येजीवाः शास्त्रोक्तभजनप्रकारेषु 'यथा येन प्रकारेण प्रपद्यन्ते तांस्तेनैव उक्तप्रकारानुकूलप्रकारेणाहं भजामी'त्यर्थो, बोध्यः। न तु येनकेनचित्प्रकारेणेति। किञ्च। श्रीभागवतेपि 'कोटिकन्दर्पलावण्यः साक्षान्मन्मथमन्मथः पुरुषोत्तम' इत्येव नामोक्तं प्रमुखरूपेण, न तु कोटिरतिलावण्यः स्त्र्युत्तम इत्यादि। तथा च तादृङ्नामतादृक्स्वरूपयोः श्रवणे दर्शने च सर्वेषां स्वस्मिन् स्त्रीभावोदय ,एव भवति, न तु स्वस्मिन्पुरुषभावोदय इति। अत एवोक्तं श्रीमदस्मत्प्रभुभिः त्रिभङ्गललितस्तवे 'एतस्य दर्शने तु स्वात्मप्रमदाभाव एव हीं'ति। अत्र दर्शनपदं श्रवणादीनामप्युपलक्षकम्। इयदवधि एतच्छ्रोतृणामपि साक्षात्कर्तॄणामिव प्रमदाभावोदयस्यैव दृश्यमानत्वात्। यद्वा। दर्शनपदं चाक्षुषादिज्ञानमात्रपरं बोध्यम्। यदि च भगवता सच्चिदानन्दरूपात्युत्तमस्त्रीरूपेणाविर्भूय कस्यापि पुरुषभाव उत्पादितः स्यात् तदा स्त्र्युत्तम इति कोटिरतिलावण्य इति नामापि युक्तं स्यात्। मोहिनीरूपं तु 'इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरि' रिति। 'यन्मे स्त्रीरूपया स्वैरं मोहितोस्यङ्ग मायये'त्यादिश्रीभागवतीयवाक्यैर्भगवन्मायारूप एव, न तु सच्चिदानन्दरूपम्। आवेशमात्रं तु भगवत इत्यवतारमध्ये गणना,। जीवानां नारदादीनामिव। न वा तद्रूपमपि केनचित्स्वस्मिन्पुरुषभावेन मोहिन्यां च स्त्रीभावेनोपासितमिति। तस्माच्छिष्टाचाराभावादप्यस्मदुक्तमेव साधु। यत्पुनः 'स वै न रेमे, तस्मादेकाकी न रमते, स द्वितीयमैच्छत्, स ह एतावानास। स पतिः पत्नी चाभवतामि'ति श्रुतौ यत्पत्नीरूपं भगवतः श्रूयते, तत्तु सपत्नीत्वेनैव प्रकटितमिति तस्य प्रभुपत्नीरूपत्वेन भजनं त्विष्टमेव। पूर्वोक्तविरुद्धभावेन भजनं तु भजनभावप्रकारेषु शास्त्रेनुक्तमिति न कर्तव्यमेव। अन्यथा द्वेषभयादिविरुद्धभावेन फलवदनेनाप्युक्त स्यात्। एवं जीवैः सह भगवतः सर्वसम्बन्धसम्बन्धे नित्यसिद्धे स्थिते भगवतो यत्सम्बन्धपुरस्कारेण जीवेषु रिरंसा स सम्बन्ध एवाविरुद्धान्यभावसम्बन्धाविर्भावविशिष्ट आविर्भवति, न तु विरुद्धसम्बन्धाविर्भावविशिष्टः, साक्षाद्भोग्यत्वसम्बन्धे भर्तृत्वादिसम्बन्ध इवेति कृतं प्रसक्तानुप्रसक्तविचारेण। अनेनेदं ज्ञेयम्। पूर्वोक्ता सर्वविधापि सेवा प्रेम्णा क्रियमाणफलरूपा। केवलं शुद्धपुष्टिमार्गीयाचार्यपरम्परोपदेशमात्रेणैव

विना प्रेम कृता नित्यसिद्धभक्तिवृद्ध्याविर्भावसाधनरूपा ज्ञेया । तथापि साधनत्वबुद्ध्या न कर्तव्या । साधनत्वबुद्ध्या करणे तु 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी'ति वाक्यात् 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति स्वप्रतिज्ञातश्च प्रेमाद्युत्पाद्य 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति पुरुषोत्तमज्ञानमुत्पाद्य स्वप्रवेशरूपमुक्तिरूपफलमेव मर्यादाभक्तिमार्गीयं भगवान् दद्यात् । न तु सर्वदा साक्षात्स्वसम्बन्धरूपं शुद्धपुष्टिमार्गीयं फलम्, साधनबुद्ध्या कृतनवविधभक्तेः प्रेमोत्पादनद्वारा प्रवेशपर्यवसायित्वात् । फलरूपत्वबुद्ध्या करणे तु प्रेमासक्तिव्यसनान्युत्पाद्य स्वसेवामेव स्वप्रवेशरूपफलादप्युत्तमां दद्यात् । तस्मात् फलत्वबुद्ध्यैव शुद्धपुष्टिमार्गे सेवा कर्तव्येति । 'सार्ष्टिसामीप्ये'त्यादि'सेवानुरक्तमनसामभवोपि फल्गु'रित्यादिवाक्यैः सेवायाः सर्वोत्तमफलत्वं प्रसिद्धमेव । इदमेव ज्ञापयितुं फलात्मकनामोक्तम् । वस्तुतस्त्वाचार्यमार्गीयस्याचार्यपक्षपातेन प्रवेशरूपं फलं साधनबुद्ध्या करणेपि न भविष्यति, तथापि भगवत एतस्मिन्विषये सङ्कोचो भविष्यतीति फलात्मकनामोक्त्या फलत्वबुद्ध्यैव सेवा कर्तव्येत्युपदिष्टं श्रीमदाचार्यचरणैरिति बोध्यमिति दिक् । ननु भगवानेकदैव प्रेमादिवक्ष्यमाणावस्थाविर्भावं कुतो न करोति, वा क्रमेण करोतीति चेत् । क्रमेणाविर्भावे रसाधिक्यानुभवस्यानुभवसिद्धत्वाद्रसाधिक्यानुभवार्थमेवेति गृहाणेति सर्वं निष्प्रत्यूहम् । प्रकृतमनुसरामः ।

ननु'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' । 'तावत् कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते । तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च' 'याहि सर्वात्मभावेन मया स्या ह्यकुतोभय' इत्यादिश्रीगीताश्रीभागवतीयभगवद्वाक्येभ्यो लौकिकवैदिकत्यागपूर्वककेवलदासभावेन चेद्भजेत्तदा कथं भजेदित्याकाङ्क्षायां सार्धश्लोकेनाहुः व्यावृत्तोपीति ।

व्यावृत्तोपि हरौ चित्तं श्रवणादौ न्यसेत्सदा ।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।

पूर्वोक्तभगवद्वचनबलेन पुत्रकलत्राद्यौदासीन्यं बहिर्मुखजनितनिन्दां चाविगणय्य लौकिकवैदिकस्वस्वधर्मतो व्यावृत्तोपि निवृत्तोपि 'उदासीने स्वयं कुर्या'दिति सिद्धान्तात्स्वयमेव दासधर्मस्य यथाशक्ति सेवां विधाय सदा हरौ सकलदुःखहर्तरि चित्तं न्यसेत् । तत्स्मरणं कुर्यात्, अथ च श्रवणादौ श्रवणकीर्तनयोरपि चित्तं न्यसेत् स्थापयेत । न स्वेतेभ्योपि निवृत्तो भवेदिति भावः । अत्र चित्तपदं देहलीदीपन्यायेनोभयत्र सम्बध्यते । यद्वा हराविति विषये सप्तमी । हरिविषयकं चित्तं श्रवणादौ श्रवणकीर्तनस्मरणेषु न्यसेत् । यद्वा ।

हराविति निमित्ते सप्तमी । चर्मणि द्वीपिनं हन्तीत्यत्रेव । तथा च हरिनिमित्तं श्रवणादौ श्रवण-
कीर्तनेषु चित्तं न्यसेत् । अत्रेदं ज्ञेयम् । पूर्वश्लोके श्रवणादिभिरित्यत्राप्रधानतृतीयाव्याख्यान-
पक्षे तृतीयया, श्रवणादीनां सेवासमयातिरिक्तसमये कर्तव्यत्वादप्राधान्यं यथा बोधितं तथा
तस्मिन् श्लोके श्रवणादीनां सदापदेन सर्वदा कर्तव्यत्वस्य बोधितत्वेन पूर्वश्लोकानुवर्तमाना-
याः गृहे स्थित्वा सेवायाः किञ्चित्समय एव कर्तव्यत्वस्य आगतत्वात्, अथ च पुनःकलत्रा-
दीनां स्वधर्मत्यागजनितौदासीन्येनासहायत्वात्पूर्णसेवानिर्वाहाभावाच्च स* प्राधान्यं बोध्यत
इति । अयं तु गौणपक्षः । लौकिकवैदिकगृहस्थव्यावृत्तिं विनानुत्तमसेवकत्वसंपालया(?)दिति
बोध्यम् । अस्मिन्पक्षे पूर्णफलप्राप्तिस्तु गुणश्रवणादिसन्तुष्टान्तरङ्गभक्तकृपया ज्ञेया । अत्र यतेत ।
यतेत् इति पाठस्तु लेखकप्रमादमूलक एव । न चाध्याहारः । चित्तपदोत्तरं विधायेति क्रिया-
वान् क····न्ध्याहारेणार्थकरणे चित्तपदस्य वैयर्थ्यापाताच्चेति सुधीभिरेवाकलनीयम् । एतस्याः
ठस्य व्याख्यानं यथा श्रीमदस्मद्गुरुभिर्व्याख्यातं तथैव व्याख्यानं मन्मतेपि बोध्यम् । अस्मिन्
पक्षेऽनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज्ज्ञापकादिति यतेदित्यत्र परस्मै-
पदं साधनीयम् । नन्वेवं भक्तिवृद्धिसाधने क्रियमाणेपि भक्तिवृद्धिरेवैकरूपदेन स्यादथवा कि-
ञ्चिन्मध्येन्यदपि स्यादित्याकाङ्क्षायामाहुः ततः प्रेमेति । तत इति पञ्चमी । ततस्तस्माद्धेतुभू-
ताद्भजनात् प्रेम । यस्य पूर्वावस्थाभावस्तस्य भावस्य तत्तत्फलस्याविर्भावः । तथा तेन सप्रेमभज-
नरूपप्रकारेण तस्यैव भावस्यासक्तिरूपावस्थाविर्भावात् भवेत् । च पुनर्व्यसनम् । 'दैहिकान्
सकलान् भावान् निजां क्रीडां च दैहिकीम् । परित्यज्य हरिप्राप्तिर्धैर्येन स्यात्तदेव तत्' इति
श्रीभागवततत्त्वदीपीयभागवतरूपप्रकरणस्थदशमस्कन्धे सकलदैहिकं भाव दैहिकलज्जात्याग-
पूर्वकं हरिप्राप्त्यै सर्वव्रतादिकमासक्त्यै क्रियते तदेव तद्व्यसनमित्युक्तत्वात्तादृशं व्यसनम् ।
अथ च तदनन्तरमपि प्रभुसम्बन्धाभावे प्रतिकार्यरूपं च व्यसनं यदा भवेदाविर्भवेत् ।
अत्र यदेति पदं व्यसनाविर्भावस्य कालनियमाभावं ज्ञापयति । तथा च यदा भगवदिच्छा-
या व्यसनमाविर्भवेत् तदा दृढं बीजमुच्यत इत्यग्रिमश्लोकेन सम्बन्धः । व्यसनपदस्याप्रति-
कार्यदुःखपरत्वेन च व्याख्यानं तु 'व्यसनं समवोचते'ति दशमस्कन्धप्रथमाध्यायसुबोधिन्यां
श्रीमदाचार्यैः कृतं तत्रैवावलोकनीयम् । ननु तदा किं भवेदित्याकाङ्क्षायामाहुः बीज-
मिति । तदा तद्भावावस्थाविशेषरूपं व्यसनं शास्त्रे भक्तिशास्त्रे दृढं बीजमित्युच्यते । यद्दृढं
बीजमपि पुनः न नश्यति तिरोभावं न प्राप्नोतीत्यर्थः । एतेन प्रेमासक्त्योर्भगवदनुकूले गृहे
तदनुकूलत्वे तत्यागेन तत्तैरन्यदीयैः सह स्थित्वा च कदाचिदन्यव्यासङ्गे तत्क्षणे तिरोभावो
भवेदपि बीजस्य । व्यसने जाते तु सर्वेषामेव त्यागात् व्यासङ्गान्तरोत्पत्तेः सम्भावनाभाव
एवेति तस्य दृढबीजत्वं निरन्तरं निखिलानन्दाविर्भावेन फलसाधकत्वमिति ज्ञेयम् ।

ननु प्रेमासक्तिव्यसनानां परमावस्थाविशेषपरत्वेनान्तरधर्मत्वाद्बाह्येन्द्रियाप्रत्यक्षत्वात् पर-

* गुर्विदमर्थेन।

निष्ठस्य मनसा ज्ञातुमशक्यत्वात् केन लिङ्गेनेदं प्रेमैवमासक्तिरिदं व्यसनमिति ज्ञायतामित्याशंक्य तत्तत्कार्यमेव तत्तल्लिङ्गमिति सार्धश्लोकेनाहुः स्नेहाद्रागविनाशः स्यादित्यादि।

**स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥**

**गृहस्थानां बाधकत्वमनात्मत्वं च भासते।**

**यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥**

स्नेहाद्धेतोः आसक्त्या स्याद्गृहारुचिरिति गृहारुचेरग्रे वक्ष्यमाणत्वात् सेवोपयोगिस्वगृहस्वपुत्रतादृशान्यव्यतिरिक्तेषु रागस्य, 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु। गान्धारादौ नृपे राग' इति विश्वात् प्रेम्णो भगवद्विषयकविशेषेण नाशः तिरोभावः स्यात्। स्वस्त्रीस्वपुत्रतदन्येषु सेवोपयोगिषु तु तिष्ठत्येव। अत्र नाशे विशेषकथनात्प्रेमाविर्भावात्पूर्वं कृतभजने इतरत्र कदाचिद्रागो भवति। प्रेमाविर्भावोत्तरं तु न भवत्येवेति ज्ञेयम्। तथा च भगवत्सम्बन्धव्यतिरिक्ते तु रागाभावः प्रेमलिङ्गमिति ज्ञेयम्। अथ गृहारुचिः। स्वगृहेपि स्वगृहस्थपुत्रादिपदार्थेषु सर्वेष्वप्यरुचिः तत्सम्बन्धानिच्छा स्यात्। तेषां भगवदनुकूलत्वात्सेवोपयोगित्वेपि प्रेमासक्त्यभावात्सेवासमयातिरिक्तसमये गृहव्यासङ्गजनकत्वात्। यदि गृहव्यासङ्गं न जनयेयुस्तदा त्वरुचिर्न भवत्येवेति भावः। तथा च स्वगृहस्थानां गृहव्यासङ्गजनकत्व एव गृहारुचिरासक्तिलिङ्गम्। तेषां गृहव्यासङ्गजनकत्वे तु पूर्वदशाग्यधिकसेवाश्रवणादिरुचिरेवासक्तिलिङ्गं ज्ञेयम्। अथ व्यासङ्गलिङ्गमाहुः **गृहस्थानामिति**। अत्र प्रेमासक्तेः सेवानुकूलाः स्वगृहस्थाः पुत्रभार्यादयो यदि लौकिकव्यासङ्गं न जनयेयुस्तदा प्राप्तासक्तिना स्वगृहस्य भगवति निवेदितत्वेन हरिस्थानत्वात्स्वगृहस्थानां सर्वदा भगवत्सेवाकथानिष्ठत्वेन तत्परं भगवदीयत्वात् लौकिकव्यासङ्गाजनकत्वेन स्वप्रतिबन्धकत्वाभावाच्च स्वगृहस्थितौ बाधकत्वाभावात्स्वगृहमध्य एवास्मत्प्रभुवद्दृढबीजसिद्ध्यर्थं स्थेयम्। यदि तु तादृशस्वगृहस्था लौकिकव्यासङ्गं जनयेयुस्तदा तेषां बाधकत्वात्स्वगृहं त्यक्त्वा तत्परभगवदीयैः सह दृढबीजसिद्ध्यर्थं सेवाकथाश्रवणादिविषयकयत्नं कुर्वतान्यहरिस्थाने स्थेयमिति पक्षद्वयम्। तत्र यस्मिन् पक्षे त्वासक्त्युत्पत्त्यनन्तरं बाधकाभावात्स्वगृहस्थितस्यैव व्यसनं जातं, तस्मिन्पक्षे स्वगृहस्थानां तत्परभगवदीयत्वात्तैर्गुणगाने क्रियमाणे तच्छ्रवणेन प्राप्तव्यसनस्य स्वास्थ्ये जाते तापक्लेशाभावाद्भगवत्प्रादुर्भावाभावापेक्षजनितपूर्वभगवत्प्राकट्यस्यापि गतत्वाचान्तःप्रकटभगवत्सम्बन्धानन्दविघातकत्वादेते मम भगवत्सम्बन्धानन्दविशेषप्रतिपातका इति स्वगृहस्थेषु तादृशान्यगृहस्थेषु च बाधकत्वभानं भवति। द्वितीयपक्षे त्वासक्त्युत्पत्त्यनन्तरं स्वगृहस्थास्तु त्यक्ता एव लौकिकव्यासङ्गजनकत्वात्, स्थितं च हरिस्थाने तत्परभगवदीयैः सह, तेषामपि भगवद्गुणगानपरत्वात्, पूर्वोक्तप्रकारेण प्राप्तव्यसनस्य तेष्वपि बाधकत्वभानं भवति, अतो गृहस्थानामिति

पदं सर्वगृहस्थपरम् । न तु स्वगृहस्थमात्रपरमिति बोध्यम् । तथा च गृहे तिष्ठन्ति ते
गृहस्थास्तेषां बाधकत्वं तत्सम्बन्धिविरहानुभवान्तर्गतभगवदनुभवबाधकत्वं पूर्वोक्तप्र-
कारेण प्राप्तव्यसनस्य भासते स्फुरतीत्यर्थः । न च स्वगृहरूपहरिस्थानस्थान्यहरिस्थानस्थ-
गृहस्थानां भगवदीयत्वेन भगवद्गुणगाने क्रियमाणे प्राप्तव्यसनस्य स्वास्थ्ये जाते तापक्लेशा-
भावाद्भगवदाविर्भावाभावे पूर्वसञ्जातभगवत्प्राकट्यतिरोभावे भवद्भिर्भगवद्गुणा न गेया इति
प्राप्तव्यसनेनोक्ते यस्माद्भजनप्रतिबन्धक इति प्राप्तव्यसनसम्बन्धिबाधकत्वं भासते । स्फुर-
तीति चार्थः । इदमर्थद्वयमप्यत्राभिप्रेतं श्रीमदाचार्याणाम्, परस्य न बाधकज्ञानेन दृढ-
तरपरित्यागाय गृहस्थपदं भगवदीयानां ब्रह्मचारिवानप्रस्थसंन्यासिनामप्युपलक्षकम् । एतत्कृ-
तगुणगानश्रवणजस्वास्थ्यजनितभगवदाविर्भावाभावपूर्वकं प्रकटभगवत्तिरोभावाभ्यां पूर्वव्या-
ख्याने ब्रह्मचर्यादिसम्बन्धिबाधकत्वमानं प्राप्तव्यसनस्य, द्वितीयव्याख्याने प्राप्तसम्बन्धिबा-
धकत्वमानं ब्रह्मचर्यादीनामपि जायत इति भगवदीयब्रह्मचर्यादयोपि सङ्ग्राह्या एवेति । अतएव
श्रीमदाचार्यकृतव्यसनोत्तरपरित्यागे स्वपरगृहस्थाधारम्य भक्तजलादिपर्यन्तमपि त्यागो दृष्टः ।
अत एव विरहानुभवार्थस्त्यागः परितस्त्यागरूप इति संन्यासनिर्णये परित्यागशब्देनैवोक्तः ।
अत एव तादृशबाधकत्वज्ञानोत्तरमेव 'विरहानुभवार्थं तु परित्यागः प्रशस्यते' इति संन्या-
सनिर्णयोक्तः परित्यागः स भविष्यति । यदि प्राप्तव्यसनस्य सर्वप्रकारकपूर्वोक्तभगवदीयगृ-
हस्थादिषु भगवदीयगृहस्थादीनां प्राप्तव्यसने सर्वथा बाधकत्वमानं न भवेत्, तदा सर्व-
परित्यागोपि दुःशकः कथं भवेदेवेति ज्ञेयम् । ननु पूर्वोक्तगृहस्थेषु प्राप्तव्यसनस्य प्राप्तव्य-
सने च तेषां बाधकत्वज्ञानेपि प्राप्तव्यसनस्य भगवत्यासक्तौ जातायां भगवति यथात्मात्मीय-
त्वं भातं तथा भगवत्सम्बन्धेन भगवदीयेष्वपि पूर्वोक्तेषु पूर्वोक्तभगवदीयानां च प्राप्तव्यसने
भासत एव । एवं च परस्परं दृढतरात्मत्वात्मीयत्वाध्यासस्य विद्यमानत्वात् महारोगाद्युपहृ-
तदेहादिषु यथा लौकिकालौकिकार्थबाधकत्वज्ञानेपि तैर्दृढतराध्यासात्तत्यागः कर्तुं न शक्यते,
तथा पूर्वोक्तसर्वभगवदीयत्यागोपि प्राप्तव्यसनेन प्राप्तव्यसनस्य च त्यागस्तैः कर्तुं न शक्यते
इत्याशङ्क्याहुः अनात्मत्वं च भासत इति । आत्मशब्दस्य देहात्मनोर्वाचकत्वात्
तेषु प्राप्तव्यसनस्य प्राप्तव्यसने च तेषामनात्मत्वमात्मात्मीयभिन्नत्वं स्वहितकारित्वाभाव इति
यावत् । तच्च भासते । यद्येते मद्धितकारिणो भवेयुस्तदा यथान्तःप्रकटीभूयात्मात्मीय इति
भगवान् स्वदर्शनदानादिना हितं करोति, तथैतेपि कुर्युः, न तु भगवद्दर्शनादिनाशम् । अतो
नैते ममात्मात्मीया इति प्राप्तव्यसनस्य पूर्वोक्तेषु यद्ययमस्मद्धितकारी स्यात्तदास्मद्भजनप्र-
तिबन्धं न कुर्यात्, अतो नायमस्मदात्मात्मीय इति प्राप्तव्यसनपूर्वोक्तगृहस्थादीनां च
परस्परविषयकं बाधकत्वमानात् सुखेन परित्यागः सेत्स्यतीति भावः । तथा च परस्परविषयकं
बाधकत्वज्ञानं मनात्मकत्वज्ञानं च परित्यागे कारणं बोद्धव्यम् । ननु तादृशं बाधकत्व-
मनात्मत्वं च कदा भासत इत्याकांक्षायामाहुः यदा स्याद्व्यसनं कृष्ण इति । यदा क-

दाचिद्भगवदिच्छया कृष्णे कृष्णनिमित्तं कृष्यविषये वा भागवततत्त्वदीपीयदशमस्कन्धोक्तव्यसनोत्तराप्रतिकार्यं दुःखं तदा पूर्वोक्तं भाग्यन इति ज्ञेयम् । तदैवाप्रतिकार्यदुःखे जाते एव भक्तः कृतार्थः प्राप्तफलः स्यात् । हि युक्तोयमर्थः । अप्रतिकार्यदुःखे जाते परमस्नेही भगवान् साक्षात्सम्बन्धे कथं विलम्बं कुर्यादिति जानीहि । अत्रैतावज्ज्ञेयम् । येषामलौकिकं शरीरं तेषां तु रासमण्डलमण्डनानामिव व्यसने जाते तेनैव देहेन फलप्राप्तिः । येषां त्वन्तर्गतानामिव लौकिकं शरीरं तेषां तु व्यसनेन देहपातः । तदनन्तरं अलौकिकदेहप्राप्त्या फलप्राप्तिरिति दिक् । तथा च गृहस्थविषयकं प्राप्तव्यसनस्य गृहस्थानां वा प्राप्तव्यसनविषयकमुभयोर्भयविषयकत्वं बाधकत्वज्ञानं अनात्मकत्वज्ञानं च व्यसनलिङ्गं ज्ञेयम् । एतैर्लिङ्गैः प्रेमासक्तिव्यसनानि ज्ञातव्यानीति भावः ।

अथ जातव्यसनस्य गृहस्थपदार्थविषयकबाधकत्वानात्मज्ञानयोरवश्यंभावित्वेन संन्यासनिर्णयोक्तः परित्यागः स्वयमेव भविष्यतीति नोपदेशो योग्यः,अप्राप्तव्यसनस्य प्राप्तासक्तेर्भक्तस्य तु गृहारुचेर्जातत्वेपि तेषां भगवत्सेवोपयोगित्वेन भगवत्सम्बन्धित्वात् त्यागो मत्सम्बन्धिन एतस्मै न रोचत इति भगवन्मनस्यागते ममापराधः स्यादिति भिया तत्त्यागं न कुर्यात्, तदा तेषां पोष्यत्वादात्मपोषणार्थं सेवासमयातिरिक्तसमये व्यासङ्गान्तरमुत्पाद्य एतैरिति तत्त्याग उपदिश्यते । न च तेषां भगवदीयत्वात् तत्त्यागे अपराधः प्रसज्येतेति वाच्यम् । एते लौकिके मां योजयन्तीति लौकिकधर्मपुरस्कारेण दोषारोपपूर्वकत्यागेपराधप्रसक्तेरभावात् । भगवदीया एते मया त्याज्या इति भगवत्सम्बन्धपुरस्कारेणैव तेषु दोषारोपेण त्यागापराधप्रसक्तेरिति स्वपूर्वपक्षाभावादिति मनसिकृत्य प्राप्तासक्तेर्गृहत्यागमुपदिशन्तः सुदृढसर्वतोधिकपरमभक्तिलाभं च सार्धश्लोकेनाहुः तादृशस्यापीति ।

तादृशस्यापि सततं गेहस्थानं विनाशकम् ।
त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
लभते सुदृढां भक्तिं सर्वतोऽभ्यधिकां पराम् ।

सततं सर्वदा तादृशस्यापि प्राप्तासक्तित्वात् गृहासक्तियुक्तस्यापि आभासोक्तभगवदपराधभिया गृहमलजतो गेहे स्थानमवस्थानं विनाशकं मध्ये मध्ये लौकिकव्यासङ्गजनकत्वेन भगवद्भजनविषयकयत्ननाशकम्, अतस्तादृशानां मध्ये गृहादिमात्रत्यागं कृत्वा यः भाग्यवांस्तदर्थार्थैकमानसः । ■ यामो भगवानेवार्थो वस्तुरूपोर्थः प्रयोजनं यस्येदृशः सन् यतेत्, भगवत्प्राप्त्यर्थं यत्नं कुर्यात्, स सुदृढां भक्तिं लभते इत्युत्तरेणान्वयः । नन्वस्मिन्पक्षे त्यागो व्यसनोत्तरमाभासिकसंन्यासनिर्णयोक्तत्यागत्वेनैव कुतो नोच्यत इति चेत्। अत्र वदामः। अप्रतिकार्यदुःखरूपव्यसनोत्तरत्यागस्य स्वयमेव जायमानत्वेन उपदेशानर्थक्यम् । किम, यत्र व्यसनोत्तरत्यागे व्यसने जाते तत्प्रतिकारो भगवदतिरिक्तेन न कर्तुं शक्यत इत्येवोच्यते ।

तदा 'यदा स्याद्व्यसनं कृष्ण' इत्यव्यवहितपूर्व व्यसनमुक्तमिति ईदृशस्यापि सततं गेहस्थानं विनाशकमित्यत्र प्रत्यक्षपदार्थवाचिइदमः प्रयोग एव कृतः स्यात्, न तु परोक्षपदार्थवाचितादृशस्यापीति तच्छन्दप्रयोग इति । अपरञ्च, 'व्यसन यदा भवेत्' 'बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यती' त्यनेन व्यसने जाते भावात्मकबीजस्य नाशाभाव एवोक्तः । अत्र तु 'तादृशस्यापि सतत गेहस्थान विनाशक' मित्यनेन नाश उच्यते । तस्मादपि नायं त्यागशब्दः संन्यासनिर्णयोक्तत्यागपरः, किन्तु प्राप्तासक्तिमात्रस्यैव लौकिककार्यव्यासङ्गजनकत्वेन पुत्रकलत्रादित्यागपर एवेति सुष्ठु प्रतिभाति । अत एवाग्रे त्यागोत्तरं 'अतः स्थेय हरिस्थाने तदीयैः सह तत्परै' रिति तत्परतदीयसङ्ग उपदिष्टः । यद्यप्येतेपि तदीयास्तथापि तेषां स्वेन पोष्यतासम्बन्धयुक्तत्वात् स्वपोषार्थं लौकिकव्यासङ्गजनकत्वाभाव इति, तत्सहभावेन स्थितिरुपदिश्यत इति । अत एव संन्यासनिर्णये 'विरहानुभवार्थं तु परित्यागः प्रशस्यत' इति विरहानुभवार्थत्यागे भगवदीयाभगवदीयसकलत्यागवाचकः परित्यागशब्दः प्रयुक्तः, अत्र तु लौकिकव्यासङ्गजनकपदार्थत्यागोऽलौकिकव्यासङ्गजनकपदार्थत्यागश्चोक्त इति परित्यागत्वाभावादपि न संन्यासनिर्णयोक्तोयं त्याग उपदिष्ट इति भगवदीयैः सहृदयैः परिभावनीयमिति दिक् ।

नन्वेवं प्राप्तासक्तिर्गृहत्यागं कृत्वा हरिस्थाने स्थितस्तदीयसहतया चेत् भगवद्विषयकं यत्नं कुर्यात् तदा को लाभः स्यात् इत्याकांक्षायामाहुः लभत इति । स भक्तः सुदृढां केनापि नाशयितुमशक्यां भक्तिं स्नेहरूपां व्यसनविशिष्टत्वेन सुदृढां बीजस्वरूपां लभते प्राप्नोतीत्यर्थः । नन्वेतादृशी भक्तिरन्यदेवविषयिण्यपि भवतीत्याशङ्क्य आहुः सर्वतोभ्यधिकाम् विभूतिरूपभक्तिभ्योप्यधिकां पुरुषोत्तमविषयत्वादिति भावः । अथ च सर्वविधभक्तिभ्यः परां चरमावधिभूतां पुरुषोत्तमसाक्षात्प्रकारणभूतामिति यावत् । यद्वा । परां परमकाष्ठापन्नाम् । एतेनान्ये सम्प्रदायनयभक्तिमार्गास्तदुक्तभक्तिप्रकारास्तदुपास्यस्वरूपाणि तदाचार्याश्च न परमकाष्ठापन्नाः । 'ते प्राप्नुवन्ति मामेवे' ति वाक्यात् । 'तद्दत्त्वां गतयोन्तत' इति वाक्याच्च शुद्धपुष्टिमार्गः, तदुक्ता भक्तिः, तदुपास्यस्वरूप, तदाचार्याश्च परमकाष्ठापन्ना इति ज्ञेयम् । तथा चैतन्मार्गे तदुक्तभक्त्येतन्मार्गोपास्यस्वरूप एतन्मार्गाचार्यप्राप्तौ सत्यां सर्वं प्राप्तं किमपि नावशिष्यते प्राप्तव्यमित्येषा सर्वेषां फलरूपत्वम् । यतो वेदविभागाष्टादशपुराणधर्मशास्त्रमहाभारतादिकरणेनापि श्रीनारायणावताररूपाणां श्रीमतां व्यासचरणाना चित्तप्रसादेऽजाते नारदोपदेशेन प्रेमलक्षणमायावाद्युक्ते चित्तप्रमादे जाते तत्रानुभूतपूर्णपुरुषोत्तमादिपदार्थप्रतिपादकसमाधिभाषारूपश्रीभागवतकरणम्, अतो ज्ञायते श्रीभागवतोक्त स्वरूपम्, तदाश्रिता भक्तिः, तदाचार्याः, श्रीमद्वल्लभवादय, तदनुगता विष्णुस्वाम्यादिश्रीमद्वल्लभाचार्यान्ताश्च, तत्प्रकटितो भक्तिमार्गश्चेतत्सर्वं परमकाष्ठापन्नत्वात्फलरूपमिति भावः ।

अथैतादृशत्यागकर्त्रा त्यागं कृत्वैकान्ते गन्तव्यमेवाथवा किञ्चिदन्यदपि कर्तव्यमित्याकांक्षायां गृहमात्रमेव त्यक्त्वा हरिस्थाने'तदीयैः सह स्थेय'मिति सार्धश्लोकेनोपदिशन्ति त्यागे बाधकभूयस्त्वमिति ।

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**
**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**
**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

त्यागे बाधकानां भूयस्त्वं बाहुल्यं वर्तते । ननु कस्माद्धेतोर्बाधकबाहुल्यमित्याकांक्षायाहुः **दुःसंसर्गात्तथान्न** इति । देहाद्यध्यासस्यानिवृत्तत्वाद्यत्र कुत्रापि स्थितौ सङ्गे प्राप्ते दुष्टसङ्गो बहिर्मुखसङ्गोपि भवति । तथा देहपोषार्थं दुष्टान्नभक्षणं च प्रसज्जते । तदा दुःसङ्गाद्दुष्टान्नतश्च बाह्याभ्यन्तरदोषोत्पत्तेर्भजनादिष्वालस्ये सम्पन्ने कृतोपि गृहत्यागो व्यर्थः स्यात् । तर्हि तेन किं कर्तव्यमित्याकांक्षायामाहुः **अतः स्थेयं हरेः स्थाने तदीयैः सह तत्परैरि**ति । अतः कारणाद्धरेः सर्वविधदोषहर्तुः स्थाने शुद्धपुष्टिस्थाने वृन्दावनादौ तत्परैः रात्रिंदिनं भगवत्सेवादिपरैः सह तदीयैः शुद्धपुष्टिमार्गीयदासधर्मवद्भिः सह स्थेयम् । तथा च तत्सङ्गेन दुःसङ्गाभावात्तत्समर्पितभगवत्प्रसादान्नभक्षणात्तद्दत्तस्वसमर्पितान्नभक्षणाच्च बाह्याभ्यन्तरदोषाभावाद्भजनसिद्धिर्निष्प्रत्यूहा भवति । प्राप्तासक्तेरिति भावः । एतेनाप्ययं त्यागो न व्यसनोत्तरसामयिकः संन्यासनिर्णयोक्तस्त्यागः । यतो व्यसनोत्तरत्यागे भगवदीयेष्वपि बाधकत्वज्ञानादनात्मत्वज्ञानाच्च सर्वत्यागादन्नादित्यागोपीति क्व दुःसंसर्गान्नादिजनितदोषप्राप्तिसंभावनामीति सुधीभिराकलनीयम् । अत एव श्रीमदस्मदाचार्यचरणकृतव्यसनोत्तरत्यागेनशनकाशीगमनादिकमपि दृष्टम् । अन्यथा तैर्हरिस्थाने व्रजादावेव गतं स्यात् । भगवदीयान्नादिकमपि गृहीतं स्यात् । तत्तु न कृतमिति संन्यासनिर्णयोक्तस्त्यागो न साधनदशात्यागो येन हरिस्थाने गमनं स्यात्, तदन्नभक्षणं च प्रसज्जेत, किन्तु फलदशाजनितस्त्यागः फलजनित एव । अत एव संन्यासनिर्णये 'विरहानुभवार्थं तु परित्यागः प्रशस्यत' इति विरहानुभवार्थपरित्यागस्य प्रशस्तत्वमेवानूदितम् । ननु 'विरहानुभवार्थं तु त्यागः कर्तव्य एव ही'ति तस्यावश्यकर्तव्यत्वमुक्तम् । जीवकृत्यसाध्यत्वात् । तस्मादस्मदुक्त एवासक्तिदशात्यागोयमिति ज्ञेयम् । ननु हरिस्थानस्थतत्परतदीयानामपि स्वासक्तिसमानासमानासक्तेः सत्त्वे तु दोषाभावः सिध्यत्येव, स्वसमानासक्तेरभावे तु तेषामपि सेवाव्यतिरिक्तसमये कदाचिल्लौकिकव्यासङ्गजनकत्वे का गतिरित्याशंक्याहुः **अदूरे विप्रकर्षे वे**ति । यदि तेषां स्वसमानासमानासक्तिस्तदा तद्दत्तान्नमेकान्ते भक्षयित्वा तेषामदूरे निकटे स्थेयम् । अदूरमिति पाठे अदूरं यथा भवति तथा स्थेयम् । यदि पूर्वोक्तं न तदा तेभ्यः प्राप्तं भगवत्प्रसादान्नं तद्दत्तस्वसमर्पितान्नं च भक्षयित्वा विप्रकर्षे दूरे स्थेयम् । यथा येन प्रकारेण चित्तं न दूषयति तथेत्यर्थः ॥ ८ ॥

नन्विदमत्यशक्यं, यतोऽस्मिन् कलिकाले हरिस्थानानामपि दुष्टाक्रान्तत्वात् प्रतिष्ठादिकामुकत्वेन तत्परभगवदीयानामपि दुर्लभत्वाच्च ग्रासासक्तेः का गतिरित्याशंक्याहुः **सेवायां वा कथायां वेति।**

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत्।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम॥ ९॥**

यस्य भक्तस्य पूर्वोक्तसेवायां कथायां कथाश्रवणकीर्तनयोर्वा आसक्तिर्दृढा बद्धमूला भवेत्, तस्य यावज्जीवं यावद्देहस्थिति व्यसनं यदा कदापि भवतु, परंतु दुःसङ्गदुष्टान्नभक्षणजनितो नाशो भगवत्सेवाकथाद्यासक्तिप्रच्युतत्वं क्वापि देशे क्वापि काले च क्वापि जन्मन्यपि च न भवतीति मे मम मतिर्बुद्धिरित्यर्थः। तथा च यदि भगवद्धर्मरूपसेवाकथासक्तस्यैव[१]न नाशस्तदा साक्षाद्धर्मरूपभगवदासक्तस्य न नाश इत्यत्र किं वक्तव्यमिति कैमुतिकन्यायः सूचितः। यद्वा। नाशः दुःसङ्गदुष्टान्नजनितदोषसम्बन्धरूपः न क्वापि संभवतीत्यर्थः। तथा च दुष्टाक्रान्ते हरिस्थाने दुष्टाक्रान्तहरिस्थानातिरिक्ते स्थाने वा तिष्ठन् तत्परभगवदीयेभ्यस्तदितरजनेभ्यश्च भिक्षया जीवनमात्रसंपादकमन्नं संपाद्य स्वयं पाकं कृत्वा प्रभवे समर्प्य भक्षयन् न दोषभाक् भवतीति भावः॥ ९॥

ननु यदि हरिस्थानातिरिक्ते हरिस्थाने वा दुष्टाक्रान्ते दुष्टैर्भजनबाधः, अथ च तत्रान्नादेरप्यलाभेन वा भजनबाधः प्रसज्येत, तदा किं कर्तव्यमित्याकांक्षायामाहुः **बाधसंभावनायां त्विति।**

**बाधसंभावनायां तु नैकान्ते वास इष्यते।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः॥ १०॥**

यदि सेवायाः कथाश्रवणादीनां वा बाधः संभाव्येत शङ्क्येत, तदा एकान्ते गृहं त्यक्त्वा स्वीयाज्ञाते स्थले वासो नेष्यते, किन्तु गृहे एव वास इष्यते। ननु तदा गृहस्थानां पुत्रकलत्रादीनां लौकिकव्यासङ्गान्तरजनकत्वं सिद्धमेवेति दोषप्रसक्तिरिति किं कर्तव्यमित्याशंक्याहुः **हरिस्तु सर्वत इति।** तु पुनः हरिः सर्वदुःखहर्ता सर्वतः सर्वेभ्यो दोषेभ्यः स्वयं रक्षां करिष्यति। गृहस्थपुत्रकलत्रादिजनितलौकिकव्यासङ्गान्तरदोषो न बाधिष्यत्येवेतिभावः। अत एव 'मद्वार्तायातयामानां न बन्धाय गृहा मताः' इति श्रीभागवते भगवतोक्तम्। ननु को वेद, हरिः प्रभुः करोति चेत्, तत्र किं कर्तव्यमित्याशंक्याहुः **न संशय इति।** न सन्देह इत्यर्थः। यदि स्वीयरक्षां न कुर्यात्तदा हरित्वमेव गच्छेदिति भावः॥ १०॥

एवं भक्तिवृद्धिप्रकारमुपपाद्य ग्रन्थोपसंहारमेतत्पाठफलं चाहुः।

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम्।**
**य एतत्समधीयीत तस्यापि स्याद् दृढा रतिः॥ ११॥**

[१] भक्ति.

इति ग्रन्थसमाप्तौ । एवं अनेन प्रकारेण च भगवच्छास्त्रं उत्तरपदलोपिसमासात् भगवत्प्रापकं शास्त्रं भगवत्प्रापकोपदेशग्रन्थः । गूढतत्त्वं गूढं गुप्तम्, इतरमार्गीयेभ्यस्तत्त्वसिद्धान्तो यस्य तादृशं निरूपितं कथितम् । मयेति शेषः । अत्रैतदुक्तप्रकारेण सेवायाः कथाश्रवणकीर्तनादीनां च कर्तुः प्रेमाद्याविर्भावो भवेदिति किमाश्चर्यम्, यत्रैतच्छास्त्राध्ययनकर्तुरपि प्रेमाद्याविर्भवेदित्याहुः य एतदिति, योधिकारी कोपि एतत् समधीयीत, सम्यक् श्रद्धापूर्वकमनुसन्धानपूर्वकं वाध्ययनं कुर्यात् तस्यापि दृढा केनापि तिरोधापयितुमशक्या रतिर्बीजरूपभावरूपा स्यादाविर्भवेत्, किं पुनरेतदुक्तप्रकारकभजनकर्तुरिति दिक् ।

श्रीमद्वल्लभविट्ठलभगवच्चरणाब्जरेणुकणकृपया ।
कृतवान् जयगोपालष्टीकां श्रीभक्तिवर्धिन्याः ॥ १ ॥

मूर्ध्न्यञ्जलिं ननु विधाय निधाय भूयो भूयः कृपालुषु महत्सु निवेदयामि ।
यत्किञ्चिदत्र मयका लिखितं भवद्भिस्तत्पुष्टिमार्गपथिकैः परिशोधनीयम् ॥ २ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानमानसश्रीमन्महाप्रभुश्रीविट्ठलेश्वरकृपाकटाक्षोद्बुद्धबुद्धिना श्रीमच्चिन्तामणिदीक्षितात्मजेन जयगोपालेन विरचिता भक्तिवर्धिनी टीका ॥

---

श्रीगिरिधारी तनोतु मङ्गलानि ।

# भक्तिवर्धिनी ।

## दीक्षितलालभट्टकृतविवृतिसमेता ।

---

नमामि श्रीमदाचार्यान् विट्ठलेशांश्च मत्प्रभून् ।
यत्कृपातो भवेद्व्याधिः (श्री)गोवर्धनगिरीशितुः ॥ १ ॥

अथ श्रीवल्लभाचार्यचरणाः पुष्टिभक्तानां नित्यलीलाप्रवेशाख्यस्वमार्गीयफलप्राप्त्यर्थं तत्कारणभूतां बीजभावात्मिकां तापात्मकसूक्ष्मस्नेहरूपां भक्तिं वर्धयितुं तत्प्रकारनिरूपणं प्रतिजानते यथा भक्तिरित्यादिना ।

यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।
बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥

यथा येन प्रकारेण भक्तिर्बीजभावरूपा प्रकर्षेण वृद्धा सर्वात्मभावात्मिका स्यात्तथोपायः स्वागन्यागविभेदेन श्रवणादिरूपः पूजादिरूपश्च निरूप्यते इत्यर्थः । दृढ

भक्तेर्वृद्ध्युपायकथनप्रतिज्ञया भक्तिसत्ता सूचिता। अतो बीजरूपा पुष्टिभक्तिः पूर्वं पुष्टिजीवेषु सूक्ष्मरूपेण वर्तत एवेति बोध्यम्। अन्यथा यया भक्तिरुत्पन्ना स्यादिति प्रतिज्ञायेत। उत्पन्नाया एव वृद्ध्यादिभावार्हत्वात्। अतः पूर्वं पुष्टिभक्तेः सूक्ष्मरूपेण सत्ता ज्ञापिता। सैव पुष्टिभक्तिर्बीजभावशब्देनोच्यते। इयमेतद्ग्रन्थोदितप्रकारेण वृद्धा सती सर्वात्मभावावस्थां प्राप्य नित्यलीलाप्रवेशरूपं फलं साधयिष्यतीति सिद्धान्तनिष्कर्षः। बीजभावे इति। बीजरूपे भावे सूक्ष्मभक्त्यात्मके दृढे सति स्यात्, भक्तिः प्रवृद्धा स्यादित्यर्थः। बीजभावदार्ढ्यं कथं स्यादित्याकांक्षायामाहुः त्यागात् श्रवणकीर्तनादिति। गृहादित्यागपूर्वकं भगवत्कथाश्रवणाद्बीजदार्ढ्यं भवतीत्यर्थः। गृहादेर्विषयासक्तिसम्पादकतया भजनप्रतिबन्धकत्वेन गृहादित्यागो भजने मुख्यमङ्गम्। 'हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत' इति प्रह्लादवाक्यात्। अत एव निबन्धे भगवदुक्तश्लोकयोरेवं दृश्यते 'गृहं सर्वात्मना त्याज्य'मिति।

एवं मुख्यतया पूर्वं त्यागपक्षमुक्त्वा तादृशजितेन्द्रियत्वादिगुणरहितस्य त्यागे दोषाधिक्याद् बीजदार्ढ्ये प्रकारान्तरमाहुः बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः इत्यनेन।

> **बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः।**
> **अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

गृहे बीजदार्ढ्यप्रकारस्त्वित्यन्वयः। गृहे बीजदार्ढ्यप्रकारमाहुः स्थित्वा स्वधर्मत इत्यादिना। गृहे इति सप्तम्यन्तं देहलीदीपन्यायेनोभयत्र सम्बध्यते। स्वधर्मत इति। वेदोक्तवर्णाश्रमधर्मत इत्यर्थः। तथा च विहितप्रकारेण गृहस्थाश्रमे स्थित्वा भक्तिमार्गप्रकारेण कृष्णं भजेत्। यद्यपि 'अन्तर्गिलोऽस्यास्त्वपरो गृहमेधोऽप्युदृष्टत' इति द्वितीयस्कन्धवाक्यात् गृहाश्रमस्य फलप्रतिबन्धकत्वम्, तथापि भगवद्भजनं कुर्वाणस्य न गृहस्थाश्रमः प्रतिबन्धकः। 'गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम्। मद्वार्तायातयामानां न बन्धाय गृहा मताः' इति भगवद्वाक्यात्। अस्मिन्वाक्ये 'कुशलकर्मणा'मित्यनेन निषिद्धानां निवृत्तिः सूचिता। कुशलकर्मणामित्यस्य व्याख्यारूपं स्वधर्मत इति पदमाचार्यवर्यैरुक्तम्। अत एव भगवता द्वितीयोऽत्यागात्मापि पक्षः सफलो निरूपितः 'गृहं सर्वात्मना त्याज्यं तच्चेत्यक्तुं न शक्यते। कृष्णार्थं तत्प्रयुञ्जीत कृष्णः संसारमोचकः।' इति। अव्यावृत्त इति। 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मिति वाक्याद्भगवान् गृहस्थाश्रमनिर्वाहकं धनादिपदार्थं स्वत एव सम्पादयिष्यतीति विश्वासेन धनार्जनाभिनिवेशं त्यक्त्वा श्रीकृष्णं निरन्तरं भजेदित्यर्थः। कथं भजेदित्याकांक्षायामाहुः पूजया श्रवणादिभिरिति। पूजयेति। मन्दिरमार्जनादिरूपया परिचर्ययेत्यर्थः। श्रवणादिभिरिति। श्रीमद्भागवतोक्तदशविधपठीत्युक्तस्य भगवतः श्रवणादिभिरित्यर्थः। 'तस्मा-

द्वारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभय'मिति शुकवाक्यात् । 'दशविधलीलायुक्तस्य श्रवणादि कार्य'मिति सुबोधिन्यां निर्णीतत्वात् । दशविधलीलास्तु भागवते प्रतिपादिता इति भागवतं श्रवणादिविषयीकार्यमिति फलितम् । एवं सति सेवां विधाय तदनवसरे भागवतश्रवणादि कार्यमिति विभागोवगन्तव्यः । एवं वर्तमानस्य गृहेपि संसारावेशाभावात् बीजदार्ढ्यं भवति । ततो भक्तिर्वर्धिष्यते इति भावः । ननु यस्य भक्तिः सूक्ष्मावस्थारूपस्य बीजभावस्य सर्वात्मभावान्तावस्था भवतीत्युक्तम्, कोसौ बीजभावः ? कदा कुत उत्पद्यते इति चेत् । शृणु । सृष्टयादौ 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'ति श्रुतेरक्षरब्रह्मणः सकाशादुत्पन्नानां चिदंशानां भगवदिच्छया तिरोहितानन्दत्वेन प्राप्तजीवभावानां भगवदिच्छयैवाविद्यासम्बन्धः । ततो देहाध्यासादिस्वरूपविस्मरणान्तानि पञ्चपर्वाणि सम्पद्यन्ते । ततस्तेषु जीवेषु सदसद्वासनाभेदेन दैवत्वमासुरत्वं विदधाति भगवान् । तत्र दैवजीवेषु यान् पुष्टिमार्गीयान् कर्तुमिच्छति, तेषु स्वविषयकां सूक्ष्मरूपां रतिं स्थापयति । सा बीजभावशब्दवाच्या । 'रतिर्देवादिविषया भाव इत्यभिधीयते' इति वाक्यात् कारणत्वेन बीजत्वात् । सा रतिः प्रेमासक्तिव्यसनसर्वात्मभावानां बीजरूपेति बीजभावशब्देन व्यवह्रियते । एवमत्यागपक्षे व्यावृत्तिराहित्येन भगवद्भजनं मुख्यः पक्षः ॥ २ ॥

तदसम्भवे गौणं पक्षमाहुः व्यावृत्तोपीति ।

व्यावृत्तोपि हरौ चित्तं श्रवणादौ न्यसेत्सदा ।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।

भगवत्सेवानवसरे व्यावृत्तिं कुर्वाणोपीत्यर्थः । श्रवणादाविति । 'श्रोतव्यः कीर्तितव्यश्चे'त्यत्र उक्ता ये श्रवणादयस्तैर्भजेदित्यर्थः । व्यावृत्त्यवसरे पूजाया असंभवात् श्रवणादिमात्रमनेनोक्तम् । अव्यावृत्तस्य तूभयं संभवतीति पूजया श्रवणादिभिरित्यनेनोभयमुक्तम् । ततः प्रेमेत्यादि । एवं भगवन्तं भजतः प्रेमासक्तिव्यसनानि क्रमेण भवन्ति । सूक्ष्मभक्तिर्बीजभावरूपा पूजाश्रवणादिभिः प्रवृद्धा प्रेमासक्तिव्यसनावस्थां प्राप्नोतीत्यर्थः । बीजं तदुच्यत इति । व्यसनावस्थायां सिद्धायां बीजभावस्य दार्ढ्यं संपन्नमिति बोध्यम् । नापि नश्यतीति । न तिरोभवतीत्यर्थः । सत्प्रतियोगिनोऽभावस्य तिरोभावानतिरेकात् । अभावास्त्वस्मन्मते तिरोभावातिरिक्ता न भवन्तीति सुबोधिन्यां निर्णीतत्वात् ॥

स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥
गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।
यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥

प्रेमावस्थायाः कार्यलक्षणमाहुः **स्नेहाद्रागविनाशः स्यादिति** । आसक्तेः कार्यलक्षणमाहुः **आसक्त्या स्याद्गृहारुचिरिति** । गृहपदं गृहस्थानामुपलक्षणम् । अरुचिरिति । नात्रारुचिशब्देन रुच्यभावः । तस्य स्नेहाद्रागविनाशः स्यादित्यनेन पूर्वं स्नेहकार्यत्वेनोक्तत्वात् । अतोऽत्रारुचिशब्देन रुचिविरुद्धो भावः । विरोधार्थे नञः स्मरणात् । 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता' इति वाक्यात् । स च बाधकत्वस्फूर्तिरूप इति स्वयमेव व्याचक्षते **गृहस्थानां बाधकत्वमिति** । तथा च भगवदितरविषयकबाधकत्वस्फूर्तिसंपादको भाव आसक्तिरिति कार्यलक्षणमासक्तेः । आसक्तेर्लक्षणान्तरमाहुः **अनात्मत्वं च भासत** इति । देहस्येति शेषः । तथा च देहात्मभावनिवर्तको भगवद्भाव आसक्तिरिति लक्षणान्तरमासक्तेः । **यदा स्याद्व्यसनमित्यादि** । **व्यसनमिति** । विशेषेण अस्यते क्षिप्यते दूरीक्रियते अन्यसम्बन्धो येन तद्व्यसनं भगवत्यात्मभाव इति यावत् । एवं भगवत्यात्मभावो निरुपाधिकस्नेहो व्यसनमिति फलितम् । अत एव 'प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मे'ति व्यसनभाववतीभिर्भगवत्यात्मत्वमभाणि । 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति श्रुतेरात्मसम्बन्धादेवान्यस्य प्रियत्वं लोके, एवं व्रजसुन्दरीणां भगवत्सम्बन्धादेव स्वदेहादौ प्रीतिविषयत्वम् । अत एव 'त्वयि धृतासवस्त्वां विचिन्वत' इत्युक्तं ताभिः । 'त्वदर्थप्राणधारण'मित्याशयो विवृतः श्रीमदाचार्यवर्यैः । अतस्तादृशो निरुपधिभावो व्यसनशब्दार्थः । अत एतादृशे व्यसनात्मके भावे सिद्धे युक्तैव कृतार्थतेति बोधयितुं **यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हीति** हिशब्द उक्तः । **कृतार्थ इति** । भगवन्तं साक्षात्करोतीत्यर्थः । भगवन्मूर्तिं परिचरतो जातव्यसनाख्यभावस्य भगवत्साक्षात्कारो भवेत्, तदानेकप्रकारकं भगवदाह्लादिजन्यं सुखविशेषमनुभवेद्, अतः कृतार्थता सिध्यतीति बोध्यम् ।

एवं भगवदाविर्भावेन लीलावलोकनादिरूपं भगवत्सम्बन्धिसंयोगसुखमनुभवतोऽपि भगवद्विरहजन्यविलक्षणसुखानुभवराहित्यान्न पूर्णफलप्राप्तिः, अतो द्वितीयदलानुभवार्थं साधनमाहुस्तादृशस्यापीत्यारभ्य **त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानस** इत्यन्तेन ।

> तादृशस्यापि सततं गेहस्थानं विनाशकम् ।
> त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥

**तादृशस्येति** । प्राप्तव्यसनभावस्येत्यर्थः । **गेहस्थानं विनाशकमिति** । गेहे स्थितो हि भगवत्सेवया भगवदाविर्भावेन संयोगानुभवसिद्धौ न वियोगानुभवो भवेत्, अतः फलपूर्णतायां गृहस्थितेः प्रतिबन्धकत्वाद्विनाशकत्वोक्तिः । अतो 'विरहानुभवार्थं तु परित्यागः प्रशस्यत' इति संन्यासनिर्णयग्रन्थोक्तं त्यागमुपदिशन्ति **त्यागं कृत्वा**

**यतेदिति** । यतोयं विलक्षणस्त्यागोत एव तदर्थैकमानस इति विशेषणमुक्तम् । स चासौ अर्थः तदर्थः 'पुरुषार्थरूपो भगवान्' तदर्थं तत्प्रयोजनकमेव मानस यस्येति विग्रहः । पुष्टिमार्गे हि भगवानेव पुरुषार्थः । 'त्वं वै समस्तपुरुषार्थमयः फलात्मे'ति दशमस्कन्धे श्रीरुक्मिणीवाक्यात् । 'तावांस्तेह चतुर्विध' इत्येकादशस्कन्धे श्रीमदुद्धव प्रति भगवद्वाक्याच्च । तथा च भगवदर्थमयं त्यागो विरहे सर्वदा अन्तर्भगवत्स्फुरणार्थः । न तु 'गृह सर्वात्मना त्याज्य'मित्यनेनोक्तोय त्यागः । तत्र तु 'हित्वात्मपातं गृहमन्धकूप'मिति वाक्यात्पातहेतुत्वं गृहस्थितेः, अतो गृहत्याग उक्तः । स त्यागस्तु 'त्यागाच्छ्रवणकीर्तना'दित्यनेन पूर्वमुक्तः । अयं त्यागस्तु 'गृहे स्थित्वा स्वधर्मत' इत्यत्रोक्तप्रकारेण वर्णाश्रमधर्मतः स्थितस्य पूजाश्रवणादिना व्यसनभावोत्पत्त्यनन्तरं विहितः । अतोस्मिन् त्यागे प्राप्तव्यसनभावोधिकारी । 'तादृशस्यापि सतत'मित्यत्र तादृशशब्देन 'यदा स्यांद्व्यसनं कृष्णे' इत्यनेन पूर्वमुक्तस्य व्यसनभाववतः परामर्शात् । अतोयं त्यागो विरहानुभवार्थ एवेति निर्धारः ।

एतादृक्त्यागकर्तुः फलमाहुः **लभते सुदृढां भक्तिमिति** ।

**लभते सुदृढां भक्तिं सर्वतोऽप्यधिकां पराम् ।**
**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

**सर्वतोऽप्यधिकामिति** । सर्वतः प्रेमासक्तिव्यसनतोधिकामित्यर्थः । **परां** सर्वात्मभावरूपामित्यर्थः । वियोगे हि सर्वात्मभावो भवतीति तृतीयाध्यायभाष्ये निरूपितम् । तदनापि व्यसनभावोत्पत्त्यनन्तरं कृतत्यागस्य भगवद्विरहानुभवक्लेशजन्यभगवत्सम्बन्धार्त्या सर्वत्र भगवानेव स्फुरतीति सर्वात्मभावसिद्धौ न किञ्चित् कर्तव्यमवशिष्यत इति बोध्यम् । एवं गृहस्थितिपक्षे भक्तिवृद्ध्युपायं निरूप्य 'त्यागाच्छ्रवणकीर्तना'दिति पूर्वमुपदिष्टे त्यागे बाधकाभाव साधयितु बाधकस्वरूपनिरूपणपूर्वकं त्यागप्रकारमाहुः **त्यागे इति** । **त्यागे बाधकभूयस्त्वमि**त्यादिना कामादिषट्कजन्यानां बाधकानां भूयस्त्वमित्यर्थः । **दुःसंसर्गादिति** । 'प्रसङ्गमजरं पाशमात्मनः कवयो विदु'रिति वाक्यात् । अन्ने हि कामादिदोषाः सदैव तिष्ठन्ति । 'भयं प्रमत्तस्य वनेष्वपि स्यात्' य आस्ते सह षट्सपत्न' इति वाक्यात् । तथा च दुःसङ्गदुरन्नाभ्यां तस्य कामादिषट्कस्योद्बोधे तज्जन्यानां बाधकानां बाहुल्यं स्यादित्यर्थः ॥ १ ॥

अत एव बाधकहेतुकामादयो येन निवर्तन्ते त उपायमाहुः **अतः स्थेयमिति** ।

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**
**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

हरिस्थाने गोवर्धनादौ, तत्रापि तदीयैः तत्परैः सह स्थेयम् । 'स एव साधुषु कृतो मोक्षद्वारमपावृत'मिति वाक्यात् । एवं गृहस्थितिगृहत्यागपक्षौ सप्रकारं निरूप्य अन्यतर-

१

साधनावस्थापन्नस्य पक्षद्वये अनुगतं मुख्यसाधनमाहुः अदूरे विप्रकर्षे वेति। भगवत इति शेषः। गृहस्थितिपक्षे श्रीविग्रहस्य अदूरे निकटे, त्यागपक्षे श्रीमूर्तेर्विप्रकर्षे दूरे स्थितावपि चित्तदोषो यथा न भवेत्तथा स्थेयमित्युपदेशः। 'चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्। गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये' इति तृतीयस्कन्धे कपिलवाक्यात्, 'मन एव मनुष्याणां कारणं बन्धमोक्षयो'रिति वाक्यान्तराच्च चित्तस्यैव सर्वत्र मुख्या कारणतेति तस्मिन्दोषोत्पत्तौ सर्वनाश इति चित्तस्य निर्दोषतायै दुःसङ्गवर्जनपूर्वकं सत्सङ्गादि सम्पाद्य सावधानतया स्थेयमिति भावः॥ ८॥

कथं चित्तं निर्दुष्टं स्यादित्याकांक्षायां पूर्वोक्तमुपायं स्मारयन्ति सेवायां वा कथायां वेति।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत्।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम॥ ९॥**

गृहस्थितिपक्षे सेवायाम्, त्यागपक्षे कथायाम्, यस्यासक्तिर्भक्तिर्दृढा भवेत्, तस्य यावज्जीवं क्वापि दुर्देशे दुष्टकालेपि नाशो बुद्धिभ्रंशरूपो न भवेत्। अन्यथा चित्तदोषे विषयध्यानात् 'ध्यायतो विषयान् पुंसः' इत्यारभ्य 'बुद्धिनाशात्प्रणश्यती'त्यन्तेन निरूपितो नाशः स्यादिति भावः॥ ९॥

ननु कृतत्यागस्य भगवदीयसङ्गादप्येकान्ते स्थितिरेव समीचीना, भजनप्रतिबन्धदुःसङ्गसंभावनाया अप्यभावादित्याकांक्षायामाहुः बाधसंभावनायां त्विति।

**बाधसंभावनायां तु नैकान्ते वास इष्यते।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः॥ १०॥**

यद्यप्येकान्ते दुःसङ्गादिदोषो नास्ति, तथापि व्याघ्रादिभयरूपबाधसंभावना यत्रास्ति, तत्र वासो न इष्यते, न इष्टप्रापको, मनसश्चाञ्चल्यापादकत्वेन भगवद्भजनप्रतिबन्धकत्वादित्यर्थः। ननु सर्वरक्षको भगवान् व्याघ्रादिभ्यो भक्तान् कथं न रक्षतीत्याकांक्षायामाहुः हरिस्त्विति। 'रुद्धा गुहाः किमजितोऽवति नोपसन्ना'निति वाक्यात् सर्वथैव भगवान् रक्षति, तथापि तादृग्विश्वासाभावेन मनश्चाञ्चल्यं स्यादेव, ततो भजने प्रतिबन्धो भवेत्। अतस्त्यागपक्षे हरिस्थाने श्रीगोवर्धनादौ भगवदीयैः सह स्थितिरेव श्रेयस्कारिणी। 'संसारेस्मिन्क्षणार्धोपि सत्सङ्गः शेवधिर्नृणा'मिति भागवतवाक्यादिति भावः। अपि च एकान्ते स्थितौ हि रक्षणार्थं भगवति भारो देयः। स च स्नेहविरुद्धः। हरिस्थाने भगवदीयैः सह भारे तु सोपि दोषो नास्तीति त्यागपक्षे भगवत्स्थाने भगवदीयैः सह स्थित्वा भगवद्भजनं कार्यम्। तेन च प्रेमासक्तिव्यसनानि भवन्ति। ततो भगवदाविर्भावः। ततो

'शुद्धाश्च सुखिनश्चैव ब्रह्मविद्याविशारदाः। भगवत्सेवने योग्या नान्य' इति वाक्यात् साक्षात् भगवत्सेवने अधिकारसिद्ध्यर्थं प्रथमत एव श्रवणं, कीर्तनं स्मरणमित्युक्त्वा अग्रे पादसेवनमुच्यते। अत्र तु भगवदाज्ञया श्रीमदाचार्यैरादावेव सर्वसमर्पणेन ब्रह्मसंबन्धकरणात् तेनैव सर्वदोषनिवृत्तिपूर्वकसेवाधिकारो जात इति स क्रमो न विवक्षित इति ज्ञेयम्। तदुक्तं 'ब्रह्मसंबन्धकरणात् सर्वेषां देहजीवयोः। सर्वदोषनिवृत्तिर्हि'इति सिद्धान्तरहस्ये साधनफले एकीकृत्य सर्वसमाधानमाहुरिति। नवरत्ने चेयमेवाशङ्का समाहिता। तथा च अरुणोदयात् प्रागुत्थाय स्वयं स्नानादिकं विधाय भगवन्मन्दिरे गत्वा मन्दिरपात्रादिसंशोधनं, सिंहासनसंस्कारः, बालभोगसज्जीकरणं, ततः प्रबोधस्तवैः भगवद्बोधनं, शीतादिसमयोचिततूलकञ्चुकप्रावरणादि परिधाप्य, सिंहासने उपवेश्य, बालभोगं समर्प्य, शीताधिक्ये हसन्तीमुपनिधाय, स्नानसामग्रीं सुगन्धतैलतप्तोदकादि अङ्गवस्त्रशृङ्गारदेशोचितवस्त्रालङ्कारादि सर्वमुपस्थाप्य, समये जाते, बालभोगमपनीय, आचमनं मुखवस्त्रताम्बूले समर्प्य, दर्पणं प्रदर्श्य, तत्सामयिकशोभामवलोकयन् मङ्गलनीराजनं कुर्यात्। एवं स्नानशृङ्गारमारभ्य श्रीमदाचार्यनिर्दिष्टप्रकारेण शृङ्गारभोगगोपीवल्लभगोपालराजभोगोत्थापनसन्ध्याशयनपर्यन्तं यथायथं परिचरणमेव पादसेवनमित्यर्थः। अर्चनं च पूजनम्। तद्धि पूज्ये उत्कर्षख्यापकम्, सर्वोत्कृष्ट एव पूज्यो भवतीति। प्रकृते च पूज्यो भगवान् पुरुषोत्तमः, तत्रापि श्रीयशोदोत्सङ्गलालितः, तत्रापि कोटिकन्दर्पलावण्यः श्रीगोपीजनवल्लभः, तत्रापि श्रीवल्लभाचार्यहृदयसर्वस्वरूपः, तत्र च श्रीमदाचार्यचरणानुग्रहपक्षपातेन स्वरचितशृङ्गारादिपरिष्कारप्रकाशमानं शोभातिशयविशेषमङ्गीकारसूचकमवधार्य परमोत्साहभरेण विवशतया सूर्ये दीपदानमिव धूपदीपनैवेद्यताम्बूलागुरुसारादिसुगन्धपुष्पमालादिभिरभ्यर्च्य एतादृशे स्वसर्वस्वरूपे कस्यापि दृष्टिदोषसंक्रमो माभूदिति परमप्रेम्णा नीराजनां सर्वदोषनिवृत्त्या 'निःशेषेण राजयती'ति व्युत्पत्त्या अपूर्वशोभाप्रकाशिकां नीराजनां कुर्यादित्यर्चनम्। ततश्च परिक्रमणेन स्वात्मानमपि प्रभोरुपरि निर्मञ्छ्य परमाणुना मया किं कर्तुं शक्यमिति परमदैन्येन दण्डवत्साष्टाङ्गं प्रणमेदिति वन्दनम्। ततो दास्यं शय्यादिरचना। तत्र चाधिशयाने प्रभौ व्यजनचरणसंवाहनादि च। ततो मुकुलितनयने प्रभावनवसरं विधाय श्रीमत्प्रभुप्रसादीकृतपुष्पमालादिभिश्चर्चितः परमाह्लादपूर्णो भगवन्मन्दिराद्बहिरुपेत्य 'उच्छिष्टभोजिनो दासाः' इति वाक्यात् साक्षादधरामृतकरम्बितं बाह्याभ्यन्तरशोधकं परमसौभाग्यसंपादकं महाप्रसादं सेवकादिभ्यो विभज्य सेवेत। ततश्च क्षणं विश्रम्योत्थाय वस्त्राभरणादिसेवया तदभावे तादृशैः स्वात्मनिवेदिभिः समानशीलव्यसनैर्भगवदीयैः सङ्गत्यासनपीठधारणपूर्वकं श्रीभागवतसुबोधिन्यादिश्रवणम्। तथैव कीर्तनम्। तत्तल्लीलाभोगादीनां स्मरणं च कुर्वाणो यावदुत्थापनं दिनं वेणुगीतोक्तप्रकारेण नयेत्। ततश्चोत्थापने जाते कन्दमूलफलादि तत्तदानेव समर्पयेत्। अत्र च पुलिन्दीसौभाग्यं

संभावयेत्। ततो भगवदुत्थापनशङ्खध्वनिवेणुनादोत्थनिजनिजाह्वानाभिधानश्रवणोत्साह-समुद्भूतलाङ्गूलसहर्षहुङ्कारोल्लसितमुखीर्धेनूः पुरस्कृत्य, साक्षिभिर्गोपवृन्दैरनुगीयमानचरितं 'तं गोरजश्छुरिते'त्यादि वर्ण्यमानस्वरूपं मावोद्धारिणीभिर्दृग्भिः श्रीमद्व्रजसीमन्तिनीपरितापं परिहरन्तं गोपीदृगुत्सवदृशं व्रजे प्रविशन्तं परिभाव्य, धेनूस्तत्तद्गोष्ठे निवेश्य, निजमन्दिरमलंकुर्वाणं प्रभुं वन्यपुष्पादिभिरलंकृतं पयोमोदकादिभिर्यथालब्धैर्भोगोपचारैरभ्यर्च्य, सान्ध्यनीराजनां विधाय, क्रमेण प्रेम्णा शृङ्गारं बहूकृत्य उन्मज्जनसायन्तनवस्त्रालङ्कारादिभिरलंकृत्य, दुग्धफेनं समर्प्य, यथालाभमिति सर्वत्र ज्ञेयम्। 'यथालब्धोपचारकै'रिति वाक्यात्। 'स्वाद्वन्नमुपलालित'मिति प्रकारकं शयनभोगमुपनीय, ताम्बूलमाल्यादिभिरलंकृत्य, शयननीराजनां कुर्यात्। ततश्च शय्यामधिशयिते प्रभौ नमस्कृत्य, अनवसरं विधाय, बहिर्निःसरेत्। इदमेवोक्तं तत्त्वार्थदीपे 'एककालं द्विकालं वा त्रिकालं वापि पूजये'दिति। ततो यथोचितं प्रसादादि संसेव्य तादृशैः श्रवणकीर्तनादि कुर्वन् परमानन्दमनुभवन् विश्रमेदिति दास्यं दिङ्मात्रं प्रदर्शितम्। यद्यपि सख्यात्मनिवेदने हि भगवदङ्गीकारेणैव संपद्येते, तथापि 'तथा निवेदने चिन्ता त्याज्या श्रीपुरुषोत्तमे' इत्यत्र निवेदनाङ्गीकारचिन्ताऽभावनिरूपणेनैव सख्यसिद्धिरपि निरूपिता। तथापि साधनदशायां निरोधलक्षणोक्तभावनावत् तदनुकूलान्तरङ्गसेवा भावनीया। निवेदनं च ब्रह्मसंबन्धसमये समर्पितानां पदार्थानां यथायथं तत्रैव विनियोगः॥ २॥

सर्वथा व्यावृत्तिराहित्याभावेपि प्रकारमाहुः व्यावृत्तोपीति।

व्यावृत्तोपि हरौ चित्तं श्रवणादौ न्यसेत्सदा।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत्॥ ३॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति।

हरौ सर्वदुःखहर्तरि चित्तं निधायेति व्यावृत्तिसमयेपि 'पानीयहारिणी यद्व'दितिवत्। हरावेव चित्तं निधाय व्यावृत्तिं कुर्यादित्यर्थः। अनन्तरं च श्रवणादौ सदा यतेत्। इदमेवाभिप्रेत्योक्तं निबन्धे 'सर्वथा वृत्तिहीनश्चेदेकं यामं हरौ नये'दिति। एवं सर्वदा भजतः फलमाहुः तत इति। एवं भजतः प्रथमं भगवति स्नेहः स्यात्, पूर्वोक्तो बीजभावोऽङ्कुरितः स्यादित्यर्थः। ततः क्रमेणासक्तिर्भवेद्, भगवत्स्वरूपे बहूरागो भवेत्। तदाङ्कुरो द्विपत्रितो जात इति ज्ञेयम्। ततश्च क्रमेण व्यसनम्। विशेषेण असन्ते तदितरे सर्वे विषया येन, तं विना स्थातुमशक्तिरिति यावत्, तद्भवेत्। ततश्च सङ्कल्पा उत्तरोत्तरं पल्लवस्थानीया भविष्यन्ति। एवं व्यसने जाते तद्बीजं भक्तिशास्त्रे दृढमुच्यते। यदस्याग्रहेतावपि यन्न नश्यति॥ ३ ३ ॥

तत्र हेतुभूतं तस्य साधारणं कार्यमाहुः स्नेहादिति।

**स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥**
**गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।**
**यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥**
**तादृशस्यापि सततं गेहस्थानं विनाशकम् ।**

भगवति स्नेहे जाते गृहादौ तदितरत्र सर्वत्रैव रागो निवर्तते, स्नेहपदार्थस्यैव तथात्वात् । तत्रासक्तौ जातायां गृहादावरुचिर्भवति, तत्प्रीतिजनकं न भवतीत्यर्थः । न केवलमरुचिमात्रम्, किन्तु एते मम बाधका अनात्मीया इति बुद्धिर्जायत इत्याहुः गृहस्थानामिति । सम्बन्धमात्रे षष्ठी । गृहस्थितेषु स्त्रीपुत्रादिषु ममताविषयेषु स्पष्टम् । तदेवमासक्त्या सेवतः यदा कृष्णे फलरूपे व्यसनं तदितरसर्वविषयनिवृत्तिपूर्वकं तं विना स्थातुमशक्तिर्भवेत्, तदा कृतः सम्पादितः अर्थः यदर्थं तनुवित्तजायां प्रवृत्तः बीजदार्ढ्यरूपः पुरुषार्थो येन तादृशः स्यात् । अत एव बीजं तदुच्यते शास्त्रे दृढमिति पूर्वमुक्तम् । एवकारेण अन्यथा तदभावः । तस्सत्त्वेन तत्सिद्धिनिश्चयोपि हिशब्देन सूचितः । एवं बीजभावे दृढे जाते यथा द्वितीयाधिकारिणस्त्यागः श्रवणकीर्तनञ्च साधनमुक्तम्, तदेवास्यापि वक्तुं हेतुमाहुः तादृशस्यापीति । गृहादावरुचिमतोपि बाधकत्वस्फूर्तिमतोपि भगवदेकव्यसनवतोपि निरन्तरं गृहस्थितिर्विशेषेण भावनाशिका ।

अत्रायं भावः । 'स्नेहाद्रागविनाशः स्या'दित्यादिना विरागस्योक्तत्वाद् 'यदहरेव विरजेत् तदहरेव प्रव्रजे'दिति श्रुतेरवसरस्य प्राप्तत्वात् त्याग उपदिश्यत इति नानुसन्धेयम् । तस्य ज्ञानमार्गीयत्वात् । प्रकृते च पुष्टिमार्गीये बीजभावे दृढे व्यसनात्मके जाते तस्य च तं विना स्थातुमशक्तिरूपत्वात् विप्रयोग एवानुभावक इति सततं गृहस्थितौ स्वरूपासक्तस्य आसक्त्या, स्वरूपसेवां कुर्वतः, सेवारसावेशेन परमानन्दानुभवेऽस्यास्थ्याभावात् पूर्वोक्तो भावः प्रवृद्धो न स्यात्, 'भगवता सह संलाप' इत्यादि संकल्पा निद्राच्छेदादयश्च दशा न भवेयुः, क फलरूपमानसीसेवासंभावनेति विमृश्य 'त्यागं कृत्वे'त्युक्तं श्रीमदाचार्यैरिति तादृशस्यापि सततमित्यादि पदसमभिव्याहाराद्यगम्यते । अन्यथा सततपदवैयर्थ्यं च । अत एव स्वमार्गीयत्यागस्वरूपमुक्तं सन्न्यासनिर्णये 'विरहानुभवार्थं हि परित्यागः प्रशस्यते । स्वीयबन्धनिवृत्त्यर्थं वेशः सोत्र न चान्यथे'ति । त्यागे स्वीयानां बन्धकत्वाभावे स वेशोपि न कार्य इत्याशयेन । अतो नायं वैधस्त्याग इति हृदयम् । तस्मिन् वेशस्यापि अहत्वात् । एतच्च तथा संन्यासनिर्णये विशेषेण भावनीयम् । अत एव अन्त्याधिकारिणः साधननिरूपणे 'त्यागाच्छ्रवणकीर्तना'दित्याधिक एव त्याग उक्तः ॥ ५१ ॥

प्रथमस्यापि व्यसने जाते बीजस्य दृढत्वात् तथाधिकारो जात इति तदेव साधनमाहुः त्यागं कृत्वेति ।

त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
लभते सुदृढां भक्तिं सर्वतोभ्यधिकां पराम्।

बाधकत्वाद्गृहादि सर्वं त्यक्त्वा स एव फलरूपमानसीसेवारूपो योर्थः पुरुषार्थः स
एवार्थः प्रयोजनं तस्मिन्नेवैकं मुख्यमेकाग्रं वा मानसं मनो यस्य एतादृशः सन् श्रवणकीर्तने
यो यतेत् स सर्वतोधिकां मुक्तेरप्यधिकां परां फलरूपां सुदृढां प्रभुणाप्यनपनोद्यां
भक्तिं लभते। स्वमार्गीयैः सजातीयैरेव श्रवणादिकम्, न तु विजातीयैरन्यमार्गीयैर्वेति
धात्वर्थेन ज्ञापितम् ॥ ६३ ॥

त्यागे बाधान्तरमाशङ्क्य परिहरन्ति त्याग इति।

त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥
अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः।
अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥
सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत्।
यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥
बाधसंभावनायां तु नैकान्ते वास इष्यते।
हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥

त्यागानन्तरं स्वमार्गीयत्यागस्वरूपाज्ञानात् सजातीयबुद्ध्या अन्यमार्गीयैः त्यागि-
भिरेव सङ्गो भवेत्, स च दुःसंसर्ग एव, भाववैजात्यात्। तदुक्तसाधनप्रवृत्तौ मार्गाच्युतो
भविष्यतीत्यर्थः। तथान्नतोपि बाधः। तैः सह सर्वत्र भिक्षया असमर्पितभक्षणेन बाहि-
र्मुख्यमेव प्रतिदिनमुपचीयेत, दूरतरा भाववृद्धिः। अतस्त्यागं कृत्वा हरिस्थाने श्रीगोवर्ध-
नादौ यत्र पूजाप्रवाहः स्यादित्याधूक्षम्। तदीयैर्भगवत्संबन्धिभिस्तत्परैः सर्वत्यागपूर्वक-
सेवाश्रवणकीर्तनपरैर्दृढधीजमानैः सजातीयैः सह स्थेयम्। एतेन दुःसंसर्गदोषो निवा-
रितः। हरिस्थान इति। 'वस्त्रप्रक्षालनादिभि'रिति वाक्याद्यथासंभवं सेवापि सूचिता।
प्रसादलाभादन्नदोषोपि परिहृतः। स्वमार्गीयश्रवणादिसिद्धिरप्युक्ता। तत्रापि 'अति-
परिचयादवज्ञे'ति न्यायेन बाधमाशङ्क्य परिहरन्ति अदूरे विप्रकर्षे वेति। स्पष्टम्।
निर्गलितार्थमाहुः, यथा चित्तं न दुष्यति तथा स्थेयमित्यर्थः। वस्तुतस्तु सेवायामिति,
सेवायां वा कथायां, वा विकल्पे समुच्चये वा, यस्यासक्तिर्दृढा भवेत्, तस्य यावज्जीवं क्वापि
भगवत्स्थले अन्यत्र वा, सजातीयेषु इतरेषु वा, निघ्नतोपि नाशो न भवेदिति मे मतिः।
तेन स्वानुभवस्यैव प्रामाण्यमुक्तम्। तथापि 'पाक्षिकोपि दोषः परिहरणीय' इत्याहुः 'बाध-
संभावनायां तु नैकान्ते वास इष्यत' इति। वस्तुतस्तु 'हरिस्तु सर्वतो रक्षां करिष्यति
न संशयः'। भक्तानां सर्वदुःखहर्ता हरिः, अन्यथा तथात्वमेव न स्यात्। अत एवं

भजने प्रवृत्तस्य सर्वतो रक्षामेव करिष्यति । अत्र संशयो न विधेयः । अत्र विशेषः संन्यासनिर्णये द्रष्टव्यः ॥ १० ॥

उपसंहरन्ति ।

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।**
**य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥**

स्पष्टम् । अथाधुनिकेभ्यः कुटुम्बव्यावृत्तिविवशेभ्यः स्वकीयेभ्यो महाकारुणिका वरदानमिव प्रयच्छन्त आहुः य एतदिति । सेवाश्रवणाद्यसंभवे य एतद्भक्तिवर्धिनीस्तोत्रं सम्यगर्थावधारणपूर्वकं समधीयीत तस्यापि बीजभावरूपा स्थायिभावात्मिका रतिर्दृढा स्यादित्याशीर्दानम् ॥ ११ ॥

श्रीमदाचार्यकृपया तद्वाचामर्थसङ्गतिः । प्रादुरासीन्मम स्वान्ते तन्मयेत्थं निरूपितम् ॥१॥
न प्रौढ्या साक्षिणस्तत्र त एव प्रभवो यदि । जीवत्वादन्यथा प्रोक्तं क्षमन्तां करुणार्णवाः २

इति श्रीमद्भक्तिवर्धिनीविवृतिः संपूर्णा ॥

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीवल्लभात्मजश्रीबालकृष्णकृतटीकासमेता ।

नत्वा स्वाचार्यचरणौ कृपापात्रं यतो हरेः ।
स्मृत्वा गोपीशचरणौ व्याख्यास्ये भक्तिवर्धिनीम् ॥ १ ॥
व्याख्यानरीतिरपरैर्बहुधा विभिन्ना सिद्धान्तरीतिमतिरेव च नान्यथा सा ।
तत्रापि बोधविशदाशयतानुषङ्गादर्थं विशेषममिधातुमना भवामि ॥ २ ॥
अस्याः कृतेर्मम विनोदहृदा विचारे केचित्सरे प्रतिपथीनतया विशन्तु ।
ये तु प्रमेयगतिमेव विभावयन्ति ते भावयन्तु सदयाहृदयाः प्रवीणाः ॥ ३ ॥

इह तावत् श्रीवल्लभाचार्याः स्वप्रकटितपुष्टिमार्गे साधारणकारणत्वाद्ब्रह्मसम्बन्धस्य तत्करणपूर्वमनुगृहीतानां जीवानां स्वमार्गीयालौकिकसाधनातिशयक्रमेण व्यसनावधिद्वारा साक्षाद्भगवत्प्राप्तिरेवेति सर्वेषामिति ज्ञापयितुं भक्तिवर्धिनीनामानं प्रबन्धं व्याचख्युर्यथा भक्तिः प्रवृद्धा स्यादिति ।

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

यथा येन प्रकारेण भक्तिः पुष्टिमार्गीया स्यात् प्रवृद्धा स्वावस्थात्रयापन्ना च स्या-
त्तथा उपायः साधनं निरूप्यते । विशिष्टविधानमेतत् । अयमर्थः । साधनानि तु प्रमा-
णचतुष्टये प्रतिपादितानि, परं न तेषां यावत्स्वसाध्यविजातीयार्थहेतुतावधार्यते, तावत्प्र-
कृतोपयोगीनि भवन्ति । अतस्तद्धेतुप्रकारक उपाय उच्यत इति । यद्वा । उक्तं च
साधनजातं विजातीयार्थेषु तत्प्राकरणिकमिति वाक्येनेष्टार्थे विनियुज्यते । न चात्र
प्रमाणाभावो न वार्थविरोधः । इतरथा अप्रामाणिकत्वापत्तेः ।' न चैवं विषयव्यवस्था
स्यादिति वाच्यम् । तत्त्वतो विषयद्वैविध्यादेरप्यनंगीकारादिति । श्रीभागवतादौ उक्तान्यपि
साधनान्यसंभावनाविपरीतभावनाभ्यां नार्थहेतवो भवन्तीति ते निवार्याधिकारिविशेषवि-
षयतया तदुपयोगः कथ्यत इति भावः । अत एव तृतीये कपिलेन 'भक्तियोगो बहुविध'
इत्यादिना स्वभावगुणतारतम्येन भक्तितारतम्यं व्याख्याय 'अनिमित्ता भागवती'त्यादिना
निर्गुणभक्तिरेव स्तूयते । यत्तु कश्चित्प्रमाणचतुष्टये पुष्टिभक्तेस्तत्साधनानां चाभावाद्वि-
जातीयसाधनव्याख्याप्रतिज्ञेत्याह । तन्न । तथा सति पुष्टिभक्तेरप्रामाणिकत्वापत्तेः ।
प्रकृतग्रन्थसाधनविरोधात् । 'कश्चिदेव हि भक्तो हि यो मद्भक्त इतीरणात्' । सर्वत्रोत्कर्ष-
कथनात् पुष्टिरस्तीति निश्चय' इति प्रभुवाक्यविरोधात् । 'गीतायां स्फुटमतः पुष्टिः
प्रतिपाद्यत' इति तद्व्याख्यानं च विरुध्यत इति दिक् । ननु केयं भक्तिर्नाम । न ताव-
दाराध्यत्वेन ज्ञानम् । तथा सति ज्ञानविशेषत्वेनाभेदप्रसङ्गात् । न चेष्टापत्तिः । 'तस्मा-
न्मद्भक्तियुक्तस्य' 'ज्ञानिनामपि सर्वेषा'मित्यादिषु भेदेनाम्नानात् । न च श्रवणादितत्समु-
दायाद्यन्यतमत्वम् । तस्य 'भक्त्या सञ्जातया भक्त्ये'त्यनेन कारणत्वोक्तेः । नापि वा एतेन
सेवापि भक्तिः । न च श्रद्धाविशेषः । तस्याः सङ्कल्पात्मकतया निश्चयात्मकतया
वा तद्भिन्नभक्तेर्भेदात् । अत एव गुरवः 'श्रद्धातः साधनप्रवृत्तिस्ततः फलं भक्ति'रित्याहुः ।
एतमेव श्रद्धाभक्त्योर्भेदमादाय 'श्रद्धावन्तो न भक्तास्ते ये स्वधर्मबहिर्मुखाः । सेवा-
स्वधर्मं कुर्वाणा भक्तगोष्ठीविरोचका' इति वदन्ति । यत्तु केचित् श्रद्धासहितसेवाकृति-
र्भक्तिरिति प्राहुः । तन्न । सेवाकृतेर्भक्तिसाधकत्वम्, न तु भक्तित्वमिति सिद्धान्तात् ।
एतेन शमादिपक्षाः प्रत्युक्ता वेदितव्याः । अत्रोच्यते । भगवति निरुपाधि प्रेम भक्ति-
रिति । न चाप्रसिद्धिः । आत्मनि प्रसिद्धेः । न च माहात्म्यज्ञानपूर्वकत्वस्य प्रधानया-
त्स्यगतत्वादुपाधित्वं शङ्क्यम् । तस्य तत्कारणे सेवायामुपक्षीणत्वात् । अत एव माहात्म्य-
ज्ञानं सेवायामपराधाभावायोपयुज्यते, न तु भक्तिहेतुत्वेनेति श्रीमद्गोकुलनाथचरणाः ।
नन्वेवं व्रजस्थानां कामाद्युपाधिसत्त्वमेवेति चेन्न । तत्र कामाभावात् । तासां जारानुरूप-
भगवद्गुणवर्णनस्य तत्रैव विशदत्वात् । भक्तोचितस्वरूपनिष्ठतया वा तादृग्गुणकथनस्या-
वश्यकत्वमित्यस्य सुवचत्वाच्च । अत एव भक्ताः स्वरूपनिष्ठा एव भवन्ति । न हि तेषां
भगवत्स्वरूपातिरिक्तं किंचिद्वर्णनीयमस्ति । तदाहुर्गुरुचरणाः . 'तदेव हि प्रमेयं भग-

यदङ्गीकारो नाम वस्तु यत्कायवाङ्मनसां भगवत्परत्व'मिति । यद्यपि कामानुरूपा क्रिया दृश्यते, परं न कामः । आहुश्चाचार्याः 'क्रिया सर्वापि सैवात्र परं कामो न विद्यते' इति । यदपि 'कामाद्गोप्यः,' 'कामं क्रोध'मित्यादिकथनं तदपि लोकप्रतीतिसापेक्षं चित्तासङ्गस्तवनम्, न तु साधनताबोधकमिति दिक्। तस्मान्निरुपाधिकं प्रेम भक्तिरिति । सा च द्विधा । आत्ममनोधर्मभेदात् । न चाद्यायां मानाभावः । स्वरूपेण भगवल्लीलाप्रवेशे सङ्घाताभावेन तदसम्भवापत्तेः । अलौकिकसङ्घातस्वीकारे जीवे निराकारताप्रसङ्गात् । अतोऽन्यथानुपपत्तिरेव मानम् । न वा किञ्चिद्बाधकं पश्यामः । यतः अंशत्वादिवदैश्वर्यादिसमानाधिकरणो धर्मविशेषो भक्तिरिति युक्तमुत्पश्यामः । मनोधर्मरूपा तु श्रवणादिसाद्गुण्योपकृतिमपेक्षते । यावत्तद्वृत्तिमती । तथा पुनः साभिव्यक्ता नेशते परोपकारं स्वात्मनि विनाभावविशेषावस्थायां दृष्टान्तीकृतानां भावानुरूपं करणम् । क्रिया हि परतश्चा प्रयत्नाभिलापतो भवति यथा, साप्येवं यतः । अस्ति च नायं प्राणप्रदो धर्मो, विभिद्यन्ते यतो नानाविधा गतयः । गतिसामान्यमपि साक्षादेवेति न नियमः, किन्तु पारंपर्यतयापि, तदविरोधात् । अतो द्विधा भक्तिः । तत्राद्या विधेयताहीना वृद्धिप्रकारमपेक्षते, अतस्तदुच्यते । ननु वक्ष्यमाणसाधनैः सर्वेषां भगवति कुतो न भक्तिर्वर्धत इति व्यभिचारिशङ्कायामाहुः 'बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनादि'ति । परमादिसृष्टौ भगवतो रमणेच्छातो विस्फुलिङ्गन्यायेन निर्गता जीवाः । तेषां विविधगतितत्साधनानामानुपूर्वीविशिष्टानां सत्त्वासत्त्वे भगवतैव विचारिते । तत्र ये स्वप्राप्तियोग्यतया इच्छाविषयीकृतास्तेषु यत्तादृशेच्छाविषयत्वं स एव बीजभावो नाम । तत्राप्ययं जीवः कतिचिद्दिनानि साक्षान्मत्प्राप्तिसाधनकृत्त्वा ततो निवर्त्योऽन्यगतिसाधनकृत्स्यादिति चेद्भगवता विचारितं, तदा स बीजभावो दृढो न भवति । दृढे तु बीजभावे स्यादुक्तसाधनैः प्रवृद्धा स्यादित्यर्थः । अदृढे तु तस्मिन्न भवेदिति । तदुक्तं गुरुचरणैः 'न हि पदार्थगुणदोषौ वर्णयतोऽपि पुरुषस्य प्रश्नादेर्भवन्ति त्रिधेयाः प्रवृत्तिनिवृत्त्योः केचिदपि न यावद्विशिष्टेच्छाविषयताशालित्वं धर्मस्येति । अतो दृढे तु बीजभावे तथा स्यात् । तत्र साधनमाहुः त्यागादिति । ऐहिकपारलौकिकयावद्वस्तुनस्त्यागो भगवति स्वमार्गीयप्रकारेण स्वात्मनः समर्पणं । तस्मात् भगवत्प्राप्तीप्सुना प्रथमतो मार्गानुसारेण समर्पणं कर्तव्यम् । मुख्यमिदं साधनं भक्तिवृद्धौ । अत एवैकादशे भगवतोद्धवं प्रत्युक्तम् । 'दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् । एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते' इति । अन्यत्र च । 'ये दारागारपुत्राप्तप्राणान्वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तान् त्यक्तुमुत्सहे ।' 'मामुद्दिश्य हित्वे'ति तत्राख्यानम् । तस्मात्समर्पणं भगवति कर्तव्यम् । तदुत्तरं साधनमाहुः श्रवणकीर्तनादिति । समाहारे नपुंसकत्वम् । आत्मसमर्पणानन्तरं निबन्धोक्तलक्षणप्रकारकं गुरुमाश्रित्य यत्रात्मसमर्पणं कृतं तस्य

भगवतः स्वरूपज्ञानार्थं स्वस्वरूपज्ञानार्थं भगवति स्वसम्बन्धज्ञानार्थं च भगवच्छास्त्रं श्रोतव्यम्। तेन सकलसंशयनिवृत्तौ भगवति भक्तिर्दृढा भवति। तदुत्तरं श्रुतस्यार्थस्य संरक्षणार्थं सति श्रोतरि कीर्तनं कर्तव्यम्। अत्र श्रवणकीर्तनयोः समुचितं हेतुत्वम्, न तु पार्थक्येन। न च यत्र श्रवणमेव साक्षात्कारकं तत्र व्यभिचारः। तत्र कीर्तनस्मरणजनितार्थस्य जन्मान्तरीयतया सिद्धेः। भगवदनुग्रहो वा तत्र कारणम्। श्रवणादीनां हि दृष्टद्वारकत्वम्। तच्च दृष्टं फलं कचित्संशयनिवृत्त्यादि यथायथमवगन्तव्यम्। संशयनिवृत्तौ, (सति सम्भवे) स्मरणं विधेयम्। सति सम्भवे सेवा कार्या। श्रवणं तु लीलात्वेन कर्तव्यम्, तथा कीर्तनं च। तदुक्तं गुरुचरणैः 'निरन्तरं भगवतः स्मरणमेव मुख्यमस्मात्कम्, श्रवणादिकं तु तदुपकारि, न तु स्वतन्त्रपुरुषार्थः'। भक्त्युत्पत्तौ लीलात्वेन श्रवणं तु तनुजा सेवा यथा स्वतन्त्रपुरुषार्थ'इति। सेवा च चेतस्तत्प्रवणमेव, तनुजादिकं च तद्धेतुरिति तत्त्वम्॥ १॥

ननु अनधिकारिणि कथं भागवतार्थो देय, तदधिकारित्वं च दृढबीजभाववत्त्वमेव, स च कथं ज्ञातव्य इत्याकाङ्क्षायामाहुः सार्धेन बीजदार्ढ्येति।

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः॥ २॥**

उक्तबीजभावदार्ढ्यस्य प्रकारस्तु क्रिया तु। यस्मिन् बीजभावो दृढस्तत्क्रिया तु इयम्। यत् गृहे स्थित्वा अनुकूले गृहे स्थित्वा स्वधर्मतः आत्मधर्मोयमिति ज्ञात्वा अव्यावृत्तः सन् यथालाभसन्तुष्टः सन् कृष्णं सदानन्दं भजेत्। अनुदितमुख्यभक्तेन साधनदशापन्नेन गृहस्थाश्रमे स्थातव्यम्। तत्र स्थित्वा सन्देहमकृत्वा दृढविश्वासेन कृष्णं यथालब्धोपचारैर्भजेत् सेवेत, भज सेवायामित्यर्थकत्वात्। ननु गृहस्थाश्रमः सन्निपातरूपः कथं भगवद्भक्तिं साधयेदिति चेत्, मैवम्। 'भयं प्रमत्तस्य वनेष्वपि स्यात्' 'नैकात्मतां मे स्पृहयन्ति किञ्चित्' 'प्राप्य पुण्यकृताल्लोका'नित्यादिवाक्यैर्भगवदर्थिनो गृहाश्रमेपि सदर्थसिद्धेः। तस्मादप्राप्तवक्ष्यमाणलक्षणभक्तिना गृहस्थाश्रमे तदुपायः कर्तव्यः। तत्राप्ययं विशेषः। गृहाश्रमावस्थानं सिद्धगृहाश्रमस्यैव, न तु सिद्धप्रणष्टतत्कस्यासिद्धतत्कस्य वा। तदपि भजनं स्वधर्मत्वेन कर्तव्यं न तु धर्मत्वेन। तथा सति अन्यशेषत्वेनाभक्तित्वं स्यात्। अत एव गुरवः 'कर्माङ्गत्वेन क्रियमाणस्मरणादेः कर्माङ्गत्वमेव, अर्थात्कर्मत्वमेव, न भक्तित्व'मिति। अत्र गृहस्थानविधानेन स्वगृहाधिष्ठितस्वरूपभजनपरित्यागेनान्यत्र तत्करणे भक्तिर्न भवतीति सूचितं भवति। तथापि भजने फलमुख्यभङ्गमुपदिशन्ति अव्यावृत्त इति। सर्वव्यावृत्तिं परित्यज्य कृष्णः सेव्यः। आष्टयामिकः कालो भगवद्भक्त्यैव नेयः। सेवासमये सेवा कर्तव्या, अवशिष्टकाले श्रवणादिकं यथासम्भवं कर्तव्यम्। न तु व्यावृत्त्या कालक्षेपः क्षणमपि कर्तव्यः।

'निद्रया ह्रियते नक्त'मित्यर्थः । यद्वा । व्यावृत्तिः सर्ववस्तुविषयकः सोयमो मनोरथः, सर्वथा तद्रहितोऽव्यावृत्तो भवेत् । सर्वेच्छां परित्यज्य निश्चितचेतसा स्वधर्मत्वेन कृष्णः सेव्यः, न तु पूज्यः । पारिभाषिकश्चायं भेदो द्रष्टव्यः । यदि अव्यावृत्तो न भवेत्, तदा भगवत्सेवन केवलं स्वमाहात्म्येन यथासम्भव पापादि निवर्तयेत्, न तु उक्तं फल साधयेदित्यर्थः । नह्यन्यचेतसा कृतं कृतमित्यभिमन्तव्यम् । अतो भगवदर्थिना त्रिकालभगवत्सेवासमये तु अवश्यमव्यावृत्तेन भवितव्यम् । तत्र कामचारः । ननु सेवा कर्तव्या, न तु पूजा । सा च कथं कथं कर्तव्या । किं स्वशारीरधर्मतत्समानधर्मत्वेनोपचर्यया, आहोस्विद्यथेच्छमागमादिरीत्या वेति सन्देहे प्राहुः पूजयेति । अत्र तद्गुणसंविज्ञानबहुव्रीह्याश्रयणादनुक्तसिद्धोपादानत्वेपि पूजायाः पृथगुपादानमुक्तभेदतत्रम् । तेन सेवाप्राधान्येन श्रवणादिनवकं विधेयमित्युक्तम् । अयमर्थः । इतिकर्तव्यताकाङ्क्षायां तु तान्त्रिकोपचारा उपयुक्ताः, तथापि यत्प्रेमविरोधि तन्न कर्तव्यम्, यथा नित्यं शीतोदकस्नानादि । प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्याधिकत्वेन स्थापितत्वात् । यथासम्भव चतुःषष्टि उपचाराः प्रत्यहं कर्तव्याः । अपरञ्च । त एवोपचारा भक्तिमार्गे तदीयत्वेन कर्तव्याः, न तु स्वीयत्वेन, धर्मवत् । तथा सति न भक्तित्वं स्यात् । भगवन्मन्त्राद्युपयोगश्चाश्रयविशेषावधारणेन कर्तव्यत्वेन व्याख्यातः । यत्तु कश्चित् पञ्चरात्रादिभगवच्छास्त्रतत्त्वानभिज्ञः पूजामार्गीया उपचारास्तत्साधनानि मन्त्रादीनीति न तानि पुष्टिमार्गे उपयुज्यन्ते, कथञ्चिदपि तदुपयोगे भिन्नमार्गीयत्वं स्यात्, अन्यथा पूजापूजाभक्तिमार्गयोरविशेषापत्तेरित्याह । तन्मतिमान्द्यादेव । भावविशेषात्पारिभाषिकभेदादेव तत्सिद्धेः । इतिकर्तव्यताकाङ्क्षाया अनुपरमात् । अप्रामाणिकत्वापत्तेः । 'भगवच्छास्त्रं गीता भागवत पञ्चरात्र चे'ति सिद्धान्तग्रन्थविरोधात् । भेदस्य प्रत्यक्षसिद्धत्वाच्चेति दिक् । यद्वा । पूजया श्रवणादिभिर्वेति गृहस्थविधुरादिभेदेन पदार्थद्वयोपदेशः । 'अधिकारिभेदेनोपदेशा भिद्यन्त' इति सिद्धान्तात् ॥ २½ ॥

ननु यदि व्यावृत्तः साहृत्यादिहानितश्चेत्यतः प्राहुः व्यावृत्तोपीति ।

**व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा ।**
**ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥**
**बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।**

नीचाश्रयणादिनिन्दितवृत्तिस्तु नादरणीया । अतिरिक्तवृत्त्या जीवेत । सा च दुःप्राप्या यदि, तदा अवश्यं व्यावृत्तो भवति, तदा हरौ भगवदर्थं श्रवणादौ चित्तं निधाय यतेत् । सर्वथा याममात्रं कालो भगवति विनियोज्यः । श्रवणादिषु त्रिषु पाल्यमानमेकमादेदाग्रसानं दृष्टार्थम् । अतस्तेषु यतेत् । तथापि 'अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते । तेपि चातितरन्त्येव मृत्युं श्रुतिपरायणा' इति वाक्याद्वै भगवन्तं प्राप्स्यन्त्येव ।

अत एव तत्त्वदीपे भगवदाचार्यैरुक्तं 'सर्वथा वृत्तिहीनश्चेदेकं यामं हरौ नये'दिति। एवं समर्थासमर्थभेदेन गृहस्थविधुरादिभेदेन च दृढबीजभावत इतिकर्तव्यता व्याख्याता। इदानीमवसरप्राप्तं उक्तत्यागादिसाधनफलं निरूपयन्ति ततः प्रेमेति। ततस्त्यागादिसाधनानां यथाभावप्रकारानुष्ठानानन्तरं प्रेम भवति, निरुपाधिकः स्नेहो भवति, यथा स्वहेयोपादेयवस्तूनि भगवति तथा विनियुज्यन्ते। स्वात्मवद्भगवदुपचारकारको भावविशेषः। तत्र जाते सर्वत्रौदासीन्यं स्यात्। तदुत्तरं तादृग्भाववता तथैव सेवायां क्रियमाणायामासक्तिर्भवति। अत्र तादृगानुपूर्वीविशिष्टैवासक्तिर्विधीयते। न तु स्वरूपतो भेदः। अन्यथा 'आसक्तिः प्रेमपूर्वैव, प्रेमापि हरिणा कृत'मिति विरुध्येत। आसक्तौ हि सर्वेषु अरुचिर्भवति। यथा 'चित्तं सुखेन भवते'ति। ततो यदा पुनरासक्तिरेवावस्थातो व्यसनमपि भवेत्, तदा कृतार्थः स्यात्। परा काष्ठा भक्तेः सैव यद्व्यसनम्, यथा 'तन्मनस्कास्तदालापा' इत्यादि। अवस्थाविशेषे यावद्भावः कुतो न मध्ये कालादिभिरुपहन्यत इत्यत आहुः बीजमिति। भक्तिशास्त्रे बीजं बीजभावः एवोच्यते, तदपि दृढं यत्रापि नैव नश्यति, देशकालादिभिर्न तस्य नाशः। अनेकजन्मभिरपि न तस्य नाशः, किं पुनरन्यैरित्यर्थः॥ ३,३६॥

इदानीं प्रेमासक्तिकार्यं तदनुमापकमाहुः स्नेहादिति।

**स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः॥ ४॥**
**गृहस्थानां बाधकत्वमनात्मत्वं च भासते।**
**यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि॥ ५॥**

यदि भगवति स्नेहस्तदा पुत्रदारधनदेहादिषु योऽनुरागश्चित्तव्यासङ्गः स नश्यति। मनः सर्वांशेन भगवदुपयुक्तं नान्यत्र सज्जते इत्यर्थः। आसक्त्या पुनर्गृहे अरुचिः, कदा पुनरिदं गच्छेद्येनाहं विमुक्तः स्याम्। गृहे इति यावदात्मीयोपलक्षणम्। सर्वं न रोचत इत्यर्थः। प्रेमासक्त्योः फलद्वयं प्रत्येकमाहुः गृहस्थानामिति। अत्र निर्धारणे षष्ठी, तत्र हेतुबाधकत्वं गुणः। गृहस्थाः स्त्रीपुत्रादयस्तेषां बाधकत्वम्, एते सर्वथा लौकिका उत्पन्नभावनाशका इति भासते। यद्वा। सम्बन्धसामान्ये षष्ठी। तथा च गृहस्थसम्बन्धि यद्बाधकत्वं तत्तदैव भासते, नान्यथेत्यर्थः। गृहस्थपदं प्रवृत्तिमार्गनिष्ठमानोपलक्षकमजहल्लक्षणयेति च सम्यक्। एषा पुनरनात्मत्वं अनात्मीयत्वं वा आगमापायित्वमित्यर्थः। तद्भासते। अत्र यावत्प्रेमासक्त्योः सम्भव विरोधिधर्मवत्तत्तिरोधानं सम्भवति। उत्पन्ने [illegible] व्यसने साधनमसाधनं वा तुल्यमित्याहुः यदा स्याद्व्यसनमिति। भगवति हृदयाकाशे सर्वांशेन प्रादुर्भूते तदानन्दसम्पत्त्या व्यसनं जायते, अतः फलान्तराभावादिहैवानुभूतफलो विशिष्टेच्छावशतो देहादि विदधन् प्रतिक्षणं जायमानाद्विविधपरमानन्दसम्पर्काद्विगलितवेद्यान्तरविज्ञानस्त्रिगुणहीनः कृतकृत्यः कर्मनिपुटीविहीनः परमात्मन्येव रमते॥ ४,५॥

नन्वु जातव्यसनावशेन गृहे स्थेयं न वेत्याकाङ्क्षायामाहुः तादृशस्यापीति ।

**तादृशस्यापि सततं गेहस्थानं विनाशकम् ।**

एवं भक्तेः पराकाष्ठां विधुरगृहस्थसाधनाधिकारियोग्यतापुरःसरं निरूप्य विरक्तस्य गृहाश्रमेच्छारहितस्य ब्रह्मचारिणो भगवदर्थिनो यतेश्च साधनमाहुः त्यागं कृत्वेति ।

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥**

**लभते सुदृढां भक्तिं सर्वतोऽभ्यधिकां पराम् ।**

तुशब्दोऽधिकारिविशेषव्यावृत्त्यर्थः । य इति दुर्लभाधिकारः सूचितः । सर्वस्य लौकिकस्य त्यागं कायवाङ्मनसा कृत्वा यतेत् । यत्नश्च प्राप्तमन्त्रस्मरणकीर्तनाराधनभगवल्लिङ्गादिदर्शनादिपरायणतैव । सदृष्टप्रतिबन्धस्यादृष्टप्रतिबन्धस्य चैतन्मार्गपक्षपातिना भगवतैव निवृत्तत्वात्सुदृढां केनाप्यनपनोद्यां भक्तिं लभते । अत भगवदधीनत्वबोधायानुवादो, न तु विधानम् । तत्रापि यदि अन्यशेषत्वेन लोकान्तरापेक्षया मुक्त्याद्यपेक्षां कुर्यात्, तदा उक्तस्वरूपां तां न लभते इति अनवद्यतादृशतत्प्राप्तौ अधिकारिविशेषणमाहुः तदर्थेति । भगवद्रूपो योऽर्थस्तदर्थं एवैको मानसे यस्य स तथा । अत्र द्वितीयार्थपदेन तद्रूपस्यैव पुरुषार्थत्वेन ज्ञानं तद्धेतुर्नान्यथेति सूचितम् । सापि भक्तिर्न मनोधर्मरूपा, अपि तु आत्मधर्मरूपा, तां प्राप्नुयादित्याहुः परामिति ॥ ६,६½ ॥

एवं विशिष्याधिकारं व्याख्याय साधनं अदृष्टकालादेर्भगवन्मार्गे प्रतिबन्धकत्वाभावात् दृष्ट प्रतिबन्धकं प्रदर्श्य तन्निवृत्तिप्रकारपूर्वकं गुणाधानमाहुः त्यागे बाधकेति ।

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**

**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

गृहत्यागे कृते भक्तेर्बाधकानि भूयांसि संभवेयुः । दुःसंसर्गो भवति, तेन भक्तिविषयेऽसम्भावना विपरीतभावना वा उत्पद्यते, द्वय वा । तेन भक्तिमार्गीयप्रकारस्याचरणाभावाद्भक्तिर्नोत्पद्यते । दुःसंसर्गो वा एकाकिनो वनितादिसङ्गः, तेन विषयावेशे भक्तेरनुद्भवः । उक्तं च भगवता 'सङ्गात्सञ्जायते कामः' इत्यादि । अथवा, दुष्टानामवैष्णवानां संसर्गाच्चेत् सर्वथा भक्तिनाशो भवेत् । यथैव दुःसंसर्गः सर्वथा बाधकः, तथा अवैष्णवानामनीदृशानामन्नतः अन्नभक्षणतः, अवैष्णवानां जलपानेन भक्तिर्नोत्पद्यते । अत एव धृतवराहरूपेण भगवता पृथ्वीं प्रत्युक्तं 'वैष्णवो यस्तु मोहेन पचेदन्नमनुत्तमम् । अवैष्णवाग्निना देवि तत्र भुङ्क्ते यथा विषम्' । अन्यत्र च । 'यस्तु यद्वैष्णव किञ्चिदपि भक्षयेदवैष्णवः । न तन्मयुपयुज्येत पुंसि स्त्रीव रजस्वला' । तस्मात् दृष्टभेदेन प्रतिबन्ध व्याख्याय तन्निवृत्त्युपायमाहुः अतः स्थेयमिति । यत उक्तौ भक्तिप्रतिबन्धौ

भवेत्, अतो हरिस्थाने पुरुषोत्तमस्थाने व्रजे वा श्रीरङ्गधामपुरुषोत्तमक्षेत्रद्वारावतीव-दर्याश्रमवैङ्कटादिषु वा स्थेयम् । तत्रापि विविधाना समागमनात्साधनदशापन्नत्वाच्च स्वस्य न सर्वैः सह स्थातव्यम्, उक्तदोषापत्तेः, किन्तु तदीयैर्भगवदीयैर्न तु कर्मिष्ठादिभिर्वा । तत्रापि दीक्षादिक परिगृह्य केवल व्याख्यातारः प्रतिष्ठाप्रेक्षका लोकसङ्ग्रहार्थम्, तैर्न स्थातव्यम्, किन्तु तत्परैः कृष्णपरायणैः सेवाश्रवणकीर्तनादिना । अत्र सर्वात्मना भगवति चित्तव्यासङ्गो मुख्य साध्यम्, तथथा सिध्येत्, तथा विधेयम् । तादृशस्थलेपि तत्रैव न स्थेयम्, किन्तु दूरे दूरभिक्षे दूरसदृशे । अथाविप्रकर्षे वा । विवक्षित तात्पर्यमाहुः यथा चित्तं न दुष्यतीति तथा विधेयम् । चित्ते दोषो बाहिर्मुख्यमभगवत्परत्वमिति यावत्, तथथा न स्यात्, तथा यतनीयम् ॥ ७,८ ॥

ननु भगवत्सेवाया अभावात्तस्याधमत्वमिति चेत्तत्राहुः सेवायां वेति ।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**
**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

न वय तनुजावित्तजाधन्यतमसेवायामेव फलत्व ब्रूमो येन यतिप्रथमानामधमत्व स्यात्, किन्तु भगवत्प्राप्ति तत्साधन च भक्तिर्निरुपाधिकप्रेमात्मिकैवेति तस्यामेव फलनान्तरीयकत्वात् । किमायातमेतावता साधनकलापमनुष्ठातॄणामुत्तमादिविभेदे उक्तश्रद्धासाधनप्रवृत्तितारतम्यातिरिक्त हेतुत्वेन । अतः सेवाया द्विविधायामपि गृहस्थस्य, कथाया साम्प्रदायिकगुरुकृपाकटाक्षपूर्वकगृहीतसाम्प्रदायिकगतिना कृताया यतेर्ब्रह्मचारिणो वा यस्य कस्यचिद्भगवदनुगृहीतस्यासक्तिर्दृढा, केनापि अनपनोद्या दुर्विषयादादिनाप्यनपनोद्या भवेत् । ननु इदानीन्तनाना दृश्यते सेवायासक्ति, कथ न भक्तिरुत्पद्यते इत्याशङ्कायामाहुः यावज्जीवमिति । भगवन्मार्गप्रवेशमारभ्य यावद्देहावसानमावर्तमानानामेव श्रवणादीना दृढार्थत्वम्, न तु सकृत्कृतानामिति भावः । य एतादृशस्तस्य क्वापि देशे काले नाशो नाम स्वरूपप्रच्युतिर्न स्यात्, यत्र क्वापि निन्दिते देशादौ तिष्ठेत्सर्वथा मुक्तो भवेत्, किं पुनरुक्तमेनुकूले उक्तविधे देशादावित्याचार्याः स्वय वदन्ति मम मतिर्मत सिद्धान्तः । नात्र सन्देहः कर्तव्य इति तत्त्वम् । ननु विप्रकर्षे स्थेयमित्युक्तम्, तत्र च दुष्टैरन्यैर्वा जन्तुभिः सर्वथा बाधः सम्भाव्यते, तत्कथ विप्रकर्षे एकान्ते स्थेयमित्यत्राहुः बाधसम्भावनायां त्विति । तेन बाधसम्भावन यत्र न स्यात्, तादृश स्थल विमृश्य स्थेयमिति सूचितम् । वस्तुतस्तु अमायया भगवद्धर्मैकान्ते वसतः केनापि बाधो न सम्भवतीत्याहुः हरिस्तु सर्वतो रक्षां करिष्यति न संशयः । एतेन 'चीराणि किं पथि न सन्ति' 'अनन्याश्चिन्तयन्तो मां' 'भक्तायातिप्रपन्नाय'

नतु जातव्यसनावस्थेन गृहे स्थेयं न वेत्याकाङ्क्षायामाहुः **तादृशस्यापीति ।**

**तादृशस्यापि सततं गेहस्थानं विनाशकम् ।**

एवं भक्तेः पराकाष्ठां विधुरगृहस्थसाधनाधिकारियोग्यतापुरःसरं निरूप्य विरक्तस्य गृहाश्रमेच्छारहितस्य ब्रह्मचारिणो भगवदर्थिनो यतेश्च साधनमाहुः **त्यागं कृत्वेति ।**

**त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥**

**लभते सुदृढां भक्तिं सर्वतोऽभ्यधिकां पराम् ।**

तुशब्दोऽधिकारिविशेषव्यावृत्त्यर्थः । य इति दुर्लभाधिकारः सूचितः । सर्वस्य लौकिकस्य त्यागं कायवाङ्मनसा कृत्वा यतेत् । यत्नश्च श्रासमत्रस्मरणकीर्तनाराधनभगवल्लिङ्गादिदर्शनादिपरायणतैव । सदृष्टप्रतिबन्धस्यादृष्टप्रतिबन्धस्य चैतन्मार्गपक्षपातिना भगवतैव निवृत्तत्वात्सुदृढां केनाप्यनपनोद्यां भक्तिं लभते । अत भगवदधीनत्वबोधायानुवादो, न तु विधानम् । तत्रापि यदि अन्यशेषत्वेन लोकान्तरापेक्षया मुक्त्याद्यपेक्षां कुर्यात्, तदा उक्तस्वरूपां तां न लभते इति अनवद्यतादृशतयासौ अधिकारिविशेषणमाहुः **तदर्थेति ।** भगवद्रूपो योऽर्थस्तदर्थ एवैको मानसे यस्य स तथा । अत्र द्वितीयार्थपदेन तद्रूपस्यैव पुरुषार्थत्वेन ज्ञानं तद्धेतुर्नान्यथेति सूचितम् । सापि भक्तिर्न मनोधर्मरूपा, अपि तु आत्मधर्मरूपा, तां प्राप्नुयादित्याहुः **परामिति** ॥ ६,६½ ॥

एवं विशिष्याधिकारं व्याख्याय साधनं अदृष्टकालादेर्भगवन्मार्गे प्रतिबन्धकत्वाभावात् दृष्टं प्रतिबन्धक प्रदर्श्य तन्निवृत्तिप्रकारपूर्वकं गुणाधानमाहुः **त्यागे बाधकेति ।**

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**

**अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

गृहत्यागे कृते भक्तेर्बाधकानि भूयांसि संभवेयुः । दुःसंसर्गो भवति, तेन भक्तिविषयेऽसम्भावना विपरीतभावना वा उत्पद्यते, द्वयं वा । तेन भक्तिमार्गीयप्रकारकाधरणाभावाद्भक्तिर्नोत्पद्यते । दुःसंसर्गो वा एकाकिनो वनितादिसङ्गः, तेन विषयावेशे भक्तेरनुद्भवः । उक्तं च भगवता 'सङ्गात्सञ्जायते काम' इत्यादि । अथवा, दुष्टानामवैष्णवानां संसर्गात्तैः सर्वथा भक्तिनाशो भवेत् । यथैव दुःसंसर्गः सर्वथा बाधकः, तथा अवैष्णवानामनीदृशानामन्नतः अन्नभक्षणतः, अवैष्णवानां जलपानेन भक्तिर्नोत्पद्यते । अत एव धृतनरादरूपेण भगवता पृथ्वीं प्रत्युक्तं 'वैष्णवो यस्तु मोहेन पचेदन्नमनुत्तमम् । अवैष्णवामिना देवि तन्न भुङ्क्ते यथा विषम्' । अन्यत्र च । 'यस्तु यदैष्णवं किञ्चिदपि पश्येदवैष्णवः । न तन्मप्युपयुञ्जीत पुंसि स्त्रीव रजस्वला' । तस्माद् दृष्टभेदेन प्रतिबन्ध व्याख्याय तन्निवृत्त्युपायमाहुः **अतः स्थेयमिति ।** यत उक्तरीत्या भक्तिप्रतिबन्धो

भवेत्, अतो हरिस्थाने पुरुषोत्तमस्थाने व्रजे वा श्रीरङ्गधामपुरुषोत्तमक्षेत्रद्वारावतीप्र-
दर्याश्रमवैङ्कटादिषु वा स्थेयम् । तत्रापि विविधानां समागमनात्साधनदशापन्नत्वाच्च
स्वस्य न सर्वैः सह स्थातव्यम्, उक्तदोषापत्तेः, किन्तु तदीयैर्भगवदीयैर्न तु कर्मिष्ठादि-
भिर्वा । तत्रापि दीक्षादिकं परिगृह्य केवलं व्याख्यातारः प्रतिष्ठाप्रेक्षका लोकसङ्ग्रहार्थम्,
तैर्न स्थातव्यम्, किन्तु तत्परैः कृष्णपरायणैः सेवाश्रवणकीर्तनादिना । अत्र सर्वात्मना
भगवति चित्तव्यासङ्गो मुख्यं साध्यम्, तद्यथा सिध्येत्, तथा विधेयम् । तादृशस्थलेपि
तत्रैव न स्थेयम्, किन्तु दूरे दूरभिन्ने दूरसदृशे । यथाविप्रकर्षे वा । विवक्षितं तात्पर्यमाहुः
**यथा चित्तं न दुष्यतीति** तथा विधेयम् । चित्ते दोषो बाहिर्मुख्यमभगवत्परत्वमिति
यावत्, तद्यथा न स्यात्, तथा यतनीयम् ॥ ७,८ ॥

ननु भगवत्सेवाया अभावात्तस्याधमत्वमिति चेत्तत्राहुः **सेवायां वेति** ।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**
**बाधसंभावनायां तु नैकान्ते वास इष्यते ।**
**हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥**

न वयं तनुजावित्तजाद्यन्यतमसेवायामेव फलत्वं ब्रूमो येन यतिप्रथमानामधमत्वं
स्यात्, किन्तु भगवत्प्राप्तिं तत्साधनं च भक्तिर्निरुपाधिकप्रेमात्मिकैवेति तस्यामेव
फलनान्तरीयकत्वात् । किमायातमेतावता साधनकलापमनुष्ठातॄणामुत्तमादिविभेदे उक्त-
श्रद्धासाधनप्रवृत्तितारतम्यातिरिक्तं हेतुत्वेन । अतः सेवायां द्विविधायामपि गृहस्थस्य,
कथायां साम्प्रदायिकगुरुकृपाकटाक्षपूर्वकगृहीतसाम्प्रदायिकगतिना कृतायां यतेर्ब्रह्मचारिणो
वा यस्य कस्यचिद्भगवदनुगृहीतस्यासक्तिर्दृढा, केनापि अनपनोद्या हर्षविषादादिनाप्यनप-
नोद्या भवेत् । ननु इदानीन्तनानां दृश्यते सेवायासक्तिः, कथं न भक्तिरुत्पद्यते इत्या-
शङ्कायामाहुः **यावज्जीवमिति** । भगवन्मार्गप्रवेशमारभ्य यावद्देहावसानमावर्तमानानामेव
श्रवणादीनां दृढार्थत्वम्, न तु सकृत्कृतानामिति भावः । य एतादृशस्तस्य क्वापि देशे
काले नाशो नाम स्वरूपप्रच्युतिर्न स्यात्, यत्र क्वापि निन्दिते देशादौ तिष्ठेत्सर्वथा
मुक्तो भवेत्, किं पुनरुक्तमेतुकूले उक्तविधे देशादावित्याचार्याः स्वयं वदन्ति **मम
मतिर्मतं** सिद्धान्तः । नात्र सन्देहः कर्तव्य इति तत्त्वम् । ननु विप्रकर्षे स्थेयमित्युक्तम्,
तत्र च दुष्टैरन्यैर्वा जन्तुभिः सर्वथा बाधः सम्भाव्यते, तत्कथं विप्रकर्षे एकान्ते
स्थेयमित्यत्राहुः **बाधसम्भावनायां त्विति** । तेन बाधसम्भावनं यत्र [illegible] स्यात्, तादृशं
स्थलं विमृश्य स्थेयमिति सूचितम् । वस्तुतस्तु अमायया भगवदर्थमेकान्ते वसतः
केनापि बाधो न सम्भवतीत्याहुः **हरिस्तु सर्वतो रक्षां करिष्यति न संशयः** ।
एतेन 'चीराणि किं पथि न सन्ति' 'अनन्याश्चिन्तयन्तो मां', 'भक्तापानिप्रपन्नाय'

'तथा न ते माधव तावका' इत्यादिप्रमाणपुरःसरं सर्वथा निर्भयतया निखिल श्रेयम्, विश्वस्य भगवदर्थिनेति तत्त्वमुपदिष्टमिति ज्ञेयम् ॥ ९,१० ॥

एवं ग्रन्थमुपदिश्योपसंहरन्ति इत्येवं भगवच्छास्त्रमिति ।

इत्येवं भगवच्छास्त्रं गूढं तत्त्वं निरूपितम् ।
य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥

इति उक्त एवमनेन प्रकारेण भगवच्छास्त्रे यद्गूढं तत्त्वं तन्निरूपितम् । भगवच्छास्त्रं गीता भागवतं पञ्चरात्रं चेति त्रिकम् । तत्सिद्धान्त एतावानेवेत्यर्थः । गूढतत्त्वमिति विशेषणेप्ययमेवार्थः । उपसंहृत्यैतत्पाठकर्तुरर्थानुसन्धानपूर्वकं पठितुरपि फलमाहुः य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः । ग्रन्थानुसन्धानात्तत्प्रवृत्यादिक्रमेणोक्तं फलं सर्वथा सेत्स्यतीति भावः ॥ ११ ॥

जिज्ञासितव्यमिदमुत्तमभक्तिचिह्नैः सिद्धान्तरीतिमनुसृत्य मयातियत्नात् ।
श्रुतं निबन्धनमसौ विबुधेषु याव्या दूष्यं वचो यदि तदा प्रथमं विभाव्यम् ॥ १ ॥
आरब्धमर्थधिषणैरनवद्यमेव व्याख्यासु कौशलकलानिपुणत्वमेव ।
तत्वेचिरं भवति तत्कृतकृत्यता स्याद्गोपालपादकमलद्वयसंनिविष्टम् ॥ २ ॥
संवत्सरे सप्तद्वेतिरम्ये वर्षे शरश्रीपतिहस्तसंख्ये ।
दिने तथा श्रावणकृष्णपञ्चद्वयीकृतेसौ विवृतः प्रबन्धः ॥ ३ ॥
काहं मन्दमतिः कायं प्रबन्धस्तत्त्वसङ्ग्रहः ।
शिशूनां भासते रम्यं तथापि कलभाषणम् ॥ ४ ॥

इति श्रीवल्लभात्मजश्रीबालकृष्णकृतभक्तिवर्धिनीटीका समाप्ता ।

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीगिरिधरकृतविवृतिसमेता ।

श्रीविट्ठलपदाब्जत्वा सर्वाभीष्टप्रदान् स्वतः ।
शब्दैः संक्षेपतोर्थस्तु व्याख्यास्ये भक्तिवर्धिनीम् ॥ १ ॥

अथ श्रीवल्लभाचार्यचरणाः परमकृपालवो भगवद्भक्तेः कल्पतरुत्वमाधरत्वात् तत्त्वमेव वदन्तः स्वीयानां स्वमार्गीयभक्तिकल्पतरोर्बीजावापमारभ्य फलपरिपाकपर्यन्तं प्रवृत्त्युपायं प्रतिजानते यथेति ।

**यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।**
**बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥**

येन प्रकारेण भक्तिः प्रकर्षेण वृद्धिं प्राप्ता स्यात्, तत्प्रकारकोपायो निरूप्यत इत्यर्थः । अत्रोपायत्वाविशेषात् जात्यभिप्रायेणैकवचनम् । तेन क्रमेणोत्तरोत्तरं दृढतरतमाख्यत्रिप्रकारका उपायाः सन्तीति तानाहुः । तत्र प्रथमं बीजस्य दृढत्वे सत्येवाग्रे तरोरप्यविनाशित्वं भवति, नो चेद्वातादिवशान्महानपि तरुर्नश्यत्येव । अतस्तमुपायमाहुः बीजेति । बीजभावः श्रीमदाचार्यकृतभगवन्निवेदनानन्तरं तन्मार्गानुसारेण भगवत्स्वरूपनिष्ठारूपः, स यदा दृढो भवति, तदा भक्तिः प्रवृद्धा स्यादिति प्रथमः । तदनन्तरं त्यागात् गृहादिसर्ववस्तुनस्त्यागे कृते सा दृढतरा स्यादिति द्वितीयः । ततः श्रवणकीर्तनात् भगवद्गुणरूपलीलादीनां स्वदेहादिसर्वविस्मरणपूर्वकं तद्रसपरवशतया श्रवणकीर्तने सिद्धे सा दृढतमा स्यादिति तृतीयः ॥ १ ॥

ननु दृढबीजभावः को वा तस्य दार्ढ्ये प्रकारश्च को वेत्याशंक्य पूर्वं सोद्देशं बीजदार्ढ्यप्रकारं ततो बीजभावस्वरूपं चाहुः बीजदार्ढ्यप्रकारस्त्विति ।

**बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।**
**अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥**

त्वन्तस्यादेतत्प्रकारप्रवृद्धभावस्य विघातकोपि वक्ष्यमाणपदार्थोस्तीत्यस्याप्रौढत्वयुक्तं भवति । तथाचायमप्येकः प्रकारो भवतीति तं पूर्वमुद्दिश्याग्रे प्रकारमाहुः गृहेति । स्वगृह एव स्थितः सन् स्वधर्मतः जीवस्य ये वैधा वर्णाश्रमधर्मास्तेभ्योऽव्यावृत्तस्तेषु व्यावृत्तिरहितः सन् विशेषेणावृत्तिः सततं तद्धर्मेष्वेवासक्तिपूर्वकं वाक्कायमनसां परिभ्रमणं तद्रहितः पुष्करपत्रवत् तत्र स्थितोऽपि तान् लोकसंग्रहार्थं यथाकथञ्चित् कुर्वन्नपि तेष्वसक्तः सन, पूजया तनुवित्तजया सेवया श्रवणादिभिरष्टप्रकारैश्च कृत्वा कृष्णं सदानन्दं पुरुषोत्तमं भजेत् सेवेत । एतेन लौकिकधर्मव्यावृत्तिं विहाय पूजाश्रवणादिभगवद्धर्मेष्वेव व्यावृत्तः स्यादित्यर्थः । अत एव श्रीभागवते 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावते' त्यर्थेन मर्यादामार्गीयस्य कर्माचरणमर्यादामुक्त्वा, अग्रे व्यवस्थया भक्तिमार्गीयस्यापि तामाहुः 'मत्कथाश्रवणादौ वा यावच्छ्रद्धा न जायत' इति । अतो भगवद्धर्मेषु व्यावृत्तस्य लौकिकधर्माव्यावृत्तिर्युक्तैव । अथवा स्वधर्मतः अव्यावृत्तः अनिवृत्तः सन् । पूर्वदशायां चित्तशोधकत्वेन तेषामुपयोगात् । तदुक्तमेकादशे 'अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छये'ति ॥ २ ॥

किञ्च, न केवलं भगवद्धर्मस्थितिमात्रेणाहं कृतार्थोस्मि, नातः परमधिकं किञ्चिदस्तीति मन्तव्यम्, किन्त्वग्रे धर्मिसम्बन्ध्यपि किञ्चित् कर्तव्यमेवेत्याहुः व्यावृत्तोपीति ।

व्यावृत्तोपि हरौ चित्तं श्रवणादौ यसेत्सदा ।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ ३ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।

श्रवणादौ व्यावृत्तोपि हरौ सर्वदुःखहर्तरि चित्तं यसेत् प्रयतेत । तथा कुर्वन्नपि प्रेमसेवामपि कुर्यादित्यर्थः । यद्वा । ननु 'यावज्जीवमग्निहोत्रं जुहुयाद्'इति न्यायेन देहाध्यासवैधा धर्माः सहसा कथं त्यक्तुं शक्यन्त इत्याशङ्क्याहुः व्यावृत्तोपीति । स्वधर्मेषु व्यावृत्तोपि यथाविधि यावच्छक्यं तान् कुर्वन्नपि श्रवणादिषु भगवद्धर्मेषु हरौ भगवति धर्मिणि च चित्तं यसेत् प्रयतेत । कायिकप्रवृत्त्यां तत्र व्यापृतायामपि वाचिकमानसौ ते भगवत्येव प्रयोक्तव्ये सर्वथेत्यर्थः । तावतापि कार्यं सिध्यतीत्यर्थः । एवं बीजदार्ढ्यप्रकारमुक्त्वा क्रमेण वर्धमानं पूर्णं च बीजभावमाहुः ततः प्रेम इति । ततस्तदनन्तरम् । अथवा । एवं क्रियमाणेभ्यः श्रवणादिभ्यः पूर्वं भगवद्विषयकं प्रेम उत्पद्यते, ततः क्रमेण भगवत्यासक्तिर्भवति । ततोग्रे व्यसनं भवति । व्यसने जाते तदेव दृढबीजभावपदवाच्यमित्याहुः बीजमिति । भक्तिशास्त्रे तदेव दृढं बीजमित्युच्यते । यद्बीजमुक्तप्रकारेण स्थितौ दृढं सत् कदापि न नश्यति ॥ ३½ ॥

ननु प्रेमाद्यवस्थास्तु मानस्यो भवन्ति, ताः कथं पृथक् पृथक् ज्ञायन्त इत्याशङ्क्य तासां व्यावर्तकधर्मानाहुः स्नेहादिति ।

स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥
गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।
यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥

भगवति स्नेहे उत्पन्ने तत्पूर्वं स्थितस्नेतरविषयकानुरागस्य विशेषेण नाशः स्यात् । ततो यदा भगवत्यासक्तिर्जायते, तदा गृहे गृहपदार्थेषु चारुचिर्भवति । तत्र स्थित-बन्धुकलत्रादिषु किंचिद्विशेषमाहुः गृहस्थानामिति । गृहस्थिता ये बन्धुकलत्राद्यस्तेषां स्वस्मिन्स्थितभगवद्भावे बाधकत्वमत एवानात्मत्वं च स्वस्य भासते । अयमाशयः । गृहे ये बन्धुकलत्राद्यस्ते सर्वे नैकजातीयभावाः, किन्तु विजातीयभावाश्चान्योन्यम् । तत्र केचन लौकिका दैहिकधर्मपराः, केचन वैष्णवा अपि नानाविधभगवद्धर्मपराश्च भवन्ति । तथा च भगवदासक्तिपूर्णानां मनसि तेषु सम्यक्त्वेनोपादेयत्वं न स्फुरति । एकेषु स्वभावविघातकत्वेनैतत्सङ्गः सर्वात्मना न कर्तव्य एवेति भासते । अपरेषु वैष्णवत्वेपि विजातीयभावत्वेन नैते मद्भावस्य पोषकाः, किन्तु विक्षेपका इति नात्मीया भवन्त्यतः समुपेक्ष्या एवेति भासत इति । अग्रिमावस्थामाहुः यदेति । यदैव कृष्णे सदानन्दे व्यसनं तस्योत्पद्यते, तदैव कृतार्थः भावितः सम्यगर्थः भक्तिपदार्थो येन तादृशः स्यात् । व्यसनस्वरूपं तु 'क्षणं युगशतमिव यासां येन विनाऽभवत्'

इत्यादि । व्यसनपदेन यथा द्यूतकामादिव्यसनिनः ऐहिकपारलौकिकेभ्यो लज्जाभयादिकं सहसा परित्यज्य तत्तत्परतयैवेतरानुसन्धानरहिताः सन्तस्तिष्ठन्ति, तथैतेपि सर्वं परित्यज्य भगवदेकपराः सन्तस्तिष्ठन्तीति ज्ञाप्यते । परमेतावान् विशेषः, तत्र वैषयिकत्वादसद्रूपं सर्वम्, अत्र तद्रहितत्वात्परमकाष्ठापन्नं सर्वमिति । अन्यथा 'विषयाक्रान्तदेहानां नावेशः सर्वदा हरे'रित्याचार्या न वदेयुः । तथा चैवं व्यसनावस्थायां जातायामेव बीजभावस्य पूर्णं दृढत्वं स्यादित्यर्थः । एवं पुष्टिभक्तिकल्पतरोः सर्वथाऽविनाशिदृढतमबीजभावो निरूपितः । ततोऽग्रे शाखापत्रादिस्थानीयभावानां वृद्धिरनुक्तसिद्धैवेति हृदयम् ॥ ४,५ ॥

नन्वतिदृढत्वाद्बीजभावस्य नाशो मास्तु, परन्तु तदुत्पन्नकोमलशाखापल्लवादीनां पक्षिमृगादिकृतकृन्तनवदिहापि बीजोत्पन्नावान्तरभावनाशस्तु सम्भाव्यत एवेत्याशङ्क्य पूर्वं नाशकपदार्थमुद्दिशन्ति तादृशस्यापीति ।

> तादृशस्यापि सततं गृहस्थानं विनाशनम् ।
> त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
> लभते सुदृढां भक्तिं सर्वतोऽप्यधिकां पराम् ।

सञ्जातव्यसनस्यापि सततं गृहस्थानं गृहे स्थितिर्विनाशनं बीजोत्पन्नकोमलभावानां विघातकमित्यर्थः । एवमुद्दिश्यैतत्प्रतीकारमपि वदन्तः पूर्वोक्तभक्तिप्रवर्धकोपायेषु द्वितीयमुपायमाहुः त्यागमिति । गृहादिसकलवस्तुनस्त्यागं कृत्वा यतेत्, व्यसनदार्ढ्यप्रयत्नं कुर्यादित्यर्थः । अयं त्यागस्तु संन्यासनिर्णयोक्तभक्तिमार्गीयतुरीयाश्रमग्रहणरूपः । तत्र त्यागेपि प्रकारविशेषेण स्थितिं वदन्तस्तृतीयं भक्तिप्रवृद्ध्युपायमाहुः यस्तु तदर्थार्थैकमानस इति । तु पुनः यः तदर्थार्थैकमानसः स भगवानेवार्थः सकलपदार्थरूपो येषां ते तदर्थाः स्वतन्त्रभक्तास्तेषामप्यर्थः मुख्यः पदार्थस्तादृशभक्तैः सह मिथो गुणगानरूपान्तररमणात्मिका केवला वा विप्रयोगावस्था । तत्रैवैकं केवलं मुख्यं च मानसं यस्य तादृशः सन् यतेत्, तद्भावानुभवं कुर्यात्, सः सुदृढां कालादिभिरपि चालयितुमप्यशक्यां सर्वतः मुक्त्यादिभ्योपि अधिकां परां परमकाष्ठापन्नां स्वतन्त्रफलरूपां भक्तिं लभते प्राप्नोति । एतेन पूर्वोक्तैस्त्रिभिर्भक्तिप्रवर्धकोपायैः क्रमेणोत्तरोत्तरमधिका सुदृढा, सर्वतोऽधिका, परा चेति त्रिविधापि भक्तिप्रवृद्धिरुक्ता । ननु 'ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधका' इत्युक्तेः कथं गुणगानस्य परमफलत्वमुच्यत इति चेत् । मैवम् । ते तु मार्यादिका एव बाधकाः, नैतन्मार्गीयाः । अन्यथा तत्रैवाग्रे 'गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति ही' त्याचार्या न वदेयुः । नन्वधिकं तत्रानुप्रविष्टं न तु तद्धानि'रिति न्यायेन विरहे जीवनाशा तदर्थं यत्नश्चोभौ सुतरां न युक्ततराविति चेत् । न । जीवनमृते विरहजदुःखस्यानुभवासम्भवात् । अन्यथा पातपातादिनापि

जीवनमपहातुं शक्यत एवेति तथैवोक्तं स्यात् । अतो नेह तथा, यतो विरहस्य सम्यगनुभवार्थमेव परित्यागस्य बोधनमस्तीति दिक् । एवं फलपर्यन्तं भक्तिः सोपाया निरूपिता ॥ ६३ ॥

ननु सञ्जातव्यसनस्यापि यतस्त्यागमृते न फलसिद्धिस्ततोऽसंजातप्रेमाद्यवस्थ एव येनकेनापि हेतुना यथाकथञ्चित्संजातस्य हार्दविराग एव कथं न सर्वत्यागं कुर्याद्यतस्तदनन्तरं फलाऽवश्यंभावो भवतैवोच्यत इत्याशङ्क्याहुः त्याग इति ।

**त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥**

साधनदशायामेव त्यागे कृते तत्र भूयांसो बाधकाः सम्भवन्तीत्यर्थः । ननु ते किंमूलमादाय सम्भवन्तीत्याशङ्कायामाहुः दुःसंसर्गादिति । दुष्टैः सह संसर्गेण दुष्टानां दुष्टे वा अन्ने भुक्ते बाधका उत्पद्यन्ते । अयमर्थः । सर्वं त्यक्त्वा यत्र कुत्रचित्स्थितेनापि यतिना नैकाकिना नापि क्षुत्पिपासादितेन कथञ्चित्स्थातुं शक्यते, अपक्वदशापन्नत्वात्, तथा च तदर्थं दुष्टैः सङ्गे दुष्टान्नभोजने च कृते सर्वं कृतमप्यकृतप्रायं भवतीति तथा । तदुक्तं श्रीमदाचार्यैः संन्यासनिर्णये 'गृहादेर्बाधकत्वेने'त्यारभ्य 'अतोऽत्र साधने भक्तौ नैव त्यागः सुखावह' इत्यन्तेन । अतोऽस्मिन् भक्तिमार्गे साधनदशायां परित्यागो न कर्तव्य इत्युक्तं भवति ॥ ७ ॥

नन्वेवं च सति साधनदशापन्नैः स्वभार्यादिकृतसेवादिप्रातिकूल्यसम्भवे कुत्र कथं च स्थेयमित्याकाङ्क्षायामाहुः अत इति ।

**अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।**
**अदूरविप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥**

यतः साधनदशायां त्यागे कृते बाधकभूयस्त्वमत एव हरेर्भगवतः स्थाने निबन्धोक्तेषु पुरुषोत्तमादिषु व्रजादिषु वा स्थेयं स्थितिः कर्तव्येत्यर्थः । अत एव निबन्धेपि स्वभार्यादिप्रातिकूल्येन गृहे स्थातुमशक्तस्य गृहादित्यागप्रकारमुक्तवन्तः श्रीमदाचार्याः, 'भार्यादिरनुकूलश्चेत्कारयेद्भगवत्क्रियाम् । उदासीने स्वयं कुर्यात्प्रतिकूले गृहं त्यजे'दिति । अयं त्यागस्तु न तुरीयाश्रमग्रहणरूपः, किन्तु गृहस्थेषु कलत्रादिषु मध्ये एकः द्वौ वहवो वा ये एव प्रातिकूल्यं सेवादौ कुर्वन्ति, तानेव यावच्छक्यं त्यजेदित्येवंबोधकः । अत एव 'गृहं त्यजे'दित्यस्य विवरणं 'गृहं भार्यादिक'मित्युक्तम् । दैवात्पुनः सर्वप्रातिकूल्ये तु सेवापनिर्वाहात् स्वस्य स्थातुमशक्तेर्वा गृहमेव परित्यज्य सेवादिसामग्रीमपि स्वमार्ग एव नीत्वा पूर्वोक्तभगवत्स्थानेषु यत्र कुत्रापि स्थितः सन् तत्परतया सेवादिकं कुर्यादित्याशयः । एवं च सति पूर्वोक्तत्यागनिषेधस्तु तुरीयाश्रमीणत्यागपर एव । यतस्तत्र सेवाद्यलम्भसम्भवेनापक्वत्वेन च दुःसङ्गदुष्टान्नभोजनादिकं भवत्येव । तत्तु सर्वथा बाधकम् । [illegible] बाधकत्वमुक्तम् । 'सङ्गं न कुर्यादसतां शिश्नोदरतृणां

क्वचित् । तस्मात्तुगस्तमसन्ने पतत्यन्धतानुगान्धव'दित्यादिभिः । दुष्टान्नस्य तु बाधकत्वमुक्तं पद्मपुराणे । 'अवैष्णवानामन्नं च पतितानां तथैव च । अनर्पितं च यद्विष्णोः श्वमांससदृशं विदु'रित्यादिभिः । फलदशापन्नानां तु 'ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेद'मित्यादिना स्वरूपनिरूपणात्स्वात्मादिसर्वानुसन्धानापगमादेव तत्तद्विषयाभावानां दुर्वारगर्वग्रहत्वमिति दिक् । एवमेषां वासस्थलमुक्त्वा स्थितौ प्रकारमाहुः तदीयैरिति । भगवदेकपरा ये भगवदीयास्तैः सह मिलित्वा तन्निकट एव अर्थात् तैः सहैव वसन् सेवाश्रवणकीर्तनादिपरतया स्थेयम् । एतेन दुःसङ्गदुष्टान्नप्रभवा दोषा निवारिताः । न'न्वतिपरिचयादवज्ञे'ति न्यायेन कथं सततं निकट एव स्थातुं शक्यत इत्याशङ्क्य प्रकारान्तरमप्याहुः अदूरेति । वा अथवा अदूरो दूरत्वाभावः तद्वान् यो विप्रकर्षो दूरदेशस्तत्र स्थेयमित्यर्थः । अर्थात् नातिदूरे नातिनिकटे परं ततः किञ्चिद्देशाव्यवधानेन स्थेयम् । मिलनादिकं तु तैः सह नित्यं सर्वथा कर्तव्यमेव । अन्यथा तदैवासुरभावप्रवेशः स्यात् । अदूरमिति पाठेऽदूरमिति क्रियाविशेषणम् । अग्रे पूर्ववत् । नन्वेवं चेत् किमिति व्यवधानेन स्थितिर्बोध्यत इत्याशङ्कायामाहुः यथेति । यथा यत्प्रकारकस्थितौ स्वस्यान्येषां च चित्तं कदापि न दुष्टं भवति तथा स्थेयमित्यर्थः । अत्रायं समुदायार्थः । भार्यादीनां सेवादावानुकूल्ये सति तैः सहैव सेवां कुर्वन् तैश्च कारयन्स्वगृहे स्थेयम् । उदासीनेषु तेषु सत्सु गृह एव स्वयमेव सेवादिकं कुर्यात् । तदभावे तु तेषु प्रातिकूल्यं परित्यजेत् । सर्वप्रातिकूल्ये गृहमेव त्यक्त्वा भगवत्स्थाने स्थितः भगवदीयैर्मिलित्वा सेवाकथादिपरतया तिष्ठेत् । अथ तत्सहवासे चेत्स्वमनसि तद्विषयकं दोषादिकमाभाति, अथवा स्वादृष्टवशात्तेषामेव मनसि स्वविषयकं तदायातीति मनसि सम्भाव्य तेभ्यः किञ्चिद्दूरदेशे स्थित्वा तत्रैव सेवादिकं कुर्यात्, तदनवसरे तत्र गत्वा तैः सह श्रवणकीर्तनादिपरतया तिष्ठेदित्यर्थः सम्पन्नः । यद्वा । अदूरेति । भगवत्स्थानादेवादूरविप्रकर्षे स्थेयम् । तत्रैव स्थितौ तु अतिपरिचयाद्भगवतो भगवदीयानां वा विषयका अपराधाः सम्भवन्ति, तेन तु स्वस्य चित्तं दुष्यत्येवेत्यत आहुः यथेति । यथैव स्थिते चित्तं न दुष्यति तथैव स्थेयमित्यर्थः ॥ ८ ॥

ननु व्यसनानन्तरमपि फलदशायामेव चेद्बाधकसम्भावना, तदा सुतरामेव साधनदशायां सेति कथं सुखेन सेवादिनिर्वाह इत्याशङ्कायामाहुः सेवायामिति ।

**सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।**
**यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥**

सेवायां तनुवित्तजायाम् । अत्र वाशब्दः स्मरणस्यापि सङ्ग्राहकः । सेवाया अशक्तावनवसरे वा श्रोतृवक्तृभावमात्रे स्मर्तापि वा भवितव्यम्, नान्यपरतया स्थातव्यमिति बोधकः । अत एवोक्तं नवरत्नप्रकाशे 'अन्यथा तदैवासुरभावप्रवेशः स्या'दिति । कथायां

श्रीभागवतादिश्रवणकथनादौ । अत्र वाशब्दः श्रवणकथनयोरन्यतरेणापि कार्यसिद्धिर्भवत्येवेति सूचकः । परमुभयोरपि तत्र तत्र दृढासक्तिरपेक्षिता । ततो यावज्जीवं तस्यां स्थितायां तस्य भक्तस्य नाशस्तद्भावात् च्युतिस्तस्य भावस्य वा च्युतिः क्वापि. इहास्मिन् जन्मनि जन्मान्तरे चाऽमुत्र च नास्त्येव इत्येव मे मतिः सम्मतिर्निश्चयात्मिका बुद्धिर्वा । तथा च सेवायां श्रवणकीर्तनयोर्वा यस्य दृढासक्तिर्भवति, तस्य तावद्भावात् च्युतिः कदापि न भवति, परमग्रे भाववृद्धिस्तु स्वभाग्योन्नतिसमये भगवतस्तद्भक्तानां च कृपया भविष्यत्येवेति परमार्थः ॥ ९ ॥

नन्वेवं सर्वं त्यक्त्वा स्थितस्य तत्रापि चेत् कश्चनोपद्रावकः पदार्थः सम्पद्येत, तदा तेन किं कार्यमित्याकाङ्क्षायामाहुः बाधेति ।

बाधसंभावनायां तु नैकान्ते वास इष्यते ।
हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥

एकान्तेपि चेद्बाधकसम्भावना स्यात्तदा पुष्टिमार्गीयैर्ग्रहिलतया तत्रैव स्थित्वा भगवति भारो न देयः । अतस्तत्र तस्य वासो नेष्यते, इष्टसाधको न भवतीत्यर्थः । ननु पुनस्तत्र तत्रापि चेत्तत्सम्भवस्तदा 'स्थितो भ्रष्टस्ततो भ्रष्ट' इति न्यायेन कांदिशीकस्य तस्य का वा गतिरित्याशङ्कायामाहुः हरिस्त्विति । यतो हरिः सर्वदुःखहर्ता, अतः सर्वतः । तसिलः सार्वविभक्तिकत्वात्सर्वेषां स्वीयानां सर्वेभ्यः प्रतिबन्धकेभ्यः सर्वेषु देशेषु सर्वलौकिकालौकिकोपायैः सर्वप्रकारैश्च रक्षां निःसन्दिग्धं भगवान् करिष्यत्येवेति नात्र संशयात्मभिर्भवितव्यमित्यनवद्यं सर्वम् । अन्यथा 'अनन्या' इति 'न मे भक्त' इति 'मां हि पार्थ' इति 'द्वि स्थापयती'त्यादीनि भगवद्वाक्यानि विरुद्धानि च निष्फलीभवेयुः ॥ १० ॥

.एवं भक्तिसाधनदशायामपि स्थित्यादिप्रकारमुक्त्वा उपसंहरन्त एतत्स्तोत्रपाठस्य फलमप्याहुः इतीति ।

इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।
य एतत्समधीयीत तस्यापि स्याद् दृढा रतिः ॥ ११ ॥

इतीति परिसमाप्तौ । एवं पूर्वोक्तप्रकारेण भगवच्छास्त्रं भगवद्धर्मशिक्षकं शास्त्रम्, अत एव गूढं तत्त्वं स्वरूपात्मकं यस्मिन्निति तादृशम् । स्वतत्त्वापितपुष्टिपुरुषोत्तमस्य गत्यर्थेन साक्षात्सम्बन्धजनकत्वमिति यावत् । तन्निरूपितं नितरामुक्तम् । एतन्मार्गीयो यः कोपि वा एतच्छास्त्रं सम्यगर्थानुसन्धानपूर्वकं श्रीमदाचार्यचरणेषु श्रद्धाविश्वासादिपूर्वकं चाधीयीत पाठं कुर्यात्, तस्यापि भगवति रतिर्दृढा स्यात् । दृढत्वं तु स्वेच्छाणामुत्पिप्सनयोरनन्तरायं नियतपूर्वमात्रवृत्तित्वम् । अयमाशयः । पूर्वं 'बीजदाढ्य-

स्यर्थं ये उपाया निरूपितास्तान्विनैवैतत्पाठमात्रेणापि भगवति प्रेम उत्पद्यते । तदनन्तरं यथोक्तरीत्या स्थितौ तदग्रिमावस्थास्त्ववश्यभाविन्य एवेति परमार्थः ॥ ११ ॥

अत्र युक्तमयुक्तं वा लिखितं यन्मयाऽज्ञतः । तद्विठ्ठलः कृपासिन्धुरज्ञस्य क्षम्यतां मुदा ॥१॥

इति श्रीविठ्ठलनाथचरणैकतानश्रीव्रजभूषणात्मजश्रीगिरिधरविरचित-
भक्तिवर्धिनीविवृतिः समाप्ता ॥

---

श्रीकृष्णाय नमः ।

# भक्तिवर्धिनी ।

## श्रीद्वारकेशविरचितप्रकाशसमेता ।

श्रीमद्वल्लभपादपद्मरजसः संस्मारणेनैव मे
ज्ञातुं सर्वमशक्यमत्र सदसद्वेवेकिकं यत्परम् ॥
ज्ञातं शक्यमसाध्यमेव नितरां साध्यं तदुक्तार्थत-
स्तद्विश्वासबलाश्रयैकनिरतो वक्तुं प्रवृत्तोस्म्यहम् ॥ १ ॥

श्रीमदाचार्यवर्याणां चरणानुग्रहादहम् ।
तदुक्तवाक्यसन्दर्भं विमृशामि यथामति ॥ २ ॥

तत्र पूर्वं यथा भगवान्(न)न्यपूर्वाभ्यस्तादृशरसोपयोगिदशाविरहादनधिकारित्वमाशंक्य तदग्रिमप्रयोजनसिद्ध्यर्थं साधनत्वेन त्यागात्यागहेतुकीं भक्तिं ताभ्यः प्रयच्छतीति भावफलोपकारावधि तदुत्पादकबीजभावत्वेन तादृशरसात्मकं स्वरूपं भावरूपत्वेनैतद्वायनया तत्तदन्तःस्थापितमिति ततो भक्तिस्त्यागे च रमणं फलमिति राद्धान्तसम्मतः पन्थाः । यद्यप्येतदतिरिक्तानां भक्तानां 'व्रजे गोप्यो भविष्यथे'ति वरप्राप्तत्वात्साम्प्रतमधिकारित्वं वर्तत एव, तथापि, 'प्रथमातिक्रमे कारणाभावा'दिति न्यायेनैतत्सहकार्यत्व एव फलदानम्, यत एतासामेव वरप्राप्तत्वेनात्र रमणविशिष्टाः क्षपा दत्तास्तद्व्यतिरेकेण नास्य सम्भावनमिति नैतत्पूर्वं तासां रमणमिति भावः । अत एवाग्रे भगवदाकारणं तु तावदेतद्विषयकमेव स्पष्टीकृतं श्रीमदाचार्यैः । तथा सत्युभयोर्भगवतः श्रायमिकसंबन्ध एव बीजम्, तदावाहानम् । भक्तिश्चरणारविन्दरूपा । तस्या नैरन्तर्यभावनेनावसरे प्राप्ते बीजपरिपाकदशायां फलं साक्षात्स्वरूपानन्दानुभव इति यावत् । तत्र कुमारिकाणामत्यागः, तद्व्यतिरिक्तानां त्याग इति स्थापितत्वात् । अत एव प्रनाध्याये श्रीमदाचार्यैरुक्त'मत्यागस्त्यागादुत्तम' इति । तथाप्याधुनिकदैवीसृष्ट्युत्पन्नानां जीवानां सर्वदोषदूरीकरणार्थं तादृशरसात्मकभ-

जनानन्ददानार्थं च तादृक्सेवनानुकरणोपदिष्टत्वेन श्रीमदाचार्यवर्यास्तदुभयपक्षमाश्रित्य साक्षात्फलप्राप्त्यर्थं नामस्मरणानन्तरं फलपरिचयावधि साधनत्वेन भक्तिवृद्धिप्रकारं निरूपयन्ति यथेति ।

यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते ।
बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तनात् ॥ १ ॥

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽप्यधिकः स्नेहो भक्ति'रिति । यत्र वरप्राप्तत्वेन पूर्वकालिनकसंस्कारकरणानन्तरमेव भक्तेः प्रक्षिप्तबीजत्वम्, तत्र स्मरणबाहुल्यादङ्कुरितत्वम्, ततस्तथात्वे पल्लवितत्वम्, तथैव कुसुमितत्वम्, एतावन्मात्रकं फलीकरणावधि वर्धकत्वमग्रे कुतो न स्यादित्यनुसन्धेयम् । सा प्रवृद्धा स्यादिति । प्रकृष्टेन वृद्धिः प्रतिक्षणं तादृगार्तिपूर्वकस्मरणबाहुल्येन । तथोपायस्तत्प्रकारकाचरणोपायो निरूप्यते, उत्तरवाक्य एव विशदीक्रियत इत्यर्थः । बीजभावे दृढीकरणापेक्षकत्वम्, अन्यथा तुशब्दस्य पूर्वपक्षव्यावर्तकत्वानापत्तिः स्यात् । किञ्च, बीजभावे दृढे सत्येवाग्रेऽङ्कुरभावमारभ्य फलपर्यन्तं तदुद्भावनपूर्वकं वर्धकत्वम् । अन्यथा कृतोऽपि संस्कारो व्यर्थ एव स्यात् । अत एव 'भावैरङ्कुरित'मित्याद्युक्तयस्तु तादृग्बीजभावफलीकरणत्वमेवाभिव्यञ्जयन्ति । तत्र त्रिपयव्यवस्थाभेदेन हेतुत्रयमुच्यते त्यागाच्छ्रवणकीर्तनादिति । अत्र तामसानां त्यागादेव तथात्वम् । सात्त्विकराजसानां तु श्रवणकीर्तनादिति योजनोभयत्रैव वेदितव्या । तथा सति पक्षद्वयविशिष्टविभागसमानाधिकरणत्वेन हेतुनिरूपणप्रस्तावेऽपि सामानाधिकरण्यात्तद्भिन्नत्वं स्वीकर्तव्यम् । अत एव त्यागादिति पृथगुक्तिः, न तत्र समाहारे योजना । श्रवणकीर्तनयोस्त्वेकवद्भावत्वेन तथात्वादत्यागपक्षमाश्रित्य श्रवणकीर्तने एव हेतुत्वेन निरूपिते, नतु त्यागः । तस्माद्यथायोग्यतया हेतुनिरूपणं ज्ञेयम् । अत एव 'श्रवणा'दित्यारभ्य'प्रतियातु ततो गृहा'नित्यन्तेन तद्दृढीकरणार्थमेव भगवता यद्यप्युक्तम्, तथापि नाद्रीकृतमेताभिः, किन्तु 'स्वपक्ष एवादरणीय' इति न्यायात्त्याग एव तासां दार्ढ्यसम्पादकत्वम् ॥ १ ॥

अतः परमेतावन्मात्रकं बीजदार्ढ्यमुपपाद्य तत्प्रकारमप्यग्रे प्रकाशयन्ति बीजदार्ढ्यप्रकारस्त्विति ।

बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः ।
अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभिः ॥ २ ॥

अत्र कुमारिकावरप्राप्तसाधननिरूपणत्वेन प्रथमतस्तत्प्रकारमेव प्रचारयन्ति । अनन्तुशब्देन तत्प्रकारकानिरित्प्रकारं व्यावर्तयन्ति । तद्यथा । गृहे स्थित्वा स्वधर्मत इत्यत्र स्वात्मा भगवान् तद्धर्मतः षड्गुणैश्वर्यादिकमनुभवन् तादृग्रसभोक्त्रीणामाच-

रणं ज्ञात्वा भजेदित्यन्वयः । अथवा, यथैताः स्वस्य पूर्वं भगवद्गृहीतपुंस्त्वाख्यधर्ममधुना प्राप्य पूर्वकालीनोपदेशजनितसंस्कारस्मरणपूर्वकं तद्भजनं कुर्वन्ति, तथैतन्मार्गीया अपि 'स्वधर्मत' इति नामस्मरणपूर्वकसंस्काररूपवरणप्राप्तौ तदनुकरणत्वेनैतद्भजनं कुर्वन्त्वित्याशयेन श्रीमदाचार्यवर्या आहुः स्वधर्मत इति । एतत्प्रकारानुसारेण स्वयमव्यावृत्तः सर्वदा । व्यावृत्तिर्व्यवहारः । स तु सन्निपातः, तद्रहितः सन् कृष्णं फलात्मकं सदानन्दवाचकं पूजया श्रवणादिभिरित्यत्र, तथा पुष्टिमार्गीयस्य 'धन्यास्त्वि'ति वाक्यपद्मनिरूपितया, तथा श्रवणादिनवप्रकारकभक्तिभिरपि तत्तद्भावसमाश्रितमेव भजेत्सेवनं कुर्यात्, तदप्यान्तरिकम्, नतु बाह्यमित्यर्थः । अथवा । तासां कामरूपाणि वस्त्राणि गृहीत्वा पूर्वं नीपमारुह्य पश्चात्तत्रैव दानत्वेन तासु यथा भगवत्पूजनत्वम्, तथैवाग्रे स्वातिप्रियोत्तरीयकल्पितासनदानत्वेन ताभिरपि भगवान् पूजित इति लक्ष्यते । अत एव 'तत्रोपविष्टो भगवान्स ईश्वर' इत्यत्र तच्छब्दपरामर्शस्यैव तदुद्घाटकत्वमेतत्प्रकारकाचरणं कर्तव्यमित्यर्थः । सर्वदा भावनीय इति संक्षेपः । अतएव व्रतचर्यायां 'प्राग्जन्मपुरुषत्वाख्यधर्मा अपि वयस्यतां । प्राप्ता ये तैः सहागच्छन् संबन्धं सूचयन् हरि'रित्यत्र श्रीमत्प्रभुभिस्तथैवोक्तमिति प्राथमिकसंबन्धस्यैव बीजभावत्वम् ।

ननु ते तु ऋषयो मननशीला मध्वदृशाः सर्वात्मना भगवदुक्तसाधनकरणत्वेनैव प्रत्यहं गृहस्थितमेवाद्य तदाज्ञापालनपूर्वकं भजनं कुर्वन्ति, अयं तु प्राकृतः, कथं तत्साधनाचरणं कर्तुं शक्यत इत्याहुः व्यावृत्तोपीति ।

व्यावृत्तोपि हरौ चित्तं श्रवणादौ यतेत्सदा ।
ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् ॥ २ ॥
बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ।

वस्तुतस्त्वयमप्येको बीजदार्ढ्यप्रकारान्तरः, तस्मात्स्वयं व्यावृत्तोपि संसारासक्तः सन्नपि हरौ सर्वदुःखहरणशीले भगवति गजराजग्राहवाविकनादक्यराकमातुस्मरणपूर्वकं चित्तं संस्थाप्येति शेषः । सदेति कालापरिच्छेदकत्वेनैव श्रवणादिषु नवप्रकारकभक्तिषु तद्वृद्धिप्रकारस्फूर्त्या यतेत् । तद्विषयकं यत्नं कुर्यादित्येतत्प्रकारेणापि सा प्रवृद्धा स्यादिति पूर्वेणान्वयः । ननु पूर्वोक्तप्रकाराचरणेनाग्रे किं साधितमिति प्रेमादीनां प्राप्तिमपि सूचयन्ति ततः प्रेमेति । ततः तद्वृद्ध्यनन्तरं पूर्वोक्ताधिकरणक एव तथात्वेन पञ्चरचनारूपं प्रेमोत्पत्ते, येन भक्तिवल्ली प्रत्यहं प्रतिक्षणं विगमनविपर्ययीनियते । तथा आसक्तिर्मात्रविशेषः । स पुष्पागमरूपः । अत्र 'शास्त्रार्थस्य परिज्ञानात् भावस्य कलिका भवे'दिति वाक्योक्तोऽनुमन्धेयः । तथा सत्येतत्प्रकारकासक्तेः प्रेमोत्तरभावित्वं युक्तमेव । अत एव श्रीमदाचार्यैरपि तथैवोक्तम् । 'आसक्तितः प्रेमपूर्वैर प्रेमाति हरिणा कृत'मिति । तथा व्यसनं च येन विना क्षणमपि स्थातुं न शक्यते, नतु बीजादारभ्य फलाविष्कारावधि

सर्वत्र भावनीयम् । एवं यदा भवेत्तदा न काप्यनुपपत्तिः । अथवा । अत्र चकारः समुच्चयार्थकः । तथा सति प्राथमिकसंबन्धो बीजभावः । तस्मात्स्वभावतो वृद्धिं प्राप्ता भक्तिर्वेल्ली, तदुद्भूतं प्रेम पल्लवस्थानापन्नम्, तज्जनितासक्तिः पुष्पागमः । ततो व्यसनं च फलत्वेन स्वरूपैकनिष्ठत्वम् । एतेषां बीजत्वजातिविशिष्टसमानाधिकरणत्वेनैकजातीयत्वम् । तथा सति मूलदृढीकरणत्वेनैव सर्वत्र तथात्वमिति भावनीयम् । तदेवाग्रे निरूप्यते बीजं तदुच्यते, शास्त्रे भगवच्छास्त्रे, श्रीभागवतगीतानारदपञ्चरात्रादावपि, यद् दृढं नापि नश्यति, तत्तु प्राथमिकसंबन्धकालीनमित्यध्यवसेयम् ।

अतः परं प्रेमासक्तिभ्यां यज्जातं तदाहुः स्नेहादिति ।

स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः ॥ ४ ॥
गृहस्थानां बाधकत्वमनात्मत्वं च भासते ।
यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि ॥ ५ ॥
तादृशस्यापि सततं गेहस्थानं विनाशकम् ।
त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः ॥ ६ ॥
लभते सुदृढां भक्तिं सर्वतोप्यधिकां पराम् ।
त्यागे बाधकभूयस्त्वं दुःसंसर्गात्तथान्नतः ॥ ७ ॥
अतः स्थेयं हरिस्थाने तदीयैः सह तत्परैः ।
अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यति ॥ ८ ॥
सेवायां वा कथायां वा यस्यासक्तिर्दृढा भवेत् ।
यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥ ९ ॥
बाधसंभावनायां तु नैकान्ते वास इष्यते ।
हरिस्तु सर्वतो रक्षां करिष्यति न संशयः ॥ १० ॥

अत्र स्नेहपदेन भक्तिरुच्यते । तत्र धात्वर्थः सेवा, प्रत्ययार्थः 'प्रेमे'ति । तेन रागविनाशः स्यात्, भगवत्स्वरूपातिरिक्तवस्तुमात्रेषु यो रागः अनुरञ्जनं तस्य विशेषेण नश्वरत्वेन नाशः अप्रतीतिः स्यात् । तथा आसक्त्यापि गृहारुचिः स्यात् । तत्र 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यत' इति वाक्यात्तादृशासक्त्या परिग्रहाद्यरुचिस्तूचिततरा । अथवा । नैते आत्मसंबन्धिनः, किन्तु देहादीनाम्, प्रत्युत तादृशभावनिरतस्यालौकिकभावविघातका एव, नतु साधकाः, इतोपि तदनासक्तौ तस्य न किमपि बाधकम्, प्रत्युत तथात्वे तथात्वमिति । अग्रिमवाक्ये तथैव निरूप्यते गृहस्थानां बाधकत्वमिति । भगवद्विषयकसंस्कारानुगतकर्तॄणां तु स्त्रीपुत्रादिष्वनात्मत्वं भासत एव । चकाराद्बाधकत्वमपि । तथा सति तत्सङ्गो न विधेय इति तात्पर्यार्थः । अन्यथा व्यसनभावत्वानुपपत्तिः स्यात् । अतस्तत्त्यागे सर्वत्र साधकत्वेनाधिकारी विपरीतस्तु यदा स्यादिति ।

यस्मिन्काले कृष्णे फलात्मके षड्गुणैश्वर्यसम्पन्ने भगवति व्यसनं तदेकनिष्ठत्वं पूर्वोक्तविधिना स्यात्तदैव कृतार्थः स्यात्, नात्र सन्देहः कार्य इति सिद्धम्। हिशब्दस्तु प्रसिद्धावेव। तथा सति व्यसनं वरणकालीनमेवाभिव्यज्यते। अत एवाग्रे तादृशस्यापि व्यसनभावप्राप्तस्य सततं निरन्तरं गेहस्थानं गृहस्थितिर्विनाशकं विशेषेणोक्तसंस्कारविघातिकेति यावत्। अतस्त्यागपक्षमप्याश्रित्य तत्प्रासिप्रकारमाहुः त्यागं कृत्वेति। यस्तु परमकृपाशीलः सर्वात्मना निरुद्धः सन्, अत एव तदर्थार्थैकमानस इति विधेयविशेषणम्। तत्र भगवतो योर्थः प्रयोजनं तदर्थमेव तन्निष्ठमेकं मानसं यस्य। अथवा। भगवदर्थमेव यत्प्रयोजनं तत्रैव मानसिकी प्रवृत्तिर्यस्येति त्यागसांमुख्यम्। अत एवात्र तुशब्दस्तूक्तबाधकः। तथथा। व्रजसीमन्तिन्योन्यपूर्वाः सर्वथा त्यक्तुमशक्यानित्येतादृशानपि पदार्थांस्त्यक्त्वा बीजभावरूपां भक्तिम्, तथैवाग्रे स्वरूपदर्शनस्पर्शनभाषणमिलनादिकमेतासां जातमिति, तथात्रापि य इति सामान्यनिर्देशात् कोपि तदर्थार्थैकमानसः पूर्वोक्ताचरणशीलत्वाद्व्यासक्तिभरेण गृहादित्यागं कृत्वा यतेत्, भगवत्प्राप्तिविषयकमेव यत्नं कुर्यात्, स पूर्वोक्तसामानाधिकरण्येनैव सुदृढां स्नेहरूपाम्, तत्रापि सर्वतोप्यधिकां नवप्रकारकभक्त्यपेक्षयोत्कृष्टत्वेन तादृक्प्रकारकाम्। अत एव 'सुदृढः सर्वतोधिकः स्नेहो भक्ति'रिति लक्षणत्वेन प्रसाम्, अत एव परमोत्कृष्टाम्, यतः साक्षाद्भगवच्चरणारविन्दानुग्रहनिष्ठैकशीला तां लभते, प्राप्नोति, तत्कृताचरणं करोतीत्यर्थः। तथापि त्यागक्रियानौचित्यमेवाद्यत्वाग्रे तद्विषयकबाधमाहुः त्यागे बाधकभूयस्त्वमिति। अत्र साधनदशापन्नत्वेनाधुनिकजीवानां तदपेक्षया न्यूनत्वम्, 'संत्यज्य सर्वविषयांस्तव पादमूल'मिति प्रकारस्य तत्रैव सिद्धत्वादप्रलानां तथाकरणे बाधकबाहुल्यमेव। तत्र हेतुद्वयं निरूप्यते दुःसंसर्गात्तथान्नतः। स्वापेक्षया विरुद्धधर्माचरणशीला एव दुष्टाः। तेषां संसर्गात्सहवासकरणत्वात्तस्य तदुपार्जितान्नभक्षणाद्वा तथात्वम्। यत एवं बाधकापत्तिस्तत एवाग्रे स्थितिप्रकारः प्रकाश्यते। अतः स्थेयमिति। अस्मात्कारणादेव तद्रहिते देशे हरिस्थाने सर्वदुःखहरणशीलस्य तत्तल्लीलास्थाने तदीयैर्भगवत्परैर्भगवदीयैः सह स्थेयम्। अथवा। भगवदुपदिष्टस्थाने वृन्दावनादौ स्थितिः कर्तव्या। तत्र तादृशैः सह स्थेयम्। तत्रापि अदूरे विप्रवासकरणे पूर्वोक्तहेतुद्वयप्रतिबन्धोत्पादकानामनवसरप्राप्तत्वात्। तथात्यागपक्षे तावद्दूरस्थैव कर्पं चेति। यद्योरपत्ने प्रकारद्वयं तयोरपसंहारेपि तथात्वं योध्यते। अत एव श्रीमदाचार्यैरपि पूर्वोक्तस्थितिः कर्तव्या, त्यागपक्षे तु विप्रकर्षेणैवेति योजना। अदूर इति वाक्यद्वयं प्रतिषेधे भिन्नतया योजनीयम्। यस्मात्पूर्वकथानमद्वयमुक्तम्। अथवा। अदूर इति वाक्यद्वयं प्रतिषेधे भिन्नतया योजनीयम्। यस्मात्संसर्गाद्भवति। तत्र स्थेयमित्यग्रे सूच्यते। यथा चित्तं न दुष्यति। एतत्प्रकारकपरत्वकारणेनैव तत्र स्थेयमित्यग्रे सूच्यते। अनन्तरं पूर्वोक्तरीत्या पारम्पर्येणदृष्टादिभिर्भगवदीयैश्चित्तं न दूषितं भवतीत्यर्थः। 'मैत्र्यादां वा कृपायां ये'त्युक्तौ यथायथा-भिज्ञेन स्वयमपि साधनद्वयमुच्यते।

११ भक्ति.

तुरोधेनासमूर्णां सेवायामिति धात्वर्थस्यानुकूलत्वेन भगवद्भजन एवासक्तिः । सम्पूर्णां तु भगवद्गुणानुवादत्वेन कथायामेव सा। 'तव कथामृतमि'त्यादिवाक्येषु तथा निरूपितत्वात्। उभयत्र वाशब्दो विकल्पत्वेन तन्मात्रकं बोधयति, अन्यथा एकेनैव तेन चारितार्थ्ये सति द्वित्वनिरूपणस्यानतिप्रयोजनत्वात् । अतः श्रीमदाचार्यवर्याः स्वकीयान्प्रति निरुपधिकरुणावत्त्वेन स्वानुभवपूर्वकोभयपक्षीयासक्तिर्निरोधस्वं फलत्वेन प्रतिपादयन्ति **सेवायां वा कथायां वेति** । अनेन सेवाकथयोः स्वरूपात्मकत्वं सूचितम् । आसक्तिप्रमन्यायेन तयोक्तिः। अथवा विकल्पत्वेन यस्येति सामान्यनिर्देशात्परममाग्यवतस्तत्कृताचरणशीलस्य आसक्तिर्निरोधे दृढ इति प्रपञ्चविस्मृतिपूर्वकत्वेन संभवेचास्य यावज्जीवं शरीरस्थितिपर्यन्तं पूर्वोक्तरीत्या नाशः क्वापि कस्मिन्नपि देशे समये वा न दृश्यत इति ज्ञेयः । 'स्वानुभूतप्रकारज्ञापनाय मे मतिरि'त्युक्तत्वान्तः । अतः परमेतत्प्रकारकाचरणकर्तुः कदापि स्थितिपक्षे बाधसंभावनायां जातायामपि स्वबुद्ध्यान्यत्रैव मया स्थेयमिति पक्षो निराक्रियते। बाधसम्भावनायां तु एकान्ते वासो नोचितः । वैराग्यवशान्महारण्यादौ स्थितिर्न कर्तव्या । किन्तु यत्र साक्षाद्भगवदाविर्भावः स्वहृदये स्वानुभूतो भवति, तत्रैव स्थेयमित्येकान्तपदतात्पर्यम् । अत एव नेष्यते नेच्छाविषयीक्रियते । कुतस्तत्र हेतुरुच्यते **हरिस्त्विति** । यथा व्रजरक्षाः सर्वतो भगवता रक्षिताः, 'विषजलाप्यया'दितिवाक्यपठ्कथनात्, तथात्मविषयिणी या रक्षा तां सर्वतः पूर्वोक्तदुष्टसमूहादपि करिष्यत्येव । अत्रापि स्वमत्यैवोक्तं न संशय इति । संशयः सर्वथा न कर्तव्य इत्यर्थः । हरिस्त्वस्यान्यथानुपपत्त्यैव तथा निश्चीयते । तुशब्दस्यापि तथैवोद्घाटकत्वम् ॥

अतः परमुपसंहरन्ति इत्येवमिति ।

**इत्येवं भगवच्छास्त्रं गूढतत्त्वं निरूपितम् ।**
**य एतत्समधीयीत तस्यापि स्याद्दृढा रतिः ॥ ११ ॥**

पूर्वोक्तप्रकारेण भगवच्छास्त्रं श्रीभागवतभगवद्वाक्यनारदपञ्चरात्रादिकं तत्तु भगवत्कथितमुपदिष्टमपि गूढत्वेन यत्तत्त्वं 'एवं मदर्थोज्झितलोकवेदे'त्यत्र यथोक्तं तन्मया तदुक्तप्रकारेणैव निरूपितम् । ब्रह्मसंबन्धकरणादित्याद्याज्ञाविषयत्वात् । एतदध्ययनकर्तॄणामपि पूर्वोक्तसिद्धिरित्याशयेनोच्यते **य एतत्समधीयीतेति** । य इति समान्योक्त्या कोप्येतत्स्पृष्टिगतभाग्यशीलः परमादरेणार्थानुसन्धानपूर्वकं तदुभयाचरणकर्तृत्वेनैतदध्ययनं करोतीति । तत्रापि नियमनैयत्येन सम्यक्त्वम् । तेन तस्यापि दृढा रतिर्भगवद्विषयको भावः स सुदृढः स्यादित्यलं विस्तरेण ॥

श्रीमदाचार्यचरणानुग्रहादेव निर्णयः । कृतस्तदुक्तवाक्यानां सुज्ञानां तोषसिद्धये ॥ १ ॥

इति श्रीद्वारकेशविरचितभक्तिवर्धिनीप्रकाशः ।

# EDITORS' NOTE.

भक्तिवर्धिनी is the twelfth of the Sixteen Sacred Books of श्रीमद्वल्लभाचार्य. It is the foundation of भक्तिमार्ग, and it clearly shows the means by which भक्ति towards God may be increased and strengthened. Nothing is said here about the मुख्य अधिकारी, for his अधिकारबल is strong enough to lead him to final realisation, the मध्यम अधिकारी has to resort to त्याग and श्रवणकीर्तन after his बीजभाव i. e. love towards God, which is produced only by His grace has been strengthened into आसक्ति and व्यसन. Such a व्यसनी, who cannot live without God, should leave worldly surroundings, and realise His separation unobstructed. Such a भक्त is referred to in निरोध-लक्षण and his state [illegible] described in महता कृपया....अभ्यासोपि सिध्यति. It is for such a भक्त, that in सन्यासनिर्णय it is said विरहानुभवार्थं तु परित्यागो प्रशस्यते. His साधन is nothing else but भावो भावनया सिद्धः. For the हीन अधिकारी—and almost all the people of the modern times should be included in this category—the method of strengthening the बीजभाव i. e., the divine love which is the gift of His Grace, is as follows —He must stay in गृहस्थाश्रम, observe वर्णाश्रमधर्म, give up worldly pursuits and worship कृष्ण by पूजा, श्रवण &c. Even if he cannot give up worldly pursuits on account of poverty &c., he must concentrate his mind in हरि, the remover of all pains, and always try for श्रवण &c., till the बीज germinates, and प्रेम, आसक्ति and व्यसन are produced. The test of divine love is सर्वत्यागभावना, the test of divine आसक्ति is गृहारुचि; all the people in the house look like hindrances-nay, strangers. The test of व्यसन is the inability to live without Divine Presence, तद्विना स्वातुमशक्ति. Even such a व्यसनी or विरहातुर should not constantly stay at home, because it is a prison, full of many fetters.

The त्याग stated above is not easy; it is full of obstacles due to दुःसंसर्ग and दुरन्न. Hence it is better to stay in a हरिस्थान, in the company of भक्तs, who are wholly engrossed in serving the Lord. There al-o the aspirant should stay near or distant, in such a way that his चित्त is not spoiled. श्रीवल्लभाचार्य says that he who is wholly engrossed in सेवा or कथा till his life will never perish.

If one is really anxious to go to God, he will learn much from this ग्रन्थ. The fourteen commentaries that we have been able to collect and publish show the various aspects from which we can look at it. Of each of the first eight commentaries we had three to five copies, and from the ninth we had only one copy of each. Of श्रीकल्याणरायजी's commentary we had got a mss. written by his illustrious son श्रीहरिरायजी, of श्रीपुरुषोत्तमजी's we had a mss. corrected by himself in his own handwriting, and of 10, 11, 12 and 13, we had the original mss. written by the authors themselves.

A large collection of these commentaries we got from Pandit Gattulala's Library, and we are grateful to the departed Pandit for his vast and varied collection of mss. Some mss. we were able to get from the Bhandarkar Research Institute, for which we are thankful to Dr. S. K. Belvalkar. Shri Vallabhalalji, son of Shri Devkinandanji also gave us some mss. and we acknowledge our gratefulness to him. Lastly, some important original mss. Mr. Telivala was able to collect while on tour at श्रीनाथद्वार, कोटा, कांकरोली &c.

We note with pleasure the help that we have received in the preparation of press-copies of some of these mss. from Messrs. Gopaldas Jhalani, B. A., of Ujjain, Dhirajlal Kashinath Pandya of Anand, Chandulal C. Shah, Bechardas Maganlal and Purushottamdas Tribhuvandas of Nadiad. This work is printed from the funds supplied by नित्यलीलास्थ गोस्वामी श्रीजीवनलालजी of पोरबंदर and his son श्रीरणछोडलालजी and our sincere thanks are due to them.

With feelings of joy, we offer this fruit of our labour of love at the Lotus Feet of Lord Shri Krishna.

Bombay,
*March 1921.*

MULACHANDRA T. TELIVALA.
DHIRAJLAL V. SANKALIA.

# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १–०–० |
| २ | निरोधलक्षणम् । षड्विवरणसमेतम् । | रु. १–०–० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । | रु. १–०–० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १–०–० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०–१०–० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । जयगोपालभट्टकृतम् । | रु. १–०–० |
| ७ | शृङ्काररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । | रु. २–८–० |
| ८ | श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् श्रीविट्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०–८–० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १–०–० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २–०–० |
| १२ | त्रिविधनामावली टीकासमेता । | रु. १–४–० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. २–०–० |
| 14 | Discuss how far S'ankaracharya truly represents the view of the author of the Brahma Sûtras (Zala Vedanta prize Essay) | Rs 1 0 0 |

प्राप्तिस्थानम्—

१. चुनीलाल बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.

२. नडीयाद पुष्टिमार्गीय पुस्तकालय, नडीयाद.

३. पंडित मुख्याजी गोकुलदासजी,
श्रीविट्ठलनाथ पाठशाला, नाथद्वारा, राजपुताना.

४. पंडित गट्टूलालजी पाठशाला, येथिडूलस्ट्रीट भूलेश्वर, मुंबई.

Printed by Ramchandra Yesu Shedge at the Nirnaya-sagar Press
23 Kolbhat Lane Bombay

Published by Mulchand Tulsidas Teliwala B. A. LL. B. Vakil High Court
Khakhar Buildings C. P. Tank Road (Girgaon Bombay)

श्रीमद्वल्लभार्यचरणप्रणीतं

# सेवाफलम् ।



## द्वादशविवरणसमेतम् ।




श्रीदामपुरीस्थश्रीमद्गोस्वामिश्रीवल्लभात्मजश्रीजीवनलालचरणसम्पूर्णसाहाय्येन
भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला बी.ए., एल्एल्.बी., वकील
हाईकोर्ट, सुरतीपुरस्थ धैर्यलाल व्रजदास सांकलीया, बी.ए.,
एल्एल्. बी., वकील हाईकोर्ट, इत्येताभ्यां संशोध्य
मुम्बापुर्यां 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४३९. संवत् १९७३.

मूल्यमेकमुद्रिका.

# ग्रन्थसङ्ग्रहपरिचयः।

१. श्रीमदाचार्यकृतं सेवाफलं तद्विवरणं च यावत्प्राप्यटीकास्ताः सर्वा दृष्ट्वा मुद्रितमस्ति। तत्र विद्यमानाः पाठभेदाः श्लोकक्रमभेदाश्चास्माभिस्तत्रैव दर्शिताः।

२. श्रीकल्याणरायकृतसेवाफलटीकायाः पुस्तकद्वयमस्माभिरुपलब्धम्। प्रथमं भा.मा. वे. म.पं. गट्टूलालहस्तलिखितसंग्रहस्थम्। तत्र प्रथमं प्राचीनम्, प्रायः शुद्धम्। द्वितीयं 'डक्कनकोलेज' हस्तलिखित-संग्रहस्थं प्रायोशुद्धं तथापि पाठादिशोधनार्थं क्वचित् क्वचिदत्यन्तमुपयोगि।

३. बाबाश्रीगोपेशटीकायाः पुस्तकत्रयं प्राप्तम्। तत्र पुस्तकद्वयं पं. गट्टूलालसंग्रहस्थम्। अन्यद् 'डक्कनकोलेजस्थसंग्रहस्थम्। इदं पुस्तकत्रयमपि प्रायःशुद्धं प्राचीनं च। एतट्टीकाया मुद्रणानन्तर-मेकमन्यत्प्राचीनं पुस्तकं प्राप्तम्, तत्र विद्यमानाः पाठभेदाः परिशिष्टे दर्शिताः।

४. श्रीदेवकीनन्दनकृतटीकायाः पुस्तकत्रयं पं. गट्टूलालसंग्रहस्थम्। तत्रैकं प्राचीनमन्यद्द्वयं नूतनम्। तत् प्राचीनपुस्तकमवलम्ब्य यावच्छक्यं तावत्पर्यन्तं संशोध्य मुद्रितमस्माभिः।

५. श्रीहरिरायकृतटीकायाः पुस्तकत्रयं मिलितम्। इदं शुद्धं प्राचीनं च। एकं केनचिद्भट्टेन वासुदेवेन स्वपठनार्थं लिखितमस्ति। इदं पुस्तकत्रयं पं. गट्टूलालसंग्रहस्थम्।

६. श्रीवल्लभकृतटीकाया एकं पुस्तकं मिलितं पं. गट्टूलालसंग्रहतः। इदं प्रायः शुद्धं प्राचीनं च। एतदपि यावच्छक्यं संशोध्य मुद्रितमस्माभिः। एतद्ग्रन्थमुद्रणानन्तरमस्या अन्यत्पुस्तकं मिलितम्। तत्र सेवाफलविवरणानुसारेण श्लोकक्रममादाय सैव टीका पुनर्लिखितेति प्रतिभाति। तत्र विद्यमाना उपयोगिपाठभेदाः परिशिष्टे दर्शिताः।

७. श्रीपुरुषोत्तमकृतटीकायाः पुस्तकत्रयमुपलब्धम्। तत्र पुस्तकद्वयं पं. गट्टूलालसंग्रहस्थम्। तृतीयं डक्कनकोलेजसंग्रहस्थम्। एतत्पुस्तकं शुद्धं सूक्ष्मं पूर्वं लिखितं श्रीपुरुषोत्तमैः। परन्तु तत्सेवाफल-टीका श्रीपुरुषोत्तमैः सविस्तरं पुनर्लिखितेति पं. गट्टूलालसंग्रहस्थादर्शद्वयदर्शनेनाक्लिष्टतया निश्चीयते। पं. गट्टूलालसंग्रहस्थादर्शद्वयं समवलम्ब्य एतद्विवरणं मुद्रितमस्माभिः। एतन्मुद्रणानन्तरमेकमति-शुद्धं प्राचीनं पुस्तकमेतद्विवरणस्य मिलितम्। तत्रस्थोपयोगिपाठभेदाः परिशिष्टे दर्शिताः।

८. एतत्पुस्तकं पं. गट्टूलालसंग्रहस्थम्। अस्य कर्तृनाम न विद्यते। यथादृष्टमेव मुद्रितमस्माभिः। इदं श्रीपुरुषोत्तमविवरणानुसारिविवरणम्।

९. लालूभट्टकृतटिप्पण्याः पुस्तकद्वयमुपलब्धमस्माभिः। एकं डक्कनकोलेजसंग्रहस्थम्, द्वितीयं पं. गट्टूलालसंग्रहस्थम्। प्रथमं प्राचीनं प्रायः शुद्धम्, द्वितीयमपि तथैव, परन्तु नूतनमिति प्रतिभाति।

१०. जयगोपालभट्टकृतटीकाया एकमेव पुस्तकं डक्कनकोलेजस्थसंग्रहादुपलब्धम्। अस्मिन्पुस्तके ४३ तमं पत्रं तु न मिलति। इदं पुस्तकं ग्रन्थकृतो मूलमेवेति प्रतिभाति। तत्र एकवारं विवरणं समाप्य परमतखण्डनाय २० पत्राणि पश्चादनेन लिखितानि। किं तस्य मतं तत्तु पूर्वं तेन स्वटीकायामेव दर्शितम्।

११. लक्ष्मणभट्टकृतटीकाया एकं पुस्तकं श्रीगोकुलेशचरणपरागानुरागि'दलसुखलाल सांकलचन्द्र' इत्यनेन दत्तम्। इदं पुस्तकं ग्रन्थकृता स्वयमेव लिखितमिति प्रतिभाति।

१२. अस्य विवरणस्य कर्तृनाम न विद्यते। अस्य पुस्तकमेकं गट्टूलालसंग्रहस्थम्। प्रायःशुद्धम् परन्तु क्वचित्सन्दिग्धम्। यथादृष्टमेव मुद्रितमस्माभिः।

अस्मिन्पुस्तकसंचये पं. गट्टूलालसंस्थायाः 'कार्याध्यक्ष काशीदास नारायणदास दलाल वकील, हाईकोर्ट, मुख्यट्रस्टी श्रेष्ठि त्रिभुवनदास' इत्येषां महत्युपकृतिः । 'डा० बेलवलकर' इत्येतेषां महत्युपकृतिः पुस्तकप्रदानतोऽभूत् । अस्मन्मित्रोत्सवलालस्यापि तथैवोपकृतिः । चतुर्थपंचमपीठाधीश्वरगोस्वामिश्रीवल्लभलालानां माधवशास्त्रिणश्च हस्तलिखितशुद्धपुस्तकप्रदानतो महत्युपकृतिः, परन्तु मुद्रणानन्तरं तत्पुस्तकानां प्राप्तत्वादुपयोगिपाठाः तत्र विद्यमानाः परिशिष्टे निवेशिताः ।

# विवरणकृतां परिचयः ।

१. सम्प्रति श्रीमद्वल्लभाचार्यप्रकटितं सेवाफलं द्वादशटीकायुतं संमुद्र्यते । तत्र प्रथमं सेवाफलविवरणं तु श्रीमदाचार्यकृतिरेव । स्वीयाननुग्रहीतुकामैः श्रीमदाचार्यचरणैस्तत् प्रकटीकृतमिति ।

२. द्वितीयं मुद्रितं विवरणं श्रीमत्कल्याणरायाणाम् । इमे श्रीकल्याणरायाः श्रीमदाचार्यश्रीवल्लभाधीश्वरद्वितीयकुमारश्रीमद्विठ्ठलेश्वरप्रभुचरणद्वितीयसूनुश्रीमद्गोविन्दरायाणां सूनवः । मार्गशीर्षकृष्णासप्तम्यां १६२५ वर्षे प्रादुर्भूताः । श्रीमद्धरिरायाणां पितृचरणा अपि ते एव । तेषामनेकग्रन्थाः सूक्ष्मा अपि सिद्धान्तमर्मबोधकाः सरलाश्च सन्ति । निबन्धोपरि टिप्पणी तेषां प्राचीनतमा, अधुनापि हस्तलिखितग्रन्थाकारेण विराजते । उत्सवनिर्णायका अपि केचिद्ग्रन्थास्तैः प्रादुर्भाविता नयनगोचरीभवन्ति । षोडशग्रन्थोपरि तेषां व्याख्यानानि दृश्यन्त अद्यापि ।

३. तृतीयं व्याख्यानं चाचाश्रीगोपेशानाम् । इमे श्रीगोपेशाः श्रीमत्प्रभुचरणविठ्ठलेश्वराणां सप्तमपुत्रश्रीघनश्यामानां सूनवः, चचा वा चाचा येतिप्रसिद्धाः । षोडशग्रन्थोपरि बहवस्तेषां टीकाः विद्यमाना दृश्यन्ते । भाद्रपदकृष्णपञ्चम्यां १६५२ वर्षे प्रादुर्भूताः ।

४. चतुर्थं व्याख्यानं श्रीमद्देवकीनन्दनानाम् । के इमे देवकीनन्दनास्तत्र नि:शंकतया निर्णेतुं वयं न प्रभुमः । तथापि श्रीपुरुषोत्तमकृततद्विवरणोपन्यासाज्ज्ञायते यत् ते श्रीपुरुषोत्तमानां प्राच्याः । श्रीमद्विठ्ठलेश्वरप्रभुचरणपञ्चमपुत्रश्रीरघुनाथानां सूनवः श्रीदेवकीनन्दना मार्गशीर्षशुक्लसप्तम्यां १६२४ वर्षे प्रादुर्भूताः । कदाचित् त एव एते, परन्तु तत्पुत्रश्रीरघुनाथकृततत्स्तोत्रे तत्कृतग्रन्थानां प्रायः स्वाविधकाव्यवाक्योपक्रमादिसर्वेषामपि नामानि गृहीतानि, तत्रास्य व्याख्यानस्य नामादर्शनात्सन्देहः । श्रीदेवकीनन्दनानां पौत्रा अपि श्रीदेवकीनन्दना बभूवुः । तेपि १६८५ श्रावणशुक्लपूर्णिमायां प्रादुर्भूताः । तेपि श्रीपुरुषोत्तमानां प्राच्याः । कदाचित् तेप्यस्य प्रणेतारः स्युः ।

५. पञ्चमं व्याख्यानं श्रीमद्धरिधनचरणानाम् । श्रीहरिरायाः इति प्रसिद्धा हि ते । तेषां प्रादुर्भावस्तु भाद्रपदकृष्णपञ्चम्यां १६४७ वर्षे । एषां यज्ञोपवीतसंस्कारस्तु श्रीविठ्ठलेश्वराणां चतुर्थलालैः श्रीवल्लभैः श्रीगोकुलनाथेतिप्रसिद्धैः कृतः । श्रीहरिरायाणामसंख्याताः सूक्ष्मग्रन्था दृश्यन्ते । श्रीमद्धरिधनचरणस्वरूपे तु शुद्धपुष्टिमार्गीयं फलात्मकं रसात्मकं विप्रयोगात्मकं साक्षादैन्यं मूर्तिमत् प्रादुर्भूतमनुभूयते । तेषां व्याख्यानानि सर्वाण्यपि भक्तप्रगुणानि । निःसाधनजीवानुग्रहीतुमेव तेषां प्राकट्यमिति मतिमान्तिः । अत एवात्र मुद्रितं तेषां सेवाफलव्याख्यानं भक्तप्रगुणं सरलं भक्तिनिष्ठजनानुग्रहाय विराजते ।

६. षष्ठं श्रीविठ्ठलेश्वराणां सूनूनां श्रीवल्लभानाम् । काकाश्रीवल्लभजीतिप्रसिद्धा हि ते, श्रावणकृष्णचतुर्दश्यां १६०२ वर्षे श्रीमत्प्रभुचरणादेव गुरुश्रीगिरिधरात् पुत्रगणनया तृतीयसंख्यां विभूषयन्तः प्रादुर्भूताः । श्रीमुखोक्तिनिर्दिष्टास्ते अस्येव एव । षोडशग्रन्थोपरि तेषामन्यानि व्याख्यानानि दृश्यन्ते ।

... वर्तन्ते । इमे श्रीवल्लभाः श्रीदेवकीनन्दनसमवयस्काः, १६०२ माघ-

शुद्धसप्तम्यां प्रादुर्भूता इति केषाञ्चिन्मतं तन्नामनगरस्थश्रीमदनमोहनलालमन्दिरस्थश्रीसुबोधिनीलेखेतिश्रीतो विरुद्धत्वान्नैवास्माकं ग्राह्यम्। भाषासाम्येनापि निर्णीयते यत् श्रीसुबोधिनीलेखकृद्भिरेवेयं टीका लिखितेति। सेवाफलस्य तेषां श्रीसुबोधिन्यनुसारिव्याख्यानं तदेव ज्ञापयति। एतेन गीतातत्त्वदीपिकाकाराः श्रीवल्लभाः श्रीसुबोधिनीलेखकृतश्च श्रीवल्लभाः उभे भिन्नाः, यदि गीतातत्त्वदीपिकाकाराः श्रीवल्लभाः श्रीदेवकीनन्दननन्दना एव स्युरिति। पञ्चमगृहे द्वौ श्रीवल्लभौ प्रादुर्भूतौ। तयोरेकः श्रीदेवकीनन्दननन्दनः १६७२ मार्गशीर्षशुक्लसप्तम्यां प्रादुर्भूतः। अन्यश्च श्रीविट्ठलरायसूनुः १७२९ कार्तिककृष्णद्वादश्यां प्रादुर्भूतः। स तु श्रीपुरुषोत्तमादर्वाचीन इति न स लेखकृत्। आसमनगरस्थश्रीमदनमोहनलालमन्दिरस्थश्रीसुबोधिनीलेखेतिश्रीतो ज्ञायते यदिमे श्रीवल्लभाः काकाश्रीवल्लभजीतिप्रसिद्धाः श्रीविट्ठलेशसूनवः। तत्र श्रीपुरुषोत्तमात् प्राक्कालीनः श्रीविट्ठलेशसूनुर्न कोपि श्रीवल्लभः पञ्चमगृहे प्रादुरभूत्। तस्मात् श्रीरघुनाथवंश्यस्य कस्यापि श्रीवल्लभस्य लेखकर्तृत्वं नैव समीचीनम्।

७. सप्तमं श्रीमत्पुरुषोत्तमानाम्। श्रीमदाचार्यैः पुरुषगणमयां सप्तमीं संख्यां विभूषयन्तो भाद्रपदशुक्लदशम्यामेकादश्यां वा १७२४ वर्षे प्रोद्भूताः। तेषां विवरणं शास्त्रीयमाचार्यांशपंचक-रूपाणीति प्रतिभाति। विशेषतस्तेषां चरित्रजिज्ञासुभिः पुष्टिभक्तिसुधेतिमासिकपत्रिकायाः पञ्चमवर्षस्य तृतीयाङ्को द्रष्टव्यः। यावत्प्राप्यं ग्रन्थमात्रं वा तेषां चरित्रादिकमस्माभिस्तत्रैव निवेदितमिति नात्र पुनरनूद्यते।

८. अष्टमं व्याख्यानं केषाञ्चिद्गोस्वामिनाम्। इदं व्याख्यानं श्रीपुरुषोत्तमानुसारिश्लोकान्वयमनुसरति।

९. नवमं व्याख्यानं लालूभट्टानाम्। केचिदाचार्यैस्सजातीयास्तैलंगदेशीया विद्वांसो ब्राह्मणाः श्रीमद्विट्ठलेश्वरप्रभुचरणैर्गोकुले समानीताः। तैः सह श्रीमत्प्रभुचरणैः कन्यादानव्यवहारो रक्षितः। एतादृशेषु ब्राह्मणेषु द्वौ भ्रातरौ गोविन्दकृष्णभट्टौ बभूवतुः, ययोर्भगिनी श्रीरुक्मिणी श्रीमत्प्रभुचरणैः स्वपत्नीत्वेन स्वीकृता। आत्रेयापस्तम्बविश्वनाथस्य पुत्रौ हि एतौ। विश्वनाथभट्टवंश्येषु कश्चिन्मधुसूदनभट्टो बभूव। तस्य मधुसूदनभट्टस्य सूनव एते लालूभट्टोपनामबालकृष्णदीक्षिताः। सम्राट्सवाईजयसिंहसमाश्रिताः। सवाई जयसिंहस्तु संवत् १६८८ वर्षे प्रादुर्भूतः, १७२८ वर्षे पञ्चत्वं गतः। अतोऽस्मिन्समये लालूभट्टा विद्यमाना आसन्। प्रायः श्रीमद्गोस्वामिनां दुहितृतो वंश्या भट्टा इत्युच्यन्ते। लालूभट्टा अपि तथैव। गोस्वामिश्रीगिरिधारिणां शिष्याः। तेषामनेकग्रन्था हस्तलिखिता दृश्यन्ते। तेषां लेखनशैली तु सरला वर्तते। तत्सारल्यमस्मिन् व्याख्यानेपि प्रकटीभवति। अणुभाष्यनिगूढार्थप्रकाशिकाश्रीसुबोधिनीयोजनानिबन्धयोजनासेवाकौमुदीनिर्णयार्णवप्रमेयरत्नार्णवषोडशग्रन्थविवरणादयो बहवो ग्रन्थास्तेषां प्रकाशकर्षं प्रतीक्षन्ते।

१०. दशमं व्याख्यानं मठपतिजयगोपालभट्टानाम्। एते चिन्तामणिदीक्षितस्य सूनवः। ते श्रीमत्प्रभुचरणश्रीविट्ठलेश्वरद्वितीयकुमारश्रीगोविन्दरायज्येष्ठपुत्रश्रीकल्याणरायाणां शिष्याः। स्वकृततैत्तिरीयभाष्ये बहिर्मुखमुखध्वंसे च स्वपरिचयमेवं कारयन्ति। 'प्रणमामि हरिं श्रीमद्वल्लभाचार्यरूपिणम्, श्रीविट्ठलेश्वराख्यांश्च प्रभून् स्वाभीष्टसिद्धये। श्रीमद्गोकुलनाथान् श्रीमत्कल्याणरायगुरुचरणान्। नामनिवेदनदातॄन् प्रणमामि मुहुर्मुहु- प्रेम्णा। तैलंगयज्वचिन्तामणितनयो मठपतित्वविख्यातः। जयगोपाल उपनिषद्भाष्यं वितनोति तैत्तिरीयाणाम्॥', 'श्रीमद्वल्लभविट्ठलेश्वरहरिं श्रीगोकुलेशप्रभून्। नत्वा भक्तिपथप्रचारचतुरान् श्रीकल्याणरायान् गुरून्। तातभ्रातृपदाम्बुजातयुगलं ध्यात्वा च सर्वादृतं कुर्वे ग्रन्थमहं बहिर्मुखमुखध्वंसाभिधं वैष्णवाः।', 'तैलंगाभरणश्रीचिन्तामणिदीक्षितांगजातेन। जयगोपाल-

कृता कृतिरेषा चन्द्रतारकं जयतात् ।' भट्टेषु इमे लालूभट्टानामपि प्राञ्चः । अद्यापिपर्यन्तमज्ञातपूर्वा हि ते । पं. गट्टूलालप्रलेखेष्वपि तेषां न किमपि विद्यते । परन्तु एतेषां वैदुष्यं तु निर्विवादम् । बहवोपि कृतयस्तेषामुपलभ्यन्ते । तैत्तिरीयभाष्यवहिर्मुखमुखध्वंसबिल्वमंगलकृतकृष्णकर्णामृतटीकाशुद्धपुष्टिमार्गीयसेवादयः प्रबन्धास्तेषां नयनगोचरीभवन्ति । सरस्वतिकृतसंगीतसूत्रटीकायाः पत्रद्वयं तनसुखरामगुंजरातीपत्रदीपावल्यंके संवत् १९७० वर्षे मुद्रितम् । भक्तिवर्धिन्याः स्वकृतटीकाया उपन्यासोऽस्मिन्नेव सेवाफलव्याख्याने तैः क्रियते । मुण्डकोपनिषद्भाष्यमपि तैः कृतमिति सम्भाव्यते इति तत्कृततैत्तिरीयभाष्याज्ज्ञायते । सेवाफलव्याख्यानमपि तेषामतिरसिकं वर्तते । एतैरस्य व्याख्यानस्यान्तिमपत्राणि स्वकृतविवरणमेकवारं समाप्य पुनः श्रीहरिरायादिमतखण्डनाय पश्चाल्लिखितानि । तेषां परमतखण्डनं नास्माकं सन्तोषप्रदम् । एतदग्रे स्पष्टीकरिष्यते ।

११. एकादशं व्याख्यानं मठेशलक्ष्मणभट्टानाम् । इमे लक्ष्मणभट्टाः मठेशश्रीनाथभट्टपुत्रगोपीनाथभट्टसूनवः । इमे तु सर्वथा अज्ञातपूर्वाः । यद्यपि ग्रन्थान्ते तेषां नाम न विद्यते तथापि तत्पुस्तकोपरि 'श्रीनाथभट्टस्य पुत्रश्रीगोपीनाथभट्टस्य पुत्रलक्ष्मणभट्टस्येद'मिति दृश्यते । एतेषामन्येऽपि ग्रन्थाः पं. गट्टूलालहस्तलिखितसंग्रहे दृश्यन्ते । तत्रापि ग्रन्थान्ते इतिश्री समाप्ता ।

१२. अस्य विवरणस्य कर्तृनाम न विद्यते । अत एवास्माभिरन्ते मुद्रितम् । अयगोपालकृततदुपन्यासादिमे केऽपि प्राचीना इति निश्चीयते । प्रसिद्धासु सेवाफलटीकासु श्रीव्रजनाथकृता टीका नास्माभिरुपलब्धा । जामनगरे श्रीमदनमोहनलालमन्दिरस्थपुस्तकसंग्रहे तस्याः पुस्तकत्रयं विद्यते, परन्तु तन्मन्दिराधिष्ठातृश्रीअनिरुद्धानां कृपाऽभावात् सा टीका नास्माकं मिलिता । तेषु पत्रद्वयमपि प्रेषितं परन्तूत्तरदानायापि तेषामवकाशो न मिलित इति प्रत्युत्तराभावादनुमीयते ।

अस्मिन्मुद्रणे त एव पाठाः रक्षिता ये केषुचिदपि आदर्शपुस्तकेषु विद्यन्ते । कुत्राप्यादर्शपुस्तकेऽनुपलभ्यमानः पाठस्तु, यद्यपि आदर्शे विद्यमानः पाठोऽस्माकमसमीचीनो भातः, तथापि नैव निवेशितः, यतस्तथैव करणे कश्चिन्महाननर्थो भवति । केनचित् कुत्राप्यादर्शपुस्तकेऽविद्यमानः सावग्रहपाठनिवेशनेनाशुद्धः कल्पितः पाठो निवेशितः, टीकाकारान् प्रति महानन्यायश्च कृतः । प्रार्थयामहे च सांप्रदायिकग्रन्थमुद्रणकर्तारः प्राचीनादर्शे विद्यमानानेव पाठान् मुद्रणे रक्षन्तु, न तु स्वमनःकल्पितान्, यतो यः पाठोऽस्माकमशुद्धः प्रतिभाति स अन्येषामत्यन्तसमीचीनो भातीति ।

अस्य पायव्याख्याटीकासमेतसेवाफलग्रन्थस्य मुद्रणव्ययो गोस्वामिवर्यश्रीजीवनलालैः सहर्षं कृत इति तेषामुपकृतिं वयं सविनयं स्मरामः, प्रार्थयामहे चान्येऽपि गोस्वामिनः श्रीमन्तो वैष्णवाश्च एवमनुकुर्युरिति । एतेषां गोस्वामिवर्याणां कृपयैव सेवाफलं द्वादशविवरणयुतं मुद्रितं सांप्रदायिकानां सुगममभिप्स्यतीति ।

मार्गशीर्षकृष्णनवमी,
श्रीमत्प्रभुचरणप्राकट्योत्सवः

मूलचन्द्र तेलीवाला ।
धैर्यलाल सांकलीया ।

# सेवाफलतात्पर्यम्।

सेवायां मकरन्दपानमधुपौ लोकोत्तरौ तत्सुतौ ॥
श्रीकृष्णं वरसुन्दरं मधुरिमामूर्तिं तदास्यप्रभून्। व्याख्यानानि विलोक्य तानि विवृतिं सन्दोहरूपां यते
नत्वा तानखिलान् निगूढहृदयान् सेवारससास्वादकान्।

निःसाधनजनोद्धारप्रकटिततनुभिः श्रीमदाचार्यवर्यैर्निजजनाः स्वल्पेनैव प्रयासेन सर्व-
सिद्धान्तं जानीयुरितिकृपया षोडशग्रन्थाः प्रकटीकृताः। यद्यपि तं तमधिकारिणमुद्दिश्य
आचार्यैरेते ग्रन्थाः प्रणीतास्तथाप्याचार्याणां यावन्त्य उक्तयस्तासां न्यायरूपत्वात् तत्ता-
त्पर्यं सर्वथा सर्वदा त्रिकालाबाध्यमपरिच्छिन्नमिति तु निर्विवादं तद्ग्रन्थाध्येतॄणाम्। यथा
नवरत्नो देवश्रीगोविन्दमुद्दिश्य प्रकटीकृतस्तथैव सेवाफलं श्रीविष्णुदासमुद्दिश्य प्रकटितम्।
षोडशग्रन्थेषु सेवाफलग्रन्थस्त्वन्ते वर्तते। अस्य ग्रन्थस्य निगूढार्थत्वात् सकलपुरुषार्थ-
पर्यवसानप्रतिपादकत्वात् स्वयमेवाचार्यास्तं विवृण्वन्तः। विवरणसहित एव सेवाफलग्रन्थो
महानुभावैस्तैस्तैर्गोस्वामिभिर्भट्टैश्च यथाशक्ति यथामति विवृतः। तत्र मिलितानां द्वादशविवर-
णानां संग्रहोऽत्र कृतः। यद्यप्येतासां टीकानां विषयोऽयं ग्रन्थस्तथाप्यस्य गूढार्थत्वं तु नैवापैति।
आदौ तावद्यथा बालबोधोऽस्माभिः पूर्वं पुष्टिभक्तिसुधायां प्रस्तरेण स्पष्टीकृतस्तथैवे-
ममपि ग्रन्थं प्रस्तरेण स्पष्टीकरिष्यामः, एतेनास्य ग्रन्थस्याशयो विशेषतः सुगमो भविष्यतीति।



सेवा—नृणामात्यन्तिकनिःश्रेयससिद्ध्यर्थं श्रीमदाचार्यैः पूजामार्गाद्भिन्नः सेवामार्गः स्नेहप्रधानः प्रवर्तितः। अस्मिन् मार्गे स्नेहस्य प्राधान्यं न विधेः। सेवाशब्दार्थः श्रीमदाचार्यैः सर्वनिर्णयेपि दर्शितः। 'भक्तिशब्दस्य धात्वर्थः सेवा प्रत्ययार्थः प्रेमेति'। अनर्थमूलाहन्ताममताया नाशं विना चित्तस्य प्रवणं भगवति न भवतीत्येतदर्थं प्रथमं तनुजवित्तजसेवोपदिश्यते श्रीमदाचार्यैः। अहन्तारूपस्य देहस्य ममतारूपस्य वित्तस्य विनियोगो यदा भगवति सर्वांशेन भवति तदा तादृश्यहन्ताममताया विपरिणामो भवति, चित्तस्य सर्वतः सम्बन्धे निवृत्ते तस्य भगवति स्थितिर्भवति। भगवदीयस्य तदाहन्ताममतापि भगवदीया भवति। सा तु न बाधिका, प्रत्युत परमफलसाधिका। देहवित्तस्य भगवति विनियोगः साक्षाच्छ्रीमद्गोपीजनवल्लभोपदिष्टप्रकारेण महाप्रतिज्ञारूपसर्वस्वसमर्पणद्वारा श्रीमदाचार्यैः स्वशरणागतजीवानां कृतः। तदैव ते जीवा भगवदीया भूत्वा ज्ञाननिष्ठजीवानां परमकष्टेनासाध्यं जीवन्मुक्तिब्रह्मावबोधरूपमवान्तरफलमनायासेन प्राप्तवन्तः। एतादृक्प्रकारेण चित्तप्रवणद्वारा यदा भगवदीयस्य सेवा मानसी आधिदैविकी भवति, तदा सा स्वतःफलरूपा भवति। तादृशां विरलभक्तानां तु सेवां विना न किमप्यपेक्षितम्। एतदेवोक्तं श्रीभागवते 'मधुद्विट्सेवानुरक्तमनसामभवोपि फल्गु'रिति। ईदृशी स्वतःफलरूपा सेवा केवलभगवदनुग्रहैकलभ्या। अतोस्मिन् ग्रन्थे यत्फलमुच्यते तत्पुष्टिमार्गीयसेवाया एव, न केवलमर्यादामार्गीयाया वा केवलप्रवाहमार्गीयाया वा। अत्र श्रीहरिराया वा श्रीमदाचार्यैः केवलाया मानस्या एव फलमुच्यत इति विचार्य तस्याः फलत्रयमुक्तवन्तः। श्रीपुरुषोत्तमाः तनुजवित्तजसहितमानसीसेवायाः फलमुच्यत इति विचार्य तस्याः फलमुक्तवन्तः। केचित्पुष्टिपुष्टिपुष्टिमर्यादापुष्टिप्रवाहसेवायाः क्रमेण फलत्रयमुक्तमाचार्यैरिति वदन्ति। सर्वैरपि सिद्धान्तमुक्तावलीप्रोक्ता सेवोपन्यस्यते। श्रीमदाचार्याणां वाचां निगूढार्थत्वात् विवरणकाराणां भिन्नभिन्नाधिकारवत्त्वात् यादृशोधिकारस्तादृशी स्फूर्तिरिति सर्वेषां मतानामाचार्याशयाविरुद्धत्वात् सर्वेषामविरोधस्तु सिद्ध एव। अयं सेवामार्गस्तु केवलप्रेमप्रधानः, नैवात्र क्रियाया वा ज्ञानस्य प्राधान्यम्। भगवद्भाववतां सर्वेषामनाधिकारः। एतादृशीपुष्टिमार्गीयसेवायाः फलत्रयमुच्यते, उत्तममध्यमसाधारणभेदक्रमेण। तत्रोत्तमायाः फलमलौकिकसामर्थ्यं पुष्टिपुष्टेः। सायुज्यं मध्यमायाः पुष्टिमर्यादायाः। सेवोपयोगिदेहो वैकुण्ठादिषु साधारणायाः पुष्टिप्रवाहायाः। जयगोपालभट्टास्तु एतत्क्रमं नैवाङ्गीकुर्वन्ति। तेषां मते सायुज्यमेव परमं फलम्, अलौकिकसामर्थ्यादि गौणं फलम्। लक्ष्मणभट्टास्तु अत्यन्तरङ्गान्तरङ्गबहिरङ्गाणां सेवानां क्रमेण फलं दर्शयन्ति।

अलौकिकसामर्थ्यम्:—भगवता सह गानादिसामर्थ्यं मुख्यानामिवेति श्रीकल्याणरायाः। अलौकिकभजनानन्दानुभवे स्वरूपयोग्यतेति श्रीगोपेशाः। श्रीमद्व्रजस्थोक्तरीत्या इतरप्रमाणागोचरमितरसाधनाप्राप्यं सर्वात्मभावैकलभ्यभजनानन्दानुभवलक्षणमिति श्रीदेवकी-

नन्दनाः । भगवतः कोटिसूर्याग्निरूपस्यात्यन्तिकफलदित्सायां सर्वलीलाविशिष्टस्य प्रभो-
र्हृदयप्रवेशे तदनुभवसामर्थ्यमिति श्रीहरिधनचरणाः । सर्वाभोग्यसुधेतिश्रीवल्लभाः । पर-
प्राप्तिविवरणश्रुत्युक्तभगवत्स्वरूपानुभवे 'प्रदीपवदावेश' इतिसूत्रोक्तरीतिकभगवदावेशजा
योग्यता यया रसात्मकस्य भगवतः पूर्णस्वरूपानन्दानुभव इति श्रीपुरुषोत्तमाः । तदनु-
सारिणश्चानुक्तत्वात् तथैव । साक्षात् श्रीवृन्दावनादौ श्रीकृष्णस्वरूपदर्शनस्पर्शनादिकृति-
क्षमत्वमितिलालूभट्टाः । कस्यचिदेतत्सद्भाते कस्यचिदेतद्देहपातोत्तरं वृन्दावनादिष्वलौकिक-
सद्भातेन प्रियतमभगवत्सङ्गम इति जयगोपालभट्टाः । भगवत इवालौकिकमेव ज्ञान-
क्रियाभ्यां सामर्थ्यं जगद्व्यापारवर्जमिति लक्ष्मणभट्टाः । साक्षाद्भगवत्सम्बन्धरूपम्, हीन-
जीवस्योत्तमभगवता सह साम्येन रतौ रसोद्बोधश्चेतिविवृतिटिप्पणीकाराः ।

इदं त्ववधेयम् । अत्र सर्वेषां टीकाकाराणां मतानि प्रायो भिन्नानीत्यतोनुमीयते
यदत्राचार्यैर्न किमपीदमित्थतया विवक्ष्यते । जयगोपालभट्टं विना सर्वेपि टीकाकारा
अलौकिकसामर्थ्यमुत्तमफलत्वेन मन्यन्ते । नैवेदं फलं जीवकृतिसाध्यम्, परन्तु केवल-
भगवदनुग्रहैकसाध्यम् । ब्रह्मानन्दात् समुद्धृत्येदं फलं भगवता वृतेषु विशेषकृपया दीयते ।
कीदृश तद्दानं तन्निश्चेतुं नैव शक्यते, भगवदिच्छाधीनत्वात् तस्य । एतत्फलं तु गोपवधू-
सदृशस्वतन्त्रप्रेमात्मकोत्कटभक्त्या परमसंतुष्टेन भगवता विशेषानुग्रहस्यापनाय क्वचिद्
दीयते । कोटिब्रह्माण्डादीनामखिलनियामकः सन्नप्यत्र स्वेच्छया भक्तमनोरथपूरणाय
भगवान् तद्वश्यो भवति । अखिलं जगत् स्वेच्छया लीलया नर्तयन्नपि परमार्द्रो भूत्वा
भक्तमनोरथानुसारेण तद्वशः सन् स्वयं नृत्यति भगवान् । सर्वज्ञो भूत्वापि यशोदायाः
सन्निधौ महामुग्धवत् तिष्ठति । भक्तमम्बरीषं स्वयं रक्षन्नपि भक्तापराधक्षमाकरणाय
स्वस्याशक्तिं कथयन् दुर्वाससं प्रति भक्तवश्यतां प्रकटयति । अखिलं विश्वं स्वमायया
बन्धयन्नपि श्रीमन्मातृचरणानां भक्त्यतिशयेन स्नेहातिशयेन तद्वशः सन् स्वयं श्रीमद्यशोदया

१ ननु किमर्थं भगवानेतावत्कृत्वा यन्धनरूपो जात इति चेत् तत्राह एवमिति । एवमप्रकारिणि लोके स्वकीमत्वमात्राभिमानेनापि एतावतीमभूतपूर्वां कृपा करोतीति स्वस्य भक्तवश्यता प्रदर्शिता । प्रदर्शन-स्यापि प्रयोजनमाह हरिणेति । स हि सर्वदु सहतां तत्प्रसिद्ध्यर्थमसम्बन्धेन दु सहतुंरवेतिप्रसंगात् ससार-विलय स्यादिति सज्जनार्थकृपालुना प्रदर्शयति । कृपा च सर्वधर्मधर्मिभ्यो बलिष्ठेति वक्तु भक्तवश्यता-शब्देनैवोक्ता । ननु भक्त्या चेद्धर्मधर्मिणामुपमर्द क्रियते तदा स्वरूपस्य प्रच्युतत्वात् फलाभावात् प्रदर्शन-मपि व्यर्थं स्यादित्याशक्याह स्ववशेनापीति । स हि स्ववश एव, न केनाप्युपमर्द । अनेन फलसाधकत्व-मुक्तम् । फलरूपत्वमाह कृष्णेनेति । नन्वेवं कृते अन्यो महान् मन्यादिर्न भवते, ततो माहात्म्यस्य न्यूनभावाम तथा फलत्वमित्याशक्याह यस्येद सेश्वरं वश इति । तत्तदधिष्ठातृदेवतासहित सर्वं यस्य जगत् वशे । अतो नान्यभावन केनचिदपि कर्तुं शक्यमिति भाव ।नेमं विरिञ्चो न भवो न श्रीरप्यगसंश्रया प्रसाद लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् । एव समनोरथे सिद्धे-।

दाम्ना बद्धो भवति। ईदृशं किञ्चित्प्रकारकं सामर्थ्यं यत्र भक्त्यतिशयेन प्रेमातिशयेन भगवान् भक्तवश्यः सन् तत्कामान् पूरयति तत्र प्रकटीभवति। इदमेवोत्तमं फलं श्रीमदाचार्याणामभिप्रेतमिति नात्र संशयः। श्रीमद्गोकुलनाथानां श्रीमत्पुरुषोत्तमानामप्ययमेवाभिप्रायः। 'सोऽश्नुते'श्रुतिरपि भक्तस्य विविधरसभोगचतुरेण रसेश्वरेण भगवता सह भोगं निरूपयन्ती भक्तस्य प्राधान्यं भगवतो गौणत्वं स्पष्टमेव कथयति। प्राप्तं फलं यावत्पर्यन्तं स्वाधीनं न भवति तावत्पर्यन्तं तस्य फलत्वमपि न प्रकटीभवति। रसशास्त्रेऽपि रसाधिक्ये पुंभावः प्रतिपाद्यते। अर्थाद्भगवतो गौणत्वं भक्तस्य प्राधान्यं यत्र भवति तत्रैवालौकिकसामर्थ्यं प्रकटीभवति। स्वस्य स्वातन्त्र्यं पालयन् भक्ताधीनो भूत्वा तन्मनोरथान् पूरयन् स्वस्य विरुद्धधर्माश्रयत्वं महामाहात्म्यं च प्रकटीकुर्वन् भगवान् श्रीकृष्ण एव परमफलरूपोऽलौकिकसामर्थ्यरूपः श्रीमदाचार्याणां हृदयशेये नित्यं रमते स्म। बहिरपि श्रीमदाचार्याणां सन्निधौ अखिललीलाविशिष्टो भगवान् कृष्णो रममाणः प्रकटतया भक्तवश्यतां प्रदर्शयन् निरन्तरं स्वदृग्विषयो भवति। एतादृशं भगवतः परमं फलं वाङ्मनसागोचरं सत् शब्दैः कथं प्रतिपादयितुं शक्यते। अनुभवैकवेद्यत्वात् तस्य। अत एवाचार्यैः तादृशनिगूढत्वप्रदर्शनाय 'अलौकिकसामर्थ्य'-मिति परमनिगूढशब्दप्रयोगः कृत इति प्रतिभाति। अत्रापि सर्वेषां टीकाकाराणामविरोधस्तु अनुक्तसिद्ध एव। सर्वेषां भिन्नाधिकारवत्त्वात् भगवतः स्वतन्त्रेच्छत्वाच्च कीदृशं दानं भगवान् करिष्यति तन्न ज्ञातुं शक्यत इति। श्रीपुरुषोत्तमचरणैस्तु अविरोधप्रकारोऽतिसुन्दरतया प्रतिपादितः, अतस्तदेवास्माभिरत्रानूद्यते। एतत्सर्वं भगवतो नानाविधप्रवेशहेतुकत्वाद्भगवदिच्छायाश्च ज्ञातुमशक्यत्वादुपपन्नमिति।

सायुज्यम्;—सह युनक्तीति सयुक्, सयुजो भावः सायुज्यम्, सहभावः गोपानामिवेति श्रीकल्याणरायाः। भक्त्या मामभिजानातीत्युक्तो भगवत्स्वरूपे लय इति श्रीगोपेशश्रीदेवकीनन्दनश्रीपुरुषोत्तमाः लालूभट्टाश्च। विवृतिटिप्पणीकारा अपि तथैव। संयोगानुभवसामर्थ्यम्, भगवता सह सततस्थितिरेव सार्वदिकसंयोगरसानुभव इतिश्रीहरिधनचरणाः। सोऽश्नुत इतिश्रुत्युक्तसहभावेन भगवता सह भोग इतिश्रीवल्लभाः। शुद्धपुष्टिमार्गीयभेदसम्बन्धघटितं केवलेन हि भावेनेत्यादिवाक्यैरत्युत्तमकृपया अक्षभावज्ञानवैराग्यनिरपेक्षप्रेमासक्तिव्यसनरूपकेवलभावजनितभगवत्सहभावविशिष्टसार्वकालिकसर्वकामभोगरूपमिति जयगोपालभट्टाः। उभयविधमपि सायुज्यमितिलक्ष्मणभट्टाः। तथा चात्र द्विविधं सायुज्यम्। रूढार्थकं यौगिकार्थकं च। तत्राद्यं ज्ञानमिश्रितानामेकत्वरूपम्, अभेदरूपं भेदात्यन्ताभावरूपमात्मनैक्यम्। शुद्धभक्तानामपरम्, भेदतस्तद्वशरसित्वतस्तदानन्दानुभवात्। पूर्वत्र देहेन्द्रियप्राणान्तःकरणानि विहायैव स्वात्मनैव केवलेन तदानन्दानुभवः,

१ यत्र च भक्तस्य स्वातन्त्र्यं तदिच्छानुसारेण भगवत्प्रवृत्तिः यथा दामोदरलीलायां सा पुष्टि। नि. १०२.

अपरञ्च सहैव तैरिति सार्थकतैषाम्, अन्यत्र नेति । अत्रापि पूर्ववदविरोधस्तु सिद्ध एव । व्याख्यानस्य प्रकारद्वयम् । एकं शास्त्रीयम्, अपरं भक्तिमार्गीयम् । श्रीहरिरायादयो भक्तिसरणीमनुसृत्य यौगिकार्थकं सायुज्यमङ्गीकुर्वन्ति । श्रीपुरुषोत्तमादयः शास्त्रीयसरणीमनुसरन्तो रूढार्थकं सायुज्यमङ्गीकुर्वन्ति, तथापि यौगिकार्थसायुज्यग्रहणे नैव तेषां प्रद्वेषः, प्रत्युत सम्मतिरपि वर्तते, यतः तैरपि निबन्धे 'आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यये'त्यत्र तथैव सायुज्यशब्दो यौगिकार्थे व्याख्यातः । श्रीपुरुषोत्तमरीत्या विचार्यमाणे इदं सायुज्यं पुष्टिमर्यादायाः फलं भवति । श्रीहरिरायरीत्या विचारिते तु इदमपि फलं मानस्याः शुद्धपुष्टेरेवेति भेदः । अत्रेदमपि ध्येयम्, शास्त्ररीत्या जीवस्य प्राप्यफलस्य विचार्यमाणे सायुज्यपर्यन्तं बुद्धिरारोहति, तदतीते अलौकिकसामर्थ्ये तु न । अत एवाचार्याः प्रायः सर्वत्र फलं निरूपयन्तः सायुज्यशब्दं प्रयुञ्जन्ति । स्वस्मिन् लयं कारयित्वा अनुग्रहविशेषेण पृथगाविर्भावयित्वा यदा फलं दातुं प्रभुरिच्छति, तदा भक्तस्य तदनुभवोपि नैव स्वरूपेण, परन्तु भगवत्कृततत्प्रवेशहेतुकः, प्रभुरेव तस्यानुभवात्मा तदैव भवति । तस्यामवस्थायां यत्र सर्वोपि व्यवहारो भगवदीय एव, आत्मत एव इदं सर्वम्, तत्र द्वैताद्वैतयोः प्रश्नो नैवोत्तिष्ठति । तथापि भेदेनानुभवं विना भक्तिरसस्यानुभवो सामान्यतो न भवतीति विचार्य श्रीगोकुलनाथश्रीहरिरायादिभिर्द्वैतविशिष्टाद्वैतपक्षः क्वचिदुपन्यस्तः । वास्तवं श्रीमदाचार्यप्रतिपादितं शुद्धाद्वैतमेवाखण्डितं तेषां मते भवति । तथापि तत्पक्षमनुसृत्य तैः सायुज्यशब्दस्तथैव यौगिकार्थे व्याख्यातः । अतो न कुत्रापि विरोधः । अत्र जयगोपालभट्टास्तु श्रीहरिरायवत् सायुज्यशब्दं यौगिकार्थकमङ्गीकुर्वन्तः सायुज्यमेव परमं फलमलौकिकसामर्थ्यादि गौणं फलमिति मन्यन्ते, तन्नैवास्माकं मनस्यायाति । विप्रयोगस्य परमफलत्वं संयोगस्य मध्यमफलत्वं यच्छ्रीहरिधनचरणैः प्रोक्तं तदपि परमाग्रहेण खण्डयन्ति । परन्तु तत्रापि दृष्टिभेदत एव विचारवैषम्यं भासते । श्रीहरिरायादयः विप्रयोगमेव परमफलत्वेन मन्यन्ते, संयोगादयस्तेषां मते व्यभिचारिभावाः, विप्रयोगस्तु स्थायिभावः । श्रीमत्प्रभुचरणाः संयोगं परमफलत्वेन मन्यन्ते, तत्र संयोगः स्थायिभावः, विप्रयोगादयः व्यभिचारिभावाः । आचार्यास्तु 'आन्तरं तु महाफलं'मित्यत्र विप्रयोगस्य महाफलत्वं दर्शयन्ति । अत्र विरोधस्तु नैवाणुरपि । आचार्याणां विप्रयोगरूपत्वात् श्रीमत्प्रभुचरणानां संयोगरूपत्वादुभयरूपेण प्रभुः फलरूपेण उभयद्वारा प्रकटीभवन् स्वीयानां मनोरथान् पूरयिष्यन् निजां सुधां वर्षयिष्यति कथं केति न ज्ञातुं शक्यते । अतः सर्वमत्र प्रतिक्षणनूतनत्वात् रमणीयमेव । किञ्च, रसरूपः प्रभुरेव परमं फलम् । रसस्योभयदलविशिष्टत्वात् संयोगरूपेण विप्रयोगरूपेण वा फलत्वं तस्य नैव व्यभिचरति । यस्य निष्ठा विप्रयोगे भवति स तं प्रधानीकृत्य संयोगं मध्यमफलत्वेन मन्यते, यथा श्रीहरिरायादयः । यस्य निष्ठा संयोगे भवति स तं प्रधानीकृत्य विप्रयोगं

मध्यमफलत्वेन मन्यते, यथा जयगोपालादयः । श्रीमदाचार्यास्तूभयदलविशिष्टमपि प्रभुस्वरूपं परमफलरूपं मन्वानाः विप्रयोगस्य क्वचित्प्राधान्यं दर्शयन्ति, क्वचित्संयोगस्य । उभयस्य परमफलत्वे तु नैव सन्देहः, तथापि यादृशं भगवता दानं तादृशी रुचिरुत्पद्यते । अतो भगवतो रसरूपत्वात् तस्य च भावविभावानुभावैः पुष्टत्वात्, स्वपूर्णप्राकट्यकरणार्थमत्र विविधमतप्रदर्शनं भगवता स्वकृतभगवदीयद्वारा कृतमिति प्रतिभातीति सर्वं समञ्जसम् ।

सेवौपयिकदेहो वैकुण्ठादिषु—सेवायां क्रियमाणायामेवानुग्रहविशेषाभावात् साक्षात् सेवानुपयोगे अन्यैः तादृशसाक्षाद्रसानुभवकर्तृभिः क्रियमाणायाः सेवाया उप समीपे योगः सम्बन्धः तद्वत्पक्ष्यादिशरीरप्राप्तिरितिश्रीहरिधनचरणाः । देहेन्द्रियासुहीनः पुरुषस्त्रीपशुपक्षिवृक्षाद्याकृतिः संस्थानविशेष इति श्रीपुरुषोत्तमचरणाः । व्यापिवैकुण्ठादौ पार्षदादिदेहप्राप्तिरिति लालूभट्टाः । 'गोकुलं वनवैकुण्ठमितिकृष्णोपनिषदुक्तेः प्रपञ्चातीतभगवन्निवासस्थानं व्यापिवैकुण्ठान्तर्गतं बृहद्वनं नन्दीश्वरं चोच्यते । आदिपदेन श्रीवृन्दावनश्रीमद्गोवर्धनादि च । तत्र सायुज्यफलादानेधिकारः सेवौपयिकदेहरूपो वाथवा भवतीत्यर्थः । वैकुण्ठान्तरस्य शुद्धपुष्टिमार्गीयफलरूपभगवल्लोकत्वाभावाद् गोकुलस्यैव तादृग्भगवल्लोकत्वाद् वैकुण्ठपदेन श्रीगोकुलम्, आदिपदेन वृन्दावनादिकं चाभिप्रेतमितिजयगोपालभट्टाः । अप्राकृतभूतभौतिकतृणलतौषधिवृक्षपशुपक्ष्यादिदेहः अधिकारात्मा, तत्र सेवोपयोगी योग्यः, वैकुण्ठपदेन मुख्येऽमुख्ये च । आदिपदेन स्वर्गादिषु विष्णोः स्थानेष्वपि तथेतिलक्ष्मणभट्टाः । अलौकिकदेहवयोगुणादिकमितिविवृतिटिप्पणीकाराः । रमाप्रार्थितवैकुण्ठक्षीरोदश्वेतद्वीपेषु भगवत्सेवायोग्यदेहप्राप्तिरितिश्रीगोपेशाः । तथैव श्रीदेवकीनन्दनाः । आदिपदेन श्रीमथुरावृन्दावनादिकं ग्राह्यमितिश्रीवल्लभाः । आदिपदेन भूलोके उद्धवादीनामिव गवादीनामिवेति वा सेवोपयोगिदेहप्राप्तिरितिश्रीकल्याणरायाः । अत्रेदं ज्ञेयम् । श्रीगोपेशाः श्रीदेवकीनन्दनाः क्रमेण मर्यादाभक्तेः प्रवाहिकभक्तेः फलं वदन्ति, अन्ये तु पुष्टिभक्तेः साधारणभक्तेर्वा फलं वदन्तीति दृष्टिभेदतस्तारतम्यम् ।

उद्वेगः—सेवायां क्रियमाणायामन्यत्र गमनेच्छादिरितिश्रीकल्याणरायाः । मनसः सेवायां क्रियमाणायामुत्कृष्टो वेगः, सर्वथा तत्रास्थिरता बाहिर्मुख्यमितिश्रीहरिधनचरणाः । मनसोन्यपरतेतिश्रीवल्लभाः । उच्चैर्भयं चलनं वा, सेवायां क्रियमाणायां दुष्टादिभ्यो मनसो भयं पापादिना बुद्धेश्चाञ्चल्यमितिद्विप्रकारकमुद्वेगं श्रीपुरुषोत्तमा आहुः । भगवत्सेवासमये चित्तक्लेशप्रदश्चाञ्चल्यविशेष इतिलालूभट्टाः । अन्ये तु विशेषं न कथयन्ति । अयमुद्वेगः सेवायां प्रतिबन्धरूपत्वात् त्याज्यः । आचार्याः प्रथममुद्वेगादित्रयं ससाधनं त्याज्यत्वेनोक्त्वाग्रे तत्त्याज्यत्वात्याज्यत्वविभागं च कृत्वा पश्चाद्द्वयोः साधारणप्रतिबन्धलौकिकभोगयोः त्याज्यत्वं निरूपितवन्तो न तूद्वेगस्यापि, अत उद्वेगस्य कथञ्चिद्भिन्न एव प्रयोगेभिमत इति विचार्य श्रीपुरुषोत्तमाम्नाया अनुक्तेः कारणं दर्शयन्त उद्वेगस्याशुकांशेन अत्याज्यत्वमपि सूचयन्ति ।

प्रतिबन्धः—सेवासमये लौकिकवैदिककार्यान्तरासक्तिरन्यकृतान्तरायादिश्चेतिश्रीकल्याणरायाः श्रीहरिरायाश्च । वेदनिन्दा म्लेच्छबलिष्ठबहिर्मुखजनितोपद्रवश्चेतिश्रीगोपेशाः । कायस्यान्यपरतेतिश्रीवल्लभाः । तत्प्रतिकूलो निग्रह इतिश्रीपुरुषोत्तमाः । सेवायां रुचौ सत्यामपि तत्समये लौकिकवैदिककायिकादिकार्यासक्तिरूप इतिश्रीपुरुषोत्तमास्तदनुसारिणश्च । प्रतिबन्धकं तूदासीनं दुःखसुखे प्रयच्छतीतिलालूभट्टाः । अयं प्रतिबन्धो द्विविधः । साधारणो भगवत्कृतश्च । साधारणो बुद्ध्या त्याज्यः । भगवत्कृतस्तु न । भगवत्कृतप्रतिबन्धे तत्त्वनिर्धारविवेकौ साधनरूपौ, तेन फलं शोकाभावः, न मुक्तिः । विशेषस्तु स्पष्टः, टीकासु दर्शितत्वादत्रानुपयोगित्वाद् विस्तरभयाच्च नानूद्यते । तत्त्वनिर्धाररूप आसुरत्वनिश्चयः, भगवान् फलं न दास्यतीति विवेकश्च स्पष्टतया टीकाकारैरनूदितौ ।

भोगः—लौकिकालौकिकभेदेन द्विविधः । लौकिकस्त्याज्यः । लौकिकभोगस्तु गृहत्यागं विना न सिध्यतीत्यतो 'भोगाभावस्तदैव सिध्यति यदा गृहपरित्याग' इत्याचार्यैरुक्तम् । अलौकिकभोगस्तु ग्राह्यः । भगवन्निवेदितानां भोगोऽलौकिकभोगः । अलौकिकसामर्थ्यमिति प्रायः सर्वे वदन्ति, श्रीवल्लभास्तु प्रथमफलं सेवोपयोगिदेह इति वदन्ति । भगवत्स्मरणसहितकृतभोगस्तु नैव बाधकः ।

एवं सेवायाः फलं बाधकं चोक्त्वा आचार्याः स्वोक्तेः सर्वदा भावनमुपदिशन्ति । यद्यपीयं भावना न स्वकृतिसाध्या तथापि कर्तव्येति तथैव सर्वैरनूद्यते । गुणक्षोभेपि तद्भावनमेव कर्तव्यम्, अन्यत् सर्वं मनोभ्रमः । गुणक्षोभशब्दस्तु टीकाकारैर्द्विधा सामान्यतो व्याख्यातः । केचिदश्रुपुलकादिक्षोभ इति वदन्ति, अन्ये तु सत्त्वरजस्तमसां क्षोभ इति वदन्ति । उभयथापि भगवच्छरणभावनमेवाचार्याणां स्पष्टमभिमतमिति न नैव सन्देहः । तदीयैरपि तदेव कर्तव्यम्, फलाविलम्बाय, यतोऽधुना जीवानां पुष्टिमर्यादायामेवाङ्गीकारः । यथाहुः श्रीहरिधनचरणाः 'साम्प्रतं तु पुष्टिमर्यादायामेवाधुनिकानामङ्गीकाराद्भजनसिद्धिविलम्बसद्भावेन तावत्पर्यन्तं प्रोषितभर्तृकाया इव फलप्रतिबन्धभावनं सर्वदा कार्य'मिति । अत्राचार्यैरुक्तं 'अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः' इति वाक्यं पुष्टिमार्गीयस्याधुनिकस्य कीदृशं कर्तव्यमिति स्पष्टतया ज्ञापयति । सर्वप्रमाणातीतो वाङ्मनसागोचरः सर्वतन्त्रस्वतन्त्रो भगवान् केनचित्साधनेन प्राप्यते इति तु नैव वक्तुं शक्यम् । अत एव भगवत्प्रापकत्वेन किञ्चित्साधनं भगवदतिरिक्तं पुष्टिमार्गे वर्तते इत्यपि तु वक्तुं नैव शक्यम् । साम्प्रतं वेदमार्गस्य प्राय उत्सन्नत्वात् सोपि भक्तिमार्गस्य पुष्टिमार्गस्याङ्गत्वेनात्रैव प्रविशति । अतः पुष्टिस्थितो भगवान् मर्यादास्थितसाधनैर्नैव प्राप्तुं शक्यते, अत एवोभयथा पुष्टिमार्गस्य निःसाधनत्वं स्फुटं प्रतीयते । तथापीदं विचारणीयम् । श्रीहरिरायश्रीपुरुषोत्तमादिभिरधुनातनवतारदशा प्रचलतीति प्रतिपाद्यते, सांप्रतं जीवानां पुष्टिमार्गीयाणामङ्गीकारोपि पुष्टिमर्यादायामेव भवतीत्यपि तैरेवोच्यते ।

तेन यद्यपि जीवैर्भगवत्प्रेरणं विना किमपि कर्तुं स्वबलेन नैव शक्यते, तथापि भगवत्प्रेरणया भगवद्बलेन यच्छक्यं भवति तदवश्यं कर्तव्यम्, स्वनिर्वाहाय प्रोषितभर्तृकावत्। यद्यपि एतत्फलरूप भावन भगवत्कर्तृकमेव तथापि एतदेव भगवच्चरण-भावन कर्तव्य न तु तूष्णीं स्थेयम्। पुष्टिमार्गस्य भगवद्रूपत्वाद्भगवतो विरुद्धधर्माश्रयवत्त्वात् तस्यापि तथात्वादस्मिन् मार्गे भासमानो विरोधोपि विरोधाभास इवालंकाररूप एव। साधन फलरूपो भगवानेव। तथाहुः श्रीमत्प्रभुचरणा निबन्धे 'भक्तिमार्गे तु भगवान् स्वत एव यदा भक्तेपु सर्वं सम्पादयति स्वीयत्वेन, तदा भक्तः स्वाङ्गीकार सर्वात्मना ज्ञात्वा स्तुत्यादिपु स्वाधिकार जानाति ततः स्तौति। अथवा सर्वात्मना स्वांगीकारज्ञानेनान्तरानन्दे पूर्णे बहिरपि सर्वेन्द्रियेपु प्राकट्यसमये वाचि स निर्गच्छन् स्तुतिरूपो भवती'ति। यावन्ति साधनानि तानि न भगवत्प्रापकाणि, तेषां स्वरूपयोग्यतासम्पादकत्वात्। विशेषस्तु स्थलसंकोचाद् गुजरातुवादे प्रतिपादयिष्यत इति।

॥ श्रीकृष्णार्पणमस्तु ॥

मार्गशीर्षकृष्णनवमी,
श्रीमत्प्रभुचरणप्राकट्योत्सव

मूलचन्द्र तेलीवाला।
धैर्यलाल सांकलीया।



श्रीमद्वल्लभाचार्यचरणाः ।



## सेवाफलम् ।

यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।
अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥
फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः ।
उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥
अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।
यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥
बाधकानां परित्यागो भोगेऽप्येकं तथा परम् ।
निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥
सविघ्नोऽल्पो घातकः स्याद् बलादेतौ सदा मतौ ।
द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥
न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।
अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥
तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।
गुणक्षोभेऽपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥
कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥

इतिश्रीमद्वल्लभाचार्यचरणप्रकटितं सेवाफलं समाप्तम् ॥

॥ श्रीनाथजी ॥



## सेवाफलविवरणम् ।

सेवायां फलत्रयम् । अलौकिकसामर्थ्यम्, सायुज्यम्, सेवोपयोगिदेहो[१] वैकुण्ठादिषु । सेवायां प्रतिबन्धकत्रयम् । उद्वेगः प्रतिबन्धो भोगो वा । त्रयाणां साधनपरित्यागः कर्तव्यः । भोगो द्विविधः । लौकिकोलौकिकश्च । तत्र लौकिकस्त्याज्य एव । अलौकिकस्तु फलानां मध्ये प्रथमे प्रविशति । प्रतिबन्धोपि द्विविधः । साधारणो भगवत्कृतश्च । तत्र आद्यो बुद्ध्या त्याज्यः । भगवत्कृतश्चेत् प्रतिबन्धः तदा भगवान् फलं न दास्यतीति मन्तव्यम् । तदा अन्यसेवापि व्यर्था । तदा आसुरोयं जीव इति निर्धारः । तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति विवेकः । ननु साधारणो भोगः कथं त्यक्तव्य इत्याकांक्षायामाह 'सविघ्नोल्पो घातकः स्या'दिति । सविघ्नत्वादल्पत्वाद् भोगस्त्याज्यः । 'एतौ सदा' प्रतिबन्धकौ । द्वितीयो भगवत्कृतप्रतिबन्धः । ज्ञानस्थित्यभावे चिन्ताभावार्थमाह 'द्वितीय' इति । आद्यफलाभावे भगवतो दातृत्वं नास्ति, तदा सेवा नाधिदैविकीत्युक्तं भवति । भोगाभावस्तदैव सिध्यति यदा गृहपरित्यागः ॥

इतिश्रीमद्वल्लभाचार्यचरणप्रकटितं सेवाफलविवरणम् ।

१ सेवोपयिकदेह इत्यपि पाठः ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# सेवाफलम् ।

## श्रीकल्याणरायविरचितसेवाफलोक्तिविवृतिसमेतम् ।

श्रीमदाचार्यमार्गेण सेव्यमानोस्मदीश्वरः ।
निवारयतु नस्तापान् सुखसन्दोहसिद्धये ॥ १ ॥

श्रीमद्वल्लभाचार्यमार्गोक्तप्रकारेण सेव्यमानो भगवानितोधिकं किञ्चित् फलं दास्यति मुक्तिमेव वेति सन्दिग्धचेतसां समाधानार्थं श्रीमद्वल्लभाचार्याः सेवासिद्धौ फलं निरूपयन्ति **यादृशी सेवनेति** ।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**

भक्तिमार्गे सेवा मया यादृशी प्रकर्षेणोक्ता 'चेतस्तत्प्रवणं सेवे'ति तत्सिद्धौ सत्यां यत् फलं भवति तदुच्यते ।

अस्य ग्रन्थस्य गूढार्थत्वाद्विवरणमपि श्रीमदाचार्याः कृतवन्तः । सेव्यमानो भगवान् प्रसादानुसारेणोत्तममध्यमसाधारणप्रकारेण फलं प्रयच्छतीति त्रैविध्याद्विवरणे **सेवायां** फलत्रयमित्युक्तम् ।

तत्रोत्तमं फलमाहुः **अलौकिकसामर्थ्यमिति** । भगवता सह गानादौ सामर्थ्यं, मुख्यानामिव । मध्यमं फलमाहुः **सायुज्यमिति** । सह युनक्तीति सयुक्, सयुजो भावः सायुज्यं सहभावः, गोपानामिव । साधारणं फलमाहुः **सेवोपयोगी देहो वैकुण्ठादिष्विति** । आदिपदात्[3] भूलोके उद्धवादीनामिव ।

सेवासिद्धौ सत्यां यदि भगवानलौकिकं देहादिकं सम्पादयति तदा फलविषयको मनोरथोन्योपि सिध्यतीत्याहुः **अलौकिकस्येति** ।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**

अलौकिकस्य योग्यस्य शरीरादेर्दाने सति अधिकारसम्पत्तौ सत्यां पूर्वोक्तं फलं प्राप्नोतीत्यर्थः । हीति युक्तश्चायमर्थः । एतत् फलं साधनानां साधनासाध्यत्वात् । चोप्यर्थे ।

१ मत्तापानिति पाठः । २ सेवाफलसिद्धाविति पाठः । ३ भूलोकेषु गवादीनामिवेति पाठः ।

चाल्प इतिपाठे साधारणहीनमध्यमयोः कथञ्चित्सिद्धावपि भगवद्दानं विनोत्तमं फलं न सिध्यतीत्यर्थः ॥ १ ॥

कालकर्मवशादिदं कदाचिद्भवेदित्याशंक्याहुः फलं वेति ।

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः ।**

भजनानन्दलक्षणफले तदधिकारयोः **कालो नियामको** दाता प्रतिबन्धको वा न भवतीत्यर्थः ।

सेवासिद्धौ व्यवस्थया फलमुक्त्वा सेवासाधनदशायां बाधकान्याहुः उद्वेग इति ।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

सेवायां क्रियमाणायामन्यत्र गमनेच्छादिरुद्वेगः । सेवासमये लौकिकवैदिककार्यान्तरासक्तिः अन्यकृतान्तरायादिश्च **प्रतिबन्धः** । **भोगो** विषयाणाम् ।

एते त्रयः प्रत्येकं बाधकाः । तेनैतेषां **साधनपरित्यागः कर्तव्यः** । **भोगो द्विविधः** । **लौकिकोऽलौकिकश्च** । लौकिको लोकसिद्धः । यथा लोकाः स्वार्थमुद्यावचान् पदार्थानानीय भोगं कुर्वन्ति स **लौकिको बुद्ध्या त्याज्यः** । एतेन श्रुतिस्मृतिपुराणादिसिद्धो भोगो व्यावर्तितः । **अलौकिको** भगवद्दत्तः अम्बरीषादेरिव । स तु साधारणमध्यमोत्तमफलेषु प्रथमफले प्रविशति, यथा सेवोपयोगिदेहं दत्वा सेवां कारयित्वा प्रसादत्वेन दत्तानां भोगं कारयति भगवान् स **अलौकिकभोगो** न त्याज्यः । **प्रतिबन्धोपि द्विविधः** । **साधारणो भगवत्कृतश्च** । तत्र साधारणः पूर्वमुक्तः । स बुद्ध्या त्याज्यः । यस्य यत्साधनस्य च प्रतीकारो न सम्भवति स भगवत्कृतः । स यदा भवति तदा भगवान् फलं न दास्यतीति ज्ञातव्यम् ॥ २ ॥

**अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।**
**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥**

**अकर्तव्यं भगवतः** । अस्य श्लोकस्य विवरणं भगवत्कृतश्चेदित्यारभ्य विवेक इत्यन्तम् । तदान्यसेवापि व्यर्थेति । महादेवनारदादीनां भक्तिदातृत्वश्रवणान्महादेवादिभिरनया सेवातत्फलसिद्धिर्भविष्यतीत्याशया कृता महादेवादिसेवापि व्यर्था, नैतत्फलसाधिकेत्यर्थः । तदेति । तदा आसुरः आसुरावेशवान् आसुरभाववान् वायं जीव इति निर्धारो निश्चय इत्यर्थः । जीवस्यासुरत्वे सेवायां प्रवृत्त्यनुपपत्तेः । तदा कथं मयैनं भवतीति दोषाभावाय भगवानीश्वरः स्वेच्छया सर्वं ददाति मम प्रायेण मुक्तिमेव दास्यतीति ज्ञात्वा ज्ञानमार्गेण श्रवणमननिदिध्यासनानि कुर्वता स्थेयमित्यर्थः । यथा तत्त्वनिर्धारो भवति तथायं विवेको वा साधनं इत्यर्थः । अत्रायं भावः । दुःसङ्गाद् यादिर्मुख्ये भक्तापराधे वा प्रतिबन्ध करोति तदा अन्यसेवया स्वतो वा मुख्य फलं न भवतीत्यर्थः ॥ ३ ॥

ननु साधारणो लौकिको भोगः किमर्थं त्याज्यः, भोगेनैव सेवा कर्तव्येत्याशंक्याहुः सविघ्नोल्पो घातक इति ।

**सविघ्नोल्पो घातकः स्याद् बलादेतौ सदा मतौ ।**
**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ४ ॥**
**बाधकानां परित्यागो भोगेप्येकं तथा परम् ।**
**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ५ ॥**

सविघ्नत्वात् सर्वथा न सिध्यति । जायमानोप्यल्पसुखजनको भवति, भावघातकोपि भवति, अतस्त्याज्यः । ननु सावधानतया स्थितेर्न भोगप्रतिबन्धकयोर्बाधकत्वमित्यत आहुः सावधानेपि भोगप्रतिबन्धौ वस्तुसामर्थ्यादेव प्रतिबन्धकौ सम्मतावित्यर्थः । बाधकानामितिश्लोक एवं योजनीयः । **बाधकानां परित्यागः** कर्तव्यः । **भोगेप्येकं** परंसुरूपमेकं भोगं विहाय तथा परित्यागः कर्तव्य इत्यर्थः । यतो निःप्रत्यूहं यथा स्यात्तथा महान् भोगः प्रथमे प्रविशति । पूर्वं व्याख्यातमेतत् । **ज्ञानस्थितीति** । ज्ञानमार्गेण स्थितावपि प्रतिबन्धे या चिन्ता तदभावार्थमित्यर्थः । अत्रायं भावः । पूर्वं ज्ञानमार्गेण स्थातव्यमित्युक्तम् । अधुना श्रीकृष्णप्रसादाभावान्मुक्तिरपि न भवतीति स्वस्य संसारनिश्चयात् फलार्थं चिन्ता न कर्तव्येत्यर्थः । ननु पूर्वकृतसेवायाः सत्वात् फलं कथं न भवेदित्याशंक्याहुः **आद्येति** । आद्येन भगवता भगवत्कृतप्रतिबन्धेन फलाभावे कायवाङ्मनोभिस्तत्परतया कृतत्वाभावात् सा सेवा नाधिदैविकी, कायवाङ्मनोभिस्तत्परतया कृतत्वेपि भक्तापराधादिना भगवांश्चेत्तां न मन्येत तदा सा सेवा नाधिदैविकी भवति, भगवद्गामिनी न भवति । आधिदैविक्या एवैतत्फलसाधकत्वात् । **भोगेति** । **गृहपरित्यागः** गृहासक्तिपरित्याग इत्यर्थः । **द्वितीय इति** । द्वितीयो भगवत्कृतः प्रतिबन्धस्तस्मिन् सति फलं कथं स्यादिति चिन्ता संसारनिश्चयात् सर्वथा त्याज्येत्यर्थः ॥ ४ ॥ ५ ॥

ननु प्रतिबन्धसाधारणभोगयोः सत्त्वेपि साधनकरणे फलं स्यादित्याशंक्याहुः न त्वाद्ये इति ।

**न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**
**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

आद्ये भगवत्कृतप्रतिबन्धे भगवतो दातृता नास्ति । **तृतीये** साधारणभोगे गृहासक्तिर्बाधिकेत्यर्थः । **अवश्येयमिति** । इयं रीतिरवश्या, कर्तुमशक्यापि फलार्थं सदा कर्तव्यत्वेन भाव्या । अन्यत् सर्वसाधनं मनोभ्रमः स्वान्तभ्रान्तिरित्यर्थः ॥ ६ ॥

ननु भगवदीयानां स्वत एवैतत्फलं भविष्यति किमर्थं पूर्वोक्तं कार्यमित्याशंक्याहुः तदीयैरिति ।

१ दुष्टमितिपाठः । २ तद्भावार्थमितिपाठः ।

तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।

भगवदीयैरपि पूर्वोक्तसाधनं कार्यम् । मर्यादायामंगीकारात् । ननु भक्तिमार्गप्रवेशमात्रेण क्वचित् फलं दृश्यत इत्यत आहुः पुष्टाविति । पुष्ट्यंगीकारे तु भगवान् विलम्बं नैव कुर्यात्, तेन शीघ्रं फलसिद्धिरित्यर्थः ।

रजस्तमोभ्यां मनसः क्षोभेपि एतदेव साधनं कर्तव्यत्वेन द्रष्टव्यमित्याहुः गुणक्षोभेपीति ।

गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥

मम निश्चय एतावानेवेत्याहुः मे मतिरिति ॥ ७ ॥

ननु साधनानां बहूनां सत्त्वात् किमिति एतदेव साधनमित्यत आहुः कुसृष्टिरत्रेति ।

कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥

अत्रास्मिन्फले कुसृष्टिः कुत्सितानां साधनानां या सृष्टिः कल्पना उत्पन्ना स्यात् सा भ्रम एव इत्यर्थः ॥ ७॥ ॥

सेवाफलोक्तिविवृतेः स्वाचार्याणां यथामति ।
कृता कल्याणरायेण विवृतिः स्वसुखाय च ॥ १ ॥

इतिश्रीवल्लभचरणैकतानश्रीकल्याणरायविरचिता सेवाफलोक्तिविवृतिः समाप्ता ।

---

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# सेवाफलम्।

## चाचाश्रीगोपेशविरचितविवृतिटिप्पणीसमेतम्।

स्वमार्गोक्ततनुवित्तजायाः सेवाया मानसीसेवाफलमिति सिद्धान्तमुक्तावल्यां श्रीमदाचार्यचरणोक्तेर्निबन्धे तु भक्तिः स्वतन्त्रा शुद्धा च दुर्लभेति न सोच्यत इत्युक्तेः सन्दिहानान् स्वानुपदिशन्ति।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते।**

**यादृशी** यत्प्रकारिका **सेवना** सेवा **प्रोक्ता** स्वग्रन्थेषु पुष्टिपुष्टिपुष्टिमर्यादामर्यादाभेदैर्मया विविच्योक्ता **तत्सिद्धौ** तस्यां स्वफलजननस्वरूपयोग्यतायां सत्यां तत्प्रकारकं **फलमुच्यते** इत्यर्थः।

तत्र प्रथमं भगवद्धर्मं निरुपधिसर्वस्वनिवेदनपूर्वकं तत्रैव स्वदेहविनियोगे प्रेम्णि जाते यन्मुख्यं फलं भवति तदाहुः।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः॥ १॥**

**अलौकिकस्य** स्वरूपानन्दस्य, **दाने** वितरणे, **हि** निश्चिते सति, तथा च भगवतश्चिकीर्षिते सतीत्याशयः। **आद्यः** स्वरूपानन्दानुभवात् प्रथममुत्पन्नो **मनोरथः** 'यच्च दुःखं यशोदाया नन्दादीनां च गोकुले गोपिकानां तु' इत्यादिना निरूपितस्वरूपो लिप्साविशेषः **सिध्येत्** तद्विषयकः स्यादित्यर्थः। इत्थञ्च प्रेमोत्पत्त्या सिध्येत् तद्विषयकः स्यादित्यर्थः। चेति मनोरथश्च स्यात् सिद्धश्च स्यादित्याशयः। इत्थञ्च प्रेमोत्पत्त्यनन्तरं भगवतः स्वरूपानन्ददित्सायां फलरूपस्वविषयकसहितस्य मनोरथस्योत्पत्तिः। दित्साया अभावे तु तदनुत्पत्तौ पूर्वोक्तप्रेमान्तसेवायाः पुरुषोत्तमसायुज्यं फलं भवतीति ध्येयम्। वक्ष्यन्ति चेममर्थं **न त्वाद्ये दातृता नास्तीत्यनेन**॥ १॥

एवं पुष्टिपुष्टिभजनस्य फलमुक्त्वा पुष्टिमर्यादामर्यादाभजनयोः फलमाहुः।

**फलं वा अधिकारो वा न कालोऽत्र नियामकः।**

**फलं** पुष्टिपुरुषोत्तमसायुज्यं पुष्टिमर्यादाभजनफलमित्यर्थः। वेत्यनादरे। **अधिकारो**

१ तस्या इति पाठः।

**तदान्येति** । यदा वाहिर्मुख्यमाविर्भूतं तदा कृता तु व्यर्थैव । किन्त्वन्या वाल्ये कृता सापि व्यर्था निःफलेत्यर्थः ।

मूले अतः परं तेन किं विधेयमत आहुः ।

**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ४ ॥**

**यथा** यत्प्रकारको **वा** विकल्पेन **तत्त्वनिर्धार**स्तज्जीवनिष्ठस्यासुरत्वस्य निश्चयः । तथा च आवेशासुरत्वनैसर्गिकासुरत्वयोर्यादृशासुरत्वप्रकारको निश्चयस्तस्मिन् सति **विवेको** ज्ञानं **साधनं** शोकानुत्पत्तौ कारणं **मतं** सर्वप्रमाणसम्मतमित्यर्थः । वेति विकल्पवाचकमव्ययं देहलीदीपन्यायेनोभयत्रान्वेति । तथा च तत्त्वनिर्धारोपि वैकल्पिकः, साधनमपि वैकल्पिकमेव । इत्थञ्चावेशासुरत्वप्रकारको यदि निश्चयः तदा संसृतिरेवेतिभावः । वक्ष्यन्ति चेममर्थं द्वितीये **सर्वथे**त्यनेन ।

विवृतौ **तदा आसुरोयं जीव इतिनिर्धारः । तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति विवेक** इत्यनेन **मत**मित्यन्तग्रन्थो व्याख्यातः । **तदेति** । यदा वाहिर्मुख्यमाविर्भूतं तदैवेत्यर्थः । विवेकः साधनमिति व्याचक्षते । **तदा ज्ञानेनेति** । यद्यावेशासुरत्वनिर्धारस्तदा **ज्ञानमार्गेण** ज्ञानजनकोपायेन **स्थातव्यं** वर्तितव्यम् । **शोकाभावाय** शोकानुत्पत्त्या इति । अस्मिन्नर्थे विवेकः साधनं भवतीत्यर्थः । तथा च सत्यलोकस्थितिरक्षरानन्दो वा नास्य फलमिति भावः । यद्यप्येवंविधदुर्भगः स्वमार्गबहिर्मुखोन्धंतमः प्रविशतां, का क्षतिः ? तथापि स्वमार्गीयभगवद्भक्तेरेतोजन्तुरयमिति तदुद्धवदयार्द्रहृदयाः श्रीमदाचार्यचरणास्तादृशेप्युपदिशन्तीति ध्येयम् ॥ ४ ॥

मूले लौकिकभोगस्य साधारणप्रतिबन्धस्य च त्यागे प्रयोजकं रूपमाहुः ।

**सविघ्नोल्पो घातकः स्याद्बलादेतौ सदा मतौ ।**

**सविघ्न** आधिव्याधिलक्षणप्रत्यूहसहितः । **अल्प** आशुतरविनाशीत्यर्थः । **साधारण इति** । साधारणो वेदनिन्दादिः । साधारणप्रतिबन्धस्य तदाहुः **घातेति** । **घातकः** पातजनकः । **बलात्** सामर्थ्यात् । **स्यात्** भवेत् । तथा च साधारणप्रतिबन्धो बलवद्घातकः स्यादित्यर्थः । तथा हि वेदनिन्दापरस्य बलात् हीनेषु जन्मरूपं पातं करोति । म्लेच्छनहिर्मुखकृतोपद्रवादस्य सर्वस्वहानिं शरीरपातं च बलादेव कुरुते । अतो हेतोः साधारणप्रतिबन्धोल्पत्वात् सविघ्नत्वाच्च भोगः सदा निरन्तरमेतौ प्रतिबन्धको मतौ साधनमहितौ त्याज्यत्वेन सम्मताविति भावः ।

विवृतौ **साधारणो भोगः कथं त्यक्तव्य इत्याकांक्षायामाहुः सविघ्नोल्पो घातकः स्यादिति । सविघ्नत्वादल्पत्वाद्भोगस्त्याज्यः । एतौ**

---

१ 'कार्ये' इत्यपि पाठः । २ प्रवेश कार्यानीतिपाठ । ३ त्रितीति पाठः ।

सदा प्रतिबन्धकाविसनेन मतावित्यन्तग्रन्थो व्याख्यातः । साधारण इति । साधारणो वेदनिन्दादिः साधारणप्रतिबन्धः भोगो लौकिकरूपरसादिसेवनं कथं कुतो हेतोरित्यर्थः । सविघ्नत्वादिति । द्वाभ्यामाभ्यां हेतुभ्यां भोगस्त्याज्यः । शिष्टाद् घातकत्वरूपाद्धेतोः साधारणः प्रतिबन्धस्त्याज्य इत्याशयः । ननु सविघ्नत्वमल्पत्वं च भोगापकर्षजनकम्, न तु सेवायाः । तथा साधारणप्रतिबन्धनिष्ठं घातकत्वं चतुर्वर्गस्यापकारजनकम्, न तु विशिष्य सेवाया एवेति किमनयोः त्यागप्रयोजकं रूपमित्याशंकायामाहुः एताविति । प्रतिबन्धकत्वमेव त्यागप्रयोजकम् । सविघ्नत्वादिकथनं तु भोगसाधारणप्रतिबन्धस्यदोषोद्घाटनार्थम् । तथा च सेवाप्रतिबन्धकत्वात्तु त्याज्यावेव । निसर्गदुष्टत्वादपि त्याज्यावित्याशयोऽनुसन्धेयः ।

आवेशासुरस्य विवेकसाधनमिति प्रागुक्तमिदानीं नैसर्गिकासुरस्य का गतिरित्याकांक्षायामाहुः ।

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

अस्योत्पत्तिकाल एव भगवताऽसुरत्वसम्पादनान्नैसर्गिकासुरः । तथा च भगवान् तस्मिन् तदानीमेव स्वमार्गात् सर्वप्रामाणिकमार्गेभ्यश्च बाहिर्मुख्यलक्षणप्रतिबन्धं कृतवान् । इत्थञ्च वेदनिन्दादिसाधारणप्रतिबन्धाद् द्वितीये भगवत्कृते एवंविधप्रतिबन्धे निर्धारिते सतीत्यर्थः । चिन्ता जन्ममरणदुःखनिवृत्तिर्मम केन प्रकारेण स्यादिति विचारः सर्वथा सर्वप्रकारेण प्रमाणैर्युक्तिभिश्चेति यावत् । सा त्याज्या न कर्तव्या । तत्र हेतुः । संसारनिश्चयात् । संसृतेरवश्यंभावस्य निश्चितत्वादित्यर्थः । तथा च 'दैवी सम्पद्विमोक्षाय' 'निबन्धायासुरी मता' इत्यादिप्रमाणैः'स्वस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसी'त्यादिप्रामाणिकयुक्तिभिश्चाधेः समाधिः सम्पादनीय इति भावः ।

विवृतौ ज्ञानस्थित्यभावे चिन्ताऽभावार्थमाह द्वितीय इति । द्वितीयो भगवत्कृतः प्रतिबन्ध इत्यनेन निश्चयादित्यन्तग्रन्थो व्याख्यातः । ज्ञानेति । 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा' इति भगवद्वचनात् सहजासुराणां ज्ञानमार्गेऽपि स्थितिर्न भवतीत्याशयः ॥ ५ ॥

मूले 'अलौकिकस्य दाने ही'त्यनेन भगवतः स्वरूपानन्ददित्सायां मनोरथः सफलो भवेदित्युक्तम् । यदि स न सिध्येत् तदा का गतिरित्याकांक्षायामाहुः ।

**न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

नाद्ये त्वित्यन्वयः । तथा चाद्याभावे त्वित्यर्थः । इत्थञ्च तत्फलमनोरथाभावे तु भगवतो भजनानन्ददित्सा नास्तीति भावः ।

१ विशेषत इति पाठः । २ स्वभावदुष्टत्वादिति पाठः ।

विवृतौ आद्यफलाभावे भगवतो दातृत्वं नास्तीति तदा सेवा नाधिदैविकीत्युक्तं भवतीत्यनेन नास्तीत्यन्तग्रन्थो व्याख्यातः । न त्वाद्य इति मूलमाद्यफलाभावं इत्यनेन व्याख्याय दातृता नास्तीति मूलं व्याचक्षते भगवतो दातृत्वं नास्तीति । फलितार्थमाहुः तदेति । यदा फलसहितस्य मनोरथस्याभावस्तदाधिदैविकीसेवाभजनानन्दो न भवेदिति । अयमर्थो न त्वाद्ये दातृता नास्तीति मूलेन कथितोस्तीत्यर्थः । इत्थञ्च प्रेमान्तसेवया पुरुषोत्तमसायुज्यं भवतीति भावः ।

मूले बाधकानां परित्यागइत्यनेन तत्साधनत्यागपूर्वकस्तत्प्रतिबन्धकत्याग उक्तः । तत्र लौकिकभोगसाधनीभूतरूपरसगन्धस्पर्शशब्दानां त्यागे प्रतिबन्धकमाहुः तृतीये बाधकं गृहम् । भोगस्य तृतीयप्रतिबन्धकत्वात् तत्साधनमपि तृतीयं साधनं तत्परित्यागोपि तृतीयः परित्यागः । तथा च तस्मिन् गृहं प्रतिबन्धकमित्यर्थः । इत्थञ्च रूपादित्यागो गृहत्यागाधीन इति भावः ।

विवृतौ भोगाभावस्तदैव सिध्यति यदा गृहपरित्याग इत्यनेन गृहमित्यन्तग्रन्थो व्याख्यातः । भोगेति । भोगाभावः ससाधनभोगपरित्याग इत्यर्थः ।

मूले पुष्टिपुष्टिपुष्टिमर्यादामर्यादाभजनानां फलं प्रतिबन्धकं तत्प्रतीकारं चोक्त्वा व्याख्याय चेदानीं सेवामुपदिशन्ति ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ।**

अवश्या स्वस्य वश्या न । तथा च स्वकृत्यसाध्या भगवदनुग्रहैकसम्पाद्येति यावत् । इयं श्रीमदाचार्याणां हृदि अनवरतमुत्पद्यमानत्वात् साक्षात्कृतस्वरूपा भावनारूपा मानसी सेवा, सदा निरन्तरं, भाव्या सम्पादनीयेत्यर्थः । तथा च स्वरूपानन्दसाधनीभूतगात्रविशेषसिध्यर्थमनवरतं भावना कर्तव्येत्याशयः । इदमेव मनसः प्रधानं कार्यमित्याहुः सर्वमिति । मनसा यदन्यत् किञ्चित् प्रमारूपमपि कार्यं जन्यते तत् सर्वमपि भजनानन्दापर्यवसायित्वाद् भ्रम एवेत्यर्थः ॥ ६ ॥

तर्हि चक्षुरादिभिरिन्द्रियैः किं सम्पादनीयमित्याकांक्षायामाहुः ।

**तदीयैरपि तत्कार्यं पुष्टौ नैव विलम्बयेत् ।**

मनसोनुचरैश्चक्षुरादिभिरिन्द्रियैस्तत्कार्यं मनःकार्यमेव सम्पादनीयम् । तथा च श्रीमदाचार्यमार्गपक्षपातादविरतं सेव्यस्वरूपेष्वाविर्भूतस्य संकल्पप्रतिभातस्य वा भगवतो दर्शनसेवादिना स्वस्वव्यापारेण मनःकार्यरूपा भावनाख्या मानसी सेवा सम्पादनीयेति भावः । इत्थञ्च चक्षुरादिभर्वैरिन्द्रियैरपि स्वस्वव्यापारो भगवति सम्पादनीयो, 'भगवता सह संलाप' इत्याद्युक्तप्रकारेणेति ध्येयम् । ननु क्रियाविरमेवं कृतिरत आहुः पुष्टाविति ।

---

१ [illegible] पाठः । २ [illegible] नेति पाठः ।

पुष्टिर्भावः तस्मिन् सिद्धे सति स्वरूपानन्दः सत्वरमेव भवेन्न तु विलम्बं कुर्यादित्यर्थः । तथा च भावोत्पत्तिपर्यन्तमेवंकृतिरितिभावः ।

पाक्षिकोपि दोषः परिहरणीय इतिन्यायात् कदाचित् कमपि प्रतिबन्धकमाशंक्य तत्प्रतीकारमाहुः ।

गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥

गुणाः प्राकृतसत्त्वरजस्तमांसि, तत्कृतक्षोभो मार्गान्तररुचिः, लौकिकविषयलोभेतन्मार्गारुचय इत्यर्थः । एतदेवास्मदुक्त'मवश्येयं सदे'तिपद्यमेव द्रष्टव्यम् । तथा चैतत्पद्योक्तसाधनेनैव सर्वप्रतिबन्धनिवृत्तिरितिभावः । ननु सत्सु प्राकृतगुणेषु निरन्तरक्रियमाणायामपि भावनायां भावो नोत्पत्स्यत इति चेत्? सत्यम् । यावत्कालं मनस्याविर्भूय भगवानन्तःकरणसम्बद्धो न भवति तावदविद्याया विद्यमानत्वाद् गुणा अपि सन्ति । तथा चानिशमेवंकृतौ कृपालुर्भगवानाविर्भूयान्तःकरणसम्बद्धः सन् अविद्यामेव नाशयेत्, तदा सुतरां गुणनाशः, ततो निरन्तराया भावोत्पत्तिरितिध्येयम् ॥ ७ ॥

स्वोक्तप्रमेये निःसन्दिहानेनैव स्थेयमिति स्वानुपदिशन्ति ।

कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ।

कुसृष्टिः दूषणाभासः, अत्रास्मदुक्तौ, वेत्यनादरे, वस्तुतस्तु नोत्पत्स्यत एवेत्याशयः । काचिद्दुःसंगेन भगवदस्मरणनिबन्धनक्षणिकासुरभावेन वा काचिदुत्पद्येत जायेत चेद्, वै निश्चयेन, स तु भ्रम एव भ्रान्तिरेवेत्यर्थः । तथाचोत्तरक्षणोत्पत्स्यमानविशेषदर्शननाश्यत्वादकिञ्चित्करेतिभावः ॥ ७॥ ॥

इतिश्रीविट्ठलेश्वरात्मजश्रीघनश्यामतनयश्रीगोपेशगोस्वामिविरचिता
सेवाफलविवृतिटिप्पणी सम्पूर्णा ॥

श्रीकृष्णाय नमः।

# सेवाफलम्।

## श्रीदेवकीनन्दनविरचितविवृतिटिप्पणीसमेतम्।

करुणाचार्यचरणवरणं शरणं मम। यत्पथे सुकथे सेवाफलं कृष्णः प्रयच्छति॥ १॥

ननु स्वतन्त्रपुरुषार्थत्वेन क्रियमाणसेवायाः फलान्तरकथनं कथमुपपद्यत इति चेत्। इत्थम्। यावज्जीवं तथा क्रियमाणसेवया देहावसाने जीवस्य या गतिर्भवति सात्र फलपदेनोच्यते। तच्च फलमाधुनिकभजनानुस्यूतसर्वात्मभावप्राप्यविशिष्टभजनानन्दात्मकमेवेति न तस्य सेवातिरिक्तत्वमायाति येन फलान्तरत्वमुच्येत। 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवर'मिति भगवद्वचना'दन्ते या मतिः सा गति'रिति न्यायाच्च सेवाफलं सेवैवेति नोक्तविरोधः शंकनीयः। तत् कीदृशं किमिति जिज्ञासायामाचार्याः किञ्चित् स्वमतसिद्धं तत् सार्धैः सप्तभिः श्लोकैर्निरूप्य सुगमत्वाय स्वयमेव विवृण्वन्ति।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते।**

**यादृशी सेवनेति।** **प्रोक्तेति।** मयेत्यध्याहार्यम्। तेन स्वसिद्धान्ते यादृशी सेवना मया प्रोक्ता, तादृशी सेवना विवरणे वक्ष्यमाणफलप्रापिका भवति, न तु प्रमाणान्तरसिद्धा, मतान्तरसिद्धा वा तथा। अन्यथा तत्र तत्र क्वचिदुक्ता प्रसिद्धा भवेत्। अत्र साक्षादाचार्योक्तत्वादनुभवसाक्षिकत्वाच्च न काचिदसंभावनेति ज्ञाप्यते। सापि यावज्जीवमविच्छेदेन कृता, स्वफलदानं तु कियत्कालं कृत्वा परित्यक्तापीत्याहुः **तत्सिद्धा**विति। सिद्धिरत्र यावज्जीवं निर्वाहः। तदुक्तमाचार्यचरणैः 'सेवायां वा कथायां वे'ति। **फल**मिति। एकवचनं त्रितयाभिप्रायेणेत्याहुः **सेवायां फलत्रयमिति**। अत्रायं भावः। भक्तिमार्गे पुष्टिमर्यादाप्रवाहभेदेन जीवेषु भगवदङ्गीकारः त्रिविधः। तेनाधिकारिभेदेन सेवा त्रिविधा, ततः फलमपि त्रिविधं क्रमेणोक्तम्। तत्रादौ पुष्टिसेवाफलमाहुः **अलौकिकसामर्थ्य**मिति। अत्रायमाशयः। श्रीमद्व्रजस्त्रीरीत्या सर्वात्मभावैकलभ्यभजनानन्दानुभवलक्षणं फलमलौकिकमुच्यते। तस्येतरप्रमाणागोचरत्वमितरसाधनाप्राप्यत्वमलौकिकत्वम्। तदनुभवयोग्यतालक्षणोधिकारश्च सामर्थ्यपदेनोक्तः। तस्यातिगोप्यत्वाय तथोक्तिः। द्वितीयफलं **सायुज्यम्**। तदत्र पुरुषोत्तमे वेदितव्यम्, न त्वक्षरे। अक्षरसायुज्यं तु केवलमर्यादायां ज्ञानादिनापि भवतीति ततः पुष्टेर्विशेषकथनानर्थक्यात्। सायुज्यानन्तरमपि पुष्ट्या कदाचिदाद्यमलौकिकं फलमपि भगवान् प्रयच्छेदित्यपि ज्ञेयम्।

अन्यथा पुष्टिसेवाफलं सायुज्यमात्रं न वदेयुः। भक्तौ तद्वासनाया अभावात्। 'ये यथा मां प्रपद्यन्त' इति भगवन्नियमाच्च। तेन पुष्टिमर्यादायामादौ सायुज्यम्, मध्ये भजनानन्दानुभवः, अग्रे पुनः पूर्वसायुज्यमित्युक्तं भवति। अतो मध्यमफलत्वम्। तृतीयं फलं वैकुण्ठादिदेहः। आदिपदेन भूमावपि तथा भावनायां तादृशदेहप्राप्तिरुक्ता। तत्राप्युच्चनीचदेशभेदा बहुवचनेनोक्ताः। व्यापिवैकुण्ठस्य सायुज्यापेक्षया दुर्लभत्वेन साधारणफलत्वकथनसायुक्तत्वादत्र रमाप्रार्थित एव स इत्यवगम्यते। तत्र कदाचित्साधफलसंभावनेति साधारणफलत्वम्। अत एव वैष्णवव्रतानामेकादश्यादीनां फलत्वेन स्मृतिपुराणेषु स एवोच्यते।

ननु सायुज्यवैकुण्ठयोः प्रमाणसिद्धत्वेन तदर्थं जीवप्रयत्नः संभवति, आद्यफलस्य तु लोकवेदातीतत्वेन प्रमाणाद्यगोचरत्वान्न स्वकृतिसाध्यत्वम्, यत् पुनः तत्साधनं तस्यापि तथात्वम्, अतः कथमाद्यमनोरथः सिध्येदित्यत आहुः अलौकिकस्य दान इति।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥१॥ ॥**

**फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः।**

**अलौकिकमाद्यफलं तस्य दाने,** अर्थाद्भगवता कृते सति तन्मनोरथः सिध्येत्, न त्वन्यथापीत्यर्थः। आद्य इति। सायुज्यवैकुण्ठमनोरथापेक्षया स आद्य इत्यर्थः। **अल्प** इति पाठे यद्यपि लीलामध्यपातिभक्तानुभवैकवेद्यफलसंबन्धिमनोरथो जीवस्य साधनतः स्वरूपतश्चाल्प एव। अप्यर्थे चकारः। तथा चाल्पोपि तथापि स्वतः प्रभुदानेन तत्सिद्धिः। सिध्येदिति प्रार्थने लिङ्। आचार्यप्रार्थनया प्रभुः संपादयेदेवेति भावः। आद्यफलस्य स्वरूपैकसाध्यत्वे प्रसिद्धिमाह हिशब्दः। ननु भगवानपि तादृशाधिकाराभावे मनोरथं कथं पूरयेदित्यत आहुः न काल इति। अत्र फले इत्यधिकारे वा ॥ १॥ ॥ अग्रे प्रतिबन्धकत्रयोक्तिरिह साधनदशायामेव। तदुक्तं मूले बाधकानां परित्यागेति।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

**बाधकानां परित्यागो भोगेप्येकं तथा परम्।**

**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ३ ॥**

तद्विवरणं त्रयाणां साधनपरित्याग इति। साधने सति स्वरूपतः त्यक्तुमशक्यत्वात्। **भोगेप्येकमित्यादि विशते सदेत्यन्तविवरणं भोगो द्विविध** इत्यारभ्य प्रविशतीत्यन्तेन। तदनुसारेण मूलमेवं योजनीयम्। त्यजेदिति नित्यपदमध्याहार्यम्। यथा प्रतिबन्धद्वये एकस्त्याज्योपरो न, तथा **भोगेपि एकं** लौकिकं भोगं त्यजेदपरमलौकिकं न। यतो निःप्रत्यूहमनन्तरायभूतम्। तत्र हेतुः। महानिति। अलौकिकभोगः स्वरूपतो लौकिकत्वादल्पोपि फलतो महान्, अलौकिकत्वात्। अतो न त्याज्य इति भावः। अलौकिकत्वे निमित्तमाहुः प्रथम इति। प्रथमे आधुनिकभजने सदा निरन्तरं विशते, भजननिर्वाहकत्वेन तदंगतां प्राप्नोतीत्यर्थः। एतदेव विवरणे स्फुटीकृतम्।

अलौकिकभोगस्तु फलानां सेवाफलांगभूतवस्तूनां मध्ये प्रथममङ्गं प्रतिबन्धाभावस्तत्र निशतीति न तत्त्यागः । तथा चोपपादितमेकादशस्कन्धे । 'कायेन वाचे'ति श्लोकविवरणे ॥ ३ ॥

अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।
यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ४ ॥

अकर्तव्यं भगवत इति श्लोकविवरणं भगवत्कृतश्चेत्तस्य विवेक इत्यनेन । अयमर्थः । आसुरस्यापि दैवाद्भगवदीयसंगे जाते सेवायां प्रवृत्तिर्भवति । तेन केनचित्प्रकारेणानिवार्यप्रतिबन्धे जाते स भगवत्कृत इति ज्ञातव्यम् । तेनाग्रे फलाभावश्च । तेनान्यकृतापि सेवा प्रतिबन्धात् पूर्वं कृता सापि व्यर्था । तस्यासुरत्वनिर्धारश्च । तदा तज्जनितशोकाभावाय ज्ञानमार्गेण सर्वं तत्त्वं बुद्ध्वा स्थितिः विवेकः साधनम् । यद्यप्यासुरप्रसंगोत्र न वक्तव्यः, तथापि कश्चिदेवं भगवदीयेष्वपि दृश्येत चेत्तदा तथा भावनीयम्, न तु स्वीयस्य भगवानेवं करोतीति प्रभौ दोषारोपः कर्तव्य इति ज्ञापयितुं तदुक्तिरिति ज्ञायते ॥४॥

सविघ्नोल्पो घातकः स्याद् बलादेतौ सदा मतौ ।
द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥
न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।

सविघ्नोल्प इत्यस्य विवरणे सविघ्नत्वादल्पत्वादिति । साधारणभोगः सविघ्नो विघ्नसहितः । तादृशोप्यल्पः, स्वरूपतः फलतश्च । सोपि न त्यज्यते चेत्तदा घातकः सेवाप्रतिबन्धकः स्यात् । अतः सर्वथा त्याज्यत्वाद्बलादाग्रहादपि एतौ साधारणभोगप्रतिबन्धकौ मतौ, त्याज्याविति शेषः । तदुक्तं विवरणे सदा प्रतिबन्धकाविति । द्वितीयो भगवत्कृतः प्रतिबन्धः । तत्र ज्ञानमार्गेण स्थातव्यमिति चिन्तानिवृत्तिसाधनं पूर्वमुक्तम् । तदसंभवे साधनान्तरमाहुः द्वितीये सर्वथेति श्लोकार्धेन । तदाभावो ज्ञानस्थित्यभावे चिन्ताभावार्थमाहेति । तदर्तीकोग्रे द्वितीय इति । विवरणमाद्यफलाभाव इत्यादि भवतीत्यन्तम् । आद्यफलं जीवस्य दैवत्वं, तदभावे भगवतो दातृता नास्ति, तदा आधिदैविकी फलसम्बन्धिनी सेवापि नेत्यर्थादुक्तं भवति । तस्मिन् द्वितीयप्रतिबन्धे जाते ज्ञात्वा सर्वोत्कफलविषयिणी चिन्ता त्याज्या । तत्र साधारणो हेतुः । संसारनिश्चयादिति । 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्' इति भगवदुक्तसंसारस्य निश्चयादन्यथा न भवतीति सर्वथेत्युक्तम् । न त्वाद्य इति । आद्ये पूर्वोक्तसाधारणप्रतिबन्धे दातृता भगवतो नास्तीति न, किन्तु वर्तते, अतः तन्निवृत्तये चिन्ता कर्तव्या, न तु द्वितीय इव सर्वथा त्याज्येति भावः । एतस्माद्द्वितीययोर्यस्याासुरत्वा तृतीयः साधारण-

भोगकृतः प्रतिबन्धस्तत्र कर्तव्यमाहुः । तृतीये बाधकं गृहमिति । अलौकिकभोगेन साधारणभोगपरित्याग आनुषंगिकः पूर्वमुक्तः । अन्यथा अलौकिकभोगो न स्यात् । उभयो रेकाधिकरणत्वाभावात् । यदि साधारणभोगं त्यक्तुं न शक्नुयात् तदा सेवाप्रतिबन्धकत्वेन तन्मूलभूतं गृहं त्यजेदित्याशयेन तद्विवरणं **भोगाभावस्तदेत्यादि** ।

ननु त्यागतः प्रतिबन्धनिवृत्तिमात्रेण सेवाया असम्भवे तदधिकारिणां कथं तत्फलप्राप्तिः । तदभावे च द्वितीयतुल्यता स्यात् । जीवस्य दैवत्वमपि व्यर्थं भवेत् । तस्मादत्र त्यागोक्तितात्पर्यं किमिति न बुध्यत इति चेत्, इदमाभाति । सेवाधिकारिणां मध्ये येषां गृहमनुकूलम्, तेषामन्यतः प्रतिबन्धः साधारणः, तेन तन्निवृत्तिः कर्तुं शक्या । ततः सेवया तत्फलप्राप्तिः । भोगश्च तेषामप्रतिबन्धहेतुरलौकिकत्वादिति पूर्वमुक्तम् । येषां पुनः गृहमेव प्रतिबन्धकम्, तेषां तत्परित्यागादेव लौकिकभोगनिवृत्तिः । त्यागोपि सन्न्यासनिर्णयोक्तप्रकारेण भक्तिमार्गीयो ज्ञेयः, न तु कर्ममार्गीयो ज्ञानमार्गीयो वा । एवं सति तत्फलप्राप्तिरग्रे तेषामपीतिमनने तु नोक्तविरोधः शंकनीयः ॥ ५॥ ॥

अग्रिमश्लोकद्वयस्य विवरणाभावादेवं योजना ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**
**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**
**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**
**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

**इयमुक्तरीतिः** । **अवश्या** स्वतो भावयितुमशक्यापि मदुक्तत्वात् **सदा भाव्या** । अवश्यं भाव्येति वा । यत्र यथा दृश्येत तत्र तथा भाव्येत्यर्थः । ततः किमित्यत आहुः **सर्वमिति** । उक्तरीतितोन्यत् **सर्वं मनोभ्रम** इति ज्ञायत इत्यर्थः । सर्वैः कथमेवं नांगीक्रियत इत्याशंक्याहुः **तदीयैरिति** । भ्रमसंबन्धिभिरासुरैस्तत् **कार्यं** कर्तव्यमित्यर्थः । भक्तिमार्गीयैस्तु मदुक्तिभावनायां विलम्बो न कर्तव्य इत्याहुः **पुष्टौ नैवेति** । कदाचिदासुरस्यापि सेवाप्रतिबन्धे जातेपि भगवद्गुणश्रवणादिना प्रेमलक्षणं पुलकादि दृश्यते तत्र किं भावनीयमित्यत आहुः **गुणक्षोभेपीति** । क्षोभोश्रुपुलकादिः, स तु गुणवस्तुस्वभावादासुरस्यापि भवतीति गुणमाहात्म्यमेव । अत एतत्पूर्वोक्तमेव तत्रापि **द्रष्टव्यं** भावनीयमित्यर्थः । उक्तविश्वासार्थमाहुः **मे मतिरिति** । **मतिः** सम्मतिः । भ्रमस्वरूपमाहुः **कुसृष्टिरिति** ॥ ७॥ ॥

यथामति कृता सेवाफलोक्तिविवृतौ मया । टिप्पणी पर्वणीवेन्दुः प्रकाशयतु सर्वतः ॥ १ ॥
यदत्रानुचितं किञ्चिदलेखि मतिमान्द्यतः । क्षम्यतां तत्प्रहस्यार्यैः शिशो धौर्तमिवेप्सितम् २

**इतिश्रीदेवकीनन्दनकृता सेवाफलोक्तिविवृतिटिप्पणी समाप्ता ॥**

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## श्रीहरिरायकृतसेवाफलोक्तिविवृतिसमेतम् ।



श्रीकृष्णं कुलदैवतं तदनु च श्रीवल्लभाख्यान् निजान् ।
आचार्यानथ विठ्ठलेश्वरमहं नत्वा प्रभुं सर्वथा ॥
श्रीगोविन्दमतीवभावविवशं तातं स्वमर्यादया ।
स्यातं मत्फलजातहेतुमधुना किञ्चिद्वदाम्यक्षमः ॥ १ ॥

अथ श्रीमदाचार्याः स्वीयानां बहुलग्रन्थावलोकनप्रयासमसहमानाः संक्षेपेणैव स्वमार्गीयसेवाफलप्रतिबन्धसाधनानि निरूपयन्तः प्रथमं फलं निरूपयन्ति **यादृशी सेवनेति** ।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**

**यादृशी** यादृक्प्रकारिका स्वतःपुरुषार्थत्वेन कालापरिच्छेदेनावश्यकर्तव्यत्वेनाकरणे प्रत्यवायजनकत्वज्ञानेन क्रियमाणस्वसाधनभूततनुवित्तयुतसेवाद्वययुतमानससेवना भावरूपा सदानन्दसेवा मया प्रकर्षेण मुख्यतया फलरूपतया चोक्ता निरूपिता सिद्धान्तमुक्तावल्यां 'चेतस्तत्प्रवणं सेवे'ति । तस्याः सिद्धौ यावज्जीवननिर्वाहेण प्रपञ्चविस्मृतिपुरःसरतदासक्त्या व्यसनरूपत्वसिद्धौ यत्फलं तदुत्पाद्यं फलत्वेनाभिमतम्, तदुच्यते निरूप्यत इत्यर्थः । ननु सेवायाः सर्वत्र ग्रन्थेषु फलरूपत्वोक्तेस्तत्फलोक्तिरनुपपन्नेत्याशंक्याहुर्विवरणे **सेवायां फलत्रयमिति** । सेवायामेव क्रियमाणायामेतत्त्रयं भवतीति । तदुत्तरमपि सेवात्वेन तन्मध्यपतिततया न तस्याः स्वतःपुरुषार्थत्वहानिरित्यर्थः । अत एव सेवामाश्रित्य षष्ठीमनादृत्य सप्तमी विभक्तिरुक्ता । तत्त्रयमेवाहुः **अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वैकुण्ठादिष्विति** । तत्रालौकिकसामर्थ्यं हि भगवतः कोटिसूर्याग्निरूपस्यात्यन्तिकफलदित्सायां सर्वलीलाविशिष्टस्य प्रभोर्हृदयप्रवेशे तदनुभवसामर्थ्यम् । तच्च न शरीरान्तरे सम्भवतीति तादृशसामर्थ्यवच्छरीरप्राप्तिर्मृग्या । सा च प्रभुणैवापारकरुणयैव सम्पाद्यत इति प्रभुसम्पादितालौकिकशरीरनिष्ठस्वरूपानुभवक्षमसामर्थ्यमेव प्रमाणानुरोधित्रयमध्यमाद्यं मुख्यं फलमित्यर्थः । अत एवोक्तं प्रभुभिः श्रीयमुनां प्रति प्रार्थयद्भिः 'भवतु तव सन्निधौ तनुनवत्व'मिति । नवत्वं च तादृक्सामर्थ्यमेव । अत एव तनुनवत्वमेवोक्तं न तु नवतनुत्वमिति । तथा च यथा व्रजरत्नानां सर्वदा लीलासु गमनु-

१ नवत्वमेवोक्तं पाठः ।

भवतामन्ते तादृक् सामर्थ्यमेव सम्पादितं येन स्वदत्तस्वरूपानुभवो निष्प्रत्यूहं भवति नान्यावस्था । तथान्यत्रापि तदनुग्रहतः परमानुरागेण तथा फलदित्सायां पूर्वदेहं स्ववियोगाग्निना शुद्धं विधाय तस्यैवालौकिकत्वं सम्पाद्य तत्र तादृक् सामर्थ्यं प्रकटयतीत्यलौकिकसामर्थ्यमेव मुख्यं फलमितिभावः ।

प्रमाणानुरोधिप्रमेयसाध्यं मध्यमं फलमाहुः **सायुज्यमिति** । सह युनक्तीति सयुक् तस्य भावस्तत्त्वम् । भगवता सह सततस्थितिरेव सार्वदिकसंयोगरसानुभव इति यावत् । तथा च लक्ष्मीवदन्तर्गृहगोपिकावद्वा भक्तिमार्गीयेण प्रकारेण युगपदखिलपुण्यपापक्षयद्वारा पाञ्चभौतिकदेहं निवर्त्यालौकिकं दत्वा स्वस्मिन्नेव स्थितिं विधाय ततो निष्कास्य स्वलीलानुभवः प्रभुकारितो मध्यमं फलमिति भावः । मध्यमत्वं चास्य विप्रयोगरसानुभवमपेक्ष्य तदुत्कर्षस्य सहृदयानुभवसाक्षिकत्वात् ।

उभयसाधारणमधिकाररूपं तृतीयं फलमाहुः **सेवोपयोगिदेहो वैकुण्ठादिष्विति** । सेवायां क्रियमाणायामेवानुग्रहविशेषाभावात् साक्षात् सेवानुपयोगे अन्यैः तादृशसाक्षाद्रसानुभवकर्तृभिः क्रियमाणायाः सेवाया उप समीपे योगः, तद्वत्यक्ष्या दिव्यशरीरप्राप्तिस्तृतीयं फलमित्यर्थः । तस्य चान्तररमणानुकूलत्वात् फलत्वम्, बहिः साक्षात् सम्बन्धाभावादधिकाररूपत्वमित्यर्थः । अत एव 'प्रायो बताम्बे'त्यत्र मुनीनां पक्ष्यादिशरीरप्राप्त्या स्वाधिकारानुसारेण सेवा तद्रसानुभवयोग्यता चेति निरूपितम् ।

एवं फलत्रयं निरूप्य आद्यफलस्य दुर्लभत्वं निरूपयन्तः फलत्रैविध्ये हेतुं च समर्थयन्तो दानमात्रसाध्यत्वं प्रथमफलस्य निरूपयन्ति अलौकिकस्येति ।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**

अलौकिकस्य स्वविरहानुभवक्षमसामर्थ्यस्य दाने भगवता स्वाग्रहेण दुःखानुभवरूपतया तदनिच्छायामपि तथा सम्पादने, चकारात् तद्देहेन्द्रियादिषु स्वस्वरूपस्थापने सति आद्यः प्रथमफलविषयकः संस्काररूपसमर्पणसमयक्रियमाणो **मनोरथस्ताप**क्लेशानन्दप्राप्तिरूपः **सिध्येदि**त्यर्थः । हीति युक्तोयमर्थः । यतो लीलास्थितेष्वपि केषाञ्चिदेव रासमण्डलमण्डनायमानानां तद्दानम् । अत एवान्तर्गृहगतानां प्रतिबन्ध इत्यतः केवलप्रभुदानैकसाध्यत्वमिति भावः ॥ १ ॥

अतः परं सायुज्यसेवोपयोगिदेहाप्तिरूपयोः फलतदधिकाररूपमध्यमावान्तरफलयोः पूर्वफलवदनियतत्वाभावात् कदाचित् कालसाध्यत्वं ज्ञानादीनामिवाशंक्येव तदभावार्थमाहुः **फलं वा ह्यधिकारोवेति** ।

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः ।**

फलं सायुज्यम् । अधिकारः सेवोपयोगिदेहाप्तिः । अत्रैतदुभयोः फलयोः

कालो न नियामकः सत्यादिरूपः फलदः कलिरूपः प्रतिबन्धको वा नेत्यर्थः । एतेन कालानियम्यत्वेनैतत्फलस्य नित्यत्वमपि सूचितम् । अत एव कपिलदेवैरपि 'नो निमिषो लेढि हेतिरि'ति निरूपितम् । अत्र वाशब्दद्वयमधिकारस्यापि फलरूपतया तत्समकक्षत्वद्योतनाय ।

एवं सोपपत्तिकं फलत्रयं विविच्य प्रतिबन्धकत्रयं विवेचयितुं निरूपयन्ति उद्वेग इत्यादि ।

उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥

मूले बाधकमित्येकवचनेन मिलितानामेव बाधकत्वेत्याशंक्याहुः विवरणे **सेवायां प्रतिबन्धकत्रयमिति** । **उद्वेगो नाम** मनसः सेवायां क्रियमाणायामुत्कृष्टो वेगः सर्वथा तत्रास्थिरता बहिर्मुखत्वमिति यावत् । स च सेवाया अनाधिदैविकीत्वसम्पादकतया प्रतिबन्धकः । तस्मिन् सति क्रियमाणसेवायाः केवलकायिकीत्वान्मानसीत्वाभावेन प्रतिबन्धेनानाधिदैविकीत्वात् । एवमुद्वेगं निरूप्य प्रतिबन्धभोगौ निरूपयन्तः प्रथम प्रतिबन्धस्यानिवार्यत्वेन पाठक्रममनपेक्ष्यार्थक्रमेण भोगं निरूपयन्ति **भोगो द्विविध** इति । भोगे द्वैविध्यं लौकिकालौकिकभेदेनेति तदाहुः **लौकिकोऽलौकिकश्चेति** । तत्र लौकिको लौकिकपदार्थानां भगवत्सम्बन्धरहितानां स्वत आसक्त्या भोगः । अलौकिकस्तु प्रभुसम्बन्धी । स तु प्रतिबन्धक एव न भवति । तस्य फलानां मुख्यमध्यमसाधारणानां मध्ये प्रथमफलेऽलौकिकसामर्थ्येन प्रभुस्वरूपानुभवरूपरसभोगे प्रवेशात् । यतः सर्वेन्द्रियैस्तत्सम्बन्धिपदार्थेष्वनुभूयमानेषु तत्र तत्र स्थितो रसात्मा प्रभुरेवानुभूयत इति भावः । एवं भोगं निरूप्य प्रतिबन्धं निरूपयन्ति **प्रतिबन्धोपीति** । **साधारणः** सर्वसाधारणः, सेवायां लौकिकवैदिककार्यान्तरव्यासक्तिः । भगवत्कृतप्रतिबन्धस्यासुरमानविषयत्वेनासाधारणत्वादनिवर्त्यत्वेनानवसन्त्यत्वाच्च त्रय एव बाधका उद्वेगलौकिकभोगसाधारणप्रतिबन्धा इत्यर्थः । ननु कथमेतेषां सिद्धानां त्याग इत्याशंक्याहुः **त्रयाणामिति** । उद्वेगलौकिकभोगसाधारणप्रतिबन्धकानां त्रयाणां साधनं तज्जननहेतुभूतं तस्य परित्यागः कर्तव्यः, हेतूच्छेदे पुरुषव्यापारात् । सिद्धस्य स्वरूपलाभे त्यागानर्हत्वात् । नहि केनापि स्वसामग्रीसम्पादितं सुखदुःखादि किञ्चिदपि स्वयत्नशतेनापि त्यक्तुं शक्यते । ननु साधारणप्रतिबन्धे सेवायां लौकिकवैदिककार्यापत्तिरूपे साधनस्य लोकवेदसिद्धतयाऽशक्यत्यागत्वात् कथं तत्त्याग इत्याशंक्य तदुपायमाहुः **तत्राद्य इति** । तत्र साधारणभगवत्कृतप्रतिबन्धयोराद्यः साधारणः बुद्ध्या उपायचातुर्येण त्याज्य इत्यर्थः । बुद्धिस्तु सेवायां प्रतिबन्धत्वेन यदापतति लौकिकं वैदिकं तस्य पूर्वमेव सेवानवसरसमयमवेक्ष्य निर्धारो विधेयो यथा न सेवां प्रतिबध्नाति । तथा च पुत्रविवाहादेरवधेन लग्नादि निर्धारणीयम्

१ पत्तु प्रथमफले अलौकिकसामर्थ्यं तत्रैवास्य सम्भवात्, प्रथमफलेऽलौकिकसामर्थ्येन प्रभुस्वरूपानुभवरूपरसभोगेति पाठान्तरम् । २ लग्नेनेति तृतीयान्त पाठः ।

यथा न सेवाप्रतिबन्धः । परोपकारादेस्तु धर्मस्य गौणधर्मत्वज्ञानेन त्यागः । कालान्तरे वा करणम् । एवमन्यत्रापि सर्वत्र हरिचरणरतिप्रतिबन्धविभञ्जनी बुद्धिरनुसन्धेया । यद्वा । कदाचिदावश्यकलौकिकवैदिककार्यापाते तत्रायत्नसम्भवेन त्यागः कथं शक्यत इत्यत आहुः बुद्ध्येति । शरीरादिना तत्कार्यकरणेपि तत्र बुद्धिर्न स्थाप्येत्यर्थः ॥ २ ॥

एवं साधारणप्रतिबन्धं निरूप्य भगवत्कृतप्रतिबन्धं निरूपयन्ति ।

**अकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि ।**

अकर्तव्यमिति मूले । विवृतौ **भगवत्कृतश्चेत् प्रतिबन्ध** इति । **भगवतः** सर्वसमर्थस्यापि स्वतन्त्रेच्छतया यस्मिन्न किञ्चिदपि कृतिविषयः **सर्वथा** सर्वप्रकारेण प्रार्थनायामपि तदा **गतिर्निस्तारो न** सर्वथा फलाभाव इत्यर्थः । **ही**ति युक्तोयमर्थः। सर्वमार्गफलदातुः प्रभोः प्रातिकूल्ये केनापि मार्गेण फलासिद्धेः । अत्रायमाशयः । भक्तिमार्गे विशिष्टेच्छायाः कारणत्वान्न सामान्येच्छारूपमूलेच्छया मर्यादया वा फलसिद्धिः प्रतिबन्धो वा । किन्तु स्वयमंगीकृत्य यस्मिन् जीवे प्रभुर्यदा यथेच्छति, तदा तत्र तथा करोतीति वस्तुस्थितिः । तथा च भक्तिमार्गे प्रवृत्तस्य निरन्तरं सेवां कुर्वतोपि कदाचिद्दुःसंगादिनाऽतिपक्षपातिप्रभुप्रियप्रद्वेषेण तद्द्रोहे प्रभोरतिक्रोधेन प्रार्थनयापि क्षमासम्भावनारहितेन तस्मिन् प्रभुः फलप्रतिबन्धं करोतीति स भगवत्कृतप्रतिबन्धः । तस्मिन् सति सर्वथा सर्वमार्गफलाभाव इत्यर्थः। ननु भगवत्कृतप्रतिबन्धेप्यन्येषां फलदातॄणां सेवया फलान्तरं भविष्यतीत्याशंक्याहुः **तदान्यसेवे**ति । यदा 'फलमत उपपत्ते'रिति न्यायेन सर्वत्र फलदातुः प्रभोः प्रातिकूल्यं तदान्येषामपि तदधीनानां फलदातृत्वाभावात् तत्सेवापि फलासाधकत्वाद् व्यर्थेत्यर्थः । ननु सर्वथा फलाभाव आसुरेष्वेवेति कथं दैवस्य भगवत्कृतप्रतिबन्धे तथात्वमित्याहुः **तदासुरोयमि**ति । जीवानां हि सृष्ट्यादावपि 'निबन्धायासुरी मते'ति वाक्येन भगवत्कृतप्रतिबन्धादेवासुरत्वम् । यच्च यदा प्रभुः कर्तुमिच्छति तदैव भवतीति तदा तस्मिन्नेव समयेऽयं यस्मिन्नेवंप्रतिबन्धः स जीव **आसुरः** सेवादिना दैवत्वेन प्रतीतोपि आसुर एवेति **निर्धारो** निश्चय इत्यर्थः । एतेनैतत्प्रतिबन्धस्वरूपविद्भिः सर्वथा दुःसंगादिषु सावधानैः स्थेयमित्युक्तं भवति ।

ननु तादृशस्य पश्चात्तापे शोकोत्पत्त्या पूर्वं भक्तिमार्गीय इति तदभावार्थं तत्त्वनिर्धारोपायभूतं विवेकरूपं साधनमाहुः **यथा चे**ति ।

**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥**

वाशब्दोनादरे । येनैव प्रकारेण । नाग्रहः । एतत्तत्त्वनिर्धारस्य शोकाभावमात्रार्थत्वान्नौपनिषज्ज्ञानमपेक्षितम्, किन्तु यथाकथञ्चित् सांख्ययोगेनान्येन वा भाषाप्रबन्धादिनोपायेन तत्त्वनिर्धारं विधाय शोकाभावार्थं विवेकः सम्पादनीय इत्यर्थः । विवेकस्तु

ममैतदेव प्रभुणा कृतं सर्वं मद्धात्मकं कोऽहं किञ्च साधनं किं फलं को दाता को वा भोक्तेत्यादिरूपः । तमेव च तत्त्वनिर्धारोपायं विवृतौ विशदयन्ति **ज्ञानमार्गेणेति** । **ज्ञानमार्गेण** ज्ञानसाधनोपायेन **स्यात्** च्यमित्यर्थः । किञ्च ज्ञानस्थित्यापि न तन्मार्गीया मुक्तिः, किन्तु शोकाभाव एवेत्याशयेनाहुः **शोकाभावायेति** ॥ ३ ॥

अतः परं यदर्थमेषां निरूपणं बाधकानां तत्प्रयोजनमाहुः **बाधकानामिति** ।

**बाधकानां परित्यागो भोगेष्वेकं तथा परम् ।**
**निष्प्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥**

**बाधकानां**मुद्वेगभोगप्रतिबन्धानां परित्यागः परितस्त्यागः कर्तव्य इत्यर्थः । भोगस्य बाधकत्वेन त्याज्यत्वमुक्त्वाऽलौकिके तदभावमाहुः **भोगेष्वीति** । **भोगेष्वेक**मलौकिकभोगरूपं फलप्रविष्टतया **तथा** तेनैव प्रकारेण, परं प्रतिबन्धयोः **परं** भगवत्कृतप्रतिबन्धलक्षणमशक्यत्यागत्वेन विहाय तथेत्यर्थः । ननु भोगयोरपि तुल्यतामाशंक्य तस्मिन्नलौकिके वैलक्षण्यमाहुः **निष्प्रत्यूहमिति** । अलौकिकसामर्थ्यरूपे प्रथमफले भगवत्स्वरूपानन्दानुभवरूपे भोगे क्रियमाणे प्रत्यूहोन्तरायः केनापि कालादिनापि न कर्तुं शक्यत इति निष्प्रत्यूहं स एव सिध्यति । लौकिके तु सर्वथा तदभाव इति महद्वैलक्षण्यमित्यर्थः । अत एवोक्तं प्रभुभिः सन्न्यासनिर्णये 'हरिरत्र न शक्नोति कर्तुं बाधां कुतोपर' इति । किञ्च **महानिति** । स्वरूपतः फलतः साधनतश्च **महान्** । विषयानन्दब्रह्मानन्दापेक्षया भजनानन्दस्य महत्त्वादित्यर्थः । अत एव फलेष्वपि प्रथमफल एवालौकिकसामर्थ्यरूपे प्रकर्षेण प्रविशते प्रविशतीत्यर्थः । किञ्च **सदेति** । त्रैकालिकाबाधविषयत्वादित्यर्थः ॥४॥

एवमलौकिकभोगे वैलक्षण्यं निरूप्य लौकिकभोगसाधारणप्रतिबन्धावेकीकृत्य तद्धर्मनिरूपणपुरःसरं वैलक्षण्यं निरूपयन्ति **सविघ्नोल्पो घातकः स्यादिति** ।

**सविघ्नोल्पो घातकः स्याद्बलादेतौ सदा मतौ ।**

लौकिको हि भोगः **सविघ्नो** विघ्नसहितः, कर्मकालादिभिस्तत्र विघ्नसम्भवात् । अल्पश्च । स्वरूपतः फलतः साधनतश्च परिच्छिन्नत्वादित्यर्थः । साधारणप्रतिबन्धो हि घातकः । सेवाकालोपरोधकतया तद्घातकः । **एतौ** भोगसाधारणप्रतिबन्धौ सविघ्नत्वाल्पत्वघातकत्वादिभिर्धर्मैर्हेतुभूतैस्त्यागमर्हत इत्याशयेनाहुर्विवृतौ **ननु** कथमित्यारभ्य **घातकः स्यादि**त्यन्तम् । सविघ्नत्वादल्पत्वाद्भोगः प्रतिबन्धश्च घातकत्वाच्च त्याज्य इत्यर्थः ।

एवं लौकिकभोगसाधारणप्रतिबन्धयोस्त्यागहेतुभूतं धर्ममुक्त्वा भगवत्कृतप्रतिबन्धे त्यागासम्भवेन ज्ञानमार्गस्थित्यनधिकारिणो मन्दमतेः फलचिन्तया शोके भवतीति ५ चिन्ता न कर्तव्येत्याहुः **द्वितीय इति** ।

द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥

**द्वितीये** भगवत्कृतप्रतिबन्धे सर्वथा सर्वप्रकारेणान्यतोपि फलसम्बन्धाभावाच्चिन्ता फलविषयिणी त्याज्येत्यर्थः । तत्र हेतुमाहुः **संसारनिश्चयादिति** । संसारोऽहन्ता-ममतात्मा सर्वानर्थमूलं प्रवाहपथफलरूपः, तस्य निश्चयाद्भगवत्कृतप्रतिबन्धे संसार एव, न फलान्तरमितिनिश्चयादित्यर्थः ॥ ५ ॥

प्रतिबन्धविचारमतिविचार्यत्वेन विधायोद्वेगरूपप्रथमप्रतिबन्धेन फलाभावे भगवतो दातृत्वाभावं हेतुत्वेन निरूपयन्ति **नन्वाद्य**इति मूले विवृतावाद्यफलेति ।

नन्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।

आद्येन प्रतिबन्धेन फलाभाव इत्यर्थः । **नन्विति** विरोधोक्तौ । **आद्ये** उद्वेगरूपप्र-तिबन्धे भगवतः सर्वसमर्थस्याप्यन्तःकरणैकसम्बन्धितया तद्विक्षेपरूपोद्वेगे क्रियमाणे सेवाया अमानसीत्वेन भगवत्सम्बन्धाभावादनाधिदैविकीत्वे तत्प्रयुक्तः प्रभोः फलदातृत्वाभाव इत्यर्थः । अन्यथा सर्वदोषनिवारकस्य फलदातृत्वाभावो न घटेत । एतदेव विवृतौ विशदयन्ति **तदा सेवेत्यादि** । एवमुद्वेगबाधकमुक्त्वा भोगबाधकं विवृण्वन्ति **तृतीय** इति । **तृतीये** लौकिकभोगे गृहमेव बाधकमित्यर्थः । अत्रायमाशयः । भोगो हि सर्वथा बाधकः, भगवद्वैमुख्यसम्पादकत्वादिन्द्रियादीनां वैफल्यापादकत्वाच्च । स च यावद्गृहस्थितिः, यत्नेनापि निवर्त्यमानो न निवर्तते । गृहस्य सर्वथा बाधकत्वात्तत्र स्थितावंशतोपि भोगसम्भवाद्गृहपरित्यागः । कृष्णार्थप्रयोगेण तदासक्तिपरित्यागो वा भोगाभावाय विधेय इत्यर्थः । एतदेव च विवृतौ विवृतं **भोगाभावस्तदैव सिध्यति यदा गृहपरित्याग** इति । अत एवास्मदाचार्यैर्निबन्धे निरूपितं भगवद्वचोनुवादरूपेण 'गृहं सर्वात्मना त्याज्यं तच्चेत्त्यक्तुं न शक्यते । कृष्णार्थं तत्प्रयुञ्जीत कृष्णः संसारमोचक' इति ।

एवं फलत्रयं प्रतिबन्धत्रयं च निरूप्य निजान् प्रत्येतद्विचारमेवाहर्निशं कर्तव्यत्वेन वक्तुमुपसंहरन्ति **अवश्येयमिति** ।

अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥

इयं फलत्रयी प्रतिबन्धत्रयी चावश्या, न स्ववश्या । भक्तिमार्गे फलप्रतिबन्धप्राप्ति-निवृत्त्योः केवलभगवदधीनत्वात् । तथापि सदा निरन्तरं **भाव्या** कर्तव्यत्वेन विचारणीया, विचारे हि भावनायाः साधनत्वात् कदाचित् फलसिद्धिः, प्रतिबन्धतश्च सावधानतया स्थिति-सिद्धिरित्यर्थः । ननु फलान्तरं प्रतिबन्धान्तरं वा भक्तिमार्गे किंचिद्भविष्यतीत्याशंक्याहुः **सर्व-मन्यदिति** । एतत्फलत्रयं प्रतिबन्धत्रयं चापहायान्यत्सर्वं फलप्रतिबन्धादिकल्पनं **मनो-भ्रमः** भ्रान्तिभ्रान्तिरित्यर्थः । अनेदमुक्तं भवति । भक्तिमार्गे सेवाया उत्तममध्यमसाधारणाधि-कारक्रमेण एतत्फलत्रयमेव, न मोक्षादिः । प्रतिबन्धकं चोद्वेगादिकमेव, न पापादिकमिति ।

'स्वपादमूलं भजत' इति वाक्यात् । तथा चैतत्फलविहिताशैरेतत्प्रतिबन्धसावधानैरन्यतो निश्चिन्तैः सर्वैः सेवैव विधेयेति भावः ॥ ६ ॥

नन्वेतत्फलप्रतिबन्धकादिनिरूपणं तदाश्रितान्प्रति घटते तदीयदेहादेरामत्वात्, तदीयानां तु देहेन्द्रियादेः साक्षात्पुरुषोत्तमसमर्पितत्वेन फलरूपप्रभुसम्बन्धात् प्राप्तफलतया तान्प्रति फलप्रतिबन्धनिरूपणं व्यर्थमित्याशंक्य आहुः **तदीयैरपीति** ।

**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**

**तदीयैः** कृतात्मसमर्पणैरपि तत्फलप्रतिबन्धकादिभावनं कार्यमवश्यकर्तव्यम् । पुष्टिमर्यादायामंगीकारेण फलविलम्बाद्भजनं कारयित्वैव फलदानात् । अविलम्बस्तु केवलपुष्टावेवेत्याहुः **पुष्टौ नैव विलम्बयेदिति** । पुष्टौ केवलपुष्टौ मर्यादाऽभावेन साक्षादंगीकाराच्च विलम्बः । साम्प्रतं तु पुष्टिमर्यादायामेवाधुनिकानामंगीकाराद्भजनसिद्धिविलम्बसद्भावेन तावत्पर्यन्तं प्रोषितभर्तृका इव फलप्रतिबन्धभावनं सर्वदा कार्यमित्यर्थः ।

एतदेव निमित्तमन्यत्राप्यतिदिशन्ति **गुणक्षोभेपीति** ।

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

तदीयानां गुणक्षोभोपि विलम्बादेव निमित्तात् देशान्तरस्थपतिकाया इव भवति । तत्राप्येतदेव फलप्रतिबन्धकादिभावनं साधनत्वेन द्रष्टव्यम् । एतद्विचारेण चित्तस्य प्रभुपरतया गुणक्षोभोपि न भविष्यतीत्यर्थः । ननु गुणक्षोभनिवर्तकानि साधनान्तराणि भविष्यन्तीत्याशंक्याहुः **मे मतिरिति** । विचारे क्रियमाणेऽस्मन्मतेरत्रैव पर्यवसानान्नान्यत्साधनमित्यर्थः ॥ ७ ॥

नन्वत्र काचित् कुसृष्टिरुत्पद्यते, तदीयत्वे नियमेन फलसम्भवात्, तद्वैयर्थ्योपत्तिभिया प्रतिबन्धासम्भवाच्च, तदीयत्वे द्युभयाभावादेवं न निरूपणमुचितमित्याशंक्याहुः **कुसृष्टिरिति** ।

**कुसृष्टिरत्र या काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

अत्रास्मिन्नर्थे याश्चन्दोऽवधारणार्थः । अत्रैव या कुसृष्टिरुत्पद्यते सा सर्वथा दोषाभावाद्भ्रम एवेत्यर्थः । अनुपपत्तिपरिहारस्तु पूर्वमेव प्रभोः स्वतन्त्रेच्छत्वनिरूपणेन कृत इति तत एव विभावनीयमिति दिक् ॥ ७॥ ॥

इतिश्रीवल्लभाचार्यचरणाब्जदासानुदासश्रीहरिरायविरचिता सेवाफलविवृतिटिप्पणी सम्पूर्णा ॥

श्रीकृष्णाय नमः।

# सेवाफलम्।

## श्रीवल्लभविरचितटीकासमेतम्।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते।**
**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः॥ १॥**

**यादृशी** यत्प्रकारिका 'चेतस्तत्प्रवण'मित्यारभ्य 'कृष्णमेव विचिन्तये'दित्यन्तेनोक्ता। **तत्सिद्धाविति**। तस्याः सेवायाः मानसीलरूपफलावस्थासिद्धौ **फलमुच्यते** फलं निरूप्यत इत्यर्थः। कुत्रेत्याकांक्षायामाहुः टीकायां **सेवायामिति**। **फलत्रयमिति**। फलतावच्छेदकत्रयमित्यर्थः। यथा स्वर्गस्य फलत्वं तदवच्छेदकं चामृतपानादिकं तथा मानससेवायाः फलत्वं तदवच्छेदकं चेदं फलत्रयम्। **सेवायां** फलत्रयमित्यनेन पूर्वार्धार्थ उक्तः। उत्तरार्धार्थमाहुः **अलौकिकसामर्थ्यमिति**। मूलेऽलौकिकस्येत्यलौकिकस्य सामर्थ्यस्य। **अलौकिकसामर्थ्यं** सर्वाभोग्यसुधा। तस्या **दाने**। **आद्य** इति। **आद्यो मनोरथो** 'भगवता सह संलापो दर्शनं मिलितस्य चे'त्यादिभिरुक्तः पूर्वोक्तसुधाभोगरूपः सिध्येत् पूर्णो भवतीत्यर्थः। अनेन शृंगाररसस्य पूर्वदलानुभव उक्तः। चकारादलौकिकसामर्थ्येनैव तदुत्तरदलानुभवोपि भवति। स तु परितो गलनरूपवर्णनेनाभिरमणात्मको ज्ञेयः। एतेन दीयमाना सुधा साधनं भुज्यमाना सुधैव तु फलमिति सूचितम्। वेणुगीते 'वर्णनायां मुखे समागच्छन्ती सुखमपि स्वभोगयोग्यं करोती'ति निरूपितम्। 'वर्णयन्त्योभिरेमिर' इत्युत्तरदलानुभवोपि सुधापूरणेनैव निरूपितस्तत्सम्मतिसूचनाय **हि**-शब्दः॥ १॥

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः।**

**फलं वा ह्यधिकारो** वेत्यस्यार्थमाहुः **सायुज्यमित्यादिना**। मूले **फलं वेति**। सायुज्यस्य सोश्नुत इत्यादिश्रुतौ फलत्वेनैव प्रसिद्ध्या फलपदं सायुज्यवाचकम्। तथा च द्वितीयं फलं सायुज्यमित्यर्थः। तृतीयं फलमाहुः **अधिकार** इति। एतदर्थमाहुः टीकायां **सेवोपयोगिदेहो वैकुण्ठादिष्विति**। अत्र आदिशब्देन श्रीमथुराश्रीवृन्दावनादिकं ग्राह्यम्। मूले **न काल** इति। अत्र सेवोपयोगिदेहे कालो न प्रेरकः। यथा लीलासृष्टिस्था आम्रवृक्षादयो न कालप्रेर्याः, किन्तु भगवदिच्छयैव पुष्प्यन्ति फलन्ति च, [illegible] अपि सेवोपयोगिनो देहाः भगवदिच्छयैव अवयवादिसम्पत्तिं लभन्ते।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

उद्वेग इति । श्लोकार्थमाहुः **सेवायामिति** । **उद्वेग** इति । मनसोन्यपरता उद्वेगः । कायस्यान्यपरता **प्रतिबन्धः** । इन्द्रियाणामन्यपरता **भोगः** । इदं त्रयं बाधकम् । तनुवित्तजसेवायां फलजननसामर्थ्यस्य भक्तिरहस्यभजनस्य बाधजनकं विसामग्रीहेतुः प्रतिबन्धकमिति मूलार्थः ॥ २ ॥

अकर्तव्यमित्यारभ्य **विशते सदेत्यन्तस्यार्थमाहुर्विवरणे त्रयाणामित्यारभ्य विवेक** इत्यन्तेन । **त्रयाणामिति** । उद्वेगसाधारणप्रतिबन्धलौकिकभोगानामित्यर्थः । **साधनेति** । एतत्त्रयाणामेव बाधकत्वात् । ननु कथमेतत्त्रयस्यैव बाधकत्वं न तु पञ्चानामित्यतो व्यवस्थामाहुः **भोग** इत्यादिना । **लौकिक इति** । अनिवेदितपदार्थानां समर्पणं विना विषयासक्त्योपभोगो लौकिको भोगः । **अलौकिक** इति । निवेदितानामर्थानां भगवद्भोगार्थं विनियोगे जाते तद्दत्तप्रसादत्वेन स्वोपभोगकृतिरलौकिको भोगः । **तत्राद्य** इति । आद्यो लोककृतः साधारणः । **बुद्ध्या** इति । निमाननयेत्यर्थः । **फलानां मध्ये** इति । यस्य फलत्रयमपि भवति तस्य सेवोपयोगिदेहरूपे प्रथमे फले प्रविशति सम्बद्धो भवतीत्यर्थः । एतद्भोगस्यैतत्फलसाधकत्वेन पूर्वं फलसम्बन्धः । तदुत्तरं च दासधर्मत्वेनैतत्करणादुत्तरं सम्बन्धः । इत्थञ्च पूर्वोत्तरमपि फले व्याप्तो भवतीति **प्रोपसर्गार्थः** । अथ मूले **सदेत्यव्ययार्थो** ज्ञेयः । **निःप्रत्यूहमिति** हेतुगर्भम् । यतोयमदृष्टादिकृतविघ्नाभावान्निःप्रत्यूह सिध्यत्यतो **महा**नित्यर्थः । यद्यपि पाठक्रमेण सेवोपयोगिदेहस्य तृतीयफलत्वम्, तथाप्यनुक्रमानुरोधात् तस्य प्राथम्यमेव सिध्यति । किञ्चैतस्याधिकारत्वेन निरूपणादपि तथा । **भगवत्कृतप्रतिबन्धश्चेदिति** । श्रवणकीर्तनादिना हरिश्चेद्धृदये निविशते तदा पूजा सर्वदा निर्वहति । तस्या अभ्यासे तस्यां भक्तिरहस्यभजनरूप सामर्थ्यं सिध्यति । क्रियमाणेपि श्रवणकीर्तनादौ हरिश्चेन्न निविशेत तदाभ्यासो न भवति । तेन जाता तनोरन्यपरता या स भगवत्कृतप्रतिबन्धः । तदा भगवत्कृतप्रतिबन्धे अन्यसेवा महापुरुषादिसेवा **व्यर्था** निःफलेत्यर्थः । अपिना भगवत्सेवापि तथेति ज्ञेयम् । क्रियमाणेपि श्रवणादौ चेन्न हरिनिवेशस्तदेत्यर्थः । पूर्वमेव ज्ञानादिमार्गप्रवृत्तौ तु नासुरत्वमिति बोध्यम् । नन्वासुरत्वे श्रवणादौ प्रवृत्तिरेव कथमित्यत आहुः । **जीव** इति । स जीव आसुरस्तस्यान्तःकरणं तु दैवमतः प्रवृत्तिरिति भावः । ननु तर्हि किमासुरेण कर्तव्यमित्याकांक्षायामाहुः **तदा ज्ञानमार्गे**णेति । अन्तःकरणस्य दैवत्वे इत्यर्थः । अन्तःकरणस्यासुरत्वे तु संसारनिश्चयाच्छोकाभावं वक्ष्यन्तीति ज्ञेयम् । शोकाभावसाधकत्वेनोपदिष्टज्ञानमार्गेणेत्यर्थः । **विवेक** इति । आद्यो बुद्ध्या त्याज्यः द्वितीये त्वासुरज्ञानमार्गेण सेव्यमिति द्वयोः प्रतिबन्धयोर्विवेकः इत्यर्थः ।

भगवत्कृतश्चेदित्यारभ्य **विवेक** इत्यन्तेनाकर्तव्यमित्यस्य विवरणं ज्ञेयम् । इत्थश्लोक्तत्रयाणामेवात्र बाधकत्वम् । अलौकिकभोगस्य प्रथमे प्रवेशात्र बाधकत्वम् । भगवत्कृतप्रतिबन्धेपि सामर्थ्यानुत्पाद एव न तु जातस्य बाधोतस्तस्यापि न बाधकत्वम् । प्रतिबन्धकत्वं तु भवत्येव । प्रतिबन्धो विसामग्रीतद्धेतुः, प्रतिबन्धक इत्यत्र विसामग्रीपदस्य सामग्रीबाधात्यन्ताभावोभयवाचकत्वादिति बोध्यम् ।

**अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।**
**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥**
**बाधकानां परित्यागो भोगेप्येकं तथापरम् ।**
**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥**

मूले श्लोकद्वययोजना । **भगवतः** सर्वथा सेवायां सामर्थ्यं **अकर्तव्यं चेत्** तदा **गतिः** फलं **न हि** न भवतीत्यर्थः । ननु तदा तस्य किं साधनं शोकाभावायेत्यत आहुः **यथा** वेति । येनात्मतत्त्वनिर्धारो भवति तादृशो विवेकः आत्मानात्मविवेकः शोकाभावसाधनं मतमित्यर्थः । 'तस्माद्भद्रे स्वतनयान् मया व्यापादितानपि मानु शोचे'त्यत्र तस्य ज्ञानस्य शोकाभावहेतुत्वकथनान्मतमित्युक्तम् । **भोगेप्येकमिति** । जात्यभिप्रायेणैकवचनम् । **अपरमिति** । न परमपरम्, हीनम्, बाधकत्वात्त्याज्यमित्यर्थः । ननु कथं न द्वितीयो बाधकस्तत्राहुः **निःप्रत्यूहमिति** । निर्विघ्नम् । हेतुगर्भमिदम् । यतो निर्विघ्नं यथा भवति तथा सिध्यति, अदृष्टादेर्बाधकत्वाभावात् । अतो **महान्** । एतादृशो **भोगः प्रथमे** फले सेवोपयोगिदेहे सदा विशते, पूर्वमुत्तरं च सम्पद्य भवतीत्यर्थः । पाठक्रमं दृष्ट्वा अलौकिकसामर्थ्यं प्राथम्य मन्वानस्य भ्रमनिरासाय टीकायां फलानां मध्य इत्युक्तम् । यस्य फलत्रयमपि भवति तस्य यत्प्रथमं फलं सेवोपयोगिदेह इत्यर्थः ॥ ३ ॥ ४ ॥

**सविघ्नोल्पो घातकः स्याद् बलादेतौ सदा मतौ ।**
**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

**सविघ्न** इत्यत्र टीकायां **सविघ्नत्वादिति** । अत्रापि सविघ्नपदं हेतुगर्भम् । तथाचायमर्थः । घातको लौकिकभोगः, यतः सविघ्नः, अतोल्पः स्यादिति हेतोस्त्याज्य इति । **एताविति** । साधारणभगवत्कृतौ बलाद्धेतोः सदा प्रतिबन्धकौ मतौ । मनस इन्द्रियाणां चान्यपरतारूपावुद्वेगभोगौ सामर्थ्यबाधकौ । नन्वन्यपरतारूपाविमौ तु कारणस्यैव बाधकौ । तनुजसेवैवानन्यता भवत्यतो बलिष्ठत्वात् प्रतिबन्धनामकावेव जातावित्यर्थः । **ज्ञानस्थित्यभाव** इति । पूर्वोक्तासुरज्ञाने स्थित्यभावे । **द्वितीय इतीति** । द्वितीये भगवत्कृतप्रतिबन्धे जाते । मूले **संसारनिश्चयादिति** । अत्र संसारपदं देहादिपरम्, तथा च 'निरोधनोक्तदेह एव मह्यम्' इत्यादिरूपनिश्चयादित्यर्थः ॥ ५ ॥

ननु सेवोपयोगिदेहस्य कथमधिकारत्वम्, अधिकारत्वे वा कथं फलत्वमित्यत आहुः **नन्वाद्य इति ।**

**नन्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**
**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

नन्विति कोमलामन्त्रणे । आद्ये सेवोपयोगिदेहरूपफले सति या भवति फलद्वयदातृता सा सेवोपयोगिदेहरूपाद्यफलाभावे नास्तीत्याद्यफलस्याधिकाररूपतेत्यर्थः । तथा च यस्याद्यफलमेव फलं तं प्रत्याद्यस्य फलत्वमेव । यस्य च पुनरग्रेपि सायुज्यादिफलं तं प्रति आद्यफलस्याधिकारत्वमेवेति भावः । एतेन फलत्रये तारतम्यमपि सूचितमिति ध्येयम् । टीकायां **तदा सेवेति** । आद्यफलाभावेत्यर्थः । मूले **तृतीय** इति । लौकिकभोगरूपप्रतिबन्धके सति बाधकं गृहं सेवाप्रतिबन्धकं लौकिकभोगसञ्ज्ञकं भार्यादि त्याज्यमिति शेषः। **अवश्येयमिति**। इयं प्रतिबन्धकत्रयी फलत्रयी च सदा निरन्तर **भाव्या** विभावनीया । भावनया प्रतिबन्धककृतप्रतिबन्धनिवृत्तिर्भविष्यतीति भावः । **सर्वमिति** । ज्ञानादीनां साधनत्वं तत्साध्यमोक्षस्यैव फलत्वमिति मनोभ्रममात्रम् ॥ ६ ॥

ननु 'तथा निवेदने चिन्ता त्याज्या श्रीपुरुषोत्तमे' इत्यनेनात्मनिवेदिनां प्रतिबन्धकभयाभावात् किं निवर्तनेनेत्यत आहुः **तदीयैरपीति** ।

**तदीयैरपि तत्कार्यं पुष्टौ नैव विलम्बयेत् ।**
**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

भगवदीयैरपि पूर्वोक्तत्रयीद्वयविभावनेन प्रतिबन्धनिवर्तनं कार्यमेव । तत्र हेतुमाहुः **पुष्टाविति**। तथा सति पुष्टौ मर्यादांशत्यागे भगवान् **विलम्बं** न कुर्यादित्यर्थः । अन्यथा तु यद्यपि निवेदनपदार्थो न नश्यति तथाप्यलौकिकदेहप्राप्तौ विलम्बो भवत्येवेति। ननु गुणैश्चित्तक्षोभे भावनाया असम्भवात् कथं तन्निवृत्तिरित्यत आहुः **गुणक्षोभेपीति** । सोप्येतेनैव निवर्तिष्यत इति भावः । ननु गुणक्षोभनिवृत्त्यर्थं हंसावतारेण एकादशस्कन्धे प्रकारान्तरमुक्तमित्यत आहुः **इति मे मतिरिति** । मन्मतिसिद्धोयं प्रकारः । तथाच मर्यादापुष्टिभेदेन व्यवस्थेति भावो द्रष्टव्यः ॥ ७ ॥

ननु स प्रकारो भगवदुक्तः, अयं च पौरुष इति कथं तुल्यबलत्वमित्यत आहुः **कुसृष्टिरिति** ।

**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

वाशब्दोनादरे । ममापि वाक्पतित्वादत्र मद्वाक्ये पूर्वोक्ता अन्या वा काचित् कुसृष्टिः किमुत्पद्येत? नोत्पद्येतेत्यर्थः । यदि चेदुत्पद्येत तदा तस्य तादृशं ज्ञानं भ्रम एव । तद्बोधनार्थं नास्मत्प्रवृत्तिः, किन्तु 'सात्त्विका भगवद्भक्ता' इत्युक्तानां तादृशामेव बोधनार्थमेवास्मत्प्रवृत्तिरिति भावः ॥ ७॥ ॥

इतिश्रीविट्ठलेशात्मजश्रीवल्लभकृतसेवाफलविवृतिः समाप्ता ।

---

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## श्रीपुरुषोत्तमकृतसेवाफलविवृतिप्रकाशसमेतम् ।



प्रणम्य श्रीमदाचार्यचरणौ तत्कृपाबलात् ।
सेवाफलोक्तिविवृतेर्विवृतिं वितनोत्ययम् ॥ १ ॥

अथ श्रीमदाचार्यचरणाः श्रुतिब्रह्मसूत्रगीताश्रीभागवततात्पर्यगोचरस्य सिद्धान्तस्य तनुवित्तजसेवात्मकस्य साधनस्य भगवत्प्रेमात्मकसेवासिद्धिपर्यन्ततां संक्षेपेण सिद्धान्तमुक्तावल्यां बोधसौकर्यार्थं निरूप्य सेवाफलग्रन्थे तथैव तत्फलं निरूपयितुं प्रतिजानते यादृशीत्यादि ।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**

**यादृशी** यत्प्रकारिका **सेवना** सेवा, ण्यासश्रन्थो युजिति युजन्तत्वाद्धारणा विनिगमनेत्यादिवत्स्त्रीत्वम्, **प्रोक्ता** सिद्धान्तमुक्तावल्यां व्युत्पादिता, **तत्सिद्धौ** तस्यास्तत्रोक्तमानसीसेवासाधकतायां सत्यां **फलं** यत् प्राप्यत्वेन विवक्षितं तदुच्यत इत्यर्थः । अस्य ग्रन्थस्य संक्षिप्तत्वेन दुरूहत्वात् स्वयमेव गृह्णन्तो व्याकुर्वन्ति **सेवायां फलत्रयमित्यादि** । अत्र सेवायामिति सत्यर्थया सप्तम्या साधनसाध्यरूपयोर्द्वयोरपि सेवयोः सत्ता विवक्षितेति बोध्यते । तेन साधनरूपाया आवर्तने तन्निर्वाहः, साध्यरूपायाश्च निरन्तरस्थैर्यं विवक्षित भवतीति सूच्यते । फलत्रयमित्यनेन मूले यादृशीति सेवाविशेषणेन यत्तदोर्नित्यसम्बन्धस्मारणात् फलेपि तादृशमिति प्रकारबोधकं विशेषणं स्मार्यते । तथा च तत्रोत्तममध्यमजघन्यभेदेन बाह्यमानसोरुत्यैविध्यस्य सिद्धत्वादत्रापि फलत्रयमुच्यत इत्यर्थः। तर्हि किं तत्फलत्रयमित्यपेक्षायां टीकायां तत्स्वरूपं विभजन्ते **अलौकिकसामर्थ्यमित्यादि** । तत्रालौकिकसामर्थ्यं नाम परप्राप्तिविवरणश्रुत्युक्तभगवत्स्वरूपानुभवे 'प्रदीपवदावेश' इतिसूत्रोक्तरीतिकभगवदावेशजा योग्यता यया रसात्मकस्य भगवतः पूर्णस्वरूपानन्दानुभवः । श्रीदेवकीनन्दना अप्येवमाहुः । श्रीहरिरायास्तु भगवद्विरहानुभवसामर्थ्यमित्याहुः । श्रीकल्याणरायास्तु भगवता सह गानादिसामर्थ्यं मुख्यानामित्याहुः । चचागोपीशास्त्वलौकिकभजनानन्दानुभवे स्वरूपयोग्यतेत्याहुः । एतत्सर्वं भगवतो नानाविधप्रवेशहेतुकत्वाद्भगवदिच्छायाश्च ज्ञातुमशक्यत्वादुपपन्नम् ।

**सायुज्यं** 'भक्त्या माममिजानाती'त्युक्तो भगवत्स्वरूपे लयः । यचा अप्येवम्, श्रीदेवकीनन्दनाश्च । श्रीहरिरायास्तु सह युनक्तीति सयुक् सयुजो भावः सायुज्यं संयोगानुभवसामर्थ्यमित्याहुः । श्रीकल्याणरायास्तु गोपानामिवेति विशेषमाहुः ।

**सेवोपयोगिदेहो**ऽक्षरात्मको देहेन्द्रियासुहीनः पुरुषस्त्रीपशुपक्षिवृक्षाद्याकृतिः संस्थानविशेषः । तदेतत् फलत्रयं त्रिविधसेवायां यथायथं बोध्यमित्यर्थः ।

ननु 'यथाक्रतु'रिति श्रुतौ तत्क्रतुन्यायस्योक्तत्वात् संन्यासनिर्णये 'भावना साधनं यत्र फलं चापि तथा भवे'दित्याचार्यैरपि तदंगीकाराच्यायत एवात्रापि तादृशफलप्राप्तिसिद्धेर्विशेषतस्तत्कथनस्य किं प्रयोजनमित्याकांक्षायां तत्र हेतुं वदन्ति मूले **अलौकिकस्य दाने** हीत्यादिपादत्रयेण ।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**
**फलं वा ह्यधिकारो वा,**

अत्र हिर्हेतौ । चोऽवधारणे । यतो हेतोर**लौकिकस्य** सम्यगाविर्भावाधिकरणोक्तरीतिकस्याक्षरात्मकविग्रहस्य **दान** एव **आद्य** आदौ भव उत्तमफलविषये विद्यमानो **मनोरथः** निश्चयशब्दोक्तकामचारात्मकः सिध्येत् । अदाने तु **फलं वा हि** निश्चयेन **अधिकारो वा** सिध्येदित्यनुपज्यते । तथा च 'लोकवत्तु लीला कैवल्य'मिति न्यायेन भगवता अलौकिकस्य सम्यगाविर्भावसूत्रोक्तदेहस्य दाने एव तत्सम्बन्धिफललाभात् तत्क्रतुन्यायमात्रेण पूर्वस्य सिद्धिरित्यतस्तन्निरूपणमित्यर्थः । वाद्वयमनादरे । तेन तत्क्रतुन्यायेन कदाचित् तद्वयं भवतीति बोधितम् ।

नन्वधिकारस्य कार्यान्तरयोग्यतारूपत्वात् तस्य च साधनदशायामपि सत्त्वात् कथं फलत्वमित्यत आहुः ।

**न कालोऽत्रनियामकः ॥ १॥ ॥** इति ।

**अत्रेत्यधिकारे** । तथा च कालनियम्यत्वाभावेनानावृत्त्या नित्यत्वादस्यापि फलत्वं गिःप्रत्यूहमित्यर्थः । एतत्त्रये एकं दानहेतुकमन्यद्वयमपि भगवदनुग्रहैकहेतुकम् । मर्यादामार्गे निर्गुणाक्षरविद्यया तादृशत्वप्राप्तेः सगुणया सन्मनोमयदहरादिविद्यया च 'जक्षन् क्रीडन् रममाण'इत्यादिनोक्तैश्वर्यपर्यन्तप्राप्तेरेव श्रावणात् ततोऽधिकस्य सेवोपयोगिदेहादेस्तत्र केवलया भक्तिरहितमर्यादया वक्तुमशक्यत्वात् । तथा तदुपगमे 'यमेवैष' इत्यादिश्रुते'र्भक्त्याहमेकया ग्राह्य' इत्यादिस्मृतेश्च विरोधस्य दुष्परिहरत्वाच्च । अतस्तत्त्रयमत्रोच्यत इति भावः । तत्राद्यस्य दानेन सिद्धौ 'रुद्रादीनां वचः श्रुत्वे'त्यादिकृष्णोपनिषन्मध्यवृद्धवामनीयरुया 'संकल्पो विदितः साध्यः' इति कुमारिकाः प्रति भगवद्वाक्यं प्रमाणत्वेन बोध्यम् । द्वितीये च 'नैकात्मतां म' इत्यारभ्य 'गतिमण्वीं प्रयुंक्ते' इत्यन्तं कपिल-

वाक्यम्। तृतीये च 'को वामिहैत्य भगवत्परिचर्ययोश्चे'रिति जयविजयौ प्रति सनकादि-वाक्यं ज्ञेयम्। तयोः पातस्तु भगवदिच्छात एवेति तत्रैव निबन्धे प्रतिपादितमिति न कश्चित्सन्देहः ॥ १॥ ॥

ननु भवत्वेवमनुग्रहत्रैविध्यात् फलत्रैविध्यम्, तथापि 'नित्यं हरौ विदधत' इति वाक्ये कामक्रोधादीनामपि भगवति नित्यं विधाने तन्मयत्वस्योक्तत्वात् तन्मयत्वे च सायुज्यस्यैव युक्तत्वात् सिद्धान्तमुक्तावल्याम्'प्युभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यती' त्यनेन मानसा एव फलत्वेनोक्तत्वात् तथापि तन्मयतायाः सिद्धौ तस्यैव युक्तत्वात्कथं तदभावो येन तृतीयं फलमित्यत आहुः।

उद्वेगः प्रतिबन्धो वा भोगो वा स्यादिति।

सेवायां क्रियमाणायामिति शेषः। किं तावत्तेत्याकांक्षायां तेषां स्वरूपं टीकाया विवृण्वन्ति सेवायां प्रतिबन्ध इत्यादि। प्रतिबन्धो नाम विसामग्री तज्जनकः प्रतिबन्धकः। तदत्रोद्वेगादित्रयम्। तत्रोद्वेगो नाम उद्वेगमेयं चलनं वा। ओविजी भय-चलनयोः। तदत्र सेवायां क्रियमाणायां दुष्टादिभ्यो मनसो भयं वा पापादिना बुद्धेश्चाञ्चल्यं वा। अत्र द्वितीयमदृष्टजन्यम्। एतदुभयमप्यान्तरमतो द्विविधोऽप्युद्वेगो बाह्यसेवाफलरूपाया मानसीतत्समानाधिकरणविरुद्धसामग्रीरूपस्तत्प्रतिबन्धकः। प्रतिबन्धो नाम तल्लक्षीकृत्य वा तत्प्रतिकूलो वा निग्रहः। प्रतिर्लक्षणे प्रातिकूल्ये वा। बन्ध बन्धने। सोऽत्र सेवायां रुचौ सत्यामपि शरीरादिसामर्थ्ये सत्यपि सेवाकरणकाले लौकिकवैदिककायिकादिव्यापाररूपो बाह्यसेवासामानाधिकरण्यात् तद्विरुद्धसामग्र्यात्मकस्तत्स्वरूपप्रतिबन्धकः कादाचित्कः। भोगो नाम सुखदुःखसाक्षात्कारोऽव्यवहाररूपः प्रसिद्धो देहेन्द्रियोभयनिष्ठत्वादुभय-विषयसेवाविसामग्रीरूपो बलिष्ठः स्वभावतः प्राप्तः। तथा च तेषां सेवाविरुद्धकायिकवाचिक-मानसिकसामग्र्युत्पादकत्वेन मानसा जघन्यत्वापादनात् तया तन्मयताया असिद्धौ सुखेन तृतीयस्य फलस्य सिद्धिरित्यर्थः।

ननु भवत्वेवं तथापि यदत्र मुख्यं फलं तत् दानैकसाध्यमित्युक्तम्। दानं तु पूर्वं ज्ञातुमशक्यम्। तथा सति स्वतःपुरुषार्थत्वेन सेवाकरणे मम किं फलं भविष्यतीति सन्देहः कथं निवर्तेतेत्यत आहुः।

तु बाधकमकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि यथा वा इति।

तुः शंकानिरासे। बाधकं पूर्वोक्तं त्रयमकर्तव्यं भगवतः सर्वथा चेत् तदा हि निश्चयेन गतिर्न, प्राणानां देहादुत्क्रमणं न। मनसो वा भगवद्व्यतिरिक्ते गतिर्न, किन्तु 'वाङ्मनसि दर्शनाच्छब्दाच्चे'त्यधिकरणोक्तन्यायेन भगवत्येव लयः। 'ता नाविद'त्रि-

१ विसामग्र्युत्पादकत्वात् प्रतिबन्धकत्वमिति पाठः।

त्युक्तरीत्या भगवदेकतानत्वं **हि** निश्चयेन । एतेन मुख्यफलभवनविषयकसन्देहनिवृत्ति-रित्यर्थः । **यथावेति** भिन्नं वाक्यम् । अत्रापि **बाधकं भगवतः अकर्तव्यं** चेदि-त्यन्वेति । तथा च **यथा** येन प्रकारेण सेवा, यत्तदोर्नित्यसम्बन्धात्तथा तेन प्रकारेण बाधकं भगवतोकर्तव्यं चेत्तदा, **वा** फले विकल्पः, सेवा मध्यमा चेन्मध्यमम्, जघन्या चेज्जघन्यं फलमित्येवं सन्देहनिवृत्तिरित्यर्थः । अथवा । ननु सेवा हि भक्तिमार्गीयं साधनम् । भक्ति-मार्गश्चानुग्रहैकलभ्यः पुष्टिप्रवाहमर्यादायां स्थापितः, निबन्धे च 'सर्वथा चेद्धरिकृपा न भविष्यति यस्य हि । तस्य सर्वमशक्यं हि मार्गेस्मिन् सुतरामपी'त्यनेन । एवं सत्यस्मिन् मार्गे प्रतिबन्ध एव कथं येन फलत्रैविध्यमित्यत आहुः **तु बाधकमित्यारभ्य यथा-वेत्यन्तम्** । अत्र त्रीणि वाक्यानि, तेषु त्रिष्वपि बाधकपदं चेत्पदं चान्वेति । तथा च **बाधकं** पूर्वोक्तं **भगवतः अकर्तव्यं चेत्तदा** प्रतिबन्धस्याभावाद्गतिर्मध्यमं फलं भवति । **बाधकं सर्वथा** चेत्तदा **न हि** निश्चयेन सेवाफलमेव न । **बाधकं यथा** तथा चेत्तदा **वा** विकल्पः । तथा चैवं भगवदिच्छातस्त्रैविध्यमित्यर्थः ।

तर्हि विकल्पे किं कार्यमित्यत आहुः ।

**अतत्त्वनिर्धारोऽविवेकः साधनं मतम् ॥ ३ ॥**
**बाधकानां परित्याग**, इति ।

अत्रोक्तवाक्यद्वयस्य त्रयस्य चाऽसन्दिग्धत्वादतत्त्वनिर्धार इत्यादिकं व्याकुर्वन्ति । **त्रयाणां साधनपरित्यागः कर्तव्य** इति । **त्रयाणां** पूर्वोक्तानां बाधकानां यत्साधनमतत्त्वनिर्धाराविवेकरूपं तस्य **परित्यागः** सर्वथा त्यागः कर्तव्यः । तत्प्रतियोगि-भूततत्त्वनिर्धारविवेकयोरभ्यासेन तयोः प्रागभावानिवृत्तिः सम्पादनीया, ध्वंसो वा । तथा च नवीनतदुत्पादकसाधनत्यागे यथा भोजनपरित्यागे पूर्वाजीर्णस्य निवृत्तिः भाविनश्चानुत्पत्ति-स्तथा तत्त्वनिर्धारे जाते बुद्धिदोषरूपस्योद्वेगस्य निवृत्त्या विवेके च जाते प्रतिबन्धभोग-योर्निवृत्त्या तयोर्निःशेषनाशः सम्पादनीय इत्यर्थः ।

ननु बाधकत्यागे कर्तव्ये भोगत्याग आगतः, तथाकृते शरीरस्थितेर्बलादेश्चासम्भवात् सेवाया एवासिद्धिः, प्रतिबन्धस्य चादृष्टजन्यत्वात् तत्त्यागस्याशक्यत्वमिति सेवासिद्धिरेव दुर्घटेत्याशंकायां तदर्थं विभागमाहुः भोगेपीत्यादि ।

**भोगेप्येकं तथा परम् ।**
**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥**

**अपि** समुच्चये । **भोगे**, अपि शब्दात् प्रतिबन्धे, एकं परित्याज्यमिति शेषः । **तथेति** वैधर्म्ये दृष्टान्तः । यथा भोगप्रतिबन्धयोरेकं परित्याज्यं तथा परं द्वितीयं निःप्रत्यूहं निष्प्रत्यूहम् । भोगस्य निःप्रत्यूहत्वे हेतुर्**महान् भोगः प्रथमे विशत** इति ।

प्रतिबन्धस्य तथात्वे हेतुः **सदेति**। तदेतत् सर्वं मन्दादेर्दुष्करं दुर्ज्ञेयं चेति तदर्थं गृह्णन्तो व्याकुर्वन्तः प्रतिलोमक्रममादाय प्रथमतो भोगं विभजन्ते **भोग** इत्यादि। भोग उक्तरूपो द्विप्रकारकः। तयोर्मध्ये लोकासक्तिजन्या सार्वदिकत्वेन बलवद्बाधकत्वादवश्यं त्यक्तव्य एवेत्यर्थः। ततो न्यूनं प्रतिबन्धं विभजन्ते **प्रतिबन्धोपी**त्यादि। तस्य कादाचित्कत्वेन स्वल्पत्वात् पूर्वं तत्त्यागप्रकारमाहुः **तत्रे**त्यादि। तयोः प्रतिबन्धयोर्मध्ये **आद्यः साधारणः बुद्ध्या** उपायचातुर्येण त्याज्यः। यद्यपि तत्त्वनिर्धारविवेकौ पूर्वं प्रतिबन्धविघातकत्वेन सूचितौ तथापि न तावन्मात्रेण निवृत्तिः, किन्तु बुद्धिरपि तत्सहकारित्वेनापेक्षिता। अतस्तया त्याज्य इत्यर्थः। ननु भवत्वेवं तथाप्यलौकिकभोगात्यागे किं बीजमित्याकांक्षायां तत्र बीजमाहुः **अलौकिक** इत्यादि। तु शंकानिरासे। अलौकिको भगवद्दत्तप्रसादत्वेन क्रियमाणो भोगः **फलानां मध्ये प्रथमे** आद्यमनोरथात्मके **प्रवेशं प्राप्नोत्य**तो निःप्रत्यूहत्वान्न त्याज्य इत्यर्थः। अयमेव हेतुर्मूले महानिति पदेनोक्तो बोध्यः। द्वितीयप्रतिबन्धस्य निःप्रत्यूहत्वे यो हेतुः **सदा** पदेनोक्तस्तं व्युत्पादयन्ति **भगवत्कृत** इत्यादि। सेवायां स्वस्य रुचेः सामग्रीसम्पत्तेश्च सत्त्वेपि यदा पुनः पुनस्तद्विघटनेन तन्निर्वाहाभावः सेवायामरुच्यादिर्वा स भगवत्कृतप्रतिबन्धः। तत्रैव हि स्वस्यान्येषां च 'दैवमत्र विघातक'मिति बुद्धिरुदेति। तादृशः स चेद्भवेत् तदा भगवान् फलं पूर्वोक्तं त्रिविधमपि सेवाफलं न दास्यतीति मन्तव्यम्। तेन सेवाप्रतिबन्धवता युक्तिभिर्विचारणीयम्। तदान्येषां गुर्वादीनां सेवां चेत्तदर्थं कुर्यात्तदा सापि व्यर्था। एतत्फलरूपार्थविरहितेति मन्तव्यमिति पूर्वेण सम्बन्धः। तदायं जीव 'एवं पञ्चविधं लिंग'मिति चतुर्थस्कन्धवाक्योक्तश्चेतनायुक्तसंघात आसुर इति निर्धारः कार्य इति प्रायपाठादायाति। तदा ज्ञानमार्गेण स्वात्मनि प्रपञ्चे चाक्षरब्रह्मत्वभावनपरेणास्थूलादिसदाद्युपासनपरेण वा स्थातव्यं शोकाभावाय। आत्मज्ञानस्य शोकनाशकत्वश्रावणात्तथा स्थितौ तस्मिन् संघाते निवृत्ते एतस्याक्षरसायुज्यं या तत्र स्थितिर्वा भवतीति **विशेषतः** सेवाफलात् पृथक्करणमित्यर्थः।

अत्रैतद्ग्रन्थदर्शनेन ममेदं प्रतिभाति। आसुरजीवा हि पुष्टिप्रवाहमर्यादायां 'जीवास्ते ह्यासुराः सर्वे प्रवृत्तिं चेति वर्णिता' इत्युक्तलक्षणका अज्ञदुर्ज्ञभेदेन द्विविधा निरूपिताः। ते तु नोपदेशार्हाः। 'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः। भवान्तसम्भवा दैवात् तेषामर्थे निरूप्यत' इति प्रतिज्ञावाक्येन तथा निश्चयात्। अतःपरं 'प्रवाहेपि समागत्य पुष्टिस्थस्तैर्न युज्यते। सोपि तैस्तत्कुले जातः कर्मणा जायते यत' इत्युक्तोवशिष्यते। यथा अलीखानादिः। अतस्तादृशं तदेश्यं प्रति वायमुपदेश इति॥ ४॥

एवमलौकिकभोगभगवत्कृतप्रतिबन्धयोस्त्यागानर्हत्वे बीजं व्याख्याय साधाप्रतिबन्धलौकिकभोगयोस्त्याज्यत्वे बीजं वक्तुमवतारयन्ति।

**सविघ्नोऽल्पो घातकः स्याद् बलादेतौ सदा मतौ ।**
**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

**साधारण** इत्यादि । **कथमिति** हेतुरूपप्रकारबोधकम् । तथा चैतयोस्त्यक्तव्यताप्रयोजकः प्रकारः क इत्यर्थः । अन्यथा त्रयाणां साधनपरित्यागः कर्तव्य इति पूर्वग्रन्थविरोध आपद्येतेति । व्याकुर्वन्ति **सविघ्नत्वादित्यादि** । कालादिकृतविघ्नसाहित्यात् स्वरूपतः साधनतः फलतश्चाल्पत्वात् तथेत्यर्थः । एव भोगे त्याज्यत्वधीजद्वये व्याख्याते शिष्टो घातकत्वरूपो हेतुः साधारणप्रतिबन्धनिष्ठ इत्यर्थादेव बोधितम् ।

ननु प्रतिबन्धकत्यागप्रकारस्य पूर्वमुक्तत्वात्पुनस्तत्कथनस्य किं प्रयोजनमत आहुः **बलादेताविति** । व्याकुर्वन्ति एताविस्यादि । यत **एतौ** लौकिकभोगसाधारणप्रतिबन्धौ **सदा** क्षणे क्षणे प्रतिबन्धकावतो बुद्ध्या उपायचातुर्येण बलाद् हठात् त्याज्यौ । यथाधिक भुक्त चेन्ममेदानीन्तना सेवा गता, मया गानायासत्त्या जागरः कृतश्चेदिदानीं निद्रायाति, तस्मादेव न विधेयमित्येव बुद्ध्योपायचातुर्येण सर्वथा त्यक्तव्याविलेतदर्थं पुनः कथनमित्यर्थः । **द्वितीये सर्वथेति** व्याकुर्वन्ति । **द्वितीय** इत्यादि । पूर्वं भोगप्रतिबन्धयोरुभयोरुक्तत्वात् कोत्र द्वितीय इति शङ्कानिरासायैतदुक्तम् । ननु भगवत्कृते प्रतिबन्धे यादृशी स्थितिरपेक्षिता सा तु पूर्वं निवृत्तैवेति पुनस्तदुक्तेः कि प्रयोजनमत आहुः **ज्ञानेत्यादि** । तथा च पूर्वोक्तादपि यो हीनः सिद्धान्तमुक्तावल्यां 'भजयमाने त्वि'ति कारिकयोक्तस्तस्य संसारेऽत्यन्ताभिनिवेशनिवृत्त्यर्थमिदमित्यर्थः ॥ ५ ॥

ननु पूर्वमुद्वेगादित्रयं ससाधनं त्याज्यत्वेनोक्त्वाग्रे तत् त्याज्यत्वात्याज्यत्वविभागं च कृत्वा पश्चाद्द्वयोरेवावश्य त्याज्यत्वं यन्निरूपितं न तूद्वेगस्यापि, तत् कुत इत्याकांक्षायामाहुः ।

**न त्वाद्ये दातृता नास्तीति,**

अत्र प्राच्यः पाठं द्विधाकुर्वन्ति केचिन्नन्विति । केचिन्न त्वेति । तत्रापि नु इति भिन्नं पदं निश्चयार्थकमिति मम प्रतिभाति । **आद्ये** उद्वेगे । तुः शङ्कानिरासे । नु निश्चयेन वा न, चिन्ता फलसाधननिषयिणी न त्याज्या । तत्र हेतुः । दातृता नास्तीति । अदातृता नास्तीति वा । तदेतद्व्याकुर्वन्ति । **आद्यफलेत्यादि** । आद्यं यत् फलमलौकिकसामर्थ्यरूपं, तस्याभावे अप्राप्तौ, भगवतो दातृत्वं नास्ति, तदा तस्मिन् दानसमये सेवा अनाधिदैविकी ।

उद्वेगो हि मानसो, मानस्या एव निरुद्धसामग्रीजनकः, सा दानसमये 'चेतस्तत्प्रवणं' 'ता नाविदन्' इत्यिवद्भवति दीनं न करोति, तेन सा सेवा अनाधिदैविकीन्मुखा भवति । अत उद्वेगे तन्निवृत्त्यर्थां चिन्ता भगवद्भावनरूपा न त्याज्या, किन्तु

१ [illegible] ।

सदा कर्तव्यैव । द्वितीयपक्षे उद्वेगेन कृत्वा फलाभावे मुख्यफलाप्राप्तौ भगवतोऽदातृत्वं नास्ति किन्तु तदोद्वेगदशायां सेवानाधिदैविकीत्युक्तं भवति । अतस्तस्या आधिदैविकीत्वसम्पादनायोद्वेगनिवृत्त्यर्थो चिन्ता न त्याज्या किन्तु कार्यैव । तथा चोद्वेगस्य मुख्यफलातिरिक्तफलाप्रतिबन्धकत्वाद् मुख्यफलस्य केवलं दानमात्रसाध्यत्वाद् दित्सायाश्च 'अनिच्छतो गतिमण्वीं प्रयुंक्त' इतिवाक्येन 'कर्हिचित् स्म न भक्तियोग'मिति वाक्येन च ज्ञातुमशक्यत्वात्रोक्तमित्यर्थः । अत्रानाधिदैविकीत्युक्तं भवतीति कथनेन सेवाया अनाधिदैविकीत्वसम्पादकत्वरूपमुद्वेगस्याज्यताबीजमप्युक्तं ज्ञेयम् ।

ननु तत्त्वनिर्धारविवेकाभ्यां प्रतिबन्धत्यागे यतमानस्यापि त्रयाणां त्याज्यबीजं जानतोपि यदा न प्रतिबन्धनिवृत्तिः तदानेन किं कार्यमित्यत आहुः ।

तृतीये बाधकं गृहमिति ।

तदेतद्विवृण्वन्ति **भोगाभाव** इत्यादि । उद्विग्नः साधारणप्रतिबद्धोपि निरुपधि यथाकथञ्चन भक्तिमान् सेवेत तदापि तृतीयं फलं भक्तिमत्त्वाद्भवति तस्मिन्नपि भोगो लौकिकः प्रतिबन्धं करोति । अतस्तृतीये भोगरूपे प्रतिबन्धेऽशक्यत्यागे सति भगवता गृहत्याग एवानेन प्रकारेण बोध्यत इत्यनुसन्धाय बाधकभूतं गृहं त्याज्यम् । यतो **भोगाभावस्तदैव सिध्यति यदा गृहपरित्यागः** । तथा च तदानीमयमेवोपायो नेतर इत्यर्थः । अयं त्यागो न भक्तिमार्गीयसंन्यासरूपः, अधिकाराभावात्, किन्तु 'तादृशस्यापि सततं गेहस्थानं विनाशन'मित्यादि भक्तिवर्धिन्युक्तभक्तिसाधनसम्पादनार्थं इति ज्ञातव्यम् । एवमत्र यावान् कठिनांशः सोत्र स्वयं व्याख्यातः ।

अतःपरं य एवं गृहत्यागमपि न कर्तुं शक्नुयात् तदर्थं मूले उपायमुपदिशन्ति ।

**अवश्येयं सदा भाव्येत्यादि ।**

**इयं** फलत्रयी प्रतिबन्धकत्रयी च **अवश्या**, यथायथं भगवदनुग्रहैकलभ्यत्वाद्भगवद्विचारमात्रसाध्यत्वाच्च **अवश्या**, न स्वकृतसाधनाद्यायत्ता । अतः **सदा भाव्या** प्रतिबन्धोपस्थितावश्यत्वेनैव स्वदैन्याय तदा तदा विचारणीया । अत्र सदापदेनेदमेव बोध्यते, न तु कालनैरन्तर्यम् । 'निवेदनं तु स्मर्तव्यं सर्वदे'त्यादीनां विरोधापत्तेः ।

**सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

फलस्य स्वकृतसाधनायत्तत्वभावनं प्रतिबन्धस्य स्वकृतसाधनान्तरनाश्यत्वभावनं च मनोभ्रमश्चित्तबहिर्मुख्यसम्पादकं चाञ्चल्यमात्रम्, भगवदिच्छां विना कथमपि केनापि किञ्चिदपि कर्तुमशक्यत्वात् । '*एष उ एव साधु कर्म कारयती*'त्यादिश्रुत्या तथा बोधनात् । 'अनन्याश्चिन्तयन्तो मा'मिति वाक्ये तादृशां योगक्षेमवहनस्य स्वकर्तव्यताया उक्तत्वादत्र प्रतिबन्धनिवृत्त्यादियोगक्षेमस्यापि भगवतैव कर्तव्यत्वादेकादशस्य विंशेऽध्याये 'जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेप्यनीश्वरः ॥ ततो

भजेत मां भक्त्या श्रद्धालुर्दृढनिश्चयः । जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हय'न्नि-त्यन्तेन तथा करणस्याज्ञापनाच्च ॥ ६ ॥

ननु यद्येवं तदा भावनस्यापि किं प्रयोजनम् । नहि जीवकृतया भावनया सत्य-संकल्पो भगवान् स्वविचारितादन्यथा किमपि करोति । तथा सति किं भावनोपदेशेनेत्यत आहुः तदीयैरपीत्यादि ।

**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**

एते हि तदीयाः, सर्वसमर्पणात् सर्वप्रकारेण भगवत एव भावनाच्च भगवदीयाः, तैरपि तदुक्तं भावनं कार्यम् । तत्र हेतुः । पुष्टौ अनुग्रहविषये, भगवान्नैव विलम्बयेत् । एतत्कृत्वा विलम्बं न कारयेत्, न कुर्याद्वा । रामो राज्यमचीकरदितिवत् स्वार्थे णिच् । तथा च पुष्टिमर्यादायां स्वयमेव साधनानामुपदेशादस्मात् साधनद्वारा बोद्धिधीर्षति, तानि विना वा न वेति न ज्ञातुं शक्यते, अतो विलम्बाभावायायमुपदेश इत्यर्थः ।

ननु 'सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे । चित्तजा यैस्तु भूतानां सज्जमानो निबध्यत' इत्येकादशस्कन्धे भगवद्वाक्यात् चित्तजा गुणाः कालकर्मस्वभाववशात् क्षुभ्य-माणाः प्रतिबध्नन्त्येव तदा किं कार्यमित्यत आहुः गुणक्षोभेपीत्यादि ।

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

गुणक्षोभेपि परंपरया भगवदिच्छाधीन इति तत्रापि एतदेव भगवत्कृतं विलम्बन-मेव कारणत्वेन द्रष्टव्यम् । इति मे मतिः । इदमस्माभिरेवोच्यते । अत्र नान्यस्य सम्मतिरित्यर्थः ॥ ७ ॥

तत्र हेतुः कुसृष्टिरित्यादि ।

**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

शास्त्रे तदर्थं साधनान्तरोपदेशदर्शनाद्विरुद्धयुक्तिसृष्टिरत्र वा विकल्पेनोत्पद्येत, परं स निकल्पोधिकारभेदानवधानाद् वै निश्चयेन भ्रमः । भगवता 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति गुणमूलनिवृत्तये स्वप्रपत्ति-मात्रस्यैव साधनस्योक्तत्वात् । साधनान्तरकरणे च निःशेषतन्निवृत्त्यभावात् । भगवत्कृत-विलम्बभावने तु भगवानेव शरणमिति बुद्ध्युत्पत्तेः । अतोस्माभिरिदं भगवदभिप्रेतमेवोच्यत इति तयेत्यर्थः ॥ ७॥ ॥

इति तत्प्रेरणप्राप्तबुद्धिस्तु पुरुषोत्तमः ।
सेवाफलोक्तिविवृतेर्विवृतिं चैवमुक्तवान् ॥ १ ॥

**इतिश्रीमद्वल्लभाचार्यचरणैकतानश्रीपीताम्बरात्मजस्य श्रीपुरुषोत्तमस्य कृतौ सेवाफलविवृतिप्रकाशः सम्पूर्णः ॥**

---

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## विवृतिविवरणसमेतम् ।

नत्वा श्रीवल्लभाचार्यान् विट्ठलेशान् निजान् गुरून् ।
सेवाफलस्य विवृतिव्याख्यानं वितनोम्यहम् ॥ १ ॥

अथ दैवोद्धारप्रयत्नात्मानः श्रीमदाचार्या निजानां सुखेन सिद्धान्तमुक्तावल्युक्तसेवायाः सिद्धये तत्फलप्रतिबन्धसाधनानि निरूपयन्तः प्रतिज्ञां कुर्वन्ति **यादृशी सेव**नेति । एतद्ग्रन्थस्यातिसंक्षिप्तत्वेन दुर्बोध्यत्वात् स्वयमेव विवृतिं रचयन्तः सेवाया निजग्रन्थेषु फलत्वांगीकारेण तत्फलेष्वन्येषूच्यमानेषु सेवायाः साधनतामाशंक्य साधनताभ्रमं वारयन्तः फलनामान्याहुः **सेवायामिति** ।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**
**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**

**सेवायां फलत्रयम्, अलौकिकसामर्थ्यम्, सायुज्यम्, सेवोपयोगिदेहो वैकुण्ठादिषु ।** सर्वत्र साधनान्ते फलम् । फले लब्धे साधनत्यागः । अत्र सेवासाधकसेवायां क्रियमाणायामित्युक्त्या न तद्भ्रमस्यावकाशः । यादृशी सिद्धान्तमुक्तावल्यां कथिता मानसी सेवा, तत्सिद्धौ मानसीत्वे सिद्धे, तस्यां यत्फलत्रयमलौकिकादि, तदुच्यते । आद्यफलस्यालौकिकसामर्थ्यस्य प्रभुणा दाने कृते, चकारात्तद्देहेन्द्रियादिषु स्वरूपे स्थापिते, आदौ उत्तमफले जातो मनोरथः सिध्येत्, तस्यादाने फलं सायुज्यं वा सिध्येत्, अधिकारः सेवोपयोगिदेहो वा सिध्येदित्यग्रिमेणान्वयः । हि युक्तोयमर्थः । अत्र द्वौ वाशब्दौ पूर्वफलतुल्यत्वबोधकौ ॥ १ ॥

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः ।**
**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

**सेवायां प्रतिबन्धकत्रयम्, उद्वेगः प्रतिबन्धो वा भोगो वा ।** फलमिति । आद्यफलमनियतम्, परमानुग्रहैकलभ्यत्वात् । एवं चाद्यस्य दानैकहेतुत्वम् । फलद्वयस्य साधारणानुग्रहहेतुत्वम् । नन्वधिकारस्य सेवापूर्वकाले स्थितत्वात्कथं फलत्वमित्यत आहुः न काल इति । अस्मिन्नधिकारे सत्ययुगादिरूपः कालो नियामको न । अतः कालानियम्यत्वात्फलताधिकारस्य । एवं सोपपत्तिकं फलत्रयमुक्त्वा प्रतिबन्धकत्रयमाहुः मूले उद्वेग इति, विवृतौ **सेवायामिति** । उद्धिको वेगः भयम्, अपराधादिना मनश्चाञ्चल्यं वा पापादिना । स च सेवाऽरुचिसम्पादनेन बाधकः । प्रतिबन्धश्च सेवायां रुचौ

सत्यामपि तत्समये लौकिकवैदिककायिकादिकार्यासक्तिरूपः । स च तत्समयरोधनेन बाधकः । भोगश्च शरीरवृत्त्यनुसारेणाम्यवहारशयनादिरूपः । सोपि पूर्ववद्बाधकः ॥ २ ॥

ननु फलानामनुग्रहलभ्यतयानुग्रहस्य च भगवदिच्छाधीनत्वात्सेवायां क्रियमाणायां मम फलं भविष्यति न वेति सन्देहः कथमपेयादतस्तन्निवारणाय तु बाधकमित्यारभ्य यथा वेत्यन्तमाहुः ।

अकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि ।
यथा वाऽतत्त्वनिर्धारोऽविवेकः साधनं मतम् ॥ ३ ॥
बाधकानां परित्यागः,

त्रयाणां साधनपरित्यागः कर्तव्यः । भगवतो बाधकत्रयं न करणीयं चेत् तर्हि मनस अन्यत्र गमनं न, फलं तु यथा वा । येन प्रकारेण सेवा तथा तेन प्रकारेण फलमिति सन्देहाभावः । यद्वा भक्तिमार्गो भगवदनुग्रहलभ्यः । तस्मिन् कथं प्रतिबन्धकत्रयमित्यतस्तु बाधकमित्यादि यथा वेत्यन्तमाहुः । वाक्यत्रयमत्र । बाधकं पूर्वोक्तं भगवतोकर्तव्यं चेत्तदा गतिर्नाम सेवायां सायुज्यम् ॥ १ ॥ बाधकं चेत् सर्वथा तदा न हि फलाभाव इत्यर्थः ॥ २ ॥ यत्तदोर्नित्यसम्बन्धाद्यथा बाधक तथा चेत्तदा वा नाम फले विकल्पः ॥ ३ ॥ तथा चैवं भगवदिच्छयानुग्रहस्य त्रैविध्यात् फले त्रैविध्यम् । तथा च यस्य जीवस्य याद्योधिकारः स तादृशीं सेवां करिष्यति, तस्य स्वाधिकारयोग्यं फलं च भविष्यतीति सन्देहाभावः । एवं फलविकल्पे प्राप्ते किं कार्यमत आहुः **अतत्त्वनिर्धारं** इत्यारभ्य **बाधकानां परित्याग** इत्यन्तम् । विवृतौ त्रयाणामिति । त्रयाणामुद्वेगादीनां साधनस्यातत्त्वनिर्धारस्याविवेकस्य च तत्त्वनिर्धारस्य विवेकयोरभ्यासेन सर्वतस्त्यागः कर्तव्यः । ननु तत्त्वनिर्धारविवेकौ किंरूपौ? तथा हि, तस्य लोकवेदप्रसिद्धस्य पुरुषोत्तमस्य भावस्तत्त्वम्, तस्य निर्धरणं निर्धारः । 'सर्वं खल्विदं ब्रह्म,' 'स हैतावानास,' 'अखण्डं कृष्णत्र'दित्यादिभिः सर्वत्र भगवद्भावनम् । विवेकस्तु 'हरिः सर्वं निजेच्छातः करिष्यती'ति सर्वत्र भगवत्कृतिः । ननु बाधकानां मध्ये भोगस्यापि त्यागे जाते तं विना शरीरस्थितेरसम्भवात् सेवाया असिद्धिमाशङ्क्य त्यागे व्यवस्थामाहुः **भोगेपीति** ।

भोगेप्येकं तथा परम् ।
निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥

भोगो हि द्विविधः, लौकिकोऽलौकिकश्च । तत्र लौकिकस्त्याज्य एव । प्रतिबन्धोपि द्विविधः, साधारणो भगवत्कृतश्चेति । तत्राद्यो बुद्ध्या त्याज्यः । अलौकिकभोगस्तु फलानां मध्ये प्रथमे प्रविशति । भगवत्कृतश्चेत्प्रतिबन्धस्तदा भगवान्फलं न दास्यतीति मन्तव्यम् । तदान्यसेवापि व्यर्था । तदासुरोयं जीव इति निर्धारः । तदा ज्ञानमार्गेण स्थातव्यं

**शोकाभावायेति विवेकः ।** भोगप्रतिबन्धयोरेकैकं परित्याज्यम् । अपिशब्देन प्रतिबन्धस्य ग्रहणम् । तथा परं द्वितीयं निष्प्रत्यूहं विघ्नरहितम्, तत्र हेतुः, महान्भोगः । एवं प्रतिबन्धरूपं वस्त्वपि निष्प्रत्यूहम् । तत्र हेतुः, सदेति । एतत्सर्वं मनसि कृत्वा विवृतौ तात्पर्यमाहुः सूचिकटाहन्यायेन । पूर्वं भोगद्वैविध्यमाहुः **भोग** इति । लौकिकालौकिकभेदेन भोगो द्विधा । तत्र **अलौकिको** भोगो लौकिकासक्तिरूपत्वात् सेवासमयरोधकत्वात्त्याज्यः । एवं लौकिकभोगं निरूप्य हेतुसहितमलौकिकभोगं निरूपयन्ति तथेति । विवृतौ **अलौकिकेति** । अलौकिको यो भोगः स तु फलत्रये यदाद्यमलौकिकसामर्थ्यं तस्मिन् सति भगवद्दत्तप्रसादेन भवतीति तत्प्रवेश उक्तः । एवं च तस्यात्याज्यत्वे बीजमुक्तम् । एवं द्विप्रकारकं भोगं निरूप्य द्वितीयप्रतिबन्धस्य निर्विघ्नत्वे यो हेतुर्मूले सदापदेनोक्तस्तं विवृतौ भगवत्कृत इत्यादिना विशदयन्ति । सेवायां प्रवृत्तस्य यदा दुःसङ्गादिना भगवदीयद्रोहे कृते प्रभुः स्वयं प्रतिबन्धं करोति, तदा सेवायामरुचिर्भवति, तदा सर्वथा फलाभावः, तदा तदुपायार्थमन्यसेवनं न कर्तव्यम्, व्यर्थत्वात्, तदायं जीव आसुर एव । दैवजीवे सर्वथा फलाभावाभावात् । तदा एतादृशे प्रतिबन्धे चिन्तानिवृत्त्यै आदिसृष्टौ भगवान् जीवं यथा विचारितवांस्तथैव निजेच्छया करिष्यतीत्यादिरूपेण ज्ञानमार्गेण स्थातव्यम् । एवमलौकिकभोगभगवत्कृतप्रतिबन्धयोरत्याज्यतामुक्त्वा साधारणप्रतिबन्धलौकिकभोगयोस्त्यक्तव्यत्वे विवृतौ बीजमवतारयन्ति **साधारणेति । साधारणो भोगः कथं त्यक्तव्य इत्याकाङ्क्षायामाह सविघ्नोल्पो घातकः स्यादिति ।** ननु लौकिकभोगसाधारणप्रतिबन्धौ केन हेतुना केन प्रकारेण च त्यक्तव्याविति व्याकुर्वन्ति **सविघ्नइति** । लौकिको भोगः सविघ्नत्वाल्पत्वाभ्यां हेतुभ्यां बलाद्धठात्त्याज्यः । घातकत्वेन हेतुना साधारणः प्रतिबन्धस्त्याज्यः । नन्वेतत्त्यागप्रकारस्तत्त्वनिर्धारविवेकरूपः पूर्वमुक्त इति पुनः किमर्थमुच्यते ? सत्यम् । पूर्वं यदुक्तः स तु नवीनतदुत्पादकसाधनत्यागरूपः । अयं तूत्पन्नयोस्त्यागप्रकारोत उच्यते ।

**सविघ्नोल्पो घातकः स्याद्बलादेतौ सदा मतौ ।**

सविघ्नत्वादल्पत्वाद्भोगस्त्याज्यः । **एतौ** सदा प्रतिबन्धकौ । बलादिति । यत एतौ **सदा** क्षणेक्षणे सेवासमयरोधकत्वेन **मतौ** ज्ञातौ । अतो बलाद्धठाद्बुद्ध्योपायचातुर्येण त्याज्यौ । तत्स्वरूपं श्रीपुरुषोत्तमा आहुः । तथाहि, 'यथाधिकं भुक्तं चेन्ममेदानींतना सेवा गता, मया गानाद्यासक्त्या जागरः कृतश्चेदिदानीं निद्रायाति, तस्मादेवं न विधेय'मिति । प्रकृतमनुसरामः । यतःपरं ज्ञानस्थित्ययोग्यानां भगवत्कृतप्रतिबन्धे स्थितिप्रकारमाहुः ।

**द्वितीये सर्वथा चिन्ता त्याज्याऽसंसारनिश्चयात् ॥ ८ ॥**

द्वितीयो भगवत्कृतप्रतिबन्धः । ज्ञानस्थित्यभावे चिन्ताभावार्थमाह द्वितीय इति । द्वितीय इति भगवत्कृतप्रतिबन्धे ज्ञानस्थितावपि पुष्टिमार्गीयफलनिपायिणी चिन्ता सर्वथाऽ-

त्याज्या । कुतः ? असंसारनिश्चयात् । अत्रायमर्थः । 'अस्मिन्पातभयं नास्ति मोचकः
सर्वथा यत' इति वाक्येन बलीखानादिरिव जन्मान्तरे उद्धरिष्यति ।

एवं भोगप्रतिबन्धौ त्याज्यत्वेन विचार्य उद्वेगत्यागे बीजं वदन्ति नन्विति ।

**नन्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

**आद्यफलाभावे भगवतो दातृत्वं नास्ति तदा सेवानाधिदैविकी**
**त्युक्तं भवति** । अत्र पाठद्वयम् । **नन्विति, न त्विति** । नु निश्चयेन, आद्ये उद्वेगे
सति फलविषयिणी चिन्ता न त्याज्या । तत्र हेतुमाहुः **भगवतो दातृता नास्ति** ।
एतदेव विवृतावाद्येत्यादिनोक्तम् । एवं च सेवाया अनाधिदैविकीत्वसम्पादकत्वादुद्वेगोपि
त्याज्यः, यदिच्छाकृतो यस्तूद्वेगः, स एवैन निवारयिष्यतीतिविचारेण त्याज्यः । एव
जानतोपि यथाकथञ्चित्सेवायां प्रवृत्तस्य यदा लौकिकभोगः प्रतिबन्धं करोति तदा कर्त-
व्यमाहुः **तृतीय** इति । विवृतौ तदपि भोगेत्यादिना व्याचक्षते । **भोगाभावस्तदैव**
**सिध्यति यदा गृहपरित्यागः** । तृतीये भोगरूपे प्रतिबन्धे गृहमेव त्यजेत्, कृष्णा-
र्थमेव गृहं प्रयुञ्जीत । तथा कृते भोगस्यालौकिकत्व सिध्येदिति लौकिकभोगस्त्यक्त एव ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**
**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**
**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**
**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ।**

एवं कठिनांशं स्वय व्याकृत्य गृहत्यागेऽसमर्थानां यत्कर्तव्यं तदाहुः **अवश्येति** ।
इयं फलत्रयी प्रतिबन्धकत्रयी चावश्या, अतो बाधकानामुपस्थितौ स्वदैन्यसिद्धये
सदा विचारणीया । अन्यत्सर्वमिदं साध्वसाधु वा मत्कृतमित्यादिरूपं मनोभ्रमः चित्त-
बाहिर्मुख्यमेवेति ज्ञेयम् । ननु भगवान् सत्यप्रतिज्ञः, यथा पूर्वं विचारितवांस्तथैव करिष्य-
तीति किमेतेनेत्याशंक्याहुः **तदीयैरिति** । एते हि समर्पणेन तदीयाः । स्वकीयानां सर्वं
चिन्तन भगवत एव करणीयम् । अतो भगवदीयैरपि तदुक्तभावनं कार्यम् । एतेनानन्य-
शरणान् ज्ञात्वा पुष्टावनुग्रहे भगवान् बाधकेषु सत्स्वपि नैव विलम्बयेत्, फलं दद्यादेव ।
ननु चित्तजानां गुणानां क्षोभे विचारे क्रियमाणेपि प्रतिबन्धो भवेदेव तदा यत्कार्यं
तदाहुः **गुणेति** । सत्त्वादिगुणेषु क्षुभ्यमाणेष्वपि भगवत्कृतः प्रतिबन्ध एव कारणमिति
द्रष्टव्यम् । तदापि भगवदिच्छाविचारणमेवोपायो नान्यः । **मम मतेरत्रैव पर्यवसानम्** ।
सर्वमन्यन्मनोभ्रम इति पूर्वमुक्तत्वात् । अत्रास्मिन्विषये काचित्कुसृष्टिः कुबुद्धियुक्तिः
भगवत्कृतप्रतिबन्धस्य निवारणे अन्योप्युपायोस्त्येतद्रूपा मनसि जायेत तदा सापि भ्रमरूपे-
णैव ज्ञेयम् । एतेनानन्यभावनपूर्वकं भगवदीयैः स्थेयम् ॥ ६ ॥ ७॥ ॥

इतिश्रीसेवाफलविवृतिव्याख्यानं समाप्तम् ॥

---

श्रीकृष्णाय नमः।

# सेवाफलम्।

## लालूभट्टोपनामश्रीबालकृष्णदीक्षितविरचितटिप्पणीसमेतम्।

श्रीराधावदनेन्दुश्रीपानमत्तचकोरकम्।
गोवर्धनधरं वन्दे व्रजराजकिशोरकम्॥ १॥
श्रीमदाचार्यवर्यश्रीविठ्ठलेशकृपाबलात्।
सेवाफलस्य विवृतेर्विवृतिं वितनोम्यहम्॥ २॥

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते।**

**सेवायां** फलत्रयमिति। सेवायां सिद्धायां सत्यामित्यर्थः। मूले **यादृशी सेवना प्रोक्ता तत्सिद्धौ** फलमुच्यत इत्यत्र **सिद्धा**विति कथनात् सिद्धस्यैव सर्वत्र फलसाधकत्वात्। तथा च यादृशी सेवना तृतीयस्कन्धे देवहूतिं प्रति कपिलदेवेन 'देवानां गुणलिंगानामानुश्रविककर्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी'त्यनेन भक्तिशब्देनोक्ता, तस्याः सिद्धौ मुख्यमध्यमहीनाधिकारभेदेन फलत्रयं ज्ञेयम्। तदेव **फलत्रयमाहुः अलौकिकसामर्थ्यं सायुज्यं सेवौपयिकदेहो वैकुण्ठादिष्विति**। अलौकिकसामर्थ्यं तु साक्षात् श्रीवृन्दावनादौ श्रीकृष्णस्वरूपदर्शनस्पर्शनादिकृतिक्षमत्वम्। 'पश्यन्ति ते मे रुचिराण्यंब सन्तः प्रसन्नवक्त्रारुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ती'तिवाक्यादिह 'पश्यन्ति त' इति तच्छब्देन 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः' इति पूर्वश्लोके उक्ता मोक्षाभिलाषिणो गृह्यन्ते। तेषां मोक्षान्तपुमर्थानभिलाषात् स्वतन्त्रसेवैकाकांक्षया **अलौकिकसामर्थ्यं** भवति। तेषां पूर्वोक्तभक्त्या प्राकृतलिंगशरीरं नश्यति। 'जरयत्याशु या कोश'मितिवाक्यात्। ततो लिंगशरीरनाशे सति भगवद्दर्शनाद्यभावे प्रसक्ते सायुज्ययोग्यतायां यदि भगवान् कृपयति तदा दिव्यान्यलौकिकेन्द्रियाणि सम्पादयति, ततस्तैर्भगवद्दत्तैरप्राकृतेन्द्रियैः 'पश्यन्ति ते मे' इति श्लोकोक्तं दर्शनादि सिध्यति। तदेतदुक्तं मूले।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः॥ १॥**

अर्थस्तु अलौकिकस्यैन्द्रियवर्गस्य दाने भगवता कृते सति आद्यः 'पश्यन्ती'त्यादिश्लोकत्रयोक्तेषु त्रिषु फलेषु प्रथमो मनोरथो भगवद्दर्शनादिविषयकः सिध्येत्, फलपर्यवसायी भवतीति भगवद्दर्शनादेः परमफलत्वम्। 'मसृण्वतां फलमिदं'मितिश्रुति-

रूपगोपिकावाक्यात् । अक्षण्वतामिन्द्रियवतामित्यर्थः । तस्मादलौकिकेन्द्रियदानं भगवत्कर्तृकमपेक्षितम्, अन्यथा पूर्वोक्तभक्त्या 'जरयत्याशु या कोश'मितिवाक्यालिंगशरीरभंगे दर्शनादिकं न सिध्येदिति भावः । न च मास्तु दर्शनादि, सायुज्यमेवास्त्वितिवाच्यम् । 'नैकात्मतां मे स्पृहयन्ति केचि'दितिवाक्येन तेषां तदनभिलापात् । इह एकात्मतां न स्पृहयन्ति, अपि तु दर्शनादिकमेव स्पृहयन्तीत्यर्थादायाति । 'मत्पादसेवाभिरता' इति वाक्यात् । अत एव मूले स्पृहापदपर्यायः मनोरथशब्दः उक्तः । अत एव वृत्रासुरेणोक्तं 'न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य कांक्षे' इति । अर्थस्तु अपुनर्भवं मोक्षमपि त्वां विरहय्य न कांक्षे अपि तु त्वामेव फलत्वेन कांक्ष इति । एतदेव श्रीव्रजसुन्दरीभिरुक्तं 'अक्षण्वतां फलमिदं न परं विदाम' इति । परो मोक्षः सायुज्यादिरिति सुबोधिन्यां व्याख्यातं च । अत इन्द्रियवतामिदमेव रसात्मकं पुरुषोत्तमस्वरूपमेव फलम् । 'भगवता सह संलापो दर्शनं मिलितस्य चे'ति सुबोधिन्यां सर्वेन्द्रियभोग्यत्वेन कथनात् । अत एवाक्षण्वतामित्यस्य सुबोधिन्या'मात्मलाभान्न परं विद्यते'तिश्रुतेर्मोक्षस्यैव पुरुषोत्तमस्वरूपमेव फलम्, तद्रहितानां तु मोक्ष एव फलमिति व्यवस्थापितम् । पुष्टिभक्तास्तु भगवद्दत्तेन्द्रियाणि लब्ध्वा सकलेन्द्रियैः रसात्मकं स्वरूपमनुभवन्ति । न ह्येतादृक्त्वं सायुज्यादाविति । 'ब्रह्मानन्दे प्रविष्टानामात्मनैव सुखप्रमा संघातस्य विलीनत्वा'दितिनिबन्धात् । अत एव 'दीयमानं न गृह्णन्ति विना मत्सेवनं जना' इत्यनेन सालोक्यादीनामग्रहणमुक्तम् । न च मोक्षसुखाज्ञानान्न गृह्णन्तीतिवाच्यम् । 'मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोन्यत्कालविप्लुत'मितिवाक्ये सेवया पूर्णा इत्युक्त्या तेषां भगवता समाजनात्, अन्यथा अज्ञत्वान्न गृह्णन्तीति भगवान् तेषां निन्दामेव कुर्यान्न स्तुतिम् । अतो ज्ञायते भगवत्सेवायां मोक्षादप्यधिकरसोस्तीति । 'मधुद्विट्सेवानुरक्तमनसामभयोपि फल्गु'रिति वाक्याच्च । अतः फलदशायामाधिदैविकवृन्दावनादौ या फलरूपा भगवत्सेवा सा मोक्षादप्युत्कृष्टा । अतः सा भगवता परमानुग्रहभाजनाय तादृशाधिकारिणे पुष्टिभक्ताय दीयते, न तु सर्वेभ्यः भक्तेभ्य इति ज्ञेयम् । 'अस्त्वेवमंग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति शुकवाक्यात् । इह भक्तियोगमित्यस्य फलरूपपुष्टिभक्तियोगमित्यर्थो ज्ञेयः । एतस्मिन् श्लोके मुक्तिं ददाति भक्तिं न ददातीत्युक्त्या भगवत्कर्तृकदानं विना तादृशी भक्तिर्न प्राप्यत इत्युक्तं भवति । अत एवात्रापि मूले अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथ इत्यनेन दानमेवोक्तम् ।

तथा च सिद्धमेतत् । अलौकिकसामर्थ्यरूपं फलं पुष्टिमार्गीयसेवायामेव, फलद्वयं तु मर्यादाभक्तानाम् । ननु तृतीयस्कन्धे कपिलवाक्ये 'देवानां गुणलिंगाना'मित्यत्र भक्तेर्लक्षणमुक्त्वा 'पश्यन्ति ते मे' इत्यादिना भक्तिफलत्वेन फलत्रयमुक्तम् । तत् कथ-

१ पुष्टिपोषणमिति पाठः ।

मुच्यते **सेवायां** फलत्रयमिति चेत् । न । भक्तिशब्देन सेवाया एवाभिधानात् । भज सेवायामितिधात्वर्थात् । 'लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्,' 'अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे,' 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' 'स एव भक्तियोगाख्य आत्यन्तिक उदाहृत' इत्यत्रादौ भक्तिपदमुक्त्वा, मध्ये सेवनपदं पठित्वा अग्रे स एव भक्तियोगाख्य इति भक्तिपदमुक्तम् । अतोपि ज्ञायते भक्तिशब्देन सेवैव । 'देवानां गुणलिंगाना'मितिलक्षणमुक्त्वा 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहा' इत्यत्र 'सेवाभिरता' इत्यनेन सेवैवाभिहिता, अतोपि भक्तिशब्देन सेवैव । तदुक्तं निबन्धे सर्वनिर्णये, 'भक्तिशब्दस्य धात्वर्थः सेवा प्रत्ययार्थः प्रेमे'ति । तथा च प्रेमसेवा भक्तिशब्दार्थः । इयमेव प्रेमसेवा मानसी सेवेत्युच्यते 'चेतस्तत्प्रवणं सेवे'ति सिद्धान्तमुक्तावल्यां मनोवृत्तेः सेवात्वकथनादत्रापि 'मनसो वृत्तिः स्वाभाविकी तु ये'त्यनेन मनोवृत्तेर्भक्तित्वकथनात् । अतो '**यादृशी सेवना प्रोक्ते**'त्यत्र **सेवना**शब्देन मानसी सेवोच्यते । तस्याः सिद्धौ **अलौकिकसामर्थ्यरूपं फलं** भवति, तस्यास्तारतम्ये गौणं फलद्वयमुक्तम् । अतो भक्तिशब्देन मुख्यतया मानसी सेवाभिधीयते ।

इदं त्ववधेयम् । 'देवानां गुणलिंगाना'मिति भक्तेः स्वरूपलक्षणमुक्त्वा, 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरतामदीहा' इत्यनेन भक्तेः कार्यलक्षणमुक्तम् । तथा च मोक्षान्तपुमर्थस्पृहाराहित्यसम्पादकत्वं तादृग्भक्तित्वमिति भक्तेः कार्यलक्षणम् । एवं सति सर्वपुमर्थान् भक्ता न स्पृहयन्तीत्युक्ते भगवत्स्वरूपमात्रं स्पृहयन्तीति सिध्यति । एवं सकलपुरुषार्थाभिलाषशून्ये पुरुषोत्तमस्वरूपमात्रफलाभिलाषिणि भक्ते परमानुग्रहपरवशो भगवान् स्वरूपात्मकफलप्राप्तये तत्फलप्राप्त्यनुकूलमलौकिकसंघातं सम्पाद्य स्वयं फलरूपेण सर्वेन्द्रियविषयो भवति । तदेतदुक्तम् । **अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः** इति मूले, **अलौकिकसामर्थ्य**मित्यनेन टीकायां विवृतं च । ननु तृतीयस्कन्धे अलौकिकविग्रहप्राप्तिर्नोक्तेति कथमत्राचार्यैरलौकिकसामर्थ्यं फलत्वेनोक्तम् । तत्किंप्रमाणकमिति चेत्, श्रूयताम् । 'पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानी' त्यनेन भगवद्दर्शनादीनां फलत्वेनोक्तिरत्र मानम् । अन्यथा तादृशमलौकिकसंघातं विना 'पश्यन्ति ते मे' इत्यनेनोक्ता दर्शनाद्युक्तिर्विरुध्येत । लौकिकेन्द्रियवर्गस्य निवृत्तत्वात् । 'जरयत्याशु या कोशं निगीर्णमनलो यथे'तिवाक्यात् । अतो दर्शनाद्यन्यथानुपपत्त्या अलौकिकदेहेन्द्रियप्राप्तिराक्षिप्यते । सर्वतो बलवती ह्यन्यथानुपपत्तिः । तथा च सिद्धमलौकिकसामर्थ्यरूपमुत्तमं फलमुत्तमानाम् ॥ १ ॥

एवमुत्तमाधिकारिणामुत्तमफलमुक्त्वा मध्यमाधिकारिणां फलमाहुः **सायुज्य**मिति । 'मद्भक्तिं लभते परां' 'भक्त्या मामभिजानाती'त्युक्त्वा 'विशते तदनन्तर'मित्यनेनोक्तं सायु-

ज्यमित्यर्थः । इदं मध्यमं फलम्, अलौकिकसामर्थ्यापेक्षया हीनम्, सेवौपयिकदेहापेक्षयो-त्तमम् । अतो मध्यमम् । अलौकिकेन्द्रियवर्गस्य दानसापेक्षत्वान्मध्यमानां तदलाभे सायुज्यं भवति । तदुक्तं मूले, फलं चेति ।

फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः ।

फलशब्देन सायुज्यम् । साधारणमर्यादया सर्वेषां भक्तिमतां तत्प्राप्तेः । 'हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्त' इति तृतीयस्कन्धवाक्यात् । न चात्र वाक्ये 'अनिच्छत' इतिपदेन मोक्षेच्छाशून्यानां पुष्टिभक्तानां ग्रहणात्तेषामेव सायुज्य-लाभोऽस्तीतिवाच्यम् । मोक्षस्पृहयैव तैर्भगवद्भक्तेः कृतत्वात् । अनिच्छाकथनं तु भक्तिमहिम्ना कदाचित्तादृशभावोदयात् । न ह्ययं भावस्तेषां सार्वदिकः । अतो भगवति प्रेमाप्येतेषां सोपाधिः । मोक्षदातृत्वेन भगवति जातत्वात् । अत एतेषां सायुज्यप्राप्तिर्भवति । एतच्च तृतीयाध्यायभाष्ये स्फुटम् । पूर्वोक्तालौकिकसामर्थ्यरूपफलाधिकारिणां तु भगवति निरुपा-धिकं प्रेम । सायुज्यादिपुमर्थस्य स्पृहाराहित्येनैवोत्पन्नत्वात् । अतो भगवत्स्वरूपस्य सकले-न्द्रियास्वाद्यत्वेन तेषामपेक्षितत्वादलौकिकसंघातं दत्त्वा सर्वेन्द्रियास्वाद्यो भवति, येषां मोक्षदातृत्वेन सोपाधिकं हरौ प्रेम तेषां सायुज्यमितिविवेकः ।

एवं मध्यमानां फलमुक्त्वा हीनानां फलमाहुः **सेवौपयिकदेहो** वेति । व्यापि-वैकुण्ठादौ पार्षदादिदेहप्राप्तिरित्यर्थः । 'अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टांगमनु-प्रवृत्तम् । श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके' इतिकपिलवाक्यात् । एतदाभासे 'सालोक्यादिरूपं फलमाहे'ति सुबोधिन्यामुक्तत्वात् ।

अत्र केचिद्वैकुण्ठशब्देन व्यापिवैकुण्ठेतरवैकुण्ठानां ग्रहणमिति वदन्ति । तन्न । 'व्यापिवैकुण्ठे सर्वमैश्वर्यादिकमश्नुवत इत्यर्थ' इति सुबोधिन्यामुक्तत्वात् । न चालौकिक-सामर्थ्ये मुख्यफले तादृशविग्रहप्राप्तिरुक्ता, एवं तृतीयेऽपि सेवौपयिकदेहस्याप्राकृतस्य प्राप्ति-रुच्यते, अतः प्रथमतृतीययोः साम्यमापतितमिति वाच्यम् । प्रथमफले भगवतः सर्वेन्द्रिय-भोग्यत्वेन तद्भोगानुगुणदेहलाभः, तृतीये तु सेवामात्रयोग्यदेहलाभ इति विशेषवैलक्षण्यात् ।

इदमत्र ज्ञेयम् । अलौकिकसामर्थ्यरूपं फलं व्यापिवैकुण्ठान्तर्वर्तिनि आधिदैविके वृन्दावनवृहद्वनादौ प्राप्यते । 'पश्यन्ति ते मे रुचिरावतंसे'त्यस्य व्याख्याने वृन्दावनादौ भगवत्साक्षात्कारो भवतीति सुबोधिन्यामुक्तत्वान्मूले अधिकारशब्देन सेवौपयिकदेहो गृह्यते, तादृग्देहस्य सेवाधिकाररूपत्वात् ।

एवं फलत्रयमुक्तम् । तत्रालौकिकसामर्थ्यरूपं फलं पुष्टिभक्तानाम् । सायुज्यं सेवौ-पयिकदेहो मर्यादाभक्तानाम् । अत एव नवमनिबन्धे 'देहपाते दृढे तु स्याद्भक्तानां कृष्णदासता । सायुज्यं वान्यथा तस्मिन् गंगातीरे न संशय' इत्यनेन गंगासेवातः सायुज्य-... ायिकदेहप्राप्तिरुक्ता । सिद्धान्तमुक्तावल्यां 'मर्यादास्थस्तु गंगायां श्रीभागवततत्पर'

इत्यनेन मर्यादास्थस्य तु गंगासेवनमुक्तम् । अत एव 'मर्यादाभक्तिमार्गस्य काष्ठा गंगा परा मते'ति निबन्धे उक्तम् । अत एव मर्यादाभक्तेः सायुज्यादिफलम् । पुष्टिभक्तेस्तु नित्यलीलाप्रवेशरूपं फलमिति स्पष्टमेव तृतीयचतुर्थाध्यायभाष्ये निरूपितमिति दिक् ।

**न कालोत्र नियामकः** । अथ फलत्रयेपि कालो न नियामकः । फलत्रयं कालपरिच्छेद्यं न भवतीत्यर्थः । 'न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो निमिषो लेढि हेति'रिति कपिलवाक्यात्, 'मत्परा न नंक्ष्यन्ती'त्युक्त्या मत्परशब्देन फलत्रयभाक्षानां ग्रहणात् ॥ १॥ ॥

कार्यमात्रप्रतिबन्धकाभावत्वेन कारणतास्वीकारात् सेवासिद्ध्यर्थं सेवाप्रतिबन्धा दूरीकर्तव्या इति तदर्थं प्रतिबन्धकान्निरूपयन्ति ।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**
**बाधकानां परित्यागो भोगेप्येकं तथा परम् ।**

**सेवायां प्रतिबन्धकत्रयम्, उद्वेगः प्रतिबन्धो वा भोगो वा** । **उद्वेगो** भगवत्सेवासमये चित्तक्लेशप्रदश्चाञ्चल्यविशेषः । स च भगवत्सेवां प्रतिबध्नाति । **भोगः** सुखसाधकतया विषयासक्तिसम्पादकत्वेन भगवदासक्तिविरोधात् सेवाविरोधी । एतत्प्रतिबन्धकद्वयं दुःखसुखसाधक प्रतिबन्धरूपम् । 'प्रतिबन्धकं तूदासीनं दुःखसुखे प्रयच्छती'त्यस्य न नामान्तरेण निर्देशः, किन्तु प्रतिबन्धशब्दवाच्यतैव । 'कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावा'दित्यत्र वाङ्मनसोर्विशिष्टकार्यमादाय इन्द्रियेभ्यः पृथक्तया गणनात् । एवमुद्वेगभोगयोरपि दुःखसुखप्रदत्वेन विशिष्टत्वात् पृथङ्निर्देशः । अन्यथा प्रतिबन्धकशब्देनैव उद्वेगभोगयोर्ग्रहणसम्भवात् पृथङ्नामनिर्देशो व्यर्थः स्यात् । **त्रयाणामिति** । उद्वेगप्रतिबन्धभोगानां यानि साधनानि हेतवस्तेषां **परित्यागः कर्तव्यः** । साधनपरित्यागे प्रतिबन्धानामनुत्पत्तेः । मूले **बाधकानां परित्याग** इत्यस्य तेषां **साधनपरित्यागः कर्तव्य** इति व्याख्यानं टीकायाम् । प्रतिबन्धकेषु भोगशब्देन लौकिको भोगो ग्राह्यो न त्वलौकिक इत्याहुः **भोगो द्विविध** इत्यारभ्य **लौकिकस्त्याज्य एवेति** व्याख्यानं टीकायाम् । मूलार्थस्तु **भोगे लौकिकालौकिकभोगे एकं लौकिकभोगात्मकं परं** प्रतिबन्धकमिति । तत्राद्य इति । साधारणप्रतिबन्धभगवत्कृतप्रतिबन्धयोर्मध्ये आद्यः साधारणप्रतिबन्ध इत्यर्थः । तस्य स्वरूपं तु सुखदुःखाजनकत्वेन सेवाप्रतिबन्धकत्वम् । यथा सेवासमये उदासीनेन वागादिव्यवहारः क्रियते स सेवां प्रतिबध्नाति, उद्वेगभोगौ तु दुःखसुखजनकौ, सेवाप्रतिबन्धकाविति विवेकः । **बुद्ध्या त्याज्य इति** । चातुर्येणेत्यर्थः । तथा च व्यवहारचातुर्येण सेवावसरे लौकिकं कार्यं तथा कर्तव्यं यथा सेवावसरे वाद्यं वागादिव्यवहारकार्यमेव न पतेदित्यर्थः । अथवा साधारणप्रतिबन्धो वेदनिन्दारूपः पापरूपश्च । स

तु बुद्ध्या त्याज्यः, बुद्धिपूर्वकं तस्य त्यागः कर्तव्य इत्यर्थः । **अलौकिकभोगस्त्विति ।** भगवत्सेवार्थं मुखदुर्वासनादिदोषनिवृत्तये ताम्बूलभक्षणादिरूपः, भगवद्धामित्वादलौकिकं । 'मन्निष्ठं निर्गुणं स्मृतं'मितिवाक्यात् । 'कायेन वाचा मनसेन्द्रियैर्वा' इति श्लोके भगवदर्थं कृतस्य दन्तधावनादेरपि भगवद्धर्मत्वस्य नवयोगिप्रसङ्गे कविनोक्तत्वात् । 'धर्मान् भागवतान् ब्रूते'ति प्रश्नोपक्रमात् । श्रीमत्प्रभुचरणैः स्वतन्त्रे तथा व्याख्यानाच्च । **फलानां मध्ये प्रथमे प्रविशतीति** । साधनत्वेन प्रविशतीत्यर्थः । अलौकिकसामर्थ्यरूपफलसाधको भवतीति यावत् । अतोयमलौकिकभोगो न त्याज्यः । तदुक्तं मूले ।

**निष्प्रत्यूहं महान् भोगः प्रथमे विशते सदा ।**

अर्थस्तु **महान् भोगः** पूज्यो भोगो भगवत्सेवार्थमङ्गरागलेपादिरूप. **निष्प्रत्यूहं** निर्विघ्नं यथा स्यात्तथा प्रथमेऽलौकिकसामर्थ्यरूपे फले प्रविशति, तत्फलसाधको भवतीति यावत् । साधारणप्रतिबन्धस्य बुद्ध्या त्याज्य इत्यनेन निवृत्त्युपाय उक्तः ॥२॥३॥

एवं भगवत्कृतप्रतिबन्धकस्यापि निवृत्त्युपायो वक्तव्य इत्याशङ्क्य नास्य कश्चिन्निवृत्त्युपाय इत्याहु. **भगवत्कृतश्चे**दित्यारभ्य **विवेक** इत्यन्तेन । **तदा भगवान् फलं न दास्यतीति** । सेवाफलं मुक्तिरूपं न दास्यतीत्यर्थ. । **तदान्यसेवापीति** । मुक्तिप्राप्त्यर्थमन्यस्य तीर्थादेरित्यर्थ. । तत्र हेतु । **तदाऽसुरोयमिति** । आसुरस्य तु 'नियन्धायासुरी मते'ति भगवद्वाक्यात् तस्य मुक्तिर्न भवतीति तीर्थादिसेवापि व्यर्थेति भावः । तदुक्तं मूले ।

**अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हीति ।**

ननु यस्य भगवत्कृतः प्रतिबन्ध. स आसुरः, तस्य सर्वथा मुक्तिर्नास्तीति निरूपितम्, तर्हि फलाभावाद्हित्यजनितक्लेश. स्यात्, तत्क्लेशनिवृत्ति. कथं स्यादित्याशङ्क्य क्लेशनिवृत्त्युपायमाहु. **तदा ज्ञानमार्गेणेति** । येनाहमुत्पादित. तेन परमेश्वरेण यद्विचारितं तथैव भविष्यतीति मया तु स त्याज्यमित्यादिज्ञानरूपेण साधनेन नैश्चिन्त्येन स्थेयमित्यर्थः । तदुक्तं मूले ।

**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ।**

**साधन**मिति शोकाभावसाधनमित्यर्थ. । एवं साधारणप्रतिबन्धो बुद्ध्या त्याज्य इत्युक्त्वा भगवत्कृतप्रतिबन्धस्याशक्यत्यागत्वात् तजन्यशोकनिवृत्तये ज्ञानमार्गेण स्थेयमित्युक्तम् ॥ ४ ॥

अत पर भोगरूपप्रतिबन्धनिवृत्त्युपायमाहुः **साधारणो भोगः** कथमित्यारभ्य **त्याज्य** इत्यन्तेन । भोगस्य सुखहेतुत्वेन त्याज्यत्वं न सम्भवतीत्याशङ्क्याहु. ।

**मविघ्नोल्पोघातकः स्यादिति ।**

मविघ्नत्वादल्पत्वाद्भोगस्य त्याज्यत्वम् । भोगस्य सविघ्नत्वमल्पत्वं च मुहुर्मुहुर्विचार्य त्याग. कार्य इति भाव. । साधारणप्रतिबन्धस्य तु घातकत्वात्त्याज्यत्वम् । साधारण-

१ साधारणप्रतिबन्धस्यापीति पाठ ।

प्रतिबन्धश्च वेदनिन्दारूपः पापरूपश्च । स च महादोषरूपत्वात् सेवासिद्धेर्घातको भवति । अत एव वेदनिन्दायाः पापानां च जन्मान्तरसम्पादकत्वं निबन्धे सेवाप्रकरणे उक्तम् । 'अत्रापि वेदनिन्दायामधर्मकरणात्तथा । नरके न भवेत् पातः किन्तु हीनेषु जायते' इति । एतस्य सर्वेषु सेवाधिकारिषु सम्भवात् साधारणत्वम्, सकलसत्कार्यमात्र-प्रतिबन्धकत्वाच्च साधारणत्वम् । भगवत्कृतप्रतिबन्धस्तु असुरमात्रविषयकत्वादसाधारण इति विशेषो ज्ञेयः । **एतौ सदा प्रतिबन्धकाविति** । लौकिकभोगसाधारणप्रतिबन्धौ सदा सेवाप्रतिबन्धकौ । लौकिकभोगस्य वेदनिन्दारूपपापरूपसाधारणप्रतिबन्धस्य च सर्वदा सम्भवात् सर्वदा प्रतिबन्धकत्वमित्यर्थः । तदुक्तं मूले ।

**बलादेतौ सदा मतौ ।**

**सदा** प्रतिबन्धकौ **मता**वित्यर्थः । भगवत्कृतप्रतिबन्धस्याशक्यत्यागत्वादनिवार्य-त्वेन आसुरजीवस्य सेवाफलाभाव इति निरूप्य तत्कृतशोकनिवृत्तये ज्ञानमार्गेण स्थितिः कार्येति पूर्वं निरूपितम् ।

अतःपरं येन ज्ञानमार्गोपि नाश्रयितुं शक्यस्तस्यासुरस्य चित्तस्वास्थ्यप्रकारमाहुः **ज्ञानस्थित्यभावे चिन्ताऽभावार्थमाहे**ति । यस्यासुरस्य ज्ञानस्थित्यभावस्तस्य चिन्ताऽभावसम्पादनार्थमित्यर्थः । **द्वितीय** इतीति । भगवत्कृतप्रतिबन्ध इत्यर्थः ।

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

अर्थस्तु प्रतिबन्धयोर्मध्ये **द्वितीये** भगवत्कृतप्रतिबन्धे **चिन्ता** न कर्तव्या । तत्र हेतुः । **संसारनिश्चया**दिति । मम संसार एव फलं परमेश्वरेण विचारितं न मुक्तिः । अत आशैव न रक्षणीया । 'निबन्धायासुरी मता' इति वाक्यात् । एवं च चिन्तापि न कार्येति । एवं प्रकारेण स्वास्थ्यं मनसि सम्पादनीयमितिभावः ।

एवमासुरस्य भेदद्वयम् । तत्र '**ज्ञानमार्गेण स्थातव्य**'मित्येकः प्रकारः पूर्वं टीकाया-मुक्तः । मूले **अकर्तव्यं भगवत** इत्यारभ्य **विवेकः साधनं मत**मित्यन्तेनोक्तः । द्वितीयप्रकारस्तु 'ज्ञानस्थित्यभावे चिन्ताऽभावार्थमाहे'त्यनेन टीकायामुक्तः । मूले **द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चया**दित्यनेनोक्तः । एवं द्विविधस्याप्यासुरस्य सेवाफलाभावो निरूपितः, शोकाभावप्रकारश्चोक्तः ॥ ५ ॥

अतः परमुद्वेगरूपप्रतिबन्धे किं कार्यमित्याकांक्षायामाहुः **न त्वाद्ये दातृता नास्ती**ति ।

**न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

**आद्ये** त्रिषु बाधकेषु आद्ये उद्वेगरूपे प्रतिबन्धे तु **चिन्ता** न त्याज्येति पूर्वस्याम्यां

१ सेवासिद्धेरिति पाठः ।

चिन्तापदस्याज्यपदाभ्यामन्वयः । तथा चोद्वेगरूपप्रतिबन्धस्य निवारयितुं शक्यत्वेन तन्निवृत्त्युपायचिन्तां कृत्वा उद्वेगो निवर्तनीय इत्यर्थः । असाध्ये हि चिन्तात्यागो विधेयः । 'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसी'ति वाक्यात् । साध्ये तु चिन्ता रक्षणीयैव । यद्युद्वेगरूपप्रतिबन्धनिवृत्तिर्न स्यात्तदा किं स्यादित्याकांक्षायामाहुः । **आद्यफलाभाव** इति आद्येन फलाभाव इति तृतीयातत्पुरुषः । आद्यशब्देन प्रतिबन्धेषु आद्य उद्वेगरूपस्तेन कृते फलाभावे **भगवतो दातृत्वं नास्ति,** भगवान् सेवाफलं न दास्यतीत्यर्थः । तत्र हेतुः । **तदा सेवा नाधिदैविकीत्युक्तं भवति** । 'मनसो वृत्तिः स्वाभाविकी तु या । अनिमित्ता भागवती भक्तिर्मुक्तेर्गरीयसी'ति तृतीयस्कन्धे कपिलवाक्यात् सेवाया भगवत्परमनोवृत्तिरूपत्वेन तत्र चित्तस्थैर्यसापेक्षणादुद्वेगे च चित्तस्थैर्यनाशात् सेवाया आधिदैविकीत्वं न स्यात्, अत उद्वेगनिवृत्तिः कर्तव्येति तात्पर्यम् । **एवं त्रयाणां साधनपरित्यागः कर्तव्य** इत्युक्तं टीकायाम्, **बाधकानां परित्याग** इत्युक्तं मूले । ततश्चोद्वेगत्यागः प्रतिबन्धत्यागो भोगत्यागश्चेति त्यागत्रयमनुमतं भवति । तेषु तृतीयस्य भोगत्यागस्योपायमाहुः **भोगाभावस्तदैवे**त्यादिना । मूले **तृतीये बाधकं गृहमित्युक्तम्** । अर्थस्तु **तृतीये भोगत्यागे गृहं बाधकम्** । गृहस्थस्य सर्वात्मना भोगत्यागासम्भवादिति ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ।**

अर्थस्तु इयमुद्वेगादिप्रतिबन्धकत्रयी **अवश्या** स्ववश्या न भवति । अतः **सदा भाव्या** विचारणीया, एतत्प्रतिबन्धकत्रय्याः साधनपरित्यागो विचार्यः । एतत्प्रतिबन्धकत्रयात् सावधानतया स्थेयमिति तात्पर्यम् । ननु तर्हि प्रतिबन्धकत्रयसम्भवात् सोपायं सेवामार्गं त्यक्त्वा ज्ञानादिमार्ग एवानुष्ठेय इत्याशंकामपनुदन्तो ज्ञानादिमार्गेण सेवासाध्यं फलं न भवतीत्याहुः **सर्वमन्यन्मनोभ्रम** इति । सेवातिरिक्तज्ञानादिरूपं साधनं तु न सेवासाध्यफलसाधकम् । अतोऽत्र पूर्वनिरूपितफलत्रयाकांक्षिभिरन्यत्साधनं कार्यमितिज्ञानं भ्रममात्रमित्यर्थः ॥ ६ ॥

ननु पुष्टिमार्गीयस्य भगवदनुग्रहपात्रस्य भगवत्पुष्टिस्वभावात् सेवाफलं सर्वथा भविष्यत्येव प्रतिबन्धकत्रयी स्वप्रयोजिकेति किमर्थं तद्विचारः कर्तव्य इत्याशंक्य तादृशस्यापि एतत्प्रतिबन्धकत्रयी विचारणीयैवेत्याहुः **तदीयैरपि तत्कार्यमिति** ।

**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**

**तदीयैः** पुष्टिमार्गीयैरपि **तत्कार्यम्** । प्रतिबन्धकत्रयीभावनं कार्यम् । किमर्थं कार्यमित्याकांक्षायामाहुः **पुष्टौ नैव विलम्बयेत्** । यद्यपि पुष्टौ फलाभावो नास्ति, तथापि फलविलम्बस्तु प्रतिबन्धकत्रयेण भवेदतः **पुष्टौ** पुष्टिमार्गे न विलम्बयेद्विलम्बं न कार-

येत्, प्रतिबन्धकत्रयादसावधानश्चेत् सानदा विलम्बो भवेत्, अतः प्रतिबन्धकत्रयीभावनं मुहुर्मुहुः कृत्वा त्रयाणां साधनपरित्यागः कर्तव्यः । सोपि शीघ्रमेव, न विलम्बेन । एतद्विलम्बे फलविलम्बो भवेदितिभावः ।

ननु प्रतिबन्धकत्रयसाधनपरित्यागेपि सर्वत्र गीताभागवतादौ प्रकृतिगुणानां सत्त्वरजस्तमसां प्राबल्यस्योक्तत्वात्तत्क्षोभकृतः सेवाप्रतिबन्धो भवेत्तदर्थं किं कर्तव्यमित्याकांक्षायामाहुः गुणक्षोभेपीति ।

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

**गुणानां क्षोभेपि** एतदेव मदुक्तमेव **द्रष्टव्यं** विचारणीयमिति । एतद्विचारे साधनपरित्याग एवोपायस्तेन स्फुरेत् । गुणक्षोभसाधनं तु सगुणवस्तुसंगः । सगुणं वस्तु भगवतैकादशे निरूपितं पञ्चविंशाध्याये । एवं सति सगुणवस्तुस्वरूपं ज्ञात्वा तत्संगस्य त्यागः कर्तव्यः । व्यवहारनिर्वाहस्तु 'मन्निष्ठं निर्गुणं स्मृत'मित्यादिवाक्याद्भगवत्सम्बन्धिपदार्थस्य निर्गुणत्वाद्भगवदुपभुक्तशिष्टपदार्थैः कर्तव्यः । तथा सति गुणक्षोभदोषोपि न भवेदित्यर्थः ॥ ७ ॥

ननु भगवदीयाः पदार्था निर्गुणाः, तैः सम्बन्धदोषपरिहार उक्तः, स च न सम्भवति, सर्वस्यापि पदार्थस्य गुणत्रयात्मकत्वमितिसांख्यसिद्धान्तादित्याशंक्याहुः ।

**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

भगवच्छास्त्रविरुद्धत्वात् सांख्यसिद्धान्तोक्तप्रमेयकथनं **कुसृष्टिः** । अतस्तादृशज्ञानं **भ्रम एव** । यद्यपि सर्वपदार्थस्य सगुणत्वं, तथापि भगवत्सम्बन्धिपदार्थस्य निर्गुणत्वमेव । 'मन्निष्ठं निर्गुणं स्मृतम्' 'मन्निकेत तु निर्गुणम्' 'निर्गुणं मदपाश्रय' मित्यादिवाक्येभ्य इति भावः ।

सेवां पुष्टिपथप्रोक्तां कारयित्वा निजां फलम् ।
ददातु प्रथमं देवो बालकृष्णो मदीश्वरः ॥ १ ॥

**इतिश्रीमद्गोवर्धनधरश्रीवल्लभाचार्यवरश्रीविठ्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामबालकृष्णदीक्षितेन विरचिता सेवाफलविवृति-टिप्पणी समाप्ता ॥**

---

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## मठपतिश्रीजयगोपालभट्टकृतविवरणसमेतम् ।



बर्हिबर्हिलसन्मौलि वेणुवादविशारदम् ।
दुःखं दलयतादुच्चैस्त्रिभंगललितं महः ॥ १ ॥
नत्वा श्रीवल्लभाचार्यांस्तत्सुतान् विट्ठलेश्वरान् ।
विवृत्या सहितं सेवाफलं व्याख्यायते मया ॥ २ ॥
गीताभागवतादावप्युक्तं पण्डितबुद्धिगम् ।
पुष्टिसेवाफलं ज्ञात्वा विचारे त्वक्षमान् निजान् ॥ ३ ॥
विबोधयिषवश्चक्रुर्ग्रन्थं सेवाफलाभिधम् ।
सम्यग्विवरणोपेतं श्रीमदाचार्यपण्डिताः ॥ ४ ॥
षड्गुणाः सप्तमो धर्मी सर्वधर्म्यधिको व्रजे ।
यथा विराजते नित्यं तत्सेवायाः फलं तथा ॥ ५ ॥
सर्वसेवाफलेभ्योत्र ज्ञायतामधिकं पुनः ।
इति ज्ञापयितुं सार्धसप्तपद्यैर्निरूपितम् ॥ ६ ॥

अथ श्रीभगवद्गीताश्रीभागवताणुभाष्यभागवततत्त्वप्रदीपसुबोधिन्यादिसमाकलनासमर्थैः कैश्चिदतिकृपाभाजनैः स्वीयभगवदीयैः पृष्टाः श्रीवल्लभाचार्यचरणाः स्वमार्गीयसेवाफलं निरूपयन्ति यादृशी सेवना प्रोक्तेत्यादि सार्धपद्येन ।

यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।
अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥
फलं वा ह्यधिकारो वा न कालोत्र नियामकः ।

एतस्य विवरणं तु सेवायां फलत्रयमलौकिकसामर्थ्यं सायुज्यं सेवोपयिकदेहो वा वैकुण्ठादिष्विति । अत्र सेवायामिति तु यादृशी सेवना प्रोक्ता तत्सिद्धावित्येतस्य विवरणम् । फलत्रयमिति तु फलमुच्यत इत्यस्य विवरणम् । अलौकिकसामर्थ्यमित्यादि अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथ इत्यस्य अधिकारो वेत्येतदन्तस्य च विवरणं बोध्यम् ।

अथ व्याख्या । यादृशी 'कृष्णसेवा सदा कार्या मानसी सा परा मता, चेतस्तत्प्रवणं सेवा तत्सिद्धौ तनुवित्तजे' त्यादिना स्वतनुजस्ववित्तजसेवया प्रेम्णि जाते आसक्तिस्वरूपतत्प्रवणचेतस्त्वरूपा फलरूपा मानसी सेवेति सिद्धान्तमुक्तावल्युक्तप्रकारा सेवना सेवा मया प्रोक्ता तस्याः सिद्धौ पूर्णतयाविर्भावे सति यत्फलं भवति तदुच्यते कथ्यत इत्यर्थः । ननु सिद्धान्तमुक्तावल्यां तु स्वतनुजस्ववित्तजसेवोत्तरं प्रेमोत्पत्तिः कण्ठरवेण नोक्तेति कथं भवतोच्यत इति चेत्? अत्रोच्यते । 'यथा भक्तिः प्रवृद्धा स्यात् तथोपायो निरूप्यते, बीजभावे दृढे तु स्यात् त्यागाच्छ्रवणकीर्तना'दित्युपक्रम्य 'बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः, अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभि'रित्यादिना स्वतनुजस्ववित्तजसाधनरूपसेवामुक्त्वा 'ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेदि'त्यनेन साधनरूपसेवोत्तरं प्रेमोत्पत्तिरुक्ता, तदनन्तरमासक्तिरुक्ता, तदनन्तरं व्यसनं चोक्तं श्रीमदाचार्यवर्यैर्भक्तिवर्धिन्यामिति । एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि प्रवर्तत इति न्यायं मनसिकृत्यास्मत्प्रभुभिः सिद्धान्तमुक्तावलीविवृतावुक्त'मेतेन निरुपधिस्वसर्वस्वनिवेदनपूर्वकं तत्रैव स्वदेहविनियोगे प्रेम्णि जाते सा भवती'ति मयाप्युक्तमित्यवेहि । तत्किं फलमित्याकांक्षायामिदमिदं फलमिति फलत्रयं विवक्षव आद्यं फलमाहुर्मूले अलौकिकस्य दाने हीति । एतद्विवरणं त्वलौकिकसामर्थ्यमिति । अत्र द्वितीयातत्पुरुषस्त्वसम्भव्येव, तृतीयापञ्चमीषष्ठीतत्पुरुषाणां सम्भवित्वेपि क्लिष्टार्थता सम्भवतीत्यलौकिकाय सामर्थ्यमिति चतुर्थीतत्पुरुषाश्रयणादलौकिके सामर्थ्यमलौकिकसामर्थ्यमिति सप्तमीतत्पुरुषाश्रयणाद्वा अलौकिकविषयकसामर्थ्यं यावदलौकिकसम्बन्धजनितसुखदुःखानुभवविषयकशक्ततेति यावदित्यर्थो ज्ञेयः । एवं च सति 'निःस्पृहो महान्भोगः प्रथमे विशते सदे'ति मूले, तथा च 'अलौकिकभोगस्तु फलानां मध्ये प्रथमे प्रविशतीति तद्विवरणे चोक्तो ह्यलौकिकभोगस्य प्रथमफले प्रवेश उपपन्नो भवेत्, तस्याप्यलौकिकपदेन संग्रहात् । कर्मधारयाश्रयणे तु सामर्थ्यमात्रस्यैवालौकिकत्वात्तदतिरिक्तालौकिकभोगादेरलौकिकसामर्थ्यरूपत्वाभावादलौकिकपदेनासंग्रहादलौकिकसामर्थ्यरूपप्रथमफले प्रवेशोक्तिरसंगता स्यात् । तस्माच्चतुर्थीतत्पुरुषः सप्तमीतत्पुरुष एव वात्र साधुतरो न कर्मधारय इति बोध्यम् । यद्वा । न लौकिकमलौकिकम्, अलौकिकं च तत्सामर्थ्यं चेति कर्मधारय एवास्तु । न च पूर्वोक्तदूषणापत्तिरिति वाच्यम् । अलौकिकभोगस्त्वलौकिकसुखदुःखसाक्षात्कारस्तु फलानां मध्ये प्रथमे फलेऽलौकिकसामर्थ्येऽधिकरणरूपे प्रविशति प्रविष्टो भवति, तदर्थमेवालौकिकसामर्थ्यस्य भगवता दानात् । एवं च न पूर्वोक्तदूषणापत्तिरिति दिक् । एवं च विवरणे मूलस्थालौकिकपदस्यालौकिकविषयकसामर्थ्यपरत्वेनालौकिकसामर्थ्यपरत्वेन वा व्याख्यानात् कस्यचिद्देहसंपाते कस्यचिच्चैतद्देहपातोत्तरं वृन्दावनादिष्वलौकिकसंघात एव वा ह्यलौकिक-

विषयकसामर्थ्यरूपस्यालौकिकसामर्थ्यरूपस्य वा फलस्य **दाने** वितरणे स **आद्यः** प्राथमिकः सत्संगादिनेदं प्रथमतयोत्पन्नः प्रियतमभगवत्संगमविषयको भक्तस्य मनोरथः स हि निश्चयेन **सिध्येन्मनोरथविषयीभूतपदार्थप्राप्त्या** पूर्णो भवेत्, तददाने न न पूर्णो भवेदित्यर्थः । तथा च मनोरथविषयीभूतप्रियसंगमसाधकं प्राथमिकं फलमलौकिकविषयकसामर्थ्यप्राप्तिरिति बोध्यम् । **अल्पः सिध्येन्मनोरथ** इति पाठे **त्वलौकिकस्या**लौकिकविषयकसामर्थ्यस्यालौकिकसामर्थ्यस्य वा अदाने हि निश्चयेन विप्रयोगोद्रेके सति कदाचित् कदाचिन्मनसि जायमानत्वादल्पः स्वल्पो **मनोरथः** प्रियसंगमविषयकः **सिध्येदि**त्यर्थो ज्ञेयः । चकारेणैतद्दान एवान्योपि मनोरथः सिध्येदिति व्याख्येयम् । अत्रैवं ज्ञेयम् । प्रथमतो मूलेच्छया 'यमेवे'ति श्रुतेर्निरुपधिरसरूपसपरिकरभगवत्कृपया शुद्धपुष्टिमार्गीयं वरणम्, तदनु सत्संगादिना प्राथमिको भगवत्संगममनोरथः, तदनु शुद्धपुष्टिमार्गीयाचार्यसंश्रयः, तदनु भगवत्प्राप्तिजनकतिरोहिततापक्लेशानन्दाविर्भावाय शुद्धपुष्टिमार्गीयाचार्यकृतं निवेदनम्, ततस्तदुपदिष्टेस्मिन्मार्गे गोपिकानामेव गुरुत्वमिति फलप्रकरणीयसिद्धान्ता 'दश च गोपीभावेन ये भक्ता' इत्याद्यादिपुराणवाक्याच्च मूलरूपशुद्धपुष्टिमार्गीयाचार्याणां व्रजभक्तानां यो भावस्तत्सजातीयभावभावनापूर्वकं स्वतनुजसवित्तजसाधनरूपसेवाकरणेन दृढतरकथाश्रवणादिना वा कस्यचिद्देिनैव प्रेमोत्पत्तिं देहपाते 'स्वयं समुत्तीर्ये'ति श्लोके 'सदनुग्रहो भवा'नित्युक्तत्वात् प्रेमवदाचार्यस्थभगवदनुग्रहबलेन प्राप्तालौकिकदेहे रसमार्गीयत्वात् पूर्वानुरागमारभ्य सकलप्रेमावस्थाविर्भावः । कस्यचित्तु भगवदिच्छया प्रेमामत्त्यनन्तरमेव पूर्वानुरागजविरहेणैव व्यसनं विनैव देहपाते प्राप्तालौकिकदेहे व्यसनाद्यवस्थाविर्भावः । कस्यचित्त्वत्रैव प्राकृतदेहे प्रेम्णि जाते तदप्राप्त्या पूर्वानुरागजविरहाविर्भावः, ततः स्वसेव्यस्वरूपे वा स्वगमादौ वातिभाग्येन साक्षादपि वा प्रभुदर्शने 'चक्षुःप्रीतिः स्मृता तत्रातीवादरनिरीक्षण'मिति लक्षणानुसाराद्भगवद्विषयकः परमादरपूर्वकनिरीक्षणरूपश्चक्षूरागरूपप्रथमप्रेमावस्थाविर्भावः । तत'श्चित्तासंगः प्रियतमे नित्यं चित्तस्य निश्रम' इति लक्षणानुसारात् 'ततः प्रेम तथासक्ति'रित्युक्तत्वात् प्रेमोत्तरोत्पन्नासक्तिरूपतत्प्रवणचेतस्त्वरूपचित्तासंगरूपद्वितीयप्रेमावस्थाविर्भावः । इयमेवावस्था सेवापदवाच्या । ' अथावस्था निरूप्यन्ते रसारम्भानसूचिकाः । बीजांकुरः पल्लवश्च वृद्धिर्विस्तर एव च । अवस्था द्वितयेन स्याच्चक्षूरागादिषु क्रमात् । चक्षूरागो मनःसंगः संकल्पो जागरस्तथा । तनुता विषयद्वेषो लज्जात्यागस्ततःपरम् । उन्मादमूर्छामरणान्येता दश दशाः स्मृता' इत्युक्तत्वाच्चक्षूरागचित्तासंगाभ्यां बीजरूपप्रथमप्रेमावस्थोक्ता । ततः 'संकल्पस्तु मनोरथ' इति लक्षणानुसारात्कदा प्रियसमगमो एवमेव भविष्यतीत्यादिमनोरथरूपसंकल्पस्वरूपतृतीयप्रेमावस्थाविर्भावः । एतावता किंचिदुद्गमितः पूर्वानुरागजन्यो विरहः । अथायमलौकिकविषयत्वादलौकिको विरहः प्रलयानलादप्यतिदुःसहो भावीति लौकिक-

सामर्थ्यवता शरीरेण मनसा च सोढुमशक्यो देवकृतसम्भोगो मानुषजात्या स्त्रियेवेति भगवता तापक्लेशविशिष्टलौकिकविरहसम्भोगसामर्थ्यं प्रथमतो दीयते । तदनूच्छ्वासनिश्वासस्मृत्याद्यनुभावविशिष्टो 'निद्राछेदस्तु निद्राया अभावः परिकीर्तित' इति लक्षणानुसारान्निद्राछेदरूपश्चतुर्थप्रेमावस्थाविर्भावः । आभ्यां संकल्पनिद्राछेदाभ्यामंकुरावस्थोक्ता । तत'स्तनुता निखिलांगानां दौर्बल्यं परिकीर्तित'मिति लक्षणानुसारात् पाण्डुत्वाद्यनुभावविशिष्टतनुतास्वरूपपञ्चमप्रेमावस्थाविर्भावः । ततो 'विषयेभ्यो निवृत्तत्वमरतिर्विषयान्तरे' इति लक्षणानुसाराच्चक्षुर्निमीलनासहनशीलताद्यनुभावविशिष्टविषयनिवृत्तिरूपषष्ठप्रेमावस्थाविर्भावः । आभ्यां तनुताविषयनिवृत्तिभ्यां पल्लवावस्थोक्ता । एतावत्पर्यन्तमासक्तिकार्यमेव । अत एव 'स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचि'रित्यनेन गृहारुच्युपलक्षिता विषयनिवृत्तिरुक्ता श्रीमदाचार्यैर्भक्तिवर्धिन्याम् । ततो 'दैहिकान्सकलान् भावान् निजां क्रीडां च दैहिकीम् । परित्यज्य हरिप्राप्त्यै यदेव स्यात्तदेव हि । लौकिकं वैदिकं चापि तत्कर्ता व्यसनी मत' इति दशमस्कन्धीयभागवततत्त्वदीपसिद्धान्तसिद्धलौकिकवैदिकप्रियप्राप्तिसाधनकरणरूपव्यसनाविर्भावः । ततः पुनः प्रियप्राप्तिदुर्घटत्वज्ञानेन 'उपस्थितान्तिके तस्मै व्यसनं स्वमवोचते'ति दशमस्कन्धपद्यव्याख्यानसुबोधिन्युक्ताप्रतीकार्यदुःखस्वरूपव्यसनान्तराविर्भावः । येन विना प्रियतमांगसंगं क्षणमात्रमपि स्थातुं न शक्नोति, तेन प्रियतमांगसंगं च प्राप्नोत्येव । अत एव 'यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि'त्यनेन तत्रैवानुपदमेवोक्तं व्यसनोत्तरमेव कृतार्थत्वमप्रतीकार्यदुःखरूपव्यसनपदवाच्यान्यव्यसनप्राप्त्या । अत एव व्रतरूपव्यसने जाते प्रियप्राप्तिरेव जाता श्रीमतीनां कुमारीणाम्, तदनन्तरं चाप्रतीकार्यदुःखरूपे व्यसने जाते एव च प्रियतमांगसंगो जात इति श्रीभागवते स्पष्टमेव । अत्र कृष्ण इति विषयसप्तमी निमित्तसप्तमी वा, 'चर्मणि द्वीपिन'मित्यत्रेव । तथा च कृष्णविषयकं कृष्णनिमित्तं वा यदा प्रथमव्यसनोत्तरमप्रतीकार्यं तापसहितं दुःखरूपं क्लेशापरपर्यायं द्वितीयं व्यसनं स्यात्तदा 'लज्जात्यागोतिवैवश्यात् त्रपानाशोभिधीयत' इति लक्षणानुसारादाकस्मिकहसनरोदनाद्यनुभावविशिष्टत्रपानाशस्वरूपसप्तमप्रेमावस्थाविर्भावः । तद'न्वचेतनेषु प्रश्नादिरुन्मादः परिकीर्तित' इति लक्षणानुसारादाकाशालिंगनाद्यनुभावविशिष्टोन्मादरूपाष्टमप्रेमावस्थाविर्भावः । आभ्यां त्रपानाशोन्मादाभ्यां वृक्षावस्थोक्ता । ततः 'प्रलयो रागदुःखादेरिन्द्रियास्तमयो मत' इति लक्षणानुसारान्निश्चेष्टत्वाद्यनुभावविशिष्टमूर्छापरपर्यायप्रलयरूपनवमप्रेमावस्थाविर्भावः । ततः 'प्राणत्यागोतिदुःखेन मृतिस्तु परिकीर्तिते'तिलक्षणानुसारान्मृतिरूपदशमप्रेमावस्थाविर्भावः । आभ्यां मूर्छामृतिभ्यां विस्तरावस्थोक्ता । तथा चैताद्यनुभावविशिष्टव्यसनोत्तरं प्राकृतदेहपाते सच्चिदानन्दस्वरूपालौकिकदेहलाभे च सति भगवत्स्वरूपानन्दप्राप्त्या कृतार्थः स्यादित्यर्थः । अत एवेदमप्रतीकार्यदुःखमेव प्रार्थितं निरोधलक्षणाख्ये ग्रन्थे श्रीमदाचार्यचरणै'र्यच्च दुःखं यशोदाया नन्दा-

दीनां च गोकुले । गोपिकानां च यद्दुःखं तद्दुखं स्यान्मम क्वचिदि'त्यादिना । अनेदमपि ज्ञेयम् । येषां त्वलौकिकं शरीरं तेषां तु व्यसनानन्तरं प्रभुसंगम एव, न दशमदशाप्राकश्च्य यथा रासमण्डलमण्डनानाम् । येषां तु लौकिकं शरीरम्, तेषां तु व्यसनानन्तरं दशमदशोदयो भवत्येव, यथान्तर्गृहगतानाम् । इदमेव ज्ञापयितुमन्तर्गृहगतानां लीला । अन्यथा व्रजस्थानां सर्वेषामप्यलौकिकशरीरमिति तासामप्यलौकिकशरीरत्वात्तथाकृतिर्व्यर्था नीरसा च स्यादितिदिक्। 'नन्वन्ते या मतिः सा गति'रिति प्रेमवदाचार्यानुग्रहबलेनात्यसक्तेन पूर्णात् रागजभगवद्विरहेण वा तत्क्षणमेव देहपाते प्रियसंगमो भविष्यत्येव । अन्यथा 'ये यथा मां प्रपद्यन्त' इति मर्यादा भज्येतेति किमर्थमलौकिकसामर्थ्यदानं किमर्थं वा न तत्तद्दशानुभावनमिति चेत् । अत्र वदामः । 'रसो वै स' इति श्रुतेः प्रभो रसरूपत्वाद्रसमर्यादयैव स्वस्वरूपदानमित्यलौकिकसामर्थ्यदानं तत्तद्दशानुभावनं चेति जानीहि । अपि च, तत्क्षणमेव देहपाते चक्षूरागादिक्रमेणावस्थानुभावाभावदर्शने रसमार्गीयभगवदीयानां सन्देहः स्यात्को वेद रसस्वरूपभगवत्प्राप्तिरेतस्याथवान्यस्वरूपभगवत्प्राप्तिरिति । तदर्थमेव कस्यचिदलौकिकसर्वावस्थानुभवोनैव कार्यते प्रभुणा । तथा सति तत्तदवस्थानुभवस्य प्रत्यक्षतो दृश्यमानत्वेन सर्वेषां रसस्वरूपप्राप्तेर्निश्चयादेतन्मार्गीया प्रवृत्तिरपि निःप्रत्यूहा भवेत्, तदर्थमेवालौकिकसामर्थ्यदानं तत्तद्दशानुभावनं चेत्यलं पल्लवितेन । एवमेवालौकिकसामर्थ्यं साक्षाद्वृन्दावनादिष्वपि दीयते इत्यग्रे व्यक्तीभविष्यति । यद्वा, योऽस्मिन्मार्गे समायाति तस्य तु 'गृहे स्थित्वा स्वधर्मतः। अव्यावृत्तो भजेत् कृष्णं पूजया श्रवणादिभिः। व्यावृत्तोऽपि हरौ चित्तं श्रवणादौ न्यसेत् सदा। ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेदि'ति भक्तिवर्धिन्यां तनुवित्तजसेवाकरणे प्रेमासक्तिव्यसनानि भवन्तीत्युक्तत्वात्तदनन्तरं तत्र 'यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि'त्युक्तत्वाच्च व्यसनप्राप्ते कृतार्थीकरणस्वमानात् प्राथमिको मनोरथो व्यसनप्राप्तिविषयको भवति । तत्र व्यसनाविर्भावे महातापोदयात्तत्सहनं लौकिकसामर्थ्येन कर्तुमशक्यमतिदुःसहत्वादिति भगवता व्यसनाविर्भावाद्व्यवहितपूर्वं तत्समकालमेव वाऽलौकिकसामर्थ्यं दीयते व्यसनसहनार्थम् । एवं चालौकिकस्य दाने हि । हि निश्चयेनालौकिकस्यालौकिकसामर्थ्यस्य दाने आद्यः प्राथमिको मनोरथो व्यसनप्राप्तिविषयकः सिध्येत्सिप्पन्नो भवेत्, व्यसनप्राप्तिः स्यादिति यावत्, तद्दाने [illegible] न निष्पद्यत इत्यर्थः, । तथा च शुद्धपुष्टिमार्गीयस्य प्रेमासक्तिरूपायां सेवायां सिद्धायां प्रथमफलमलौकिकसामर्थ्यप्राप्तिरिति श्रीमदाचार्यैरेतस्य प्रथमफलत्वमुक्तमिति भावः ।

यथैतादृशविप्रयोगजनितदेहपातोत्तरं तु धाराम्यन्तरभेदेनेदानीं तु देहस्य लौकिकत्वात्स्याविभावात्मकभगवत्स्वरूपेनान्तःकरणमेवालौकिकत्वाचान्तरेव च भाति परमकाष्ठापन्न फलत्रयेषि मुख्यफलरूपं द्वितीयं फलमाहुः फलं यति । अत्र निरूपणे फलपदस्य

सायुज्यत्वेन व्याख्यानाद्द्वितीयं फलं सायुज्यरूपं वा भवेत् । अत्र वाशब्दो विकल्पार्थः । यदतिकृपाविशिष्टमूलाचार्यरूपश्रीमद्व्रजभक्तेङ्गितविशिष्टप्रभोस्ताहङ्मूलेच्छा स्यात् । अत्र सायुज्यं शुद्धपुष्टिमार्गीयमेव विवक्षितम्, न त्वन्यत् । शुद्धपुष्टिमार्गीयसेवाफलस्यैव निरूपणात् । ननु सायुज्यमेकविधमेव शास्त्रान्तरेषु श्रूयते, न त्वन्यप्रकारकमतो न त्वन्यदिति निषेधो नोपपद्यत इति चेत् । अत्र वदामः । द्विविधं तावत्सायुज्यं स्थूलतया । तत्रैकमभेदसम्बन्धघटितम्, द्वितीयं तु भेदसम्बन्धघटितम् । तत्राद्यं 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिप्रमाणसिद्धम्, साधारणानुग्रहात् केवलमर्यादारूपमेकविधमेव । द्वितीयं तु त्रिविधम् । तत्रैकं 'ब्रह्मभूतः प्रसन्नात्मे'त्यादिगीतावाक्यसिद्धम् । ब्रह्मभावोत्तरसामयिकोत्तमाकस्मिककृपाजनितपरमभक्तिलाभजन्यभगवद्दानोत्तरसामयिकभगवत्प्रवेशरूपगृहादिप्रवेशवत् । प्रवेशस्य भेद एव सम्भवाद्भेदघटितत्वं ज्ञेयम् । द्वितीयं तु 'ब्रह्मविदाप्नोती'त्यादिश्रुतिसिद्धम् । ब्रह्मभावोत्तरसामयिकाकस्मिकोत्तमतरकृपाजनितभक्तिलाभजन्यभगवत्प्रवेशरूपसायुज्योत्तरं तत्सहभावविशिष्टसर्वकाममोगरूपम् । भोगोत्तरं स्वस्मिन्प्रवेशश्च मर्यादास्वलितत्वात् । तृतीयं तु 'केवलेन हि भावेने'ति वाक्येन 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वाक्येन चात्युत्तमतमकृपया ब्रह्मभावज्ञानवैराग्यादिनिरपेक्षप्रेमासक्तिव्यसनरूपकेवलभावजनितभगवत्सहभावविशिष्टसार्वकालिकसर्वकाममोगरूपं च । तत्र गीतोक्तप्रवेशरूपसायुज्ये पुरुषोत्तमप्रवेशमात्रमेव फलम्, विशेषकृपाऽभावात् । न चाक्षरज्ञानमार्गसायुज्यात् को विशेष इति वाच्यम् । अक्षरज्ञानमार्गे त्वभेदेन गणितानन्दाक्षरसायुज्यम् । पुरुषोत्तमज्ञानमार्गे तु भेदेनागणितानन्दपुरुषोत्तमसायुज्यम्, भेदेनानुभूयमानमिति विशेषस्य जागरूकत्वात् । अत एवाचार्यैश्चतुर्थस्कन्धनिबन्धे 'सायुज्ये तु रसाधिक्यं भेदेनानुभवात्तत' इत्युक्तवन्तः । किञ्चाक्षरस्य धर्मरूपत्वाद्धर्मसायुज्यम् । पुरुषोत्तमस्य तु धर्मित्वादेतत्सायुज्यस्य धर्मिसायुज्यरूपत्वादास्वादाधिक्यस्यैव विशेषरूपत्वाच्च । ब्रह्मभावोत्तरसामयिकसर्वकाममोगरूपसायुज्ये तु मर्यादारूपब्रह्मभावोत्तरं सर्वकाममोगस्य मर्यादापुष्टिरूपत्वात् प्रमाणानुरोधिपुरुषोत्तमेन सहोत्सर्गतो मर्यादापुष्टिरूपमहिषीसजातीयसर्वकाममोग एव । न तु शुद्धपुष्टिमार्गीयो व्रजभक्तसजातीयसर्वकाममोगः । न च 'ब्रह्मविदाप्नोती'त्यत्र ब्रह्मभावोत्तरं सर्वकामभोग एव श्रूयते, न तु परमभक्तिलाभ इति ब्रह्मभावोत्तरसामयिकभक्तिलाभोत्तरं सर्वकामभोगः कथं भवतोच्यत इति वाच्यम् । 'सह ब्रह्मणे'त्यत्राप्रधानतृतीयानिर्देशात् । तत्राप्रधानत्वं तु 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजे'त्यादिप्रमाणैर्भक्तविषय एव भगवतो, नान्यविषय इति मध्ये परमभक्तिर्भवतीति तयोक्तत्वात् । ननु श्रुतिपदेन ब्रह्मभावोत्तरसामयिकसर्वकामभोगेऽपि विनैव भक्तिं परमपदेऽप्रधानत्वमङ्गीक्रियतामिति चेत् ? न । 'इतिहासपुराणाभ्यां वेदं समुपबृंहये'दिति वाक्या-

दितिहासपुराणादिषु कुत्रापि भक्तिमार्गातिरिक्तमार्गे ब्रह्मणोऽप्रधानत्वस्याश्रूयमाणत्वात् । अपरञ्च, यदि ब्रह्मभावोत्तरसामयिकसर्वकामभोगो विनैव भक्तिं स्यात्तदा त्वदुक्तं घटेतापि, न तु तथा । यतस्तादृशसर्वकामभोगस्य पुरुषोत्तमज्ञानजन्यभगवत्प्रवेशरूपसायुज्यसाध्यत्वात् । तत्र पुरुषोत्तमज्ञानं च भक्तिसाध्यम् । 'ब्रह्मभूतः प्रसन्नात्मे'त्यारभ्य 'विशते तदनन्तर'मित्यन्तेन श्लोकषट्केन भगवता पुष्टिमर्यादामार्गे एवमेव सिद्धान्तितत्वात् । अन्यथा सर्वेषामेव ब्रह्मभावापन्नानां सर्वकामभोगः प्रसज्जेत, नियामकाभावात् । अतो ब्रह्मभावोत्तरसामयिकसर्वकामभोगस्य भक्तिं विना जायमानत्वाभावादप्रधानत्वं परब्रह्मणो भक्तिकृतमेव, न तु भक्तिं विना कुत्रापीति मदुक्तमेव साधीय इति दिक् । अत एवास्यात्यभिया 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति भगवतो भक्तियोगदानाभावः श्रूयते यस्य कस्यचिदिति दिक् । तृतीये सायुज्ये तु वेदमर्यादाप्रवलनाभावात् प्रमाणातीतस्वरूपेण प्रमाणातीतभक्तानां प्रमाणातीतसर्वकामभोगः । एवञ्च चतुर्विधसायुज्यस्यापि प्रमाणसिद्धत्वेन प्रकृते सायुज्यपदेन भेदघटितसायुज्येषु तृतीयमेव सायुज्यं विवक्षितम् । इदमेवं च शुद्धपुष्टिमार्गीयं सायुज्यमिति । अत्र 'प्राणेन सायुज्यं सलोकतामाप्नोती'त्यादिश्रुतिप्रयोगाद्युजिर् योग इति धातो'र्बहुलं छन्दसी'ति बाहुलकाद्भावे क्विपा युक्शब्दसिद्धिः, ततः सहशब्देन समासः, ततो वोपसर्जनस्येति सहशब्दस्य सादेशः, ततो भावे ष्यञ्प्रत्ययश्च । यद्वा । सहयुनक्तीति सयुक् क्विप्चेतिसूत्रेण कर्तरि क्विप्, सयुजो भावः सायुज्यं सहभाव इति ज्ञेयम् । अत्रेदं तत्वम् । कदाचिदतिकृपायां पुरुषोत्तमप्रवेशमानलक्षणसायुज्यानतो ब्रह्मभावजनितप्रवेशोत्तर सर्वकामभोगरूपसायुज्ययोग्यतावत्त्वापि शुद्धपुष्टिफलप्राप्तिः केषाञ्चिद्भवति, मुक्तोपसृप्यव्यपदेशादिति न्यायात्, न तु सर्वेषाम् । अन्यथा मार्गभेदकरणवैयर्थ्यापात इत्यवधातव्यम् । नन्वेतादृशशुद्धपुष्टिफलप्राप्तिश्चेत्केषाञ्चिद्भवति तर्हि तत्सायुज्यं किमर्थं दत्तमिति चेत् ? स्वस्य स्वतन्त्रेच्छत्वादि ज्ञापयितुमिति गृहाणेति सर्वं चतुरस्रम् ।

अथ यस्मिन् जीवे यादृशी कृपा तस्मिन्तादृशफलदानौपयिकभावप्राकट्यपूर्वकसेवया तादृग्भगवद्रूपं फलमिति सिद्धान्तः, तथा च यस्मिन् प्रेमभक्तरङ्गितविशिष्टा भगवत्कृपा देहपातोत्तरक्षण एव साक्षादगसंगविषयिणी तस्य तु पूर्वोक्तप्रणाल्यैतद्देहे तत्क्षण एव मनसि स्वप्नादौ चैतद्देहपातोत्तरं तु वृन्दावनादौ चाविलम्बेन साक्षादगसंग एव भवति । यस्मिंस्तु देहपातोत्तरक्षण एव न साक्षादगसंगविषयिणी कृपा, किन्तु विलम्बेन, तस्यापि प्रेमोत्पत्त्यनन्तर एव वा प्रेमासक्त्यनन्तरमेव भगवदिच्छया वा देहपाते प्राप्तालौकिकदेहे प्रेमाद्यवस्थाविर्भावेन व्यसनाद्यवस्थाविर्भावेन वा विलम्बेन च साक्षादगसंग एव भवति । यस्मिंस्तु दास्यसख्याद्यधिकारविषयिणी कृपा तस्य तु तादृग्भावपूर्वकसेवया पूर्वोक्तप्रणाल्यैतद्देहपातोत्तरं वृन्दावनादौ दास्यसख्याद्यधिकारविशिष्टालौकिकदेहप्राप्तिपूर्व

तृतीयं फलं भवतीत्याहुः **अधिकारो वेति** । सायुज्यरूपफलदानेनाधिकारविशिष्टदेहप्राप्तिर्वा भवतीत्यर्थः । अत्र **सेवौपयिकदेहो वा वैकुण्ठादिष्विति** विवरणोक्तवैकुण्ठपदेन 'गोकुलं वनवैकुण्ठ'मिति कृष्णोपनिषदुक्तेः प्रपञ्चातीतभगवन्निवासस्थानं व्यापिवैकुण्ठान्तर्गतं वृहद्वनं नन्दीश्वरं चोच्यते । **आदि**पदेन श्रीवृन्दावनश्रीमद्गोवर्धनादि च । तत्र सायुज्यरूपफलादानेऽधिकारः सेवौपयिकदेहरूपो वाथवा भवतीत्यर्थः । वैकुण्ठान्तरस्य शुद्धपुष्टिमार्गीयफलरूपभगवल्लोकत्वाभावाद् गोकुलस्यैव तादृग्भगवल्लोकत्वाद्वैकुण्ठपदेन श्रीगोकुलम्, **आदि**पदेन वृन्दावनादिकं चाभिप्रेतमिति बोध्यम् । **अत्रालौकिकसामर्थ्यं** यथावान्तरफलरूपम्, मुख्यफलं तु मुख्यसायुज्यमेव, एवमेवाधिकारिदेहप्राप्तिरूपं तृतीयं फलमप्यवान्तरफलरूपमेव, मुख्यं फलं त्वधिकारिदेहद्वारैवात्रापि मुख्यसायुज्यमेव । स्वदत्ततादृगधिकारिदेहकृत'त्वत्पुष्टप्रियवार्ताकथनं च भवयज्ञोस्त्वि'त्यादिरूपप्रियतमसेवासन्तुष्टश्रीमद्व्रजभक्तरत्नानुग्रहेणेवेति बुध्यस्व । अत **एवालौकिकस्य दाने** हीत्यत्राधिकारो वेत्यत्र च फलपदाप्रयोगः **सायुज्य एव** च फलपदप्रयोगश्च । अत्रातिरहस्यत्वाच्छ्रीमदाचार्यैरलौकिकसामर्थ्यसायुज्यवैकुण्ठादिपदानि परोक्षवादत्वेनैव प्रयुक्तानीति ज्ञेयम् । ननु यत्र परशुरामशचीपतिविरिञ्चिवदलौकिकसामर्थ्यभोगाधिकारा दृष्टास्तत्र न सर्वदा दृष्टा इति सामर्थ्यभोगत्वाधिकारत्वसामान्यादेतेषामपि नाशः स्यादिति न परमफलत्वमेतेषामित्याशङ्क्याहुः **न कालोत्र नियामक इति** । अत्रालौकिकसामर्थ्यभोगाधिकारेषु सर्वोत्तमप्रभुप्रीत्याधायकत्वात् काल आधिभौतिक आध्यात्मिक आधिदैविको वा **नियामको** न भवति, भगवन्नियम्यत्वादित्यर्थः । दृश्यते लोकेपि प्रभुदत्तसामर्थ्ये भोगेधिकारे वाधिकारिणो नियामकत्वाभावः । अत एवोक्तं सगुणस्यैव कालाधीनत्वम्, न गुणातीतस्येति 'मन्निष्ठं निर्गुणं स्मृत'मित्यादिना प्रभुणैकादशे । तस्मान्नैषां कालाधीनत्वमिति त्रयाणां फलत्वं निःप्रत्यूहमित्यास्तां तावत् ।

यद्वा, **अलौकिकस्या**लौकिकविषयसामर्थ्यस्य **दाने हि** निश्चयेन जातो य **आद्यः** शुद्धपुष्टिमार्गीयाचार्यसंश्रयात्पूर्वमेवैतन्मार्गीयसत्सङ्गादिनेदं प्रथमतयोत्पन्नो **मनोरथः सिध्येत्** सिद्धो भवेदित्यर्थः । स आद्यो मनोरथः क इत्याकांक्षायामाहुः **फलं वा ह्यधिकारो वेति** । फलरूपो वाधिकाररूपो वा । नात्र सन्देह इति भावः । अत्र फलविषयकोधिकारविषयको मनोरथोपि फलवदधिकारवदेव सुखजनक इति ज्ञापयितुं रूपकेण निरूपणमिति दिक् । तथा च व्रजभक्तभावसजातीयभावैः शुद्धपुष्टिमार्गे भजनं कर्तव्यमिति सिद्धान्तः सम्पन्नः । तत्र व्रजभक्तेषु 'नन्दगोपसुतं देवि पतिं मे कुरु ते नमः' इति वाक्यादनन्यपूर्वाः कुमार्यो भगवति पतिभावयुक्ताः । अन्तर्गृहगतारूपा अन्यपूर्वास्तु 'जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकम् । मयि सम्प्राप्य सर्वेपि कृतकृत्या भविष्यथे'ति वृहद्वामनपुराणादत्र च 'तमेव परमात्मानं जारबुद्ध्यापि संगता, मत्कामा रमणं जार-

मत्स्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः' इति दशमस्कन्धीयैकादशस्कन्धीयभगवद्वाक्येभ्यो भगवत्युपाधिरूपजारभावयुक्ताः । अप्रतिबन्धेन प्रभुसमीपं गता अन्यपूर्वास्तु सर्वभावप्रपत्तिपूर्वकनिरुपधिप्रियत्वभावयुक्ताश्च भगवति । तत्र परकीयायामेव रसस्य परमा काष्ठेति रसशास्त्रसिद्धान्तादनन्यपूर्वाणां नन्दाधीनानां भगवति पतिभावयुक्तानां कुमारीणामथ च निरुपधिप्रियत्वभावयुक्तानां नित्यसिद्धानां जारभावयुक्तानां च श्रुतिरूपाणां चान्यपूर्वाणां परकीयात्वात् परकीयात्वधर्मविशिष्टत्वेनैव परमकाष्ठापन्नरसरूपभगवत्प्राप्तिः । न तु कुमारीणां स्वीयात्वेनान्यपूर्वाणां तु परकीयात्वेनेति भेदः । तथा सति विवाहितानामेव स्वीयात्वात् श्रीभागवते कुमारीभिर्भगवतो विवाह उक्तो भवेत् । अन्यपुराणादिषु मूलमाधवमाहात्म्ये रुक्मिणीविवाहात्पूर्वं कुमारीणां भगवता समं विवाहः श्रुतो यद्यपि तथापि स कल्पान्तरीयांशावताररूपश्रीकृष्णविषयकः । तत्कल्पीयश्रीकृष्णस्वरूपस्यांशत्वात् तस्यापि स्वरूपस्य पूर्णत्वेनैव व्यासचित्तप्रसादो जातः स्यात् । तस्मात्सारस्वतादिकल्पान्यकल्पीयावतारा अंशावतारा एवेति जानीहि । निरूपितं चैतत्सविस्तरं मत्कृतयद्दिग्मुखसुरखमर्दनाख्ये ग्रन्थ इति तत्रैवावलोकनीयम् । ननु यदि भगवति पतिभाव एव कुमारीणां तदा महिषीप्राप्यप्रमाणानुरोधिभगवत्स्वरूपप्राप्तिः स्यान्न तु लोकवेदातीतप्रमाणाननुरोधिस्वरूपप्राप्तिः स्यादथ च तदनुरोधेनाश्रुतोऽपि विवाहः कल्पनीयः स्यादिति चेत् । अत्र ब्रूमः । 'कात्यायनि महाभागे महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ।' 'भूयान्नन्दसुतः पति'रितिमन्त्रयोर्नन्दसुत एव पतित्वप्रार्थना भावना च । स श्रीमान्नन्दसुतस्तु व्रजे 'एकादशसमास्तत्र गूढार्चिः सबलोऽवस'दिति तृतीयस्कन्धीयश्रीमदुद्धववाक्यादेकादशवर्षपर्यन्तमेव स्थितः । तदुत्तरं तु मथुरायामेव गतः । यज्ञोपवीतं च वैश्यानां द्वादशे वर्षे, यज्ञोपवीतं विना च न विवाहः । स विवाहोऽपि तज्जातीयानामासुरपैशाचगान्धर्वभेदेन त्रिविधः । तत्रापि वैश्यस्यासुरो मुख्यः । तत्र द्रव्यादानादासुरः, छलेन कन्याहरणात्पैशाचः, गान्धर्वस्त्वन्योन्यानुरागेण 'त्वं मे भार्या त्वं मे पति'रितिसमयरूपः । एवं चात्र यज्ञोपवीतकालाभावेन प्रभोर्यज्ञोपवीताभावादेकादशवर्षाभ्यन्तर एव च कुमारीणां भगवत्सम्बन्धाच्च कोऽपि विवाहो नात्र वक्तुं शक्यः । तथा च विवाहजनितपतित्वाभावान्न महिषीप्राप्यस्वरूपप्राप्तिर्न वा विवाहकल्पनेति बुध्यस्व । न च 'ये यथा मां प्रपद्यन्ते' इति मर्यादाभंग इति वाच्यम् । भगवत्सकाशात् प्रमाणातीतफलप्राप्त्या तासां पतित्वप्रार्थनैव जाता, न तु विवाहजनितपतित्वप्रार्थनेत्युन्नयनात् । अन्यथा 'नन्दगोपसुतं देवि पतिं मे कुरु ते नमः' इत्यत्र विवाहोल्लेखोऽपि कृतः स्यात् । तस्मादन्याधीनतानिवारणार्थं निःशंकतया सर्वदा मिलनार्थं च 'स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जन'मित्युक्तलक्षणपतित्वमेव प्रार्थितं तामिर्न तु विवाहजनितपतित्वमिति । अत एव प्रमाणातीतायां रासलीलायामेव तासामाकारणम् । यतश्च

न विवाहितपतिभावना प्रभावत एव च न तासामन्यपूर्वाभिः सह लीलायामीर्ष्यादिकं जातम्। विवाहितपतित्वे सति त्वीर्ष्यादिकं कासाञ्चिदपि सर्वदावश्यमुद्भवेदेव, सत्यभामादिवत्। न च 'तस्या अमूनि नः क्षोभं कुर्वन्त्युचैः पदानि यत्, यैकापहृत्य गोपीनां रहो भुंक्तेऽच्युताधर'मित्यत्रेर्ष्या तासामपि श्रूयत एवेति वाच्यम्। नेयमीर्ष्या सहभोगेऽपि त्वेकैव भुंक्ते इत्यस्मिन्नंशे ईर्ष्या। तथा च समानशीलव्यसनरूपा सखी भूत्वा प्रियविप्रयोगजनितात्यसह्यास्मद्विप्रयोगजनितं दुःखं ज्ञात्वापि यदस्मान् विहाय भुंक्ते तत् क्षोभं जनयतीति सखीत्वप्रयुक्तस्नेहजनितेर्ष्या, न तु सपत्निभावजनितेति निर्णयात्। अत एव 'ददृशुः प्रियविश्लेषमोहितां दुःखितां सखी'मित्यग्रे तस्यास्तासां च सखीभाव उक्तः। अत एवाग्रे तत्सहभावेन रासलीला, अन्यथा तया सहान्याभिः सह वा रासलीलायामर्यादरसो न स्यात्। तस्मादस्मदुक्ताभिप्राय एवात्र। विवाहितपतिना सपत्नीसहभावकृतलीलायां तु यद्विरीर्ष्यादिभावादर्शनेप्यन्तरीर्ष्यासंवलनं तिष्ठत्येव लोके राजमहिषीणाम्। अत एव वासरदाननियमोऽपि तत्र, अत्र तु सर्वदा सर्वसंवलितत्वेनैव लीलाकरणादिति महदेव वैलक्षण्यमित्यास्तां तावत्प्रसक्तानुप्रसक्तचिन्तया। एवं चैतादृशपतिभावेनानन्यपूर्वाणां कुमारीणां जारभावेनान्तर्गृहगतानां निरुपधिप्रियत्वभावेन च रासमण्डलमण्डनानां च परमकाष्ठापन्नरसरूपभगवत्प्राप्तिः, तथा च 'गोपीभावेन ये भक्ता' इत्यादिपुराणवाक्यात् तादृशभावसजातीयभावेनैवाधुनिकानामपि तादृशभगवत्प्राप्तिरिति सिद्धम्। तत्रायं रसोऽपरिच्छिन्न इत्यपरिच्छिन्नस्वरूपसर्वभावप्रपत्त्यैकलभ्यः। तत्र जारभावो न सर्वभावप्रपत्तिरूपः कामैकमात्रपूरकत्वेनैव तस्योद्भवात्, परिच्छिन्नस्वरूपत्वात्। अत एव तेन भावेनास्य रसस्य न प्राप्तिरिति तासां प्रतिबन्धोऽपि जातः। तस्य देहस्य च सगुणभावाश्रयत्वेन सगुणत्वादेव तत्त्यागानन्तरमेव सर्वभावप्रपत्त्या निर्गुणतादृशरसस्वरूपप्रियप्राप्तिस्तासामजनि, अन्यथा तद्भावस्य सर्वभावप्रपत्तिरूपत्वेन निर्गुणत्वे तच्छरीरस्य च निर्गुणत्वे तेनैव शरीरेण प्रियप्राप्तिः स्याद्रासमण्डलमण्डनानामिव। अत्राधिकपूर्वपक्षसमाधानानि तु फलप्रकरणीयसुबोधिन्यामवलोकनीयानि। तथाचातिप्रतिकूलद्वेषादिभावेनापि चेत् प्रभुर्योगीन्द्रप्राप्यां मुक्तिं ददाति तदातिप्रेमसंवलितजारभावेन कथं न गुणातीतरसरूपस्वरूपं दद्यात्। परन्त्वेतद्देहपातानन्तरमेव सर्वभावप्रपत्तिमुत्पाद्यैव दास्यति। एतादृशस्वरूपस्य सर्वभावप्रपत्त्यैकलभ्यत्वात्। एवं च सति यद्येतदनन्तरमपि सर्वभावप्रपत्तिरेव भाविनी, तर्हि भगवति सर्वभावप्रपत्तिरेव कार्या, न तु जारभावः। 'प्रक्षालनाद्धि पंकस्ये'ति न्यायात्। यदि कुत्रापि सर्वोपमर्देन जारभाव एवोदेति तदा भगवदिच्छैव तथा, परन्तु सर्वभावप्रपत्तिमुत्पाद्यैव तत्रापि फलं दास्यतीति ज्ञेयम्। न च 'ये यथा मां प्रपद्यन्त' इति प्रतिज्ञाविरोध इति वाच्यम्। सर्वभावप्रपत्तिलभ्यप्रभुरूपप्राप्तौ जारभावजन्यकामपूर्तिरूपफलस्याप्यन्तर्भूतत्वात् प्रतिज्ञाविरोधाभावात्, तस्माज्जारभावेन भगवद्भजनं न कर्तव्य-

अत एव सर्वभावप्रपत्तिसहितानां रासमण्डलमण्डनानामपि कामपूर्तिरूपफलमपि दत्तं प्रभुणा, अन्यथा तन्न दत्तं स्यात्, ततो ज्ञायते सर्वभावप्रपत्तिलभ्ये फले तदप्यन्तर्भूतमिति। न च पतिभावेपि न सर्वभावप्रपत्तिः, पतित्वभावस्यापि परिच्छिन्नत्वादिति शंकनीयम्। पतिव्रतानां पत्यौ भगवत्ताज्ञानपूर्वकभजनस्य विहितत्वात् सर्वत्र सर्वदा सर्वसमयेषु च मम पतिरेव गतिरिति सर्वभावप्रपत्तेः सत्त्वात्। एवं च सति यत्र विवाहिते लौकिकेपीयं रीतिस्तत्रालौकिके साक्षाद्भगवति पतिभावे सर्वभावप्रपत्तिरिति किं वक्तव्यमिति। न च तर्हि महिषीणां कुतो न सर्वभावप्रपत्तिजनितं फलं जातमिति वाच्यम्। विवाहरूपसंस्कारस्य तत्र प्रतिबन्धकत्वादिति दिक्। तथा चानन्यपूर्वकुमारीभिप्रेतकुमारीसजातीयपतिभावेनान्यपूर्वव्रजसीमन्तिनीनिष्ठनिरुपधिप्रियत्वभावेन वा भजनं कर्तव्यमिति निष्कर्षः। तत्रेदं भजनं श्रीमद्व्रजभक्तभजनोपेक्षया स्वातन्त्र्येण न कर्तव्यम्, यत एतादृग्भावेन भजने 'मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम्। जानन्ति गोपिकाः पार्थ नान्ये जानन्ति मर्मणी'त्यादि पुराणेऽर्जुनं प्रति भगवता स्वसपर्यां गोपिका एव जानन्तीत्युक्तत्वाद्व्रजभक्ता एव गुरवः। तथा च तत्समकक्षतया स्वातन्त्र्येण भजने गुरुहेलनरूपापराधः प्रसज्येत। तथा च भगवान् फलं न दद्या'दाचार्यं मां विजानीया'दिति वाक्यात्। किञ्च, 'न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः। या माभजन् दुर्जरगेहशृंखलां संवृश्च्य तद्वः प्रतियातु साधुने'त्यादिफलमकरणीयप्रभुवाक्यादयं प्रभुरेतदधीन एव सर्वदा क्रीतजनवन्न त्वन्याधीनः, अतोपि न तदुपेक्षया भजने फलप्राप्तिः। न च 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः। नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना। श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा। ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम्। हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे। मयि निर्बद्धहृदयाः साधवः समदर्शिनः। वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे'त्यादिनाम्बरीषादिभक्ताधीनत्वमपि श्रूयते, न त्वम्बरीषादेरेतत्स्वरूपप्राप्तिरिति वाच्यम्। 'भक्तिभेदो बहुविधो मार्गैर्भामिनि भाव्यते। स्वभावगुणभेदेन पुंसां भावो विभिद्यत' इतिवाक्याद्भक्तिमार्गोनेकविधः, तेषु च भक्तिभेदेष्वेतासां भक्तिरत्युत्तमा, परमकाष्ठापन्नस्वरूपलाभात्। अत एवैताः परं तनुभृतो ननु गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः। वाञ्छन्ति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य'। अत्रैता गोपवध्वः परमनिश्चयेन तनुभृत इत्यनेनान्ये भक्ता अनिश्चयेन तनुभृतो न भवन्तीत्युच्यते। नन्वत्र किं कारणमित्याकांक्षायामाहुः गोविन्द एवेति। गोविन्द एव निरूढभावाः, न त्वन्यस्मिन्। निरूढः पक्कभजनस्यो भावो यासां ताः। यथा निरूढशब्दे व्युत्पत्तिर्न कर्तव्या तादृग्भावभावात्तथैतासां भावोपीति भावः। गोगोकुलेन्द्रवाचकेन गोविन्दपदेन च धर्मिमात्रपरता तासां निरूपिता। नन्वन्यभावभक्ता अपि महिष्याद्यो धर्मिपरा एवेत्याशंकायामाह निखिलात्मनीति।

निखिलानामन्येषां धर्मिणां धर्माणामप्यात्मा मूलरूपधर्मीत्यर्थः । तादृशत्वं श्रीयशोदानन्दने श्रीकृष्ण एव, 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मना'मिति वाक्यात् । तथा चान्ये धर्मिपरा अपि न निखिलात्मस्वरूपश्रीकृष्णरूपधर्मिपरा इति भावः । नन्वेवं किमित्ययं भावः स्तूयते, भिन्नरुचिर्हि लोक इति न्यायाद्यस्य यद्रोचते स तमेव भावं तमेव स्वरूपं च सर्वोत्कृष्टं जानातीति चेत्तत्राह वाञ्छन्ति यद्भवभियो मुनय इति । पूर्वं संसारभयेन मुनयः मननशीला भूत्वा प्राप्तज्ञाना निवृत्ताविद्याः शुकादयोपि यद्यस्मात्कारणात् वाञ्छन्ति यं भावम् । तथा च येन निःशेषाविद्याभाववन्तस्त एवान्यप्रकारकं भावमन्यप्रकारकं भगवत्स्वरूपं च सर्वोत्कृष्टत्वेन परमकाष्ठापन्नं जानन्तीति भावः । किञ्च, वयमपि वैश्यापेक्षयोत्कृष्टाः क्षत्रियाः लौकिका अपि वाञ्छामः । यतोनुभावदर्शनं विना नोत्कृष्टं मन्यते कोपि कमपि । तस्माद्यत्र लौकिकालौकिकानां वाञ्छास्पभावस्तत्स्वरूपमेव तदासक्ताश्च सर्वोपरि विराजमाना इति किं वाच्यमेतद्भावस्यैतत्स्वरूपस्य तन्निष्ठानामासां सर्वाधिकत्व इति निगर्वः । अतः कारणादनन्ताः कथा यस्यासावनन्तकथः श्रीकृष्णस्तस्मिन् यो रसोद्बोधाभाववान् तस्य ब्रह्मजन्मभिः सहस्रमुखचतुर्मुखादिजन्मभिः किम् ? न किमपीत्यर्थः । यद्वा, जन्मभिः पुनःपुनर्जन्मभिरनन्तकथारसस्य तस्य किं ब्रह्म अक्षरस्वरूपम् ? न किमपि । तेषां मनसि ब्रह्मस्वरूपमप्रयोजकं भासत इत्यर्थः । तथा चानन्तकथारसनिष्ठत्वे जन्मैव वरम्, न तु मुक्तिरिति । तथा चैतन्मार्ग एतासामेव गुरुत्वेनान्यस्वरूपस्यान्याधीनत्वेप्येतासां भावस्य सर्वोत्तमत्वात् परमकाष्ठापन्नरसरूपभगवत्स्वरूपमेतदधीनमेवेत्यपि विचार्यासामेवातिदैन्येन दास्यकरणे तत्स्वरूपप्राप्तिस्तदनुग्रहेण, न तु स्वातन्त्र्येणेति ज्ञेयम् । अपरं च 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्', 'वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः । यासां हरिकथोद्गीतं पुनाति भुवनत्रय'मित्यादिना व्रजभक्ताः स्वजनस्यार्यपथस्य च परमकाष्ठापन्नस्य त्यागेन मुकुन्दस्य मोक्षदातुरपि पदवीं येन मार्गेण भगवान् गच्छति तं मार्गमेव तच्चरणरेणुसंवलितं भेजुर्न तु मुक्तिम् । तथा च मुक्त्यपेक्षयापि भगवच्चरणरेणुरेव सर्वोत्कृष्ट इति सिद्धम् । एवं चैतादृक्चरणरेणोरेतादृशानुभावज्ञापने व्रजसीमन्तिन्य एव गुरव इत्येतासामनुवृत्त्यैव भगवच्चरणरेणुप्राप्तिरिति श्रीव्रजभक्तचरणरेणुसम्बन्धि गुल्मलतौषधिजन्मापि प्रार्थितमतिदीनतया श्रीमदुद्धवैर्वन्दनं च तच्चरणरेणोरेव च कृतमन्यथा गुर्ववज्ञाकृतभ्रमताजनितापराधेन न भगवच्चरणरेणुप्राप्तिरिति दिक् । तस्मादेतासां गुरुत्वादेतदधीनत्वाच्च तच्चरणरेणुदास्येनैवैतादृग्भगवत्प्राप्तिर्नान्यथेति निःप्रत्यूहम् ।

स्यादेतत् । अयं सर्वोपि यत्नो रसरूपप्रभुस्वरूपफलप्राप्त्यर्थमेव । 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवती'ति श्रुत्या रसरूपभगवत्प्राप्तेरेव परमफलत्वात् । सा च

प्राप्ति'स्तेनैव सर्वभावेन परमानन्दमश्नुते' इति नादबिन्दूपनिषच्छ्रुत्या 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति तैत्तिरीयोपनिषच्छ्रुतेश्च सर्वभावप्रपत्तिलभ्यसर्वकामभोगरूपा। स च पूर्णसर्वकामभोगोऽपि तेषां व्रजसीमन्तिनीसदृशभावेनैव, नान्यभक्तभावसजातीयभावेन। एतदतिरिक्तस्थले प्रभुरंशेनैव, न तु पूर्णस्वरूपेणेति। तथा च तत्कामनया भजने क्रियमाणे व्रजसीमन्तिनीदास्यकरणेऽपि मनसि तत्समताभावनासत्त्वात् कापट्यसिद्धौ तासां गुरुरूपत्वेन सकपटभजने फलसिद्धेरभावस्तत्समकक्षता च स्यादिति चेत्, अत्र ब्रूमः। परमकाष्ठापन्नरसरूपो भगवान् हि लोकेतिरहस्यतमां पुष्टिलीलां यत् प्रकटितवान् तत्किमर्थमिति पृच्छामः। न च 'आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते। कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ। पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले। वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले। जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकम्। मयि सम्प्राप्य सर्वेऽपि कृतकृत्या भविष्यथे'ति बृहद्वामनपुराणोक्तेः श्रुतीनामनुग्रहार्थमिति वाच्यम्। अनुग्रहस्य श्रुतिनिमित्तप्रदर्शितप्रकृत्यतीतलोकेऽपि कर्तुं शक्यत्वात्। न च 'पुरा महर्षयः सर्वे दण्डकारण्यवासिनः। दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम्। ते सर्वे स्त्रीत्वमापन्ना समुद्भूताश्च गोकुले। हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवादि'ति। 'अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे। भर्तारं च जगद्योनिं वासुदेवमजं विभुम्। कृष्णस्य रमणार्थं हि सहस्राणि च षोडश। गोप्यो रूपाणि चक्रुश्च तत्राक्रीडन्त केशव'मित्यादि पद्मपुराणोत्तरखण्डमहाकौर्मादिवाराहपुराणादिवचनसिद्धदण्डकारण्यवास्तव्यमहर्षीणामनुग्रहार्थमित्यपि वाच्यम्। दण्डकारण्यस्थमहर्षीणामपि तत्रैव स्त्रीदेहं सम्पाद्य रामरूपेणैव न रमणं कृतम्, किन्तु तद्देहपातानन्तरं स्त्रीदेहं सम्पाद्य ब्रह्माण्डान्तर्वर्तिवृन्दावन एव श्रीकृष्णरूपेणैव रमणं कृतम्। एवं च तद्देहपातानन्तरमलौकिकदेहं सम्पाद्य श्रुतिप्रदर्शितवृन्दावन एव कुतो नानुग्रहं कृतवानिति प्रश्ने तवोत्तराभावात्, न च स्वतन्त्रेच्छो भगवानिति वाच्यम्। 'अनुग्रहाय भक्तानां मानुषं देहमाश्रितः। भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेदि'ति फलप्रकरणीयवाक्याद्भक्तानुग्रहार्थमेतैतादृशलीलाविशिष्टप्रभुप्राकट्यात्। प्रपञ्चे निःप्रयोजनकप्राकट्यस्याश्रुतत्वाच्च। न चानुग्रहं विना नैतादृशफलप्राप्तिरित्यनुग्रहेण प्रापञ्चिकजीवानामप्येतद्देहपातोत्तरं तादृशफलदानं तत्रैव स्थित्वा कुतो न करोतीति वाच्यम्। भगवान् हि रसरूपस्वरूप प्रापञ्चिकजीवानामपि केषाञ्चिदस्तु त्विचारितवान् स्वगुप्त्यमक्तेच्छापूर्वकस्वेच्छया। तत्र रसरूपभगवत्प्राप्तिस्तु रसरूपभावेनैव योग्या, नान्याद्यभावेन, 'ये यथा मां प्रपद्यन्ते' इति वाक्यात्। तत्र रसरूपभावस्वरूप साधनं वेदादिषु क्वापि नोक्तमतः प्रपञ्चे वृन्दावनं रसरूपस्वस्वरूप रसरूप परिकर च तत्प्राप्त्यनुगुण रसरूप साधन च प्रकटं कृत्वा तादृशसाधनेन तादृशस्वरूपप्राप्तिं महर्ष्यादीनां कृतवान् प्रभुः, तदनन्तर तादृशसाधनस्याविर्भावादनिभाग्यवतां जीवानां तदनुष्ठाने तत्स्वरूप-

प्राप्तेर्निःप्रत्यूहत्वमिति तथाकरणाभावात् । न च रसरूपभावमत्रादत्त्वानुग्रहेणैव कुतो न तादृक्फलदानमिति वाच्यम्, स्वतन्त्रेच्छेन भगवतैव 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मित्युक्तत्वात् तादृक्प्रतिपत्तिं विना तादृशानुग्रहाभावात् तादृशफलदानाभावात् प्रपत्तेरपि तत्रैव दानेन प्राकट्यवैयर्थ्यमिति पूर्वमेवोक्तम् । न च 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्य' इति मुण्डकोपनिषद्वाक्याद् विनापि साधनं भगवत्प्राप्तिरिति वाच्यम् । एतद्वाक्यानुपदोक्त 'नायमात्मा बलहीनेन लभ्यो, न च प्रमादात्तपसो वाप्यलिंगात्, एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे'तिवाक्य 'एतैरुपायैर्यतत' इत्युक्तेः पूर्ववाक्येन मर्यादीयसाधनमात्रनिषेध एव, न तु एतैर्मन्मनसि स्थितैरुपायैर्व्रजभक्तसजातीयभावादिभिः यः कश्चन यतते तस्य भगवद्वशीकारकसर्वात्मभावरूपयत्नलाभादेष आत्मा ब्रह्मरूपं हृदये प्रकटं धाम विशते प्रविष्टो भवतीत्यर्थान्न मर्यादातीतसाधननिषेध इति त्वदुक्तेरनवकाशात् । अन्यथा फलत्वव्याहतिः । यत्किञ्चित्साधनसाध्यस्यैव फलत्वात् । तस्मादतिभाग्यवच्चराणां जीवानामेतादृशसाधनेनैवैतादृशफलप्राप्त्यर्थमेतादृशोवतार इति । एवं च व्रजभक्तसमानभावेनाभजने तत्फलप्राप्तेः कस्याप्यभावादेतादृशमार्गप्राकट्यवैयर्थ्यापातः स्यात् । अत एव 'स्त्रियो वा पुरुषो वापि भर्तृभावेन केशवम् । हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशय' इति बृहद्वामनपुराणे । 'येषामहं प्रिय आत्मा सुतश्च सखा सुहृदो दैवमिष्ट'मित्यादिना श्रीभागवते चोक्तम् । अन्यथैतादृग्वाक्यं व्यर्थं स्यात् । तस्माद्व्रजभक्तसजातीयभावेनैव भजनं कर्तव्यम् । परन्तु व्रजभक्तदास्यपूर्वकमेव, न तु स्वातन्त्र्येण, व्रजभक्तानामेतन्मार्गगुरुत्वात्प्रभोस्तदधीनत्वाच्चेति निष्कर्ष इति सर्वं समञ्जसम् । न च प्रभोर्व्रजभक्ताधीनत्वेन तद्दास्यकरणेपि यदि ताः प्रतिबन्धं कुर्युः प्रभोः स्वस्वरूपदाने स्त्रीस्वभावसिद्धप्रचुरेर्ष्यया तदा कथमेतादृशफलप्राप्तिरिति वाच्यम् । रसरूपप्रभोरेव फलत्वात् रसस्य च विभावानुभावव्यभिचारिसमूहरूपत्वात् तत्र विभावत्वेन व्रजभक्तानां रसरूपप्रभुत्वात् तेषामप्यनुगत्यैवैतादृग्मार्गप्राकट्यस्य जातत्वेन तत्कृतेर्ष्यया प्रतिबन्धाभावात् । किञ्च, यथैव लौकिको नायकोनेकनायकानामेककालावच्छेदेन रसदानं कर्तुं न शक्नोति तत्रैवेर्ष्यापि सम्भवति । अत्र तु प्रभोरलौकिकत्वात् 'कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः । रेमे स भगवांस्ताभिरात्मारामोपि लीलये'त्यत्रेवानन्तरूपत्वेन सर्वेषां रसदानकरणसमर्थत्वान्नेर्ष्यावकाशः, यतः सर्वत्रैव सर्वानुभववेद्य एव प्रभुः सर्वदा विराजते । ननु प्रभू रसरूपस्तदन्तर्गताश्च व्रजभक्ता विभावत्वेनास्मदादिप्रपत्तिश्च व्रजभक्तदास्यविशिष्टभगवद्विषयकसर्वात्मभावेन । एवं च भगवद्रूपरसानुभवे सिद्धे तत्समये कैनासां दास्यं स्यादिति । न च तदुत्तरमेतासां दास्यं मास्त्विति शंकनीयम् । 'ये यथा मां प्रपद्यन्ते' इति मर्यादाभंगापत्तेरिति चेन्न, अलौकिकरसभोगानुकूलसामर्थ्यस्य प्राप्त्या रसरूपभगवद्भोगस्य व्रजभक्तदास-

भोगस्य चैककालावच्छेदेनैव सम्भवेन 'ये यथा मां प्रपद्यन्त' इति मर्यादाया अभंगात् । न 'चाचार्यं मां विजानीयादि'त्यनेनाचार्यस्य भगवत्त्वेन तद्दास्यपूर्वकमेव जीवैर्भगवद्दास्यं क्रियते साधनदशायाम्, फलदशायां तु भगवद्दास्यमेव तिष्ठति, न त्वाचार्यदास्यम्, तत्र क्वेयं मर्यादा, तथात्रापि भविष्यतीति वाच्यम् । सर्वेषां भगवद्रूपाणां नित्यत्वेनाचार्यरूपस्य भगवद्रसानुगुणभगवल्लीलान्तर्गतत्वात् स्वरूपस्य चालौकिकसामर्थ्येन तद्दास्यकरणस्यापि सम्भवात् । एवमेव सर्वभावप्रपत्त्या भजनमिति प्रभुदत्तालौकिकविषयकसामर्थ्येन सर्वविध-लीलास्वप्येतस्य भजनकर्तुः सान्निध्यं सिद्धम् । किं बहुनांशावतारादिलीलायामप्यंशेनैव च भक्तोपि तत्तल्लीलानुभवं करोतीति न कस्यामपि लीलायामेतादृशभक्तासहभावो भगवतः । न चैवं श्रीनारायणादिभक्तस्यापि श्रीनारायणे सर्वभावप्रपत्तेः सत्त्वात् सर्वत्र तत्सहभाव-प्राप्तौ पुरुषोत्तमसहभावोपि स्यादिति वाच्यम् । 'ये यथा मा'मितिपद्ये मामिति पदेन पुरुषोत्तमत्वेनांगुल्या स्वस्वरूपप्रदर्शनपूर्वकमुक्तत्वादेतस्याः प्रतिज्ञायाः पूर्णपुरुषोत्तम-मात्रसम्बन्धित्वात्, अन्यथा दण्डकारण्यस्थर्षीणामपि तेनैव स्वरूपेण रसदानं कृतं स्यात् कोसलेन्द्रकुमारेण । किञ्चैतस्याः प्रतिज्ञायाः सर्वभगवत्स्वरूपसम्बन्धित्वे पूर्णत्वांशत्वादिविभागोपि न स्यात् । न चेष्टापत्तिः, तदान्यस्वरूपाणामंशरूपश्रीकृष्ण-स्वरूपाणामपि श्रीमता व्यासेनोक्तत्वेन चित्ताप्रसादो न स्यादिति सर्वमनवद्यम् । एवञ्चैक-भक्तसम्बन्धिन्या अपि लीलाया न परिच्छेदस्तर्हि सर्वभक्तसम्बन्धिन्या लीलायाः परिच्छेदः केन कर्तुं शक्येतेति किं वाङ्मनसागोचरमाहात्म्येषु प्रभुतत्परिकरतद्भक्तेषु विचारचातु-र्येण । किञ्च 'त्रैलोक्ये भगवद्भक्ताः के त्वां जानन्ति मर्मणि । केषु वा त्वं सदायत्तः केषु प्रेम तवातुलमि'ति श्रीमदर्जुनेन पृष्टे भगवानुवाच 'न तथा मे प्रियतमो ब्रह्मा रुद्रश्च पार्थिव । न च लक्ष्मीर्न चात्मा च यथा गोपीजनो मम । भक्ता ममानुरक्ताश्च कति सन्ति न भूतले । किन्तु गोपीजनः प्राणाधिकप्रियतमो मम । न मां जानन्ति मुनयो योगिनश्च परन्तप । न च रुद्रादयो देवा यथा गोप्यो विदन्ति माम् । न तपोभिर्न वेदैश्च नाचारैर्न च विद्यया । वशोऽस्मि केवलं प्रेम्णा प्रमाणं तत्र गोपिकाः । मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम् । जानन्ति गोपिकाः पार्थ नान्ये जानन्ति मर्मणि । निजाङ्गमपि या गोप्यो ममेति समुपासते । ताभ्यः परं न मे पार्थ निगूढप्रेमभाजनम् । मम भक्तास्तु ये पार्थ न मे भक्तास्तु ते मताः । मम भक्तस्य ये भक्तास्ते मे भक्ततमा मता' इत्यादि-पुराणप्रमाणकान्मद्भक्तभक्तम्यधिकेति श्रीभागवताद्व्रजभक्तानां भक्तशिरोभूषणत्वात् प्रभोरतिप्रियत्वाच्चापि एतासां दास्यं कर्तव्यम् । एवञ्च सति एतद्दास्यकरणे प्रभोरत्या-नन्दातिमानेन तासामप्यानन्दातिमानान्मनसि सन्तोषेण तदनुग्रहात् तत्पूर्वोक्तं फलं भगवान् ददातीत्यपि तद्दास्यकरणम् । तथा चैतासां गुरुत्वात् प्रभोरेतदधीनत्वाद्भक्त-शिरोभूषणत्वादतिप्रियत्वाच्च सर्वथैतद्दास्यकरणपूर्वकमेव प्रभुदास्यकरणमिति सिद्धम् ।

अथ श्रीमत्स्वामिन्यादीनां सर्वासां समतयैव दास्यं कर्तव्यमथवा न्यूनाधिकभावेनेति पृच्छसि चेत् । अत्रोच्यते । 'यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभे'ति पद्मपुराणवचनात् । अथ च 'त्रैलोक्ये पृथिवी धन्या तत्र वृन्दावनं पुनः । तत्रापि गोपिकाः पार्थ तत्र राधाभिधा ममे'त्यादिपुराणवचनात् । 'सर्वश्रेष्ठा गान्धर्व्युवाचे'ति गोपालतापिन्युपनिषच्छ्रुतेश्च गान्धर्व्यपरनामिकायां श्रीस्वामिन्यामेव सर्वापेक्षया भगवतो ममतातिशयात् तत्रैव निजदास्यं मुख्यतया स्थापयित्वाऽन्यासु व्रजसीमन्तिनीषु 'मोदितां दुःखितां सखीमि'त्यादिना सखीत्वोक्तेः सख्याश्च समानशीलव्यसनवत्त्वात् तासां स्वामिनीसमानशीलव्यसनवत्त्वात् तासां श्रीमत्स्वामिन्या अतिप्रियतमानां दास्यमपि स्वामिन्यनुग्रहाकांक्षया स्वामिनीदास्यांगत्वेन स्वामिनीवदेव कर्तव्यम् । तासां समानशीलसखीत्वात्तद्दास्यकरणे श्रीस्वामिन्यत्यन्तमनुगृह्णाति । स्वामिन्यनुग्रहे च ता अनुगृह्णन्ति । तदनुग्रहे च व्रजराजकिशोरानुग्रह इति न कदापि कुत्रापि केनाप्यंशेन फलविच्छेदः । अत एव कैश्चिद्भगवदीयैः सिद्धान्तितं श्रीमच्चन्द्रावल्यादिषु स्वामिनीप्रतिपक्षात्वमपि न सम्भवति, सखित्वोक्तिविरोधात् । अत एव 'यदैव श्रीराधे मिलति रहसि त्वां मधुपतिस्तदैवाकार्याहं निजचरणदास्येतिगदिता । मुदा चन्द्रावल्ये'ति पद्ये अस्मत्प्रभुभिः सखीत्वमेव स्फुटीकृतम्, न तु प्रतिपक्षात्वम् । अत एवास्मत्सर्वस्वायिताः प्रभुचरणाः श्रीमत्स्वामिन्यष्टकतद्द्वादशकपद्यादौ तद्दास्यमेव सविस्तरं प्रार्थयन्तो 'यावन्ति पदपद्मानी'त्यादिनाऽन्यासामपि दास्यं प्रार्थितवन्तः । अन्यथा श्रीस्वामिन्या इवान्यासामपि पृथक्तया दास्यं प्रार्थयेयुर्न तु तद्दास्यप्रार्थनाप्रसंगे । सर्वासामपि समप्राधान्यात् । तस्मादन्यासां दास्यमंगत्वेनैवेत्यस्मदुक्त एव पन्थाः । ननु एवं चेत् सर्वास्वपि सखीत्वं तदा रसान्तर्गतामानखण्डिताकलहान्तरितादिलीला नोपपद्येतेति चेत्, अत्र वदामः । हृदयादिस्थिताभरणमणिगणप्रतिबिम्बितदृष्टनिजरूपे प्रतिनायिकाभ्रमात् संकेतस्थलानागमनाद्वा मानोदयात् । एवमेव बन्धविशेषाकस्मिकललाटसंक्रान्तस्वचरणतललाक्षारसे सुरतसमयसमुद्भूतनिजदन्तनखक्षतादिषु च कदाचिदतिविस्मरणेन रासस्थनिखिलव्रजभक्तातिरिक्तपरकीयाकृतत्वभ्रान्त्या मानखण्डिताकलहान्तरितादिलीलानां सम्भवात् । न च लाक्षारसदन्तनखक्षतादिषु स्वयूथकृतत्वभ्रान्तिरेव कुतो न जायत इति वाच्यम् । तथा भ्रान्ततायामपि तासु परस्परं दृढतरसखीत्वजनितातिप्रेम्णा ईर्ष्यानुदयेन तथालीलासम्भवात् । किञ्च 'योगमायामुपाश्रित' इत्यनेन रासलीलायां योगमायामाश्रितो भगवान् । एवञ्च योगमाया यथा यथा येषां येषां पदार्थानामुपयोगो रासलीलायाम्, तथा तथा करोतीति परकीयासम्भोगादिदर्शनजमानादिरसानुभवार्थं परकीयासम्भोगादि प्रदर्श्य मानादिरसानुभवं कारयतीत्यनेनापि प्रकारेण मानादिलीलानां सम्भवाच्च । यदि चात्यन्तमाग्रहो भवतां यच्चन्द्रावल्यादिसम्भोगदर्शनेन मानादिरेतास्वेव च प्रतिपक्षात्वं तदा तत्सर्वं कल्पान्तरीयांश-

रूपकृष्णावतारीयरसलीलायामेव, न सारस्वतकल्पीयपूर्णावतारसम्बन्धिरसलीलायामिति युज्यताम् । यदि सारस्वतकल्पे भवदुक्तप्रकारः स्यात्तदा श्रीभागवते स्फुटमुपलभ्येत । उपलभ्यते तु सखीत्वमेव परस्परं फलप्रकरण इति सर्वं चतुरस्रमिति कृत प्रसक्तानुप्रसक्त-चिन्तया । अत्रेदं ज्ञेयम् । अत्र फलत्रये फलद्वयमेतद्देहेपि भवति परन्तु मनसैव रसरूप-भगवत्सम्बन्धेन मनसोलौकिकत्वाभावात् । सेवोपयिकदेहरूपतृतीय फल त्वेतद्देहपातो-त्तर एव भवति सर्वथा । सर्वत्र लौकिकदेहपातोत्तर एवालौकिकदेहसम्बन्धसम्भवा-दिति दिक् ॥ १॥ ॥

अथ प्रकृतमनुसरामः । ननु बाधके सति कार्यानुदयाद्बाधकाभावस्य सर्वत्र कारणत्वेऽत्र यद्बाधक तनुजवित्तजरूपसाधनसेवायाम्, तद्वक्तव्यम्, यदभाव सम्पाद्य मानससेवारूपं तत्कार्यं सम्पादयामित्याकांक्षायां तनुजवित्तजरूपसाधनसेवाबाधकमाहुः उद्वेगः प्रतिबन्धो वेति ।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तुबाधकम् ॥ २ ॥**

एतस्य विवरणं तु सेवायां प्रतिबन्धकत्रयम् । **उद्वेगो वा प्रतिबन्धो वा भोगो वा । त्रयाणां साधनपरित्यागः कर्तव्य** इत्यन्तम् । तत्र तनुजवित्तज-रूपसाधनसेवायां येन क्रियमाणेन उद्वेगप्रतिबन्धभोगा भवन्ति तस्य परित्यागः कर्तव्यः । तत्परित्यागे तत्साध्योद्वेगाद्यनुदयात्तनुजवित्तजरूपसाधनसेवासम्पत्तौ सत्यां मानससेवासिद्धिर्भवतीति भाव । तत्रोद्वेगः शोकदु.खादिजनितो भवति, तेषु शोकादिषु जातेषु 'चित्तोद्वेग विधायापि हरिर्यद्यत् करिष्यति तथैव तस्य लीलेति मत्वा चिन्तां द्रुतं त्यजे'दिति नवरत्नोक्तेर्भगवल्लीला यथा सर्वा तथेयमप्येका भगवल्लीला भगवतः सुखा-धायिकेति ज्ञात्वा शोकादित्यागः कर्तव्यो, न तु शोकादिदूरीकरणार्थं यत्नः कर्तव्य इति । अन्यथा यद्यपि भविष्यति तदेव यत्प्रभुणा विचारितमस्त्यतः तस्य स्वरूपेण विघटन तु न कर्तुं शक्यम्, तथापि प्रभुसुखाधायकलीलापदार्थविघटनेच्छायामपि स्वामिद्रोहो भवेदत-श्चेष्टां ज्ञात्वा तादृशशोकदुःखादिकेषु सत्सु सत्स्वुद्वेगकारणाभावादुद्वेगाभावस्य जाय-मानत्वादुद्वेगसाधनपरित्याग. कर्तव्यः । यद्वा, बलिष्ठम्लेच्छबलिष्ठवेदवाद्यजनितोपद्रवेण साधनरूपसेवायामुद्वेगो भवति तदभावार्थं तत्सान्निध्यरूपसाधनपरित्यागः कर्तव्य इत्ये-तदर्थं साधनपरित्यागः कर्तव्य इत्युक्तम् ॥ २ ॥

तत्रोद्वेगकारणानामनन्तत्वात्तज्जन्योद्वेगानामप्यनन्तत्वात् परिगणना कर्तुमशक्येति सर्वविधमप्युद्वेगमुद्वेगत्वेनैकविधमेव निरूप्य द्वितीय प्रतिबन्धरूपं तनुजवित्तजसेवायां बाधकमाहुः अकर्तव्यमिति ।

**अकर्तव्यं भगवत सर्वथा चेद्गतिर्न हि ।**
**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥**

एतस्य विवरणं तु **प्रतिबन्धोपि द्विविधः, साधारणो भगवत्कृतश्च, तत्राद्यो बुद्ध्या त्याज्यः । भगवत्कृतश्चेत् प्रतिबन्धस्तदा भगवान् फलं न दास्यतीति मन्तव्यम् । तदान्यसेवापि व्यर्था । तदासुरोयं जीव इति निर्धारः । तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति विवेक** इत्यन्तम् । अत्र **भगवतः सर्वथा चेदकर्तव्यं** भगवत्कृतप्रतिबन्ध इति यावत्, तदा **गतिः** तदभावसम्पादकसाधनं किमपि नास्तीति मूलार्थः । अत्र '**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकमि**त्यनेन पूर्वं सेवायां बाधकत्रयं यदुक्तं तत्तु तत्त्रया-भावसम्पादनार्थमेव । अत एव त्रयाणां साधने त्यक्ते तदभावः सम्पद्यत इति त्रयाणां साधनपरित्यागः कर्तव्य इति विवृतौ स्फुटीकृतम् । न च बाधकत्रयत्याग एव कुतो नोक्तः, तत्साधनपरित्यागः किमर्थमुक्त इति वाच्यम् । जाते उद्वेगे जाते च प्रतिबन्धे जाते च भोगे सेवाभावस्तत्समयावच्छेदेन सिद्ध एव जाते तत्त्यागः कर्तुमशक्योप्युत्तरसमये तन्नाशोपि स्वयमेव भविष्यतीति व्यर्थस्तत्परित्यागः कर्तव्य इति पुरुषप्रयत्नोपदेश इति मनसिकृत्य सेवाविषये बाधकत्रयं न यथोत्पद्यत एव तथा कर्तव्यं पुरुषेणेत्येतदर्थं त्रयाणां साधनपरित्यागः कर्तव्य इत्युक्तत्वात् । एवं च सति **अकर्तव्यं भगवतः सर्वथा चेद्गतिर्नही**त्यनेन भगवत्कृतप्रतिबन्धाभावसम्पादनार्थं गतिर्नास्तीत्युक्तत्वादन्यकृतप्रति-बन्धाभावसम्पादने गतिरस्तीत्यर्थतः सिद्धत्वाद्द्विविधं प्रतिबन्धकमागतमेवेति कण्ठरवेण मूलेनुक्त्वा विवरणे प्रतिबन्धकरूपसेवाबाधकद्वैविध्यमाहुः **प्रतिबन्धोपि द्विविधः । साधारणो भगवत्कृतश्चे**ति । तत्र भगवत्कृतप्रतिबन्धाभावः सम्पादयितुमशक्यः, साधारणस्तु शक्य इति विवरणे आहुः **तत्राद्यो बुद्ध्या त्याज्य** इति । तत्र प्रति-बन्धकरूपसेवाबाधकभेदद्वये **आद्यः** साधारणः प्रतिबन्धो भगवद्विमुखभार्यादिकृत-प्रतिबन्धस्तत्र साधनपरित्यागस्योक्तत्वात् तत्साधनरूपो यो भार्यादिः स त्याज्यस्त्यक्तुं शक्यः । तत्त्यागेन प्रतिबन्धाभावरूपबाधकाभावः सम्पादयितुं शक्य इत्यर्थो ज्ञेयः । अत एवोक्तं 'भार्यादिरनुकूलश्चेत् कारयेद्भगवत्क्रियाम् । उदासीने स्वयं कुर्यात् प्रति-कूले गृहं त्यजे'दिति भागवततत्त्वदीपे ।

अथ भगवत्कृतप्रतिबन्धस्तु न केनापि त्यक्तुं शक्य इत्याहुः **भगवत्कृतश्चेत् प्रतिबन्धस्तदा भगवान् फलं न दास्यतीति मन्तव्य**मिति विवरणे अर्थः स्पष्टः । ननु भगवत्कृतः प्रतिबन्धः कस्य फलाभावसम्पादकः ? किं कायवाङ्मनोभिर्भजनं कुर्वतः पुरुषस्याहोस्विद्भजनेच्छावतो वा ? तत्र नाद्यः । 'इति निश्चित्य मनसा कृष्णं परिचरेत्सदे'ति भागवततत्त्वदीपकारिकाव्याख्याने 'एकापि सकृत्कृता परिचर्या परम-पुरुषार्थदेति । परं विद्यमानदेहस्य निःकृत्यर्थं सदा परिचरे'दित्याचार्यैः सिद्धान्तितत्वात् किञ्चित्कालिकभजनोत्तरं यावज्जीवं कयाचिद्भगवदिच्छया भगवत्कृतसेवाप्रतिबन्धेपि परम-

पुरुषार्थलाभस्य सिद्धत्वादत्र भगवान् फलं न दास्यतीति निषेधस्य विरुद्धत्वात् । अत एव 'न ह्यंगोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपी'ति एकादशस्कन्धीयप्रभुवचनं 'यानास्थाये'ति वचनं 'सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यतां संवत्सरं किञ्चिदूनं दिव्या यद्धरिरर्चित' इति षष्ठस्कन्धीयाष्टाध्यायीयशुकवचनं च । न द्वितीयः, विना भगवत्कृपां भजनेच्छानुदयात्, तदुदये च भजनस्य भविष्यत्वनिश्चयेनापि निषेधस्य वैयर्थ्यापातात् । तथाचायं निषेधो भगवत्कृतप्रतिबन्धे कालविलम्बेन फलदानेच्छामेव व्यनक्ति, न तु तददानेच्छामिति भावः । अन्यथा भजनेच्छानुकूलकृपावैयर्थ्यं प्रसज्जेतेति । न च विनैवानुग्रहं भजनेच्छोदय इति वाच्यम् । अवतारदशायां स्वरूपदर्शनेनैवेच्छोदयसम्भवेप्यनवतारदशायां सत्संगश्रीभागवतादिश्रवणं विना शुद्धपुष्टिभजनेच्छोदयस्यादृष्टत्वादश्रुतत्वाच्च । यदि पुनर्विनादर्शनश्रवणादिकमपि शुद्धपुष्टिमार्गीयभजनेच्छोदयः स्यात् तदा पुरुषोत्तमावतारोपि न स्यात् । अत एवानुग्रहाय भक्तानां मानुषं देहमाश्रित'इत्युपक्रम्य 'विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोनुशृणुयादथ वर्णयेद्य' इत्यत्र य इतिपदेन यस्यकस्यापि श्रवणवर्णनाभ्यां भक्तिं परामित्यनेन भक्तिलाभ उक्तः, स त्विच्छोत्पादनपूर्वक एव । तस्माद् व्यर्थं भगवत्कृतश्चेत् प्रतिबन्ध इत्यादिनिरूपणमिति चेत्, अत्र वदामः । पुत्रादिजन्मादुत्तरं केनापि प्रतिबन्धेनाकृतपुत्रादिनिवेदनस्य कस्यचिन्महत्तमस्य पुरुषस्य तदनन्तरमतिकृपया पुत्रादिस्नेहेन वा कदाचित् तदनिवेदनस्मरणे मनसि स्यान्मम पुत्रादिः शुद्धपुष्टिभजनेन भगवन्तं प्राप्नोत्विति मयास्मै नामनिवेदने दत्वा भगवत्सेवा कारणीया तदा त्वं सेवां कुरु मत्तो नामनिवेदने गृहीत्वेति कथने यदि तस्य ह्यल्पोप्युत्साहो न दृश्यते कदापि प्रत्युत द्वेषः तदोन्नेयमिदम्, यदस्य भगवत्कृतः प्रतिबन्धोस्ति भगवान् फलं न दास्यतीत्यस्मै नोपदेष्टव्यं किमपीति ज्ञापनार्थत्वेन भगवत्कृतश्चेत् प्रतिबन्ध इत्यादिनिरूपणस्य सार्थकत्वात् । ननु तदा शुद्धपुष्टिमार्गीयपूर्णस्वरूपसेवाफलं मा भवत्वंशांशस्वरूपसेवाफलं तु भविष्यतीत्यंशसेवोपदेश एव कर्तव्यस्तेनेति चेदित्याशंक्याहुः तदान्यसेवापि व्यर्थेति । अंशांशिनोरभेदादंशस्यांश्यधीनत्वाचांशिकृतप्रतिबन्धेंशस्य फलदानासमर्थत्वान्महाराजकृते प्रतिबन्धे सचिवादेरिवेत्यर्थः । नन्वंशिनो न स्वस्वरूपपरमफलदानेच्छा किन्तु स्वल्पफलदानेच्छांशद्वारा तदांशेन फलदानं कर्तव्यमेव, महाराजस्य महाफलदानेच्छाभावेपि सचिवादिद्वारा स्वल्पफलदानेच्छायां सचिवादिनेवेति चेत्, सत्यम्, यत्रांश्यविरोधेनांशभजनं तत्रैवांशेन फलदानं महाराजाविरोधेन सचिवादिभजने सचिवादिनेव, न तु तद्विरोधेन भजने । तथा चैतस्य भगवत्सेवाकर्तव्यत्वकथनेपि कदाप्युत्साहाभावात् प्रत्युत द्वेषोदयादंशेनापि फलदानमित्यन्यसेवावैयर्थ्यात् सापि नोपदेष्टव्येति सुष्ठूक्तं तदान्यसेवापि व्यर्थेति । किञ्च, तदैतादृशस्य यत्स्वरूपं तस्य निर्धारोपि भवतीत्याहुः तदा आसुरोयं जीव इति निर्धार इति । आसुर आसुरांशी आसुरभाववान्

वा सहजासुरो वेति निर्धारो निश्चय इत्यर्थः । अत्र कदाचिद्भक्तसन्निधौ यस्य मनसि भगवति सद्भाव उत्पद्यते द्वितीयक्षणे तदसन्निधौ तु नश्यति स आसुरावेशी आसुरभाववान् वा ज्ञेयः । यस्य तु सत्संगेपि भगवति न सद्भावः कदापि स तु सहजासुर इति ज्ञेयः । ननु तर्हि महत्तमकृपावैयर्थ्यप्रसंग इत्याशंक्याहुः **यथा वा तत्त्वनिर्धारो विवेकः साधनं मतमिति ।** **वा** अथवा **यथा** आसुरस्य **तत्त्वनिर्धार** उक्तस्तथा **विवेको** विचारो ज्ञानमिति यावत् । तत्साधनमासुरस्य शोकाभावरूपफलाय **मतं** सम्मतमित्यर्थः । अत्रैवं ज्ञेयम् । 'मायेत्यसुरा' इति श्रुतेरसुराणां माया सेव्या, सैवेश्वरः, तत्कृतत्वाज्जगन्मायिकम्, तेषां मुक्तिश्चा'न्धन्तमः प्रविशन्ति ये सम्भूतिमुपासत' इति श्रुतेर्दैवेष्वनाविष्टानां सहजासुराणां कामनाभावपूर्वकं सम्भूत्युपासकानां तदुपासनारूपसाधनबलेनासुरज्ञानमार्गप्रवेशे सति शोकाभावरूपावान्तरफले जाते सुखदुःखात्यन्ताभावस्वरूपपुनरावृत्तिरहितप्रकृतिलयरूपान्धन्तमःप्रवेशरूपा मुक्तिः । आसुराविष्टानां दैवजीवानां तु निरुपधिकृपया भगवता हतानां मध्ये दैवस्य दैवज्ञानाभावात् स्वरूपबलेनाक्षरब्रह्मणि लयरूपा मुक्तिः, तदाविष्टासुरस्य त्वासुरज्ञानाभावात् स्वरूपबलेनैवापुनरावृत्तिरहितान्धन्तमःप्रवेशापरपर्यायप्रकृतिलयरूपा मुक्तिः । अन्येषां सकामानां सहजासुराणामासुराविष्टदैवजीवानां च 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्यापि गच्छन्त्यविद्वांसोऽबुधा जनाः', 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्वि'ति श्रुतिभगवद्वाक्याभ्यामन्धन्तमोवृतकेवलदुःखात्मकलोकरूपनरकप्राप्तिस्तद्भोगानन्तरं पुनरासुरयोनिप्राप्तिरेवेति कृतं पल्लवितेन ।

एवं च सर्वं मायिकमेकोस्मदादात्मा स एव परमार्थो मायैवेश्वरो नान्य ईश्वरः कोप्येवं तत्त्वनिर्धाररूपो विवेकः सोस्य **साधनं मतं** सम्मतं यावज्जीवं शोकाद्यभावाय, तदनन्तरं तादृशमुक्तये चेतिशेषः । तथा च तादृशपुत्रभार्यादेः संसारान्निहत्वान्महत्तमकृपया तेषां संसाराभावेन शोकाद्यभावपूर्वकतादृशमुक्तिनिमित्तमासुरज्ञानमार्गमुपदिशेदिति भावः । अत एव श्रीमद्वसुदेवैरासुरज्ञानमार्ग एव कंसस्य श्रीमद्देवकीवधोद्यतस्योपदिष्टो न तु दैव इति ज्ञेयम् । इदमेवाहुर्विवरणे ***तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति*** विवेक इति । तदा तेष्वासुरावेश्यासुरभाववत्सहजासुरजीवत्वनिर्धारे सत्येतैरासुरज्ञानमार्गेण स्थातव्यमित्ययं विवेको विचारः सिद्धान्तभूत इत्यर्थः । तथा च तान् प्रत्यासुरज्ञानमार्ग उपदेष्टव्य इति भावः । यद्वा पूर्वमासुरोयं जीव इति निर्धार इत्युक्तं तर्हि तेन किं साधनमनुष्ठेयमित्याकांक्षायां तदा ज्ञानमार्गेण स्थातव्यमि-

१ आवेशजीवास्ते सर्वे दैत्यानां वपुषि स्थिताः, आवेशेन विना ये च मूलदैत्या इति स्मृताः, तेषां तमथ सम्प्रोक्तं चान्धे देवाशिनस्तथा, तेषां स्थानं च स्वर्गादि तत पदमथासुरीति पद्मपुराणोत्तरखण्डीयवाक्येभ्य आसुरावेशिनां मुक्तेरासुराणामन्धन्तमोरूपनरकप्राप्तेश्च बोध्यम् ।

त्वासुरस्यैव साधनमुपदिशन्ति **तदा ज्ञानेत्यादिना** । एवं च ज्ञानमार्गपदेनासुरज्ञानमार्ग एवायातीति तथा व्याख्यातमिति ज्ञेयम् । न ह्यासुरस्य सर्वं ब्रह्मेत्यक्षरज्ञानमार्गे पुरुषोत्तमज्ञानमार्गे वाधिकारः, तस्य तामसत्वात् । अत एवेश्वरत्वेनाभिमततामसमायाशक्त्युपासकास्तेषु सत्त्वाभावात् सत्त्वजनितज्ञानाभावे'नोर्ध्वं गच्छन्ति सत्त्वस्था' इत्युक्ता नोर्ध्वगतिः, किन्तु तामसशक्त्युपासनाजनितज्ञानस्य तमोगुणजनितत्वेन तामसत्वा'दधो गच्छन्ति तामसा' इत्यधोगतिरूपनिरयान्धन्तमोरूपप्रकृतिलयान्यतरप्रवेश एव, 'ये यथा मां प्रपद्यन्त' इति वाक्यात् । अत्र अधःपदेनाधममेव विवक्षितम्, न तु नीचस्थानम्, निरयाणां नीचस्थानत्वेपि अन्धन्तमःप्रवेशरूपासुरमुक्तेः सुखदुःखाभावरूपत्वेन नीचस्थानत्वाभावात्, सर्वं ब्रह्मेत्यक्षरब्रह्मज्ञानमार्गे तु 'दैवी सम्पद्विमोक्षाये'ति वाक्याद्दैवसम्पद्युक्तजीवानामेवाधिकारः । अत एव 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयो भवेन्मोक्षायाधिष्ठित' इतिमोक्षधर्मीयनारायणीयवाक्यान्मोक्षाधिकारिणां सात्त्विकत्वेन 'सत्त्वात्सञ्जायते ज्ञान'मित्युक्तसत्त्वगुणजनितज्ञाने'नोर्ध्वं गच्छन्ति सत्त्वस्था' इति वाक्योक्तोर्ध्वगमनरूपा स्वर्गमुक्त्यन्तरप्राप्तिर्भवतीति । अत्रोर्ध्वपदस्योत्तममित्यर्थो न तूच्चस्थानम्, स्वर्गलोकस्योर्ध्वलोकत्वेपि 'यन्न दुःखेन सम्भिन्न'मित्यादिवाक्योक्तस्वर्गसुखस्य सुखेऽप्यूर्ध्वलोकत्वाभावात् । तस्मादूर्ध्वपदेनोत्तमत्वमेव विवक्षितमिति ज्ञेयमिति दिक् ॥ ३ ॥

तथा च यस्माद्बाधकेषु सत्सु न सेवासिद्धिरतस्तत्र यत्साधनपरित्यागः कर्तव्य इत्याहुः **बाधकानां परित्याग** इति । एवं द्विविधमपि प्रतिबन्धरूपं सेवाबाधकमुक्त्वा लौकिकभोगरूपं सेवाबाधकं वदन्तो द्विविधं भोगमाहुः **भोगेप्येकं तथा परम् । निःप्रत्यूहम्** । एतद्विवरणं तु **भोगो द्विविधो, लौकिकोऽलौकिकश्च । तत्र लौकिकस्त्याज्य एव । अलौकिकभोगस्तु फलानां मध्ये प्रथमे प्रविशतीत्यन्तम्** । अत्र यथा प्रतिबन्धे साधारणस्त्याज्यो, भगवत्कृतस्तु फलनिश्चयमेव जनयेत्, तथा भोगेपि सुखदुःखसाक्षात्काररूपभोगरूपवस्तुन्यपि एकं साधारणं लौकिकमिति यावत्, तत् तथा त्याज्यम्, तत्साधनपरित्यागः कर्तव्य इत्यर्थः । **परं द्वितीयं** साधारणाद्भिन्नमलौकिकमिति यावत्, तादृशभोगरूपं वस्तु निष्प्रत्यूहं निर्गतः फलप्राप्तौ विघ्नो यस्मात्तत्फलाप्रतिबन्धकमिति यावदेतादृशमित्यर्थः । तथा च तत्फलानुकूलमेवेत्यर्थ इति भावः । एवं द्विविधोपि भोगो मूले कण्ठरवेणोक्तो यस्तमेव भोगं विवरणे **भोगोपि द्विविधो लौकिकोऽलौकिकश्चे**त्यादिना स्फुटीकृत्य तत्र **लौकिकस्त्याज्य एवे**त्यनेन लौकिकभोगस्यापि तत्साधनपरित्यागेन त्याज्यत्वमुक्तम् । ननु कथमलौकिकस्य द्वितीयस्य भोगस्य फलाप्रतिबन्धकत्वमित्याशंकायामाहुः **महान् भोगः प्रथमे विशते सदेति** । महानलौकिको भोगस्तु प्रथमे अलौकिकरसोप-

भोगसामर्थ्यरूपे पूर्वोक्तफले विषयत्वेन प्रविशतीत्यर्थः । नन्वलौकिकभोगस्तु नेह भवति किन्त्वेतद्देहपातोत्तरं साक्षाद्भगवत्सम्बन्धे सति भवति । तथा चात्रालौकिकभोगप्रसक्तेरेवाभावात् तद्भोगप्रसक्तौ सत्यामेव लौकिकभोगवदस्यापि त्यागाशंकायां प्राप्तायामेतस्य प्रथमफले प्रवेशवचनं सार्थकं स्यात्तस्मान्महान्भोगः प्रथमे विशते सदेति वचनं व्यर्थमिति चेत्, अत्र वदामः । अलौकिकभोगस्त्वत्रापि मनोमात्रस्य स्थायिभावात्मकभगवत्सम्बन्धेनालौकिकत्वान्मनोमात्रे स्वात्मनि द्वारा भवति, तत्सहनार्थमेवालौकिकसामर्थ्यं भगवता दीयते, अत एवालौकिकभोगस्य प्रथमफलान्तरभावोक्तिः संगता भवति । अन्यथा प्रथमफलान्तरभावोक्तिरसंगता स्यात् । तस्माद्यदा तनुजवित्तजसेवया प्रेमोत्पत्तिस्तदनन्तरमलौकिकभोगरूपे अपूर्वानुरागरूपविरहजदुःखसाक्षात्कारे विषयत्वेन प्रविष्टस्य दुःखस्य तापविशिष्टस्य सहनार्थमलौकिकसामर्थ्ये भगवता दत्ते स्वसेव्यश्रीविग्रहे स्वप्नादिषु वा स्पर्शादिजनितविलक्षणसुखभोगप्राप्तिरत्रापि भवति तदाचार्यैर्भोगः प्रतिबन्धकत्वेनोक्तोऽयं भोगोपि मम प्रतिबन्धकः स्यादिति कदाचित् कस्यचिन्मनसि भवेत्, प्रेमभरेण च स भोगस्त्यक्तुमशक्यस्तदा व्याकुलतया महान्खेद उत्पद्येत, तेन च विरहानुभवप्रतिबन्धः स्यादिति तत्खेदनिवारणार्थं **महान्भोगः प्रथमे विशते सदेति** मूले, **अलौकिकभोगस्तु फलानां मध्ये प्रथमे प्रविशतीत्ये**तद्विवरणे चालौकिकभोगस्य प्रथमफले प्रवेश उक्त इति तयोक्तेः सार्थकत्वस्य सिद्धत्वान्न त्वदुक्त्यवकाशः कथमपीति बुध्यस्व । ननु लौकिको भोगो न तनुजवित्तजसेवायाः प्रतिबन्धकः किन्तु 'ता नाविद'न्नित्याद्युक्तप्रकारकचेतस्तत्प्रवणत्वतद्रूपायां मानससेवायां प्रतिबन्धकः । यदि तनुजवित्तजसेवाप्रतिबन्धकः स्यात्तदा लौकिकसुखसाक्षात्काररूपभोगाभावे देहस्थितेरभावात् तनुजवित्तजसेवाश्रवणकीर्तनादीनां चाभावे सिद्धे कारणाभावेन प्रेमोत्पत्तेरभावान्मानससेवासिद्धेश्चाभावात् परमफलप्राप्तिर्न भवेदेव कस्यापीति न कोप्यस्मिन्मार्गे प्रवर्तेतेति मार्ग एवायमुच्छिद्येत, तस्मान्न तत्प्रतिबन्धको लौकिको भोगः । सति च लौकिके भोगे 'विषयाक्रान्तचित्तानां नावेशः सर्वदा हरे'रितिवचनात्तत्कारणविषयावेशेन भगवद्विषयकतनुजवित्तजसेवाभावे कथं पूर्वोक्तं फलं स्यादिति चेत्, अत्र वदामः । लौकिकविषयभोगो द्विविधः, एकः केवलेन्द्रियपोषको, द्वितीयो भगवत्तनुजवित्तजसेवोपयोगी । तत्र केवलेन्द्रियमात्रपोषकविषयभोगो न कर्तव्यः, किन्तु प्रभुसेवोपयोगित्वबुद्ध्या अथ च स्वस्य दासत्वेन दासधर्मत्वबुद्ध्या च लौकिकभगवन्निवेदितविषयभोगः कर्तव्यः । एवं च 'तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् । तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः । त्वयोपभुक्तस्रग्गन्धवासोलंकारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमही'त्यादिवचनानि च यैर्भगवत्सेवोपयोगित्वेन दासधर्मत्वेन बन्धकमायाजयसाधकत्वेनानर्थनिवारकत्वेन च भगवन्निवेदितलौकिकविषयजभोगस्य विहितत्वात् । तस्मात्केवलेन्द्रियमात्रपोषकलौकिकभगवद

निवेदितविषयजभोग एव त्याज्यत्वेनोक्तोऽत्र, स तु तनुजवित्तजसेवाबाधक एवेति स एव त्याज्यो न तु भगवत्सेवौपयिकत्वेन दासधर्मत्वेन च प्राप्तो विषयजभोग इति बाधकत्वाभावेन पूर्वोक्तफलस्य निःप्रत्यूहत्वात् । अत एव 'बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मतः, अव्यावृत्तो भजेत्कृष्णं पूजया श्रवणादिभि'रित्यादिना भक्तिवर्धिन्यां तनुजवित्तजसेवाकरणे गृहस्थितिरुक्ता । प्रेमासक्त्यनन्तरमेव च 'तादृशस्यापि सततं गेहस्थानं विनाशकम् । त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानसः । लभते सुदृढां भक्तिं सर्वतोऽभ्यधिकां परा'मित्यनेन भगवद्भजनान्यविषयकव्यासंगजनकत्वेन सर्वविधस्यापि गृहस्य त्याग उक्तः सर्वविधभोगाभावसाधकत्वेनेति कृतं पल्लवितेन ॥ ४ ॥

ननु भगवता साक्षात्सम्बन्धेऽपि यदि सुखदुःखसाक्षात्काररूपो भोग एव भवति तदा लौकिकभोगः किमर्थं त्याज्यत्वेनोच्यत इत्यनतिपण्डिताशंकां परिहरन्त आहुः ।

**सविघ्नोऽल्पो घातकः स्याद्बलादेतौ सदा मतौ ।**

एतद्विवरणं तु साधारणो भोगः कथं त्यक्तव्य इत्याकांक्षायामाहु **सविघ्नोऽल्पो घातकः स्यादिति । सविघ्नत्वादल्पत्वाच्च भोगस्त्याज्यः । एतौ सदा** प्रतिबन्धकावित्यन्तम् । लौकिकसुखभोगसुखभोगसाधनानां नाशात्सविघ्नो, अथ च लौकिकभोगः किञ्चित्कालिकत्वात् परिछिन्न इत्यल्पश्च । अथ च परमफलबाधक इति घातकः । एवमेव लौकिकदुःखभोगस्तु यद्विषयक उत्पद्यते तद्विषयस्य कस्यचिदेव प्राप्तिर्न सर्वस्येति सविघ्नो, अथ च लौकिकविषयस्य तुच्छत्वात् तुच्छविषयक इति अल्पस्तुच्छश्च । अथ च परम्परया मानससेवाप्रतिबन्धकत्वात् फलप्रतिघातकश्चेति मूले हेतुगर्भविशेषणानि । अत एवात्र भावप्रधानो निर्देश इति ज्ञेयमिति मनसिकृत्याचार्याः सविघ्नत्वादल्पत्वाद्घातकत्वाच्चेति हेतुत्वेनैव विवरणे व्याख्यातवन्तो भोगविशेषणानि । अत एव **एतौ** भगवत्कृतप्रतिबन्धसाधारणभोगौ बलाद्धेतोः सदा बाधकाविति भावः । नन्वत्रैको भोगः एवोक्तः पूर्वमव्यवहितः, तथा सति सदायं प्रतिबन्धक इत्येकवचनमेव वक्तव्यम्, न त्वेताविति द्विवचनमित्याशंकायामाहुः **द्वितीयो भगवत्कृतः प्रतिबन्ध** इति । द्विवचनाक्रान्तैतच्छब्दे द्वितीयो द्वित्वसंख्यापूरको भगवत्कृतः प्रतिबन्ध इति तात्पर्यात् द्विवचनस्य सार्थक्यमिति भावः ।

ननु भगवत्प्रतिबन्धे ज्ञाते संसाराभावायातिकृपया तस्यासुरज्ञानमार्ग उपदेष्टव्य इति पूर्वमुक्तम्, तत्रापि तस्य चेन्न स्थिरता तदा महद्भिः किं कर्तव्यमित्याकांक्षायामाहुः **द्वितीय** इति ॥ ५ ॥

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

एतद्विवरणं तु ज्ञानस्थित्यभावे चिन्ताभावार्थमाहु **द्वितीय** इत्यन्तम् । **द्वितीये** भगवत्कृतप्रतिबन्धे आसुरज्ञानोपदेशपर्यन्तं चिन्ता कर्तव्या महद्भिरतिकृपया ।

यदासुरज्ञानेपि भार्यादेः स्थितिर्न दृश्यते किन्तु 'कामोपभोगपरमा' इति वचनसिद्धकामोपभोगमात्रपरत्वं दृष्टम्, तदास्यासुरमुक्तिरपि न देया, भगवता किन्तु मरणानन्तरं 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्यापि गच्छन्त्यविद्वांसोबुधा जना' इति श्रुत्युक्तान्धन्तमोवृतकेवलदुःखात्मकलोकप्राप्तिपूर्वकं 'तानहं द्विषतः क्रूरानि'त्यादिवाक्योक्तः संसार एव देयोस्येति संसारनिश्चयं प्राप्य सर्वथैव चिन्ता त्याज्या । तादृशपुत्रादिरुपेक्ष्य इति भावः ॥ ५ ॥

एवं प्रसंगादासुरस्य पुत्रादेरुद्धारोपायस्य कर्तव्याकर्तव्यत्वं निरूप्य प्रकृतं विचारयन्ति । ननु यथासुरस्यासुरमुक्तिसंसारयोर्निश्चयः कृतः कामोपभोगपरत्वापरत्वादिलिङ्गैस्तथा शुद्धपुष्टिमार्गीयेष्वेतस्य शीघ्रं फलमेतस्य विलम्बेनेति केन लिङ्गेन ज्ञेयमित्याकांक्षायामाहुः ।

**न त्वाद्ये दातृता नास्ति ।**

तुशब्द आसुरप्रसङ्गनिवारणार्थः । **आद्ये** अलौकिकसामर्थ्यरूपे फले जाते सति भगवतः दातृत्वं नास्तीति न, किन्तु दातृत्वं वर्तत इति ज्ञेयम् । **नन्वाद्य** इति पाठे नु निश्चयेन **दातृता नास्तीति न,** किन्तु वर्तत एवेत्यर्थो ज्ञेयः । एतद्देहे मनसि एतद्देहपातोत्तरं चालौकिकसंघात एव फलं भविष्यतीति भावः । अयं मूलार्थः स्पष्ट एवेति मत्वाद्ये दातृता नास्तीत्येतस्यार्थमनुक्त्वा आद्यफलाभावे एतद्देहे मनसि एतद्देहपातोत्तरं च भगवतो दातृता नास्तीति शिरश्चालनेनोक्त्वा किन्तु विलम्बेन दातृता वर्तत इत्यर्थतः सिद्धमर्थमाहुर्विवरणे **आद्यफलाभावे भगवतो दातृत्वं नास्ति तदा सेवानाधिदैविकीत्युक्तं भवतीत्यन्तेन ।** यतश्चायमार्थिकोर्थ उक्तोत एव इत्युक्तं भवतीत्युक्तं न त्वित्यर्थ इति । यद्वा आद्यफलाभावे तनुवित्तजसेवाजनितप्रेमासक्त्यनन्तरमलौकिकसामर्थ्यदानाभावे भगवतो दातृत्वाभावो नास्ति किन्तु विलम्बेन दातृत्वं वर्तत इत्यकारप्रश्लेषेण व्याख्येयम् । नन्वाद्यफलाभावे दातृत्वं कुतो नास्तीत्याकाङ्क्षायामाहुर्विवरणे **तदा सेवानाधिदैविकीत्युक्तं भवतीति ।** व्यसनपर्यन्तं स्वतप्रेच्छलेन प्रेमाद्यस्थानामाविर्भाव्यस्याभावात् पूर्णप्रेमाविर्भावाभावाद्रसरूपताभावात्सेवाया आधिदैविकत्वाभावादिति हेतोर्दातृत्वं नास्ति, यत आधिदैविकसेवयैवाधिदैविकस्वरूपप्राप्तिर्'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति वाक्यादित्यवेहि । रसरूपसैवाधिदैविकत्वे 'रसो वै स' इतिश्रुतिस्थपरमकाष्ठापन्नब्रह्मस्वरूपनिश्चयवाचकवैइत्यव्ययशब्दः प्रमाणं परमकाष्ठापन्नस्यैव पर्यन्ततः सर्वाधिदैविकत्वात् । एवं चाद्यफले जाते फलं शीघ्रं भविष्यति तदभावे भगवदिच्छाभावेन कस्यचिद्विलम्बेन भविष्यतीत्याद्यफलोत्पत्त्यनुत्पत्तिरूपलिङ्गाभ्यां शुद्धपुष्टिमार्गीयस्यापि भक्तस्य शीघ्रफलोत्पत्त्यनुत्पत्ती ज्ञेये इति दिक् ।

अथ उद्वेगाभावप्रतिबन्धाभावभोगाभावानां बाधकाभावत्वेन पूर्वं कारणत्वमुक्तम् । तत्र सर्वस्यापि भगवल्लीलात्वेन ज्ञानादुद्वेगाभावः सिद्धस्तत्र न गृहत्यागः । सेवाप्रतिबन्धका-

सुरपुत्रादेस्त्यागात्प्रतिबन्धाभावसिद्धेश्च तत्र पाक्षिको गृहत्यागः । दैवपुत्रादिषु सत्सु गृहत्यागाभावात् । भोगाभावस्तु लौकिकभोगत्वावच्छेदकावच्छिन्नाभावः । स तु लौकिकगृहत्वावच्छेदकावच्छिन्नत्यागेनैवेत्याहुः ।

**तृतीये बाधकं गृहम् ।**

**तृतीये** बाधकाभावत्वेन कारणे लौकिकभोगाभावे लौकिकं गृहं बाधकम् । तादृशगृहे सति तादृशभोगाभावाभावात्, सर्वेन्द्रियाणां लोकवेदसंकोचेनापि स्वस्वविषये प्रवृत्तिसम्भवादिति भावः । एतद्विवरणे इदमेवाहुः **भोगाभावस्तदैव सिध्यति यदा गृहपरित्याग** इति । अत्र पर्युपसर्गो वेश्मस्त्रीतत्रस्थपुत्रादिवाचको ज्ञेयः । अन्योऽर्थः स्पष्टः ।

ननु एतादृशसेवनातिदुर्लभेत्याशंकायामाहुर**वश्येयं सदा भाव्येति ।**

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

अत्र विवरणाभावादस्माभिरेव व्याख्यायते । **इयमव्यवहितक्षण एवोक्ता बुद्धिस्था** मानसी सेवना 'न रोधयती'त्यादिवाक्येभ्यः कस्यापि कर्मज्ञानादेरपरस्याधीना यद्यपि न भवति, व्रजभक्तरूपसाधुकृपामात्राधीनत्वात्, तथापि श्रीप्रभुव्रजभक्तदास्यपूर्वकं **भाव्या** चिन्तनीया । एतादृशी सेवना कदास्मत्प्रभुरस्मत्स्वामिन्योरस्मभ्यं दास्यन्ति, कदा भगवति चक्षूरागः, कदा वा चित्तासंगः, कदा वा 'भगवता सह संलापो दर्शनं मिलितस्य च । आश्लेषः सेवनं चापि स्पर्शश्चापि तथाविधः । अधरामृतपानं च भोगो रोमोद्गमस्तथा । तत्कूजितानां श्रवणमाघ्राणं चापि सर्वतः । तदन्तिकगतिर्नित्य'मित्यादिः संकल्पः, कदा निद्राछेदः, कदा तनुतनुता, कदा विषयनिवृत्तिः, कदा त्रपानाशः, कदोन्मादमूर्छामृतय इत्याद्युक्तप्रकारेण **सदा** देहपातपर्यन्तं **भाव्या**, भावनया मनसि स्थापनीया । अनिदीनतया ज्ञानविषयत्वमापदनीयेति यावत् । यद्वा इयं मानसी सेवा सदा **भाव्या**, प्रेमाद्यभावेपि प्रेमाद्यवस्थाद्यनुकरणकरणेन च चिन्तनीया । तथा च मनसेतादृशभावनापूर्वकं तनुजवित्तजसेवाकरणे 'तं यथा यथोपासते तथैव भवती'ति श्रुते'र्ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति गीतास्थभगवद्वाक्यादेश्च 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी'त्यादिवचनाच्चैतद्देहपातोत्तरमलौकिकदेहप्राप्तौ वा कस्यचित्कस्यचित्तु जन्मान्तरे वा बहुतरभगवत्कृपायामस्मिन् जन्मन्यपि वा 'ता नाविद'न्नित्याद्युक्तप्रकारा फलरूपा सेवना सिद्धा भविष्यतीति भावः । अथवा इयं रसरूपा प्रेमासक्तिव्यसनात्मिका सेवा **सदा** सर्वदा अः भगवान् वश्यो यस्यां सा **भाव्या** ज्ञेया । एतादृशज्ञानेनापि फलसिद्धिरित्यर्थः । तथा चान्यप्रकारकसेवायां न सर्वदा भगवान् वश्यो भवति, न वा तज्ज्ञानमात्रेण च फलसिद्धिरिति भावः । ननु ज्ञानादिमार्गप्रकारापि सेवा प्रभु स्वास्ते करिष्यति प्रभुसेवात्वाविशेषादित्याशंक्याहुः **सर्वमन्यन्मनोभ्रम** इति । अन्यत् सर्वं मनोभ्रमरूपमेव । तथा च भगवन्मायामोहितानामेवायं

सिद्धान्तो यदन्यत्रापि मार्गे प्रभुर्वश्यो भवतीति। अत एवास्मिन्मार्गे मार्गान्तराच्छ्रैष्ठ्यम्। अत एव च 'मुक्तिं ददाति कर्हिचित्स न भक्तियोग'मिति वचनं चेति दिक् ॥६॥

एवं मानससेवाभावनाया माहात्म्यमुक्त्वा पूर्वोक्तसेवाबाधकत्यागस्यावश्यकतामाहुः तदीयैरपि तत्कार्यमिति।

**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत्।**

बालबोधग्रन्थे 'समर्पणादात्मनो हि तदीयत्वं भवेद्ध्रुव'मित्युक्त्वा 'देवं धर्मैर्मनुष्याणा'मित्यादिभगवद्वाक्यात् **पुष्टौ** पुष्टिमार्गे **तदीयैरपि** आत्मसमर्पणं कृतवद्भिरपि **तत्** पूर्वोक्तं बाधकत्रितयत्यागरूपं यत् तत् **कार्यं** कर्तव्यम्, न तु मयात्मसमर्पणं कृतं तदीयं च सर्वं जातमतः परं प्रभुर्यथा ज्ञास्यति तथा करिष्यति मम का चिन्तेति निश्चिन्ततया स्थेयम्। तथा सति भगवति भरदाने पुष्टिमार्गस्य प्रेमात्मकत्वात् प्रेममार्गविरोध आपद्येत। सर्वथा स्वाशक्येर्थे हि भगवति भरदानम्, न तु स्वशक्येपि, स्वशक्येर्थेपि तत्र भरदाने स्वामिन्यादीनां स्वप्राणप्रियस्यायासदर्शनेन महान् खेद उत्पद्येत, तेन तदधीनत्वात्फलस्य तत्फलदाने भगवतो विलम्बस्तत्खेददानजनितः स्वामिनीष्वापद्येतेति। अत एवाग्रे आहुः **पुष्टौ नैव विलम्बयेदि**ति। पुष्टाविति देहलीदीपन्यायेनात्रापि सम्बध्यते। अन्यमार्गस्थस्तु कृतात्मसमर्पणो विक्रीतपश्वादिवत् स्वदेहभरणपोषणादिचिन्तारहितो विलम्बं कुर्यादपि, **पुष्टौ** शुद्धपुष्टिमार्गे तु तन्मार्गस्थो **नैव विलम्बयेन्न** विलम्बं कुर्याद्बाधकत्रयापनोद इत्यर्थः। यद्वा स्वयमेवात्मसमर्पिणा बाधकत्रयापनोदे कृते स्वप्राणप्रियस्यायासादर्शनात् स्वामिन्यादीनां खेदाभावात् तदधीनफलदाने प्रभुर्न विलम्बयेन्न विलम्बं कुर्यादिति वार्थः। अत एव 'मदर्थेर्थपरित्यागो भोगस्य च सुखस्य चे'त्येकादशस्कन्धीयं प्रभुवचनमात्मसमर्पिणो भोगादित्यागमुपदिशति, न तु स्वस्मिन् भरदानेन निश्चिन्ततयावस्थानम्। अन्यथा तासां खेदे सति तनुजवित्तजसेवायाः प्रतिबन्धे जाते सति फलरूपसेवाप्राप्त्याशा दूरापास्ता। तथा च यत्र तनुजवित्तजसेवायामपि बाधकं त्यक्तव्यं जातं तत्र फलरूपसेवासिद्धौ सत्यां भ्रमायासस्फुरणाद्विलम्बं न कुर्यादित्यर्थः। अत्रैतावज्ज्ञेयम्। साधनरूपसेवायां 'प्रतिकूले गृहं त्यजे'दित्युपदेशे भजनप्रतिबन्धकगृहस्यैव त्यागो, न भजनानुकूलगृहस्य। फलरूपसेवायां तु भजनानुकूलस्यापि गृहस्य त्याग इति। एतदथा तथा मत्कृतभक्तिवर्धिनीटीकायां 'तादृशस्यापि सततं गेहस्थानं विनाशक'मितिश्लोके द्रष्टव्यम्।

अथ तनुजवित्तजसेवया प्राप्तमानससेवस्य व्यसने जाते दशावस्थासु महादुःखानुभवादतितापेन कदाचिदतिनिष्ठुरः प्रियो यदेतावत्पर्यन्तमपि न मिलति, मया त्वेतावद्दुःखमनुभूयते तदर्थमित्यादिको दोषारोपो भगवति भगवदीयस्य स्यात् सोपि बाधक एवेत्याहुः गुणक्षोभेपीति।

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

गुणैः रसावस्थारूपैर्निद्राछेदादिभिर्मनःक्षोभेपि प्रियदोषारोपेपि एतदेव भगवदप्राप्तौ प्रतिबन्धकत्वमेव द्रष्टव्यं दोषारोपस्य । तथा च तादृशावस्थायामपि प्रिये दोषारोपो न कर्तव्यः । यतः प्रियस्य निर्दोषपूर्णगुणत्वात्तत्र दोषारोपे स्वामिन्यादीनां रोपे फलप्राप्ति-विलम्बः स्यात् । किन्तु धन्योहं यत्प्रियार्थमेतादृशावस्थामनुभवामीतिगुणारोप एव कर्तव्य इति भावः । इदं अपानाशावस्थापर्यन्तमेव कर्तव्यत्वेनोपदिश्यते । उन्मादावस्था-प्रादुर्भावे तु देहानुसन्धानाभावाच्च तत्र दोषो दोषारोपेपीति ज्ञेयम् । अत एवोद्धवद्वारा व्रजसीमन्तिनीनां ज्ञानोपदेशो दोषाभावार्थमेव कृतः प्रभुणा ॥ ७ ॥

नन्विदं सर्वं प्राकृततुल्यमेवेति किमेतादृशावस्थाप्राप्त्याप्युत्कर्ष इत्याशंक्याहुः ।

**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

अत्र **या काचित् कुसृष्टिरुत्पद्येत सा भ्रमो** ज्ञेयः । यतो 'रसो वै स' इति श्रुते रसरूपो भगवान् सिद्धस्तदा सर्वा अपि रसावस्था भगवद्रूपा एव, रसस्य विभावा-नुभावव्यभिचारिभावसमूहालम्बनरूपत्वादिति सिद्धः सर्वोत्कर्षोस्य मार्गस्यास्य फलस्य चेति सर्वं चतुरस्रम् ॥ ७॥ ॥

अत्र केचिदस्मच्छ्रीमदाचार्यमार्गीया भगवदीया **यादृशी सेवनेति** मूले **सेवायां फलत्रयमिति** तद्विवरणे च पुष्टिमर्यादाप्रवाहभेदभिन्नमार्गसम्बन्धित्रिविध-सेवानां क्रमेण फलत्रययुक्तमिति व्याचक्षते । तच्चिन्त्यम् । एवं सति मूले **यादृशी सेवनेत्यत्र** तद्विवरणे च सेवायामित्यत्र चैकवचनं श्रीमदाचार्यैर्न दत्तं स्यात् । मूले कदाचिच्छन्दोनुरोधेनैकवचनदानेपि विवरणे सेवासु फलत्रयमिति बहुवचनमेवोक्तं स्यात्, विवरणस्य मूलाभिप्रायप्रकटनार्थमेव क्रियमाणत्वात् । अतो मूलविवरणयोरेकवचनदाना-न्यथानुपपत्त्या तत्रत्यैकवचनाभ्यां शुद्धपुष्टिमार्गसेवाफलमात्रनिरूपणमेवात्र श्रीमदाचार्य-चरणानामभिप्रेतं स्वीयमात्रेभ्यो ज्ञापनार्थमिति ज्ञायत इति सारम् । अन्ये त्वेतन्मार्गीया भगवदीया मूलविवरणोक्तैकवचनानुरोधेन शुद्धपुष्टिसेवाफलत्रयमेवात्र श्रीमदाचार्याणाम-भिप्रेतमधिकारभेदेनोत्तमत्वमध्यमत्वसाधारणत्वभेदभिन्नम् । तत्रोत्तमं **फलमलौकिक-सामर्थ्यम्**, तच्च सेवायां क्रियमाणायामेव प्रभुसम्पादितालौकिकशरीरनिष्ठस्वरूपानुभव-सामर्थ्यं प्रमाणाननुरोधिप्रमेयसाध्यम्, यथा रासमण्डलमण्डनायमानानाम्, मध्यमं फलं तु **सायुज्यम्** । तच्च मद युनक्तीति मद्युक्, सेवायां क्रियमाणायामेव भगवता सह सतत-स्थितिः सार्वदिकसंयोगरसानुभव इति यावत् । तथा च भक्तिमार्गीयेण प्रकारेण युगपद-

१ इ.प.१६ 'इति श्रीवल्लभतनुजमदाशितनाथाङ्घ्रिरेणुतन्नवलतः । जयगोपालः कृतवान्' इति प्रथमं लिखितं, इतःपरं पत्रं शोधितम् । अत्र ९१ विषमानदीशमाथः पाठान्तरः, अन्यहस्ता मध्येव लिखितः, मद्रमाधीलिखितांशोः क्रीगार्ता । एतत्प्रयोगं तु सम्मतहर्षेण समस्तटीकरणम् ।

खिलपुण्यपापक्षयद्वारा पाञ्चभौतिकं देहं निवर्त्यालौकिकं दत्वा स्वस्मिन्नेव स्थितिं विधाय ततो निष्कास्य प्रभुकारितस्वलीलानुभवरूपं प्रमाणानुरोधिप्रमेयसाध्यम्, यथा लक्ष्म्या अन्तर्गृहगतगोपिकानां वा । अत्र मध्यमत्वं चास्य फलस्य विप्रयोगरसानुभवाभावाज्ज्ञेयम् । साधारणफलं तु **सेवोपयोगिदेहो वैकुण्ठादिषु** । तत्तु सेवायां क्रियमाणायामेवानुग्रहविशेषाभावात् साक्षात्सेवानुपयोगिभिरन्यैस्तादृशसाक्षाद्रसानुभवकर्तृभिः क्रियमाणायाः **सेवाया उप समीपे योगः** सम्बन्धस्तद्वच्छरीरप्राप्तिस्तद्रूपम्, यथा वृन्दावनस्थपक्ष्यादीनाम् । तस्य चान्तररमणानुकूलत्वात्फलत्वम्, बहिःसाक्षात्सम्बन्धाभावादधिकाररूपत्वं च ज्ञेयमिति वदन्ति । तत्रान्तर्गृहगतानां मध्यमं फलमिति त्वस्मदाचार्यचरणसिद्धान्तविरुद्धम् । तथा हि । यद्यस्मदाचार्याणामेवमेवाभिप्रायः स्यात्तदा कुत्रापि दशमस्कन्धसुबोधिन्यां श्रीमदाचार्यैस्तट्टिप्पण्यां च तत्तनुजवरैः स्फुटीकृतः स्यात् । न 'चान्तर्गृहगताः काश्चि'दित्यस्याभासे 'यासां कालः प्रतिबन्धकः, पूर्वमेव भक्तियुक्तास्ता भजनानन्दमननुभूयैव प्रतिबद्धा एव भगवत्सायुज्यं प्राप्तवत्य इत्याहे'त्यत्रत्यसायुज्यपदेन, पुनरेतस्यैव पदस्य व्याख्यानान्ते 'ततो मुक्ता जाता' इत्यारभ्य 'तमेव परमात्मानं जारबुद्ध्यापि सङ्गता' इति पद्यव्याख्यानान्तप्रयुक्तैर्मुक्तापदैश्च मुख्यफलापेक्षया मुक्तिरूपफलस्यैव प्राप्तिकथनेनायमेवाभिप्रायः स्फुटीकृतः श्रीमदाचार्यचरणैरिति वाच्यम् । अत्रत्यसायुज्यपदमुक्तापदानां परोक्षवादरूपत्वमिति सायुज्यपदस्य भगवत्सहभावपरत्वेन मुक्तापदानां 'जहुर्गुणमयं देह'मित्यत्रोक्तगुणमयदेहत्यागोत्तरप्राप्तगुणातीतसद्यातनिष्ठभगवद्रसानन्दानुभवविशिष्टत्वपरत्वेन च प्रयुक्तत्वात् । न च पूर्वोक्तानां पदानां परोक्षवादत्वे प्रमाणाभावः । 'लक्षणां नैव वक्ष्यामि न न्यूनादन्यपूरणम् । आधिकं तु प्रवक्ष्यामि परोक्षकथनादृत' इति प्रथमस्कन्धीयसुबोधिनीप्रारंभप्रघट्टकपद्यस्थ'परोक्षकथनादृत' इति श्रीमदाचार्यप्रतिज्ञाया एव प्रमाणत्वात् । अस्यार्थः । अहं श्रीभागवते कुत्रापि लक्षणां नैव वक्ष्यामि, न कथयिष्यामि । लक्षणा हि मुख्यार्थबाधे भवति, तत्रात्र प्रतिपाद्यस्य भगवतः सर्वशक्तिमत्त्वेन सर्वभवनसमर्थत्वेन मुख्यार्थबाधाभावात् । 'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि युक्तिभि'रिति गौतमस्मृतिवचनेन पुराणेषु लक्षणावृत्त्याश्रयणस्य निषिद्धत्वाच्च । अथ च न्यूनात्पुराणान्तरकथया न्यूनत्वं प्राप्य भावप्रधानो निर्देशो, ल्यब्लोपे पञ्चमी । यद्वा, न्यूनात्पुराणान्तरकथया न्यूनान्न्यूनं प्रमेयं प्राप्यान्यपूरणमन्येन पुराणान्तरेण पुराणान्तरकथयेति यावत्तेन पूरणं श्रीभागवतस्य भगवदीपान्तरकृतश्रीभागवतव्याख्यान इव न वक्ष्यामि । यदि सा कथैतत्कल्पीया स्यात् तदा व्यासचरणैरेव निबद्धा स्यात्तो न वक्ष्यामीति भावः । केचित्तु न्यूनाच्छन्दादर्थाद्वान्यस्य तस्य पूरणं नेत्यर्थः, अध्याहारं शब्दस्य चार्थस्य वा न करिष्यामीत्याहुः । तत्र 'जन्माद्यस्ये'ति प्रथमस्कन्धीयाद्यश्लोक एव 'धीमहि' इति निर्द्धार्यकारकवाचिनो-

सच्छब्दस्य चाध्याहारदर्शनात् सोक्तिश्चिन्त्या, किन्त्वार्थिकं वाच्यार्थसिद्धमेवार्थं प्रवक्ष्यामि प्रकृष्टत्वेन वक्ष्यामि । अगोप्यत्वादिति भावः । परन्तु परोक्षकथनादृते परोक्षकथनमप्रत्यक्षकथनं वाचकशब्देतरशब्देन कथनं गोप्यकथनमिति यावत् तद्विहायेत्यर्थः । तथा च परोक्षकथनेनानधिकारिभ्यो गोपनार्थं लक्षणां लक्षणावृत्तिविशिष्टशब्दानथ च न्यूनं प्रमेयं प्राप्यान्येन पुराणान्तरेण पूरणं च वक्ष्यामि परन्तु तात्पर्यग्राहकलिङ्गादिसिद्धमेव, न तु तदसिद्धमपीत्येतावदधिकं बोध्यम् । तथैव सुबोधिन्यां दृश्यमानत्वात् । तादृक्कथायाः कल्पान्तरीयत्वात् । एतत्कल्पीयत्वे तु 'गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक् । न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत' 'इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिका' इत्यादिमन्त्रद्रष्टृत्वादिरूपलिङ्गं कुमारिकानामप्रिकुमारत्वे, अथ च 'तमेव परमात्मानं जारबुद्ध्यापि सङ्गता' इत्यत्रत्यजारबुद्धिरूपं लिङ्गमन्तर्गृहगतानां 'जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकं । मयि सम्प्राप्य सर्वेपि कृतकृत्या भविष्यथे'ति बृहद्वामनोक्तभगवद्वरदानविशिष्टश्रुतित्वे च यथोक्तं तथोक्तमेव स्यादतो ज्ञायते तन्नैतत्कल्पीयमिति तादृशपुराणान्तरकथया पूरणं न करिष्यामीति ज्ञेयम् । अथ च परोक्षकथने वाच्यार्थसिद्धमेवार्थं न प्रकृष्टत्वेन वक्ष्यामि किन्तु गोप्यत्वात् प्रकटतया न कथितमीदृशं तात्पर्यवृत्त्या सिद्धमप्यर्थं वक्ष्यामीति भावो ज्ञेयः । एवञ्च फलप्रकरणीयलीलायामतिगोप्यत्वादुपक्रमे फलप्रकरणीयसुबोधिनीस्थसायुज्यमुक्तापदा'न्युक्तं पुरस्ता'दित्यारभ्य 'यत एतद्विमुच्यत' इत्यन्तं मध्ये प्रयुक्तानि मुक्तिमुच्यतइत्यादिपदानि, अथ च रासलीलोपसंहारे च 'ब्रह्मरात्र उपावृत्त' इतिपद्यव्याख्याने 'यतो भगवान् मोक्षदाता ताश्चेदासन्ध्यमन्तःस्मरणं करिष्यन्ति तदा मोक्षाधिकारिण्यो भविष्यन्तीति वासुदेवानुमोदिता' इत्यत्रत्यमोक्षपदं च न लोकप्रसिद्धलयरूपसायुज्यपरत्वेन लयरूपमुक्तिविशिष्टत्वपरत्वेन लयरूपमोक्षपरत्वेन च न प्रयुक्तानि, किन्तु परोक्षवादेन भगवत्सहस्थितिपरत्वेन गुणमयदेहत्यागोत्तरप्राप्तालौकिकदेहनिष्ठभगवद्रसानुभवविशिष्टत्वपरत्वेन विप्रयोगोत्तरप्राप्तभगवद्दर्शनानन्दपरत्वेन च प्रयुक्तानीति ज्ञेयम् । पञ्चाध्यायीव्याख्यानस्थसायुज्यमुक्तामुक्तिमोक्षपदानि परोक्षवादरूपाणीति ज्ञापयितुमेव पञ्चाध्यायीसमाप्तिश्लोकव्याख्यानीयश्रीमदाचार्यतनुजरत्नकृतफलप्रकरणीयसुबोधिनीटिप्पण्यां व्याख्यातं 'दिवा विप्रयोगजार्तौ सत्यां दिनान्ते प्रियसङ्गमे य आनन्दो, न तु सर्वदा दर्शनं इति सोन मोक्षपदेनोच्यत' इति मोक्षपदस्य तादृगानन्दपरत्वमेव । एवञ्च सायुज्यमुक्तामुक्तिमोक्षपदानां परोक्षवादत्वं सिद्धम् । अन्यथा 'न चैवं विस्मय' इति पद्यव्याख्यानं 'एतत्परिदृश्यमानं जगत् सर्वमेव यतो विमुक्तिं यास्यति, भावनया गोकुले स्थित आह, ज्ञानदृष्ट्या वे'त्यत्र विमुक्तिपदस्योपसंहारश्लोकव्याख्याने श्रीमदाचार्यचरणैर्मोक्षपदस्य चोक्तन्यायेन समण्डनमण्डनायमानानां च लोकप्रसिद्धमोक्षप्राप्तिर्विशाख्यायं पञ्चपर्वात्मकं य 'तथैका विधृता मर्त्ये'तिपद्यव्याख्यानसुबोधिन्या 'भवत्यस्या मुक्तिः सिद्धे'त्युक्त्वा-

द्विप्रभार्याया अपि मोक्षप्राप्तिरंगीक्रियताम् । तस्मात् परोक्षवादरूपाण्येवात्र सायुज्यादिपदानीति न लोकप्रसिद्धमोक्षरूपमध्यमफलप्राप्तिरन्तर्गृहगतानामिति बोध्यम् ।

ननु मुक्तिवाचकपदैरेवात्रपरोक्षवादकरणे किं बीजमिति चेत्? श्रीभागवतमेव बीजमिति गृहाण । तथाहि । 'न चैवं विस्मयः कार्यो भवता भगवत्यज' इतिपद्येऽग्रे 'यत एतद्विमुच्यत' इतिपदमुच्यते, तेन च सर्वस्यापि गोकुलस्य मुक्तिः प्रतिपाद्यते, न हि भवतापि सर्वस्य गोकुलस्य मुक्तिरंगीक्रियते लोकप्रसिद्धा । एवं च विमुच्यतइतिपदं परोक्षवादरूपमेव । तथा सति श्रीव्यासचरणैरत्र प्रकरणे मुक्तिवाचकपदेनैव परोक्षवादः कृत इति श्रीमदाचार्यैरपि मुक्तिवाचकपदैरेव परोक्षवादः कृत इति सुष्ठूक्तं श्रीभागवतमेव बीजमिति । ननु न वयमेवंरूपं मध्यमं फलं तासां वदामः, किन्तु प्रकारान्तरेण मध्यमफलं वदामः । तत्तु भक्तिमार्गीयेण प्रकारेण युगपदखिलपापपुण्यक्षयद्वारा पाञ्चभौतिकं देहं निवर्त्य तदनन्तरं चालौकिकदेहं दत्वा स्वस्मिन्नेव स्थितिं विधाय ततो निष्कास्य प्रभुः संयोगरसलीलानुभवमेव कारयति, न तु विप्रयोगरसलीलानुभवम्, एवं च रसरूपभगवत एकदलानुभवरूपं फलं मध्यममेव, द्वितीयदलानुभवाभावात् । मुख्यानां तु दलद्वयानुभवस्यापि जायमानत्वान्मुख्यं फलमिति चेत्, अत्र पृच्छामः । अलौकिकदेहप्राप्त्यनन्तरं भगवत्कृता स्वस्मिन् स्थितिस्तासां केन रूपेण, सार्वदिकलयरूपेण वा, रसव्यभिचारिभावलयरूपेण वा, 'सायुज्ये तु रसाधिक्यं भेदेनानुभवात् तत' इति श्रीमदाचार्यसिद्धान्तितभेदविशिष्टसायुज्यरूपेण वा, सर्वदा कण्ठलग्नत्वेन वा, 'चैतन्यस्य तत्त्वममलं मणिमस्य कण्ठे, कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यज' इत्यत्रोक्तानां स्वाङ्गीकृतात्मनां तत्त्वरूपकण्ठस्थितकौस्तुभे लयरूपेण वा, लक्ष्मीवद्वक्षःस्थलस्थितिरूपेण वा, शिवोमावदर्धनारीश्वररूपेण वा, पूतनास्तनपानसमानीतभगवदुदरस्थितपूतनाभक्षिताग्निकुमाररूपकुमारीपुंस्त्वधर्मरूपबालकवद्वा । तत्र नाद्यः । पुरुषोत्तमे सार्वदिकलयरूपेण स्थितिस्तु केवलजीवात्मनामेव, सा त्वेतासामसम्भावितैवालौकिकदेहप्राप्तिप्रविष्टत्वात्, न हि शरीरविशिष्टानां लयः कुत्रापि वेदादौ श्रुतोऽस्ति । पुरुषोत्तमे लयस्य पुरुषोत्तमविषयकमर्यादाभक्तिफलत्वाच्च । भवद्भिस्त्वेतासां शुद्धपुष्टिमार्गीयमध्यमफलविशिष्टत्वं सिद्धान्तितमस्ति । न द्वितीयः । एतादृशलयस्यास्माभिरप्यत्राङ्गीक्रियमाणत्वात् । न च तर्हि मध्यमफलप्रसक्तिः । एतादृशलयस्य रासमण्डलमण्डनायमानास्वप्यसावहमित्यादौ दृष्टत्वेन तत्समकक्षत्वान्मध्यमफलत्वाभावात् । न तृतीयः । तादृशसायुज्यस्य मर्यादापुष्टिफलत्वात् । न चतुर्थः । सर्वदा कण्ठलग्नत्वेन स्थितेः रसाभासरूपत्वात् । न पञ्चमः । देहविशिष्टत्वेन तत्रापि लयासंभवात् । न षष्ठसप्तमौ । तत्र प्रमाणाभावात् । शिवोमयोरर्धनारीश्वररूपेण स्थितौ च निखिलपुराणेतिहासादीनां प्रमाणत्वात्तु तथात्र प्रमाणमस्ति । न चार्धनारीश्वरवदेतासां स्थितौ 'त्वर्धं शोणयथार्धमम्बुदनिभं यद्वं ललाटे स्रजा अर्धं-

कल्पतया विलाससदनं स्त्रीपुंमयं वाङ्मयम् । हस्तैर्वेणुवराभयानि दधतं लावण्यवारांनिधिम् । ध्यायामि सितशोभितास्यकमलं गोपालचूडामणि'मितिसुन्दरीगोपालमन्त्रसम्बन्धिध्यानप्रतिपादकागम एव प्रमाणमिति वाच्यम् । 'अर्धो वा एष आत्मनो यत्पत्नी'ति श्रुतौ यज्ञसम्बन्धयुक्तायाः स्वविवाहिताया एवार्धत्वमुक्तमिति लक्ष्म्या एवार्धनारीत्वेन स्थितिरागमेन प्रतिपाद्यते न त्वेतासाम्, स्वविवाहितत्वाभावेन पत्नीत्वाभावादित्यस्या अपि भवदुक्तेरनवकाशात् । नाप्यग्रिमः । तेषामपि केवलजीवरूपाणामेव स्वोदरे पूतनया समानयनम्, न तु बालकदेहसहितानाम्, तदनन्तरं भगवतापि तदसुपानद्वारा तादृशानामेव स्वोदरे समानयनम्, पश्चाद्व्यस्यैरागतस्तत्रेत्यत्र व्रतचर्याप्रसङ्गे त्वलौकिकदेहं दत्वा तल्लीलाप्रदर्शनं कारितवानिति निश्चयस्य दृढतरत्वेनास्यापि दृष्टान्तत्वाभावात् । शरीरविशिष्टानामेव तेषां स्वोदरानयनमित्यस्य कण्ठरवेणाश्रूयमाणत्वात्, प्रत्युत षष्ठदशमस्कन्धीयाध्यायसुबोधिन्यां 'तया स्वसिन्नानीता ये बालकानां जीवास्ते स्वजीवमर्मस्थाने स्थापिताः सन्तीति तान् स्वसिन्नेतुं भगवांस्तन्निष्पीडनमेव कृतवानित्यभिप्रेतोर्थ' इत्यनेन केवलजीवानामेवानयनस्य श्रीमदाचार्यैरुक्तत्वाच्च । न च लालनमृद्भक्षणलीलाप्रदर्शितस्वमुखस्थसर्वभ्रजे भगवति देहसहितानामपि स्थितिरस्त्येव, एवं चालौकिकदेहसहितानामप्येतासां स्थितिर्नासम्भावितेति वाच्यम् । स्वमुखारविन्दप्रदर्शितसर्वव्रजे रासमण्डलमण्डनायमानानामपि स्थितत्वात् तासामपि मध्यमफलप्राप्तेर्वक्तुं शक्यत्वादिति न किञ्चिदेतत् । अथ यद्यपि भगवतोऽचिन्त्यशक्तित्वात् केनापि प्रकारेणैतासां भगवति स्थितिः सम्भवेदपि, तथापि यद्येतासां मध्यमफलं स्यात् तदाऽचिन्त्यशक्तिमत्त्वपर्यन्तं धावना समञ्जसा स्यात्, तदेव तु खपुष्पायमाणम्, यत एतासां सगुणदेहत्यागोत्तरं निर्गुणदेहप्राप्त्यनन्तरं तु सर्वभावप्रपत्तिरूपसाधनस्य सर्वभावप्रपत्तिलभ्यस्यैव च फलस्य प्राप्तिः श्रीमदाचार्यैः सिद्धान्तितास्ति । तथाहि 'कृष्णं विदुः परं कान्त'मितिपद्यश्लोकीसुबोधिन्यां प्रथमव्याख्यानाभिप्रायविशदीकारकद्वितीयव्याख्याने 'उक्तं पुरस्ता'दितिपद्यव्याख्यायां 'यथा भगवति गुणातीत एव परिनिष्ठबुद्धित्वेपि द्वेषस्य तत्र प्रयोजकत्वात् सगुणत्वमेवेति लक्ष्यते, अयं च रसः सर्वभावप्रपत्तिलभ्यः । नहि जारत्वबुद्धौ सर्वभावप्रपत्तिः । कामपूर्वकत्वेनैव तत्सम्भवात्, अत्र च सगुणत्वस्य प्रतिबन्धकत्वाद्यथा चैद्यादीनां स्वाधिकारानुसारेण तादृशशरीरनाशे तत्पदप्राप्तिः स्वाधिकारानुसारेण, तथैतासामपि स्वाधिकारानुसारेण तयात्वं सगुणत्वोपरमेण सर्वभावप्रपत्त्यैव, ततो निजपतिभजनमिति सर्वमवदातम्, अन्यथा 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति मर्यादा भज्येते'त्युक्तया, अथ च ननु तथापि तादृक्प्रपत्तेरेव मूलत्वात् कथं सर्वभावप्रपत्तिसाध्यं फलं भविष्यतीत्याशङ्क्य दृशा 'दिपत्नी'त्यादिपत्नीकथ्याख्याने 'मोक्षमुखानर्भाप्युन्दिरुद्धद्वेषकर्तां च चैद्यभर्गे यथा ज्ञानिनामपि दुर्लभां मुक्तिं दत्तवानेवं तादृक्प्रपत्तिमूलानामप्येतासां तादृशं

फलं दत्त्वा'नित्युक्त्या, तदनु किञ्चाग्रे 'यदि सर्वभावप्रपत्तिलभ्यफलमेव दित्सितं भगवतस्तदा पूर्वमेव स एव भावः किमिति नोत्पादित इति चे'दिति पूर्वपक्षीकृत्य 'अत्र वदामो, यासां साक्षाद्भगवत्सम्बन्धस्तासां सर्वासामेव रासमण्डलमण्डनायमानानां शरीरमपि गुणातीतमेवेति ज्ञापयितुं भगवानेव कतिपयगोपीः सगुणदेहाः स्थापयित्वा पूर्वोक्तानां भावोपि निर्गुण इति ज्ञापयितुमासां सगुणभावमुत्पाद्यैतन्निवर्तकोपि स्वयमेव नान्य इति ज्ञापयितुं तन्निवृत्तिं विधायाग्रे भाविस्वविरहजदुःखस्वसङ्गमजसुखयोः कर्माजन्यत्वमपि ज्ञापयितुं कर्मक्षयप्रकारेण स्वप्राप्तिं विधाय मत्स्वाम्येव सर्वं कृतवा'नित्युक्त्या च सर्वभावप्रपत्तिरूपं साधनं सर्वभावप्रपत्तिलभ्यमेव च फलमेतासामिति दृढीकृतं श्रीमदाचार्यचरणैरिति तद्विरुद्धा भवद्व्याख्यानपद्धतिर्नादरपदवीमारोहति। तस्मान्नान्तर्गृहगतानां सर्वदा संयोगरसानुभवमात्ररूपं मध्यमं फलम्, किन्तु पूर्णसंयोगविप्रयोगरसात्मकमुत्तमफलमेव। उचितं चैवमेव यत्सर्वभावप्रपत्तिर्नाम सर्वांशेन प्रपत्तिः, तस्यां सत्यां सर्वांशेनैव प्रभुणा फलदानं कर्तव्यम्, न तु केनाप्यंशेन न्यूनफलदानं सम्भवति, 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मितिमर्यादा यतोस्तीति दिक्।

अपरञ्च। 'या मया क्रीडता रात्र्यां वनेस्मिन् व्रज आस्थिताः। अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तये'तिभ्रमरगीतस्थपद्यव्याख्याने 'भवत्यः समागता अन्तर्गृहगतास्तु गृह एव स्थितास्तदैव सर्वप्रकारेण मां प्राप्तवत्यो न तु भवत्योनेनैव निदर्शनेन भवतीभिरप्यहं प्राप्तव्य' इति श्रीमदाचार्यैरुक्तम्। तत्र सर्वप्रकारेण भगवत्प्राप्तिरन्तर्गृहगतानां न तु केनाप्यंशेन न्यूनप्रकारेणेत्युक्तत्वात् सार्वदिकसंयोगरसमात्रानुभव एवैतासामिति भवदुक्तिः कथं सङ्गच्छताम्। भगवतो रसरूपत्वाद्रसस्य द्विदलत्वाद्धस्मन्मते विप्रयोगप्रकारेण प्राप्त्यभावादिति कृतं पल्लवितेन। अत्र तदैवेतिपदमेव न तु भवत्य इत्यत्रापि सम्बध्यते। तथा च तदैव तत्क्षण एव तासां मत्प्राप्तिः सर्वप्रकारेण जाता। भवतीनां तु तत्क्षण एव न जाता क्रमेणैव मद्विषयकदोषारोपरूपदोषनिवृत्तौ सत्यां भविष्यति, तासां तु मयि दोषारोपो नासीदिति निर्दोषत्वात्तदैव जाता। अन्यथा तदैवेति पदस्यात्रानुषङ्गाभावे तासां सर्वप्रकारेण मत्प्राप्तिर्भवतीनां सर्वप्रकारेण न जातेत्येवमर्थे सम्पन्नेन्तर्गृहगतानामेव रासमण्डलमण्डनायमानाभ्योधिकत्वमापद्येत। तदैवेतिपदस्य त्वत्रानुषङ्गे तासां तदैव जाता, भवतीनां तु दोषनिवृत्तौ क्रमेण भविष्यतीति न न्यूनता फले प्राप्नोतीति ज्ञेयम्। ननु साधारणानामपि भक्तानां दोषान् भगवान्न गणयति, रासमण्डलमण्डनायमाना'स्त्वेताः परं तनुभृतो ननु गोपवध्वः', 'आसामहो चरणरेणुजुषामहं स्याम्,' 'वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः' इत्यादिप्रकारेण श्रीमदुद्धवेः स्तुतानां प्रणतपादरेणूनामथ च तद्दोषस्य विप्रयोगरसावस्थारूपत्वेन निर्दोषाणां च तादृशं भावं दोषत्वेन किमर्थं भगवानगणयदिति चेत्। अत्र वदामः। केषाञ्चिदतिकृपाविषयाणां

जीवानां शुद्धपुष्टिमार्गफलं दित्सुर्भगवान् प्रपञ्चे लीलासहित आविर्भवति । अन्यथा सर्वभावप्रपत्तिरूपसाधनस्य सर्वभावप्रपत्तिलभ्यफलस्य चाज्ञायमानत्वात् कथमेतन्मार्गप्रवृत्तिहेतुभूतफलज्ञानं स्यात्, कथं वा एतन्मार्गीयं साधनं च ज्ञातं स्यात् । तत्रैतन्मार्गीयं फलं तु व्रजभक्तसजातीयभावेन भजने भवतीति तद्भावानुसारेण भजने क्रियमाणे भगवत्ताज्ञानेपि तासां दोपारोपो न बाधको जातः, एवं ममापि न भविष्यतीति कदाचिच्छीघ्रं भगवता फलादाने तनुजवित्तजसेवाकरणसमय एव भगवति दोपारोपं कुर्याद्यन्मया त्वेतावद्दुःखमनुभूयते सेवाकरणे, भगवांस्त्वतिनिष्ठुर एतावत्पर्यन्तमपि प्रेमासक्त्यादिकं नाविर्भावयति येन फलं स्यात्तदा भगवतो निर्दोषपूर्णगुणत्वेन तत्र दोपारोपे तस्य फलप्राप्तौ विलम्बः स्यादतो भगवति कस्यामप्यवस्थायां दोपारोपो न कर्तव्य इति ज्ञापयितुं यथान्तर्गृहगतानां जारभावोत्पादनेन रासमण्डलमण्डनायमानानामपि शरीरादि निर्गुणमिति ज्ञापयितुं तासां जारभावमुत्पादितवानेवमेव रासमण्डलमण्डनायमानानामपि तादृशरसावस्थारूपमपि दोपारोपरूपं भावं दोषत्वेनाख्यापयच्छ्रीमदुद्धवमुखेनेति सर्वं सुस्थम् । तस्मादन्तर्गृहगतानामपि मुख्यमेव फलमिति सिद्धम् । अन्यच्च 'जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकं मयि सम्प्राप्य सर्वेपि कृतकृत्या भविष्यथे'ति श्रुतीः प्रति भगवदुक्तेस्तद्भावज्ञापकजारबुद्ध्यापि सङ्गता इति फलप्रकरणीयवचनस्थजारबुद्धिसङ्गतत्वोक्त्या च श्रुतिरूपा एता अन्तर्गृहगता इति ज्ञायते । एवं च श्रुतिकृतस्तुतिसन्तुष्टप्रकृत्यतीताक्षरमध्यस्थेन श्रीवृन्दावनगोवर्धनयमुनानानारासरसोन्मत्तगोपीकदम्बकविशिष्टेन किशोराकृतिना भगवता किं करवाणीत्युक्ते 'कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् । यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षा जनिता तथे'त्यादिना श्रुतिभिः स्वस्य कामिनीभावपूर्वकः स्मरक्षोभ उक्तस्तत्र मा कदाचिद्भगवानेवं जानातु यदेतासां लौकिककामाभिलाप इति शङ्कां वारयितुं यथा त्वल्लोकवासिन्यो गोपिकाः कामतत्त्वेन कामस्य तत्त्वं परमकाष्ठापन्नं रूपमाधिदैविकमिति यावत् तादृशकामाधिदैविकेन रूपेण रमणं रमणकर्तारं मत्वा त्वां भजन्ति तथा भजनेस्माकं चिकीर्षा जनितोत्पादिता त्वद्रूपदर्शनेनेति श्रुतिभिः प्रार्थितम् । तत्र भगवल्लोकस्थनित्यसिद्धगोपिकाभावसजातीयभावेन भजनचिकीर्षैतासाम् । तत्र भगवल्लोकस्थनित्यसिद्धगोपिकानां न भगवति जारभावः किन्तु सर्वभावप्रपत्तिरूपो भावः । एवं च यद्येतासां मध्यमं फलं भगवान् दद्यात् तदा 'ये यथा मा'मिति मर्यादा भज्येत । तस्मादपि न तासां मध्यमं फलं किन्तूत्तममेव । अग्रेपि 'दुर्लभो दुर्घटश्चैष युष्माकं सुमनोरथः । मयानुमोदितः सम्यक् सत्यो भवितुमर्हती'त्यत्र मनोरथस्य दुर्लभत्वं दुर्घटत्वं चोक्तम्, सुमनोरथ इत्यनेन मनोरथस्य शुभत्वं चोक्तम् । यदि जारभावेन भजन एव मनोरथः स्यात् तदा दुर्लभत्वं दुर्घटत्वं च नोक्तं स्यात् । कदाचित् तदानीं श्रुतीनां विवाहितपतेरभावात् स्वस्मिन्

जारभावो दुर्घटोत एव दुर्लभश्चेति दुर्लभत्वदुर्घटत्वोक्तिः सङ्गच्छेतापि, परन्तु सुमनोरथ इत्यत्र मनोरथे सुष्ठुत्वं तु न सङ्गच्छेत, जारभावेन भजनमनोरथस्य दुष्टत्वेन सुष्ठुत्वाभावात् । तस्मात् सुमनोरथपदेन सर्वभावप्रपत्तिपूर्वकभगवल्लोकवास्तव्यगोपिकाभावसजातीयभावमनोरथ एवोक्तोऽनेति निश्चितम् । अत एवाग्रे मयानुमोदित इत्यनेन पूर्वं मल्लोकवासिगोपीभिर्मोदितो अनु पश्चान्मया मोदितो अत एव सम्यक् समीचीनः सत्यो भवितुं योग्यो भवति । मभैतदधीनत्वादेतासां मोदनं विना न सत्यो भवितुं योग्यः स्यादिति भावः । अन्यथा तासां मोदनं नापेक्ष्येत, निकृष्टमनोरथस्य सत्त्वात् । एतदग्रे तु 'आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ । पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले, जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् । मयि सम्प्राप्य सर्वेपि कृतकृत्या भविष्यथे'त्यनेन प्रघट्टकेनैताभिरप्रार्थितः किञ्चित्कार्यार्थं जारभावो भगवतैव दत्त इति प्रतीयते स्फुटमेव । तत्रायं भगवदभिप्रायः । मया त्वागामिविरिञ्चिदिनरूपसारस्वतकल्पे पृथिवीस्थभारतक्षेत्रस्थमाथुरमण्डलान्तर्गतवृन्दावने सर्वभावप्रपत्तिस्तत्फलं च प्रकटनीयं जीवविशेषोद्धारार्थम् । तत्र सर्वभावप्रपत्तिर्निर्गुणा, तद्भाववतां देहादिकं च निर्गुणम्, तादृशीनां भगवत्सङ्गमविरहजन्यं सुखं दुःखं च निर्गुणमिति ज्ञापनीयम्, अन्यथा रासमण्डलमण्डनायमानानां भावादिषु सगुणत्वबुद्ध्या सर्वेषां प्रवृत्तिर्न स्यात्, तथा च मदवतारोपि व्यर्थः स्यादत एता एव श्रुतीस्तस्मिन्कल्पे अवतारयित्वैतासां भावादिकं च सगुणं विधाय सगुणभावः सगुणदेहः सुखदुःखादिकं च कर्मजन्यमिति ज्ञापनीयम् । एवं सत्येतासां तद्भाववतदेहादिनाशे लौकिकभिन्नशरीरप्राप्तौ सर्वभावप्रपत्तिरूपं साधनं तल्लभ्यं फलं भविष्यति, मुख्यानां भावादेर्निर्गुणत्वं च ज्ञापितं भविष्यतीत्युभयमपि कार्यं सेत्स्यति । अन्यथा तज्ज्ञापनार्थं प्रयत्नान्तरकरणमापद्येतेति जारभावो भगवतैव दत्तो, न तु तासां जारभावप्रपत्तिः साहजिकीति बोध्यम् । एवं च बृहद्वामनपुराणीयकथाविचारेणापि नैतासां मध्यमफलमायाति किन्तूत्तमफलप्राप्तिरेवेति कृतमधिकतराभिनिवेशेन । अत एव सुबोधिन्यामुक्तं पुरस्तादित्यस्य द्वितीयव्याख्याने श्रीमदाचार्यैरुक्तं 'यासां साक्षाद्भगवत्सम्बन्धस्तासां सर्वासामेव रासमण्डलमण्डनायमानानां शरीरमपि गुणातीतमेवेति ज्ञापयितु भगवानेव कतिपयगोपीः सगुणदेहाः स्थापयित्वा पूर्वोक्तानां भावोपि निर्गुण इति ज्ञापयितुमासां सगुणभावमुत्पाद्य तन्निवर्तकोपि स्वयमेव नान्य इति ज्ञापयितुं तन्निवृत्तिं विधायाग्रे भाविस्वविरहजदुःखस्वसङ्गमसुखयोः कर्मजन्यत्वमपि ज्ञापयितु कर्मक्षयप्रकारेण स्वप्राप्तिं विधाय मत्स्वाम्येव सर्वं कृतवानिति निगर्वः । अत्र पुष्टिमार्गाङ्गिकारान्मर्यादामार्गीया अनुपपत्त्योनवसरपराहता इति सर्वमनवद्य'मिति । न च तासां यदा सगुणदेहनाशस्तदैव भगवति सर्वजीवतत्त्वरूपभगवत्कौस्तुभे वा 'मणिधरः क्वचिदागणयन्गा' इत्यत्रोक्तगोपि-

(अत्र एकं पत्रं त्रुटितमिति प्रतिभाति)——एतासामन्तर्गृहगतानां रासानुभवोत्तरं भवन्मते कुत्र स्थितिर्भवतोच्यते, यस्मिन्भवे तूक्तस्थानान्यतमस्थाने लयाद्भगवता सह व्रज एव समागमनम्, पुना रासलीलासमये भगवता सह तत्र गमनम्, तदा त्वलौकिकदेहप्राप्त्या रमणम्, पुनरपि तत्रैव लय इति चेत्, अत्र ब्रूमः । यावद्व्रजीयैरलक्षितत्वेन केवलप्रपञ्चमात्राविर्भावितलीलादर्शनाभावविशिष्टत्वेन चास्मिन्नेव व्रजेन्तर्गृहगतानां स्थितिः । न च विशेषणद्वयविशिष्टत्वेनास्मिन्नेव व्रजे तासां स्थितौ किं मानमिति वाच्यम् । 'या मया क्रीडता रात्र्या'मिति भ्रमरगीतपद्यसुबोधिनीस्थश्रीमदाचार्यकृतव्याख्यानस्यैव प्रमाणत्वात् । तथा हि, यदि व्रजीयैरन्तर्गृहगतानां सगुणदेहत्यागोत्तरप्राप्तनिर्गुणदेहसम्बन्धिनी लीला दृश्येत तदा रासमण्डलमण्डनायमानाः प्रति स्वन्तर्गृहगताविषयकस्वकृतक्रीडाव्रजस्थितिकथनपूर्वकं किमिति स्वप्राप्तिसाधनं बोधयेत्, स्वप्राप्तिसाधनमात्रमेव तु बोधयेत्, स्वकृतक्रीडाव्रजस्थित्योस्तु ताभिर्दृश्यमानत्वादतो नैतासां तल्लीलादर्शनमिति भगवतासां स्वक्रीडाव्रजस्थिती अपि बोध्येते इति यावद्व्रजीयैरलक्षितत्वं सिद्धम् । अथ च भवत्यः समागताः अन्तर्गृहगता गृह एव स्थितास्तास्तदैव सर्वप्रकारेण मां प्राप्तवत्यो न तु भवत्यः। अनेनैव निदर्शनेन भवतीभिरप्यहं प्राप्तव्यस्तस्मान्मदर्थं जीवनस्थापनमिति पक्षो निरर्थकः । अन्यथा समागतानां भवतीनां पुनः क्लेशो न भवेदनुभवसिद्धश्च क्लेशः । ननु ताः प्रतिबन्धेन तथाभूताः कथं स्तुत्या इत्याशंक्याह कल्याण्य इति । तासां महद्भाग्यमस्तीलवस्यप्रतिबन्धरूपं दुरितं दृष्ट एवोपक्षीणमिति कण्टकेन कण्टकोद्धारवद् देहनिराकरण एवोपक्षीणम्, भवतीनां तु तद्दुरितमिमामवस्थां प्रापितवत्, अतो मदुक्तप्रकारेण दोषं परित्यज्य तामवस्थां प्राप्य मां प्राप्स्यथेति भाव इति श्रीमदाचार्यव्याख्यानपर्यालोचनेन्तर्गृहगतानां नाक्रूरागमनरूपमथुरोद्देश्यकभगवन्नयनरूपप्रपञ्चमात्राविर्भावितलीलादर्शनमस्ति । यदि तद्दर्शनं स्यात् तदा भवतीनां तु तद्दुरितमिमामवस्थां प्रापितवत्, तास्तु महाभाग्यवत्यस्तासामवश्यप्रतिबन्धरूपं दुरितं सगुणदेहनिवृत्तावेवोपक्षीणमतस्ता इमामवस्थां न प्रापितवदिति भगवान्न कथयेदेव । अक्रूरागमनभगवन्नयनदर्शनजक्लेशस्यैतासामप्यवश्यसिद्धत्वात् । तस्मादन्तर्गृहगतानां न प्रपञ्चमात्राविर्भूतलीलादर्शनमित्यपि सिद्धम् । उचितं चैवमेव यतः श्रुतिरूपाभिरन्तर्गृहगताभि'र्यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षा जनिता तथे'त्यनेन प्रकृत्यतीताक्षरब्रह्मस्थव्यापिवैकुण्ठान्तर्गतव्रजान्तस्प्रपञ्चानन्तर्गतवृन्दावने तत्रस्थनानारासरसोन्मत्तगोपीकदम्बकभावसजातीयभावेन भगवता सह रमणं प्रार्थितम्, तद्यदि तासां प्रापञ्चिकपदार्थदर्शनं स्यात्, तदा प्रपञ्चानन्तर्गतवृन्दावने तादृशभावेन भगवता सह रमणं न प्राप्तमेव स्यात्, एवं च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति मर्यादाभंगः स्यादिति न तासां प्रपञ्चमात्राविर्भूतलीलादर्शनमिति साधीयसी पूर्वोक्तोक्तिः । एवमेवास्मिन्नेव व्रजे ता आस्थिता इति

भवतीनामपि निर्बन्धेनैवात्र स्थापनमित्यनेनास्मिन् व्रज आस्थिता इत्यस्य व्याख्यानेनास्मिन्नेव व्रजे स्थितत्वमपि सिद्धम् । इदमेवाभिप्रेत्य पूर्वमेवोक्तं यज्ञपत्नीप्रसंगे विंशाध्याये, 'तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् । हृदोपगुह्य विजहौ देहं कर्मानुबन्धन'-मितिपद्यव्याख्यानसुबोधिन्यां भगवत्सङ्गतायाः स्थानान्तरं न मृग्यम्, तच्छक्तीनामिव । अत्र यत्र भगवांस्तत्र तच्छक्तयः श्र्यादयो गोप्यादयो वेत्यर्थो ज्ञेयः । एवं चात्र भगवान् व्रजे तिष्ठतीति ता अपि व्रजे एव चेति व्रजे स्थितत्वमायात्येवेति दिक् । एवं च सिद्धा विशेषणद्वयविशिष्टत्वेनास्मिन्नेव व्रजे स्थितिरन्तर्गृहगतानाम् । तथा च गोपसाहित्येन गोचारणलीलार्थं भगवतो गमने रासलीलानन्तरं भगवतो गृहगमने च दिवा विप्रयोगरसानुभवः, सायसमये परावृत्य भगवदागमने रात्रौ च वृन्दावन एव महानन्दसन्दोहानुभवश्चैतासामपीति संयोगरसमात्रानुभव एवैतासामिति कथं वक्तुं शक्यत इति कृतं विस्तरेणेति सर्वं चतुरस्रम् ।

स्यादेतत् । वयमन्तर्गृहगतानां यन्मध्यमं फलं वदामो न तूत्तमफलम्, तत्र यतोन्तर्हिते भगवतीति फलप्रकरणीयद्वितीयाध्यायस्यारम्भपद्यव्याख्यानसुबोधिन्यां सन्ति च सिंहास्त्वत्र काल इति श्रीमदाचार्यैरुक्तम् । व्याख्यातं चैतत् तत्तनुजरत्नैः स्वकृततट्टिप्पण्यामवतारसम्पूर्तिकाल इत्यर्थ इति, तत्रापूर्णविप्रयोगसंयोगात्मकः पूर्वावतारः समाप्त इदानीं पूर्णविप्रयोगात्मकपूर्णसंयोगात्मकपुरुषोत्तमावतारो जात इत्युच्यते, तत्रान्तर्हिते भगवतीत्यनेन पूर्णविप्रयोगात्मकस्तदनन्तरं 'तासामाविरभू'दित्यनेनैकोनत्रिंशाध्याये पूर्णसंयोगात्मकपुरुषोत्तमावतार उक्तः । एवं च पूर्वस्वरूपाद्भिन्नमेवेदं भगवत्स्वरूपं परमकाष्ठापन्नम्, एतत्तु अन्तर्गृहगताः प्रति न प्रकटमेव, अतस्तासां नैतादृशभगवत्स्वरूपप्राप्तिः, किन्तु न्यूनसंयोगविप्रयोगरसात्मकत्वेनासम्पूर्णत्वात् तादृशभगवत्स्वरूपप्राप्तिरेवेति न सम्पूर्णफलप्राप्तिरिति तासां मध्यमफलप्राप्तिरित्युच्यते । न चेद् स्वरूपं पूर्वं न प्रकटमिदानीमेवाविर्भूतमित्यत्र किं प्रमाणमिति वाच्यम्, 'गायन्त्य उच्चै'रितिपद्यव्याख्यानसुबोधिनीस्थशब्दो हि धूमवल्लोक इति श्रीमदाचार्यतत्तनुजरत्नकृतश्रीमदाचार्यकारिकाटिप्पण्यां 'अनेदमाकृतम्, एतावत्कालपर्यन्तं भगवता स्वरूपानन्दो न प्रकटितः । तस्य स्वरूपात्मकत्वेन तत्प्राकट्यं विना तदनुभवासम्भवात्, 'तथा परमहंसाना'मिति वाक्याद्याद्दशेन भक्तियोगेन तत्प्राप्तिस्तादृक् तत्प्रकटनायाधुनैव पुरुषोत्तमावतारादित्यादितत्तनुजरत्नप्रतिपादनान्तर्गतैतावत्कालाधुनापदवाच्यान्तर्धानकालतदधिकरणकपुरुषोत्तमावतारोक्तेरेव प्रमाणत्वादिति चेत्, अत्र वदामः । आगामिविरिञ्चिसृष्टयुगतविरिञ्चिदिनरूपसारस्वतकल्पे भवन्तो व्रजे गोप्यो भविष्यथ तत्र पृथिवीस्थभारतक्षेत्रान्तर्गतमाथुरमण्डलान्तर्गतवृन्दावनेह भवतां श्रेयान्रासमण्डले भविष्यामीति प्रकृत्यतीताक्षरब्रह्मान्तःस्थानन्दमयव्यापिवैकुण्ठलोकस्थशुद्धपुष्टिस्थानरूपश्रीमद्गोवर्धनयमुनासहितनानारासरसोन्मत्तगोपीकदम्बकविशिष्टकेवल-

शृंगाररसानन्दमयेन सारस्वतकल्पानुसारिश्रीभागवतीयकृष्णस्तु भगवान् स्वयमितिवचनसिद्धपरमकाष्ठापन्नत्वेन भगवता वेदान् प्रति वरो दत्तः । एवं च ब्रह्मकल्पादारभ्य सारस्वतकल्पपर्यन्तं न पूर्णपुरुषोत्तमावतारो जातः, सारस्वतकल्प एव च जात इति सिद्धम् । एवं चेदं प्रघट्टकमेव मनसिकृत्यैतावत्कालाधुनापदे उक्ते । तथा चैतावत्कालपर्यन्तपदस्य ब्रह्मकल्पादारभ्य सारस्वतकल्पपर्यन्तमित्यर्थोऽधुनापदस्य च सारस्वतकल्पे इत्यर्थः सम्पन्नः । तथा च बाल्यमारभ्य कृता लीला सर्वापि रसालतामापद्यते । भवदुक्तप्रकारे त्वेतदवतारपूर्वसामयिकी सर्वापि लीला स्वरूपान्तरसहभावेन कृतत्वाद्रसाभासतामाविष्करोति । किञ्च । रासमण्डलमण्डनाभिः कृतं 'कस्याश्चित् पूतनायन्त्या' इत्यादिलीलानुकरणमपि न सङ्गच्छते । इदानीमाविर्भूतविप्रयोगसंयोगात्मकस्वरूपेण तत्तल्लीलाया अकृतत्वात् । स्वप्रियकृतलीलानुकरणस्यैव लीलाहावरूपत्वमिति रसशास्त्रसिद्धान्तात् । अपरञ्च । विचयनसामयिकनन्दसूनुर्गतो हृत्वा रामानुजो मानिनीनां, गोविन्दचरणप्रिये इत्यादिषु नन्दसुतबलभद्रानुजगोकुलेन्द्रादिनामकथनस्याथ च 'विषजलाप्ययाद्व्यालराक्षसा'दित्याद्युक्तकालीयादिभयरक्षितत्वगोचारणगमनकर्तृत्वादिकथनस्य तत्समयप्रकटस्वरूपे सम्भवाभावेन भ्रमरूपत्वापातात् । न चास्तु भ्रमरूपत्वमिति वाच्यम् । तथा सति रासमण्डलमण्डनायमानानां भावानुसारेणेदानीन्तनभजनकर्तृभिरेतादृशभवत्सिद्धान्तस्य ज्ञायमानत्वेन नन्दसून्वादिनामाग्रहणस्य बाललीलामारभ्य रासलीलाप्रारम्भपर्यन्तकृतलीलानामभावनाप्रसक्तेः । अन्यच्च । श्रीमन्नवनीतप्रियश्रीमद्गोवर्धनोद्धरणस्वरूपभजनाप्रसक्तेश्च महाननर्थः प्रसज्येत । न च तदन्तर्गतमिदमपि स्वरूपं वर्तत एवेति वाच्यम् । तथा सति तत्तल्लीलाविशिष्टस्वरूपाणां तत्तल्लीलाश्रवणादीनां तत्तत्स्वरूपभजनस्य च गौणलीलात्वगौणश्रवणादित्वगौणस्वरूपभजनत्वापत्तेश्च । अपरञ्च । 'जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् । तदन्यदिति ये प्राहुरासुरांस्तानहो बुधा' इतिपद्येन श्रीमदाचार्यैर्यशोदोत्सङ्गलालितस्य सिद्धान्तितायाः परमतत्त्वताया भङ्गप्रसङ्गश्च । न हीदानीमाविर्भूते स्वरूपे यशोदोत्सङ्गलालितत्वमस्तीति तद्विरुद्धा भवद्राद्धान्तपद्धतिः कथं भव्यतामुपेयात् । अथ च 'सपि कापि सापि सम्प्रति वरिवर्ति किमु व्रजाधिपधाणा । या नन्दसूनुमुरलीतरलं चेतः ममादध्या'दिति तत्तनुजराजोक्ता स्वस्य तरलचेतस्त्वे नन्दसूनुमुरल्या हेतुत्वोक्तिरपि कथं मम प्रमा स्यात् । श्रीमदाचार्यरत्नानां तत्तनुजराजानां च व्रजभक्तभावात्मकभगवत्स्वरूप एव निष्ठावत्त्वात् । ननु तर्ह्यवतारसम्पूर्तिकाल इत्यस्यास्मत्प्रभुकृततथात्व काल इत्यवलम्बनपदस्यास्याख्यानस्य का गतिरिति चेत् । अत्रोच्यते । पृ पालनपूरणयोरितिधात्वर्थानुसारात् सम्पूर्तिशब्दस्य सम्पूर्णता ह्यर्थः, सा च केनचित् प्रकारेण न्यूनस्य भवति । तथाऽस्मदाचार्योक्तमार्गो हि फलमार्गः । तत्र फलरूपो भगवानेव साधनम्, फलरूपो भगवानेव च फलम् । तत्र परमकाष्ठापन्नस्य फलरूपभगवतो 'रसो वै स' इति श्रुते

रसरूपत्वात् स्वप्नादिसंयोगविशिष्टप्रेमासक्तिव्यसनपर्यन्तावस्थासंवलितपूर्वानुरागजविप्रयोग-
रूपेण साधनता । तदनन्तराविर्भूतपरस्परपोष्यपोषकभावविशिष्टविप्रयोगातिपुष्टपूर्णपूर्णतर-
पूर्णतमसंयोगतादृशसंयोगातिपुष्टपूर्णपूर्णतरपूर्णतमविप्रयोगपरम्परारूपेण च फलता । तत्रापि
परम्परायां परमफलता तु संयोगरूपस्यैव । इदं यथा तथानुपदमेव प्रतिपादयिष्यते ।
एवं च बाल्यमारभ्य पौगण्डान्तं पूर्वोक्तप्रकारकपूर्वानुरागजविप्रयोगरूपसाधनविशिष्टत्वमेव
व्रजभक्तानाम् । तत्र फलात् साधनं न्यूनमेवेत्यनुभवसिद्धम् । अन्यथा साधने प्राप्ते फला-
काङ्क्षा न स्यात् । तथा चैतासां पूर्वानुरागविशिष्टस्वप्नादिसंयोगसुखे प्राप्तेपि बाह्यसयोग-
सुखस्याभिलषितस्याजातत्वादेतावत्पर्यन्तं साधनरूपत्वमात्रेणैव भगवत आविर्भावात् पुरुषो-
त्तमावतारो न्यून एव स्थितः । अतःपरं तु 'बाहुप्रसारपरिरम्भे'त्याद्युक्तेन तदभिलषितपूर्ण-
बाह्यसंयोगसुखरूपेण, तदनन्तरमेतत्संयोगसुखपोषार्थमुक्तसंयोगपु 'ष्यन्तर्हिते भगवती'त्याद्यु-
क्तेन पूर्णविप्रयोगस्वरूपेण, तदनन्तरं 'तासामाविरभू'दित्याद्युक्तेन रासावसानपर्यन्तं पूर्वपूर्ण-
संयोगसुखस्वरूपादपि कोटिगुणेन पूर्णविप्रयोगपुष्टेन पूर्णतरसंयोगसुखरूपेण, तदनन्तरं
च गोप्यः कृष्णे वनं याते इत्याद्युक्तेन पूर्वोक्तपूर्णतरसंयोगसुखपुष्टेन परार्धगुणमाविसंयोग-
सुखपोषार्थं पूर्णतरविप्रयोगस्वरूपेण, ततः पुनः पूर्वोक्तपूर्णतरविप्रयोगपुष्टेन गोचारणपरावृत्ति-
जनितबहुपरार्धगुणपूर्णतमसंयोगसुखरूपेणाविर्भूतः, ततः पुनरप्यक्रूरकृतमथुरानयनजनितेन
पूर्णतमसंयोगसुखपुष्टेन पूर्णतमविप्रयोगरूपेण पुनरपि भावभरेणानन्तगुणान्तरबाह्यसयोग-
सुखस्वरूपेण चेत्येवं संयोगपरम्परारूपेणाविर्भविष्यति भगवान् । एवं चेदानीमेव रस-
रूपावतारस्य पूर्वं बाहुप्रसारेत्यादिना एकदलरूपसंयोगावतार उक्तः, इदानी'मन्तर्हिते
भगवती'त्यादिना द्वितीयदलरूपविप्रयोगावतार उच्यते इति सम्पूर्णता जायत इत्यवतार-
सम्पूर्तिकाल इत्यत्रत्यसम्पूर्तिशब्देन सम्पूर्णतोक्ता, न तु पूर्वावतारसमाप्तिर्जातेत्युच्यते ।
समाप्तिरूपार्थस्यैव विवक्षितत्वेवतारसमाप्तिकाल इत्येवोक्तं स्यात् । तस्मादवतारसम्पूर्ति-
काल इत्यस्यावतारसम्पूर्णताकाल इत्यर्थः सम्पन्न इति नन्वित्यादिभवत्प्रश्नोत्तरस्य सिद्धे-
रिति सर्वं भव्यम् । यत्पुनर्विप्रयोगस्यैव फलत्वम्, न संयोगस्य, संयोगस्तु तडिल्लतावत्
किञ्चित् कालं मध्ये मध्ये जायमानो भक्तानां देहस्थित्यर्थमुपयुक्तो भवति । भगवद्विषयक-
विप्रयोगस्यातिदुःसहत्वात् । अत एव भगवतो मथुरातः परावृत्त्यानागमनम्, संयोगस्यैव
फलत्वे मथुरातः परावृत्त्यागमनमेव स्यात् । नन्वत्र किं प्रमाणमिति चेत् । 'भवतीनां
वियोग' इति पद्यव्याख्यानसुबोधिन्यामथदेहमात्रेणात्मा गौण इति देहेन सह नियोग
आविर्भूतस्योच्येत । तदपि न घटते । समवायिकारणत्वेन तेषु वर्तत इति । अन्यथा देहा
निःस्वभावाः स्युः । आविर्भूतेन नियोगस्तु हितकारी । अन्यथा स्वरूपनाश एव स्यात् ।
यथाग्निकाष्ठयोः । पूर्वसम्बन्धेनैवैता अर्धदग्धाः, पुनः सम्बन्धेन सर्वदाह एव स्यात् ।
सुखानुभवस्तु स्वान्तःस्थिताग्न्यभिव्यक्तिवत् स्वान्तःस्थितभगवदभिव्यक्त्या । सर्वथाभि-

व्यक्तौ काष्ठांशो ज्वलिष्यतीति न सम्भवति, यतो भगवान् प्रलयकर्तेत्यादिप्रघट्टकपर्यालोचने काष्ठान्तःस्थिताग्नेरभिव्यक्तिर्यथा बाह्योपाधिसम्बन्धाभावे किञ्चित्कालिकी, एवं स्वान्तःस्थितभगवदभिव्यक्तिरपि तद्विलतावद्भगवत्संयोगाद्विप्रयोगस्यैव सार्वकालिकत्वाद्विप्रयोगस्यैव फलत्वं न संयोगस्येति श्रीमदाचार्यचरणोक्तेरेव प्रमाणत्वात्, आविर्भूतेन वियोगस्त्वित्यादेरयमर्थः । यद्याविर्भूतस्वरूपेण संयोगः स्यात् तदा मथुरात आगमनज्ञानेऽस्मान् विहाय गत इति निश्चयजनितमहादुःखेन देहपातः स्यात्, तदेवोक्तमन्यथेत्यादिना सदृष्टान्तमतोयं वियोगो हितकारीति भावः । पूर्वसम्बन्धेनेत्यादेरयमर्थः । रासंसामयिकवियोगोत्तरसञ्जातसम्बन्धेनैवैताः स्वत्यागजनितमहादुःखेन स्मरणपथगतेनार्धदग्धाः, अतःपरमिदानीन्तनसम्बन्धे मथुराविषयकगमनज्ञानेन कोटिगुणे दुःखे जाते सर्वदाहः स्यादिति ज्ञेयाग्रे स्पष्टोर्थ इति वदन्ति । तत्रापि वदामः । भगवद्रूपरसो ह्यग्निरूपः । तत्र यथाग्निस्तापजनकः शीतलताजनकश्चेति द्विविधः । तत्रान्नादिपरिपाकजनकोग्निस्तु तापजनकः । हिमादिरूपोग्निस्तु शीतलताजनकः । तत्र यावत्पर्यन्तं देहादिषु तापस्तावत्पर्यन्तं हिमरूपोग्निः स्वसम्बन्धेन देहादिस्थितिकारकः । सर्वथा स्वसम्बन्धेन देहादिनिष्ठतापनिवृत्तौ शीतलतागुणेन देहादिनाशकरश्च । एवं रसरूपो भगवद्रूपोग्निरपि विप्रयोगसंयोगरूपेण द्विधः । तत्र विप्रयोगात्मको रसरूपो वन्हिस्तापकारकः, संयोगरूपो वह्निस्तु शीतलताकारकः । तत्र यावत्पर्यन्तं देहे विप्रयोगजनितस्तापसम्बन्धस्तावत्पर्यन्तं तापनिवर्तकस्वशीतलतागुणेन देहजीवात्मनोः स्थितिकारकः । स्वसम्बन्धेन सर्वथा तापनिवृत्तौ संयोगरूपो वह्निस्तु जीवलयसम्पादकस्वभावत्वात् स्वसम्बन्धेन सर्वथा जीवस्य लये सम्पन्ने स्थितोपि भक्तिमार्गीयजीवात्मा रसानुभवाभावान्नष्ट एव भवतीति तन्नाशकारकः । अस्मिन् पक्षे श्रीमदाचार्योक्तसर्वदाह एव स्यादित्यत्रत्यदाहपदेन स्वरूपनाश एव स्यादित्यत्राप्याचार्योक्तनाशपदेनापि लय एव ज्ञेयः । जीवस्याविकृतत्वान्नित्यत्वात् काष्ठादिदाहवद्दाहस्य देहादिनाशवन्नाशस्य वाऽसम्भवात् । एवं च सति यदि भगवानेताभिः सह संयुज्येत तदा पूर्वानुभूतानन्दात् कोटिगुणानन्दप्रादुर्भावे सर्वथा तापनिवृत्तौ भक्तात्मनां लय एव भवेद्, एवं च रसमार्गीयफलाभावः सम्पद्येतेत्याविर्भूतेन वियोगस्तु हितकारीत्युक्तं श्रीमदाचार्यचरणैः । न च लयसम्भावनायामेव पुनरपि विप्रयोगाविर्भावे पूर्वोक्तफलसम्भव इति वाच्यम् । यदि पुनरपि बहिराविर्भूतस्वरूपविप्रयोगाविर्भावावश्यकत्वम्, तदैतेनैव विप्रयोगेण चारितार्थ्यात् निष्फलपतन्यायप्रसक्तेः । न च सुखानुभवार्थं बहिराविर्भूतस्वरूपेण संयोगो देय एवेति वाच्यम् । अन्तःस्थिताप्यभिव्यक्तिवदन्तःस्थितभगवदभिव्यक्त्या सुखानुभवसिद्धिरिति श्रीमदाचार्यैरेवोक्तत्वाद्बहिराविर्भूतस्वरूपसंयोगस्य निःप्रयोजनकत्वादिति दिक् । यद्वा । बहिराविर्भूतस्वरूपेण वियोगस्तु हितकारीत्यस्यायमर्थः । प्रपञ्चप्रादुर्भूतमथुरागतभगवत्सम्बन्धे महासुखानुभवे जाते पुनरपि रसरूपभगवत्स्वभावाद्विप्रयोगे जाते यथा यथा

संयोगानन्दाधिक्यम्, तथा तथा विप्रयोगे तापाधिक्यम्, यथा यथा विप्रयोगे तु दुःखाधिक्यम्, तथा तथा संयोगे आनन्दाधिक्यम्, इत्यनुभवान्मथुरागतस्वरूपेण विप्रयोगे पूर्वतापादपि कोटिगुणे तापे जाते देहनाश एव स्यात्, एतत्तापस्य प्रलयाग्नितापादपि प्रबलत्वात्। यथा बाह्याग्निकाष्ठसम्बन्धे काष्ठनाशः। अस्मिन् पक्षे पूर्वसम्बन्धेनैवैता अर्धदग्धाः, पुनः सम्बन्धे सर्वदाह एव स्यादित्यत्रत्यपूर्वसम्बन्धेनेत्यस्य पूर्वविप्रयोगसम्बन्धेनेति पुनः सम्बन्धे इत्यस्य च पुनर्विप्रयोगसम्बन्धे इति चार्थो बोध्यः। तस्माद्बहिराविर्भूतस्वरूपेण भगवान्न सम्बध्यते। सुखानुभवस्त्वन्तरनुसन्धानेनान्तःस्थिताग्न्यभिव्यक्तिवदन्तःस्थितभगवत्स्वरूपाविर्भावेनान्तर्बहिरनुसन्धाने भगवत्सङ्गमाकाङ्क्षायामप्यन्तःस्थितस्य बाह्यप्राकट्यादेव बहिरपि भविष्यत्येवेति बहिराविर्भूतस्वरूपेण वियोगो हितकारीत्युक्तं श्रीमदाचार्यैः। न चान्तःस्थस्वरूपप्राकट्येन तत्सम्बन्धजनितसुखातिशयोत्तरसञ्जातविप्रयोगादपि देहनाशप्रसक्तिर्भविष्येवेति वाच्यम्। बाह्यतृणतूलरूपोपाधिसम्बन्धाभावे मथनाविर्भूतकाष्ठान्तःस्थवह्निर्न काष्ठदहनसमर्थः, तथात्र बाह्योपाधिरूपसर्वमुक्तिदानसम्बन्धाभावे बहिराविर्भूतस्वरूपमप्यग्नित्वान्न देहनाशकरम्, किन्तु प्रपञ्चातीततापक्लेशनाशरूपरसधर्मपुरस्कारेणैव प्रकटमिति तदेव करोतीति भवदुक्त्यप्रसक्तेः। यद्वा। आविर्भूतेन वियोगस्तु हितकारीत्यादेरयमभिप्रायः। प्रपञ्चाविर्भूतस्वरूपं हि सर्वमुक्तिदानाय प्रकटम्, तत्र सर्वमध्ये गोपिकानामपि सत्त्वादेतासामपि लयरूपमुक्तिमेव प्रतिक्षणं ददाति भगवान्, परं तस्मात् पृथक्कृत्य भजनानन्दमनुभावयति। 'ये यथा मा'मिति प्रतिज्ञातः। अत्रोपष्टम्भकरूपा 'यत एतद्विमुच्यत' इतिफलप्रकरणीयपञ्चाध्यायीपद्यव्याख्यानसुबोधिनी द्रष्टव्या। एवञ्च तस्मात् पृथक्करणक्लेशः प्रतिक्षणं प्रभोर्भवतीति प्रक्षालनाद्धि पङ्कस्येति न्यायाद्बहिःप्रपञ्चाविर्भूतस्वरूपेण भगवान् न सम्बध्यते, तेन गोपिकानां लयनिवृत्तेर्हितं भवतीति प्रपञ्चाविर्भूतस्वरूपेण वियोगो हितकारीत्याचार्यैरुक्तम्। बाह्यानुसन्धानेनुसन्धाने वा भावभरेणान्तर्बहिःप्रकटरसरूपस्वसंयोगं तु करोत्येव प्रभुः। तासामभिलषितत्वाद्रसमार्गीयपरमफलरूपत्वाच्च। तस्मान्न विप्रयोगस्य परमफलत्वम्, किन्तु संयोगस्यैव। संयोगसाधनत्वात् पूर्वानुरागजनितविप्रयोगस्य संयोगपोषकत्वात् संयोगानन्तराविर्भूतस्य विप्रयोगस्य च परमफलत्वमुच्यते। अन्यथा भगवत्संयोगोस्माकं भवत्वितीच्छोदयविप्रयोगस्य च परमफलत्वमुच्यते। अन्यथा भगवत्संयोगोस्माकं भवत्वितीच्छोदयोपि श्रीभागवते श्रुतः स्यात्। यद्व्रजभक्तानां भगवद्विप्रयोगोस्माकं भवत्वितीच्छोदयोपि श्रीभागवते श्रुतः स्यात्। इदानीन्तनानां भगवद्विप्रयोगेच्छोदयस्तु भगवत्संयोगसाधकत्वपोषकत्वज्ञानादेव भवतीति न काप्यनुपपत्तिः। यद्यपि भगवतो रसरूपत्वात् संयोगविप्रयोगात्मकत्वाद्रसरूपभगवत्प्राप्तौ विप्रयोगोप्याम्रादिफले त्वग्बीजादिवदन्तर्गतो भवति तथापि त्वग्बीजादिप्राप्त्या यथाम्रफलरसाकाङ्क्षा भवत्येव, तद्रसप्राप्त्या तु त्वग्बीजाद्याकाङ्क्षा न भवति, तथा विप्रयोगप्राप्त्या संयोगाकाङ्क्षा भवत्येव, संयोगप्राप्त्या तु विप्रयोगाकाङ्क्षा तु न भवतीति संयोगस्यैव परम-

फलत्वं वक्तुं शक्यते । ज्ञाते सति स्ववृत्तितयेष्यमाणस्यैव फलत्वात् । न त्विदं विप्रयोग इति न विप्रयोगस्य फलत्वम् । अत एव फलप्रकरणीयप्रथमाध्यायसुबोधिनीप्रारम्भस्थाया- 'मतो हि भगवान् कृष्णः स्त्रीपु रेमे ह्यहर्निशम् । बाह्याभ्यन्तरभेदेन ह्यान्तरं तु महाफल'- मितिकारिकायां रमणपदवाच्यबाह्याभ्यन्तरसंयोगस्यैव फलत्वं महाफलत्वं च क्रमेणैवोक्तम् । एवमेव 'स्वानन्दस्थापनार्थाय लीला भगवता कृता । स चाह्यो जनितः पुष्टो यथान्तर्निर्विशे- त्पुनः । तदर्थं भगवांस्तासु लीलया सहितोविश'दित्येतद्द्वितीयाध्यायसुबोधिनीप्रारम्भ- कारिकायां विप्रयोगस्य संयोगपोषकत्वमेव, फलत्वं तु संयोगस्यैव श्रीमदाचार्यवर्यैरुक्तम् । अत एव 'मयि ताः प्रेयसां प्रेष्ठ' इति भ्रमरगीतपद्यव्याख्यानसुबोधिन्यामपि फलसाधकत्वाद्भ- क्तिमार्गे विरह एव पुरुषार्थ इति किमिति निराक्रियते तत्राहेत्याभासे विप्रयोगस्य फलसाध- कत्वमेवोक्तं श्रीमदाचार्यचरणैर्न तु फलत्वमिति भवत्सिद्धान्तिता विप्रयोगस्यैव परमफल- रूपता कथं सङ्गच्छेततराम् । अतःपरं विप्रयोगान्तर्गतभगवत्स्वरूपप्राकट्यं तडिल्लतावत् किञ्चित्कालिकमेव भवति, अन्यथा देहनाशः स्यादिति यदुक्तम्, तदपि न विचारक्षमम् । ताभिः किञ्चित्कालिकसंयोगस्यानाकाङ्क्षितत्वात्, बहुकालिकसंयोगस्यैव तदाकाङ्क्षाविषय- त्वात् । इदं तु दशमस्कन्धीयपद्त्रिंशाध्याये 'अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः । तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं विचेष्टितं तेर्भकचेष्टितं यथे'- त्यारभ्य श्लोकचतुष्टये 'निवारयामः समुपेत्य माधवं किन्नो करिष्यन्कुलवृद्धबान्धवाः । मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम्, यस्यानुरागललितस्मितवल्गु- मन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम् । नीताः स्म नः क्षणमिव क्षणदा विना त गोप्यः कथं न्वतितरेम तमो दुरन्त'मितिश्लोकद्वये च प्रकटमेव । एवमपि सति यदि किञ्चित्का- लिकमेव संयोगं दद्यात् तदा 'ये यथा मा'मिति भगवत्प्रतिज्ञाहानिः स्यात् । तडिल्लताव- देतासां संयोगो भवतीत्यादिप्रकारस्य श्रीमदाचार्यैस्तत्तनुजरैश्च कण्ठरवेण कुत्राप्यनुक्त- त्वाच्च । तस्मादन्तर्बहिर्दिवा रात्रौ चातृप्तिसंयोगरूपेण प्रकटः, पुनस्तत्संयोगपोषार्थं विप्र- योगरूपेण च प्रकटः, पुनः पूर्वप्रकारसंयोगरूपेण पुनर्विप्रयोगरूपेणेति परम्परया गोपि- काभिः सह क्रीडति भगवानिति कृतं विस्तरेण । ननु तथापि नान्तर्गृहगतानामेवंविध- सम्पूर्णरसरूपभगवत्प्राप्तिरेतासां मुक्त्यनन्तरमेवैताद्दशरसलीलाप्राकट्यादिति तत्प्राप्तफलस्य मध्यमफलत्वमस्माभिरुच्यत इति चेत्, अत्रोच्यते । सगुणशरीरत्यागोत्तरतत्क्षणप्राप्त- गुणातीतदेहेन भगवन्निकटगतानामन्तर्गृहगतानामपि 'ताभिः समेताभिरुदारचेष्टित' इत्यादिलीलायांभगवज्जन्यमदमानलीलाप्राप्त्युत्तरसामयिकान्तर्धानलीलामारभ्य 'वामबाहु- कृतवामकपोल'स्याद्युक्तयुगलगानलीलान्तमर्यादलीलानामपि प्राप्तिरेतासामिति श्रीमदाचार्य- तत्तनुजवराणां हि सिद्धान्तः । अत एव 'ता दृष्ट्वान्तिकमायाता' इतिफलप्रकरणीय- पद्यव्याख्यानसुबोधिन्यां 'यास्तु समाहूताः समागतास्ता न निवार्यन्ते, याः पुनः सगुणा

अन्यसम्बन्धिन्यस्ताः शब्दश्रवणात् समागता इति शब्देन निवारणीयाः, अन्यशेषतया मजनमयुक्तमिति । करिष्यमाणलीला तु सर्वभावप्रपत्तिसाध्या, अतो निवारणार्थं यत्नमाहे'ति श्रीमदाचार्यैर्व्याख्यातम् । विवृतं चैतत् तत्तनुजवरैः स्वकृतटिप्पण्यां 'यदन्तर्गृहगता अनाकारिता एव नादं श्रुत्वोद्युक्ता इति प्रतिबन्धोभूदिति शङ्कानिरासायाहुः याः पूर्वोक्तास्ता अप्याहूताः, तत्रोपपत्तिमाहुः समागता इति । अन्यथा तथा न स्यादिति भावः । गेहस्य देहसम्बन्धित्वात् तस्य च नष्टत्वे नैतासां गृहाभावात् तत्र गमनं बाधितमिति न निवार्यन्ते' इति । एवं चान्तर्गृहगता न निवार्यन्त इति स्फुटमेव प्रतीयते, तत्र तन्निवारणं च भगवन्निकटप्राप्तौ सति सम्भवति । भवदभिमतसिद्धान्ते त्वेतासामिदानीं लय इति तन्निवारणप्राप्तेरभावाच्छ्रीमदाचार्योक्तिस्तत्तनुजवरोक्तिश्चासमञ्जसा स्यात् । तस्मादन्तर्गृहगतानां गुणातीतदेहप्राप्त्या भगवन्निकटगमनं सिद्धम्, तदा तन्निवारणप्रसञ्जनं च सिद्धम् । एवं च तदुत्तरसामयिकी सर्वापि लीलैतासु सिद्धेति न मध्यमफलत्वमेतत्फलस्य, किन्तूत्तमफलत्वमेवेति व्यर्थ एवैतासां मध्यमफलप्राप्तिरिति सिद्धान्ताभिमानः केषाञ्चिदिति सर्वमवदातम् ।

श्रीवल्लभतत्सुतवरविठ्ठलनाथाङ्घ्रिरेणुलवबलतः ।
जयगोपालः कृतवान् सविवृतिसेवाफलव्याख्याम् ॥ १ ॥

मूर्ध्न्यञ्जलिं ननु निधाय निधाय भूयो
भूयः कृपालुषु महत्सु निवेदयामि ।
यत्किञ्चिदत्र लिखितं मयका भवद्भिः
तत् पुष्टिमार्गपथिकैः परिशोधनीयम् ॥ २ ॥[1]

**इतिश्रीवल्लभाचार्यचरणकमलैकतानमानसश्रीमन्महाप्रभुश्रीविठ्ठलेश्वरकृपाकटाक्षोद्बुद्धबुद्धिना सुबुद्धिना मठपतिजयगोपालेन विरचिता सविवृतिसेवाफलटिप्पणी समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१ इदं पद्यं जयगोपालकृत[illegible]ग्रन्थेऽपि विद्यते । आरम्भस्तु '[illegible]' [illegible] [illegible]म् । इदं पद्यद्वयं [illegible] टीकायां [illegible] प्रतिभाति ।

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## मठेशश्रीलक्ष्मणभट्टविरचितसेवाफलविवृतिविवरणसमेतम् ।

विचार्य श्रीमदाचार्यप्रोक्तं सेवाफलाभिधम् ।
ग्रन्थं तद्विवृतिं चापि विवृणोमि यथामति ॥ १ ॥
सांख्ययोगाविभेदार्थौ भक्तिर्भेदकरी हरौ ।
स्नेहासक्तिव्यसनिनी तत्सिद्धै स्वाङ्गवित्तजा ॥ २ ॥
व्यसनं मानसी सेवा माहात्म्यज्ञानभक्तितः ॥ ३ ॥

अथातः श्रीवल्लभाचार्याः स्वसिद्धान्तमुक्तावल्यां 'कृष्णसेवा सदा कार्या' इत्यादिना ब्रह्मवादसिद्धान्ततः सत्ये जगति कृष्णस्य सेवाभक्तिं निरूप्य तत्सिद्धौ मुख्यं फलं सपरिकरं निरूपयितुकामाः सेवाफलनिर्णयग्रन्थं सविवरणमाहुः ।

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**

सेवना च प्रागुक्ता त्रिविधा, अत्यन्तरङ्गा अन्तरङ्गा बहिरङ्गा चेति प्रशब्देन सूच्यते, या नित्यश्रीस्वामिन्यन्तरङ्गस्य स्वस्वामिनः पुरुषोत्तमस्य 'प्रतिकृतिरूपस्य' काश्मीरचन्दनसुगन्धतैलाभ्यङ्गस्नापनपूर्वकशृङ्गारादिज्ञानक्रियारूपा साक्षादङ्गेषु मृदु संस्पृश्य लोकवत् सस्नेहं क्रियमाणा सैषा प्रथमा । मन्दिरपात्रसम्मार्जनोपलेपनचित्रकरणपूर्वकसिंहासनादिशय्यास्तरणक्रीडनोपस्करणपीठखण्डाक्षिभृङ्गारादियोजनान्नादिपयःपाकसामग्रीसाधनज्ञानक्रियारूपा परिचर्या द्वितीया । पुष्पगन्धताम्बूलफलकन्दमूलशाकामान्नरससंशोधनधनवसनभूषणसम्पादनज्ञानक्रियारूपा परिचर्या बहिरङ्गा तृतीयेति यादृक्पदस्यार्थः । सैव भक्तवर्धिनीवितिवचनेनि तत्रोक्ता । तत्सिद्धौ 'तत्र प्रेमासक्तिव्यसनात्मना परिणतायां मानस्यां सत्यां' सेवकस्य यादृक् फलं तदुच्यते । यद्यपि तत्र 'ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधनम्' इति फलमुक्तं तथापि तदवान्तरमेवेति मुख्यं फलमुच्यत इत्यर्थः ।

तदपि त्रिविधमिति सविवरणं निरूपयितुमाहुः ।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**
**फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः ।**

विवरणमत्र सेवायां फलत्रयमलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वा वैकुण्ठादिष्विति । अलौकिकसामर्थ्यं प्रथमायाः फलम् ।

१ ज्ञानेति पाठः । २ भेदेति पाठः ।

**सायुज्यं** द्वितीयायाः । **सेवोपयोगिदेहो वा वैकुण्ठादिषु** 'अधिकृतः' तृतीयायाः । **तत्रालौकिकस्य** भगवत इवालौकिकमेव ज्ञानक्रियाभ्यां **सामर्थ्यं** जगद्व्यापारवर्जं यत् तत्तथा । स्वेच्छया देहेन्द्रियप्राणान्तःकरणैरेव सदा सेवापरैः सहितस्यात्मनो जीवनशक्तत्वं 'श्रुति'कुमारिकाणामिव, तत्परित्यजने च स्वेच्छयाशक्तत्वमित्यैहिकमन्तर्गृहगतानामिव । तान्कादाचित्कीस्वेच्छया'मुत्र' भगवल्लोकगमनशक्तत्वमित्यामुष्मिकं ध्रुवादेरिव तत्तथा । 'सूत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पद'मितिवाक्यात् स्पर्शमणिन्यायेन तेषामप्राकृतत्वेन त्यागासम्भवात् भगवदानन्दानुभवसामर्थ्यं यत् तस्यालौकिकस्य **दानेनाद्यो मनोरथः** उत्पन्नः प्रमाणाननुरोधी प्रमेयैकसाध्यो **मनोरथः** स्वामिलषितरूपो 'मनोरथान्तं श्रुतयो यथा ययु'रितिवाक्यात् तद्भजनानन्दानुभवश्च **सिध्येत्** । एतेन कालकर्मप्रकृत्यनधीनत्वं द्योतितम् । द्वितीयायाः फलं सायुज्यम्, तदपि द्विविधम्, रूढार्थकं यौगिकार्थकं च । तत्राद्यं ज्ञानमिश्रितानामेकत्वरूपम्, अभेदरूपं भेदात्मन्ताभावरूपमात्मनैक्यमित्यर्थः । 'शुद्ध' भक्तानामपरम्, सह युनक्तीति सयुक्, सयुजो भावः सायुज्यम्, तद्भक्तानां भेदतस्तद्वत्तस्थितस्तदानन्दानुभवात्, पूर्वत्र देहेन्द्रियप्राणान्तःकरणानि विहायेह स्वात्मनैव केवलेन तदानन्दानुभवः, अपरत्र सहैव तैः स इति सार्थकतैषामन्यत्र नेति तारतम्यम् । तत्र स्पष्टमेव पार्षदानामसुरावेशिनां ज्ञानयोगिनां चोक्तम् । तृतीयायाः फलं **सेवोपयोगिदेहो वा वैकुण्ठादिषु** । अप्राकृतभूतभौतिकतृणलतौषधिवृक्षपशुपक्ष्यादिदेहः अधिकारात्मा, तत्र सेवोपयोगी बोध्यः । पूर्वत्रापरोक्षमेवात्र च परोक्षमिति भेदः । वैकुण्ठे मुख्येऽमुख्ये च । आदिपदेन स्वर्गादिषु विष्णोः स्थानेष्वपि तथेति निरूपितम् । वेति चार्थे ज्ञेयः । अत्र फलत्रयेपि **न कालो नियामकः** । काल इत्युपलक्षणम्, कर्मप्रकृत्योरपि न नियामकतेत्यर्थः । अत एव श्रीभागवते द्वितीये 'न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानं,' तृतीये 'न कर्हिचिन्मत्पराः शान्तरूपे' इति, कपिलेनोक्तं च 'नङ्क्ष्यन्ति नो निमिषो लेढि हेति'रित्यादि१॥

तत्र सेवायां प्रतिबन्धकाभावः कारणमिति प्रासङ्गिकं प्रतिबन्धमपि त्याज्यत्वेन निरूपयन्ति ।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

अत्र बाधकमित्येकवचनेन मिलितानामेव बाधकतेत्याशङ्क्य विवृण्वन्ति, **सेवायां प्रतिबन्धकत्रयमिति** । अत्रोद्वेगः साधारणः स त्याज्य एव । एवमुद्वेगं निरूप्य प्रतिबन्धभोगौ निरूपयन्तोऽनुरोधरूपस्य प्रतिबन्धस्यानिवार्यत्वेन पाठक्रममनपेक्ष्यार्थक्रमतो भोगं विवृण्वन्ति **भोगो द्विविध** इति । **लौकिकोऽलौकिकश्च** । तत्र **लौकिकस्त्याज्य एव, अलौकिकस्तु न, तस्य फलानां** मुख्यमध्यमसाधारणानां प्रथमे प्रविष्टत्वात् प्रथमे फलेऽलौकिकसामर्थ्येन प्रभुस्वरूपानन्दानुभवभोगे प्रवेशात् ।

एवं भोगं निरूप्य प्रतिबन्धं निरूपयन्ति प्रतिबन्धोपीति । स च साधारणोऽसाधारणश्च । साधारणः सेवासमये लौकिकवैदिककर्मानुरोधरूपस्त्याज्य एव, स्वाधीनत्वात् । असाधारणो भगवत्कृतः, स सह्य एवेति भावः । ननु कथमेतेषां सिद्धानां त्याग इत्याशङ्क्याहुः त्रयाणां साधनपरित्यागः कर्तव्य इति । साधनमत्र तज्जननहेतुभूतं यत् तत्परित्याग इत्यर्थः । नन्वावश्यकस्य लोकवेदसिद्धतया अशक्यत्यागत्वात् कथं त्याग इत्याशङ्क्य तदुपायं विवृण्वन्ति तत्राद्यो बुद्ध्या त्याज्य इति । सेवाया अवसरे त्याज्यः, अनवसरे विधेय इति चातुर्येणेत्यर्थः ॥ २ ॥

एवं साधारणप्रतिबन्धं निरूप्य भगवत्कृतप्रतिबन्धं निरूपयन्ति ।

**अकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि ।**
**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ३ ॥**

प्रभोरेव अकर्तव्यं स्वसेवाकारणमचिकीर्षितं चेत् तदा स्वस्य गतिर्न हीति निश्चयः । तदा ज्ञानमार्गेण स्थातव्यं शोकाभावायेति । वक्ष्यन्ति चाग्रे तदान्यसेवापि व्यर्थेति भावः । नन्वासुरेष्वेवं न तु दैवे तथेत्याशङ्क्याहुः तदा आसुरोऽयमिति । एवंविधप्रतिबन्धरूपलिङ्गेन स्वस्यासुरत्वमनुमेयमितिभावः । तत्रासुरत्वमागन्तुकं वा साहजिकमिति निर्धारार्थं विवेकः, सांख्यज्ञानमिति केचित् । तेन शोकाभावमात्रं न तु मोक्षः ॥ ३ ॥

पूर्वोक्तमेव निगमयन्ति ।

**बाधकानां परित्यागो भोगेप्येकं तथा परम् ।**

भोगयोरपि पूर्वसमतामाशङ्क्य वैलक्षण्येनाहुः ।

**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥**

प्रथमे अलौकिकसामर्थ्ये भोगो भजनानन्दानुभवरूपो महान् सदा स्वरूपतः साधनतः फलतश्चेत्यर्थः । पाठान्तरे अल्पो भोगः सविघ्नः सप्रतिबन्धः ॥ ४ ॥

**सविघ्नोल्पो घातकः स्यादिति ।**

**सविघ्नोल्पो घातकः स्याद्बलादेतौ सदा मतौ ।**

अत एवैताविति विवृतौ । भगवत्कृतप्रतिबन्धे अन्यफलचिन्तया शोकः कदाचित् तस्य स्यादिति तदभावार्थं चिन्ता न कार्येत्याशयेनाहुः ।

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

भगवत्कृतप्रतिबन्धे । तत्र हेतुः । स्वस्य संसारनिश्चयादिति । संसारोऽहंममतया जन्मकर्मप्रवाहमार्गस्थरूपः, तस्य निर्धारणादित्यर्थः ॥ ५ ॥

एवं प्रतिबन्धं विचार्य उद्वेगरूपप्रथमं प्रतिबन्धेन फलाभावे भगवतो दातृत्वाभावं हेतुत्वेन निरूपयन्ति ।

**मन्याद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

अत्र आद्यफलाभाव इति विवृतम् । आद्येन वा प्रतिबन्धेन फलाभाव इत्यर्थः । नन्विति विरोधोक्तौ । आद्ये उद्वेगरूपप्रतिबन्धे, भगवतः सर्वसमर्थस्यापि सेवाया अमानसीत्वेन अनाधिदैविकीत्वे तत्प्रयुक्तः प्रभोः फलदातृत्वाभाव इत्यर्थः । एतदेव विवृण्वन्ति तदा सेवा नाधिदैविकीत्यादि । तृतीये लौकिकभोगे गृहमेव बाधकम् । गृहमत्र पत्यादिकं विष्णुबहिर्मुखमेव त्याज्यम् । अत एवोक्तमाचार्यैर्निबन्धे 'गृहं सर्वात्मना त्याज्य'मित्यादि ।

एवं फलत्रयं प्रतिबन्धकत्रयं च प्रासङ्गिकं निरूप्य एतद्विचारमावश्यकत्वेन वक्तुमुपसंहरन्ति ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

(इयं दातृता हरेः यद्वा भक्तिः मदुक्तिर्वा) । सेवा पूर्वोक्ता तन्यी वा विचिन्त्येत्यर्थः । एतदतिरिक्तं सर्वं मनोभ्रमः । भक्तिमार्गे त्रिविधसेवाया एव पूर्वोक्तं फलत्रयं नान्यत्, प्रतिबन्धकं चोद्वेगादिकमेव न पापादिकं । 'स्वपादमूलं भजतः प्रियस्ये'ति भागवतवाक्यादिति भावः ॥ ६ ॥

ननु भगवदीयैर्नेयं भाव्येत्युच्यतां किन्त्वन्यैरेवेत्याशङ्क्याहुः तदीयैरपि तदित्यादि ।

**तदीयैरपि तत् कार्यं पुष्टौ नैव विलम्बयेत् ।**

कलौ देशादीनामसाधकत्वात् तथा । पुष्टौ स्थितः प्रभुस्तु नैव विलम्बयेत् । मध्यस्थैरेवेह तथेति भावः ।

एतदेव निमित्तमन्यत्राप्युपदिशन्ति ।

**गुणक्षोभेपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**

एतद्भावनेन मनसो भगवतत्त्वपरतायां गुणक्षोभोपि न भवितेति भावः । अत्र स्वसंमतिरेव मानमाहुः इति मे मतिरिति ॥ ७ ॥

नन्वत्र काचित् कुतर्ककल्पना उत्पद्येत तदा कथं विचारणीयेत्याशङ्कायामाहुः ।

**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

स्पष्टार्थः ॥ ७॥ ॥

इति श्रीआचार्यवर्यमतमार्गानुवर्तिना ।
सेवाफलं सविवृति विवृतं च यथामति ॥ १ ॥

**इतिमठेशश्रीनाथभट्टात्मजगोपीनाथसुतलक्ष्मणभट्टविरचितं सेवाफलविवृतिविवरणं समाप्तम् ॥**

---

श्रीकृष्णाय नमः ।

# सेवाफलम् ।

## विवरणटिप्पणीसमेतम् ।



श्रीमदाचार्यचरणान् सेवारसफलप्रदान् ।
नमामि तद्रजोलेशलवस्पर्शसमीहया ॥ १ ॥
श्रीमदाचार्यचरणैस्त्रिधा सेवा फलत्रयम् ।
निर्णीतं तत्र मे बोधस्तथाहि कृपयोच्यते ॥ २ ॥

**यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।**

**यादृशी सेवनेत्यस्य** विवरणे **सेवायां फलत्रयमिति** । अयं भावः । भक्तिमार्गे पुष्टिमर्यादाप्रवाहभेदेन जीवेषु भगवदङ्गीकारस्त्रिधा । तत्रापि पुष्टिमार्गफलार्थं यद्वरणं तत्पुष्टौ मर्यादायामेव, न तु प्रवाहमार्गेपीति विवरणे स्फुटीकरिष्यत इति । तेषां साधनरूपा सेवापि त्रिधा प्रोक्ता । अतस्तादृशतत्प्रकारकसेवासिद्धौ **फलमुच्यते** । तत्किमित्याकाङ्क्षायामुक्तम**लौकिकसामर्थ्य**मित्यादि । तत्र पुष्टिमार्गाङ्गीकृतस्य साधनदशायामाचार्योक्तप्रकारेण सेवाकरणे मानसीतत्सिद्धौ फलं साक्षाद्भगवत्सम्बन्धरूपं भवेदिति । तस्येदमेव **अलौकिकसामर्थ्यं** यदाधुनिकजीवस्य तादृशपूर्णालौकिकैश्वर्यवीर्यादिगुणयता समं साम्येन रतिः रसोद्बोधश्च भवतीति तथोक्तं विवरणे, न हि साधारणस्य तादृशेन महता सममेतत् कर्तुं शक्यम्, रसाभासहेतुत्वात् ।

ननु पूर्वं मानससेवायाः सिद्धिः कथं तत्राहुः **अलौकिकस्येति** ।

**अलौकिकस्य दाने हि चाद्यः सिध्येन्मनोरथः ॥ १ ॥**

'मानसी सा परा मते'त्युक्त्या सा सेवा स्वतन्त्रपुरुषार्थरूपेत्यलौकिकस्य प्रभोर्दाने परमकाष्ठापन्नस्वरूपसम्बन्धाभिलाषरूपभावदाने सः आद्यः पुष्टिफलरूपः सर्वोत्कृष्टो मनोरथः सिध्येत् । मनोरथपदेन प्रेमासक्तिव्यसनसंकल्पादिरूपः सन् सिद्धिं प्राप्नोति, फलमम्मुखो भवतीत्यर्थः । अत एव मनोरथपदमुक्तम् । इयमेव मानसीतत्सिद्धिः । तदुक्तं 'चेतस्तत्प्रवणं सेवे'ति । यद्यपि मानससेवासिद्धौ तनुजा वित्तजा च द्वे अङ्गे, तथापि मुख्यमङ्गं दानम्, यतस्तत्करणेपि यदा दानं भवति, तदैव तादृशी सा भवति, अन्यथा मर्यादामार्गीयभक्तानामपि निरन्तरं तत्करणे पुष्टिरूपायां तस्यां को विशेष इति

१ पद्यमेतद्विवरणकृता नाम न लपितं तथापि अवणोपाख्यमहत्त्वतदुपन्यासादस्य प्राचीनत्वं निर्धार्यते ।

तद्भावोदये नैव सा भवेदित्यर्थः । तेन तत्करणेपि दानेनैव तादृशभावः सिध्येन्नान्यथेति ज्ञेयम्, परन्तु तत्कृतिस्तु सर्वदा कर्तव्या, अकरणे भावः क उद्भवेद्, विषयाभावाद्, अत एवाङ्गभूते ते उक्ते ॥ १ ॥

ततः किमित्यत आहुः फलमिति ।

**फलं वा ह्यधिकारो वा न कालोत्र नियामकः ।**

तादृशप्रचुरभावे सति फलं स्वरूपसम्बन्धरूपम्, अधिकारः अलौकिकदेहवयोगुणादिकं भवेत्, तत्राहुः न काल इति । अत्र कालः वयोवस्थादिसमयरूपः नियामको न, भगवदिच्छयैव सर्वं लीलोपयोगि तदैव भवेत्, न कालापेक्षा । तादृशं प्रति भगवतोपि विलम्बासहिष्णुत्वात् ।

एवं पुष्टिफलं निरूप्य मर्यादाफलं निरूपयन्ति । तथा हि, मर्यादामार्गाङ्गीकृतस्य माहात्म्यज्ञानपूर्वकसेवाकरणे भगवति माहात्म्यभावसहितस्नेहेन तदात्मतया सायुज्यं साक्षात्पुरुषोत्तमस्वरूपे भवेन्न त्वक्षरे । तत्र तदालौकिकदानेच्छाऽभावात् स्वरूपसम्बन्धात्मकं फलं न भवेदित्यर्थः । यदा पुनः भगवान् कदाचिद् दातुमिच्छति तदा स्वस्वरूपात् पृथक्कृत्य तादृशं प्रचुरभावदानं कृत्वा फलं प्रयच्छति, यतोस्मिन्मार्गेपि दातृत्वामिप्रायेणैव वरणकार्यत्वात् । एवं भक्तिहंसे स्फुटीकृतं श्रीमत्प्रभुचरणै'र्भक्तिमार्गीयभक्तकृतेत्यारम्य, अत्रापवर्गवर्त्मनी'त्यन्तम् ।

प्रवाहभक्तिमार्गलक्षणकथनेन व्यापिवैकुण्ठस्य लोकत्वेनाक्षरात्मकत्वादक्षरमुक्तिरेव फले, न तु पुरुषोत्तमसायुज्यम् । अक्षरमुक्तौ तु आद्यफलदानेच्छाऽभावाचदयं वरणमेव नास्तीति नाद्यफलसम्भावनेति मर्यादातो हीनत्वमुक्तम् । पुरुषोत्तमसायुज्ये तत्सम्भावना वर्तत इति प्रवाहभक्तिमार्गसेवाफलादुत्कृष्टत्वम् । यत एतत्फलदानेच्छया यद्वरणं तन्मार्गद्वये एव, न तु प्रवाहमार्गे, तदप्युक्तं भक्तिहंसे 'विवरणे चास्ति प्रकारद्वय'मिति ।

एवं सेवास्वरूपं साधनफलसहितं मार्गत्रयेपि निरूपितमिदानीं तादृशसेवासिद्धौ प्रतिबन्धकत्रयं निरूपयन्ति उद्वेगः प्रतिबन्धो वा भोगो वेति ।

**उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम् ॥ २ ॥**

श्लोकविवरणे सेवायां प्रतिबन्धकत्रयमित्यादि । एतत्रितयनिवारणे त्रयाणां साधनपरित्याग इति विवरणे विवृतम् । तत्रोद्वेगसाधनं लौकिकशोकदुःखादिकम् । तस्य भगवदिच्छाधीनत्वं ज्ञात्वा तत्यागेन तस्यापि त्यागो भवत्येवेति । 'चित्तोद्वेग'मित्युक्तत्वादत्र न विशेषतो विवृतम् । तथा अपरः प्रतिबन्धः । स च द्विविधः । साधारणो भगवत्कृतश्च । साधारणो बुद्ध्या त्याज्यः । बुद्धिस्तु यस्मिन्कृते सेवाप्रतिबन्धोऽभूत्तेत् स न कर्तव्य इति विचाररूपबुद्ध्या त्याज्यः । भगवत्कृतमग्रे वदिष्यन्ति । लौकिकभोगस्तु विषयरूपत्वात् बाधक इति तत्साधनवस्तुमात्रत्यागादेव तत्याग इति तदेव त्याज्यमित्यर्थः । एवं त्रयं त्याज्यमित्युक्तम् ॥ २ ॥

**बाधकानां परित्यागो भोगेऽप्येकं तथापरम् ।**

एतत्त्रयाणां साधनपरित्यागेनैव **बाधकानां परित्यागो** भवतीति शेषः । ननु सेवायां वस्तुमात्रोपयोगात्तत्त्यागे कथं तन्निर्वाह इत्याशङ्कायामाहुः **भोग** इति । तत्रापि **भोगे एकं** लौकिकं त्यजेदपरं नेति शेषः । यतस्तेषां स्वार्थमुपयोगे लौकिकत्वम्, भगवदर्थमुपयोगे अलौकिकत्वम्, अतः स्वार्थं ते त्याज्याः, भगवदर्थमुपयोज्या इति भावः ।

तदनन्तरमबाधकत्वमाहुः **निःप्रत्यूहमिति** ।

**निःप्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ३ ॥**

**निःप्रत्यूहमिति** प्रतिबन्धरहित प्रत्युत साधकम् ॥ ३ ॥

एवं बाधकानां परित्यागे निर्विघ्नसेवासम्भवे तस्यैव भोगस्य प्रतिबन्धत्यागे च हेतुं निरूप्य भगवत्कृतप्रतिबन्धे हेतुं निरूपयन्ति **अकर्तव्यं भगवत** इति ।

**अकर्तव्यं भगवतः सर्वथा चेद् गतिर्न हि ।**

**यथा वा तत्त्वनिर्धारो विवेकः साधनं मतम् ॥ ४ ॥**

अस्य निवरणे **भगवत्कृत**मित्यादि **विवेक** इत्यन्तम् । अस्यायमर्थः । यदि **भगवतः** तत्फलदानं न कर्तव्यं भवेत् तदा तादृशसेवायां सर्वथा सर्वप्रकारेणापि गतिर्न भवति । तत्र **यथा** तथा प्रतिबन्धकमेव भवेत्, न तु निर्वाहः । ननु स्वमार्गीयसेवायां तस्य भगवान् प्रतिबन्धं करोतु, परन्तु अन्यमार्गीयसेवायां न करिष्यतीति चेत्, तत्रोक्तं निवरणे **तदा अन्यसेवापि कृता व्यर्थेति** । प्रवाहादिमार्गेषु कृतापि व्यर्था । यतः सकलमार्गेषु फलदाता भगवानेव । तस्य त्वकर्तव्यमेवेतीति तथा । यदा यत्ने कृतेऽपि प्रतिबन्धकं भवेत् तदा **यथा तत्त्वनिर्धारो** भवेत् तथा कर्तव्यम् । तत्त्वनिर्धारः कथमित्याकाङ्क्षायां निवरणे विवृतम् । **आसुरोऽयं जीव** इति । एवं तस्य विवेकेन ज्ञानस्थितिरूपमेव **साधनं मतम्**, यतः पूर्वमासुर एव जीवः । यथासुरदेहयुक्तम्लेच्छादिषु कस्यचिद्दैवजीवत्वात् भगवत्परता दृश्यते, तथासुरजीवस्यापि कदाचिद्दैववशाद्भगवद्भक्तसङ्गेन सेवायां प्रवृत्तिर्भवति, परन्तु आसुरे भगवतो दातृत्वाभावात्तत्र प्रतिबन्धकमेव जायते । यतस्तेषामन्यदेव फलम् । तदेव 'आसुरीं योनिमापन्ना' इत्यादिनोक्तम् । तथापि भगवद्भक्तसङ्गानुभावात् ज्ञानमार्गेऽपि स्थितिरुक्ता ॥ ४ ॥

तत्रापि चेत् स्थितिर्न भवेत्तदा तत्पूर्वोक्तफलविषयिणी चिन्तापि सर्वथा त्याज्येत्याहुः **द्वितीय** इति ।

**द्वितीये सर्वथा चिन्ता त्याज्या संसारनिश्चयात् ॥ ५ ॥**

निवरणे **ज्ञानस्थित्यभावे चिन्ताऽभावार्थं द्वितीय** इति । तत्र हेतुः । **संसारनिश्चयादिति** । स्वस्य पूर्वोक्तसंसाररूपस्य फलस्यैव निश्चयात् सा न कार्या, पुनस्तदाशोच्छेद एवेति सर्वेत्युक्तम् ॥ ५ ॥

१ [illegible], अथवा [illegible] इति प्रतिभाति ।

नतु यथा द्वितीयप्रतिबन्धे पूर्वोक्तप्रकारेण आसुरजीवस्य सर्वथा फलविषयिणी चिन्ता त्याज्या, तथा साधारणप्रतिबन्धेपि सा त्याज्या, अन्यथा सा कथं भवेदित्याशङ्कानिरासायाहुः **न त्वाद्य** इति ।

**न त्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।**

**आद्ये** साधारणप्रतिबन्धे **दातृता** भगवतो **नास्तीति** न किन्तु वर्तते, परन्तु फलस्य कियज्जन्मानन्तरभावित्वात् तद् भवति । तदपि प्रतिबन्धकं साधारणं निवारयितुं शक्यम् । तेन भगवत्कृत एव तस्मिन् दातृत्वाभावो, न साधारण इति ज्ञेयम् । अतो यस्य आद्यफलदानार्थं मर्यादयाङ्गीकारः तस्य तथैव सेवाकरणे साधारणप्रतिबन्धश्चेद् भवेत्, तदा तन्निवारणेन सेवानिर्वाहात् पूर्वं सायुज्यफलं तदनन्तरं तत्फलं भविष्यतीति सा चिन्ता न त्याज्येति भावः । यस्य पुष्टौ अङ्गीकारस्तस्य तन्निवारणेन तादृशतत्सिद्धौ तत्फलं भवेदिति सा तथेत्यर्थः । एवं सति प्रवाहमार्गसेवायामपि सेवायाः साधनत्वमानत्वात् साधारणप्रतिबन्धे दातृत्वं भविष्यतीति शङ्कानिरासाय **आद्यफलाभाव** इति विवृतम् । आद्यफलस्याभावो यत्रैतादृशे प्रवाहमार्गे तदर्थमङ्गीकार एव नास्तीति नाद्यफलसम्भावनापीति न दातृत्वम् । सा सेवापि नाधिदैविकी, तत्र पूज्यस्वरूपेपि नाधिदैविकत्वम्, किन्तु विभूतिरूपत्वमिति महद्वैलक्षण्यात् कुतः साम्यमिति ज्ञेयम् ।

एवं साधारणप्रतिबन्धस्य व्यवस्थामुक्त्वा प्रथमवृत्तौ सर्वथा लौकिकभोगत्यागासम्भवात्, तत्रापि भगवतो दातृत्वाभावमाशङ्क्य तन्निवारणाय तद्व्यवस्थामाहुः, **तृतीय** इति । **तृतीये** लौकिकभोगेपि दातृता नेति न, यत एतन्मार्गे द्वये तादृश एवाङ्गीकारः, किन्तु तत्र मूलभूतं साधनं यद्गृहं तद्बाधकमिति तत् त्याज्यमिति शेषः । तत्त्यागे सर्वथा भोगाभावात् प्रतिबन्धकाभावेन तादृशभगवद्भक्तसङ्गेन सेवानिर्वाहात् तत्फलमपि भवेदिति भावः । एतदेव विवरणे विवृतं **भोगाभावस्तदैवे**ति ।

अत्र कश्चित्पूर्वपक्षी शङ्कते । तथा हि । स्वमार्गीयपरित्यागस्तु प्रेमासक्तिव्यसनात्मकभक्तौ सत्यां कर्तव्यो, न तु साधनभक्तौ । तदुक्तं सन्न्यासनिर्णये 'सन्न्यासवरणं भक्तौ' 'अतोत्र साधने भक्तौ नैव त्यागः सुखावहः' इति च । तत्र करणे विपरीतफलमपि भवेदित्यपि । प्रकृते तु तत्पूर्वमेव भोगाभावार्थं सेवानिर्वाहार्थं च त्याग उच्यत इति कथमेकवाक्यतायां विरोध इव प्रतिभाति ?

तत्रोच्यते । प्रथमं स्वमार्गीयभक्तिसिद्धौ मुख्यं कारणं सेवा । सा सेवा 'गृहे स्थित्वा अव्यावृत्त्या गृहव्यावृत्त्यभावे न, प्रत्युत पुत्रकलत्रादीनां भगवदर्थमुपयोगेन स्वधर्मतः करणे सिध्येत्, तचेदनुकूलं भवेत्, नो चेत् भजनप्रतिबन्धकत्वेन सर्वात्मना तस्य त्याग एवोचितः । अन्यथा तत्सङ्गेन पुत्रकलत्राद्युपभोगे स्वस्य भजनासम्भवे शरणगतिर्मृग्येत, तदा सेवाऽभावे प्रेमासक्तिव्यसनात्मिका भक्तिरपि न भवेत्, तदभावे तन्मार्गीयपरित्यागोपि न, तदभावे फलाभाव एव च स्यादिति मार्ग एवोच्छिद्येत इति । तद्भोगाभाव-

सिद्ध्यर्थं तथा तत्सेवासिद्ध्यर्थं च कथनम्, तदनुकूलतद्ग्रहणाभिप्रायेणैवेति, न तत्राश्रमस्वीकारः, सेवाभावानुपपत्तेः, साधनभक्तौ निषेधाच्च । एतदेवोक्तं तत्त्वार्थदीपेपि 'प्रतिकूले गृहं त्यजे'दित्यनुकूलतत्त्यागाभावाभिप्रायेणान्ते प्रेम्णि जाते अङ्गेपि यत्किञ्चित् भोगस्यापि बन्धकत्वात् तेनैव तन्नाशे सति ततो यथा साधारणप्रतिबन्धनिवारणेन सेवाकरणं तदानं च, तथा लौकिकभोगत्यागेनापि निर्विघ्नसेवाकरणे सति तत्फलं भवेदिति ज्ञेयम् । तत्र पुष्टिमर्यादायां भगवति लीलामाहात्म्यगुणादिभावेनैव प्रेम भवेत्, न पुष्टिरीत्येति तादृशस्य तादृशप्रेम्णा क्रमेण सर्वविषयत्यागे, ततो तत्प्रभावेन तदात्मकतया श्रीकृष्णे सायुज्यं भवेत्, ततो यदा दानेच्छा तदा स्वरूपात् पृथक्कृत्य तद्भावदाने तत्तत्फलानुभवं कारयिष्यतीति मर्यादाङ्गीकारे आद्यफलदानप्रकार उक्तः । तदुक्तं तत्त्वार्थदीपे 'सर्वत्यागेऽनन्यभावे कृष्णभावैकमानसे सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फल'मिति-सायुज्यानन्तरं ध्रुवं फलं तदेवेतिभावार्थः । यस्य शुद्धपुष्ट्यङ्गीकारस्तस्य तदारभ्यैव पूर्वोक्तभोगादिप्रतिकूलगृहत्यागेनानुकूलगृहे स्थित्वा सेवाकरणे भावात्मिकैव प्रवृत्तिर्भवेत्, ततो यदा प्रेमासक्तिव्यसनानि भावात्मकतया पुष्टानि भवेयुः, तदा तत्र स्थितौ यत्किञ्चिद्भोगसम्बन्धेनापि भावनाश इति तदभावेन तद्विगाढभावपोषादिना पूर्णविरहानुभवार्थं सन्यासनिर्णयोक्तप्रकारेण परित्यागः सन्यासः आवश्यक उक्तः । अन्यथा क्षणमात्र भावान्तरसम्बन्धे भावशैथिल्याद् विरहानुभवाभावात् फलाभाव इति । ततस्तत्पूर्णानुभवे दशमावस्थया प्रतिबन्धकदेहनिवृत्तौ अलौकिकत्वाप्त्या तत्फलानुभवो भवतीति पुष्टिमार्गाङ्गीकारे फलदानप्रकार उक्तः । अत एव मर्यादायां 'मदर्थेऽर्थपरित्याग' इत्यादिना भोगाभावार्थं भगवत्प्राप्त्यर्थं च सर्वसमर्पणरूप एव त्याग उक्तः, न तु सन्यासप्रकारः । यतः संन्यासे तस्य पुष्टभावादतोपि तादृशैरेव सम्भोगो भवतीत्युक्तबाधकत्वात् । अतः कलौ स सन्यासः पश्चात्तापाय इति निषेधोप्युक्तमिद्ध एव । अग्रेपि त्वयोपभुक्तेपि निरोधो भवतीति । संन्यासस्तु तादृशभक्तानेवेत्युक्तम्, 'सन्यासवरणं भक्ता'विति मार्गद्वयभेदेन परित्यागस्य भिन्नत्वान्न कोपि विरोध इति ज्ञापितम् ।

एवं मार्गत्रयसेवाफलभेदं त्यागभेदं च निरूप्योपसंहरन्ति अवश्येयमिति ।

**अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥**

इयं पूर्वोक्ता त्यागपूर्वनिरूपिका मदुक्तिः अवश्या भाव्या, सर्वथा सदा, भाव्या कर्तव्या । अथवा अवश्या यद्यपि स्ववशेन कर्तुं न शक्यापि तथापि भाव्या, भावयितुं मनसि चिन्तयितुं योग्या । तत एव सर्वं भविष्यतीति सर्वथा कर्तव्यमुक्तम् । आवश्यककरणे हेतुः एतदन्यत् सर्वं मनोभ्रम एव न तु फलम् । मदुक्तप्रकारातिरिक्तकरणे सर्वोन्मिष्टफलाभावो न, प्रत्युत मनसो भ्रम एवेत्यर्थः ।

ननु कथं भ्रमः? सर्वैरेव क्रियते तत्राहुः तदीयैरपीति ।

**तदीयैरपि तत्कार्यं पुष्टौ नैव विलम्बयेत् ।**

**गुणक्षोभेऽपि द्रष्टव्यमेतदेवेति मे मतिः ॥ ७ ॥**
**कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७॥ ॥**

तदीयैः पुष्टिमार्गातिरिक्तजीवैः भ्रमसम्बन्धिभिरपि कार्यं तदेव, सर्वत्यागपूर्वकं मदुक्तरीत्यैव भजनं कार्यम् । न क्रियते चेत् तदा अज्ञानाद्भ्रम एव, न तु फलम् । यदि तदीयैरपि तदेव कार्यं तदा यः पुष्टौ स्थितः कोपि मदुक्तप्रकारसेवाकरणजनितप्रेमासक्तिव्यसनादिभाववान् स तु विशेषतः क्षणमात्रमपि न विलम्बयेत्, मदुक्तकरणे विलम्बं न कुर्यात् । यदि विलम्बयेत् तदा पुष्टिभावान्तरत्यागाभावे विजातीयसङ्गेन भावशैथिल्यात् फलाभाव एव भवेदित्यर्थः । यतस्तादृशस्य स्वरूपव्यतिरिक्तवस्तुमात्रस्मरणस्यापि फलप्रतिबन्धकत्वम् । तदेवाहुः **गुणक्षोभेपीति** । अयं भावः । तादृशपुष्टिमार्गीयस्य व्यसनानन्तरं विरहानुभवार्थं त्यागे कृते स्वरूपसङ्गाभिलाषायाः प्राचुर्याद्विगाढभावेन देहप्राणेन्द्रियान्तःकरणानि स्वरूपात्मकान्येव भवन्ति, यतः विकलत्वास्वास्थ्यादिकं निरन्तरं भवति तदा तादृग्दशायां मध्ये कदाचित्तस्य भगवल्लीलागुणादिस्फूर्तिर्न भवेत्, तदा मनःस्वास्थ्येन भावशैथिल्यात् स्वरूपान्तरायो भवेदित्येव गुणक्षोभः गुणैः कृत्वा मनःस्वास्थ्यरूपोऽविकारस्तस्मिन्नपि एतदेव द्रष्टव्यम्, फले प्रतिबन्धकमेव, द्रष्टव्यमितिपदं प्रत्यक्षप्रमाणत्वेनोक्तम् । एतेन लीलागुणस्मरणस्य बाधकत्वं कथं वक्तुमुचितमित्याशङ्का निरस्ता । एतदेव सन्न्यासनिर्णये 'ज्ञानं गुणाश्चे'ति बाधकत्वमुक्तम् । एवं सति यत्र स्वरूपगुणस्मरणेपि फलाभावः, तत्र गृहादीनां प्रतिबन्धकत्वेन त्यागविलम्बे फलाभाव इति किं वाच्यमिति भावः । अत एव सर्वथा भोगाभावस्त्याग एवेत्याशयेन विवृतावुक्तं **भोगाभावस्तदेवेति** । अत्र प्रमाणं **मे मतिरिति** । स्वस्यैव तादृक्प्रकारकानुभवात् स्वमतिरेवोक्ता । यदि मन्मतिप्रमाणत्वेन य एवं करिष्यति तर्हि तस्य सर्वं सुष्ठ्वेव भविष्यतीति भावः । अकरणे बाधकमाहुः **कुसृष्टिरिति** । अत्र एतत्प्रकारकसेवाफलनिरूपणरूपमदुक्तौ कथं किमित्यादिरूपा **कुसृष्टिश्चेदुत्पद्येत वै** निश्चयेन **स भ्रम** एवेति सा न कार्येत्यर्थः । करणे सर्वस्वहानिरेवेति निश्चयः ॥ ७॥ ॥

एतद्विवृतेरर्थो यद्यपि विवृतो महच्चरणैः ।
तदपि तदेव हि गूढं दृष्ट्वा भावः स्फुटीकृतः कृपया ॥ १ ॥
सोपि तथेतरथा वा नो जाने सद्भिरीक्षणीयस्तत् ।
कृपया च मार्जनीयस्तेन ततोहं विभूषणीयश्च ॥ २ ॥

श्रीमदाचार्यचरणे सरोजे मानसे मम । तिष्ठतां विकचे नित्यं तत्प्रभावोत्र भानुना ॥ ३ ॥

**इतिश्रीमदाचार्यकृतसेवाफलनिरूपणविवृतौ टिप्पणी समाप्ता ॥**

# परिशिष्टम् ।

| पृष्ठम् | पङ्क्तिः | पाठः | पाठान्तरम् । |
|---|---|---|---|
| ५ | ३९ | सद्विषयकः | सिद्धिविषयकः |
| ६ | ८ | दर्शनसेवायाम् | दर्शने सेवायाम् |
| ६ | २२ | अलौकिकसाधन | अलौकिकभोगसाधन |
| ७ | ५ | द्विविध इत्यनन्तरम्, लौकिकोऽलौकिकश्च । तत्र लौकिकस्त्वाद्य एव । प्रतिबन्धो द्विविधो । | |
| ८ | २५ | द्रवादस्य | द्रवश्चा |
| १९ | ३ | प्रयत्नसम्भवेन । | प्रयत्नासम्भवेन । |
| २२ | १९ | तदवैयर्थ्य- | तद्वैयर्थ्य- |

श्रीवल्लभगोस्वामिनां टीकाया मुद्रणानन्तरं प्रभुकृपयास्माभिस्तेषां टीकायाः द्वितीया प्रतिः प्राप्ता । सा टीका श्रीवल्लभगोस्वामिभिः पुनर्लिखिता, इति प्रतिभाति । तन्मध्ये तैः प्रथमटीकापेक्षया केषु केषु स्थलेषु किञ्चिदधिकं लिखितम्, तदत्र वाचकानां जिज्ञासातृप्त्यर्थं ग्रन्थरक्षणार्थं चावतार्यते ।

पृष्ठ २३, पङ्क्ति १२, सर्वाभोग्यसुधानन्तरमिदमधिकं वाचनीयम्—'फलरूपापीयं भगवता साधनतामापादितेति वेणुगीते निरूपितमतोऽलौकिकत्वम् ।'

पृष्ठ २३, पङ्क्ति २४, **सेवोपयोगिदेहो**—इत्यस्यानन्तरं 'इति यस्य देहस्य सेवायामेवोपयोगः, अन्यदावयवा अप्रकटा एव स इत्यर्थः । यत्र स्वरूपानन्ददानम्, तत्र फलत्वमपि, यत्र धर्मभूतानन्ददानम्, स्वयमप्रधानीभूय, तत्र फलद्वयम्, यत्र स्वप्राधान्येन धर्मभूतानन्ददानम्, तत्र सेवोपयोगिदेहमात्रदानमिति ज्ञेयम्' इत्यधिकम् ।

पृष्ठ २३, पङ्क्ति २७, लभन्ते—इत्यस्यानन्तरं 'इमान्येव फलरूपात्मनिवेदनसख्यदास्यानि ज्ञेयानि' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति ३, **भोगः**—इत्यस्यानन्तरं 'भगवदुपयोगिवस्तुपरतायाः प्रतिबन्धकत्वाभावादत्र यद्यम्बुजाक्षेतिश्लोकव्याख्यातः सर्वथा भगवन्तमप्रपन्नः अन्यपदार्थो ज्ञेयः । अप्रपन्नोनुगतो भगवदनुपयोगीति यावत् । नवरत्ने चित्तोद्वेगमित्यस्याभासे चित्तस्य पुत्रादिपरता उद्वेगपदार्थो निरूपितः । अन्यपरतेनियावत् । तद्न्यायेन प्रथमपीदं ज्ञेयम् ।' इत्यधिकम् ।

पृष्ठ २४, पङ्क्ति ५, मूलार्थः—इत्यस्यानन्तरं 'तत्र द्वयं साक्षात्तद्बाधकं प्रतिबन्धरूपम्, एकं च तदायास्य साधनस्य पाथेन बाधकमिति भेदो ज्ञेयः । सामर्थ्यस्य बाधकत्वेन सामर्थ्योत्पत्ते पूर्वमेवासम्भवे सामर्थ्यं नोत्पद्येतेति सिद्धमेवेति भावः । नवरत्ने

तथानिरूपणान्निवेदनपदार्थनाशाभावेपि तद्वाधस्तु स्यादिति तुशब्दः। तेन जन्मान्तर-व्यवधान भवतीति निबन्धे निरूपितमिति भावः। सामर्थ्यबाधश्च तद्धेतुभूताभ्यासबाधेन सेवानभ्यस्ता भवतीत्यर्थः।' इत्यधिकम्।

पृष्ठ २४, पङ्क्ति ७, लौकिकभोगानाम्—इत्यस्यानन्तरं 'बाधकत्वात्तत्साधनपरित्यागः कर्तव्यः। मनोदेहेन्द्रियाणि च भगवदसम्बन्धिषु न प्रवर्तनीयानि। तथा सति तेषां तत्परता भवति 'विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते' इति वाक्यादिति भावः। साधनपरित्यागं विवृण्वतो' इत्यधिकम्।

पृष्ठ २४, पङ्क्ति १२, भोगः—इत्यस्यानन्तरं 'लौकिकस्त्याज्य इति। सिद्धान्तरहस्योक्तप्रकारेण यथासम्भवं भगवदुपयोग सम्पाद्य भोगः कर्तव्य इत्यर्थः। प्रतिबन्ध इति। श्रवणकीर्तनादिना हरिश्चेद्धृदय निविशते तदा पूजा सर्वदा निर्वहति। एव जाते ततः कार्यान्तरवशाज्जाता तनोरन्यपरता साधारण. प्रतिबन्धः। क्रियमाणेपि श्रवणकीर्तनादौ हरिश्चेन्न निविशेत्तदाभ्यासो न भवति। तेन जाता तनोरन्यपरता या स भगवत्कृतप्रतिबन्धः।

पृष्ठ २४, पङ्क्ति १३, विभावनीयेत्यर्थः—इत्यस्यानन्तर 'बुद्धिर्वा तत्र न स्थापनीया। यत्नकरणेपि तदनुचिन्तन न कर्तव्यमित्यर्थः। अलौकिकभोगो न त्याज्य इत्याशयेनाहुः अलौकिकेति।' इत्यधिकम्।

पृष्ठ २४, पङ्क्ति २०, प्रतिबन्धः—इत्यस्यानन्तर 'ध्रुवस्य गता भक्तिः कुबेरेण सिद्धेति चतुर्थस्कन्धे निरूपितं तथात्राप्याशङ्क्य नेत्याहुः तदेति' इत्यधिकम्।

पृष्ठ २४, पङ्क्ति २२, बोध्यम्—इत्यस्यानन्तर 'ननु दुरदृष्टनाशनार्थं कात्यायनीपूजेति कात्यायनीपदनिरुक्तौ सुबोधिन्या निरूपितम्, दुरदृष्टस्य भगवत्कृतप्रतिबन्धत्वञ्च तत्रैव निरूपितम्। यदि भगवदिच्छयैवेति। स्वेच्छामप्येतदनुगुणां करिष्यतीति च। तथा च कथमन्यसेवानैयर्थ्यमित्यत आहुरयमिति। लीलास्थेषु रसविशेषानुभवार्थं भगवता प्रतिबन्धः सम्पाद्यते न त्वासुरत्वं तेषु। आधुनिकोय त्वासुर एव भगवता प्रतिबन्धयुक्तः क्रियते, तदा तु फलाभावनिश्चयात् साधनैयर्थ्यमिति भाव.।' इत्यधिकम्।

पृष्ठ २५, पङ्क्ति १७, बाधकत्वाभावात्—इत्यस्यानन्तरं 'नियमानमप्यदृष्टं तस्य दुर्बलम्। अत एव प्रारब्धभोजनार्थं प्रभुश्चेद्विलम्बत इत्युक्तम्। लोकेनेदस्यास्य्य हरिर्नं करिष्यतीति चोक्तम्।' इत्यधिकम्।

| | | | | | |
|---|---|---|---|---|---|
| पृष्ठ | ३२ | पङ्क्ति | ११ | हठाद् | हठात् |
| " | ३२ | " | २८ | सा | स |
| " | ९५ | " | २१ | निवरणे | चरणे |

# Editors' Note.

Sevaphala is the last and the most important of the famous Sixteen small Sacred Books of Shri Vallabhacharya. It clearly states the three sorts of realisations, according to one's 'adhikara,' viz., (1) spiritual power, which, going beyond the world, obtains a vision of God, and enjoys indescribable bliss with Him, or (2) Sayujya with Purushottama or the last (3) a body fit for service of God in Vaikuntha, Gokula etc. A detailed description of all these, and also of hindrances in their way will be found in the Sanskrit introduction and the commentaries.

It gives us very much pleasure to note that we have been able to collect all the rare commentaries yet known on this important work,—we hope the last one is of Shri Vrajanathaji, and to publish them all together. Moreover, we have secured several copies of many commentaries, and it gives us great satisfaction to find that our printed texts have become much better than the oldest manuscripts in our possession, on account of comparisons with and necessary corrections from other manuscripts of the same texts. Elsewhere we have noted various extra passages which we found in some Mss., after the text was printed; we have noted only those readings which gave quite different meanings and we have refrained from adding unnecessary 'other' readings.

We sincerely thank all who have kindly supplied us with those extremely rare Mss The first among these is Pandit Gattulalaji's Library from which we got a large collection and we are highly obliged to Sheth Tribhuvandas Varjiwandas and Mr. Kashidas Dalal who allowed us the use of the same. Next Dr. S K. Belvalkar M. A., Ph. D. favoured us with a loan of several Mss., including the extremely rare one of Jayagopala Bhatta from the Govt. collection in the Deccan College. Shri Vallabhalalji and his Shastri Madhavji also supplied us with several Mss. Mr. Utsavlal Sankalchand also gave us one rare commentary and Mr. Tansukhram Suryaram also gave us some Mss. Mr. Lallubhai Chhaganlal gave us the use of his block of the photograph of Shrimadacharyaji. To all these, we offer our heartfelt thanks. H. H. Shri Jivanalalji Maharaja of Porebunder has put us under a deep debt of gratitude by supplying us with the necessary zeal and funds, without which this work could not have been published. We are also indebted to the manager of the N. S. Press for printing this work within eight weeks. With feelings of joy, we offer this fruit of our labour of love, at the Lotus Feet of Lord Krishna.

BOMBAY
*10th December 1916.*

M. T. Telivala.
D. V. Sankalia.

Printed by Ramchandra Yesu Shedge, at the Nirnaya-Sagar Press, 23, Kolbhat Lane Bombay.

---

Published by Mulchandra Tulsidas Telivala B A., LL B,
Vakil, High Court, C P Tank Road, Girgaon Bombay.

श्रीमद्वल्लभाचार्यचरणप्रणीतः

# संन्यासनिर्णयः ।

## अष्टविवरणसमेतः ।

गुर्जरानुवादसहितश्च ।

---




श्रीद्वारकापुरीस्थश्रीमद्गोस्वामिश्रीवल्लभात्मजश्रीजीवनलालचरणसम्पूर्णसाहाय्येन
सूर्यपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला बी.ए., एल्एल्.बी., वकील
हाइ कोर्ट, सुरतिस्थ धैर्यलाल व्रजदास सांकलीया, बी.ए.,
एल्एल्. बी., वकील हाइ कोर्ट, इत्येताभ्यां संशोध्य
मुम्बापुर्यां 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतः ।

---

श्रीवल्लभाब्दाः ४४०. संवत् १९७४.

---

मूल्यमेव मुद्रिका.

Library, through Sheth Tribhuvandas and Mr Kashidas Dr S K. Belvalkar gave us all the Mss of these tikâs from the Government collection of the Deccan College Mr Tansukhram Manassukhram gave us the Mss from Shastri Bhailal's collection in the Dahilakshmi Library of Nadiad, Sree Jeevanalalajee, Sree Govardhanlalajee, Sree Vallabhalalajee, S'ree Vrajratnalalajee, Goswaminee Sree Krishnapriyajee, Sastri Kalyanjee, Sâstri Bhadrashankar, Sastri Vasantram, Keertankara Baladevadas, Mr Natvarlal Itchharam Desai of the Gujarati Press, Mr Vadilal, Secretary to the Vaishnava Parishad, all were kind enough to give the Mss in their possession We take this opportunity to thank them all, and request them to continue their support in this very important and useful work

In making and comparing copies of these tikas, we were greatly helped by Messrs Chandulal Chunilal Shah, Vrajacharidas Maganlal Shah, Utsavlal Ram krishna Pandya, Dhairyalal Kashinath Pandya, Fulchand Vithaldas Shah and Mohanlal Narottamdas Shah, B A. It was chiefly due to their hard and disinterested work and particularly to the goodness of Utsavlal Pandya who gladly gave us all facilities for work at his place at Anand, that the Sannyâsa Nirnaya was ready for the press, before the Nirodha Lakshana was finished We sincerely thank them, and hope they will continue to give their valuable help Like Sevaphala and Nirodha Lakshana, this work also is printed from the funds supplied by Goswami Sree Jeevanalalajee of Porebunder, and our sincere thanks are due to His Holiness

With feelings of joy, we offer this fruit of our labour of love at the Lotus-feet of Lord Sree Krishna

BOMBAY,
*March, 1918*

Mûlachandra T Telivala
Dhirajlal V Sanklia

---

## लालूभट्टकृतसंन्यासनिर्णयशङ्कानिरासः ।

हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।
अन्यथा मातरो बालान् न स्तन्यैः पुपुषुः क्वचित् ॥

हरि. अत्र विरहानुभवे बाधां प्रतिबन्धं कर्तुं न शक्नोति, न समर्थो भवति । अपरे कालादय. कुतः करिष्यन्तीत्यर्थं । ननु कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य भगवतोऽसामर्थ्यकथनं सर्वशास्त्रविरुद्धमित्याशङ्कां परिहरन्तो न भगवतः शक्तिन्यूनत्वप्रयुक्तमसामर्थ्यमपि तु भक्तवात्सल्यकृतमिति दृष्टान्तेनाहु· — अन्यथे-त्यादिना । मातर बालान् स्तन्यैरेव पुपुषु· । अन्यथा अन्यप्रकारेण न पुपुषुरित्यर्थं । यथा पुत्रवात्सल्य-परवशीभूता गवां मातरो बालानां स्तनदानेनैव पोषणं हितरूप चक्रु , अन्यथा प्रकारान्तरेण न चक्रु , एवं सृष्टिमारभ्य व्यवस्थितं, तथा भगवानपि भक्तवात्सल्यपरवशो भक्तस्य परमेष्टरूपं विरहानुभवं साधयति, नर्मान्विरहानुभवे प्रतिबन्ध करोतीति भाव । केचित्त्वत्र बालान् न स्तन्यै पुष्येयुरिति बहुमुचितं, न तु विप्रयोग उचित इत्याहु । तन्न । पूर्वोपस्थिता ग्रन्थस्थाने विप्रयोगस्य निरवद्यत्वात् ।

---

# संन्यासनिर्णयना सम्बन्धी कांइक.

ષોડશ ગ્રન્થમાંના સેવાફલ અને નિરોધલક્ષણ મુદ્રિત કરીને વૈષ્ણવોને નિવેદન કર્યા છે. હવે સંન્યાસનિર્ણય તેવી જ રીતે આઠ વિવરણસહિત અને ગુર્જરાનુવાદસહિત પ્રકટ થાય છે. સંન્યાસનિર્ણય ગ્રન્થ શ્રીમદાચાર્યજીએ નિજસેવક નરહરિ સન્યાસીને સંન્યાસનું શુદ્ધ સ્વરૂપ ઉપદેશવાને પ્રકટ કર્યો છે. આ સંન્યાસનું સ્વરૂપ નીચે પ્રકારે સ્પષ્ટ થાય છે.




અર્થાત્, કર્મમાર્ગે વા જ્ઞાનમાર્ગમાં સન્યાસ લેવો અયુક્ત છે, જ્યારે ભક્તિમાર્ગમાં સાધનસિદ્ધ્યર્થ પણ સુખદાયક નથી. અનન્ત વર્ષથી પ્રભુનો આપણને જે વિયોગ થયો છે, તે વિરહના ક્લેશાનન્દના અનુભવને માટે જો પ્રભુપ્રેરણા થાય તો તેવો સંન્યાસ ઇષ્ટ છે; નહિ તો આચાર્યજીએ દર્શાવેલી પ્રણાલિકાથી તનુવિત્તની સેવા જ કરીને સ્વમર્યાદામાં રહેવું. આવું આ ગ્રન્થનું સૂક્ષ્મ તાત્પર્ય છે.

આ ગ્રન્થમાં આઠ ટીકાનો સંગ્રહ કર્યો છે:— ૧ શ્રીગોકુલનાથજી, ૨ શ્રીરઘુનાથજી, ૩ શ્રીગોકુલોત્સવજી, ૪ ચાચાશ્રીગોપેશ્વરજી, ૫ શ્રીગોપેશ્વરજી, ૬ શ્રીપુરુષોત્તમજી, ૭ શ્રીવલ્લભજી, અને ૮ ચાચાશ્રીગોપેશજી. આ સર્વ ટીકાઓ સંસ્કૃતમાં છે પ્રત્યેક ટીકાની અનેક પ્રતિઓ પ્રભુકૃપાથી પ્રાપ્ત થઇ, તદનુસાર યથાશક્તિ યથામતિ શોધીને તે સર્વ મુદ્રિત કરી છે સંસ્કૃત નહિ જાણનારા વૈષ્ણવોને માટે શ્રીપુરુષોત્તમજીની ટીકાનું ગુર્જર ભાષાન્તર પણ આપ્યું છે. અમને આશા છે કે આથી સંસ્કૃતજ્ઞ કે સંસ્કૃતાનભિજ્ઞ સર્વ વૈષ્ણવો આ ગ્રન્થનો આદર કરીને અમારા સ્વલ્પ પ્રયત્નને સફલ કરશે

પંડિત ગટ્ટૂલાલનો પુસ્તકસંગ્રહ, નડીઆદની ડાહીલક્ષ્મી પુસ્તકાલયસ્થ શાસ્ત્રી ભાઇલાલનો સંગ્રહ, ડેક્કનકોલેજમાંનો સરકારી સંગ્રહ, ગુજરાતી પ્રેસનો સંગ્રહ, શ્રીમદ્વૈષ્ણવ પરિષત્સંગ્રહ, શ્રીવલ્લભલાલજી, શ્રીજીવનલાલજી, શ્રીગોવર્ધનલાલજી, શ્રીવ્રજરત્નજી, ગોસ્વામિની શ્રીકૃષ્ણપ્રિયાજી, શાસ્ત્રી વસન્તરામ, શાસ્ત્રી ભદ્રશંકર, શાસ્ત્રી કલ્યાણજી, અને કીર્તનકાર બલદેવદાસ તરફથી આ ગ્રન્થનું સાહિત્ય અમને મળ્યું છે. આ સર્વનો તેમની નિરપેક્ષ સાહાય્યમાટે અમે અન્તઃકરણથી આભાર માનીએ છીએ.

પુસ્તક તથા ટીકાઓ લિખનમાં હરસનલાલ રામકૃષ્ણ પંડ્યા, ચંદુલાલ ચુનીલાલ શાહ, મજ્યરીદાસ મગનલાલ શાહ, ધીરજલાલ કાશીનાથ પંડ્યા, ફુલચંદ વિઠ્ઠલદાસ શાહ, મોહનલાલ નરોત્તમદાસ શાહ બી. એ વગેરેનો ઉત્સાહપૂર્વક નિરુપધિ પરિશ્રમ પણ ધન્યવાદને પાત્ર છે. આણંદના અમારા મિત્ર હરસનલાલ રામકૃષ્ણ પંડ્યાએ અમને કાર્ય કરવાને સર્વ પ્રકારની અનુકૂલતા પોતાને ત્યાં કરી આપી તેથી તેમનો તથા ભગવદીય મોતીભાઇનો ઉપકાર વિસ્મરણીય નથી આ ગ્રન્થ આટલા સ્વલ્પ સમયમાં, પ્રતિબંધો હોવા છતાં, શ્રીકૃષ્ણચન્દ્રચરણકમલમાં અર્પવાને અમે શક્તિમાન્ થયા છીએ, તેનું મુખ્ય કારણ ગોસ્વામિશ્રીજીવનલાલજીનું નિઃસંકોચ દ્રવ્યાદિનું સાહાય્ય, અને નિત્યલીલાસ્થ મહાનુભાવીઓનો કરુણાકટાક્ષ, તથા વિદ્યમાન મહાનુભાવીઓનો સદ્ભાવ જ છે.

મુંબઈ,
વસન્તોત્સવ.
૧૯૭૪.

મૂલચન્દ્ર તેલીવાલા.
મૈયેલાલ સાંકલીયા.

# ग्रन्थसङ्ग्रहपरिचयः ।

१. सर्वविवरणाधारतः संन्यासनिर्णयो मुद्रितोऽस्माभिः, तत्र विद्यमानाः पाठभेदा अपि दर्शिताः ।

२. श्रीमद्गोकुलनाथप्रकटितविवरणस्य दशपुस्तकान्युपलब्धानि । तत्र एकं श्रीवल्लभलालानां शुद्धं प्राचीनं सं० १७३५ आश्विनशुक्लपञ्चम्यां लिखितम् । द्वितीयं श्रीव्रजरत्नानाम्, नूतनम् । तृतीयं श्रीजीवनलालानां नूतनं प्रायः शुद्धम् । चतुर्थं श्रीनृसिंहलालतनयश्रीगोवर्धनलालानां प्राचीनं, प्रायः शुद्धम् । पञ्चमं गोस्वामिनीश्रीकृष्णप्रियाभिर्दत्तम् । षष्ठं पं० गट्टूलालसङ्ग्रहतः प्राप्तं, प्राचीनं प्रायः शुद्धम् । सप्तमं 'गुजरातीप्रेस'सङ्ग्रहतः प्राप्तम् । इदं स्तम्भतीर्थस्थश्रीखिभद्रशङ्करस्य । दशमं श्रीमद्वैष्णवपरिपत्सङ्ग्रहतः प्राप्तम् ।

३. श्रीमद्रघुनाथप्रकटितविवरणस्य पुस्तकद्वयमुपलब्धम् । एकं पं० गट्टूलालसङ्ग्रहतः प्राप्तम्, प्राचीनं शुद्धं च । द्वितीयं श्रीजीवनलालानाम्, नूतनं प्रायः शुद्धम् ।

४. श्रीगोकुलोत्सवप्रकटितविवरणस्य पुस्तकत्रयं प्राप्तम् । इदं पं० गट्टूलालसङ्ग्रहस्थम्, एकं प्राचीनं, शुद्धं च । द्वितीयं नूतनमशुद्धं च । तृतीयं 'गुजराती प्रेस' सङ्ग्रहतः प्राप्तम्, प्रायः शुद्धम् ।

५. चाचाश्रीगोपेश्वरकृतटीकायाः पुस्तकमेकमेवोपलब्धम् । प्रायः शुद्धं, परन्तु क्वचित् सन्दिग्धम् । इदं पुस्तकं श्रीद्वारकेश्वराणां, संवत् १८१० वर्षे लिखितं, पं० गट्टूलालसङ्ग्रहतः प्राप्तम् । नैवेयं टीका श्रीघनश्यामतनयचाचाश्रीगोपेशानाम् ।

६. श्रीगोपेश्वरकृतविवृतेः पुस्तकत्रयं प्राप्तम् । एकं शास्त्रिवसन्तरामतः प्राप्तम्, संवत् १७२१ आश्विनामावास्यायां लिखितम्, शुद्धम् । द्वितीयं पं० गट्टूलालसङ्ग्रहतः प्राप्तम्, प्राचीनं प्रायः शुद्धम् । तृतीयं श्रीमद्वैष्णवपरिषत्सङ्ग्रहतः प्राप्तम्, नूतनम् ।

७. श्रीमत्पुरुषोत्तमप्रकटितविवरणस्य पुस्तकचतुष्टयं प्राप्तम् । एकं 'डक्कन कॉलेज' हस्तलिखितसङ्ग्रहस्थम्, प्राचीनमतीवशुद्धम् । इदं पुस्तकं श्रीमत्पुरुषोत्तमैर्निजहस्ताक्षरैः शोधितमित्यस्माकं प्रतिभाति, क्वचित् क्वचित् विवरणे शुद्धलिखिताः फक्किका हरितालेन लुप्त्वा, नूतना अधिकाः शुद्धाः फक्किकाः निवेशिताः । अत्र पत्रद्वयं त्रुटितम् । द्वितीयं पुस्तकं श्रीजीवनलालानाम्, नूतनं, प्रायः शुद्धम् । तृतीयं श्रीमद्वैष्णवपरिषत्सङ्ग्रहतः प्राप्तम्, नूतनं, न केनापि वाचितं शोधितं वा । चतुर्थं श्रीवल्लभलालानाम्, नूतनं, अशुद्धं च । अस्मिन् पुस्तके क्वचित् कल्पिताः पाठा निवेशिता दृष्टाः । श्रीपुरुषोत्तमकृततद्विवरणे अन्ते 'यथाविधि संन्यासं गृहीत्वा, अवेलप्रमात् कारमागता' इति नियमितेषु अस्मद्दृष्टेषु पुस्तकेषु वर्तते । श्रीवल्लभलालतः प्राप्ते पुस्तके 'यथाविधि नारायणेन्द्रतीर्थतः संन्यासं गृहीत्वे'त्यादि वर्तते । अत्र 'नारायणेन्द्रतीर्थतः' इत्यधिकं केन कृतं, कुतः कथमागतम्, तन्न निश्चीयतेऽस्माभिः । एतद्रीत्या विष्णुस्वामिपरम्परासमर्थनं तु तस्य यथार्थ्यं किञ्चिल्लीकरोतीत्यविवादम् । श्रीमत्पुरुषोत्तमकृताचार्यचरित्रोपन्यासः श्रीद्वारकेश्वरकृतदीक्षाश्लोकविवरणेऽप्यस्ति, तत्रापि 'नारायणेन्द्रतीर्थतः' इति न विद्यते । एतेन येन केनचित् प्रमत्तः पाठः श्रीपुरुषोत्तमकृतविवरणे निक्षिप्तः, तेन साहसमेव कृतमिति मन्यामहे ।

८. श्रीवल्लभभट्टकृतटीकाया एकमेव पुस्तकमुपलब्धम् । प्राचीनमतीवशुद्धम्, श्रीवल्लभलालानाम् ।

९. श्रीघनश्यामतनयचाचाश्रीगोपेशकृतटीकायाः पुस्तकचतुष्टयमुपलब्धम् । एकं भाईलालशास्त्रिणः, तत्पुत्रात् प्राप्तम्, प्राचीनम्, शुद्धम् । द्वितीयं पं० गट्टूलालसङ्ग्रहतः प्राप्तम्, प्रायोऽशुद्धम् । पुस्तकद्वयं श्रीव्रजरत्नानाम्, उभयमपि नूतनम्, एकं शोधितत्वाच्छुद्धम्, द्वितीयमशुद्धम् ।

अस्य विवरणस्य यद्यपि पुस्तकचतुष्टयमुपलब्धमस्माभिस्तथापि सर्वाण्यपि नामरहितानि, अतः केः महानुभावैरिदं विवरणं प्रकटितमिति निश्चेतुं प्रथमं न प्रभवामः । आचार्यापेक्षेयं टीका चाचाश्रीगोपेशनाम्नेत्यस्माकं हृदि प्रतिभाति स्फुरितम् । पुस्तकविवरणभाषायाः साम्यं अस्मन्मुद्रितचाचा-

श्रीगोपेशकृतसेवाफलनिरोधलक्षणविवरणाभ्यां सहास्यन्तं वर्तते । श्रीपुरुषोत्तमकृतैतद्विवरणोपन्यासेन निःसन्दिग्धतयेदं चाचार्यश्रीगोपेशानामेवेति निश्चीयते । विशेषं तु प्रसंगाद्वक्ष्यत इति ।

अस्मिन् पुस्तकसञ्चये पं० गट्टूलालसंस्थायाः 'कार्याध्यक्ष काशीदास नारायणदास दलाल, बी. ए., एल. एल. बी., मुख्यट्रस्टीश्रेष्ठीत्रिभुवनदास,' इत्येतेषां महत्युपकृतिः । गोस्वामिश्रीजीवनलालानां, गोस्वामिश्रीनृसिंहलालतनयश्रीगोवर्धनलालानां कल्याणशास्त्रिणश्च, गोस्वामिश्रीवल्लभलालानां, गोस्वामिश्रीव्रजरत्नानां, गोस्वामिनीश्रीकृष्णप्रियाणां, बलदेवदासस्यापि महत्युपकृतिः । शास्त्रिवसन्तराम हरिकृष्ण, शास्त्रिभद्रशङ्कर जयशङ्कर, तनसुखराम मन.सुखराम त्रिपाठी बी. ए., मदनलाल इच्छाराम देसाई. बी. ए, डॉ. एस्. के. बेलवलकर. एम्. ए., पी. एच्. डी., इत्येतैः सहर्षं प्राचीनहस्तलिखितपुस्तकप्रदानेन वयमत्यन्तमनुगृहीताः । श्रीमद्वैष्णवपरिषन्मन्त्रिवाडीलालस्यापि तथैवोपकृतिः । 'चम्पुलाल चुनीलाल शाह, व्रजचरीदास मगनलाल शाह, उत्सवलाल रामकृष्ण पण्ड्या, धैर्यलाल काशीनाथ पंड्या, फुलचन्द विठ्ठलदास शाह, मोहनलाल नरोत्तमदास शाह. बी. ए.' इत्येतेषां पुस्तकलिखने महत्युपकृतिः । अस्य यावत्प्राप्यविवरणसमेतस्य संन्यासनिर्णयस्य मुद्रणव्ययो गोस्वामिवर्यश्रीजीवनलालैः सहर्षं कृत इति तेषामुपकृतिं वयं सविनयं स्मरामः । प्रार्थयामहे चान्येऽपि गोस्वामिनः श्रीमन्तो वैष्णवाश्चैवमनुकुर्युरिति । एतेषां गोस्वामिवर्याणां कृपयैव संन्यासनिर्णयोऽष्टविवरणसमेतः मुद्रितः साम्प्रदायिकानां सुगमो भविष्यतीति ।

## विवरणकृतां परिचयः ।

१. तत्रादौ श्रीमद्वल्लभाचार्यप्रकटितः संन्यासनिर्णयोऽष्टविवरणसमेतः सम्मुद्र्यते । स्वीयानुमहार्थमाचार्यैः स प्रकटीकृत इति । आचार्याणां प्रादुर्भावस्तु १५३५ वर्षे चैत्रकृष्ण एकादश्यां रविवासरे । तेषां चरित्रादिकं तु साम्प्रदायिकवार्तादिषु प्रसिद्धमिति नेह विस्तरः । षोडशग्रन्थेष्वयं संन्यासनिर्णयश्चतुर्दशसङ्ख्यो भजते ।

२. प्रथमं मुद्रितं विवरणं श्रीमद्वल्लभानाम्, श्रीमद्गोकुलनाथानाम् । श्रीमद्गोकुलनाथास्तु श्रीमद्विठ्ठलेश्वरप्रभुचरणानां चतुर्थसूनवः मार्गशीर्षशुक्लसप्तम्यां १६०८ वर्षे काशीसमीपस्थाडेलग्रामे प्रादुर्भूताः । पौषकृष्णनवम्यां १६९७ वर्षे श्रीमद्गोकुले सिद्धिं गताः । श्रीमत्प्रभुचरणलालेषु इमे अतिप्रसिद्धाः । चिद्रूपादीनां संन्यासपाषण्डिनां मुखमर्दनं कृत्वा मोगलराजजहांगिरं च वशीकृत्य स्वमार्गरक्षार्थमेत एव कृतवन्तः । निजमहायत्नेन सतां कण्ठे माला च तैरेव सुरक्षिता । तातांशैकपरायणत्वं तु तेषामतीव प्रसिद्धम् । श्रीमदाचार्यप्रकटितश्रीमद्भागवतसुबोधिन्याः विशेषप्रचारस्तु तैरेव कृतः, अत एतेषां 'श्रीसुबोधिनीप्रवर्तकाः' इति नामापि प्रसिद्धम् । निजश्रीहस्ताक्षरयुतश्रीमत्सुबोधिनी कपडवणजे श्रीबहेनजीराजगृहमधुनाप्यलङ्करोति । साम्प्रदायिकवार्तादीनां प्रकटीकर्तारोऽपि त एव । स्वसम्प्रदायस्य प्रचारार्थं प्रवृत्त्यर्थं च गुर्जरभूमिरनेकवारं स्वचरणनलिनरजोभिर्मैः पवित्रीकृता । दक्षिणे पुष्पपत्तनस्यैकामेकवारं तदर्थमेव गताः, परन्तु तत्रत्यान् कृष्णप्रेमरसानधिकारिणः दृष्ट्वा ततो न्यवर्तन्त । दाक्षिणात्याः 'भैंसा' इत्युपहासस्तैरेव कृतः । तद्वार्ताप्रसङ्गादिषु च प्रसिद्धः । श्रीसर्वोत्तमस्तोत्रश्रीवल्लभाष्टकसिद्धान्तमुक्तावलिपुष्टिप्रवाहमर्यादासिद्धान्तरहस्यान्तःकरणप्रबोधचतुःश्लोकीविवेकधैर्याश्रयभक्तिवर्धिनीत्यादीनां ग्रन्थानां विवृतयः तेषां नयनगोचरीभवन्ति । अस्मन्मुद्रितसेवाफले अन्तिमं नामरहितं विवरणमपि तेषामेवेति तत्कृतश्रीसर्वोत्तमस्तोत्रटिप्पणीकोपन्यासात् ज्ञायते । 'विबुधेश्वरः' इत्यस्य विवरणे एतत्सेवाफलविवरणस्योपन्यासो वर्तते । श्रीकल्याणभट्टकृतकल्लोले व्यारास्थश्रीगोपालदासकृतमालाप्रसङ्गे च तेषां चरित्रादिकं सुविस्तृतम्, विशेषजिज्ञासुभिस्तत्रैवावलोकनीयम् ।

२. द्वितीयं मुद्रितं विवरणं श्रीमद्रघुनाथानाम् । एते श्रीमद्रघुनाथास्तु श्रीमद्विठ्ठलेश्वरप्रभुचरणानां पञ्चमसूनवः कार्तिकशुक्लद्वादश्यां १६११ वर्षे प्रादुर्भूताः । तेभ्यो विद्यादानं श्रीमद्गोकुलनाथैः कृतमिति परम्परातो ज्ञायते । तद्वंशे च रसाब्धिकाव्यकर्तारः श्रीदेवकीनन्दनाः श्रीसुबोधिनीलेखकृतश्च

श्रीवल्लभाः प्रादुर्भूताः । चतुर्थलालश्रीमद्गोकुलनाथवत् तेषां पितृभक्तिरपि निरुपमा । षोडशग्रन्थोपरि तेषां व्याख्यानानि दृग्गोचरीभवन्ति । श्रीवल्लभाष्टकश्रीमधुराष्टकोपरि तेषां व्याख्यानमुपलभ्यते । भक्तिहंसभक्तिहेतू च तैः स्वकृतव्याख्यया समलंकृतौ । श्रीपुरुषोत्तमनामसहस्रमपि तैः नामचन्द्रिकया सटीकृतम् । तेषां भाषासारल्यं त्वत्यन्तं वर्तते । रमणीयानि तत्प्रकटितस्तोत्राण्यपि दृश्यन्ते ।

३. तृतीयं व्याख्यानं श्रीगोकुलोत्सवानाम् । इमे श्रीगोकुलोत्सवाः श्रीमत्प्रभुचरणद्वितीयकुमारश्रीगोविन्दरायाणां द्वितीयसूनवः, श्रीमत्कल्याणरायाणामनुजाः, श्रीमद्धरिरायाणां पितृव्यचरणाः, संवत् १६३४ वर्षे ज्येष्ठकृष्णचतुर्थ्यां प्रादुर्भूताः । षोडशग्रन्थोपरि तेषां व्याख्यानानि मिलन्ति ।

४. चतुर्थं व्याख्यानं चाचाश्रीगोपेश्वराणाम् । के इमे श्रीगोपेश्वरास्तन्निश्चेतुं नैव शक्यतेऽस्माभिः । यद्यपि ग्रन्थान्ते अस्माभिः श्रीघनश्यामतनयचाचाश्रीगोपेशकृतमिति लिखितम्, तथापि नैतद्युक्तमेवेति प्रतिभाति । एतद्विवरणस्यैकमेव पुस्तकं मिलितम्, तदुपरि एवं लिखितम्:—'चाचाजीश्रीगोपेश्वरजीकृता टीका, संवत् १८१०, श्रीद्वारकेश्वराणामिदम्' । यद्यपि एतद्विवरणं प्राचीनं, तथापि चाचाश्रीगोपेशानां श्रीघनश्यामतनयानां तु नैव । अत्रान्ते मुद्रितं विवरणमेव तेषामिति श्रीपुरुषोत्तमकृततदुपन्यासाद् भाषासाम्याच्च निश्चीयते ।

५. पञ्चमं विवरणं श्रीगोपेश्वराणाम् । इमे श्रीगोपेश्वराः श्रीकल्याणरायाणां सूनवः, श्रीमद्धरिरायाणामनुजाः, संवत् १६४९ ज्येष्ठशुक्लद्वादश्यां प्रादुर्भूताः । शिक्षापत्राणि एतेषु श्रीहरिरायैः प्रेषितानि । शिक्षापत्राणां भाषाव्याख्यानं तत्कृतमेव सम्प्रदाये प्रचलति । वादकथानामकोऽन्यो ग्रन्थोऽपि तेषां वर्तते, पुष्टिभक्तिसुधायां प्राङ्मुद्रितश्च । एतेषां भाषा किञ्चिद्विलक्षणा वर्तते । तद्ग्रन्थान्ते श्लोकोऽयं:—श्रीभिर्गोपाळदासस्य श्रीगोकुलनिवासिनः । गोपेश्वरेण विवृतिः कृता संन्यासनिर्णये ।

६. षष्ठं विवरणं दशदिगन्तविजयिश्रीमत्पुरुषोत्तमचरणानाम् । श्रीमदाचार्यतः पुरुषगणनया सप्तमीं संख्यां विभूषयन्तो भाद्रपदशुक्लदशम्यां १७१४ वर्षे प्रोद्भूताः । तेषां विवरणं शास्त्रार्थरीत्या मुमुक्षुबोधकमिति प्रतिभाति । विशेषतस्तेषां चरित्रजिज्ञासुभिः पुष्टिभक्तिसुधेति मासिकपत्रिकायाः पञ्चमवर्षस्य तृतीयाङ्को द्रष्टव्यः । वादग्रन्थं ग्रन्थान्तरं वा तेषां चरित्रादिकमस्माभिस्तत्रैव निवेदितमिति न पुनरनूद्यते ।

७. सप्तमं विवरणं काकाश्रीवल्लभानाम् । इमे श्रीवल्लभाः श्रीमत्प्रभुचरणपञ्चमपुत्रश्रीरघुनाथचतुर्थीं संख्यां विभूषयन्तः सं० १६२९ वर्षे कार्तिककृष्णद्वादश्यां प्रादुर्भूताः । श्रीविठ्ठलरायाणां कनीयासः सूनवः । षोडशग्रन्थोपरि तेषां विवरणानि सुबोधिन्यनुसारीणि दृश्यन्ते । श्रीसुबोधिनीलेखस्यापि प्रणेतारस्त एव । अणुभाष्योपरि व्याख्यानं तैः प्रकटीकृतमिति लालूभट्टकृतोपन्यासादवगम्यते । एतैः पर्यन्तं विभागत्रयं कृतम् । प्रथमे विभागे श्रीमद्गोकुलचन्द्रं सेवमानाः श्रीगोकुले विराजितवन्तः । द्वितीये विभागे कदम्बखण्ड्यां निवसन्तः ग्रन्थान् विवरणानि च योजितवन्तः । तृतीये विभागे सदुपदेशैः जीवानुद्धर्तुं भारतवर्षं पर्यटन्तः सेवां स्वीकृतवन्तः । विशेषं तु पुष्टिभक्तिसुधायाः सप्तमवर्षस्य नवमाङ्के प्रपञ्चितं, जिज्ञासुभिस्तत्रैवावलोकनीयम् ।

८. अष्टमं विवरणं श्रीघनश्यामतनयचाचाश्रीगोपेशानामेव । इमे श्रीगोपेशाः श्रीमत्प्रभुचरणानां सप्तमपुत्रश्रीघनश्यामानां सूनवः । षोडशग्रन्थोपरि बहुधैषां टीका दृश्यन्ते । संस्कृतनिरोधलक्षणविवरणं त्वपुनर्नवाभ्यासि. प्रकटितम् । भाद्रपदकृष्णपञ्चम्यां १६५२ वर्षे प्रादुर्भूताः ।

अत्रास्माभिरुपलब्धानि अष्टविवरणानि प्रकटीक्रियन्ते, एतान्येव प्रसिद्धानि, यद्यपि एतावन्त्येव विवरणानि, नैवाधिकानीति नैव शक्यते वक्तुमस्माभिः । अतो यदि अत्रामुद्रितसंन्यासनिर्णयव्याख्यानं केषाञ्चिन्महानुभावानां पुस्तकसङ्ग्रहे विद्येत चेत्, तदा ते कृपया यदि तद्ग्रन्थप्रकाशकं ज्ञापयिष्यन्ति, तदा तदपि सोपकारं स्वीकृत्य मुद्रयिष्यामः । प्रार्थयामहे च विद्वांसः अस्मदीयां प्रार्थनां कृपया स्वीकृत्य साम्प्रदायिकसेवां कर्तुं स्वर्जीवनं च सफलयितुमुत्सुका भविष्यन्ति ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।
स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥
कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।
अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥
श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥
विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथाऽस्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥

---

१. प्रवृत्त्यर्थमिति पाठः । २. कामत इति पाठः । ३. सर्वथेति पाठः ।

तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत् प्रकटः स्वात्मा वह्निवत् प्रविशेयदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोयं परित्यागः प्रेम्णा सिध्यति नान्यथा ।
ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥
ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥
अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।
पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ।
भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥
अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।
स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥१८॥
हरिरत्र न शक्नोति कर्तुं बाधां कुतोपरे ।
अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥
ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।
आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥
तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।
अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥२१॥
इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।
संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥

इति श्रीमद्वल्लभाचार्यचरणप्रकटितः संन्यासनिर्णयः समाप्तः ।

---

१. तादृशा इति पाठः । २. स्थितिरिति पाठः ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीमद्गोकुलनाथविरचितविवरणसमेतः ।

---

नमामि तातचरणान् स्वीयानां सर्वकामदान् ।
यैः कृतः स्वामिधानार्थः प्रकटः कृपया मयि ॥ १ ॥

स्वमार्गीयपरित्यागं वक्तुं परित्यागविचारं प्रतिजानते, तद्धेतुमाहुः **पश्चात्तापनिवृत्त्यर्थमिति** ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

भक्तिमार्गीयपरित्यागेतरसर्वपदार्थान् विचार्य त्यागविचाराभावजनितस्वपश्चात्तापनिवृत्त्यर्थं भक्तिमार्गीयपरित्यागविचारमारभन्ते **पश्चात्तापनिवृत्त्यर्थमिति** । उक्तपश्चात्तापनिवृत्त्यर्थं यः परित्यागः स विचार्यते, न तु विधीयते, विधाने विधिशेषत्वमापद्येतेति सर्वकर्तृकत्वमापद्येत, अत उक्तं विचार्यते । स्वरूपतः साधनतः फलतश्च तस्य विचारे परित्यागसामान्यादन्यमार्गीयस्य स्वविचार्यमाणस्य च तारतम्यज्ञापनार्थमन्यमार्गीयमप्याहुः **स मार्गद्वितये** इति । मार्गद्वयमेवाहुः **भक्तौ** मर्यादापुष्टिभेदभिन्नभक्तिमार्गे । मर्यादाभक्तौ श्रीमदुद्धवपृष्टेन भगवता 'मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च । इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः' इति त्यागो विशेषतः प्रोक्तः । पुष्टिभक्तिमार्गे रासमण्डलमण्डनाभिरपि 'सन्त्यज्य सर्वविषया' निति । तल्लीलायामेव चतुर्थाध्याये ताः प्रत्येव 'एवं मदर्थोज्झित'त्यत्र विशेषतस्त्यागः प्रोक्तः । ( ननूभयत्राप्यविशेषेण त्यागकथनादुभयोस्त्यागयोः साम्यमस्तीति चेत्, अत्र वदामः । यद्यपि मर्यादाभक्तिपरित्यागकथनेपि 'मदर्थेऽर्थपरित्याग' इति वाक्ये स्वप्रास्यर्थं परित्याग उक्तः, तद्वदेव फलप्रकरणचतुर्थाध्याये शुद्धपुष्टिमार्गीयभक्तस्वरूपनिरूपणे 'एवं मदर्थोज्झितलोकवेदस्वाना-'

---

१ पश्चात्तापस्वरूपमाहुः भक्तीति । भक्तिमार्गे च पदार्थपरित्यागादितरसर्वपदार्थानां परित्याग इत्यर्थः । तथा च लौकिकपदार्थपरित्यागो विचार्यत इति निष्कर्षः । २ नन्वित्यारभ्य वेदितव्येत्यन्तं विवरणं नोपलभ्यते कुत्रचित् ।

मित्युक्तं, तथापि मर्यादाभक्तिमार्गे त्यागस्य मदर्थित्वं यदुक्तं, तत्स्वग्राह्यभिप्रायेण, न तु स्वाभिलषितसिद्ध्यभिप्रायेण, तन्मार्गे तस्यासम्भावितत्वात्, पुष्टिमार्गीयभक्तस्वरूपनिरूपणे 'एवं मदर्थोज्झितलोकवेदस्वाना'मिति लोकवेदस्वपरित्याग उक्तः । तत्र यद्यपि स्वपदेन ज्ञात्यर्थात्मान उच्यन्ते, तत्रैतासां ज्ञात्यर्थपरित्यागस्य व्रज एव स्थित्याऽसम्भावितत्वात् स्वपदस्यात्मपर्यवसायित्वमेव सम्भवति । यद्यपि विद्यमाननित्यदेहानामात्मत्यागोऽसम्भावितः, तथाप्यात्मत्यागोक्तेरयमाशयः । यथा श्रुतौ 'आत्मने वै कामाय सर्वं प्रियं भवती'ति । यत्र प्रियत्वं तत्रात्मौपाधिकमेव, न तु प्रकारान्तरेण । एतासां यदात्मनि प्रियत्वं तन्न स्वात्मत्वेन, किन्तु स्वात्मनो भगवतः प्रीतिजनकहेतुत्वेन । अत एव भगवदमिलनदशायामात्मनोऽनुपयोगं ज्ञात्वा न मण्डनादिपुरस्कारस्तासाम्, उपयोगसमय एवात्मपुरस्कार इति नात्मनः स्वभावतः प्रियत्वम्, किन्तु भगवदुपयोगित्वेनेत्ययमेवात्मनस्त्याग इति शुद्धपुष्टिमार्गीयत्यागस्य मर्यादामार्गीयत्यागस्य च महदेव वैलक्षण्यमित्युभयत्रापि त्यागपदोपादानादुभयोः साम्यमस्तीत्याशङ्का निरस्ता वेदितव्या । ) ज्ञाने ज्ञानमार्गेऽपि विशेषतः प्रोक्तः । स च विशेषो 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुत्या विविदिषाविद्वद्भेदाभ्यां च तच्छास्त्रे निरूपित इति विशेषत इत्युक्तम् ॥ १ ॥

कर्ममार्गस्यापि मार्गान्तःपातात् तत्रापि परित्यागप्राप्तिमाशङ्क्य निषेधन्ति कर्ममार्गे न कर्तव्य इति ।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

तत्र 'यावज्जीवमग्निहोत्रं जुहोती'ति विधिना संन्यासग्रहणस्यानवसरपराहतत्वात् । यद्यप्यायुषश्चतुर्थो भागश्चतुर्थाश्रमेण नेय इति कुत्रचिदुक्तं तत्रापि निषेधमाहुः सुतरामिति । अस्यायमर्थः । कलिदोषेण मनुष्याणामल्पसामर्थ्यवत्त्वादायुषश्चतुर्थभागस्यातिजराव्याप्तत्वादाश्रमधर्मस्य चातिकष्टसाध्यत्वेनानिर्वाहाद्विपरीतफलसाधकत्वं भवेदिति सुतरां कलिकालत इत्युक्तम् । एवं ज्ञानमार्गे परित्यागस्य कर्तव्यत्वं निरूप्य तस्यैव कर्ममार्गे सोपपत्तिकमकर्तव्यत्वं च निरूप्य भक्तिमार्गे तस्य कर्तव्यप्रकारविचारमारभन्ते अत इति । यतः प्रकारभेदेन पूर्वं मार्गद्वयेऽपि कर्तव्याकर्तव्यभेदेन परित्यागो यद्यपि निर्दिष्टस्तथापि विचारारम्भे पूर्वं भक्तिमार्गस्योद्दिष्टत्वादतः कारणादादौ प्रथमतः भक्तिमार्गीयपरित्यागस्य प्राप्तत्वात्तस्य विचारणा विचारः क्रियत इत्यर्थः । विचारणा च कदा कर्तव्यः, कथं कर्तव्यः, किमर्थं कर्तव्य इति ॥ २ ॥

भक्तिमार्गे श्रवणादिसाधनसिद्ध्यर्थं कर्तव्यपक्षं निराकुर्वन्ति श्रवणादिप्रवृत्त्यर्थमिति ।

१ तुर्यो भागः । २ मर्यादापुष्टिमार्गत्यागयोर्न पाठः ।

**श्रवणादिप्रवृत्त्यर्थं कर्तव्यत्वेन नेष्यते ।**
**सहायसङ्गसाध्यत्वात्साधनानां च रक्षणात् ॥ ३ ॥**

**श्रवणादी**त्यारभ्य **नेष्यत** इत्यन्तेन । स परित्यागो नेष्यते, इच्छाविषयत्वेनापि नाङ्गीक्रियत इत्यर्थः। अनङ्गीकारे हेतुमाहुः **सहाये**ति । 'एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बर' इत्यादिवाक्यैस्त्यागिन एकाकित्वेनैव स्थितेरुचितत्वाच्छ्रवणादीनां **सहायसङ्गसाध्यत्वात्** सहायाः प्रेरकास्तेषां स्वस्वमतानुसारिश्रवणप्रेरकत्वात्तत्तन्मार्गीयश्रवणानां पुष्टिभक्तिमार्गविरोधित्वान्न भक्तिमार्गसाधकत्वम् । तथथा । मायावादिनां श्रुतीनामपि कल्पितत्वात्तत्प्रतिपाद्यब्रह्मधर्माणामपि व्यवहारोपयोगित्वेनापारमार्थिकत्वाद्ब्रह्मणो निर्धर्मकत्वाद्भक्तिमार्गविरोधित्वम् । नैयायिकमते तु 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि'रिति जगत्कर्तृकत्वेनेश्वरसिद्धावपि ज्ञानेच्छाप्रयत्नातिरिक्तधर्माभावाद्भक्तिमार्गविरोधित्वम् । मीमांसकानां निरीश्वरवादित्वादेव श्रोतव्याभावान्न श्रवणार्थिप्रेरणम्, तत्तन्मार्गीयप्रेरकप्रवृत्तौ तत्तन्मार्गीयैरेव सङ्गात्तन्मार्गीयश्रवणस्यैव सिद्धेस्तच्छ्रवणस्य भक्तिमार्गविरोधित्वाच्च भक्तिमार्गसाधकत्वम् । बाधकान्तराण्यप्याहुः **साधनानां च रक्षणा**दिति । **साधनाना**माश्रमसाधकधर्माणां स्नानशौचप्रणवजपादीनां रक्षणं यथोक्तप्रकारानुष्ठानम् । तेनैव सर्वकालव्याप्त्या न भक्तिमार्गीयश्रवणादिप्रवृत्त्यवसर इत्यनङ्गीकारः ॥ ३ ॥

**अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।**
**गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥**
**अग्रेऽपि तादृशैरेव सङ्गो भवति नान्यथा ।**
**स्वयं च विषयाक्रान्तपाषण्डी स्यात्तु कालतः ॥ ५ ॥**

किंच, **अभिमानात्** सर्वादरणीयत्वेन स्वस्मिन्नाश्रमश्रेष्ठत्वाभिमानात्तस्य च भक्तिसाधनविरोधित्वात्तथा। किंच, **नियोगा**दुक्तपरित्यागस्य शास्त्राज्ञाधीनत्वाद्वक्ष्यमाणस्य च तदनधीनत्वात्तथा । किंच, **तद्धर्मैश्च विरोधतः** । तद्धर्मैर्वक्ष्यमाणभक्तिमार्गीयपरित्यागधर्मैः, चकारात्स्वरूपेण च विरोधात्तथा। ननु श्रवणादिप्रवृत्त्यर्थं त्यागकर्तुर्भक्तिमार्गीयश्रवणाद्यज्ञानात्तज्ज्ञानहेतुकत्यागस्य तदङ्गत्वेन गौणत्वात्तस्याकर्तव्यत्वमस्तु । भक्तिमार्गीयश्रवणादिस्वरूपज्ञानवतः गृहस्थितौ व्यासङ्गेन तदनिर्वाहं ज्ञात्वा तत्परित्यागस्य मुख्यत्वमस्त्वित्यपि पक्षस्य वक्ष्यमाणत्यागवैजात्यात् सहेतुकमकर्तव्यत्वमाहुः **गृहादे**रिति । उक्तपरित्यागानन्तरमपि साधनदशायां भक्तिमार्गीयपूर्वभगवद्भावाभावात्तिरस्तन्निर्वाहस्याशक्यत्वेन चित्तचाञ्चल्यादेतन्मार्गविजातीयैरेव **सङ्गो भवति, नान्यथा** । अतादृशैः सङ्गो न भवतीत्यत **उत्तमग्रे**ऽपीति । विजातीयानां च विषयाक्रान्तचित्तत्वात्तत्सङ्गस्याल्पस्यापि पूर्वमानसनिर्वाहनाशकत्वेन स्वस्यापि विषयाक्रान्तिसम्भवात् कालक्रमेण पूर्वभावनिर्वाहाभावात्

कृतस्यापि त्यागस्य मुख्यफलासाधकत्वाद्भक्तिमार्गविचारे पाषण्डित्वमेवेत्यत उक्तं स्वयं चेति । विषयाक्रान्तपाषण्डीत्यत्र कर्मधारयः । तुशब्देनापाषण्डित्वपक्षनिरासः ॥४॥५॥

यद्यपि दुःसंगो भावस्थितौ बाधकस्तथापि भावस्थित्यर्थमेवोपक्रमाद् दुःसंगोऽपि कदाचिद्भावस्तिष्ठेदिति पक्षनिराकरणमाहुः विषयाक्रान्तदेहानामिति ।

विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

विषयाश्चक्षुरादिसर्वेन्द्रियविषयाः रूपरसादयस्तैराक्रान्तः व्याप्तः देहो येषां तेषां सर्वदा हरेरावेशो न भवति । यत एते प्रकारा बाधका अतः अत्र साधने भक्तौ साधनरूपभक्तिमार्गे भक्तिसाधनार्थं त्यागः सुखावहो न, पुरुषार्थसाधको न भवतीत्यर्थः । एवकारेण सर्वात्मना पुरुषार्थासाधकत्वमुक्तम् ॥ ६ ॥

तर्हि भक्तिमार्गे त्यागकथनस्य प्रयोजनाभावाद्वैयर्थ्यमायातीति चेत्तत्र प्रयोजनमाहुः विरहानुभवार्थमिति ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥

कौण्डिन्य ऋषिः अनन्तव्रतप्रस्तावे निरूपितः । गोपिकाः प्रसिद्धा इति न प्रकारविशेषोक्तिः । यद्यपि कौण्डिन्यस्य मर्यादामार्गीयत्वेनैतन्मार्गाज्ञानादेतन्मार्गोपदेष्टृत्वासम्भवाद्गुरुत्वं न सम्भवति, तथापि दत्तात्रेयवस्त्ववैराग्योपयोगितचद्धर्मशिक्षणेनोपदेष्टृत्वाभावेपि पृथ्व्यादिषु यथा गुरुत्वाङ्गीकारस्तथा कौण्डिन्यस्याप्यनन्तगुणश्रवणेन तन्मिलनार्तिजनितविप्रयोगभावजनितवैक्लव्येन च प्रश्नायोग्येष्वपि प्रश्नकरणात्सहसा तत्त्यागस्यैतन्मार्गीयत्यागस्य चैतावद्धर्मसाम्यात्कौण्डिन्येपि गुरुत्वकथनम् । गोपिकानामप्युपदेष्टृत्वाभावेपि तन्मार्गप्रकटनेन तद्भावानुरूपाचरणेन च 'दुहन्त्य' इत्यनेन विरहेण गृहत्यागेनापि गुरुत्वम् । गुरूनुक्त्वा साधनमाहुः साधनमिति । यदग्रे वक्ष्यमाणं तत्साधनमित्यर्थः । तदेवाहुः भाव इति । स्वस्मिन् गोपिकाभावानुरूपभावनया सिद्धभावस्य साधनत्वमिष्टम्, अन्यद् दानव्रतादिकमपि साधनत्वेन नेष्टमित्यर्थः ॥ ८ ॥

नन्वेतद्भावापत्त्यनन्तरभाव्यवस्थाया बुद्धिविपर्यासहेतुत्वेन दुःखहेतुत्वेन च प्राकृतत्वमित्याशङ्कां तद्भावस्वरूपनिरूपणेन परिहरन्ति विकलत्वमित्यादिना ।

**विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।**
**ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥**

विकलत्वं वैक्लव्यं तथा तद्वदेव अस्वास्थ्यं कुत्रापि स्वास्थ्याभावः प्रकृतिर्विप्रयोगभावस्य प्रकृतिः स्वाभाविको धर्मः प्राकृतं लौकिकं न भवतीत्यर्थः[1] । हि युक्तश्चायमर्थः । यत्रैकादशे श्रीमदुद्धवपृष्टेन भगवता श्रद्धानिरूपणप्रस्तावे आध्यात्मिकश्रद्धादीनां सगुणत्वं निरूप्य 'सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणे'ति स्वपूजाश्रद्धाया निर्गुणत्वं निरूपितं, ज्ञाननिरूपणप्रस्तावेपि कैवल्यादिज्ञानानां सगुणत्वं निरूप्य 'कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृत'मिति स्वविषयकज्ञानस्य निर्गुणत्वं निरूपितम् । यत्र मर्यादामार्गेपि स्वसम्बन्धित्वेन वस्तुनो निर्गुणत्वं, तत्र साक्षात्सर्वाधिकभक्तिमार्गीयभगवद्भावजधर्माणां निर्गुणत्वे किं वाच्यमिति हिशब्देनोक्तम् । ननु भगवत्सम्बन्धित्वेनालौकिकत्वान्निर्गुणत्वमस्तु, तथापि दुःखात्मकत्वात् कथं सर्वोत्कृष्टत्वमिति चेत्, सत्यं, दुःखत्वाभावादेवोत्कृष्टत्वं वदामः । तथा पुरुषोत्तमस्वरूपस्य 'रसो वै स'इति श्रुत्या रसात्मकत्वेन प्रतिपादितत्वाद्रसस्य च संयोगविप्रयोगात्मकत्वेन द्विरूपत्वाद्यथा विरोधिकृतक्षतनिष्पीडनताडनकोपादीनां दुःखात्मकत्वं, तथा क्षतत्वादिधर्मसाजात्येपि संयोगरसान्तःपातित्वेन परमानन्दरूपत्वं, तथा विप्रयोगरसजनितवैक्लव्यादीनामपि विप्रयोगरसात्मकत्वेन कर्मादिजन्यवैक्लव्यवत्प्रतीयमानत्वेपि रसरूपत्वान्न तेषां दुःखत्वम् । यथा आनन्दादप्यश्रूणि, शोकादप्यश्रूणि । न हि तत्राश्रुत्वसाजात्यादुभयोरेकफलत्वं सेत्स्यति, तथात्रापि तत्तद्धर्मसाम्येपि

[1] लौकिको भावो न भवतीत्यर्थः ।

न तत्तद्रूपत्वमिति सर्वमनवद्यम् । एतादृशावस्थापत्त्यनन्तरमपि व्यावहारिकज्ञानलौकिकविवेकादिगुणसत्त्वेपि को विरोध इति चेत्तत्राहुः ज्ञानमिति । ज्ञानं मर्यादामार्गीयं गुणास्तन्मार्गीया एव मनःस्वास्थ्यहेतुरूपाः । तस्य पूर्वोक्तभक्तिमार्गीयभाववतः एवं वर्तमानस्य पूर्वोक्तवैक्लव्यादिभावपूर्त्यैव स्थितस्य, बाधकाः रसानुभवे फले वा पूर्वोक्तभावनाशकत्वात्प्रतिबन्धकाः ॥ ९ ॥

ननु मार्गद्वयेपि त्यागस्याविशेषात्कथं ज्ञानमनःस्वास्थ्यादीनां ज्ञानमार्गे साधकत्वं भक्तिमार्गे बाधकत्वमिति शङ्कानिरासाय फलभेदेन समाधानमाहुः सत्यलोक इति ।

**सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।**
**भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥**

सत्यलोके ब्रह्मलोके 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतौ ज्ञानयुक्तसंन्यासिन एव ब्रह्मलोकस्थित्यनन्तरमेव ब्रह्मणा सह मोक्षनिरूपणाद्ब्रह्मलोकगतौ ज्ञानस्यैव मुख्यत्वान्मनःस्वास्थ्यव्यतिरेकेण ज्ञानस्थैर्याभावाज्ज्ञानमनःस्वास्थ्यादीनामेव फलसाधकत्वम् । भक्तिमार्गे साक्षात्पुरुषोत्तमसम्बन्धस्यैव फलत्वात्तस्य 'रसो वै सः' इति श्रुत्या रसात्मकत्वात् रसस्य च भावात्मकत्वात्तत्सम्बन्धे पूर्वोक्तविप्रयोगरसात्मकभावस्यैव साधनत्वात् ज्ञानमनःस्वास्थ्यादीनां तद्भावरूपसाधननाशकत्वाद्बाधकत्वमित्यत आहुः भावनेति । यत्र भक्तिमार्गे ॥ १० ॥

एवं मार्गद्वयेपि प्रकारभेदेन साधनफले निरूप्य ज्ञानमार्गे फलप्राप्तौ विलम्बहेतुं भक्तिमार्गे विलम्बाभावहेतुं च ज्ञानमार्गे प्रकारकथनेन भक्तिमार्गे दृष्टान्तकथनेन चाहुः तादृशा इति ।

**तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।**
**बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥**

न दारुदहनयोग्यत्वं, यदा मथनेन तत एव वहिः प्रकटीभूय पुनस्तेन सह सम्बध्यते, तदा सम्बन्धमात्रेणैव दारुत्वनिवृत्त्या दारुणोग्नित्वसिद्धिस्तथा भक्तहृदये विद्यमानत्वेपि मथनेनाग्निप्राकट्यवद्विगाढभावेन भावात्मकतया बहिःप्राकट्ये सति पुनरन्तःसम्बन्धः, तदा सम्बन्ध एव फलसम्बन्धहेतुः प्रतिबन्धं दूरीकरोतीति फलस्य रसात्मकत्वेन तदनुभवहेतुरसात्मकतां सम्पादयतीति एतत्प्रकारातिरिक्तस्यैतत्फलसाधकत्वाभावार्थमुक्तं न चान्यथेति । एवमस्मिन्मार्गे विलम्बाभावोपि सिद्धः ॥ ११½ ॥

ननु पूर्वोक्तविगाढभावस्य साक्षात्सङ्गाभावहेतुत्वेन सङ्गार्थे स्वरूपानुसन्धानस्यावश्यकत्ववद्गुणानुसन्धानस्याप्यावश्यकत्वेन साक्षात्स्वरूपेण स्वास्थ्यहेतोरसम्भावितत्वाद्गुणैरेव कथं स्वास्थ्यमिति चेत्तत्राहुः गुणास्त्विति ।

**गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥**

गुणानां धर्मरूपत्वाद्विप्रयोगस्य संयोगाभावहेतुत्वेन तदतिरिक्तस्य स्वास्थ्यहेतोरभावात्कदाचिदतितापेनाश्रयाभावाज्जीवनानुपपत्त्या गुणैरेव जीवनसम्पत्तिरित्यत उक्तं **जीवनार्थं भवन्तीति** । यथा 'तव कथामृत'मित्यत्र । हि युक्तश्चायमर्थः । परमानन्दविरहे जीवनानुपपत्तौ परमानन्दगुणानामेव जीवनसम्पादकत्वमुचितमित्यर्थो हिशब्देन द्योत्यते । तेन गुणानां यथाकथञ्चिज्जीवनमात्रसम्पादकत्वं, न तु स्वास्थ्यहेतुत्वमपि । तुशब्देन सङ्गातिरिक्तधर्मैः स्वास्थ्यपक्षो व्यावर्तितः । अथवा, ननु भगवद्विप्रयोगस्यातिप्रचुरतापात्मकत्वेनासह्यत्वात्क्षणमात्रमपि प्राणस्थित्यसम्भवस्वभाववत्त्वात् कुत्रचित्तत्कालमेव प्राणस्थित्यदर्शनम् यथा द्विजपत्न्याम् । क्वचित्तथात्वेपि प्राणस्थितिदर्शनमिति कथमेकस्यैव स्वभावविपर्यासेन कार्यद्वयकर्तृत्वमिति चेत्, सत्यम्, तस्य स्वभावविपर्यासाभाववत्त्वेपि यत्र शीघ्रं मनसो भगवद्गुणश्रवणेन व्यासङ्गाभावस्तत्र शीघ्रं पूर्वोक्तस्वकार्यकर्तृत्वम् । यत्र भगवदिच्छया शीघ्रं तद्गुणव्यासङ्गस्तत्र गुणानां तादृग्भावेपि जीवनैकस्वभावत्वेन तत्स्वभावत्वादेव प्राणस्थितिरित्यभिप्रेत्योक्तं **गुणास्त्विति** । ननु लोके गुण्यपेक्षया गुणानामल्पसामर्थ्यवत्त्वदर्शनात् कथं पूर्णानन्दरसात्मकपुरुषोत्तमविरहस्य क्षणमात्रमपि प्राणस्थितिविलम्ब्यासहिष्णोस्तस्मिन्समये तद्गुणानां कथं प्राणस्थितिहेतुत्वमिति चेत्, सत्यम् । यद्यप्यन्यत्र गुण्यपेक्षया गुणानामल्पसामर्थ्यमस्त्येव, तथाप्यत्र साक्षात्पुरुषोत्तमस्याचिन्त्यानन्दपूर्णस्य षड्गुणैश्वर्यसम्पन्नस्य गुणा अपि तादृशा एवेति मन्तव्यम्, गुणगुणिनोरेकरूपत्वात्, अन्यथा तद्विप्रयोगदशायां गुणानां जीवनसम्पादकत्वं न भवेत् । अत एव व्रजसीमन्तिनीभिः 'तव कथामृत' मित्यस्मिन् श्लोके षड्भिर्विशेषणैः कथायाः भगवत्तुल्यत्वं निरूप्यैव स्वप्राणस्थितिहेतुत्वं निरूपितम् । यदि स्वरूपतुल्यत्वं गुणानां न भवेत्तर्हि स्वसमाजस्य जीवनमेव न भवेत् । तस्मात्पुरुषोत्तमगुणानां गुणितुल्यत्वमेव, न तु न्यूनत्वमपि । तथापि गुणगुणिनोरेतावान् विशेषः ।

१ रुयोगेति पाठः । २ श्रवणेति पाठः ।

यथा गुणिसम्बन्धेन विप्रयोगजतापनिवृत्तिपूर्वकं सर्वेन्द्रियाप्यायनपूर्वकं च परमानन्दानुभवेन स्वास्थ्यं, तथा गुणैर्न सम्पद्यत इति तेषु गुणत्वकथनम् । एतदेव मनसि कृत्वा श्रीमदाचार्यैरुक्तं गुणास्तु सङ्गराहित्यादिति । सङ्गराहित्यं वियोगस्फूर्तिः । ननु कथं कुत्रचिच्छीघ्रं मनसो जीवनहेतुगुणग्रहणव्यासङ्गे भगवदिच्छा कुत्रचिन्नेति को हेतुरिति चेत्, सत्यम्, यत्र पूर्णविप्रयोगानुभवहेतुः पुनः पुनर्मूर्च्छाजागरणतादात्म्यादिसर्वभावानुभावनेच्छा तत्र गुणेषु शीघ्रं चित्तव्यासङ्गं कारयित्वा पश्चादविलम्बेन स्वप्राप्तिसिद्ध्यर्थं तद्भावस्वभावकार्यकरणम् । ये पूर्वमेवानुभूतसर्वविप्रयोगभावास्तेषां स्थितौ प्रयोजनाभावात्तत्कालमेव स्थित्यभाव इति नानुपपत्तिः काचित् ॥ १२ ॥

ननु कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य भगवदिच्छामात्रेणापि स्वास्थ्यसम्पादकत्वात्कथं न सम्पादयतीति चेत्, तत्राहुः भगवानिति ।

भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥

भगवत्पदेन षड्गुणैश्वर्यसम्पन्नः पुरुषोत्तम उक्तः । अस्मिन्मार्गे स्वस्यैव फलत्वात्स्वप्राप्तावेतद्भावस्यैव फलसाधकत्वाद्भावस्य च तापकस्वभावत्वात्तदभावे फलप्राप्त्यभावाच्च स्वस्यैव तदभावसम्पादकत्वकथनेन स्वस्यैव फलप्राप्तौ प्रतिबन्धकत्वेन च स्वस्य फलत्वमेव न सिध्येदित्यत उक्तं फलरूपत्वान्नात्र बाधक इष्यत इति । ननु स्वस्य फलात्मकत्वात्फलदित्सायाश्च सिद्धत्वात्स्वरूपेण तापापगमं मा करोतु, तथापि यत्किञ्चिदस्वास्थ्यं स्वं वचनेन कथं न निवारयतीति चेत्, तत्राहुः स्वास्थ्यवाक्यमिति । भगवता तादृशं प्रति यत्किञ्चित् स्वास्थ्यहेतुकमपि वाक्यं वचनं न कर्तव्यं न वक्तव्यमित्यर्थः । तत्र हेतुः । वचनेन यावांस्तापो निवर्तिष्यते तावानेव फलप्राप्तौ विलम्बो भविष्यतीति ज्ञात्वा वचनेनापि स्वास्थ्यं न करोति, यदि कुर्यात्तर्हि फलविलम्बे स्वयमेव हेतुः स्यादिति स्वस्यैव विरोधित्वं स्यादिति यत्किञ्चित्स्वास्थ्यहेतुभूतस्यापि वाक्यस्याकरणम् । ननु यत्किञ्चिद्विलम्बहेतुत्वे को दोष इति चेत्तत्राहुः दयालुरिति । दयालुत्वमसाधारणदयासमुद्रः । यदि यत्किञ्चिद्विलम्बसहिष्णुत्वमपि चेद्भवेत्, तदा तावद्दयांशस्य न्यूनत्वात्परमदयालुत्वं नोपपद्येतेति न तादृग्वाक्यकरणम् ॥ १३ ॥

एवं भक्तिमार्गीयसन्न्यासस्वरूपं साधनफलप्रकारविचारेणोपपाद्योपसंहरन्ति दुर्लभोयमिति ।

दुर्लभोयं परित्यागः प्रेम्णा सिध्यति नान्यथा ।

अयमुक्तप्रकारकः परित्यागः दुर्लभः, तपोदानव्रतादिसाधनैरप्यसाध्यः । ननु वस्तुमात्रस्य दानादिसाधनसाध्यत्वात्कथमस्य दानादिसाधनासाध्यत्वमिति चेत्, सत्यम् । यथा तत्तच्छास्त्रे तत्तत्फलसाधकत्वेन तानि तानि साधनानि गणितानि, स्वर्गकामस्य ज्योतिष्टो-

भवत् । नहि तथा भक्तिमार्गीयपरित्यागसिद्धौ साधनशास्त्रोक्तं किञ्चित्साधनमस्तीत्यस्य दुर्लभत्वम् । ननु वस्तुमात्रस्य साधनसाध्यत्वाद्भक्तिमार्गीयपरित्यागस्यापि वस्तुत्वेन निरूपणात्तस्य च शास्त्रोक्तदानादिसाधनासाध्यत्वकथनात् केन साधनेनास्य सिद्धिरिति चेत्, तत्र साधनमाहुः प्रेम्णेति । प्रेम्णा भगवत्परमासत्त्या सिध्यति । अथवा, प्रेम्णा भगवत्प्रेम्णा । ननु कथं जीवे भगवत्प्रेमेति चेत्, सत्यम् । एतन्मार्गप्रवर्तकाचार्यैस्तन्निष्कपटप्रपत्तिसन्तुष्टैः कृपया अस्यैतन्मार्गीयफलसिद्धिरस्त्वितीच्छया भगवन्निवेदनानन्तरं तस्मिन्नाचार्यकृपास्नेहं ज्ञात्वा स्वयमपि सन्तुष्टस्तस्मिंस्तत्फलदित्सया प्रेमयुक्तो भवतीति तेन प्रेम्णास्यापि तादृशत्वं सिध्यतीत्यत उक्तं प्रेम्णा सिध्यतीति । नान्यथा, अन्यथा एतदतिरिक्तसाधनैर्न सिध्यतीति सुष्ठूक्तं दुर्लभोयमित्यादि ॥ १३½ ॥

एवं भक्तिमार्गीयत्यागविचारं उपसंहृत्य ज्ञानमार्गीयपरित्यागोपसंहारमारभन्ते ज्ञानमार्गे त्विति ।

> **ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥**
> **ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।**
> **ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥**
> **अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।**
> **पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥**
> **सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ।**

त्विति पूर्वसमुच्चयः । संन्यासः ज्ञानमार्गीयः द्विविधोपि, विविदिषाविद्वद्भेदयुक्तः । सोपि साधनफलभेदेन विचारितः । द्वैविध्यमेव प्रकटयन्ति ज्ञानार्थमिति । ज्ञानार्थं ज्ञानरूपफलसिद्ध्यर्थमेकः । चकारसमुचितं द्वितीयमाहुः उत्तराङ्गं चेति । 'ज्ञानादेव हि कैवल्य'मिति वाक्यान्मुक्तेर्ज्ञानसिद्ध्युत्तरफलत्वाद्विद्वत्संन्यासस्योत्तराङ्गत्वं मुक्त्यङ्गत्वमित्यर्थः । यद्यपि ज्ञानमार्गीयद्वितीयसंन्यासस्य मुक्त्यङ्गत्वं तथापि 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभ' इति भगवद्वाक्यात् प्रपत्तेश्च भक्तित्वाद्भक्तिव्यतिरेकेण केवलज्ञानस्य मुक्त्यसाधकत्वात् । 'जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति वाक्याच्च ज्ञानस्य भक्तिप्रतिबन्धनिवर्तकत्वोक्त्या 'विना महत्पादरजोभिषेक' मिति वचनेन भक्तेश्च महदनुग्रहैकलभ्यत्वोक्त्या च यावत्पर्यन्तं न भक्तिसिद्धिस्तावत्पर्यन्तं पूर्णज्ञानस्यापि न मुक्तिरिति ज्ञापनायोक्तं सिद्धिर्जन्मशतैः परमिति । यथा बहुशब्दस्य सहस्राद्यनियमवाचित्वं तथा शतशब्दस्यापीति ज्ञापनाय जन्मशतैरित्युक्तं । परं निर्धारितमित्यर्थः । एवं ज्ञानिनां मुक्तिप्रकारमुक्त्वा ज्ञानस्य साधनसाध्यत्वज्ञापनाय साधनानि निरूपयन्ति ज्ञानमिति । यज्ञ आदिर्यस्य श्रवणस्य, ज्ञानस्य चित्तशुद्धिहेतुकत्वाद्यज्ञस्य च चित्तशोधकत्वोक्त्या

निष्कामकर्तृत्वमुक्तम् । यतस्तादृशयज्ञस्यैव चित्तशोधकत्वम् । तदनन्तरश्रवणस्य ज्ञानसाधकत्वं मतं निश्चितमित्यर्थः । अतः कलाविति । यतः स ज्ञानमार्गीयः संन्यासः एतावत्प्रयत्नसाध्यः अतः कलौ तावत्प्रयत्नसिद्धेरसम्भावितत्वात्तद्व्यतिरेकेण संन्यासस्य फलसाधकत्वाभावात् पश्चात्तापहेतुत्वमेवेति ज्ञापनायोक्तं पश्चात्तापायेति । नान्यथा उक्तफलाय नेत्यर्थः । ज्ञानमार्गीयसंन्यासस्यैतावत्प्रयत्नसाध्यत्वमपि ज्ञात्वा प्रतिष्ठार्थमपि चेत्कुर्यात्तदा यथोक्ताश्रमधर्मानिर्वाहात् संन्यासव्यवहारस्य वेषमात्रपर्यवसायित्वेन पाषण्डित्वमेव भवतीत्यत उक्तं पापण्डित्वं भवेदिति । चकारः सन्यासाश्रमधर्मानाचरणपापसमुच्चयार्थः । यतः ज्ञानमार्गीयसंन्यासस्यैतावद्दोषवत्त्वं तस्मात् कारणात् कलौ ज्ञाने ज्ञानमार्गे न संन्यसेत् संन्यासग्रहणं न कुर्यात् । यद्यप्याश्रमधर्मानिर्वाहात् कलौ ज्ञानमार्गीयसन्यासनिषेधः कृतस्तथापि कश्चिदाश्रमोत्कर्षं श्रुत्वा बलात्कारेणाप्याश्रमधर्मनिर्वाहं करिष्यामीति बुद्ध्या कुर्यादिति तस्यापि निषेधमाहुः सुतरामिति । सुतरामतिशयेन कलिदोषाणां प्रबलत्वात् प्राबल्यात् पूर्वकृतव्यवसायनाशकत्वात्, इति हेतोस्तस्याकर्तव्यत्वमेव स्थितं निश्चितमित्यर्थः ॥ १४, १५, १६ ॥

एवं ज्ञानमार्गीयसन्यासस्य बलवद्बाधकप्रतिबन्धकत्वेन सोपपत्तिकमकर्तव्यत्वमुपपाद्य त्यागाविशेषाद्भक्तिमार्गत्यागेऽपि तेषां बाधकत्वाशङ्कानिरासाय स्वत एव बाधकत्वं सम्भाव्य निराकुर्वन्ति । तत्र सम्भावनामाहु भक्तिमार्गेपीति ।

भक्तिमार्गेपि चेद्दोपस्तदा किं कार्यमुच्यते ॥ १७ ॥

अपिशब्दः पूर्वोक्तत्यागसमुच्चयार्थः । भक्तिमार्गेपि चेद्यदि तद्वदेव दोषसम्भावना तदा तद्दोषनिवृत्त्यर्थं किं कार्यमिति पूर्वपक्षसम्भावनमुक्त्वा तन्निरासं प्रतिजानते उच्यत इति । अथवा यदि भक्तिमार्गेपि दोषसम्भावना तदा तद्दोषनिवृत्त्यर्थं भक्तिमार्गीयेण किं कार्यं किं कर्तव्यं भवता उच्यत इत्यर्थः ॥ १७ ॥

प्रतिज्ञातं दोषाभावमुपपादयन्ति अत्रेति ।

**दृष्टान्तस्याप्यभावत** इति । ननु पूर्वोक्तैः कालादिभिर्नाशासम्भवेपि स्रक्चन्दनादीनां शीतलत्वेन तापहारकत्वात्तल्लेपादिना तापनिवृत्त्या स्वास्थ्येन तदितरानुसन्धानात्तद्भावशैथिल्यात्तापनिवर्तकमस्त्विति चेत्तत्राहुः **स्वास्थ्यहेतोः परित्यागादिति** । स्वास्थ्यहेतोश्चन्दनादेर्गृहत्यागेन सहैव **परित्यागात्** तैर्न सम्बन्धसम्भावनेति न तैर्नाशसम्भवः । अथवा, स्रगादीनां घर्मपित्तप्रकोपादिजनिततापनिवृत्तिहेतुत्वात्तन्निवर्त्यतापस्यात्रासम्भवान्न तेषामस्मिन् स्वास्थ्यहेतुत्वमित्यनुसन्धानेनाप्युक्तं स्वास्थ्यहेतोरित्यादि । तस्यायमर्थः । एतत्तापस्य भगवद्भावात्मकत्वाददृष्टस्य च तदजनकत्वेन तन्नाशकत्वस्याभाव इत्युक्तं **बाधः केनास्य सम्भवेदिति** । अस्य तापस्य केनापि बाधो नाश इत्यर्थः ॥ १८ ॥

एवं दृष्टादृष्टोपायानां नाशकत्वाभावमुक्त्वा भगवतोपि नाशहेतुत्वमाशङ्क्य निराकुर्वन्ति हरिरिति ।

**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**

यद्यपि **हरिः** सर्वदुःखहर्ता तथाप्यत्रास्मिन्मार्गे ईश्वरत्वाद्बाधां **कर्तुं न शक्नोति** । अत्रोपपत्तिः । यस्य यथा स्वरूपं तस्य तथात्वेन ज्ञानमीश्वरस्यैव भवति, अतः अस्य भावस्य नाशे हेत्वभावमपि जानाति, स्वस्य भक्तभावाधीनत्वमपि जानातीति स्वस्याशक्यत्वं ज्ञात्वा न प्रवर्तत इत्यत उक्तं **हरिरत्र न शक्नोति कर्तुं बाधामिति** । एवं भगवद्धेतुकबाधाभावं निरूप्य कैमुतिकन्यायेन तदितरहेतुकबाधाभावमाहुः **कुतोऽपर इति** । अत्र व्यतिरेके दृष्टान्तमाहुः **अन्यथेति** । अन्यथा यद्येवं न, तदा **मातरो**पि स्वबालान् **स्तन्यैः न पुपुषुः**, पोषणं न कुर्युः । **मातर** इति बहुवचनं सर्वजात्युपलक्षकम् । **क्वचि**त्पदेन सर्वदेशकालनियमो ज्ञापितः । ( अथवा **हरिरत्रेति** । अत्र पूर्वं हरिपदमुक्त्वा अग्रे बाधां कर्तुं न शक्नोतीति यदुक्तं तस्यायमाशयः । यद्यपि हरिपदेन सर्वदुःखहरणसामर्थ्यमायाति तथापि दुःखहर्तृत्वमनुक्त्वा यद्बाधाभावकर्तृत्वमुक्तं, तेनास्य विप्रयोगभावस्य स्वरूपात्मकत्वात् स्वरूपस्य च द्विदलरसात्मकत्वादस्य भावस्य रसात्मकत्वमेव, न तु दुःखरूपत्वम् । यद्यस्य दुःखरूपत्वं स्यात् तदा हरित्वेन तन्निवृत्तिं कुर्यादेव, अन्यथा नाशार्थस्य याथार्थ्यं न स्यात् । अत एव हरित्वमुक्त्वा फलबाधाभावकथनमेवोक्तं, न तु दुःखहर्तृत्वमुक्तम् । स्वयमेव चेत्स्वास्थ्यं कुर्यात्तदा स्वस्यैव फलप्रतिबन्धकत्वं भवेदित्येतदभिप्रायज्ञापनार्थमप्युक्तं **हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे** इति । ) यथा मातॄणां बालपोषकत्वाभावाशक्यत्वमेवमत्रेश्वरस्य बाधाकरणमिति भावः ॥ १९ ॥

यद्यप्येतन्मार्गीयतापस्य सर्वानाश्यत्वं, तथापि ज्ञानमार्गस्तापनाशमात्रे प्रसिद्ध इति तन्मार्गबोधकवचनैस्तापनाशमाशङ्क्य तेषामपि तापनाशकत्वाभावमाहुः **ज्ञानिनामपीति** ।

**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**

तत्र हेतुः । ज्ञानमार्गस्य भक्तिमार्गापेक्षया दुर्बलत्वेन भक्तिमार्गस्य च प्रबलत्वेन तद्वाक्यानां नैतद्भावाभिभावकत्वम् । ज्ञानभक्तिमार्गयोर्दुर्बलत्वप्रबलत्वविचारः श्रीमदाचार्यैर्दशमस्कन्धविवरणे 'मर्त्यो मृत्युव्यालभीत' इत्यत्र कालनियामकत्वमुक्त्वापि मत्स्युद्रेकानन्तरं समुद्विजे भवद्धेतोरिति वचनेन ज्ञानमार्गीयमाहात्म्योपमर्दनपूर्वकं भक्तिमार्गप्राबल्यमेव निरूपितमिति विस्तरभिया नात्र विचारः । तथापि ज्ञानमार्गस्यापि प्रामाणिकत्वात् कदाचित् ज्ञानिवाक्यैश्चित्तव्यासङ्गमात्रत्वमपि भवेदिति तस्याप्यभावार्थं भगवत्कृतां रक्षामाहुः **न भक्तं मोहयिष्यतीति** । ( जन्मप्रकरणीयतृतीयाध्याये भगवत्प्रादुर्भावानन्तरं वसुदेवस्तुत्यनन्तरं देवकीमातृचरणैर्मर्यादामार्गीयमाहात्म्यज्ञानपूर्वकं 'रूपं यत्त' दिति स्तुत्यावन्ते 'मर्त्यो मृत्युव्यालभीत' इति पद्ये कालनियामकत्वेन पूर्वं स्तुत्वापि पश्चा'दुपसंहर विश्वात्म'न्निति प्रार्थनानन्तरं व्यूहरहितशुद्धपुरुषोत्तमप्राकट्यानन्तरं शुद्धभक्तिमार्गीयभावप्राकट्ये सति पूर्वस्तुतिहेतुभूतमर्यादामार्गीयभावत्वेन पूर्वस्तुत्युक्तमर्यादामार्गीयमाहात्म्यज्ञानजनितकालनियन्तृत्वादिज्ञाननिराकरणसामर्थ्यं शुद्धभक्तिमार्गीयभावस्यैव दृष्टम् । न तु पूर्वभावस्यैतद्भावनिराकरणसामर्थ्यम् । यद्येवं न स्यात्तद्वैपरीत्यं स्यात् । तस्माद्भक्तिमार्गस्यैव सर्वमार्गाधिकप्राबल्यं विचार्यैवाचार्यैरुक्तं **न भक्तं मोहयिष्यतीति** । ) रक्षाकरणे हेतुमाहुः **आत्मप्रद** इति । आत्मानं स्वरूपानन्दं प्रकर्षेण ददातीत्यात्मप्रदः । यद्यप्यधुना तत्प्रकारकदानस्याप्रतीतिस्तथापि वर्तमानसामीप्ये वर्तमानवद्वेति शास्त्राच्छीघ्रं दास्यतीति सिद्धवद्देवोक्तमात्मप्रद इति । हेत्वन्तरमप्याहुः **प्रियश्चेति** । यो यस्य प्रियः स तत्कार्यसिद्धौ यदि विलम्बं सहेत तदा प्रियत्वमेव न स्यादिति शीघ्रं तत्कार्यसिद्ध्यर्थं चित्तव्यासंगमसहमानोऽविलम्बेन रक्षामेव कृतवान्, न तु विलम्बम्, अतः सम्यगेवोक्तं **प्रियश्चापीति** । एवं रक्षायामव्यभिचारिहेतुद्वयमुक्तम् । **ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यतीत्यत्र** मोहाभावार्थं रक्षाकरणं निरूप्य रक्षाकरणस्यावश्यकत्वाय तद्गतधर्मद्वयपूर्वकं रक्षामुक्त्वापि पुनर्यदुक्तं **किमर्थं मोहयिष्यतीति** तत्रायमाशयः । भक्तत्वेपि यत्रात्मप्रदानेच्छा तत्रैव ज्ञानिवाक्यजमोहनिवृत्त्यर्थं रक्षा, यत्र नात्मप्रदानेच्छा तत्र ज्ञानिवाक्यजमोहनिवृत्तिरक्षापि नेत्यर्थः । तत्र निदर्शनम् । द्विजपत्नीनां व्रजसीमन्तिनीवद्रसानुभवोपयोगिदेहवत्त्वभत्वार्तिभरेण गत्वा सेवां करिष्याम इति बुद्ध्वा सर्वसामग्रीसम्पादनपूर्वकं पत्यादिसर्वबन्धुनिराकरणपूर्वकं चागमनम् । आगतासु तास्विव भगवद्वचनं तद्देवोत्तरदानेन सर्वप्रकारसाम्येप्यात्मप्रदानेच्छाऽभावात्र प्रीतयेऽनुरागायेत्यादिज्ञानमार्गीयवाक्यैर्जनितमोहस्य निवृत्त्यर्थं न रक्षाकरणम् । व्रजसीमन्तिनीष्वात्मप्रदानेच्छाप्राचुर्यात्तथा रक्षा कृता । यथा 'रजन्येषे'त्यादिमर्यादाधर्मवाक्यैः 'श्रवणाद्दर्शना'दित्यादिज्ञानमार्गीयवाक्यैश्च मोहसम्भावनापि नाभूत् । प्रत्युत व्यभिचारितप्रयोजनविरोधित्वेन तन्निराकरणमभूत् । अग्रेपि चतुश्चत्वारिंशाध्याये

१. पुष्टि ।

भगवत्प्रेषितः श्रीमदुद्धवः 'श्रूयतां प्रियसन्देश' इति भगवत्सन्देशव्याजेन तापवैक्लव्याद्यभावार्थमुपदिष्टस्यापि ज्ञानस्य भगवता स्वात्मप्रदानेन रक्षितत्वेन सर्वात्मना स्वोपदिष्टमार्गमोहाभावदर्शनपूर्वकं 'दृष्ट्वैवमादिगोपीनां कृष्णावेशात्मविक्लव'मिति पूर्वोक्ततापवैक्लव्यादिदर्शनेन सर्वात्मना स्वप्रयासनिष्फलत्वं तापादिभावस्यातिप्रबलत्वं दृष्ट्वा तासु सर्वाधिकानिर्वचनीयोत्कर्षदर्शनेन स्वस्मिन् भगवत्कृपापात्रत्वेऽप्यत्यपकर्षस्फूर्त्या स्वस्य साक्षात्तच्चरणारविन्देषु शिरःस्पर्शनेन नमनायोग्यत्वं ज्ञात्वा 'वन्दे नन्दव्रजस्त्रीणां पादरेणु'मित्यनेनैकरेणुमेव यत्र नमस्कृतवान् । तस्मादत्रैवात्मप्रदानं तत्रैव ज्ञानमार्गीयवाक्यमोहाभावः, नान्यत्रेत्येतावत्समेयं मनसि कृत्वोक्तं किमर्थं मोहयिष्यतीति ॥ २० ॥

एवं संन्यासनिर्णयमुपपाद्योपसंहरन्ति तस्मादिति ।

**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

यस्माद्भक्तिमार्गीयः संन्यासप्रकार एतादृशोऽतो यदि तादृक्प्रकारवत्त्वं तदैतदुक्तप्रकारेण परित्यागः विरहानुभवैकार्थः **परित्यागो विधीयतां** क्रियतामित्यर्थः । **अन्यथा** एतदुक्तप्रकाराकरणे **स्वार्थात्** स्वस्यात्मनोऽर्थात् पुरुषार्थसिद्धेः सकाशाद्भ्रश्यते च्युतो भवतीत्यर्थः । **इति** एवंप्रकारिका **मे** मदीया **मतिः** । मदीयत्वकथनेन मतेरनुभवरूपत्वं निरूपितम् । **निश्चिता** निःसन्दिग्धेत्यर्थः ॥ २१ ॥

एवं पूर्वश्लोके मतेर्निश्चितत्वकथनान्निश्चितत्वे हेतुमाहुः इतीति ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

**इतीति** समाप्तौ, **कृष्णप्रसादेन** कृष्णः सदानन्दः पुरुषोत्तमः, तस्य प्रसादः प्रसन्नता पूर्णकृपेत्यर्थः, तेन साधनेन कृत्वा **वल्लभेन** श्रीकृष्णवल्लभेनेत्यर्थः । **विनिश्चितं** विशेषेण इदमित्थतया निर्णीतम् । निश्चये कृष्णप्रसादस्य साधनत्वोक्त्या तदितरसाधनासाध्यत्वमुक्तम् । निर्णीतमेवाहुः **संन्यासवरणं भक्ताविति** । **भक्तौ** भक्तिमार्गे **संन्यासवरणं** संन्यासाङ्गीकारप्रकारः । अथवा **भक्तौ** भक्तौ सत्यां अथवा **भक्तौ** भक्त्यर्थं भजनार्थं इदं संन्यासरूपं भगवतो वरणं वरणमेवेत्यर्थः । विपरीते बाधकमाहुः **अन्यथेति** । **अन्यथा** भक्तिव्यतिरेकेण करणे उक्तप्रकाराभावात् **पतितो भवेत्**, तस्मान्मार्गात् च्युतो भवेदित्यर्थः ॥ २२ ॥

पितृपादाब्जकृपया विवृतोऽस्ति यथामति । संन्यासनिर्णयस्तेन प्रसीदन्तु मयीश्वराः ॥१॥
भक्तिमार्गे पुमर्था ये सिद्धास्ते सर्वथा मयि । तैरेव च कृतार्थोऽहमिति मे सुदृढा मतिः ॥२॥

इति श्रीमत्प्रभुचरणैकधनेन श्रीवल्लभेन विरचितं
संन्यासनिर्णयविवरणं सम्पूर्णम् ॥

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीमद्रघुनाथविरचितविवरणसमेतः ।

---

विठ्ठलेशपदाम्भोजं भक्त्या नत्वा विचार्यते ।
आचार्यप्रोक्तसंन्यासनिर्णये तत्प्रसादतः ॥ १ ॥

अथ कर्ममार्गैकनिष्ठानां भगवत्प्राप्तिलक्षणमुख्यफलासम्बन्धात्क्लेशैरन्तर्यदर्शनेन जातेऽपि तत्क्लेशजनितग्लान्यभावाच्च कदाचित्सङ्गवशाद्भगवदीया अप्येवंविधा मा भूवन्निति तदर्थमादावेव सुखोपायं संन्यासं निरूपयन्ति पश्चात्तापनिवृत्त्यर्थमिति ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

शरीरादिवैकल्ये जाते पूर्वदशां स्मृत्वा मया तदानीमेव भगवदर्थं किमिति न यत्तमितीदृशो यस्तापः स पश्चात्तापः । भगवत्तद्भक्तातिरिक्तविषयाणां परितः सर्वतो बाह्याभ्यन्तरराहित्येन यस्त्यागः स परित्याग इत्युच्यते । स पूर्वोक्तपरित्यागो मार्गद्वये कर्तव्यत्वेनोपदिष्ट इत्यर्थः ॥ १ ॥

तृतीयमार्गस्यापि सत्त्वात्तत्रापि कथं नेत्यत आह कर्ममार्ग इति ।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

अत्र कर्ममार्गपदेन सकामान्तःकरणस्य संन्यासनिषेधो बोध्यते । अन्यथा प्रवृत्तिमार्गे संन्यासविधायकवाक्याश्रवणाद्व्याकरणे सिद्धे तन्निषेधो नोपपद्येत । प्राप्तिपूर्वकत्वान्निषेधस्य । युगान्तरे तु शरीरशोषणव्रतादिनाप्यन्तःकरणस्य विषयपराङ्मुखतोपपद्यते । कलौ तु तत्साधनव्रतादिकर्मणां साद्गुण्याभावाद्यथोक्तफलानर्हत्वेन संन्यासानुपयुक्तत्वात्सुतरां न कार्य इत्यर्थः । तदेवं मार्गद्वय एव कर्तव्यत्वेन प्राप्तौ ज्ञानापेक्षया भक्तेरभ्यर्हितत्वात्प्रथमं भक्तिमार्गे कथं कर्तव्य इत्येतादृशी विचारणा क्रियत इत्यर्थः ॥ २ ॥

**श्रवणादिप्रवृत्त्यर्थं कर्तव्यश्चेत्स नेष्यते ।**
**सहायसङ्गसाध्यत्वात्साधनानां च रक्षणात् ॥ ३ ॥**

श्रवणादीति । वैराग्याभावपूर्वकं भक्तिसाधनश्रवणादिषु प्रवृत्त्यर्थं संन्यासश्चेत्कर्तव्यस्तदा स एवंविधः इह भक्तिमार्गे न स्वीक्रियत इत्यर्थः । ननु श्रवणादिसाधनानां भक्त्यनुकूलत्वाद्भक्तिसाधनश्रवणादिसम्पत्त्यर्थं संन्यासः कुतो नेष्यत आह **सहायसङ्गसाध्यत्वादिति** । भगवत्तत्त्वं जिज्ञासोरेकाकिनः श्रवणादेः सहायस्य सङ्गः सम्पत्तिस्तत्साध्यत्वात् । नहि श्रावयितारं विना श्रवणं सम्भवति । नच श्रुतस्यापि ग्रन्थपर्यालोचनगुरूपसत्त्यादिना विना स्थैर्यम्, अतस्तदंशस्य त्यक्तस्यापि पुनः स्वीकारे वान्ताशित्वमेव । इदमेकं बाधकम् । अपरमाह **साधनानामिति** । अल्पकालपर्यन्तं श्रवणादिसाधनमादरणीयमित्यपि नास्ति, यतो यावज्जीवमपक्वकषायैर्योगिभिः साधनानि रक्ष्यन्त एव । इदं द्वितीयम् ॥ ३ ॥

अभिमानादिति ।

**अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।**
**गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥**

विविदिषादशायां सर्वथा कामक्रोधाद्यनपगमाद्गन्थादिपक्षपातेन प्रतिवादिनिराकरणाय यत्नोपि सम्भाव्यते, तादृशश्चाभिमानकृतः संन्यासे कृतेऽल्पोपि नोचित इत्यर्थः । इदं तृतीयम् । **नियोगादिति** । गुर्वाज्ञा नियोगः । तदकरणे प्रत्यवायः, तत्करणे व्यासङ्गः, तथा सति नेष्टसिद्धिरिति भावः । इदं चतुर्थम् । तद्धर्मैरिति । संन्यासे सर्वत्यागस्य मुख्यत्वात् श्रवणादीनां ग्रन्थादिस्वीकारसाध्यत्वात् परस्परं धर्मविरोधाद्भक्तिमार्गेन्यथेपरत्वेन संन्यासो न प्रशस्त इत्यर्थः ॥ ४ ॥

भगवद्धर्माचरणे अनर्थकरगृहादीनां बाधकत्वात् प्रतिबन्धापगमाय संन्यासो यदि कर्तव्यस्तदापि बाधकत्वमाह अग्रेपीति ।

**अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।**
**स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कामतः ॥ ५ ॥**

गृहादिसङ्गाभावाय संन्यासे कृतेपि तदनन्तरं **तादृशैः** पूर्वोक्तसहायादिभिरेव **सङ्गो भवति** । अन्तःकरणस्य सर्वांशे भगवत्परत्वाभावात् । **नान्यथा** । (न) भगवदेकपरतेत्यर्थः । ननु भगवदर्थत्वेनैवमपि क्रियमाणे फलं भविष्यत्येवेति चेत्तत्राह **स्वयं** चेति । भक्तिमार्गविरुद्धमिदमिति ज्ञात्वापि यः संन्यसेत्, स विषयवासनावलितान्तःकरणत्वेन भगवत्प्रसन्नानुभवारयक्तविषयेष्वेवाभिनिविशेत् । **स कामतः** कामित्वाद्विषयाक्रान्तः

१ वैराग्यभावपूर्वकमिति पाठः । २ कर्तव्यत्वेन प्राप्तो ज्ञानापेक्षया भक्तिमार्गे न स्वीक्रियत इति पाठः ।
३ अनर्थकरणेति पाठः ४ असाधकत्वमिति पाठः ।

दर्शकत्वात्तासामेव गुरुत्वं युक्तम् । श्रूयते च भविष्योत्तरे अनन्तव्रतकथायां कौण्डिन्यस्य सर्वत्यागपूर्वकं भगवदेकपरतया स्थितस्य शीघ्रमेव तत्प्राप्तिः । तद्यथा 'ततो जगाम कौण्डिन्यो निर्वेदाद्वनगह्वरम् । अनन्तं मनसा ध्यायन् कदा द्रक्ष्यामि केशवम् । व्रतं निरशनं कृत्वा ब्रह्मचर्यं जपन् हरिम् । विह्वलः प्रययौ सोऽप्यरण्यं जनविवर्जित' मित्यादि । व्रजसुन्दरीणां तु 'गत्यानुरागस्मितविभ्रमेक्षितै' रित्यादिषु स्फुटमेवालौकिकतयाविषयत्वम् । यद्यप्येतासां साम्यं कर्तुं मनसाप्यशक्यम्, तथापि त्यागस्येतोधिकस्य सर्वथा अभाव एवान्यत्रेति ज्ञापनार्थम् । एतादृशसर्वात्मभावपूर्वकान्यविषयपरित्यागे झटिति भगवत्प्राप्तिरिति भावः । **साधनं च** प्रोक्तमित्यर्थः । किं तत्साधनमित्यपेक्षायामाह । तनोति स्वरूपानन्दानुभवं विस्तारयतीति तत् । तादृशो यो यस्य भक्तस्य यादृशी भावना तया सिद्धः सम्पन्नो भावविशेषः स एव साधनस्थानीयः । एतदतिरिक्तस्यान्यस्य यागादेः साधनत्वं नेष्यत इत्यर्थः । यद्वा तद्गुरुत्वेनोक्तं यत्तत्साधनम् ॥ ८ ॥

एवंविधसंन्यासवतः प्रवृत्तिवैलक्षण्यमन्यापेक्षया ज्ञानादिभिरप्रतीकार्यत्वं चाहुः विकलत्वमिति ।

**विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।**
**ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥**

उद्देश्यवस्त्वप्राप्तिदशायां चिन्ताबाहुल्याद्विकलत्वं विक्षिप्तचित्तत्वम् । तथैवास्वास्थ्यं शरीरे तदलाभे वैवर्ण्यपाण्डुरत्वादि । एतद्वयमपि प्रकृतिः स्वभावान्तःपात्येव, नौपाधिकम् । तादृशावस्थस्य उपायान्तराप्रतीकार्यदुःखत्वमाह प्राकृतमिति । भगवल्लीलौपयिकस्वरूपज्ञानापेक्षयान्यथच्छास्त्रजन्यमल्पसारं ज्ञानं तदत्र प्राकृतमुच्यते । गुणाश्चाणिमाद्यैश्वर्यादियोगसिद्धयः । तदिदं सर्वमप्येवं वर्तमानस्यैतादृशावस्थस्य न हि बाधकाः, न समीहितान्तरायहेतवो भवन्तीत्यर्थः । एवंदशापन्नस्य शास्त्रीयं माहात्म्यादिबोधकं ज्ञानं न तच्छोकनिवर्तकम् । यत्र सर्वसम्मतस्वास्थ्यहेतुज्ञानस्याप्यप्रयोजकत्वम्, तत्र किं वाच्यमैश्वर्यादीनामिति भावः । प्रकृतेरिति पाठे वैकल्यं विपर्यासः । अन्यत् समानम् ॥ ९ ॥

ज्ञानमार्गीयसंन्यासापेक्षया यथा भक्तिमार्गीयस्य संन्यासस्योत्तमसाधनत्वं तथैव तत्फलस्यापीत्याहुः सत्यलोक इति ।

**सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषतः ।**
**भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥**

**सत्यलोको** ब्रह्मलोकः । तत्र ज्ञानात् संन्यासाश्रमरहितकेवलज्ञानादपि स्थितिर्भवति । संन्यासेन सहिता तु विशेषतः पुनरावृत्तिरहितेत्यर्थः । तथा च नारायणे श्रूयते 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके न परान्तकाले

परामृतात् परिमुच्यन्ति सर्वे' इति । भक्तिमार्गीयमाह **भावनेति** । यत्र यस्मिन् फले **भावनैव साधनं** भवति तत्र **फलमपि तथा** भावनानुरूपमेव **भवेत्** । यथा ब्रह्मलोकप्राप्तिसाधनानां फल्गुत्वादल्पफलसम्पादकत्वम्, न पूर्णस्य, एवं भावनानामनन्तत्वात् फलस्याप्यानन्त्यमिति भावः । अत एवाचार्यैरुक्तम् 'प्राकृताः सकला देवा गणितानन्दकं बृहत् । पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्ममे'ति । भगवच्चिन्तनपरस्य ब्रह्मलोको नानुरूपं फलमिति तु श्रीविष्णुपुराणे श्रूयते । तद्यथा, 'यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोपि लोकोऽल्पकः । मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते' इति ॥ १० ॥

तादृशः इति ।

**तादृशः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।**
**यदि स्थ प्रकटः स्वात्मा वह्निवत् प्रविशेद्यदि ॥ ११ ॥**
**तदैव सकलो बन्धो नाशमेति न चान्यथा ।**

किप्प्रत्ययान्तस्य बहुवचनम् **तादृशा** इति ज्ञेयम् । ये केवलज्ञानमार्गीयास्ते **सत्यलोकादावेव तिष्ठन्ति**, ननु पुरुषोत्तमे, भक्तिमार्गानन्तःपातित्वात् । आदिपदेन संकर्षणादिस्थानं ज्ञेयम् । यद्यपि 'ब्रह्मणा सह मुच्यन्त' इति वाक्याद्ब्रह्मलोकादप्यग्रे गतिस्तत्रस्थानां श्रूयते, तथापि भजनानन्दाननुभवादेतदपेक्षया तुच्छत्वमेवेति भावः । तर्हि ब्रह्मलोकस्थानामपि कुतो न भजनानन्दानुभवः ? भजनीयस्वरूपस्यान्तःप्रवेशाभावादित्याह **यदि स्थ प्रकट** इति । आकाशवदन्तर्बहिश्च प्रकटः सिद्धोपि स्वात्मा भगवानन्तःस्थितोपि बहिः प्रकटीभूय स्वलीलाभिनिविष्टचित्तेषु यदैव प्रविशेत्तत्रैवान्तर्हितो भवेत्, **तदैव सकलो बन्धो** गृहादिर्**नाशमेति**, तिरस्कृतं भवति, न त्वन्येनापि प्रकारेणेत्यर्थः । अत एवोक्तम् 'प्रशमाय प्रसादाय तत्रैवान्तरधीयते'ति । यथा शुष्ककाष्ठस्थितो वह्निः शीतशातनासमर्थः, स एव मन्थनादिना बहिर्भूतो ज्वालादिरूपेण तत्रैव काष्ठं प्रविष्टः काष्ठं स्वात्मसात्कृत्वा शीतं निवर्तयति, एवं बहिःस्थितमानन्दघनस्वरूपमपि भक्तभावनाभावितं यावन्न पुनः प्रविशति, तावन्न तत्स्वरूपप्राप्तिरिति भावः । ज्ञानमार्गीयाणां तदन्तःप्रवेशाभावान्न तत्प्राप्तिरङ्गापि ॥ ११ ॥

भगवानिति ।

भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥

अत्रास्मिन् जीवने अन्तर्हितो भगवानेव बाधकश्चेत्सोपि फलरूपत्वान्नैवंविधो भवतीत्यर्थः । ननु गुणानां जीवनहेतुत्वोक्तावपि यावन्न दृग्गोचरत्वं स्वरूपस्य भवेत्, तावत्तापापायोपि नेति तदर्थं स्वास्थ्यजनकं प्रकारान्तरेण बोधकवाक्यं कर्तव्यं चेत्तत्राह स्वास्थ्यवाक्यमिति । न कर्तव्यं न स्वयमन्यस्माच्छ्रोतव्यम् । न चान्यस्मै श्राव्यमित्यर्थः । तथाच स्वास्थ्यं भगवानेव करिष्यतीत्याह दयालुरिति । यतो निरुपधिपरदुःखप्रहाणेच्छुः, अतो भक्तानामेतादृगवस्थां ज्ञात्वा विलम्बं न करिष्यति, अतो न विरुध्यते, न प्रतिकूलमाचरिष्यति । प्रत्युत परोक्षभजनानन्ददानेपि भक्तकृत्यं प्रति स्वस्य ऋणित्वमेवाङ्गीकरोति । तच्च भगवतैवोक्तम् 'न पारयेहं निरवद्यसंयुजा'मित्यादि । एवंविधानां स्वास्थ्यवाक्यसहस्रैरपि नेष्टसिद्धिरिति परमार्थः ॥ १३ ॥

दुर्लभोयमिति ।

दुर्लभोयं परित्यागः प्रेम्णा सिध्यति नान्यथा ।

अयं भक्तिमार्गीयो यः परित्यागः स प्रेम्णा निरुपधिस्नेहादेव सिध्यति, अतो दुर्लभः, अन्यैः साधारणैः कर्तुमशक्य इत्यर्थः ॥ १३½ ॥

भक्तिमार्गीयं निरूप्य ज्ञानमार्गीयमाह ज्ञानमार्ग इति ।

ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥
ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥
अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।
पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितिः ।

विचारोत्रोपपत्तिस्तस्मादित्यर्थः । स द्विप्रकारकोऽपि ज्ञेयः । अपिशब्दोऽत्र गर्हायाम् । द्वैविध्यमाह ज्ञानार्थमिति । ज्ञानोत्पत्त्यर्थमेकः । उत्तरस्य मोक्षस्याङ्गं तदर्थमिति यावत् । यद्यपि ज्ञानार्थस्यापि मोक्षाङ्गत्वमेव, तथापि प्रयोजनवशाद्द्वैविध्यम् । अन्यथा कर्मणोपि द्वैविध्यं न स्यात् । परन्तूभाभ्यामपि जन्मशतैर्बहुजन्मभिरभ्यासेन सिद्धिर्मोक्षो भवति । न भक्तिमार्गीयवज्झटिति । अत एव भगवताप्युक्तम् 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति । व्यवहारेपि विद्वत्संन्यासो विविदिषासंन्यास इति श्रूयते द्वैविध्यम् । भक्तिं विहाय केवलज्ञानार्थमेव यः संन्यासः स दोषग्रस्तत्वान्न कर्तव्य इत्याहुः ज्ञानं चेति । चकारान्मोक्षोपि साधनसापेक्ष एव । तत्र हेतुः ।

**यज्ञादिश्रवणात्** । यज्ञादिकं साधनत्वेन श्रूयत इत्यर्थः । इदं तु गीतायाम् 'द्रव्ययज्ञास्तपोयज्ञा' इत्यादिषु स्फुटम् । यज्ञादीनां साङ्गानामेव फलसम्पादनक्षमत्वात्, तच्च कलौ सर्वथैव न सम्भवतीत्यतस्तत्करणं पश्चात्फलदशायां तापायैव, न सुखाय । पूर्वोक्तधर्मध्वजित्वेन पाषण्डित्वमेव स्यात् । अपिशब्दादग्रेपि फलाभावः । अत एव श्रीमद्भागवते 'श्रेयःसृतिं भक्तिमुदस्ये' त्यादिनोक्तम् । यत एवंकरणे पश्चात्तापः फलासम्बन्धश्च । तस्मात् ज्ञाने न, ज्ञानमार्गे न संन्यसेत्, कलौ साधनबलस्याल्पत्वात्कालकृतदोषाणां प्राबल्यात्सुतरामेव न कार्यं इति वस्तुस्थितिरित्यर्थः ॥ १४, १५, १६ ॥

एवं भक्तिमार्गेपि दोषमाशङ्क्य समाधत्ते **भक्तिमार्गेपीति** ।

**भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥**
**अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।**
**स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥**
**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**

**अत्रारम्भ इति** । अस्मिन्भक्तिमार्गीयसंन्यासस्योपक्रममात्रेपि कृते न नाशः, न कृतोपक्रमवैयर्थ्यं, नापि विघ्नो भवेत्, नापि प्रत्यवायः । तदुक्तं भगवता 'नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादि'ति, श्रीभागवतेपि 'तथा न ते माधव तावकाः क्वचि'दित्यादिना । किञ्च, पूर्वमेवं चिकीर्षोः कस्यचिदन्यथाभाव इत्यर्थे सर्वसम्मतदृष्टान्तस्याप्यभावात्, अतो ज्ञानमार्गीयवदत्रास्य न पातादिशङ्केत्यर्थः । भक्तिरहितज्ञानमार्गीयस्य तु पातः श्रूयते श्रीभागवते 'येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रय'इति । किञ्च, असिद्धस्य स्वास्थ्यहेतोस्तुच्छविषयादेः परितः सर्वतस्त्यागादेव न बाधः सम्भवति । अन्तर्बहिः सिद्धविषयस्य तु स्वेष्टफलत्वादेव न तत्सम्भव इत्यर्थः । यदि तदेकाश्रितानामपि तस्मादेव बाधः स्यात्तदा मातृमात्रैकजीवनान् बालान्मातरोपि **न क्वचित्पुपुषुः** स्तन्यैः पुष्णीयुः, पुष्टाः न कुर्युः, प्रत्युतानिष्टं च कुर्युः, न त्वेवं कुत्रचिदस्तीत्यतो न बाधशङ्कालेशोपीति भावः ॥ १७ ॥ १८ ॥ १९ ॥

अत्यज्ञं प्रत्याहुः **ज्ञानिनामिति** ।

**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**

ज्ञानमार्गप्रशमात्मभिरपि तद्द्वारा स्वभजने प्रवृत्तं न मोहं प्रापयिष्यति । इदमुत्कृष्टमिदं वेत्येवंविधम् । ननु कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य स्वतन्त्रस्य कदाचिदेवमपि करणं

स्यादिति चेत्तत्राह आत्मप्रद इति । स्वस्वरूपं भक्तेभ्यो दत्तवान्, तदधीनत्वेन स्थापितवान्, यश्च स्वात्मत्वेन प्रियश्च । अत एवोक्तम् 'प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मे'ति । अपिशब्दादेवमजानतामभक्तानामप्रियश्च । चकारात् स्वस्य भक्तस्य कृत्यतुबुभूषुत्वमपि । एतादृशस्यापि मोहकत्वे न किञ्चित्कारणमस्तीत्यर्थः ॥ २० ॥

उपसंहरन्ति तस्मादिति ।

**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

उक्तप्रकारेण भक्तिमार्गे स्थित्वा विरहानुभवार्थमेव क्रियताम्, अन्यथा इमं प्रकारान्तरं त्यक्त्वा प्रकारान्तरेण तदाचरणे स्वार्थात् स्वस्मिन्नेवार्थ्यते अन्विष्यत इति स्वार्थो भगवान् तस्माद्भ्रश्यते दूरे पततीत्यर्थः । इति एवंप्रकारिका मे निश्चिता बुद्धिरित्यर्थः । यद्वा, स्वार्थात् समीहितफलादित्यर्थः ॥ २१ ॥

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

इतीति । कृष्णः प्रसाद्यते येन, कृष्णस्य प्रसादोन्येषां यस्मादिति वा । तत्प्रसादरूप एवेति वा । ईदृशेन वल्लभेन भक्तौ भक्तिमार्गे संन्यासस्य वरणं वरतीति स्वीकरणम् । इति उक्तप्रकारेण विशेषतो निश्चितं निर्धारितम् । भक्तिमार्गे प्रवृत्तस्येदं विहायान्यथा अन्येन ज्ञानमार्गाद्युक्तप्रकारेण स्वीकरणे पातित्यमेवेत्यर्थः ॥ २२ ॥

आचार्यचरणाम्भोजरजोराञ्जितवागहम् ॥
कृतवान् भक्तिसंन्यासविचारे सुविचारणाम् ॥ १ ॥
कर्मणा मनसा वाचा प्राणैर्दारैर्धनैरपि ॥
विट्ठलेश त्वदीयोस्मि नान्यथा ज्ञातुमर्हसि ॥ २ ॥

इतिश्रीवल्लभनन्दनचरणैकशरणश्रीरघुनाथकृतौ
संन्यासनिर्णयविवरणं समाप्तम् ॥

---

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीगोकुलोत्सवविरचितविवरणसमेतः ।

---

यत्पदाब्जरसास्वादविस्मृतान्यसुखा मुहुः ।
रमन्ते तद्गुणालापैस्तं वन्दे गोकुलेश्वरम् ॥ १ ॥

अथ सकलश्रुतिस्मृतिपुराणन्यायादिप्रमाणसम्मत्या भगवदानन्दानुभव एव सर्वेषां परमफलम् । तत्रापि भजनानन्दानुभवः श्रीगोपीजनवल्लभस्य । तथाहि । 'रसो वै स' इत्यादिभ्यो भगवान् रसरूपः । रसश्च शृंगारः । स च संयोगविप्रयोगभेदेन द्विविधः । तेन तदुभयभावात्मकभगवदानन्दानुभव एव परमफलम् । स च लीलासृष्टौ प्रवेशे सति सम्भवति । ततः पूर्वदशायां तु संयोगाभावात् सर्वपरित्यागपूर्वकं विप्रयोगभावानुभव एव परमफलम् । सर्वपरित्यागं विना लौकिकांशस्य सत्त्वादव्यग्रतया विप्रयोगानुभवासम्भवात् । स च परित्यागः कस्मिन् मार्गे कर्तव्यः, कदा वा कर्तव्यः, कथं वा कर्तव्यः, किमर्थं वा कर्तव्यः, करणानन्तरं च तस्य कीदृशी दशेत्येतत्सर्वनिर्धारार्थं विचारप्रयोजनमनुवदन्त एवाचार्याः परित्यागविचारं प्रतिजानते पश्चात्तापनिवृत्त्यर्थमिति ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

भक्तिमार्गे ज्ञानमार्गे च परित्यागः कर्तव्यः, तत्रापि सिद्धदशायामेव, न तु साधनदशायाम् । साधनदशायामत्यन्तवैराग्याभावेन परित्यागानिर्वाहात् पाषण्डित्वप्रसङ्गेन कृतोपि परित्यागः पश्चात्तापाय भवति । एतादृशतारतम्यज्ञानाभावे भगवदीया अपि पूर्वमेव परित्यक्तसर्वार्थाः सन्तः पश्चात्तप्ता भवेयुः, तथा तान् दृष्ट्वा स्वयमपि पश्चात्तप्ता भवेयुः, तथा चान्येषां स्वस्य च पश्चात्तापस्यानिर्माणार्थं परित्यागो विचार्यत इत्यर्थः । यद्वा । सकलदैवजीवानां भगवत्प्राप्त्यर्थं भगवदाज्ञया ह्याचार्याणां भूलोकेऽवतारः । सा भगवत्प्राप्तिश्चाचार्यैर्भक्तिमार्गप्राकट्येन क्रियते । तत्र यथा सर्वसिद्धान्तमुक्तमन्तस्तथा अव्यग्रतया निरन्तर विप्रयोगभावानुभवार्थं परित्यागोपि पूर्वमेव कथनीयः । तथा चैतावत्कालं वृथा विलम्बः कृत इति यः पश्चात्तापः तस्य निवृत्त्यर्थं परित्यागो विचार्यत इत्यर्थः । अथवा । परित्यागेन पूर्वमहर्निशं

विप्रयोगभावानुभवः, तदनन्तरमलौकिकदेहेन संयोगभावानुभवः । तथा च पश्चात् परित्यागानन्तरं तापश्च निवृत्तिश्च तापनिवृत्ती, तयोर्निमित्तं परित्यागो विचार्यत इत्यर्थः । तेनोभयप्रकारकभगवद्भावानुभवे आचार्योधम एव हेतुरिति सूचितम् । यच्च 'विरहानुभवैकार्थसर्वत्यागोपदेशक'इति सर्वोत्तमे उक्तम् । तदव्यवधानविवक्षया सवासन इति **परि**शब्दार्थः । ननु परित्यागः कस्मिन्मार्गे कर्तव्य इति चेत् ? तत्राहुः **स मार्गद्वितये प्रोक्त** इति । विशेष आविश्यम्, तेन सिद्धदशा विशेषः । **विशेषतः** इति ल्यब्लोपे पञ्चमी । तथा च **भक्तौ ज्ञाने** च विशेषं सिद्धदशां प्राप्य **मार्गद्वितये** भक्तिमार्गे ज्ञानमार्गे च स परित्यागः प्रकर्षेण उक्तः, कर्तव्यत्वेन कथित इत्यर्थः ॥ १ ॥

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

अथ **कर्ममार्गे** साधनदशायां ज्ञानमार्गे उपासनामार्गे साधनदशायां **भक्तिमार्गे** च परित्यागः पश्चात्तापायेति तन्निवृत्त्यर्थं परित्यागस्य विचारः क्रियते । विशेषतः विशेषं प्राप्य । स च सिद्धदशा उभयोः । यद्वा, बहुजन्मसु परित्यागः कर्तव्य इति आवृत्तिबाहुल्यमेव विशेष इति ज्ञानमार्ग एव **विशेषत** इत्यन्येति । निष्कामतया कर्मकरणं चित्तशुद्ध्यर्थम्, कर्ममार्गे पत्नीं विना च यज्ञादिकरणमसम्भवीति न परित्यागः सम्भवति । पत्नीसाहित्येपि निष्कामतया कर्माचरणं संन्यास एवेति चेत् सोपि कलौ देशादिशुद्ध्यभावान्न सम्भवतीत्याहुः **सुतरां कलिकालत** इति । यद्वा । आयुषश्चतुर्थभागे संन्यास इति यन्मतं तस्मिन्नपि मते भक्तिं ज्ञानं च विना केवले कर्ममार्गे विरक्तिं विना न कर्तव्यः परित्यागः किन्तु विरक्तावेवेति भक्तेर्ज्ञानस्य वा सिद्धदशां विना न सम्भवतीति **कर्ममार्गे** न परित्यागः, **सुतरां कलिकाले** ॥ २ ॥

**श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत्स नेष्यते ।**
**सहायसङ्गसाध्यत्वात्साधनानां च रक्षणात् ॥ ३ ॥**
**अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।**
**गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥**
**अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।**
**स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥**
**विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।**
**अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥**
**विरहानुभवार्थं तु परित्यागः प्रशस्यते ।**
**स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥**

**श्रवणादीनां** निरन्तरमव्यग्रतया सिद्ध्यर्थं यदि स नेष्यते भगोद्योपकत्वात्

दीयाः सहायास्तेषां संगेन श्रवणादयः साधनीयाः । पूजादीनां साधनं च रक्ष्यम्, साधनदशायां अभिमानश्च विद्यते । 'तावत्कर्माणी'ति वाक्यात् साधनदशायां पूर्णविरक्त्यभावाद्वेदादिरूपभगवद्वियोगाद्वर्णाश्रमधर्माः कर्तव्या एव । संन्यासधर्मैः सह श्रवणादीनां विरोधोऽपि । गृहे भगवदीयैः संगाभावात्यागः कार्य इति चेत्तत्राहुर्गृहादेरिति । गृहत्यागे कदाचित्कुत्रचित्सत्संगः स्यादित्याशया कार्य इति चेत्तत्राहुः स्वयं चेति । विषयैरन्तःकरण आक्रान्ते सत्संगार्थं तस्योद्यम एव न भवतीति भावः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

कौण्डिन्यगोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनाय भवन्ति हि ॥ १२ ॥

कौण्डिन्यादावपि भावनयैव भावः सिद्ध इत्याहुर्**भावो भावनयेति** । **ज्ञानं** ब्रह्मज्ञानम्, गुणाः सत्त्वादयश्च, भगवदिच्छया यदि भवन्ति तदा ते बाधकाः । यत्र भावना साधनं तत्र भावनानुरूपं फलम् । ननु तादृशस्य ज्ञानं गुणाश्च कथं बाधका भवेयुस्तत्राहु**र्भावना साधनं यत्रेति** । तथा च यादृशी भावना तदनुरूपं फलम् । तेन यावत्पर्यन्तं तल्लीलाभावना तावत्तदनुरूपं फलं, यावद् ब्रह्मज्ञानेन सर्वत्र ब्रह्मभावना तावत्तदनुरूपं फलं, यावच्च सत्त्वादिगुणैः कृत्वा विषयेषु भावना तावत्तदनुरूपं फलम् । तथा च मानभावनानां साधारण्यात् फलेपि तथात्वम् । बाधकत्वं विवृण्वन्ति **तादृशा इति** । ब्रह्मभावनादियुक्ताः सत्यलोकादावेव तिष्ठन्तीत्यर्थः । ननु ब्रह्मभावनया किं स्यादित्यत आहुर्बहिरिति । यदि बहिः प्रकाश एव न स्याद्यदि च पश्चाद्वह्निवदन्तर्न प्रविशेत्तदापि न संसारलयः । यदि गुणेष्वासक्तिः स्यात्तदा ते बाधका भवेयुः, परन्तु तादृशानां पूर्वमेव गुणेष्वासक्तेर्निवृत्तत्वाद्गुणाः केवलं जीवनाय भवन्ति, न तु बन्धकाः । यद्वा । **तादृशानां** सर्वत्यागादन्यैः कैश्चिदपि न सङ्गः, प्रभुरनिप्रयोगे च जीवनमशक्यम् । यदि च भगवदीयैः सङ्गः स्यात्तदा तदर्थमपि जीवनं स्यात्, भगवतश्च तादृशानामपि जीवनमन्येषामुद्धारार्थं सम्पादनीयं भवति । तदा भगवांस्तेषां जीवनार्थं प्राकृतेष्वपि गुणेषु तेषां मनो यत्किंचित्सं-

योजयति । नन्वेवं गुणेष्वासक्त्यभावादत्यन्तवियोगे जीवनं न स्यात्, तथा च जीवनविघातकत्वेन भगवान् बाधकत्वेनाभिमतः स्यादित्याशंक्याहुर्भगवानिति ।

भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३½ ॥

जीवनविघातकत्वेपि प्रतिक्षणं फलरूपभगवद्भावानुभावकत्वान्न बाधकः । न हि तदवस्थातो जीवनमधिकमस्ति । यद्वा । ननु यदि भगवांस्तेषां मनो गुणेषु किञ्चित्संयोजितवांस्तदोत्तरोत्तरं गुणेष्वधिकासक्त्या भगवद्भावस्य विघातः स्यात्, तथा च भावविघातकत्वेन भगवान् बाधकः स्यादित्याशंक्याहुः भगवानिति । नहि भगवान् भावं विहन्तुं गुणेषु तेषां मनः संयोजयति, किन्तु तेषां जीवनार्थम् । तथा च यावता तेषां जीवनं भवति तावदेव तेषां मनो गुणेषु योजयति, न तु गुणेष्वधिकामासक्तिं जनयति । कुतः । फलरूपत्वात् । नहि फलं बाधकं भवति । ननु भगवान् स्वतोन्यद्वारा तेषां स्वास्थ्यवाक्यान्येव कथं न सम्पादयति, येन स्वस्थतया जीवनं भवेत्, तत्राहुः । स्वास्थ्यवाक्यमिति । विप्रयोगभावं बाधित्वा जीवनसम्पादनमनुचितं यतः । न हीतोपि जीवनमधिकमस्ति, अर्हं तथ्यः । तथा करणं चाशक्यम् । न ह्येतद्भावस्य बाधनं भगवतान्येन वा कर्तुं शक्यम् । वक्ष्यन्ति च 'हरिश्च न शक्नोती'ति । शक्यार्थे तव्यस्तदा । ननु परमदयालुः कथं तेषां जीवने उपेक्षां करोति, तत्राहुः दयालुरिति । न ह्येतादृशभावसम्पादकस्य दयालुता विरुध्यते ॥ १३, १३½ ॥

ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥
ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥
अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।
पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ॥ १६½ ॥

ज्ञानमार्गे विविदिषाविद्वत्ताभेदेन द्विविधोपि संन्यासो विचारितः । तद्द्वयमाहुर्ज्ञानार्थमिति । ज्ञानार्थं ज्ञाननिमित्तं यः संन्यासः स एकः, विविदिषासंन्यास इति यावत् । उत्तराङ्गं ज्ञानापेक्षया उत्तरं अग्रिमं मुक्तेरङ्गं यः संन्यासः स द्वितीयः, विद्वत्संन्यास इति यावत् । परन्तु ज्ञानमार्गीयसंन्यासे बहुजन्मभिर्मुक्तिः, न त्वेकजन्मना । 'बहूनां जन्मनामन्ते' इति भगवद्वाक्यात् । तयोर्मध्ये विविदिषासंन्यासस्तु युगान्तरे कर्तव्यः, न तु कलावित्याहुः ज्ञानमिति श्लोकेन । ततो ज्ञानं विहाय केवलमत्यान्तःकरणः सन् निष्कामतया यदि

यज्ञादिकं करोति तदा ज्ञानमुत्पद्यते । संन्यासे च सामग्र्यभावाद्यज्ञादिकं न सम्भवति । ज्ञाने च यज्ञादिकं सामग्र्यत्वेन श्रूयते । सर्वं विहाय वनं गत्वा योगादिना ज्ञानसाधनं च कलौ न सम्भवति । विघ्नानां बाहुल्येनान्तःकरणे लौकिकवासनानामनिवृत्तत्वान्मनःस्थैर्याभावाद्योगादिकमेव न सिध्यति यतः । अतो विविदिषादशायां संन्यासः कलौ पश्चात्तापायैव भवति, न तु सन्तोषायेत्यर्थः । किञ्च । चित्तस्थैर्याभावे सति ततोऽधिकं पाषण्डित्वमपि भवेदित्यपिशब्दः । चकारात्तत्कार्यरूपो नरकश्च । तस्मात् ज्ञाने ज्ञाननिमित्तं विविदिषादशायां न संन्यसेत् । अथवा ज्ञानेन हेतुना संन्यसेत्, नतु ज्ञानोत्पत्तेः पूर्वम् । युगान्तरे सम्भवेदपि, कलौ तु दोषाणामतिप्रबलत्वात् कथमपि न निर्वहतीत्याहुः **सुतरामिति** । **स्थितं** पर्यवसन्नम् ॥ १४, १५, १६, १६½ ॥

नतु यदि कलौ दोषाः प्रबला एव, तदा भक्तिमार्गेऽपि कथं फलसिद्धिरित्याशंक्य भक्तिमार्गे दोषलेशोऽपि नास्तीत्याहुः **भक्तिमार्गेऽपीति** ।

**भक्तिमार्गेऽपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥**
**अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।**
**स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥**
**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**
**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**
**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

यदि भक्तिमार्गेऽपि दोषसम्भावना तदा कर्तव्यत्वेन किमुच्यते । एकोऽपि दोषो नास्तीति ज्ञापनार्थमेकवचनम् । तमेव दोषाभावप्रकारमाहुः **अत्रारम्भ इति** । अत्र भक्तिमार्गे आरम्भे प्रवेशमात्र एव नाशो न भवति । यदि भक्तिमार्गेऽपि दोषाः स्युः, तदा कदाचिन्नाशोऽपि स्यात्, न त्वेवम्, तेन दोषसम्भावनैव नास्ति । ननु भक्तिमार्गीयाणामपि क्वचित्कामक्रोधादयो दृश्यन्ते, तत्कथं सर्वात्मना दोषाभाव इति चेत् । सत्यम् । (तत्सम्बन्ध्यङ्गीकारो) भगवदङ्गीकारो हि नित्यः । नहि भगवानङ्गीकृतं कदाचिदप्यनङ्गीकरोति । तेन यत्र क्वचिद्दोषा अपि दृश्यन्ते, तत्रापि क्रमेण दोषानपसार्य भगवान् फलं सम्पादयत्येव । अतो यथा यथा भगवान् तेषां हृदि भक्तिमार्गमानयति, तथा तथा दोषापगमः । अतो यदंशे भक्तिमार्गाप्रवेशस्तदंश एव दोषसत्त्वम्, तेन भक्तिमार्गे दोषाणामसम्बन्ध एव । किञ्च । न वा क्वचिदिदं दृष्टचरं श्रुतं वा यद्भक्तिमार्गे प्रविष्टस्यापि नाशो जात इति । तेन दृष्टान्त-

**स्वाप्यभावान्न** भक्तिमार्गे दोषलेशोऽपि । अत एव भरतस्य जन्मान्तरायेपि फलसिद्धिः । अत एव मथुरास्थसत्रिणां मध्ये बहिर्मुखत्वेपि पश्चात् पश्चात्ताप एव । ननु भक्तिमार्गे **नाशो न भवतीति** सत्यं, परन्तु यदि भक्तिमार्गं न त्यजेत् । तथा च साधनदशायामत्यागेपि सिद्धदशायामत्यन्तविप्रयोगक्लेशमसहमानः सन् मनःस्वास्थ्यनिमित्तं तन्मार्गं परित्यज्य लौकिकपदार्थमेव यदि किञ्चित्परिगृह्णीयात्तदा नाशो भवत्येवेति चेत्तत्राहुः **स्वास्थ्यहेतोरि**ति । यदैव भगवन्मार्गे प्रवेशस्तदैव लौकिकस्य परित्यागः, तदनन्तरं च यथा यथा भगवद्भावस्तथा तथा लौकिकेप्यधिकाधिकैवाऽरुचिर्जायते । तथा च लौकिकस्य **स्वास्थ्यहेतोः सर्वस्यैव परित्यागात् केन** पदार्थेनास्य भगवद्भावस्य **बाधः** अन्तरायः सम्भवेत्, न केनापीत्यर्थः । यदि कदाचिदत्यन्तं विप्रयोगभावेनातिक्लेशादिदमपि मनस्यायाति यत्कथमपि यद्ययं भावो निवृत्तो भवेत्तदा सम्यगिति तथाप्यशक्यो भावस्य परित्यागः । न ह्येतादृशः क्षणमपि भगवन्तं विस्मर्तुं शक्नोति । न चान्येन पदार्थेनैतादृशस्य मनःस्वास्थ्यं सम्भवति । यद्वा, **स्वास्थ्यहेतोः** स्वास्थ्यनिमित्तम् । लौकिकं हि सर्वं तस्योद्वेगकारीति स्वास्थ्यनिमित्तं सर्वस्य लौकिकस्य परित्यागात् केन पदार्थेन अस्य भावस्यान्तरायो भवेत्, न केनापीत्यर्थः । अथवा । **स्वास्थ्यहेतोः** स्वास्थ्यनिमित्तं परित्यागात् भगवद्भावस्य **परित्यागात्** । अयं भावः । भगवद्भावत्यागो हि स्वास्थ्यनिमित्तं कर्तव्यः, तच्चान्येन न सम्भवति । न ह्येतादृशस्यान्येन स्वास्थ्यं सम्भवति । तथा च केनान्तरायः सम्भवेत्, न केनापीत्यर्थः । वस्तुतस्तु भावत्याग एव न सम्भवतीति पूर्वमुक्तमिति निगर्वः । नन्वेतादृशस्य स्वयं भावत्यागो न सम्भवतीति सत्यम् । परन्तु यदि कालादयः प्रतिबन्धं कुर्युः, तदा नाशो भवेदेवेति चेत्, तत्राहु**र्हेरिरि**ति । अत्र विप्रयोगभावे भगवानपि प्रतिबन्धं कर्तुं **न शक्नोति**, तत्र **के वराकाः** कालादय इत्यर्थः । न चैवमसामर्थ्यं भगवतः । वस्तुन एव तथात्वात् । ननु भक्तिमार्गे प्रवेशे सति सर्वथा न सम्भवति नाशः, परन्तु भक्तिमार्गप्रवेशे तु केवलं भगवदङ्गीकार एव मूलम् । नहि भगवदङ्गीकारं विना भक्तिमार्गरुचिर्भवति । भगवतश्च किं प्रयोजनं येन प्रवेशयेत्, तथा च कथं फलसिद्धिरित्याशंक्य भगवान् केवलं कृपयैव प्रवर्तयतीति दृष्टान्तेन बोधयन्ति **अन्यथेति** । यदि प्रयोजनं विना कोपि न प्रवर्तेदेव, तर्हेतावत्कालं विश्वस्मिन् बालान् मातरो न पुपुषुरित्येव त्वयोक्तं स्यात् न त्वेवम् । किन्तु पुपुषुरेव । तथा भगवानपि प्रयोजनं विनैव केवलं कृपयैव सर्वं सम्पादयतीत्यर्थः । अत्र बालानां प्रयोजनमहत्त्वसाधकत्वेपि मातॄणां तदुद्देशेन न प्रवृत्तिः, किन्तु केवलं वात्सल्यादेव सर्वं सम्पादयतीत्याशयः । ननु भगवदङ्गीकारात् प्रवृत्तस्यापि यदि ज्ञानमार्गीयैः संसर्गः स्यात्, तदा तद्वाक्यैर्बुद्धिविपर्यासे कथं फलसिद्धिरिति चेत्, तत्राहु**र्ज्ञानिनामपीति**। न हि भगवदङ्गीकारमभिभूय तद्वाक्यानि बुद्धिं विपर्यासयितुं शक्नुवन्ति । भगवांश्च यं भक्तिमार्गेऽङ्गीकृतवांस्तं कदापि ज्ञानिवाक्यैरन्यथा क[illegible] [illegible]द्धदशायां तु न सम्भवत्येव, कदाचित्साधनदशायां

सम्यवेदित्याशंक्येदमुक्तम् । यद्वा । ज्ञानिनो त्रिविधबुद्धिप्रकारकुशलाः । तेनानन्तचतुरेणाप्यन्यथा बोधयितुमशक्यो भक्तः । अग्रेपि कदापि मोहं न जनयतीति भविष्यत्प्रयोगः । ननु कथं ज्ञायते भगवानेव मोहयिष्यतीति, न ह्युत्तमपदार्थं कोपि कस्मैचिद्दातुं समीहत इति चेत्, तत्राहुरात्मप्रद इति । यः स्वात्मानमपि प्रयच्छति तस्य सर्वफलदाने कः सङ्कोचः । ते न महोदारत्वात् सर्वस्वमपि ददाति, न तु मोहयति । प्रियश्च अतः प्रीतिकर्तृभ्यः सर्वस्वदानमुचितमेव । परमकृतज्ञत्वात् निर्णयमाहुस्तस्मादिति । उक्तप्रकारेण सिद्धदशां प्राप्य स्वार्थात् स्वप्रयोजनात् ॥ १७-२१ ॥

उपसंहरन्ति इतीति ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

**कृष्णः** श्रीगोकुले प्रकटः । नहि तत्प्रसादं विनैतद्भावतत्त्वं ज्ञातुं शक्यम् । अत एव तद्वल्लभत्वं स्वस्मिन् नाम्नैवाहुः । **संन्यासवरणं** सन्यासाङ्गीकारः । **भक्तौ** भक्तिमार्गे । यद्यपि ज्ञानमार्गेपि संन्यासनिर्णय उक्तः, तथाप्येतद्विचारं मनस्यागते तस्य पुरुषार्थेष्वेव गणना जायते । **अन्यथा** सिद्धदशां विना पातः पूर्वस्थितभावात प्रच्युतिः ॥ २२ ॥

प्रणम्य च प्रभुं टीका गोकुलोत्सवसूरिणा ।
श्रीगोविन्दसुतेनेयं कृता संन्यासनिर्णये ॥ १ ॥

**इति श्रीगोवर्धनधारिचरणकमलैकतानश्रीगोकुलोत्सवविरचितं संन्यासनिर्णयविवरणं समाप्तम् ॥**

---

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## चाचाश्रीगोपेशविरचितविवरणसमेतः ।

---

पदारविन्दद्वन्द्वं तद्वन्देऽहं दिव्यमद्भुतम् ।
हृदि यद्धारणात् कोपि तापः प्रादुर्भवत्यलम् ॥ १ ॥
मुदा तत् श्रीमदाचार्यपदाब्जं दैन्यदायकम् ।
मुहुः प्रणम्य संन्यासनिर्णयो विवरिष्यते ॥ २ ॥
तथाहि । यावत्प्रेम यत् सकलं पुष्टिमार्गीयमस्ति तत् ।
तावद्विचारितं तत्र संन्यासो न विचारितः ॥ ३ ॥
इति तत्स्वरूपविज्ञानाभावेनैव कृते सति ।
तस्मिन् स्वीयो भवेन्मार्गाच्च्युतो हीति सुनिश्चितम् ॥ ४ ॥
तदानिष्टं स्वकीयस्य मार्गे स्यादिति चेतसि ।
पश्चात्तापो महान् श्रीमदाचार्याणामभूत्ततः ॥ ५ ॥
तन्निवृत्त्यर्थमेतस्य विचारोपेक्षितस्ततः ।
हेतुसाधनतश्चैव फलतश्च स्वरूपतः ॥
अधिकारादपि परस्ताद्यः स निरूप्यते ॥ ६ ॥

तत्र प्रथमं स्वमार्गाङ्गीकृतस्य स्वमार्गीयभजने प्रवृत्तस्य भक्तिभावदार्ढ्येनानन्तरासक्तिसिद्ध्यर्थं श्रीमदाचार्याः परित्यागविचारोपक्रमं कुर्वन्ति ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

पूर्वपीठिकोक्तपश्चात्तापनिवृत्त्यर्थमित्यर्थः । अन्यत्स्पष्टम् । विचारमेवाहुः स इति । परित्यागः, मार्गद्वितये, भक्तौ पुष्टिमार्गीयायां ज्ञाने च विशेषतः कर्तव्यत्वेन प्रोक्तो, नान्यमार्गे ॥ १ ॥

ननु यथा भक्तिः ज्ञानं च मार्गौ तथा कर्मापि मार्ग इति तत्रापि स कर्तव्य इति चेत्, तत्र निषेधमाहुः ।

कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः।
अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा॥ २॥

कर्ममार्गे तु न कर्तव्यः सुतरां कलिकालतः। 'यावज्जीवमग्निहोत्रं जुहुयादि'ति श्रुतेः अहर्निशं कर्मविधिकृतेरेवावश्यकत्वात् परित्यागानवसर एव। यद्यप्यायुषश्चतुर्थो भागस्तुरीयाश्रमेण नेय इति तत्रापि विधिर्वर्तते, तथापि सुतरां कलिकालदोषेण रोगादिजराजनितपीडया संन्यासाश्रमधर्मनिर्वाहः कर्तुमशक्य इति विपरीतफलकत्वान्न कर्तव्य इति भावः। अतः कारणात् मार्गयोः एव कर्तव्यत्वस्य प्राप्तत्वात् तत्र च स्वोपयोगित्वात् आदौ भक्तिमार्गे तस्य विचारणा विचारकरणम्, तत्र कदा, किमर्थं, कर्तव्यमित्यादिरूपमित्यर्थः॥ २॥

तदेव निरूपयन्ति। यथा ज्ञानमार्गे विविदिषाविद्वद्भेदेन परित्यागस्य द्वैविध्यम्, तथा भक्तिमार्गेऽपि साधनसिद्ध्यर्थं फलसिद्ध्यर्थं च कर्तव्यत्वे प्राप्ते तत् द्वैविध्यं संभवतीति, तत्र श्रवणादिनवधाभक्तिसाधनार्थं तत्करणे स्वकीयस्य वक्ष्यमाणानिष्टं भविष्यतीति तन्निषेधमाहुः।

श्रवणादिप्रसिद्ध्यर्थं कर्तव्यः स च नेष्यते।
सहायसङ्गसाध्यत्वात्साधनानां च रक्षणात्॥ ३॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि॥ ४॥
अग्रेऽपि तादृशैरेव सङ्गो भवति नान्यथा।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः॥ ५॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः।
अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः॥ ६॥

परित्यागं कृत्वा श्रवणादीन्साधयामीति यदि कर्तव्यस्तदा स परित्यागो नेष्यते नाङ्गीक्रियते, इष्टसाधकाभावात्। तत्र हेतूनाहुः। श्रवणादीनां सहायसङ्गसाध्यत्वात्, श्रवणकीर्तनादिकर्तारः भगवद्धर्मपरा अपि मार्गस्वरूपज्ञानात् गृहस्थिता एव। तेषां सङ्गेन साध्यत्वम्, नान्यथा। अस्य तु त्यागानन्तर'मेकाकी निस्पृहः शान्त' इत्यादिवाक्यादेकाकित्वेनैव स्थितेरावश्यकत्वात् सत्सङ्गाभावेनैव कुतः श्रवणादिसिद्धिरिति तदर्थं न कर्तव्यमेवेति भावः। किञ्च, कदाचित्तत्सङ्गेऽपि तेषां गृहस्थत्वेन सांसारिकत्वज्ञानात् त्यागिनः तेषु प्रवृत्तिरेव न। प्रवृत्तावपि ते तस्याग्रे किमपि न कथयन्ति, यतस्ते मार्गस्वरूपज्ञातारः, अयं तु मार्गाच्युत इत्यतस्तदर्थं सर्वथा न कर्तव्य इत्यर्थः। यतः स्वमार्गीयसङ्गाभावे साधारणसङ्गेन वक्ष्यमाणानर्थश्च भवेत्, न तु स्वमार्गज्ञानमपि। किञ्च, साधनानां च रक्ष-

णादिति । अहोरात्रिप्रणवप्राणायामादिसाधनविधेरेव रक्षणस्यावश्यकत्वात् श्रवणादिप्रपन्नानवसर एवेति । किञ्च, प्रपन्नत्वसम्भवेऽपि तस्य साधकत्वाभावमाहुः **अभिमानादिति** । संन्यासग्रहणानन्तरं तत्त्वमस्यादिवाक्यादात्मनि सोऽहमित्यभिमानो भवति, भक्तिमार्गे तु समर्पणानन्तरं देहप्राणेन्द्रियादीनां भगवदधीनत्वं भवति, तदा दासत्वान्न ममेत्यभिमान इति । स्वधर्मं विहाय स्वकीयस्य श्रवणार्थं परधर्मरूपत्यागकरणे इष्टप्राप्त्यभावः, प्रत्युत विपरीतफलमपि भवेदिति स न कर्तव्य इति भावः । किञ्च, **नियोगादिति** । स्वमार्गाङ्गीकृतस्यान्यत्र विनियोगः सर्वथा ह्यनुचितः । त्यागानन्तरं विहितत्यागसाधनकरणे देहादीनामन्यत्रैव विनियोगो भवेत्, न तु साक्षात्पुरुषोत्तम इति । स्वमार्गफलासाधकत्वात्तथेति भावः । किञ्च, तद्धर्मैरिति । पुष्टिमार्गधर्मैश्च विरोधतः । अयं परित्यागो विधिप्रयुक्तत्वान्मर्यादामार्गीयो भवितुमर्हति, न पुष्टिमार्गीयः । पुष्टिमार्गो हि समस्तविधिभिरस्पृष्टः, तदा तत्परित्यागः सुतरां तथेति प्रमाणातीत इत्युभयोर्धर्माणामपि भेदाद्विरोधः स्यादिति तथा । चकारात् स्वरूपफलयोरपि भेदः । एवं स्वमार्गाङ्गीकृतस्य श्रवणादिभक्तिसिद्ध्यर्थं संन्यासनिषेधकथनेन 'गृहे स्थित्वा स्वधर्मतः । अव्यावृत्तो भजेत् कृष्णं पूजया श्रवणादिभि'रित्युक्तप्रकारेण स्वधर्मनिष्ठया सेवैव कर्तव्या, नान्यदिति सूचितम् । ननु गृहमेव बाधकं भवेत् तदा [illegible] कर्तव्य इत्याशंक्य तस्यापि निषेधमाहुः । गृहमादिपदेन तत्सम्बन्धिनश्च सर्वे ऽपि धर्मप्रतिकूला एव, तथापि श्रवणादिसाधनार्थं संन्यासग्रहणं न कार्यम् । किन्तु त्परित्यागेन भगवदीयैः सह सेवा कर्तव्येति ज्ञाप्यते । अत एव 'भार्यादिरनुकूलश्चे' इत्यादिषु साधनार्थमनुकूलतद्ग्रहणाभिप्रायेण प्रतिकूलगृहत्याग एवोपदिश्यते, न तु न्यासग्रहणम् । तथोक्ते 'गृहे स्थित्वा स्वधर्मत' इति भक्तिवर्धिनीवचनविरोधः पात् । किञ्च, श्रीभागवतेपि भक्तिसाधनार्थं 'मदर्थेऽर्थपरित्याग' इत्यारभ्य 'एवं मैर्मनुष्याणा'मित्यादिभिस्सर्वसमर्पणरूपः त्याग उक्तो, न तु संन्यासः, अन्यथा त्वयोपभुक्तस्रगन्ध'इत्यनेन विरोधः स्यात् । यतः सेवाकरणे एवोच्छिष्टभोजनम्, न तु संन्यासे, सेवाऽभावात् । एवं सति साधनार्थमपि त्याग उक्त इति तत्स्वरूपज्ञानेन स्वमार्गीयः कश्चित् संन्यासग्रहणं कुर्यादिति प्रकृते तन्निषेध उक्त इति सर्वमनवद्यम् । अतः परं गृहादेर्बाधकत्वेन संन्यासग्रहणे तादृशैः सह सङ्ग एव भवेत्, किन्तु स्वयमपि तादृशो भवतीत्याहुः । स्वयमपि तथा । ते सागन्त्यागिनः धर्मत्यजिनः विषयाक्रान्ता वेशमात्रधारिणः पाषण्डिनः, तथा स्वयमपि तत्सङ्गेन विषयाक्रान्तः पाषण्डी च स्यात् । तत्र हेतुः कालतः । कलिकालदोषत इत्यर्थः । यद्वा कालेन इत्युपलक्षणम् । कालकर्मस्वभावेभ्य इत्यर्थः । यतः मार्गच्युतजीवस्य कालादेर्नान्यत्वेन, मार्गे स्थितस्यैव तदनधीनत्वेन तस्य भगवदधीनत्वेन भगवान् रक्षां करोति । तादृशस्यापि भगवदधीनत्वाभावाद्रक्षाऽभावेन तथात्वमेवेति भावः । एवं तन्मार्गीयं निरूप्य

माहुः । यदेवं विषयाक्रान्तो भवेत्तदा विषयाक्रान्तानि, देह इत्युपलक्षणम्, किन्तु, देह-प्राणेन्द्रियान्तःकरणानि येषाम् । सर्वदा सर्वकालं भवेत्, प्रवेशस्यावकाश एव नास्ति, तदावेशो न भवतीति सिद्धान्तात् तस्यापि भगवदावेशो न भवेदिति सर्वस्वहानिरेव भवतीति भावः । अतः कारणादत्र पुष्टिमार्गे पुष्टिमार्गीयस्य साधने भक्तौ साधनभक्तिसिद्ध्यर्थं त्यागः सुखावहो न भवति, अनिष्टपर्यवसानात् । अतः स सर्वथा न कर्तव्य इति ज्ञापितम् ॥ ३–६ ॥

ननु तर्हि कदा किमर्थं च कर्तव्यं इत्याकांक्षायां तस्य प्रयोजनकथनेनैवाधिकारिणं चाहुः ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोऽयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३३ ॥

विरहानुभवार्थं परित्यागोऽस्मिन्मार्गे प्रशस्तो भवति । अन्यथा नेत्यर्थः । अत्रेदमाकूतम् । स्वमार्गीयस्याङ्गीकारादारभ्य श्रीकृष्णसेवैव कर्तव्या, नान्यदिति सिद्धान्तः । तदुक्तम् 'कृष्णसेवा सदा कार्या'ति । सा सेवा साधनरूपा फलरूपा चेति द्विधा । मानसी सा सेवा फलरूपा, तत्साधनरूपा तनुजवित्तजात्वेनोक्ता । एवं सति मार्गनिष्ठया सर्वसमर्पणपूर्वकं स्वेषां तनुवित्तादीनां भगवत्येव विनियोगकरणेन सेवाकरणे तत्स्वरूपे प्रेम जायते । एतदेवोक्तम् । 'गृहे स्थित्वा स्वधर्मतः' इत्यारभ्य 'ततः प्रेमे'त्युक्तं भक्तिवर्धिन्याम्, नो चेदिद स्थानस्य विजातीयत्वेन बाधकत्वात् साम्प्रतं वा सानुसन्धानाभावेन पुनर्विजातीय-

सङ्गेपि तस्य न नाश इति तत्रैव 'यावज्जीवं तस्य नाशो न क्वापी'त्युक्तम् । एवं सति अस्य त्यागस्य पूर्णपुष्टिभाववानेवाधिकारी, नान्यः, तस्य प्रयोजनमपि प्रचुरभावपोषेण विरहानुभव एवेति सुष्ठूक्तं तथा । ननु तर्हि परित्याग एव कर्तव्यः, संन्यास एव किमर्थं कार्यः, तत्र हेतुमाहुः स्वीयेति । स्वीया गृहसम्बन्धिनस्तत्क्रियमाणो यो बन्धः तन्निवृत्त्यर्थं चेयः । अन्यथा संन्यासाश्रमो धर्माचरणार्थं न भवतीत्यर्थः । विजातीयमिलनस्य भावघातकत्वात् । तदुक्तं फलप्रकरणे 'अस्माभिस्तु तथा सर्वे वर्तितव्यं न संशयः' इत्यत्र । 'यथा व्याघ्राग्रे देहाभिमानी'ति । ननु तथापि भक्तिमार्गीयभावपोषार्थमपि विहितत्वात् गुरूपदेशं विना कथं तत्सिद्धिरित्याशंक्य गुरून्निरूपयन्ति । कौण्डिन्य ऋषिरनन्तगुणश्रवणेनानन्तस्वरूपासक्त्या तत्कालमेव सर्वत्यागं कृतवान्, पुनस्तद्विरहेण विकलः सन् जडादिष्वपि प्रश्नं चक्रे । तथास्मापि स्वरूपसेवाकरणे प्रेमासक्त्यनन्तरं पुष्टिमार्गीयभावोदयक्षण एव त्यागः कर्तव्य इति साम्येन स गुरुरुक्तः । अपरे गुरवो गोपिकाः । यथा पूर्वमप्यासक्तौ सत्यां वेणुनादश्रवणानन्तरं त्यागे कृते प्रभुसङ्गमस्तासामप्यभूत् । अग्रे पुनरन्तरासक्तिदार्ढ्यार्थं विरहानुभवोपि जातः, येन 'तन्मनस्कास्तदालापा तदात्मिकाः' इत्यादि विकलत्वास्वास्थ्यादिरूपावस्थाप्यासीदिति साम्येन तासां च गुरुत्वं निरूपितम् । एवं सति तद्रीत्या तथा कृते एतस्यापि फलं सेत्स्यतीति भावः । ननु यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुत्या ज्ञानमार्गीयसंन्यासे वैराग्यं साधनम्, तथात्र किं साधनम्, तदाहुः साधनं चेति । भावनया सिद्धो यो भावः तत्साधनम् । पूर्वमपि भावो जायते, परं कृत्रिम इति । तादृशस्य साधनत्वं न, आसक्त्यनन्तरं 'भगवता सह संलाप' इत्याद्युक्तप्रकारकमनोरथात्मकभावनया सिद्धिं प्राप्तो यः पूर्णः पुष्टिमार्गीयो गूढो भावः तत्साधनम् । न अन्यदिति । अतिरिक्तं साधनं नेष्यते । सापेक्ष्यतत्त्वाभावान्नापेक्षित इत्यर्थः । एवं सति वैराग्यमप्येतदेव, न ज्ञानमार्गीयम् । यतो भगवत्स्वरूपव्यतिरिक्ते सर्वत्रारुचिरिति भक्तिवर्धिन्यां 'स्नेहाद्रागविनाशः स्या'दित्यादिना तथा स्फुटीकृतम् । ननु ज्ञानमार्गे वैराग्येण त्यागे कृते विषयाद्यभिलाषाभावात् देहेन्द्रियैः प्राकृतधर्मराहित्यं चित्तादिस्वास्थ्यं च भवति, प्रकृते त्यागादारभ्य प्रतिदिनं तथा भावने वैकल्यमस्वास्थ्यमेव सकलेन्द्रियेषु वर्धत इति प्राकृतविषयधर्मवत्त्वमेव लक्ष्यते, तत्कथं फलसिद्धिरित्याशंक्य तद्धर्मस्वरूपमाहुः । बाह्यानुसन्धानराहित्यपूर्वकमन्तःस्वरूपानुभवसमानाधिकरणचेष्टितं यत्सकलेन्द्रियाणां तद्विकलत्वम्, बहिरपेक्षया विपरीतान्तर्भावरूपाः कटाक्षेण येषां तेषां भावस्तत्त्वमित्यर्थः । तथा बहिः प्रियसङ्गाभावजनितात्यां सकलेन्द्रियाणां स्वास्थ्याभावोऽस्वास्थ्यम् । एतद्वयमपि विप्रयोगभावस्य प्रकृतिः साहजिको धर्मः । यथा ज्ञानमार्गे वैकल्याभावः स्वास्थ्यं तस्य प्रकृतिः, तथा पुष्टिमार्गे तद्विपरीतधर्मवत्त्वं तद्भावस्य प्रकृतिः । अनेन यावत्पर्यन्तं विकलत्वास्वास्थ्यादि-

रूपा प्रकृतिः न सिध्यति, तावत्पर्यन्तं तद्भावस्यापि न पूर्णत्वमिति सूचितं भवति । अत एव तद्भावाप्त्यनन्तरं पुनर्नाशाभावेन प्रयत्नाभाव उक्तः 'यावज्जीव'मिति भक्तिवर्धिन्याम् । ननु तर्हि विषयसम्बन्धित्वमायातमित्याशंक्य तन्निराकुर्वन्ति **प्राकृतं न हीति** । प्रकृतिगुणविकारजन्यं तदुभयमपि न भवति । हीति निश्चयः । अयं भावः । पुरुषोत्तमस्वरूपं तु रसात्मकम्, रसो हि द्विविधः, संयोगविप्रयोगभेदेन, इति स्वरूपमपि तथा, तत्र संयोगे स्वरूपं बहिः प्रकटं भवति । विप्रयोगे भावात्मकतया तत्तदिन्द्रियेष्वाश्लिष्टं सदन्तरेव रसपोषं करोति । परन्तु तापरूपेण स्थितत्वाददर्शने च तापं जनयति, इति तज्जनिततीक्ष्णभावभावनया पूर्वोक्तप्रकारेणान्तःस्वरूपानुभवे तदनुसारिचेष्टाकरणेन विकलत्वं बहिः प्रतीयते । दर्शनाभावेनास्वास्थ्यं चेत्युभयधर्मस्य रसात्मकभगवत्स्वरूपजन्यत्वेन रसात्मकत्वादलौकिकानन्दरूपत्वमेव । न तु प्राकृतत्वमिति सुष्ठूक्तं **प्राकृतं न हीति** । एतेन यथा यथा विकलत्वमस्वास्थ्यं स्यात्तथा तथा फलविलम्बाभाव इति सूच्यते । एतत्प्रकृतिं निरूप्य यथा (ज्ञान) मार्गे परित्यागानन्तरं सकलपदार्थस्फूर्त्या सर्वं ज्ञानं गुणाश्च भगवद्धर्मरूपात्मानुभवेन साधकास्तथा प्रकृतेपि तेषां साधकत्वमाशक्य साधकत्वस्य का सम्भावना, प्रत्युत बाधकत्वमित्याहुः **ज्ञानमिति** । एवं वर्तमानस्य विकलत्वास्वास्थ्यरूपमप्राप्तस्य ज्ञानं बहिरनुसन्धानेन पदार्थस्फूर्त्या सर्वेगुणा भगवल्लीलादिधर्मरूपाश्च कदाचित्प्रच्युतास्तेन व्यभिचारिभावानां वैचित्र्याद्वा हृदि स्फुरति, तदा मनस्तदवलम्बनं भवति । यथा महासमुद्रे मज्जतः तृणस्येव । तदा तज्जनितयत्किञ्चिदपि स्वास्थ्ये फले बाधका एव, न तु साधकाः । किञ्च, ये लीलागुणाः पूर्वं भावपोषणे साधकाः जातास्त एव गुणाः साम्प्रतमेतादृगवस्थायां जीवनसम्पादकत्वेन बाधका भवन्ति । एतेन विरहानुभवस्य पूर्णत्वेन जातत्वात् जीवनस्थितेः प्रयोजनाभावात् । अतः परं मूर्च्छादीनां दशम्येवावस्था फलसाधिकेति तेषां बाधकत्वमुक्तमिति ज्ञापितम् । एवं सति लीलादीनां धर्मरूपत्वेन बाधकत्वकथनात् केवलधर्मिस्फूर्तिरेव फलसाधिकेत्यपि ज्ञापितं भवति । ननु ज्ञानमार्गे ज्ञानगुणमनःस्वास्थ्यादीनां साधकत्वम्, भक्तिमार्गेपि कथं बाधकत्वमित्याकांक्षायां मार्गभेदेन साधनफलभेदात् तथात्वमाहुः । **संन्यासेन विशेषितात् सम्यक् साधितात् ज्ञानात् प्रथमं सत्यलोके स्थितिर्भवति** । पश्चाद्ब्रह्मणा सह मुक्तिरुक्तेति ज्ञानानन्तरमेव सत्यलोकस्थितेः कथनात्तत्र मनःस्वास्थ्यगुणादीनामेव साधकत्वम्, तद्व्यतिरेकेण ज्ञानस्थैर्याभाव इति तेषां साधकत्वमुक्तम् । एतेन ज्ञानमार्गस्य साधनं फलमपि चोक्तम् । प्रकृते 'भगवता सह संलाप'इत्याद्युक्तप्रकारकसाक्षात्स्वरूपसम्बन्धभावनैव साधनम् । तत्र च तत्सम्बन्धव्यतिरेकेण स्वास्थ्यसम्भावने च स्वास्थ्यमेव फलसाधकम्, नो चेत् फलमेव न भवेत् । तत्रापि यादृशी पूर्वोक्तप्रकारिकान्तर्भावना तादृशमेव सर्वेन्द्रियसम्बन्धि बहिरनुभवात्मकं फलमपि भवेत्, न तु ज्ञानमार्गवत्सामान्यतो सत्यलोके स्थितिः, पश्चादन्ते च केवलमात्मसायुज्यमात्रमिति फलं चापि तथा भवेदित्युक्तम् । किञ्च,

लयोप्यक्षर एव, न तु पुरुषोत्तमे । सोपि ब्रह्मणा सहेति फलसिद्धौ महान् विलम्ब उक्तः । तत्रापि साधनफलभेदः । प्रकृते साक्षात्पुरुषोत्तमस्य रसात्मकत्वात् रसस्य संयोगविप्रयोगात्मकत्वाद्बाह्याभ्यन्तरभेदेन संयोगे विप्रयोगे च स्वरूपरसानुभव एव । न तु साधनफलभेदः । एवं सति विकलत्वास्वास्थ्यादिदशायाः पूर्वोक्तरीत्या साधनरूपायामपि साक्षात्स्वरूपानुभव एव भवतीति ज्ञानमार्गफलापेक्षया एतत्साधनस्यापि सर्वोत्कृष्टत्वं निरूपितम् । ननु ज्ञानस्य फलं मुक्तिः, सत्यलोकस्थितिः किमर्थं भवतीत्याशङ्क्याहुः ताहशाः संन्यासविशिष्टपूर्णा ज्ञानयुक्ता अपि **सत्यलोकादौ** तिष्ठन्त्येवेति निश्चयः । अत्र **संशयो न** । यतस्तेषां तु ब्रह्मणा सहैव मुक्तिसम्भवात्तावत्पर्यन्तं तत्रैव स्थितेर्नियतत्वात् तत्र सा मर्यादास्तीति । आदिपदेन तादृशत्वाभावे लोकान्तर एव स्थितिः । ननु तत्रापि फलसिद्धौ महान् विलम्बो निरूपितः । प्रकृते तादृगवस्थायां यदि गुणाद्यनुसन्धानं न भवेत्तदा तत्कालमेव फलसिद्धिरिति तत्प्रकारं निरूपयन्ति **वह्निरिति** । पूर्वोक्तभावनया भगवान् एव स्फुरतीत्यर्थः । स चेदतिविगाढभावेन तदात्मकतया गुणगानद्वारा साक्षाद्बहिः प्रकटो भूत्वा रसानुभवं कारयित्वा पुनस्तिरोहितः प्रचुरतापात्मकः सन्नन्तःप्रविशेत्, **तदैव** तत्क्षणमात्रेणैव **सफलो** बन्धः प्राकृतदेहरूप एव बहिः साक्षात्फलानुभवे प्रतिबन्धः, स तादृशप्रचुरतापेन मूर्च्छादिदशमावस्थां नाशमेति । तत्र दृष्टान्तः **वह्निवत्** । यथा दार्वन्तर्गतो **वह्निः** सदैव **तिष्ठति, परन्तु** दारुदहनोपयुक्तो न भवति । यदा पुनर्मथनेन वह्निः प्रकटो भवेत्, तदा तत्सम्बद्धः सन् तदन्तःप्रविश्य क्षणेनैव सर्वं दार्वंशं प्रज्वालयति । न केवलं तावन्मात्रम्, किन्तु तत् स्वसदृशमपि करोति, तथा अयमपि स्वात्मरूपत्वेन तदन्तर्गतो विगाढभावेन मथनेनैव तथा भूत्वा पुनस्तिरोभूयान्तस्तापरूपेण प्रविशेत्तदा तं तथा कृत्वा स्वसदृशीं रसात्मकतामलौकिकवपुर्गुणादिसम्पत्तिमपि करोतीति दृष्टान्तधर्मसाम्येन सूचितं भवति । एवं सति यथा दारुण्यार्द्रत्वं यदि भवेत्तदा सोप्यसमर्थो धूममेव जनयति, तथा प्रकृते यत्किञ्चित्स्वास्थ्यस्यार्द्रत्वस्थानीयत्वात् धूमवद्गुणगानादिकमेव भवेत्, तदा तत्सम्बन्धः स्यात्, न तु बन्धनिवृत्तिरित्याशयेनोक्तं 'न चान्यथे'ति । एतत्प्रकाराभावे न भवतीत्यर्थः । एतत्सर्वं फलप्रकरणीयद्वितीयाध्याये 'गायन्त्य उच्चै'रित्यस्य विवरणे 'शब्दो हि धूमवल्लोक' इत्यादिना निरूपितम् । एतेनास्वास्थ्यादावेव फलविलम्बाभाव इति तदेव साधकम्, न गुणादिस्फूर्तिरिति पूर्वाशङ्का निरस्तेति भावः । ननु विप्रयोगस्य केवलमस्वास्थ्यैकप्रकृतिकत्वात् तदुत्तरक्षण एव प्रतिबन्धनिवृत्तिं कथं न करोति । मध्ये गुणाद्यवलम्बनं कारयति । अत एवोक्तमन्तर्हिते भगवती'त्यस्य विवरणे 'यावत् तापोन्तः प्रविशेत् तावता भगवल्लीला प्रविष्टे'ति । तत्प्रवेशे तस्य तदेकत्वमापात् । तदनुभवाभावो यतः । एवं सति विप्रयोगभावार्थं जीवनसम्पादकत्वेन गुणानां साधकत्वं तत्स्थाने प्रयोजनाभावा-

१ तादृशत्वाभावेन भवतीति पाठः ।

तादृगवस्थायां स्वास्थ्यकारकत्वेन बाधकत्वमिति न कोपि विरोधः । अत एव ज्ञानं गुणाश्चेति पूर्वं बाधकत्वमधुना गुणास्त्वित्यनेन साधकत्वं चोक्तम् । एतेन भगवतोपि बाधकाभावो निरूपितः । एवं गुणानामवस्थाभेदेन बाधकत्वसाधकत्वनिरूपणात् भगवतो बाधकत्वाभावं निरूप्यातःपरमपि चेद्गुणाद्यवलम्बं स्थापयेत्, तदा स्वास्थ्ययुक्तत्वात् बाधकत्वं भवेदिति तदभावमाहुः । एवं सम्पूर्णे विरहानुभवे जाते बहिःसाक्षात्फलदानार्थं यतो भगवान् लौकिकैश्वर्यवीर्यगुणादिसकलस्वोपयोगशक्तिसहितं स्वरूपं कृत्वा स्थितो भवति । अतः फलरूपत्वात्स्वस्य अत्र दशायां फलबाधको गुणाद्यवलम्बो नेष्यते, भगवता नेष्यत इत्यर्थः । अयं भावः । फलानुभवार्थं भक्तस्य यावती परीक्षा भगवतः कर्तव्या भवति, तावती सर्वा विरहानुभवेन सम्पन्ना जातेत्यतःपरमपि फलविलम्बे जाते स्वस्यैव बाधकत्वं भवेत्, तदधिकारस्य जातत्वात्। अतः सुष्ठूक्तं नात्रेति । ननु तादृगवस्थायामपि तादात्म्यकतया यथा प्रियेण सह भाषणादिकं प्रियाया भवति, तथा तादृशभावनया प्रियस्यापि तत्सम्भवतीति तदेव वाक्यं स्वास्थ्यकारकं भविष्यति । अथवा 'हा नाथे'त्यत्र क्रियाशक्त्या तादृगवस्थायां स्वास्थ्यकरणम्, तथा प्रकृते चापि वचनेनापि तत्सम्भवतीत्याशंक्य तत्राहुः स्वास्थ्येति । यद्यपि पूर्वावस्थायां तथा करोति, तदनन्तरं तदपि स्वास्थ्यवाक्यं न कर्तव्यमिति न करोति, प्रयोजनस्य जातत्वात् । अत्र हेतुः । दयालुरिति । अतो न विरुध्यते । विरोधित्वेन न भूयत इत्यर्थः । विरोधी स एव यः परस्यानिष्टं करोति । अयं परमदयालुरिति सकलेष्टसिद्धिं कृतवानिति भावः । एवं सति तादृशस्य स्वरूपस्थितौ गानम्, लीलाप्रवेशे प्रलाप इति मूर्च्छा तदवस्थया निरूप्यते । अतः परं दशमावस्थायाः पूर्वोक्तप्रकारेण प्रतिबन्धनिवृत्त्या फलसिद्धिरिति सर्वमवदातम् । एतदेव सर्वं फलप्रकरणेपि निरूपितम्, विरहानुभवेन परीक्षानन्तरं 'रुरुदुः सुस्वर'मित्यारभ्य 'तन्वः प्राणमिवागत'मित्यादिना । एवं स्वमार्गीयपरित्यागस्वरूपं निरूप्य, अस्य दुर्लभत्वमाहुः । अयमिति स्वरूपनिर्देशः । तथा चेदृशः परित्यागः, साधनासाध्यत्वादति दुर्लभः । तर्हि कथं सिध्यति तत्राहुः प्रेम्णेति । श्रीमदाचार्योक्तनिष्ठया साक्षात्स्वरूपमेवाकरणेन तत्स्वरूपे प्रेमासक्तिव्यसने सम्पन्ने चैतत्परित्यागाधिकार इति तदा सिध्यति, नान्यथा । अन्यसाधनप्रकारेण नेत्यर्थः । अत एव दुर्लभप्रेमासक्तिजनितस्वरूपसम्बन्धाभिलाषजन्यदुःखं तेन लाभो यस्येति तथा निरूपितम् । अथवा । प्राकृतस्याप्राकृते प्रेमासम्भव इति तद्धेतुं पक्षान्तरेणाहुः प्रेम्णा भगवत्प्रेम्णा इति । श्रीमदाचार्यश्रीकारद्येन स्वरूपानन्ददानोपयोगि प्रेम भगवतस्त्वस्मिन्नायत इति तस्यापि तत्सम्भवतीति तथोक्तम् ॥ ७-१३ ॥

एवं स्वमार्गीयसंन्यासविधिं निरूप्य तारतम्यज्ञापनार्थं ज्ञानमार्गीयतद्विधिं निरूपयन्ति ज्ञानमार्ग इति ।

ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥
ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥
अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।
पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितिः ॥ १६½ ॥

ज्ञानमार्गे तु संन्यासो मया द्विविधो विचारितः । तदेव द्वैविध्यं विचारपूर्वकमाहुः । एकः संन्यासः ज्ञानसाधनार्थं, अपरः ज्ञानोत्तरं मुक्त्यङ्गमित्यर्थः । तत्र संन्याससिद्धिस्तु जन्मशतैः अनेकशतसहस्रजन्मानन्तरं भवति । न तु शीघ्रम् । तत्र हेतुः । ज्ञानमिति । ज्ञानोत्तरं संन्यासाधिकारः । तत् ज्ञानं च साधनापेक्षम्, साधनं चित्तशुद्धिः, तदपेक्षा । तत्पुनर्यज्ञादिश्रवणान्मतं सम्मतम्, नान्यथा । आदिपदेन तपआदीन्यन्यान्यपि ज्ञेयानि । तत्रापि निष्कामत्वेन कृते चित्तशुद्धिः । तत्रापि बहुजन्मानन्तरम् । अत एवोक्तं बहूनां जन्मनामन्ते ज्ञानवान् भवतीति । कदाचित् ज्ञाने जातेपि सत्यलोकस्थितेरावश्यकत्वान्मुक्तेर्विलम्बः एवेति सिद्धिर्जन्मशतैरपीत्युक्तम् । एवमुत्तराङ्गसंन्यासं साधनफलसहितं निरूप्य, अत्रापि ज्ञानसाधनार्थं स चेद् भवेत्तदा तस्य फलासाधकत्वं विपरीतफलकत्वं चाहुः । यतः पूर्वोक्तसंन्यासाधिकारो यज्ञादिकरणेन शतसहस्रजन्मानन्तरं चित्तशुद्ध्या ज्ञाने जाते भवति अतः कलौ चित्तशुद्ध्यभावेनैव कृतः संन्यासः पश्चात्तापायैव भवेत्, न त्वन्यथा । उक्तफलाय नेत्यर्थः । सकलेन्द्रियाणां कठिकालाधीनत्वे स्वस्वविषयासक्तत्वात्तत्यागे तेषां लोलुपत्वेन स्थैर्याभावात् । मया वृथैव संन्यासः कृत इति पश्चात्तापो भवेदिति भावः । केवलं पश्चात्तापमात्रमेव न भवेत्, किन्तु क्रमेण विषयासक्त्या वेषमात्रपर्यवसायित्वमपि । तदाहुः पाषण्डित्वमिति । अन्तर्विषयासक्तिर्बहिस्तदाश्रमवेषमात्रं पाषण्डत्वमपि । तदाहुः पाषण्डित्वमिति । चकारादारूढपतितत्वजनितं पापमपि भवेदित्यर्थः । तस्मादनिष्टपर्यवसायित्वात् ज्ञाने ज्ञानसाधनार्थं न संन्यसेदिति भावः । नन्वेवं निषेधः कथम् । कश्चित्समीचीनः स्वेन्द्रियनिग्रहादिना तमपि साधयति चेत्तत्राहुः सुतरां कलिदोषाणां प्रबलत्वादिति स्थितिः ॥ १४–१६½ ॥

भक्तिमार्गेपि तेषां बाधकत्वं सम्भवेदित्याशङ्कां स्वयमेवोद्घाटयन्ति ।

भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥
अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।
स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥
हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।
अन्यथा मातरो बालान् स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥

**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**
**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

**भक्तिमार्गेपि** चेत्यागिनः पूर्वोक्तदोषः प्रसज्येत तदा किं कार्यमिति प्रश्नः । तत्रोच्यते, ससाधनमित्यर्थः । तदेवाहुः **अत्रारम्भे** । भक्तिमार्गीयत्यागारम्भे । यद्यपि आरम्भभेदेन विरहानुभवानन्तरं प्रचुरभावावस्थाभावसमयो ज्ञाप्यते, तथापि पुनर्नाशो न स्यात् । यतस्तस्य पूर्वमेव सकलेन्द्रियाणां भगवदधीनत्वात् , तत्रैव विनियोगकरणेन भगवत्स्वरूपैकनिष्ठविषयव्यसनवत्त्वमेव जातम् । न तु प्राकृतविषयग्रहणस्वभावोपि स्थितः, तदभावे कुतः तत्तद्दोषसङ्क्रमणावकाश इति भावः । एतेन तादृशभावस्यापि फलान्तःपातित्वमेव, न तु साधनत्वमिति ज्ञापितम् । ननु तथापि विषयभोगपदार्थेषु दृष्टेषु यत्किञ्चित्स्वास्थ्यं भवेदपि **दृष्टो** योऽन्यस्य नाशकः पदार्थः तस्याप्यभावान्न **नाश** इत्यर्थः । पदार्थे दृष्टे कदाचित्सम्भवेदपि, प्रकृते व्यसनानन्तरं गृहस्थितेर्बाधकत्वं मत्वैव तत्पदार्थानां त्यागः कृत इति दर्शनस्याप्यभावात् तथेति भावः । अत एव 'यदा स्यात्सव्यसनं कृष्णे' इत्युक्त्वा 'तादृशस्यापि सततं'मित्यनेन तस्य त्याग उक्तः । ननु तथापि वासना चेत्तिष्ठति, तदपि तथा भवेदिति, तदभावमाहुः **स्वास्थ्यहेतोरि**ति । स्वास्थ्यहेतुपदार्थस्य परित्यागाद्वासनासहितत्यागः परित्यागः, वासनया विषयग्रहणं भवति, तदभावाद्बाधः केन पदार्थेनास्य सम्भवेत् । अपि तु न केनापीति भावः । वासनासहितत्यागकथनेन दृष्टेपि तस्मिन् न तद्ग्रहणमिति सूचितम् । अनेन पदार्थास्तादृशस्य स्वास्थ्यहेतवोपि न भवन्ति, किन्तु भगवत्स्वरूपनिष्ठा एवेति ज्ञापितं भवति । एतदेवोक्तं निरोधवर्णने 'बाधशङ्कापि नास्त्यत्र तदध्यासोपि सिध्यती'ति । ननु तर्हि अदृष्टादिना स कदाचित्सम्भवेत् तत्राहुः । यद्यपि **हरिः** कालकर्मादीनामपि सर्वेषां नियन्ता सर्वेश्वरः, तथापि तादृगवस्थानन्तरं स्वस्य रसात्मकत्वेनैव तादृशस्य निरुध्यजनितबाधां कर्तुं न शक्नोति । तत्करणे न रसो न वा कीर्तिः, यतः स्वयं **हरिः** एतादृगवस्थाजनितदुःखं हन्तुमेव रसात्मकसाक्षात्फलरूपत्वेन प्रकटः । एतदेव 'पीताम्बरधरः स्रग्वी' त्येतस्य विवरणे निवृतमित्यत्रापि हरिपदेन स एव भाव उक्त इति ज्ञापितं भवति । एतेनेदानीं बाधाकरणे स्वस्य फलरूपं हरित्वं च गच्छतीत्यत्रापि हरिपदेन स एव भाव उक्तः । तद्भावोत्कर्षश्च निरूपितः । अत एव 'न पारयेह'मित्यादिवचनम् । एवमपि हरिरेव न शक्नोति तर्हि अपरे कालकर्माद्यदृष्टादयः कुतः शक्ता भवन्तीत्यर्थः । अत्रापि दृष्टान्तमाहुः **अन्यथेति** । यद्येतादृशस्यापि हरिर्बाधां करोति, तदा मातरोपि स्वनाशान् मन्येः पोषणं न कुर्युः । यथा तासां स्वबालबाधकरणमशक्यम् , किन्तु पोषणमेव कुर्वन्ति, तथा हरेरपीति भावः । एतेन हरिरपि तत्पोषणमेव करोतीत्यपि सूचितम् । अथवा

हरेर्मातृदृष्टान्तकथनात् युक्तत्वानुपपत्तेः क्रियायाश्च विध्यर्थकस्यापेक्षितत्वात् पुपुपुरिति भूतार्थकतत्प्रयोगानुपपत्तेश्च कश्चन गूढाभिसन्धिरस्तीति लक्ष्यत इति पक्षान्तरेण स एवोच्यते । तथाहि । हरिरत्र न शक्नोति कर्तुं बाधामित्यत्रासाधारणो हेतुः, यतो मातरः पुपुपुः इत्यन्वयसम्बन्धः । अयं भावः । पूर्वं श्रीमद्गोपिकानां गुरुत्वमत्र निरूपितमिति गुरुत्वात्ता एव मातृरूपा ज्ञेयाः । यथा गुरोर्वरदाने फलसिद्धिः, तथा तासां दान एव तावतैव सिद्धिः, नान्यथेति । तास्तादृशे अङ्गीकृते स्वभावपोषणं कृतवत्यः । अतस्तत्कृतौ प्रभोरपि शक्त्यभावो युक्ततमः, तद्भावाधीनत्वादिति भावः । ननु ता एतावत्किमर्थं कुर्युरिति चेत्तत्राहुः । अन्यथेति । यद्येता एव स्वस्य गुरुत्वात्तस्मिन् पुत्रत्वेपि सिद्धे एव पोषणं न कुर्युस्तदा ताः अन्याः साधारण्यः सहजकठिनाः स्त्रियः । तासु मातरः स्वबालान् स्तन्यैर्न पोषयेयुरित्यर्थः । एतेन यदि ता अप्येवं कुर्वन्ति पुत्ररूपे तस्मिन्, एतासां परमवात्सल्यस्वभावात् पोषणं युक्तमेवेति निरूपितम् । एतदेवोक्तं निरोधवर्णने 'पुत्रे कृष्णप्रिये रतिः' । एवं सति पूर्वोक्तानुपपत्तिद्वयमपि निरस्तं भवतीति सर्वमनवद्यम् । अत्र दृष्टान्ते दार्ष्टान्तिके च मातर इत्यस्यावृत्तिः कर्तव्या । ननु यथा ज्ञाने स्वस्मिन् ब्रह्मभावस्फूर्त्या सर्वत्र ब्रह्मात्मकत्वभानादैक्यमेव भासते, न तु द्वितीयपदार्थभानम्, तेन च तेषां सर्वदा स्वास्थ्यं तिष्ठति, तथा भक्तेपि स्वस्मिन् भगवदावेशे नासावहमित्यादिरूपज्ञाने केवलं तदैक्यभानमेव, न द्वितीयपदार्थस्येति ज्ञानमार्गीयैक्यप्रतिपादकवाक्येन ऐक्यसाम्येन कदाचिदैक्यभावजनितमोहेन स्वास्थ्यं सम्भवेदित्याशंक्य तदभावमाहुः । पूर्वोक्तितावत्प्रत्येकप्रत्यूहेपु सत्स्वपि यदि तन्निवारणेनैतावत्पर्यन्तं तद्रक्षामेव कृतवान् प्रभुः, तदा ज्ञानिनामपि वाक्येनैक्यप्रतिरूपेण भक्तं तादृशं न मोहयिष्यति । तथा चोक्तं भ्रमरगीते श्रीमदुद्धवोक्तैः 'श्रूयतां प्रियसन्देशः' 'भवतीनां वियोगः' इत्याद्यैक्यप्रतिपादकज्ञानिवाक्यैस्तासां मोहो न जातः, किन्तु तच्छ्रवणेन प्रत्युतातितप्ततैलपतितजलबिन्दुवत् प्रचुरतीव्रविरहाग्निज्वालजालज्वलितास्ता अभवन्निति । भक्तेपि तादृशावस्थायां तथा न करिष्यति, प्रत्युत तद्रीतिमेव करिष्यतीति भावः । नन्वेवं सर्वथाऽस्वास्थ्यकारकं तापमेव कथं स्थापयति, तत्र हेतुमाहुः आत्मप्रदः प्रियश्च, अतः किमर्थं मोहयिष्यति । अयं भावः । अत्र मुख्यतस्तत्र श्रीनिरूपो गुणश्च हेतुः । स हि भगवान् रसात्मकः साक्षात्स्वरूपानन्ददानार्थम्, मुख्यतस्तत्र श्रीनिरूपो गुणश्च हेतुः । स हि तादृशावस्थाभावे पुष्टो न भवति, किन्तु च्युत एव तिष्ठति, तत्पुष्टत्वाभावे तद्दानमपि न सिध्यति, रसात्मकत्वादेव साम्ये सर्वदा स्थापयति । एवं सति यत्र भगवतः स्वरूपानन्ददानेच्छा प्रियत्वं च, तत्र तद्वाक्यजनितमोहो न भवति । यत्र नैतदुभयम्, तत्र मोहो भवतीति सूच्यते। तथा चोक्तं दशमस्कन्धे 'द्विजपत्नीषु तदानन्ददानेच्छाभावात् पुष्टिमार्गीयप्रियत्वाभावाच्च न श्रीनये अनुरागाये'त्यादिज्ञानिवाक्यजनितमोहो जातः । यतः ताः पगमुत्य स्वगृहगमनम् । फलप्रकरणे तु श्रीस्वामिनीनां मर्त्यत्यागेनागमनपूर्वकमनन्तरमेव पूर्ववदेव 'श्रवणाद्दर्शना'दित्यादिवाक्यैः स्वात्मदानेच्छानज्ञानात् पुष्टिमार्गीयप्रियत्वस्मापि विद्यमानत्वान्मोहो न जातः, प्रत्यु-

तेश्वरवाक्यानां सर्वाधिकबलत्वेपि तन्निराकरणं चक्रुरिति सुष्ठूक्तं **किमर्थं मोहयिष्यतीति**। अतः परमेतावदुक्तस्य निर्गलितार्थमाहुः । यस्मात्साधनार्थपरित्यागो विधीयतां क्रियतामित्यर्थः॥ अन्यथा पुष्टिमार्गीयभावाभावे तस्मिन् कृते स्वार्थात् पुष्टिमार्गीयपुरुषार्थाद्भ्रश्यते च्युतो भवतीत्यर्थः । अत्र प्रमाणमाहुः **इति मे निश्चिता मतिः**। इति यस्य धर्मस्य यथा स्वरूपं तत्स्वरूपज्ञानादेव तस्मिन्निश्चयः । स्वमतेरेवेति स्वस्यैव मतिः प्रमाणत्वेनोक्ता ॥१७–२१॥

एवं संन्यासनिर्णयं कृत्वोपसंहरन्ति ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

इत्येवं प्रकारेण भक्तौ सत्यां एव संन्यासवरणं कर्तव्यत्वेन निश्चितम् । तत्र हेतुभूतं साधनद्वयमाहुः **कृष्णप्रसादेन वल्लभेन** चेति । **कृष्ण**पदेन रसानन्दात्मकगूढभावात्मत्वं सूचितम् । तादृशस्य प्रसादेन, प्रसादस्यापि नैकविधत्वं सम्भवतीत्युक्तं वल्लभेनेति, अतिप्रियेणेत्यर्थः । एवं एतेन भावात्मकप्रीतिगुणविशिष्टत्वं प्रसादस्य ज्ञापितम् । तादृशत्वाभावे परित्यागस्वरूपज्ञानमेव न भवेत्, निश्चयः कथं कर्तुं शक्यः । तत्रापि विशेषेणेदमित्थतयेति मदुक्तस्य सन्देहो न कार्य इति निरूपितम् । निश्चयकरणप्रयोजनमाहुः **अन्यथेति**। एतत्करणाभावे परित्यागस्वरूपाज्ञानात् अधिकाराभावे कृते त्यागे स्वाङ्गीकृतोपि **पतितो भवेत्**, पूर्वोक्तप्रकारेण भक्तिमार्गाद्भ्रष्टो भवेदित्यर्थः । एवं सति परमकारुणिकस्वभावात् स्वकीयानां रक्षैव कृतेति भावः ॥ २२ ॥

श्रीमदाचार्यकरुणां वर्णयामि कथं यतः ।
यतः स्वतस्त्यागभावप्रकाशं मादृशोऽकरोत् ॥ १ ॥

यथेमे ज्ञापिता भावाः स्थापयतु स एव तान् ।
यादृशस्तादृशः स्वीयस्त्वदेकशरणं विभो ॥ २ ॥

यदत्र मन्मतेर्दोषाद्विरुद्धं प्रभवः स्वतः ।
क्षमन्तां तत्र च तनाश्रयणं शरणं मम ॥ ३ ॥

**इति श्रीघनश्यामात्मजश्रीगोपेशविरचितं**
**संन्यासनिर्णयविवरणं समाप्तम् ॥**

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीगोपेश्वरविरचितविवृतिसमेतः ।

विविधविरहभावावेशजक्लेशभाजामनुभवविषयः सन् गोपिकानां कृपाब्धिः ।
कलयति निजरूपानन्दपीयूषपानं सकृदपि स कृतार्थं मां प्रसन्नः करोतु ॥ १ ॥

श्रीगोपिकाधीशपथानुगानां सेवाकथासक्तिसमर्थनाय ।
य एक एवास्ति विभुस्तमेव श्रीवल्लभाख्यं मुहुराश्रयेहम् ॥ २ ॥

श्रीमद्वल्लभसूनोः श्रीविठ्ठलनामधेयस्य ।
पदकमलद्वयममलं मनसि मदीये समुल्लसतु ॥ ३ ॥

स्वाचार्यचरणपङ्कजपरागपुरुरागपरभागान् ।
अभिवन्दे पितृचरणानहमतिभक्त्या तदाप्तमतिः ॥ ४ ॥

अथाम्नायाद्यखिलप्रमाणप्रतिपन्नरसात्मकश्रीपुरुषोत्तमविरहानन्दविविधभाववृन्दानुभव-स्य सर्वात्मभावप्रपत्तिमात्रप्राप्यत्वात् सर्वपरित्यागमन्तरेण तदसम्भवादावश्यको भक्तिमार्गे परित्यागः, स च कर्मज्ञानभक्त्यादिमार्गभेदाद्विभिन्नरूप इति स्वमार्गीयपरित्यागमनिर्वि-लक्षणमनाकलय्यतां तत्तत्संशयवशंवदानां निजमार्गाङ्गीकृतजीवानामविचारितः परित्यागः पश्चात्तापायैव भवितेति सकलसंशयापनुत्तिपुरःसरं तदपगमाय स्वभक्तेषु परमानुपमकृपा-कीर्मीरितमूर्तयः श्रीमदस्मदाचार्यचरणाः किञ्चित्प्रयोजनं प्रकटमुदीरयन्तस्तद्विचारप्रतिज्ञा-माचरन्ति पश्चात्तापनिवृत्त्यर्थमिति ।

पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।
स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥

भक्तिमार्गे पुरुषोत्तमस्वरूपमेव फलमिति तत्सम्बन्धित्वेनैव तथात्वेनोच्यत इति गदा-न्नात् तस्य च 'रसो वै सः' इत्यादिश्रुतिभ्यो रसत्वेन सिद्धत्वाद्रसविदुत्थरसात्मनः स्वमार्गीयैः स्वरूपानन्दं श्रीमदाचार्यवर्यचरणप्रादुर्भावितसेवादिपरतया मुख्यं गृहादिषु सतां सर्वात्मना संयोगरसेन यथाधिकारमनुभवतामपि विप्रयोगरसेन तदनुभवाभावादन्तरोऽनि-

द्भिरनन्तविवेरभिलापैः सन्ततं दन्तुरितस्वान्तानामस्माकं शुद्धपुष्टिमार्गाचार्यसम्बन्धिनामपि स्वमार्गमुख्यफलविप्रयोगभावानुभवो न भविष्यति । तस्य सर्वात्मभावान्तर्गतसर्वत्याग-साध्यत्वादस्मासु तज्ज्ञानस्याप्यभावेन क्व तदाचरणतत्फलादिसम्भावनापीत्येवंरूपो य उत्कटस्तापः स पश्चात्तापपदेनात्रोच्यते । यतोयमुररीकृतमुररिपुमार्गनिपुणतराणामाचार्यवर्यपद-पद्मप्रसादजुषामेवाधिहृदयमुदयमासादयति, न पुनः साधारणानाम्, तन्निवृत्तिश्च भक्तिमार्ग-प्रवर्तकश्रीमदाचार्यचरणैकसाध्येति । तदर्थं **परित्यागः** संन्यासः स्वमार्गीयः श्रीमदाचार्य-चरणैर्**विचार्यते** । स्वरूपतः फलतः सम्यक्तया मार्गान्तरीयतदसङ्कीर्णत्वेन निरूप्यत इत्यर्थः । तथा च वक्ष्यमाणविधया विचारितं स्वमार्गीयसंन्यासस्वरूपादिकं सम्यगवगम्य भगवदङ्गी-काराधिकारतारतम्यभाजस्तत्र प्रवर्तमाना विगलितपश्चात्तापास्तदनुरूपं फलमनुभविष्यन्तीति भावः । यद्वा । भक्तिज्ञानयोः सिद्धदशायामेव संन्यासः साधीयान्, न साधनदशायां, तदा तादृशवैराग्यविरहेण कृतस्यापि तस्यानिर्वाहात् पश्चात्ताप एव पर्यवसित इत्येतत्तारत-म्यानवगमे त्यक्ताखिलानामपि भक्तानां पश्चात्तापः, तद्दर्शनेन स्वस्यापि स स्यादिति तदनु-त्पत्त्यर्थं परित्यागो विचार्यत इत्यर्थः । अथवा, जीवानां प्रभुप्राप्त्यर्थं भक्तिमार्गमाविष्कृत-वद्भिः श्रीमदाचार्यचरणैरवश्यं स्वमार्गीयः परित्यागोपि मुख्यफलसिद्ध्यर्थं प्रागेव निरूप-णीयः । स तदैव न कथं निरूपितः । किमिति विलम्बः कृत इति यः पश्चात्तापो भवेत्तद-पगमाय परित्यागो विचार्यत इत्यर्थः । ननु विचारविषयः परित्यागः कर्त्तव्यतया क्वाभिहि-तस्तदनन्तरं तन्निर्णयवार्तेत्याकांक्षायामाहुः **स मार्गद्वितय** इति । स परित्यागो **मार्ग-द्वितये भक्तौ ज्ञाने विशेषतः** विलक्षणफलसाधकत्वलक्षणाद्व्यावर्तकधर्मतः **प्रोक्तः**, श्रुतिश्रीभागवतादिष्वभिहित इत्यर्थः । अत एव 'सन्त्यज्य सर्वविषया'नित्यादिषु यः सर्व-त्यागः श्रीव्रजस्थभक्तेषु स पर्यवसितविप्रयोगानुभवफल एव, ज्ञानमार्गीयेषु तु स नैवंविधः, किन्त्वपवर्गपर्यवसायी । यद्वा, विशेषः परिपाकदशा भक्तिज्ञानयोस्तदनन्तरमेव परित्यागः प्रोक्तः । अन्यथा तद्धर्मनिर्वाहाभावेन दोषविशेषपर्यवसानापातात् । विशेषत इति ल्यब्लोपे पञ्चमी । तथा च भक्तौ ज्ञाने च विशेषं सिद्धदशापन्नत्वं प्राप्येति वार्थः । अथवा, विशे-षत इत्यस्य प्रत्यासत्तिवशाज्ज्ञान इत्यनेनैवान्वयः । इत्यश्चैकजन्मनि परित्यागेन ज्ञानमार्गे मुख्यभावादनेकजन्मसु तत्करणमेव विशेषपदार्थो वसेयः ॥ १ ॥

नन्वेवं कर्ममार्गेपि परित्यागकरणे किं बाधकमित्याशंकायां तन्निषेधमाहुः **कर्ममार्गे न कर्तव्य** इति ।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

कर्ममार्गो हि सकामनिष्कामभेदेनानेकविधकर्मकरणरूपः, तथाविधश्रुतिनिरूपितः, तस्मिन्परित्यागो नियमतया इति न कर्तव्यः । न च 'यदहरेव विरजे' दिति श्रुत्या बोधित-स्त्यागः सति निर्वेदे दुर्वार इति वाच्यम् । कर्ममार्गस्य कलत्रादिकलनाकन्दलितत्वा-

मनाकलापस्य निर्वेदोदयनिदानभावायोगात् । न च निष्कामकर्मकरणं मनोमलिनिमानमपनीय विरक्तिमुत्पादयिष्यतीति वाच्यम् । तत्रापि सहधर्मिणीसाहित्यनैयत्येन तत्प्रत्यूहानपायात् । न च निष्कामकर्मकरणमेव संन्यास इति वाच्यम् । कर्मत्यागस्यैव तथात्वौचित्यात् । न च काम्यकर्मत्यागमादाय तथात्वं शास्त्रवचनम् । सङ्कोचे मानाभावात् । क्वचित्तस्मिन्नपि तत्प्रयोगस्यौपचारिकत्वात् । मुमुक्षूणां सर्वतत्त्यागदर्शनाच्च । न च मुमुक्षुषु जीवन्मुक्तेषु च तत्तत्कर्मकृतिव्यापृतिरुक्तैवेति वाच्यम् । भगवन्नियोगेनैव तेषु लोकसङ्ग्रहार्थत्वात्तस्याः । किञ्चास्तामन्यद्बाधकम्, काल एव बलवद्बाधकस्तत्रेत्याहुः सुतरां कलिकाल इति । कलिकालस्तावद्भगवद्भजनस्यैव साधकस्तदतिरिक्तस्य बाधक एवेति तत्र तत्र सिद्धम् । तथा च तथाभूतात्तस्मादनिर्वाहप्रत्यवायादिकं प्रतीत्य कर्ममार्गे सुतरां संन्यासो न कर्तव्य इत्यर्थः । एतेन काम्यकर्मत्यागलक्षणो गौणोपि त्यागः प्रत्युक्तः । मुख्याङ्गत्यात्कालो निर्दिष्टः, परमयं देशादीनामप्युपलक्षकः । तेन कलौ देशकर्त्रादिशुद्ध्यापि न परित्यागः कर्ममार्गे सिध्यति । अत एवाद्युपस्तुर्यभागे संन्यास इति मतमपि वैराग्यं विना तदसम्भवेन भक्तिज्ञानपरिपाक एव तद्वार्ध्येन तत्रैव सावकाशमिति कालादिदोषाच्च कर्ममार्गे निरवकाशमिति ध्येयम् । एवं कर्ममार्गे परित्यागं प्रतिषिध्य भक्तिज्ञानमार्गयोः कर्तव्यतया परिशेषिते तस्मिन् प्रथमं कुत्रत्ये विचारः कार्य इत्यत्राहुः अत आदाविति । यतः कर्ममार्गे बाधप्रौव्यात् परित्यागो न कर्तव्योतो भक्तौ ज्ञाने च कर्तव्यतया तद्विचारस्य प्राप्तौ स्वस्य भक्तिमार्गप्रवर्तकत्वात् भक्तेः प्राधान्याच्च सिद्धदशायां च तस्य कर्तव्यत्वादादौ भक्तिमार्गे परित्यागस्य विचारणा । भक्तिमार्गे किं साधनदशायामेव परित्यागः कार्यः, किं वा फलदशायामाहोस्विदुभयत्र चेतिरूपा क्रियत इति शेषः ॥ २ ॥

ननु भक्तिमार्गे परित्यागः स्थापितश्चेत्तदा साधनदशायामपि स कर्तव्य इत्याशङ्क्य सहेतुकं तदनङ्गीकारमाहुः श्रवणादिप्रसिद्ध्यर्थमिति ।

> श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
> सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
> अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
> गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
> अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।
> स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
> विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
> अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

श्रवणादीनि यानि साधनरूपाणि तेषां प्रसङ्गेनान्यमनसा सिद्धिनिमित्तनिर्गृहादिषु स्थानात्रकेषु न सम्भवन्तीति तदर्थं न परित्यागः कर्तव्यश्चेत्, नेष्यते नाङ्गीक्रियत इत्यर्थः ।

श्रवणादीनां प्रसिद्धिरुत्कृष्टफलं तदर्थं परित्यागः कर्तव्यश्चेन्नाङ्गीक्रियत इति वार्थः । कुत इत्याकांक्षायामाहुः **सहायसङ्गसाध्यत्वादित्यादि** । गृहादिषु तत्कार्यव्यासङ्गस्यानिवार्यत्वादेकान्ततः श्रवणादिसाधननिर्वाहो न भवतीति तत्परित्यागेन क्वचित्तच्चित्तैकाग्र्येण सम्पादनीयमिति मनसिकृत्य यस्त्यागः स कथमुपपद्यतां, यतः श्रवणादीनि सहायसङ्गसाध्यानि, सहायाः कथकादयो विविधस्वभावाः, तेषां सङ्गः सद्भावेन तदुपसत्तिरूपः, तेन सम्पाद्यान्यतस्त्यागानन्तरमावश्यकस्यासङ्गत्वादेर्भङ्गप्रसङ्गतः प्रशिथिलवैराग्यात् पुनस्तत्तदाकांक्षोन्मज्जनेन च न श्रवणादिसाधनार्थं परित्यागः शक्याभ्युपगमः । किञ्च, त्यागमात्रान्न कार्यसिद्धिरिति श्रवणादिसिषाधयिषोस्तत्साधनानां तत्तदवसरे उपेक्षितानां रक्षणं कर्तव्यं, ततस्त्यागः कथं लब्धात्मकः स्यात् । अपि च, साधनमार्गीयस्य कृतेपि त्यागे तत्तत्पदार्थेषु श्रवणाद्यर्थमपेक्ष्येषु नाभिमानो निवर्तते, प्रतिक्षणमुदेत्येव, त्यागे च स निवर्तनीयः सर्वथेति तत्सत्त्वे स न युज्यते । साधनदशायां वेदाज्ञारूपभगवन्नियोगाच्च वर्णाश्रमधर्माणामुल्लङ्घनं न शक्यमित्यशक्य एव त्यागः । अन्यच्च, श्रवणादिसाधनानां तद्धर्मैः परित्यागधर्मैः पर्यटनादिभिः समं विरोधो न शक्यविधूनन इति न कथमपि साधनभक्तिरूपश्रवणादिषु परित्यागः सम्भवति । ननु तथापि गृहादिकं सरसङ्गासम्पादकतया श्रवणादिषु प्रतिपक्षभूतमतस्तदर्थं तत्परित्याज्यम्, तथा सति कदाचित् सत्सङ्गोपि स्यादित्याशंक्य समाधानमाहुः **गृहादेरिति** । **बाधकत्वेन** श्रवणादिविरोधित्वेन । **साधनार्थं** श्रवणाद्यर्थम् । **तथा यदि** परित्यागश्चेत् । तदा अग्रेपि त्यागानन्तरमपि तथाविधदार्ढ्याभावात्तादृशैरेव परित्यक्तश्रवणादिपरिपन्थिगृहादिसदृशैरेव सङ्गो भवति, **अन्यथा** प्रकारान्तरेण गृहादिपरित्यागरूपेण श्रवणादिकं तु न भवतीत्यर्थः । ननु भवतु भवनादिपरित्यागकर्तुस्ताहगपरसङ्गः, तथाप्यन्तरुद्गतवैराग्यादिनैव श्रवणादिनिर्वाहो भविष्यतीति न तत्त्यागोनुचित इति चेत्, तत्राहुः **स्वयं चेति** । यदि वैराग्यमन्तर्जागरूकं भवेत्, तदा क्रमेण बाधकनिबर्हणे निर्वहेदपि श्रवणादिकम्, परन्तु साधनदशायां तादृशं तदेव दुरापम्, अतस्त्यागस्तु निरोधिभिर्विधूयेतैव, किन्तु स्वयमपि तु पुनः विषयैरागन्तुकैरनेकरूपैर्भोग्यैराक्रान्त उपमर्दितः सन् **खलतः** कलिरूपात् भक्तातिरिक्तपरिपन्थिनः पाषण्डी तत्तद्विरुद्धाचरणवान् भवेदित्यर्थः । **सकामत** इति पाठे क्रोधलोभाद्युपलक्षकात् कामतो बलिष्ठदोषात् स तथा स्यादित्यर्थः । तेन विना वैराग्यं त्यागोधमः, तत्तद्विषयप्रतिहतः, फलाय नावकल्पते, प्रत्युत प्रत्यवायमेव सम्पादयति, प्रमाणनिरुद्धाचरणमुत्पादयतीति भावः । ननु विषयैराक्रमणेपि श्रवणादिभिर्भगवदावेशस्यापि सम्भवात्तन्मद्विधा त्यागो निष्प्रत्यूह इति चेत्तत्राहुः **विषयाक्रान्तदेहानामिति** । भगवदावेशे सति त्यागे न कापि क्षतिः । किन्तु विषयैर्देहादिकं येषामाक्रान्तं तेषां हरेः सर्वदुःखहर्तुर्विषयदोषदवीयसो निर्दोषस्याप्यस्यावेशो हृदयाद्यागमनं तत् सर्वदा कस्मिन्नपि काले न भवति । किन्तु 'विषयान् ध्यायत' इत्युक्तरीत्या नाश एव भवतीत्यर्थः । न च विषयाणां श्रवणाद्यनभिभावकत्वात्तत्प्रयुक्तभगवदावेशा-

नुपपत्तिरिति वाच्यम् । 'नराणां क्षीणपापाना'मिति वाक्यात्तादृशेष्वेव श्रवणादि प्रयोज्य प्रभावेशस्योपपत्तेः । न च 'बाध्यमानोपि मद्भक्त' इत्यादिवाक्यैर्विषयसत्त्वेपि का क्षतिरिति वाच्यम् । उक्तवाक्यानां विषयसुखवैमुख्येन सेव्यमानस्य प्रमादात्तत्कृतबाधेपि प्रभुरति-कृपार्द्रस्तद्दोषमपाकरोति, अतो न विषयाभिमव इत्यभिप्रायकत्वात् । अत एव प्रायःपदमु-पात्तं तत्र । एतद्वाक्याभिप्रायान्तरमस्मत्पितृव्यचरणकृतौ विवेकधैर्याश्रयविवृतौ विलोकनीयम् । एवं साधनभक्तिमार्गे समर्थितं त्यागाभावमुपसंहरन्ति अतोत्रेति । यतो बहून्येव बाधकान्युक्तान्यतोऽत्र साधने भक्तौ श्रवणादिरूपसाधनभक्तिमार्गे त्यागः संन्यासः सुखावहः आनन्दहेतुर्नैव भवतीत्यर्थः । साधनपदमेवकारस्थ फलभक्तौ त्यागस्य सुखनैयत्यावगत्यै ॥

नन्वेवं भक्तिमार्गे न सुखश्चेत्परित्यागः, तर्हि ज्ञानमार्ग एवास्ताम्, एवञ्च भक्तिमार्गे व्यर्थस्तद्विचार इति चेत्तत्राहुः विरहानुभवार्थमिति ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथाऽस्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोऽयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३½ ॥

तुशब्दः साधनमार्गीयत्यागव्यावृत्त्यर्थः । साधनभक्तौ परित्यागस्य बहुबाधका-स्कन्दितत्वेनासम्भवेऽपि स्वामिनस्य प्रभोः परमकल्पपद्मिनीयदलतिरिषमानास्वादन-लक्षणो यो विरहानुभवस्तदर्थं परित्यागः सर्वात्मभावात्मकः संन्यासः प्रशस्यते, प्रशस्तो भवति, क्रिया प्रकर्षेण मोक्षाधिककल्पफलत्वेन कथ्यत इत्यर्थः । तेनानिशदिनभगवद्वा-भागवताधिकाराधिगमेन विधीयमानः परित्यागः परमपुरुषार्थस्वरूपविप्रयोगरसानुभावक-तया भक्तिमार्गे सर्वतम एवेति नादिवागः सुखावह इति भावः । ननु ज्ञानमार्गीयसंन्यास-

ग्रहणे यथा विहितत्वात् काषायवस्त्रवेषः क्रियते, स हि सात्तिशयो मोक्षार्थः, तथा भक्तिमार्गीयसंन्यासग्रहणे स न भवतीति किमर्थं तत्सम्पादनमिति चेत्तत्राहुः **स्त्रीयबन्धनिवृत्त्यर्थमिति** । अत्र विरहानुभवार्थे भक्तिमार्गीये परित्यागे ज्ञानमार्गीयसंन्यासे प्रसिद्धो वेषस्तं विना भार्यादिभिः प्रतिबन्धः कार्य इति स्त्रीयैर्दारादिभिर्यो बन्धः प्रतिबन्धः, किंवा स्त्रीयेषु बन्ध आसक्तिः प्रतिबन्धरूपा तन्निवृत्त्यर्थं कर्तव्यो, न चान्यथा, प्रकारान्तरेण ज्ञानमार्गीयेण न कर्तव्य इत्यर्थः । यथा ज्ञानमार्गीयसंन्यासे तादृग्वेषस्यादृष्टविशेषद्वारापवर्गोपयोगित्वम्, न तथा भक्तिमार्गीयसंन्यासे, तस्य स्त्रीयबन्धनिवृत्तिमात्रप्रयोजनत्वेनैवात्र कर्तव्यत्वादितरथा तदभावादिति भावः । ननु ज्ञानमार्गे गुरुस्तदुपदिष्टसाधनादेरिष्टसिद्धिः, न पुनः संन्यासमात्राद्, भक्तिमार्गीयसंन्यासे तु तदप्रसिद्धेः कथं फलसिद्धिरित्याशङ्कायां तत्प्रसिद्धिमाहुः **कौण्डिन्यो गोपिका इति** । कौण्डिन्यो महर्षिः स गुरुः प्रोक्तः, गोपिका घोषभूषणरूपाः सीमन्तिन्यः, ता भक्तिमार्गीये विरहानुभवपर्यवसायिनि संन्यासे गुरवः प्रोक्ताः, श्रीभागवतादिषु सम्यक्कथिता इत्यर्थः । अत्रायमभिप्रायः । कौण्डिन्यस्यानन्तगुणवर्णनाकर्णनोदीर्णतदभ्यर्णगमनादिमनोरथार्णवभवदनन्तभावसन्तताशेषकरणवृत्तेः कृत्स्नपरित्यागेन विपिनगह्वरादिषु तद्रूपेषणविवशस्य सर्वपरित्यागपूर्वकतादृगार्तिलक्षणविरहानुभवहेतुभावप्रकाशकत्वमस्ति । गोपिकानां तु स्वप्राणप्रेष्ठप्रस्फुरत्सर्वात्मभाववत्तया रासोत्सवादिप्रस्तावे तथात्वं स्फुटतरमेवेति लोकवेदातीतशुद्धपुष्टिमार्गीयप्रकारस्य प्रभुणा स्वप्रयोजनार्थं स्वसौख्यभक्तस्थापितस्य प्रथमं तत एव प्राकट्यात्तत्रैव गुरुत्वं समञ्जसतमम् । महर्षौ तु तद्दर्शनार्तिप्रकर्षतौल्यात्तदुक्तिः, प्रमाणमार्गीयस्यात्र मुख्यं गुरुत्वमयुक्तमिवेति । तेन गुरुत्वमत्रैतत्परित्यागफलसाधनीभूतभावप्रकाशकत्वं विवक्षितम्, न तूपदेष्टृत्वम्, तस्य प्रकृतेऽभावात् । एतत्संन्यासस्य ज्ञानमार्गीयतद्विलक्षणत्वेनैतादृशस्यैव तस्य वक्तुमौचित्यात् । उपदेष्टृत्वस्यापि तदर्थज्ञापनमात्रौपयिकतया फलतो विशेषाभावाच्च । अत एव 'एवं सत्यस्मिन्मार्गे स्वामिन्य एव गुरव इति ज्ञापितं भवती'ति निरोधविवृतिप्रकाशे श्रीमदस्मत्प्रभुचरणचारूक्तिश्चकास्ति । 'स्वामिन्य एवे'त्येवकारान्मुख्यं गुरुत्वमेतासामवसेयमित्यन्यदेतत् । किञ्च, न केवलमेता एतादृशभावमात्रस्य निजमार्गीयस्य प्रकाशिकाः, किन्तु यथा स्वभजनपराणामेतद्भावफलं सिध्यति, तथानुकम्पा सम्पादिका इति विरहानुभवात्मकफलौपयिकधर्मवत्त्वलक्षणं साधनत्वं गुरुत्वेपि न विरुद्धं, कर्तुरिव निमित्तकारणत्वमित्याशयेनाहुः **साधनं च तदिति** । तत्प्रमिदं मुख्यं साधनं गोपिका एवेत्यर्थः । चोप्यर्थे । तेन श्रीमदाचार्यचरणानुग्रहभरविजृम्भिततत्प्रकटितैतन्मार्गीयप्रकारपरिकलनावतामेतद्भावसजातीयभाववत्त्वैतद्भजनपूर्वकं प्रभुभजने यथोक्तमुख्यफलं भवतितरां निर्विचिकित्समिति भावः । अत एव भगवद्भजनापेक्षयाप्येतासां भजनमुत्तममिति सूक्तिः श्रीमदाचार्यचरणानाम् । नन्वेवमेतासु गुरुत्वे व्यवस्थापितेपि किमेतत्प्रकाशितं स्वमार्गीयं साधनमित्यत आहुः '**भाव इति** । भगवत्समानयुक्तानां भक्तानां निरयुक्तत्वदशायामुद्भिषतो मनोरागविषयस्य

भावस्य भगवत्स्वरूपात्मकत्वेन रसात्मकत्वात्तस्य भावनया स्वाचार्यानुग्रहभरसमुत्थतथाविध-
भगवदङ्गीकारादेवोदयमानया सिद्धः पर्यवसितो यस्तत्सजातीयोऽनुभवैकगम्यो भावः
स एव तन्मार्गीयतया पूर्वोक्ते परित्यागफले साधनमिष्यते, अन्यत् ज्ञानमार्गीयत्यागे
प्रसिद्धं किमपि साधनत्वेन नेष्यते, नाङ्गीक्रियत इत्यर्थः । यद्वा । असिद्धस्य भावस्य सा-
धनत्वायोगेन प्रियतमस्य गुप्ततया स्थितस्य विप्रयोगरीत्या तत्तद्भावपोषकस्य तादृग्भक्त-
निजविषयकोत्कटार्तिनिरीक्षणेन प्रतिक्षणविलक्षणरसभावानुभवविचक्षणस्य प्रभोः शुद्धपुष्टि-
भक्तकर्तृकया परमार्तिपूर्वकप्रियान्वेषणतद्वार्दिप्रश्नगुणगानतत्तदवस्थासम्बन्धिभावविषयिण्या
भावनया तेष्वेव सिद्धः फलितो यः कोप्यनिर्वचनीयोनुभवैकविषयवैभवः स्वविषयातिरिक्त-
स्मरणहरणस्वभावः स एवोक्तभक्तानामनुग्रहेणैव कदाचिदन्यत्रापि क्वचिदुदितः परित्याग-
फले साधनमिष्यत इत्यर्थः । एतेनोक्तभक्तानां गुरुत्वं सम्यगुपपादितं भवतीति भावः ।
नन्वहर्निशं विरहभावनामभ्यस्यतस्तत्परिपाकदशायां नियमतो वैकल्यावस्थ्यादिकं
यद्भवति तत् कथं फलरूपरसभावेऽन्तर्भावार्हम्, लौकिकतत्तुल्यरूपत्वदर्शनेन प्राकृतत्वस्य
दुर्वारत्वादिति चेत्तत्राहुः विकलत्वमिति । विकलत्वमनुसन्धेयस्याननुसन्धेयस्य चा-
ननुसन्धानानुसन्धानान्यथानुसन्धानादिजनको व्यभिचारिभावः । तथा तत्सदृशं व्यभिचारि-
भावरूपं प्रथमानुभूतप्रियविषयकतत्तदर्थोत्कटाभिलापजनितमस्वास्थ्यं, येन तदतिरिक्ते वस्तु-
नि रुचिव्याघातः । ईदृशभावानामन्येषामुपलक्षणमेतद्द्वयं फलीभूतस्य विरहभावस्य प्रकृतिः
प्रकारः स्वभावो वा, हि यतः प्राकृतं लौकिकं दुःखादिजन्यं न भवति, अतः फलरूपरसभा-
वान्तर्भावो नैतस्यानुपपन्न इत्यर्थः । नहि यज्जातीयं कार्यं दुःखादितो जायते, न तज्जातीयं
सुखादित इत्यस्ति नियमः । शोकादिव हर्षादप्यश्रुहमादेर्दर्शनात् । अत एवैवमुक्तं श्री-
मदाचार्यचरणैर्दशमस्कन्धविवरणे, 'नहि दोषेणैव कार्यं भवति, गुणेन न भवतीति वक्तुं
शक्यम्, दुःखादप्यश्रूणि आनन्दादप्यश्रूणी'ति । एवं संन्यासफलसाधनाद्यभिधाय,
तत्सम्पत्तिमतो बाधकान्याहुः ज्ञानमिति । एवं विकलत्वास्वास्थ्यादिना वर्तमानस्य सततस्य
भक्तिमार्गीयपरित्यागवतः । किञ्चैवं परित्यागप्रकारेण वर्तमानस्य भक्तिमार्गीयस्य तस्य
विकलत्वास्वास्थ्यादिभावस्य ज्ञानमात्माभेदानुभवरूपं बहिःसंवेदनाद्यभावद्वारा तादृ-
क्तीव्रतापोपशामकतया स्वास्थ्यप्रयोजकं, गुणा भगवतो धर्माः, पूर्वं बहुधानुभूता यहव
एवानुभवैकवेद्या ये सजातीयभावैर्भक्तैः सम्भूय भूयः क्रमेण मिथो गीयमानाः स्वास्थ्यमु-
पजनयन्ति, बाधका विरोधिन इत्यर्थः । ननु ज्ञानमार्गे संन्याससहकृतात् ज्ञानाद्यादृशं फलम्,
भक्तिमार्गेपि त्यागात्ताद्दृशमेव भविष्यतीति न फलत कोपि विशेष इति चेत्तत्राहुः सत्य-
लोक इति । फलभेदः सामग्रीभेदप्रयोज्य इति ज्ञानमार्गीयेण संन्यासेन विशेषितात्
ज्ञानात् तत्त्वज्ञानात् सत्यलोके स्थितिर्ब्रह्मलोकप्राप्तिरिति यावत्, सा ज्ञानमार्गीयस्य संन्या-
सिनो भवति, भक्तिमार्गीयस्य तस्य विरहभावानुभावकभावसिद्धिहेतुभूतया भा[illegible]

सहकृतत्वाद्यत्र भक्तिमार्गीयत्यागे, भावना साधनं प्रयोजिका, तत्र फलमपि तथा, तेनैव प्रकारेण विरहानुभवात्मकं भवेत् । ननु सत्यलोकादिसदृशं, कारणानुरूपस्यैव कार्यस्य न्याय्यत्वात् । सत्यलोकाद्येतत्त्यागफलयोस्तारतम्यं तु सुमेरुसर्षपयोरिव सुप्रसिद्धमेवेति क इतोधिको विशेषोभिधेय इति भावः । किञ्च, ज्ञानमार्गीयस्य त्यागिनः फलं यन्मुख्य-तयाज्ञातमपवर्गाख्यम्, तदपि न त्वरितमेव भवति, किन्त्वतिविलम्बेनैवेत्यभिसन्धायाहुः **तादृशा** इति । तादृशाः संन्यासविशिष्टज्ञानवन्तः सत्यलोकादौ ब्रह्मलोकादाववान्तरफल-तयोपनते तिष्ठन्त्येव, न तु झटिति मुच्यन्त इत्यर्थः । 'ते ब्रह्मलोके त्वि'ति श्रुत्या तन्मुक्तिवि-लम्बावधारणात्तल्लोकस्थितिरसन्दिग्धेति **न संशय** इत्युक्तम् । तेन भक्तिमार्गीयत्याग-फलचिन्तायामविचारितरुचिरस्याप्यस्यातिचिरेणैव चेत्प्राप्तिः, तदा तदाग्राम्यवलम्ब्य स्थितिः श्रेयसी, न पुनरेतद्रुचिलवोप्युचित इति भावः । नन्वेवं भक्तिमार्गीयत्यागेपि कुतः शीघ्रं फलसम्भवो यतस्तत्रतिबन्धकस्तदहन्ताममतादिरूपो बन्धस्तदवस्थस्तन्नाशश्च ज्ञाना-दिकं विना कथमित्याशंक्य तत्प्रकारमाहुः **बहिश्चे**दिति । सर्वपरित्यागानन्तरं विर-हभावभावनाभ्यासभूयस्त्वादन्तस्तद्भावरूपेण स्थितोऽत एव स्वात्मा निरुपधिप्रियत्वाज्जीवन-हेतुत्वाच्च तत्त्वेन स्फुरितः स कदाचिदत्युत्कटतापवैक्लव्यादिभावस्वभावाद्दृशोन्तर-नुभूयते तादृशो **बहिः** प्रकटो दृगादिगोचरश्चेद्भवति, तथाभूतश्च यदि पुनरन्तःप्रविशेत् तत्र दृष्टान्तो वह्निवदिति । यथा काष्ठनिष्ठो वह्निः कदाचिन्मथनादितो बहिः प्रकटीभूय पुनस्तन्मध्ये प्रविष्टः काष्ठतामपाकृत्य वह्निरूपतां सम्पादयति, तथा भगवानप्यात्मत्वे-नान्तःस्थितो विरहभावोद्रेकाद्बहिरागतः पुनः सम्बद्धः सर्वथा प्रतिबन्धकमपनीय निज-भावरूपतां सम्पादयतीत्यर्थः । वह्निदृष्टान्तेन स यथा तापहेतुरूपेणैव सम्बद्धः स्वरूपात्म-कत्वं कुरुते, तथा भगवानपि विप्रयोगभावप्रकारेणैव सम्बद्धस्तद्भावरूपतामित्यपि सूचितम् । तदैव पुनः प्रवेशक्षण एव सकलः सर्वोपि तत्तदहन्ताममतारूपो बन्धो **नाशमेति** प्राप्नोति, न चान्यथा, प्रकारान्तरेणात्र प्रतिबन्धकस्य नाशो न भवतीत्यर्थः । नन्वेवं कारणेऽहन्ता-ममतात्मकस्य बन्धस्य विलये प्रलयानलादप्यतिप्रबले विप्रयोगे च प्राचुर्यमश्नति, जी-वनमेवाशक्यं स्यात्, तत्तद्रसभावानुभवस्तु दूरदूरतर इत्यत आहुः **गुणास्त्वि**ति । तुशब्दः प्रकारान्तरव्यावृत्त्यर्थः । गुणाः स्वरूपात्मका भगवद्धर्मात्मकाः ते पूर्वं तथा तथा-नुभूता वियोगदशायां सङ्गराहित्यात् बहिःप्रियदर्शनाद्यभावात् अतिविरहतापविह्वलतया यमपि प्रकारं प्राप्नुवतां भक्तानामग्निमेघंरिथरमात्रानुभवाय भगवता सर्वभावेन रक्षणी-यानां जीवनार्थं भवन्ति । ननु स्वास्थ्यमप्युत्पादयन्ति येन तद्व्यवान्तरायः स्यात् । इति युक्तोयमर्थः । रसात्मकस्य धर्मिणो विरहेण सन्दिग्धस्थितीनां जीवनं स्वरूपात्मकतया तदीयगुणानामेव शक्यं यतः । यद्यपि धर्मिणो विरहस्य सर्वाधिकबलतया सर्वनिरोधाय-कत्वाद्गुणा कथमपि न जायन्तीति, तथापि तस्य प्रियगुणगानप्रादुर्भावादस्मात्प्रवृत्त्यत्तेषां

च पर्यायेण मुहुरुपगीयमानानां पेपीयमानपीयूषवज्जीवनजननस्वभावस्य जागरूकत्वान्न
काप्यनुपपत्तिः । न चैवं गुणैर्जीवनसम्पत्त्यनन्तरं विरहभावस्य तिरोभावः प्रसज्येतेति
वाच्यम् । तेषां जीवनाधिककार्यानुपधायकत्वेन तस्य तादवस्थ्यात् । विरहानुभवार्थं तज्जी-
वनमात्रस्य भगवच्चिकीर्षितत्वाच्च । नन्वेवं सति स्वविरहसन्तापभरपीडितस्वान्तानाम-
वस्थां विचार्य सर्वसमर्थो भगवानेव यदि कदाचिदपि लोकसिद्धस्वास्थ्यादिना प्रकारा-
न्तरेण वा तद्भावमुपशमयेत्, तदा स्वयमेव बाधकः स्यादिति चेत्तत्राहुः भगवानिति ।
अत्र अस्मिन् स्वविप्रयोगतीव्रतापादिभावानुभवे भगवान् यद्यपि सर्वैश्वर्यसहितः, त-
थापि बाधकः केनापि प्रकारेणास्य विघातको नेष्यते, कुतः, फलरूपत्वात्, निरवध्यानन्द-
रसात्मकत्वादित्यर्थः । यदि भगवान्मनागप्येतद्भावमपनयेत्तदा रसस्य संयोगविप्रयोगभे-
देनोभयरूपत्वादन्यतरभावानुभवाभावे स्वस्य तथात्वमेव न सिध्येत् । सर्वात्मभाव-
वस्तु स्वरूपात्मकं रसमविरतं वितरत एव फलरूपत्वाभ्युपगमादिति भावः । एवं च 'रसो
वै सः रसं ह्येवायं लब्ध्वानन्दी भवति ।' 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजी-
वन्ती'त्यादिश्रुतिव्याकोपोऽपि नोपनिपतति । ननु तथापि परमकरुणापरीतो भगवान् भक्तानां
भूरितरमात्मविरहक्लेशमसहमानस्तदुपशमाय सर्वथा स्वास्थ्यप्रतिपादकवाक्यानि करि-
ष्यति, अन्यथा स्वदयालुत्वविरोधः स्यादिति चेत्तत्राहुः स्वास्थ्यवाक्यमिति । स्वास्थ्य-
मागन्तुकक्लेशनिवृत्त्या पूर्ववत्स्थितिः, तत्प्रतिपादकं वाक्यं प्रभुणा न कर्तव्यम् । न
चैवं सति सामर्थ्ये दुःखदर्शी कीदृशो दयालुरिति शङ्कनीयम् । एवंविधविरहक्लेशादि-
भावस्य परमपुमर्थरूपत्वेनैतदभावसम्पादन एव दयापचयापातो यतः । अतः स्वत एवै-
तादृशभावनिवहान्निजेष्वनिशं वितरद्यतो निर्व्यूढो दयातिशय इति मनसिकृत्योक्तं द-
यालुर्न विरुध्यत इति । न ह्येतादृशभावानां प्रतिक्षणं संरक्षणपोषणादितोऽप्यधिकं किंचि-
त्किंचित्कृपाकार्यमस्ति । क्लेशादित्वेन प्रतीतिमात्रमत्र परं शकुनानाम्, वस्तुतस्त्वमी रसात्म-
का अनुभवैकवेद्या निरवद्यभगवद्भावा इति सुसमञ्जसम् । स्वास्थ्यवाक्यमित्येकवचनेनै-
कमपि तादृग्वाक्यं प्रभुर्न करोति, येनैतद्भावबाधः स्यात्, बहूनां तु सम्भावनैव केति भावः ।
एवं भक्तिमार्गीयं परित्यागमभिधाय तस्य दुरापत्वं वदन्तस्तन्निरुद्धुपायमाहुः दुर्लभोऽय-
मिति । अयं भक्तिमार्गीयपरित्यागो दुर्लभः, शुद्धभगवत्स्नेहातिरिक्तसाधनालभ्यत्वात् ।
अत एव तथाभूतप्रभ्वनुग्रहप्रभवेन प्रेम्णा शुद्धस्नेहेन सिध्यति, तस्य तत्तत्कार्यपरम्परया
तन्निर्वाहकत्वात्, नान्यथा, न तु निहितेन केनापि प्रकारेणेत्यर्थः । तेनैतदर्थिनां तदीयानां
तस्मिन् प्रयत्नः प्रतिष्ठितो भवतीति भावः । यतस्तत्साधनस्य प्रेम्ण एव दुर्लभत्वम्, तत्र-
तत्साध्यपरित्यागस्य दुर्लभत्वं किं वक्तव्यमिति कैमुतिकन्यायो द्योत्यते ॥ ९-१३ ॥

एवं स्वमार्गीयं संन्यासं विचार्य ज्ञानमार्गीयसंन्यासविचारमाहुः ज्ञानमार्ग इति ।

**ज्ञानमार्गे तु संन्यासो द्विविधोऽपि विचारितः ॥ १४ ॥**

**ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।**
**ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥**
**अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।**
**पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥**
**सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ॥ १६½ ॥**

तुशब्दो भक्तिमार्गीयत्यागव्यावृत्त्यर्थः । ज्ञानमार्गे मोक्षार्थं विविदिषाविद्वत्ताभेदेन द्विविधोपि संन्यासो विचारितः । तदेवाहुः **ज्ञानार्थमिति** । ज्ञानार्थं ज्ञानप्रयोजनार्थं यः स विविदिषासंन्यासस्तस्य ज्ञानेच्छाप्रयुक्तस्य ज्ञानोत्पादनोपयोगित्वात् । उत्तराङ्गं मुक्त्यङ्गं यः स तु विद्वत्संन्यासस्तस्य ज्ञानोत्तरभाविनो मुक्तावेवोपक्षयात् । चकारेण मुक्तिचरमकारणे ज्ञानेपि तदुपयोगः सूच्यते । तत्र विविदिषासंन्यासः कलौ न सम्भवतीत्यभिधास्यते । विद्वत्संन्यासस्तु यद्यप्यस्ति, परं तस्मिन् सिद्धिर्मुक्तिर्जन्मशतैरनेकजन्मभिर्भवति । 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत' इति प्रभुवाक्यात् । ज्ञानार्थं सन्यासस्तु कलौ न सिध्यतीत्याहुः **ज्ञानमिति** । ज्ञानं च न केवल संन्यासाद्भवति, किन्तु साधनापेक्षं यज्ञदानाद्यधीनं मतं, साधनत्वेन यज्ञादीनां श्रवणात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने'ति श्रुतेः । तानि च देशकालादिसाध्यानि, तच्छुद्धिः कथमपि कलौ न भवति । यतोतः **कलौ स** विविदिषासंन्यासः कृतः **पश्चात्तापायैव** भवति, **नान्यथा,** यतः फलान्तरमपि शंस्येतातः सर्वथैव न कर्तव्य इति भावः । किञ्च, न केवलं पश्चात्तापस्तस्य पर्यवसति, किन्त्वन्यदपीत्याहुः **पाषण्डित्वमिति** । पाषण्डित्वं स्वधर्मविरुद्धाचरणं च भवेत् । अपिशब्दस्तज्जन्यपापसमुच्चयार्थः । यस्मादीदृशोयं संन्यासस्तस्मात् ज्ञाने ज्ञाननिमित्त न संन्यसेदित्यर्थः । यद्वा । ज्ञानेन हेतुना संन्यसेत्, नतु तेन विना तथेत्यर्थः । अपिच युगान्तरे यथा कथञ्चिद्विविदिषासंन्यासस्य निर्वाहः शङ्क्येतापि, कलौ तु कल्पयापि नेत्याहुः **सुतरामिति** । कलिदोषाणां बहूनां प्रबलत्वादशक्यबाधत्वादिति स्थितं, पर्यवसन्नमित्यर्थः ॥ १४–१६½ ॥

ननु यदि कलिदोषप्राबल्याज्ज्ञानमार्गे न संन्यासस्य निर्वाहस्तर्हि तत एव भक्तिमार्गेपि तस्य तथेति तुल्यमित्येतमाशङ्कन्ते भक्तिमार्गेपीति ।

**भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥**
**अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।**
**स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥**
**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**

**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**
**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

भक्तिमार्गेपि चेत् कलिसम्बन्धी दोषः प्रबलस्तदा नाश एव स्यात्, ननु त्यागस्य
फलपर्यवसानमिति किं कार्यं, स्वीकार्यो वा ज्ञानमार्गीयः परित्यागः, परिहार्यो वा भक्तिमार्गी
योपीति महत्सङ्कटमिति प्राप्ते, उच्यते, समाधानमिति शेषः । तदेवाहुः **अत्रारम्भ इति ।**
ज्ञानमार्गे संन्यासस्योपक्रमे कलिकालादिदोषैः साधनवैगुण्यात्तदनिर्वाहे **नाशः** फलाभावो
युज्यते । न च तत्र दोषसत्त्वे किं मानमिति वाच्यम् । 'कलेर्दोषनिधे'रिति वाक्येन भगवद्भजना-
तिरिक्ते तत्सद्भावस्य बोधितत्वात् । दृष्टस्य श्रुतस्य वा नाशस्यैव दोषोन्नायकत्वाच्च । अत्र भक्ति-
मार्गे आरम्भे उपक्रमे त्यागस्येति शेषः **नाशः** फलाभावो न स्यात्, कलेरन्यत्र बाधकस्यापि
भक्तिमार्गे साधकत्वेन साधनवैगुण्याप्रसक्त्या संन्यासस्यानिर्वाहासंभवात् । भक्तिमार्गस्य ज्ञान-
कर्मादिभ्यो बलवत्त्वस्य बहुलमुपलम्भात् । 'न कर्हिचिन्मत्परा नंक्ष्यन्ति' 'न मे भक्तः प्रणश्यती'
त्यादिभिर्भक्तस्य नाशाभावावधारणाच्च । एकादशस्कन्धे 'न ह्यंगोपक्रमे नाशो मद्धर्मस्योद्धवा-
ण्वपी'त्यनेनारम्भदशायामपि तदभावस्य प्रतिज्ञातत्वाच्च । तेन भक्तिमार्गे दोषलेशोपि न शङ्कितुं
शक्य इति भावः । किञ्च, भक्तिमार्गे परित्यागवान् कश्चिन्नष्टो दृष्टः श्रुतो वा येन तद्दृष्टान्तेना-
न्यस्मिन्नप्याधुनिके **नाशः** शक्यवचनः स्यादतो **दृष्टान्तस्याप्यभावतो** भक्तिमार्गे न
कश्चिदुन्नेतुमपि शक्यते दोष इति न नाशसम्भावनालेशोपि । ननु तथापि विरहव्यथाव्या-
कुलः सन् यदि कोपि कदाचित् स्वास्थ्यसम्पादकं कमपि पदार्थमुपादद्यात्तदा तस्य भावस्य वा
बाधः स्यादेवेति चेत्तत्राहुः **स्वास्थ्यहेतोरिति** । स्वास्थ्यहेतोः स्वास्थ्यप्रयोजकस्य
येनैवैतद्भावविघातकं किञ्चिदपि स्वास्थ्यं भवति तस्य सर्वस्यैव पूर्वमेव सर्वभावेन त्यागादस्य
भावस्य त्यागिनो वा बाधः प्रतिघातः केन पदार्थेन सम्भवेत्, न केनापीत्यर्थः । ननु लौकिकस्य
बाधकस्यासम्भवेप्यलौकिकाः कालादय एव बाधका भविष्यन्तीति चेत्तत्राहुः **हरिरिति ।**
यद्यपि **हरिः** सर्वदुःखहर्ता समर्थः सदयश्च, तेन भक्तक्लेशलेशमपीक्षितुं न क्षमः, तथाप्यत्र
अस्मिन्नतिप्रचुरविप्रयोगभावे **बाधां नाशं** स्वरूपरसामृतैरेतद्भावरूपैर्भक्तानामपोषणरूपं
**कर्तुं न शक्नोति**, समर्थो न भवति । अपरे कालादयः कुतो बाधां कर्तुं शक्ष्यन्तीत्यर्थः ।
इदमत्राभिसन्धिः । भगवान् हि रसत्वेनैव 'रसो वै स' इत्यादिश्रुत्या निरूपितः, तत्त्वं च संयोग-
विप्रयोगात्मके शृङ्गार एव विश्रान्तमिति तदुभयात्मकः स्वयं स्वस्वरूपात्मकानेव तत्तद्रस-
भावांस्तत्तद्विहृतिभिरत्यनुगृहीतेष्वाविर्भाव्य तदनुभवं विदधत्तदुद्बोधितनिजभावनिचयानां
चानुभवमनिर्वचनीयानेकप्रकारैर्भक्तानां सम्पादयन् स्वरूपानन्ददायको महोदारो मुहुर्मुहुर्वि-
प्रयोगादिभावपोषणमेव कर्तुमर्हति, न तु तद्विघातमपि, स्वस्य भावात्मकत्वात्तेषां चातिप्रय-

त्वाद्भक्तविषयकैर्भावैः स्वस्य तदधीनत्वभावनात् निरवधिकृपानिधित्वस्य प्रकटितत्वाच्च । ननु तथापीश्वरः स्वतन्त्रः कदाचित्तद्भावमन्यथयेदेव, न तु नियमेन पोषयेदित्याशङ्क्य तस्य स्वभाव एवेदृशो यदेतद्भावं पोषयत्येव, न तु नाशयतीतीममर्थं व्यतिरेके दृष्टान्तेन समर्थयन्ति **अन्यथेति** । यदि भगवान् स्वरूपामृतैरुक्तभावैर्भक्तान्न पोषयेत् क्वचित्, किन्त्वेतद्भावबाधनमेव कुर्यादिति तदा लोके मातरो जनयित्र्यो बालान् स्तनन्धयान् स्तन्यैः क्वचित् न पुपुपुर्न पोषितवत्य इत्यपि स्यात् । तत्तु तथाभूतस्वभावानां तासां सर्वथैवाप्रसिद्धमसम्भावितमशक्यं च, एवं भगवतोपि स्वस्वरूपामृतैर्भक्तानामपोषणमेतद्भावनाशनरूपमित्यर्थः । तेन स्तन्यादिदानेन बालकानामपोषणे यथा मातृषु वात्सल्यस्वभावस्य तेषां जीवनस्य चान्यथाभावः स्यात्, तथा स्वरूपामृतदानेन भक्तानामपोषणे स्वरूपात्मकानुभूयमानविप्रयोगभावबाधनलक्षणे भगवति तादृक्स्वभावस्य भक्तानां जीवनस्य चान्यथा भावः स्यादिति भावः । ननु यद्यप्ययं भावः सर्वाशक्य-बाधस्तथाप्येतद्भावस्य बहिःसंवेदनदशायामेवोद्गमसम्भवेन ज्ञानस्य च तन्नाशकत्वेनैतादृशभाववतो भक्तस्य भगवदिच्छया ज्ञानिभिः संगे सति तद्वाक्यैरेतद्भावविपर्यासेन चित्तस्यान्यथावृत्तिरूपो मोहो भविष्यत्येव, तेन च फलप्रतिबन्ध इति चेत्तत्राहुः **ज्ञानिनामपीति** । यद्यपि 'तस्मान्मद्भक्तियुक्तस्ये'त्यादिवाक्यैर्ज्ञानस्य तादृशभक्तिपरिपन्थित्वमिति तत्संगे भवति भाववैपरीत्यं, तथापि भगवान् भक्तं तादृशं ज्ञानिनामपि वाक्येन ज्ञानाद्भक्तेराधिक्यज्ञापनाय तन्मार्गीयाणां संसर्गं संपाद्यापि तद्वाक्येन बहिःसंवेदनविघटनद्वारा तद्भावविरोधिना अत्युत्कटभाववन्तं न मोहयिष्यति, तथा सति तद्भावमेव तस्य न सम्पादयेत्, प्रयोजनाभावात् । अग्रे तस्य ज्ञानिवाक्यादिभिर्निरस्यत्वात् । किञ्चैवं सर्वश्रुतिस्मृतिपुराणसिद्धं ज्ञानमार्गाद्भक्तिमार्गस्याधिक्यमुत्सिदेत् । अतो भक्तस्य भावः केनाप्यन्यथा कर्तुमशक्य इति न फलप्रतिबन्धसम्भावनापीति भावः । तद्प्रयोजनाभावेपि मोहानुत्पादः सूच्यते । ननु प्रभुकृतिप्रयोजनमाकलयितुमशक्यं तदिच्छामन्तरेणेति कदाचिदुक्तमपि भावं प्रत्यादित्सुर्थेत्, तदा ज्ञानिवाक्यैर्भक्तमपि मोहयेदेवेत्याशंकायामाहुः **आत्मप्रद** इति । यत आत्मानं रसरूपं भक्तेभ्यः प्रकर्षेण निमुक्तसंकोचतया ददाति, प्रियः प्रीत्याश्रयश्च, अपिशब्दात्सदधीनश्च भवति, अतो दित्सितस्य स्वरूपस्यैतद्भावातिरिक्तप्रकारेण दानासम्भवादेतद्भावरहिते तद्दानाभावेनाप्यादेयतापत्तेः प्रीत्यन्यथात्वप्रसक्तेः प्रयोजनाभावध्रौव्याच्च **किमर्थं मोहयिष्यतीत्यर्थः** । एवं स्वमार्गीयं परित्यागं सम्यग्विचार्य तं कर्तुमुपदिशन्ति **तस्मादिति** । यस्मादुक्तातिरिक्तप्रकारेण **कृतः परित्यागः** पश्चात्तापैकपर्यवसित‌स्तस्मादुक्तो यः प्रकारो 'निरहानुभवार्थन्वि'त्यादिना तेन परित्यागो भक्तिमार्गीयः संन्यासो विधीयतां क्रियतामित्यर्थः । तथा सति पश्चात्तापनिवृत्तिपूर्वकमुक्तफलमप्रत्यूहं भविष्यतीति भावः । ननूक्तपरित्यागफलस्यैतत्प्रकारेणैव सिद्धावपि प्रकारान्तरकृतपरित्यागे किञ्चित्प्रयोजनं भविष्यत्येव, तस्यापि तत्र त्तनोक्तत्वादिति चेत्तत्राहुः **अन्यथेति** । अन्यथा प्रकारान्तरेण संन्यासे स्वार्थात् स्वप्रयोजनात् भ्रश्यते भ्रष्टो भवति, तेन पश्चात् तस्य पुन भवेदिति मे एतद्भावतत्त्वाभिज्ञस्य निश्चिता मतिर्निःसन्दि-

ग्धा बुद्धिरतो मदीयैरेतन्मत्यनुसारिभिः प्रकारान्तरं सर्वथैव नोपादेयमित्यर्थः ॥ १७–२१ ॥

उपसंहरन्ति इतीति ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

इतिशब्दः समाप्तौ । कृष्णप्रसादेन कृष्णः फलात्मा, यशोदाद्युत्सङ्गलालितः,
तस्य प्रसादः, परमकाष्ठापन्नोऽनुग्रहः, तेनासाधारणालौकिकहेतुनालौकिकस्यैतन्निश्चयजनना-
सामर्थ्यात् वल्लभेनेति प्रथितेन प्रभोः प्रियेणात एव रसात्मकतत्स्वरूपस्य संयोगविप्रयोग-
भावतदवान्तरभेदानुभववता भक्तौ फलरूपायाम् **संन्यासवरणं** पुष्टिमार्गीयपरित्यागा-
ङ्गीकार इति यावत्, तत् विशेषेण स्फुटतया गुप्ततया वा निश्चितं निर्धारितं, **अन्यथा** एत-
न्निश्चयाभावे फलरूपभक्त्यभावे वा प्रकारान्तरेण संन्यासमुरीकुर्वन् पतित उक्तस्मार्गीय-
संन्यासफलात् प्रच्युतो दोषवांश्च भवेदित्यर्थः ॥ २२ ॥

श्रीविठ्ठलेशचरणाब्जयुगानुगश्रीकल्याणरायतनयेन मुदा विचार्य ।
गोपेश्वरेण विहिता विवृतिर्वितन्यात् संन्यासनिर्णय इयं विदुषां विनोदम् ॥ १ ॥

**इतिश्रीश्रीगोकुलाधीशपदसरसिजसेवापथप्रवर्तकश्रीवल्लभाचार्य-**
**चरणाब्जरजोणुशरणश्रीकल्याणरायात्मजश्रीहरिरायानुज-**
**श्रीगोपेश्वरविरचिता संन्यासनिर्णयविवृतिः सम्पूर्णा ॥**



---

१ गौर्मिगोपारदासस्य श्रीगोकुलनिवासिन । गोपेश्वरेण विवृतिः कृता सन्यासनिर्णये ॥ १ ॥ इत्यधिकम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीपुरुषोत्तमकृतविवरणसमेतः ।

---

स्वाचार्यवर्यचरणोदितभक्तिमार्गप्रारम्भकालिकजनत्यजनप्रकारम् ।
संन्यासनिर्णयमयं विवृणोति दासः श्रीबालकृष्णपदपद्मनिवेशितात्मा ॥ १ ॥

अथ श्रीमदाचार्यचरणा यदा देहदेशपरित्यागविषयकं भगवदाज्ञाद्वयं पुरःस्फूर्तिकविचारेण न कृतवन्तः, तदा सेवकत्वात् पश्चात्तापे जाते, लोकत्यागविषयिण्यां भगवतस्तृतीयाज्ञायां जातायां, विचारितवन्तः, किं भगवान् मदुपर्यप्रसन्नोस्ति, नवेति । तत्र यद्यप्रसन्नः स्यात्, उपेक्षेतैव, न त्वाज्ञापयेद्, अतो द्वितीयैव कोटिः; परं तत्र किं कारणमिति विचारे सूक्ष्मटीकानिवृत्त्याऽतिसर्जनरूपदेशत्यागस्य, माधवभट्टकाश्मीरिनिवृत्त्योपचयरूपदेहत्यागस्य च भगवतैवं कारितत्वात् पूर्वाज्ञयोर्देशदेहशब्दौ यौगिकाववगतौ । ततस्तदाज्ञाद्वयं भगवतानेन प्रकारेण साधितमित्येव कारणमिति निश्चित्य पूर्वाज्ञाद्वयवत्तृतीयस्या अपि दुर्ज्ञेयतां निश्चित्य, यद्यप्याज्ञाद्वयं सम्पन्नम्, तथापि स्वतस्तु न कृतम् । अतस्तदकरणजः पश्चात्तापः कथं निवर्तेत इति विचारे करिष्यमाणाज्ञाविषयविचारादेव भगवान् निवारयिष्यतीति निश्चित्य स्वावश्यासूचनपूर्वकं परित्यागनिरूपणं प्रतिजानते पश्चात्तापेत्यादि ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

अत्र केचित्[1] आद्यो भक्तिमार्गीयपरित्यागेतरसर्वपदार्थान् विचार्य त्यागविचाराभावजनितस्वपश्चात्तापनिवृत्त्यर्थं परित्यागविचारप्रतिज्ञेत्याहुः । अन्ये[2] तु कर्ममार्गीयाणां संसारवैराग्यस्य वार्धक्येप्यभावात् तत्सङ्गवशेन कदाचिद्भगवदीया अपि तादृशा मा भूवन्नित्येतदर्थं सुखोपायस्य संन्यासस्य निरूपणप्रतिज्ञेत्युक्त्वा, शरीरवैकल्ये जाते पूर्वदशां स्मृत्वा, मया पूर्वमेव भगवदर्थं किमिति न यत्नः कृत इतीदृशो यो भगवदीयानां तापः स पश्चात्ताप इत्याहुः । वयं[3] तु भक्तिमार्गे ज्ञानमार्गे च साधनदशायां सिद्धदशायां च परित्यागः कर्तव्यत्वेनोक्तः,

---

१ श्रीमद्गोकुलनाथचरणाः । २ श्रीमद्रघुनाथचरणाः । ३ श्रीगोपुरोगमाः ।

तत्राद्यायां पूर्णवैराग्याभावेन सम्यक्परित्यागासम्भवात् पाण्डित्यप्रसङ्गेन पश्चात्तापायैव सः स्यात्, एततारतम्यज्ञानाभावेन भगवदीया अपि पूर्वं परित्यजन्तः पश्चात्तसा भवेयुः, तथा तान् दृष्ट्वा स्वयमाचार्या अपि पश्चात्तापमापुरिति तदुभयविषयपश्चात्तापानुदयाय प्रतिज्ञेत्याहुः। अपरे तु आचार्यैर्निबन्धे 'त्रिदण्डं परिगृह्णीत सर्वशास्त्राविरोधि त'दित्याज्ञापनात्तद्वीक्ष्य पुष्टिमार्गीयोऽपि तुरीयाश्रमत्वेन त्रिदण्डं परिगृह्णन् पश्चात्तापमाप्नुयाद्, अतस्तदनुदयाय पुष्टिमार्गीयसन्न्यासविचारारम्भ इत्याहुः। अन्ये तु श्रुत्यादिप्रमाणप्रतिपन्नस्य रसात्मकस्य भगवतो विरहात्मकभावानुभवः सर्वात्मभावप्रपत्त्येकलभ्यः सर्वपरित्यागं विना न सम्भवतीति तस्य त्यागस्य स्वरूपादिकमविदुषां ज्ञानादिमार्गेष्वपि परित्यागस्योक्तत्वात् सन्दिहानानां स्वीयानामविचारतः परित्यागः पश्चात्तापायैव भवेदिति तदभावाय विचारारम्भ इत्याहुः। मया तु तेषां परस्परविसम्मतिमवलोक्यान्तःकरणप्रबोधग्रन्थस्थपश्चात्तापपरित्यागपदयोरत्र प्रत्यभिज्ञानात् स एव पश्चात्तापोऽत्र निवर्त्यत्वेनादृत इति न दोषः। ननु भगवदाज्ञया जातत्वात् तया तत्कर्तव्यतायाः स्वयं च निश्चितत्वाद्विचारस्य किं प्रयोजनमत आहुः स इत्यादि विचारणेत्यन्तम्। स परित्यागः मार्गद्वितये प्रोक्तः, मार्गस्य द्वितयं मार्गद्वितयम्। अत्र संख्याया अवयवे तयबित्यनेन द्विशब्दादवयवे तयप्। अवयवशब्दश्च 'अङ्गं प्रतीकोऽवयव' इति कोशादङ्गाख्य एकदेशे रूढः, सोऽत्र न सङ्गच्छते, सङ्ख्याया गुणत्वेन तत्र देशभेदस्य वक्तुमशक्यत्वात्, किन्तु 'सत्वं ह्यवयवः प्रोक्तः सर्वावयविनामिहे'ति द्वादशस्कन्धे उपादानकारणेऽपि प्रयुक्त इति तदत्र ग्राह्यम्। तथा च संख्यायाः कारणं संख्येयं तदत्र वदति। समासे मार्गेत्यभेदे षष्ठी, तेन मार्गाभिन्नौ यौ द्वित्वसंख्यासंख्येयौ तयोः प्रकर्षेणावश्यकर्तव्यत्वेनोक्त इत्यर्थः। तत्र कौ तौ मार्गावित्यपेक्षायां, कुतश्च तत्रोक्त इत्यपेक्षायां चाहुः भक्तौ ज्ञाने विशेषत इति। भक्तिमार्गे आरम्भदशायां सिद्धदशायां च, ज्ञानमार्गे विविदिषादशायां विद्वद्दशायां च वैराग्यातिशयरूपं विशेषमभिप्रेत्योक्त इत्यर्थः॥ १॥

ननु 'योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया, ज्ञानं कर्म च भक्तिश्चे'त्येकादशस्कन्धे भगवद्वाक्यात् त्रयोऽपि योगा नृणां श्रेयःसाधकत्वात्तुल्या इति कर्ममार्गे कुतो नोक्त इत्यत आहुः कर्ममार्ग इत्यादि।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा॥ २॥**

चातुराश्रम्यपक्षेण यद्यपि कर्ममार्गे उक्तस्तथापि 'कर्मयोगस्तु कामिना'मिति भगवता तस्य कामाधिकारकत्वेनोक्तत्वात्परित्यागस्य च वैराग्याधिकारकत्वात्तत्र न कर्तव्यः। यद्यपि 'वनाद्वा प्रव्रजेद्विद्वानातुरो वाथ दुःखित' इत्यत्रिस्मा आतुरभयभीतयोरप्युक्तस्तथापि कलि-

१ अंद्वारकेश्वरा. १। २ आमोवश्वरा।

कालतः कलिकालं प्राप्य सुतरां न कर्तव्यः । कलिवर्ज्येषु संन्यासस्यापि गणनादित्यर्थः । तर्हि मास्तु कर्ममार्गे तस्य कर्तव्यता, तथापि यत्रोक्तत्वेनैव यथा कर्तव्यो, विचारस्य किं प्रयोजनमित्याकांक्षायामाहुः अत इत्यादि । अतः तत्तन्मार्गे तत्तद्दशायां परित्यागस्योक्तत्वात् **भक्तिमार्गे आदौ** आरम्भे कर्तव्यत्वमभिप्रेत्य विचारणा यथा कथञ्चित्सञ्जातभक्तेः पुंसो भक्त्युत्कर्षजनकश्रवणादिनिर्वाहार्था एका आरम्भदशा, तैरभ्यस्तैरासक्तिसिद्ध्यर्था द्वितीया, तदुत्तरं व्यसनसिद्ध्यर्था तृतीया, तत्र यस्यां दशायां कलिकालादिकृतदोषसम्बन्धो न भवति तदर्थं तदीयदशाफलस्वरूपप्रकारविचारः क्रियत इत्यर्थः । एवं सार्धेन प्रयोजनमुक्तम् ।

अत्रायमर्थः । एकादशस्कन्धस्य सप्तदशेऽध्याये, 'यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् । स्वधर्मेणारविन्दाक्ष तन्मे व्याख्यातुमर्हसी'त्युद्धवप्रश्ने चातुराश्रम्यं वदता भगवताष्टादशाध्याये 'इष्ट्वा यथोपदेशं मा'मित्यादिभिः पञ्चदशभिः संन्यासाश्रमरूपः परित्याग उक्तः । तदनन्तरं भक्तिवैराग्ययोराधिक्ये 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः, सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इत्यादिभिः सार्धदशभिरवैधश्च परित्याग उक्तः । अत्र च ज्ञानभक्तिमार्गिणोर्धर्माः समाना एव सङ्गीर्णोक्ताः । एव पूर्वोक्तेपि बोध्यम् । तथा 'न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रिया'विति चत्वारो भेदाः संन्यासस्य तृतीयस्कन्ध उक्ताः, तेन मार्गनयेपि तस्य कर्तव्यता । यद्यपि कर्ममार्गे तृतीयस्य चतुर्थे पादे 'पुरुषार्थोत.शब्दा'दित्यधिकरणस्थे'प्याचारदर्शना'दित्यादिषु पञ्चसु सूत्रेषु वशिष्ठादीनां ब्रह्मविदामग्निहोत्रादिकर्मकरणाचारदर्शनात्, 'जनको ह वै बहु दक्षिणेन यज्ञेनेजे' इति ब्रह्मविदोपि जनकस्य कर्मकरणश्रुते 'स्त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति श्रुतौ विद्याकर्मभ्यां फलारम्भश्रावणात्, 'ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीत' इति कल्पश्रुतौ ब्रह्मविदोपि ब्रह्मत्वेनर्त्विक्त्वश्रावणात्, 'आश्विन धूम्रललाममालभेत यो दुर्ब्राह्मणः सोम पिपासेत्, ऐन्द्राग्न .पुनरुत्सृष्टमालभेत य आतृतीयात् पुरुषात् सोम न पिबेत्, विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्नातृतीयात् पुरुषात् सोमं न पिबति । यावज्जीवमग्निहोत्रं जुहुया'दित्यादिश्रुतिभिः कर्मकरणस्य नित्यताश्रावणात्, कर्मणश्च दम्पत्यधिकारकत्वाज्जैमिनिमते आश्रमपक्ष एव, यथा कथञ्चित्कर्मकरणाशक्तौ सर्वत्यागकरणम्, 'यदहरेवे'त्यादिश्रुतिस्तु कर्माशक्ततदनधिकार्यन्धपङ्ग्वादिविषयेति न तद्वैयर्थ्यमिति कर्मविचारकजैमिनिसिद्धान्तात् कर्ममार्गे न कर्तव्यः । अथ 'तुल्यं दर्शन'मित्यादिसूत्रेषु शुकमन्दालसाजडभरतदृष्टान्तेन दर्शनस्य साधारणतया कर्मावश्यकत्वासाधकत्वात्तेनैव च परित्यागस्यानन्धपङ्ग्वाद्यधिकारकत्वनिरासेन जैमिनिमते प्रव्राजश्रुतिवैयर्थ्यप्रसङ्गस्य दुर्वारत्वात्, 'एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे, किमर्था वय यक्ष्यामहे, एतद्ध स्म वैतत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे,' 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजे'त्यादिभिर्बह्वीभिः श्रुतिभिः प्रव्राजबोधनेन कर्मकरणश्रुतेरसार्वत्रिकत्वनिश्चायनात् । 'ब्रह्मिष्ठो ब्रह्मे'त्यत्रापि ब्रह्मपदेन वेदस्याभिप्रेततया तद्विद एवार्त्विज्यबो-

धनेन तया श्रुत्या ज्ञानस्य कर्मशेषतया आपादयितुमशक्यत्वात् । 'आश्विनं धूम्रललाम'-
मित्यादिषु कर्मनियमवत् 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु'रित्यादौ त्याग-
नियमस्यापि श्रावणेन रागोपाधिक एव कर्मनियम इति निश्चयेनाविशेषात्, उत्तरे वयसि
तुरीयाश्रमतया द्रव्ययज्ञत्यागेपि जरामर्याग्निहोत्रश्रुत्या तत्सिद्धौ यावज्जीवाग्निहोत्रादिश्रुतेर-
प्यबाधाच्च जैमिन्युक्तदूषणपरिहारे जाते कर्ममार्गीयचातुराश्रम्यपक्षस्याक्षुण्णत्वात् कर्ममार्गे
परित्यागः कर्तव्यत्वेनायाति, तथापि 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकं, देवराच्च सुतो-
त्पत्तिः कलौ पञ्च विवर्जये'दिति वर्जनस्मृत्या कलिकालतस्तत्र न कर्तव्यः । यदि च, 'यावद्
वर्णविभागोस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत् कुर्यात् कलौ युगे' इति प्रतिप्रस-
वात् कर्ममार्गेपि कर्तव्यत्वं त्यागस्य विभाव्यते, तदापि जाबालश्रुतौ चातुराश्रम्यपक्षं पूर्वमुक्त्वा,
ततः 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वाथ पुनरव्रती वा व्रती वा स्नातको
वास्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति समाप्तौ विरागस्यैव
सर्वत्राधिकारत्वेन श्रावणात्, एकादशस्कन्धे 'यदा कर्मसु काम्येषु लोकेषु निरयात्मसु ।
विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्तत' इत्यादिना वैराग्य एव तस्य पक्षस्य भगवता
कथितत्वात् कलौ च सर्वधर्मशून्ये वैराग्यस्यासम्भवात् सुतरां न कर्तव्यः । अतश्चातुराश्रम्य-
पक्षेण प्राप्तस्येदानीमधिकाराभावाद्यदा ज्ञाननिष्ठा भक्तिनिष्ठा वा भवति, तदा तस्मिन्मार्गे
कर्तव्यः । तत्र स्वस्य भक्तिमार्गीयत्वेन भक्तिमार्गे कर्तव्यत्वादादौ पूर्वं विचारणा तत्प्रकार-
चिन्ता क्रियते, तथा च स यद्येकस्मिन्नेव मार्गे उक्तः स्यात्, यदि वा मार्गत्रयेप्येकविध
एवोक्तः स्यात्, तदा भगवदाज्ञावाक्ये सन्देहाभावान्न विचार्यः स्यात्, अस्ति तु सर्वत्रो-
क्तः, तत्र कः कीदृशो वा भगवदाज्ञाविषय इति निश्चेतुं विचार्यत इत्यर्थः ॥ २ ॥

एवं प्रयोजनमुक्त्वा विचारमारभन्ते श्रवणादीत्यादि ।

श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

श्रवणादीनां नवविधभक्तीनां प्रकर्षेण अविच्छेदेन सिद्ध्यर्थं परित्यागः कर्त-
व्यश्चेत् सः पक्षः नेष्यते नाङ्गीक्रियते । अयमर्थः । भगवता हि नृणां श्रेयोविधि-

१. 'मार्गद्वये' इति पाठ. ।

त्सया ज्ञानकर्मभक्तिरूपं मार्गत्रयमुक्तम्, निर्विण्णाः, कामिनः, न निर्विण्णा नातिसक्ताश्चेति यथायथं तदधिकारिणश्चोक्ता एकादशे 'योगास्त्रय' इत्यादिना । त्रिष्वपि संन्यासश्च तत्र निरूपितः । तथा 'न कर्मणे'ति श्रुतौ च त्यागस्य अमृतत्वरूपं फलमुक्तम् । तच्च फलं मार्गादेव, न तु केवलात् त्यागात्, त्यागस्य तत्तन्मार्गाङ्गत्वेन तत्र फलश्रुतेरर्थवादत्वस्यैव विचारितत्वात् । 'यन्न योगेन सांख्येन दानव्रततपोध्वरैः, व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपी'ति वाक्ये त्यागमात्रेण स्वप्राप्त्यभावस्य भगवता कथनाच्च । अतस्तस्य कथञ्चिदुपकारकत्वमेव । तत्राधिकारश्च वैराग्यात्, तद्यथा यथोत्कृष्यते तथा तथा त्यागो मार्गस्योपकरोति । तस्योत्कर्षश्च कथं स्यादिति विचारे केवलादृष्टमात्रेण तदसम्भवान्मार्गानुकूला दृष्टसामग्री श्रवणाद्यविच्छेदरूपा ग्राह्या । अतस्तत्सिद्ध्यर्थं त्यागः कर्तव्यश्चेत्, स पक्षो नात्रेष्यते, न भगवन्मतेऽङ्गीक्रियते । अयमर्थः । भगवता हि 'यदा कर्मविपाकेष्वि'त्यादिभिः साधनदशापन्नस्य परित्यागकथने अटनमेव तस्योक्तम्, न तु क्वचित्स्थित्वा श्रवणादिकरणम्, ततो 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षक' इत्यादिभिः सार्धैर्नवभिः परित्यागं सिद्धदशापन्नयोर्ज्ञानिभक्तयोरुक्त्वा ततो ज्ञाननिष्ठस्यापरोक्षज्ञानाभावे 'दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान्', 'अजिज्ञासितमद्धर्मो गुरुं मुनिमुपव्रजेत् । तावत्परिचरेद्भक्त्या श्रद्धावाननसूयकः, यावद्ब्रह्म विजानीयान्मामेव गुरुमादृत' इति द्वाभ्यां विविदिषासंन्यासोऽपि संगृहीतः । ततो 'यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः, ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति । सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा । अविपक्वकषायोऽस्मादमुष्माच्च विहीयत' इति द्वाभ्यां ज्ञानवैराग्यराहित्ये अविपक्वकषायत्वाल्लोकद्वयहानिरुक्ता । भक्तिमार्गीयस्य तु साधनदशायां संन्यासे किमप्यधिकं नोक्तम्, किन्तु 'भिक्षोर्धर्मः शमोऽहिंसे'त्यादिद्वाभ्यां संक्षेपेण चातुराश्रम्यधर्ममुक्त्वा 'इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् । सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते दृढा'मिति फलोक्तिपूर्वकं चातुराश्रम्यधर्मनिरूपणमुपसंहृतम् । तेन भक्तिमार्गीयस्यापि तत्र सन्निहितो भिक्षुधर्म एव मुख्य इति सिध्यति । एवं सति यदि श्रवणाद्यर्थं संन्यासः क्रियेत, तत्स्वरूपेण तद्धर्मैश्च विरोधः स्यादित्याशयेन प्रथमं संन्यासस्वरूपविरोधात्मकं दोषं व्युत्पादयन्ति सहायेत्यादि । संन्यासस्वरूपं हि जाबालश्रुतौ 'तद्धैके प्राजापत्या'मित्यारभ्य 'एवमेवैतद्भगव'न्नित्यन्तेनोक्तम्, तदेवैकादशस्कन्धे 'इष्ट्वा यथोपदेशं मां दत्वा सर्वस्वमृत्विजे । अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजे'दित्यनेनोक्तम् । तथा सति 'अग्न्युपचयनं कृत्वा जीवश्राद्धविधानतः' श्राद्धाष्टकं विधाय प्राजापत्यामिष्टिं कृत्वा मन्त्रेणाग्नीन् स्वप्राण आवेश्य नैरपेक्ष्येण सर्वत्र परिभ्रमणमिति सिध्यति । श्रवणादिकं तु सहायसङ्गसाध्यम्, सहायः समानशीलतया सहकारी, तत्सङ्गेन साध्यम् । नहि श्रावयितारं विना श्रवणं सिध्यति, न वा श्रोतारं विना कीर्तनम् । तौ च नैतेन सह परिभ्रमत इति न श्रवणकीर्तनयोः सिद्धिः । मत्कृत्यर्थमिति पाठे तु प्रकर्षेण वृत्तिर्विद्यमानतेति पूर्वोक्त एवार्थः ।

अथैतेन सह परिभ्रमंतस्तदा नैरपेक्ष्येण सर्वत्रैकाकिपरिभ्रमणरूपं संन्यासस्वरूपं विरुन्धः ( स
नेष्यत इत्यर्थः । ) किञ्चेदानीमुत्कटमेधाविशेषाभावात् श्रुतमपि स्वरूपलीलादिकं न हृदि
तिष्ठतीति तत्स्थित्यर्थं पुस्तकादिकं रक्षणीयम्, अर्चनार्थं तदुपकरणमपि रक्षणीयम्, तदपि
नैरपेक्ष्यं विरुणद्धि । अतः श्रवणादीनां सहायसङ्गसाध्यत्वात्तत्साधनानां रक्षणाच्च संन्यास-
स्वरूपविरोधतः स नेष्यत इत्यर्थः । यद्वा, 'यस्त्वसंयतषड्वर्गः' इति द्वाभ्यामसंयतषड्वर्गस्य
त्रिदण्डोपजीवने बाधकं कथयता भगवता पूर्वोक्तत्रिदण्डिसाधनरक्षणं सूच्यते, तद्रक्षणं च
'एकश्चरेन्महीमेता'मित्यादिभिर्ये धर्माः पूर्वमुक्तास्ते एव कर्तव्यत्वेन सिध्यन्ति, न तु
श्रवणादिकम्, एकचरणे सहायसङ्गाभावात्, सत्यपि सहायसङ्गे स्थितेः कर्तुमशक्यत्वात् ।
तथा च संन्यास उक्तानां साधनानां संन्यासे अवश्याचरणात् । एवं सत्यत एव परस्पर-
स्वरूपविरोधेन तथेत्यर्थः । यद्यपि मूले स्वरूपविरोधत इति पदं नास्ति, तथाप्यग्रे तद्धर्मैश्च
विरोधत इति चकारदर्शनात् मयैवं व्याख्याने समुचित इति न दोषः । अथ त्रिदण्डिनोपि
चातुर्मास्य एकत्रस्थितेः स्मरणात् भगवतापि 'विविक्तक्षेमशरणो मद्भावविमलाशय' इति
कथनात् साधनरक्षणपूर्वकं स्थित्वा श्रवणादिसाधने को दोष इत्याकांक्षायां परस्परधर्म-
विरोधरूपं दोषान्तरं व्युत्पादयन्ति **अभिमानादित्यादि** । अभिमानो गर्वः, अहन्ता-
ममतात्मको वा, तस्मात्, स्थितौ हि, तत्र 'भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत्,
सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता । बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः । विभज्य
याचितं शेषं भुञ्जीताशेषमाहृत'मिति द्वाभ्यामेको भिक्षाप्रकार उक्तः । तत्र सप्तागारेषु कस्य-
चित् दुष्टान्ने प्राप्ते तद्दोषमज्ञात्वा च तस्य भक्षणे कृते विविदिषादशायामिव श्रवणादि-
साधनदशायामपि ग्रन्थादिपक्षपातेन शरीराभिमत्या च प्रतिवादिनिराकरणार्थं पारुष्याव-
मानयोः सम्भवात् । 'अतिवादांस्तितिक्षेत नावमन्येत कञ्चने'ति संन्यासधर्मेषु भगवदुक्तस्या-
तिक्रमेण **तद्धर्मविरोधः** । किञ्च, **नियोगात्** नितरां योगो नियोगः, 'तस्मात्सर्वात्मना
राजन् हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणा'मिति द्वितीय-
स्कन्धवाक्यात्तेषामावर्तनं तस्मात् । न हि सकृत् कृतं श्रवणादिकं प्रेमभक्तिं जनयति,
किन्त्वावर्त्यमानम्, आवृत्तिश्च स्थित्या, सा च 'एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरत आत्मवान्समदर्शन' इत्याद्युक्तैः परित्यागधर्मैर्विरुध्यते । अतो हेतुद्व-
योपपादितात्तद्धर्मविरोधादपि तथेत्यर्थः । ननु मास्तु श्रवणाद्यर्थं संन्यासरूपो वैधः परित्यागः,
तथापि गृहादीनां विषयासक्तिजनकतया भगवदासक्तिबाधकत्वेनावश्यं त्याज्यत्वात् । 'ज्ञान-
निष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इत्युक्त-
रीतिकस्य त्यागान्तरस्य भगवदासक्तिसाधनार्थं करणे को दोषः, तादृशत्यागे च स्वरूपधर्म-
विरोधरूपपूर्वोक्तबाधकाभावात्, वैराग्यस्य ज्ञानाजनकत्वं यद्वा, तदा गृहत्यागः कर्तव्य
इति पक्षस्य नलकूबरमणिग्रीववस्तुनितात्पर्यनिरूपणप्रसङ्गे निर्णीतत्वाचेत्याशंकां परिहर्तुं
व्युत्पादयन्ति **गृहादेरित्यादि** । गृहधनादेर्भगवदासक्तिबाधकत्वेन साधनार्थं भगवदासक्ति-

साधनार्थं, यदि तथा अवैधत्यागः कर्तव्यश्चेत् सोपि नेष्यत इत्यर्थः । नेष्यत इति पदद्वयं अत्राप्यनुषज्यते ।

एवमनूद्य परिहरन्ति अग्रेऽपीत्यादिद्वाभ्याम् । त्यागो हि न स्वतन्त्रं साधनमपि तु मार्गाङ्गतयेति पूर्वं व्युत्पादितम् । तथा सति मार्ग एव स्वतन्त्रः साधकः । स च 'भक्त्या सञ्जातया भक्त्ये'ति वाक्यात्पूर्वं श्रवणादिकमेवापेक्षते । तच्च श्रावयित्रादिरूपं सहायम् । ते च 'हृद्यास्तु पण्डिताः प्रोक्ता भगवच्छास्त्रतत्परा' इत्यादिना जलभेदे ये निरूपिताः, तादृशास्त्विदानीं दुर्लभा इति 'गायकाः कूपसंकाशा' इत्यादिना य उक्ता गायका वा पौराणिका वा मिलन्ति, ते च यथा स्वयं गृहासक्तो विरजिष्यमाणो वा तादृशा एव, न तु स्वत उत्कृष्टाः, अतोऽग्रेपि **तादृशैरेव संगो भवति, नान्यथा,** नोत्कृष्टप्रकारकः । तथा च संगदोषेण स्वाभिप्रेतफलाभावान्नेष्यत इत्यर्थः । अथ यदि तादृशा मध्यमाधिकारिणो मिलन्ति, तदा गृहपरित्यागे को दोष इत्याशंकायां स्वीयदोषादपि तथात्वमाहुः स्वयं चेत्यादि । चोप्यर्थे । स्वयमपि **विषयाक्रान्तः** । 'इन्द्रियैर्विषयाकृष्टै'रिति न्यायेन पञ्चेन्द्रियविषयाकृष्टमानसस्त्वानमिथ्यायन् **पापण्डी स्यात्**, 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते' इति गीतावाक्यात् तादृशः सन्नुपधर्मात्मकाधर्मशाखाछायास्थः **पापण्डी स्यात्** । तत्र कालस्यापि सहायतामाहुः **तु कालत** इति । तु पुनः धर्मप्रतिपक्षरूपात् कलेरपि तथा स्यात् । अतस्तादृशानां संगेपि पापण्डित्वात् पतितः स्यादतो नेष्यत इत्यर्थः । अथ 'कलिं सभाजयन्त्यार्या' इत्यादिवाक्यैः कलेः (श्रवण) कीर्तनाद्यनुगुणत्वेन गृहत्यागे दोषाभावो विभाव्यते, तदापि दोषमाहुः **विषयेत्यादि** । सत्यं कालः कीर्तनानुगुणः, तथापि फलांशे एवानुगुणो, न तु साधनस्वरूपांशे, तेषु वाक्येषु तथैवोपलम्भात् । अतो **विषयाक्रान्तदेहानां** पूर्वोक्तरीत्या विषयारूढस्थूललिंगशरीराणां कालतः कलेः सकाशात् **हरेरावेशः सर्वदा न,** भगवच्चित्तता सर्वदा न भवति, किन्तु कदाचित् । तथा सति यदा आसुरावेशः स्यात्तदा पूर्वोक्तस्य सर्वस्य प्रतिबन्धात् पापण्डित्वमेव भवेत् । अतो नेष्यत इत्यर्थः । **कामत** इति पाठे तु काम इच्छा, तथा च विषयकामनया तथा स्यादित्यर्थो बोध्यः । तदेतन्निगमयन्ति **अतोत्रे**त्यादि । **अतः** उक्तेभ्यो दोषेभ्यः, **अत्र काले, भक्तौ** भक्तिमार्गे, **साधने** साधनदशायाम्, तादर्थ्यसप्तमीपक्षे आसक्तिसाधनार्थं वा, **त्यागो** गृहपरित्यागः नैव सुखावहः । इदानींतनवीतरागिवत् पापण्डित्वमापादयन् भगवदासक्तिरूपं सुखं न जनयति, तस्मात् मध्यमायामपि साधनदशायां सर्वथा न कर्तव्य इत्यर्थः । अत्र भक्तिमार्गे भगवता कर्तव्यत्वेन प्रोक्तस्य परित्यागस्य प्रेमभक्तिसाधनदशायामकर्तव्यत्वे साधिते पारिशेष्यात् तत्सिद्धत्वदशायां फलोपकार्यङ्गत्वेन कर्तव्य इति सिद्धम् ॥ ३–६ ॥

तत्र 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपे'ति गीतायां भगवद्वाक्यात् फलस्य त्रयी विधा । तत्र कस्मै फलाय कर्तव्य इति

विचारणायां प्रवेशस्य मत्कर्मकृन् मत्परम इति वाक्योक्तसाधनान्तरसापेक्षत्वात्ततः पूर्वमुक्त-
योर्ज्ञानदर्शनयोरर्थे कर्तव्य इत्याशयेनाहुः विरहेत्यादि ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयवन्धनिवृत्त्यर्थं वेशः सोऽत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैव वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३½ ॥

विरहसामयिको वानुभवो विरहानुभवः, विरहान-
विरहस्यानुभवो विरहानुभवः, तदर्थं कर्तव्य इति फलति, तत्राद्ये पक्षे
न्तरोनुभवो वा विरहानुभव इति त्रिधा सम्भवति, विरहस्तस्योद्बोधन आसत्त्या कृते तस्याभीक्ष्णमनुभ-
जीवस्य सृष्ट्यादौ व्युच्चरणाज्जातो यो सह कृत्यासक्तिश्रमन्यायेनोत्पादितोभ्यासरूपो यो
वार्थं, द्वितीयपक्षे तु, भक्तियोगमायाभ्यां 'तासामाविरभू'दित्यादिनोक्तो यः साक्षात्काररूपोनुभव-
भगवदनुभवस्तदर्थं, तृतीयपक्षे तु विरहानुभवोर्थः प्रयोजनं यस्य तद्विरहानुभवार्थं, क्रियाविशेषण-
स्तदर्थं, तथा चैवं त्रिविधो परित्यागः प्रशस्यते। एकादशस्कन्धे भगवता 'वाग्गद्गदा
मेतत् । तदर्थं तद्यथा स्यात्तया स्तूयते, अतस्तदर्थं कर्तव्यः । अत्रायमर्थः । पुष्टिमार्गीयाणां
द्रवते यस्य चित्त'मित्यनेनात्यन्तं ते तु जीवाः शुद्धमिश्रभेदाद् द्विधा । तत्र मि-
जीवानां भगवद्रूपसेवार्थं कायात् सृष्टिः । वाहंकारेण वा मर्यादास्थापनार्थं वा शापादिना भगवद्वियोग इति
श्राणां कदाचिदन्यासत्त्या तथा गद्येपि सहस्रपरिवत्सरमितकालाद्व्युच्चरणेन भगवद्वियोगः ।
पुष्टिप्रवाहमर्यादायां स्थितम् । वाऽनन्यभक्त्या वा भगवता निवार्यते । भक्तिमार्गश्च चतुर्विधाः ।
स च केनचित्प्रकारेण तदा तस्य केनचित्प्रकारेण विरहौत्कण्ठ्यमुत्पादयति ।
तत्रास्मिन्मार्गे यदा निवारयितुमिच्छति

१ विरहोत्कण्ठामिति पाठः ।

किञ्च, माया ह्यन्यत्र स्थितमन्यत्र प्रत्याययतीति 'ऋतेर्थं यत्प्रतीयेते'त्यत्र सुबोधिन्यां स्थितम् । भगवांश्च रसलीलायां योगमायामुपाश्रयतीति पञ्चाध्याय्यारम्भे स्थितम् । सा च न विश्वमायाऽपि तु भगवद्योगार्था माया । एवं सति यदा भगवानेनं जीवं बुभुक्षति, तदास्य योगमायया स्वाज्ञानं विरहं चोत्पादयति, अनन्यभक्तिश्च परमा तिरोधाननाशिका । अन्तर्बहिश्च भगवन्तमनुभावयति । भगवांस्तु सर्वमन्तर्बहिर्व्याप्नुवानोपि विरुद्धधर्माश्रयत्वात् परिछिन्नः । एतन्मार्गे च भगवतो बहिः प्राकट्यमेवाभीष्टं, तदैवेश्वरवादोन्यदा शून्यवादः । एवं सति बुभुक्षाविषयस्य भक्तस्यानन्यभक्तिकृतो योन्तःसाक्षात्कारस्तस्य बहिष्ट्वमापादयन्ती माया व्यासक्तिभ्रमन्यायकं करोति । तादृशो यः साक्षात्कारः, सर्वात्मभावजन्यो भूमविद्यायां सर्वविधप्रत्ययविलक्षणतया सिद्धः, स एव विरहानुभवपदेन बोधितः । तदर्थं यः परित्यागः स एकादशस्कन्धे चतुर्दशाध्याये भगवता अत्यन्तं स्तूयते । किञ्च, विरहानन्तरभावी अनुभवो बहिः साक्षात्काररूपं सम्यग्दर्शनं, तदर्थं यः परित्यागः स भगवता प्रकर्षेण, 'यथा अधनो लब्धधने विनष्टे' इति सार्धद्वाभ्यां पञ्चाध्याय्यां स्तूयते, अतस्तदर्थं कर्तव्य इत्यायाति । एतयोराद्यस्य प्रशंसा व्युत्पाद्यते । तथा हि, 'वदन्ति कृष्ण श्रेयांसी'त्यादिना वैदिकोक्तसाधनानां भगवदुक्तभक्तेश्च तारतम्ये पृष्टे, भगवता 'धर्ममेके यशश्चान्य' इत्यादिना भक्तेः फलोत्कर्षं, 'अकिञ्चनस्य दान्तस्ये'त्यनेन स्वरूपोत्कर्षं, 'न पारमेष्ठ्य'मित्यादिभिरनन्यभक्तोत्कर्षं, 'निःकिञ्चना' इत्यनेन स्वसुखोत्कर्षं, 'बाध्यमानोपी'ति द्वाभ्यां स्वभक्तेर्बलवत्त्वं, 'यथाग्निः' साधयती' त्यनेन स्ववशीकर्तृत्वं, 'भक्तिः पुनाती'त्यर्धेन भक्तेरत्यन्तपावनत्वं, 'धर्मः सत्ये'त्यनेन धर्मादीनामतादृशत्वं चोक्त्वा, 'कथं विना रोमहर्षं द्रवता चेतसा विना । विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशय' इत्यनेन ऊर्जितां भक्तिं लक्षणैः परिचाययित्वा, ततो 'वाग्गद्गदा द्रवते यस्य चित्तं, रुदत्यभीक्ष्णं हसति क्वचिच्च । विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाती'त्यनेन विरहावस्थाव्यञ्जनपूर्वकं तादृशभक्तिमानत्यन्तं स्तूयते । अतस्तस्यां दशायां जातायां तदर्थं कर्तव्य इत्यर्थबलादायाति । तथा तत्रैव द्वितीयाध्याये कविनापि 'मन्येऽकुतश्चिद्भयमच्युतस्य' 'यानास्थाय नरो राज'न्नित्यादिभिर्भागवद्धर्मानुपक्रम्य, 'शृण्वन् सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके । गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसंगः । एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः । हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः । खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् । सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः । भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एक कालः । प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोनुघासम् । इत्यच्युताङ्घ्रिं भजतोनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः । भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षा'दित्यन्तेनोच्यते । एतत्सुबोधिन्यां च प्रथमस्कन्धीये 'नामान्यनन्तस्ये'ति नारदवाक्ये कर्मज्ञानभक्तीनां त्रयाणां फलसाधकत्वाभिप्रायानुक्तत्वो य

उक्तस्तत्स्वरूपमत्र कविनोच्यत इत्येवमवतार्यैते पञ्चश्लोका व्याख्याताः । तत्र प्रथमे 'आदौ गृहान्निर्गत' इति कथनेन त्यागावस्था बोधिता, भगवज्जन्मादिश्रवणं तद्गानं विचरणं लज्जा-भावश्च, अनुकल्पस्वरूपत्वेन बोधितः । ततो द्वितीये 'एवं व्रत' इत्याद्युत्तैरष्टधर्मैः प्रकृत्युल्लङ्घने-नालौकिकत्वरूपं लोकबाह्यत्वं बोधितम् । तेन विरहानुसन्धानावस्थैव स्फुटीकृता । ततस्तृ-तीये एवं विचरणकर्मणा लोकपरित्यागेन ज्ञानभक्ती एकहेलया युगपन्निरूपिते । तत्र खादिषु तथा-समुद्रान्तेषु लौकिकप्रत्यक्षविषयेषु प्रणमनक्रियाकर्मत्वं हरिशरीरत्वेनोच्यते । तेन तेषु साधन-त्वज्ञानमर्यादाक्षिप्यते । अत आक्षिप्तेन 'ज्ञात्वे'त्यन्तेन ज्ञानं 'प्रणमेदनन्य' इत्यनेन युग-भक्तिर्बोध्या । ततश्चतुर्थपञ्चमाभ्यां दृष्टान्तपूर्वकं परमभक्तिभगवज्ज्ञानतदितरविरक्तीनां तदनेन पद्यद्वयेन साक्षात्परमशान्तिरूपं फलमुक्तम्, तेनापि कर्मज्ञानभक्तीनां यत्परमं फलं सिध्य-मार्गाश्रितयानुकल्परूपेण परित्यागेन भवतीति तादृशत्यागप्रशंसैव सुबोधिन्युक्तप्रकारेण स्वीयाः तीति बोध्यम् । नन्वेवं सत्यत्र संन्यासवेशः कुतो नोक्त इत्यत आहुः स्वीयेत्यादि । स्त्री-पुत्रदारादयः तत्कृतो यो बन्धः, स्वस्य तेष्वासक्त्यभावेपि तेषां स्वस्मिन्याऽऽसक्तिस्तन्निष्ठ-स्यर्थं, अत्र अस्मिन्भक्तिमार्गीये संन्यासे, स वेशः, त्रिदण्डकौपीनधारणादिवेशः । न बान्यथा । चोवधारणे, अन्यथा तत्कृतबन्धाभावे सति, न च नैवापेक्षितः, अतो यस्य बन्ध-संभावना तस्य स वेश आवश्यको, नान्यस्येत्यसार्वत्रिकत्वान्नोक्त इत्यर्थः । ननु भगवदुक्तेषु प्रशंसावाक्येषु परित्यागो न प्रकटतया प्रतीयते, कविवाक्येषु च ज्ञानमिश्रभक्तेः प्रशंसा प्रतीयते । खं वायुमग्निमिति वाक्यात् । तथा सति शुद्धभक्तिमार्गीयस्य त्यागस्य प्रशंसा कथं निश्चेतुं शक्या, तत्प्रसिद्ध्यभावादित्याकांक्षायां तत्प्रसिद्ध्यर्थमाहुः **कौण्डिन्यो गो-पिकाः प्रोक्ता गुरव** इति । कौण्डिन्यो ह्यनन्तदोरकस्याग्नौ प्रक्षेपेणोत्पन्नादपराधाद् द्रा-रिद्र्यमापन्नः, स्वपत्न्याः शीलाया वाक्यादनन्तापराधजन्यं तद्बुद्ध्वा निर्विण्णोनन्तं ध्यायन् क द्रक्ष्यामीत्याशया गृहाद्वनं निर्गतो, निरशनं व्रतं ब्रह्मचर्यं च कृत्वा हरिं जपन् निर्जनेरण्ये चूतवृक्षं गोप्रभृतींश्चेतनानचेतनांश्च बहून् पप्रच्छ, तैः सर्वैरपि नानन्तोस्माभिर्दृष्ट इत्युक्ते विह्वलीभूतो जीविते निराशो दीर्घमुष्णं च निश्वस्य भूतले पपात, ततः किञ्चित्कालोत्तरं संज्ञां प्राप्यानन्तेति जल्पन् तस्मिन्क्षणे सुनिर्विण्णोऽभूत् । ततः कृपयाऽनन्तदेवोपि वृद्धब्रा-ह्मणरूपेण प्रत्यक्षीभूय 'इत एही' त्युक्त्वा पातालं प्रवेश्य, कौण्डिन्यं दक्षिणे करे गृहीत्वा स्वपुरीं दर्शयामास । तत्र दिव्यसिंहासनस्थितं स्वात्मानं च स्वायुधगरुडाद्युपशोभितं दर्शया-मास । ततस्तं दृष्ट्वा परया मुदा प्रसन्नः कौण्डिन्यः 'पापोहं पापकर्माहं पापात्मा पापसम्भवः । त्राहि मां पुण्डरीकाक्ष शरणं मे भवाच्युत । अद्य मे सफलं जन्म जीवितं च सुजीवितम् । यत्त्वांघ्रियुगांभोजे मन्मूर्द्धा भ्रमरायते'इत्युक्तवान् । भगवांस्तु तस्मै दारिद्र्यनाशनं धर्मं सनातनं विष्णुलोकं च वरं दत्तवानिति भविष्योत्तरे भगवता युधिष्ठिरं प्रत्युक्तम् । तेनायं परित्यागः स्त्र्यादिकृतबन्धाभावात् संन्यासवेषरहितः स्वफलसाधने साधनान्तरापेक्षारहितः

प्रसन्नध्येयसाक्षात्कारफलकः अवैधः शुद्धभक्तिमार्गीयश्चेति सिध्यति । अत एव वेदस्तुतौ 'एकदा नारदो लोका'नित्यत्र सुबोधिन्यामुक्तम् । 'एवमेव च परिभ्रमणं कर्तव्यं यथा कौण्डिन्येन कृत'मिति । गोपिकानां तु फलप्रकरण एव भगवत्प्राप्त्यर्थं सर्वपरित्यागः पूर्वमुक्तः । ततो मदमानाभ्यां भगवत्तिरोभावे भगवद्विचयनं, ततः प्रसादार्थं गानं, ततो दैन्येन रोदनं, ततो भगवत्प्रादुर्भावः, ततो भगवत्कृता तत्त्यागप्रशंसा, ततो लीलानुभव उक्तः, तत्रापि पूर्वंयदेव पेपराहित्यादिकं फलपर्यन्तं सिद्धम्, अतस्त एवात्रैतत्परित्यागप्रवर्तकत्वाद्गुरवः, तथा चैवं शास्त्रप्रसिद्धत्वात् । 'एव मदर्थोज्झिते'त्यादिना भगवता व्रजभक्तकृतत्यागस्य प्रशंसनाच्चैकादशस्कन्धीयप्रशंसाव्याख्यानामप्येतदारम्भावस्थासूचकतयैतत्प्रशंसायामेव तात्पर्यम् । तत्रापि द्वादशाध्याये'रामेण सार्धं'मित्यादिभिस्तत्कृतसाधनस्यैव प्रशंसनात्, उद्धवस्य तदर्थसन्देह एवाग्रिमग्रन्थावताराच्च । उचितं चैतत्, यदारम्भः प्रशस्तस्तस्य परमा काष्ठा प्रशस्तेति । अतस्तत्परैव सा प्रशंसा निश्चेयेत्यर्थः । अत्र कौण्डिन्यग्रहणं निरपेक्षभक्तानां बहुविधत्वात्तत्कृतपरित्यागार्थं बोध्यम् । एतत्प्रशंसायास्तद्वदर्शनात्, विरहोत्तरमाध्यनुभवार्थमात्रत्वेनैव विवक्षितत्वाच्च । एवं च यो यो यादृग्भक्तिमान् त्यागं चिकीर्षति तस्य तस्य तादृग्भक्ता एवेद्गवत्याक्ता गुरव इत्यपि बोधितम् । भगवदुद्धवसंवादसमाप्तौ अञ्जसा सिद्धिहेतुप्रश्ने 'देवासुरमनुष्येषु मद्भक्ताचरितानि चे'ति भक्तचरिताश्रयणस्य तथात्वेनोपदेशादिति । एतेषां गुरुत्वं च स्वचरितेनैतन्मार्गप्रवृत्तिप्रयोजकत्वाद्दत्तात्रेयगुरूणां पृथिव्यादीनामिव बोध्यमित्याशयेनाहुः **साधनं च तदिति** । एतेनोपदेशानपेक्षाप्यत्र बोधिता । अत्र विरहानन्तरभाविनां तत्कृतानां साधनानां बहुत्वात्तानि सर्वाणि कर्तव्यान्युत किञ्चिदेकमित्यपेक्षायां तत्सर्वप्रयोजकमादिभूतं यत्साधनमवश्यं विवक्षितं तदत्र कार्यतयेष्यत इत्याहुः **भावो भावनये**त्यादि । भगवति **परमा** रतिर्भावः । 'रतिर्देवादिविषया भाव इत्यभिधीयते' इति वाक्यात् । सोपि न स्वतः सिद्धो विवक्षितः,तस्य स्वाभाविकत्वात्, किन्तु **भावनया** निरन्तरचिन्तया **सिद्धः** प्रचितः तादृशस्यैव साक्षात्कारफलकतायाः साधनान्तरसाधकतायाश्च पूर्वोक्तोपाख्यानद्वयेपि सिद्धत्वात् । अतः स एव **साधनं, नान्यदिष्यते**, अन्यद्विचयनादिकं साधनत्वेन नेष्यत इत्यर्थः । ननु तस्यापि तत्र सत्वात् कुतः साधनत्वेन नेष्यते इत्यत आहुः **विकलत्वमि**त्यादि । जडेष्वयोग्येषु च प्रश्नो विकलत्वम् । तथा अस्वास्थ्यं प्रकृत्या स्थित्यभावः । एतद् द्वयं प्रकृतिः विरहावस्थास्वभावः । तत्रापि हेतुः **प्राकृतं न हीति** । प्रकृतिसम्बन्धि प्राकृतं, मध्यावस्थाप्राप्तं न दृश्यते, हि यतो हेतोः, तथा च यदि स्वस्थावस्थाहेतुकं स्यात्तदा साधनत्वेनेष्येत । अतस्तदभावान्नेष्यत इत्यर्थः । ननु तर्ह्येकादशस्कन्धे 'शृण्वन् सुभद्राणी'त्यादिश्लोकत्रयोक्तभगवज्जन्मकर्मश्रवणकीर्तनगानादयः सर्वत्र भगवच्छरीरत्वेन ज्ञानं च स्वस्थावस्थाजन्यात् साधनत्वेनेष्यन्तेऽन्यजानीयधर्मत्वादित्याकांक्षायामाहुः **ज्ञानमि**त्यादि । ज्ञानं

1. स्कन्धः ११

सर्वेस भगवच्छरीरत्वेन ज्ञानम् । गुणाश्च श्रवणकीर्तनगानविषया भगवद्गुणा अपि, **तस्यैव**
भावनाप्रचितभावस्यैव, **वर्तमानस्य** तदन्तःकरणादिषु व्याप्तस्य, **बाधकाः** वर्तमानता-
नाशकाः, यथायथं शुकादिषु मथुराप्रयातभगवद्वियुक्तविशोकगोपिकासु च दृष्टाः, अतो
नेष्यन्त इत्यर्थः । ननु तादृशज्ञानं साक्षात्कारफलकम्, गुणाश्च शोकाभावफलकाः, 'विशोका
अह्नी निन्यु'रिति वाक्यात् । अतः विरहानुभवस्वरूपबाधेपि को दोष इत्याकांक्षायां प्रथ-
मतः ज्ञानभावनयोः फलतारतम्यं व्युत्पादयन्ति **सत्ये**त्यादि । **संन्यासेन विशेषितात्**
सहकृतात् सर्वत्र ब्रह्मस्थितिबोधकात् परोक्षज्ञानात्, **सत्यलोके** चतुर्मुखलोके स्थितिः ।
'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले
परामृतात् परिमुच्यन्ति सर्वे' इति (तैत्तिरीय) श्रुतेः । अस्यां श्रुतौ वेदान्तविषयकनिश्चितपरो-
क्षज्ञानवतां संन्यासिनां शुद्धसत्त्ववत्त्वेन ब्रह्ममुक्तिकाले परामृतं प्राप्य मुक्तिरुक्ता । छान्दोग्ये
तु 'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति मरणानन्तरमेव भावनानुरूपं
पारलौकिकतात्कालिकफलं श्रावितम् । अतो यत्र पुरुषे **भावना साधनं तत्र तथा** तादृशमेव
**फलं भवेत्** । **च**ोवधारणे । तथा च ज्ञाने फलस्य भेदः कालस्य विलम्बश्च दोष इत्यर्थः ।

ननु 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्
कुरुते तथे'ति गीतावाक्यात् प्रबले ज्ञाने कर्मणां निःशेषनाशात् न कालविलम्बः । 'हरेः
शरीर'मित्युक्ततया ज्ञानस्य भगवद्विषयत्वाच्च न फलभेद इत्याशंकायामाहुः **तादृश** इत्यादिसा-
र्धम् । **तादृशः** प्रबलज्ञानवान् **सत्यलोकादौ** विद्युद्वरुणेन्द्रप्रजापतिलोकेषु तिष्ठत्येव, तत्र-
त्यभोगेन स्वप्रारब्धमपनयन्नातिवाहिकवैद्युतपुरुषागमनपर्यन्तं स्वप्रारब्धानुसारेण तिष्ठत्येव **न**
**संशयः** । परान्तकालप्रतीक्षाऽभावेपि वैद्युतपुरुषप्रतीक्षाया आतिवाहिकाधिकरणे सिद्धत्वात् ।
ज्ञानप्राबल्येपि तादृशस्य विलम्बे सन्देहो नेत्यर्थः । नन्विदं भावनापक्षेपि तुल्यमित्याशंकायामाहुः
**वह्नि**रित्यादि । अरणिमथनप्राबल्येन वह्निरिव भावनाप्राबल्येन यहिः प्रकटः स्वात्मा पुरुषोत्तमो
यदि वह्निवद्बहिर्व्याप्य पुनरन्तःप्रविशेत्, तदैव तस्मिन्नेव काले सकलो बन्धो बाह्य आभ्यन्तरश्च
**नाशमेति**, निवर्तते, **न चान्यथा** अन्यथा न निवर्तते एव । तथा च 'यदा सर्वे प्रलीयन्ते कामा
येस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्रुत्या तदानीमेव बन्धाभावस्य
फलाध्यायद्वितीयपादारम्भे 'वाङ्मनसि दर्शना'दिति सूत्रे विचारितत्वात् अन्तर्गृहगतगोपिकासु
तथैव दर्शनाच्चेति न भावनापक्षस्य ज्ञानतौल्यम् । अतो विलम्बापादकत्वात् ज्ञानं साधनत्वेन नेष्यत
इत्यर्थः । एतेन शुद्धभक्तिमार्गीयत्यागे ज्ञानमिश्रपक्षोपि निवारितः । तर्हि गुणानां तथात्वम-
स्त्वित्याकांक्षायामाहुः **गुणास्त्वि**त्यादि । **तुः** शङ्कानिरासे । श्रवणादिविषया गुणाः सङ्ग-
राहित्यात्, भावनासिद्धस्य भावस्याप्राबल्ये भगवतो बहिः प्राकट्याभावेन तत्सङ्गराहित्याद्दुःखे
विरहे जीवनार्थं भवन्ति । हि निश्चयेन । विशोकत्वान्यस्ये वप्तजीवनत्वान्ये च तथैव सिद्ध-
त्वात् । अतो विलम्बापादकत्वेन मध्यमाधिकारे ते उपयुज्यन्ते । अतो मुख्याधिकारे तेपि
साधनत्वेन नेष्यन्त इत्यर्थः । ननु यद्येवं गानादिविषयाणां गुणानामपि बाधकत्वम्, तर्हि

भाव्यमानस्य भगवतोपि विलम्बापादकत्वेन बाधकत्वं कुतो न स्यादित्यत आहुः **भगवा-**
**नित्यादि** । स हि फलरूपः, प्राप्तश्चेत् फलमेव जातं साधनस्य, अतः फलरूपत्वात् साध-
नावस्थानिवर्तकत्वेपि बाधकत्वेन नेष्यत इत्यर्थः । एतेन येषु बहिः प्राकट्योत्तरमन्तःप्रवेश-
स्तेषां सद्योमुक्तिः, येषु च बहिः प्राकट्यमेव, नान्तःप्रवेशस्तेषामिहैव लीलानुभव इति मुक्त्ये-
ष्वपि व्यवस्था सूचिता । तेन न कोपि कापि विरोध इति ध्येयम् । ननु यदि भगवान् फल-
रूपत्वान्न बाधकः, तदा फलरूपत्वादेव यथा विजने दर्शनार्थं यतमानाय नारदाय दर्शनं दत्वा
तिरोहितः सन् पुनर्दर्शनार्थं यतमानं तं प्रति 'हित्वावद्यमिमं लोकं गन्ता मज्जनतामसी'ति
स्वास्थ्यार्थं वाक्यमुक्तवान्, तस्य स्वास्थ्यं च कृतवान्, तथा अत्र कुतो न वक्ति? स्वास्थ्य
च कुतो न करोतीत्यत आहुः **स्वास्थ्येत्यादि** । स्वास्थ्यं च वाक्यं स्वास्थ्यवाक्यम्,
विभाषैकवद्भावः । स्वास्थ्यसहितं वाक्यं स्वास्थ्यवाक्यं तत्, भगवतः न कर्तव्यम्,
अर्हे तव्यः, कर्तुं योग्यं न भवति । तत्र हेतुः, **दयालुर्न विरुध्यत** इति । अयमर्थः ।
नारदो ह्यविपक्वकषायः परं शुद्धभाव इति तस्य स्वास्थ्यार्थं तिरोहित एव वाक्यमुक्तवान्,
स्वास्थ्यं च कृतवान् । प्रकृते त्वन्तर्गृहगतानामिवास्य बन्ध एव तत्कालं नाशनीयः । स
बन्धो यदि प्रारब्धकृतस्तदा भगवद्विरहजतीव्रतापभगवदाविर्भावजाश्लेषसुखाभ्यामेव निव-
र्तनीयः, भावस्यौत्कट्यात् । यदि तादृशेपि वाक्यं वदेत्, स्वास्थ्यं वा कुर्यात्, तदा सद्यो-
मुक्तिं विरुन्ध्यात् । अतो दयालुत्वान्न विरुध्यते । अयं कर्मकर्तरिप्रयोगः । तथा च स्वा-
स्थ्यवाक्यकरणमेव दयालुं विरुणद्धि । स्वयं तु दयालुर्न विरुध्यते । अतः परमकृपया स्वय-
मेव शीघ्रं बन्धनिवृत्तिं विधास्यन् तत् द्वयं न करोतीत्यतः स्वास्थ्यवाक्यं कर्तुमनर्हमित्यर्थः ।
ननु यद्येवं तर्हि 'वाग्गद्गदे'त्यादिना भुवनपावनत्वेन यः स्वयं प्रशंसितः, तादृशस्य स्वास्थ्या-
दिकमपि न करोतीत्याशंकायामाहुः **दुर्लभोयमित्यादि** । अयं सद्योमुक्तिसम्पादकः परि-
त्यागः तादृशस्यापि दुःप्रापः । तत्र हेतुः । **प्रेम्णा सिध्यति नान्यथेति** । तथा च ते
यद्यपि परमभक्ताः, तथापि सर्वज्ञत्वात् केचन पुष्टिमिश्राः, केचन गुणज्ञत्वान्मर्यादामिश्राः,
न तु शुद्धाः सदा प्रेमप्लुताः स्वरूपमात्रपराः । अतस्तादृगधिकाराभावात् करोतीत्यर्थः । एवमत्र
भक्तिमार्गीयत्यागे शुद्धद्वयस्य कथनेन फलविलम्बशैघ्र्यतात्कालिकफलकथनेन चावस्थाभे-
दादिसूचनादधिकारिभेदात् त्रैविध्यं निरूपितम्, स्वरूपं च सपरिकरं विचारितम्, प्रेमभेद एव
तत्र तत्र तादृगधिकारसम्पादक इति च साधितम् ॥ ७-१३½ ॥

अतः परं नन्वेकादशस्कन्धीयप्रशंसायाः भक्तिपरमकाष्ठारूपेऽस्मिन् दुर्लभे परित्यागे
पर्यवसन्नतायां प्रारम्भदशायामन्यस्य परित्यागस्य विलम्बवत्तया ज्ञानमार्गीयत्यागतौल्येन
विशेषाभावादविचारितत्यागेन विहाय विचारितो ज्ञानमार्गीय एव कर्तव्यः, किमनेन विचारेणे-
त्याशंकायां भक्तिमार्गीयप्रारम्भदशायां निःप्रत्यूहत्वं वक्तुं ज्ञानमार्गीयस्य सविघ्नतामनिविड-
म्बकतां च साधयन्ति **ज्ञानमार्गे इत्यादि** ।

ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥
ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।
ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥
अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।
पापण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥
सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ॥ १६½ ॥

तुः पूर्वोक्तशङ्कानिरासे । ज्ञानमेव मार्गो ज्ञानमार्गः । तत्र द्विविधोपि सन्न्यासी ज्ञानार्थमुत्तराङ्गं च यथा स्यात्तथा विचारितः । क्रियाविशेषणद्वयमेतत् । उत्तरतन्त्रे तृतीयस्य तुरीये पादे 'ऊर्ध्वरेतःसु च शब्दे हीति' सूत्रे विविदिषोर्ज्ञानोत्पत्त्यर्थतया जातज्ञानस्य फलानुभवप्रतिबन्धनिवारकत्वेनान्तरङ्गतया च कर्तव्यत्वेन निर्णीतः । परं सिद्धिः साक्षात्काररूपा जन्मशतैः, न तु शीघ्रम्, 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभ' इति गीतावाक्ये परोक्षज्ञानवतो 'वासुदेवः सर्व'मिति स्वप्रपत्तेर्बहुजन्मान्ते कथनात् । प्रपत्तिरपरोक्षं ज्ञानम्, तस्य विलम्बेन भवने हेतुं व्युत्पादयन्ति ज्ञानं चेत्यादि । ज्ञान गीतावाक्योक्तरीतिकसाक्षात्काररूपं साधनापेक्षम्, कर्मज्ञानभक्तिरूपं साधनं स्वोत्पत्तावपेक्षते । अत्र प्रमाणम्, यज्ञादिश्रवणात् निष्कामानामपि यज्ञकरणस्य 'अथाकाममयमान' इति श्रुतौ प्रतिपादनात्, तदेतत् 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति सूत्रे विचारितम्, ज्ञानं च न शमदमादिमात्रेण सम्पद्यते, किन्तु यथाश्रममाश्रमकर्मापि शमादिसहकारित्वेनापेक्षत इति सहकारित्वसूत्रे व्युत्पादितम् । अतः देशद्रव्यादिरूपसाधनवैगुण्येन विहितकर्मात्मकसहकारिशून्यैः केवलैः शमादिभिर्ज्ञानानुदयात् स विविदिषापादस्थोक्तः संन्यासः कलौ पश्चात्तापाय अनन्तरं खेदाय । तर्हि विद्वत्योक्तः कर्तव्य इत्यत आहुः नान्यथेति । अन्यथा विद्वत्प्रकारकः कलौ तत्साधनासम्भवान्नेत्यर्थः । किञ्च, न खेदमात्रं किन्तु पापण्डित्वं चापि भवेत् । भिक्षादिशुद्ध्यभावेनोपपर्मसंसर्गवत्त्वम्, चकारादपकीर्तित्वम्, अपि शब्दात्, 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महे'ति वाक्योक्तः पातः संगृह्यते । निगमयन्ति तस्मादित्यादि । यस्मात् विविदिषासंन्यासस्य कलौ खेदादिजनकत्वम्, विद्वत्संन्यासस्य चासम्भवस्तस्मात् ज्ञानमार्गे वैधसंन्यासं न कुर्यात्, तत्र हेतुः, सुतरामित्यादि इति स्थितमिति । कलौ संन्यासं निषेधः शास्त्रकारैरेव निर्णीतमित्यर्थः । तेन संन्यासप्रतिप्रसवभागं कस्यचित्सार सर्वेषां बुद्धिः ... इति बोधितम् । एवमत्र भगवदाज्ञया कर्तव्यस्य परित्यागस्य विचारणायामेतावत् सिद्धम् ।

कर्ममार्गे जैमिनिमते परित्यागस्याकर्तव्यता, मतान्तरे चातुराश्रम्यपक्षेण कर्तव्यतेति, भक्तिमार्गे कर्तव्यत्वेनोक्तत्वेपि श्रवणादिप्रसिद्ध्यर्थं कलौ संन्यासस्य निषेधादकर्तव्यता, तथा सन्यासत्वेन गृहत्यागरूपेण चाकर्तव्यता, तथेत खेदसाधनार्थ ... विरोधात्

करणेपि प्रेमानन्तरं त्वैधस्य परित्यागस्य स्वत एव सिद्धिर्मुख्याधिकारिणः । तत्र च नाज्ञापेक्षा, तथैव मध्यमस्यापि । परं तस्य प्रारब्धप्रतिबन्धेनेषद्विलम्बः फले । तथैव ज्ञानमिश्रस्यापि । ज्ञानमार्गे तु विविदिषादशायां विचारितोपि कलिकालजदोषसम्भावनान्न कर्तव्यः, विद्वत्सन्न्यासस्य तु कलिदोषेण ज्ञानासम्भवादसम्भव एव ॥ १४–१६½ ॥

अतः परं प्रेमारम्भदशायां परित्यागोवशिष्यते, तं विचारयितुं प्रश्नमुखेनाशङ्कते भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमिति ।

भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥
अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।
स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥
हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।
अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥
ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।
आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥
तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।
अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥

भक्तेः प्रेमरूपाया यो मार्गः उपायभूतः परित्यागस्तत्रापि कलिप्रभृतिभिः कृतो दोष उत्पद्यते चेत्तदा तत्परिहारार्थं किं कार्यमित्यर्थः । तत्रोत्तरमुखेन समादधते उच्यते । अत्रेत्यादि । अत्र प्रेमभक्त्यारम्भे आरम्भदशायां परित्यागे नाशः कलिप्रभृतिभिः कृतेन दोषेण तदपस्थातो हीनत्वसम्भवः स न स्यात् । तत्र हेतुः । दृष्टान्तस्याप्यभावत इति । अत्र नाशपदं सप्तम्या विपरिणतं पुनरन्वेति, तथा च अत्रारम्भे नाशेऽनुमीयमाने दृष्टान्तस्याभावात् अपिना दोषान्तराच्च, तथा हि उक्तारम्भदशायां गृहत्यागकर्ता नश्यति, तदानीं त्यागकर्तृत्वात्, अत्र यदेवं तदेवमित्यन्वयव्याप्तौ दृष्टान्ताभावः, व्यतिरेके तु यत्र यत्र तादृशत्यागकर्तृत्वे सति नाशाभावः, तत्र तत्र त्यागकर्तृत्वाभाव इति व्याप्तेरेव शून्यता, तादृशत्यागकर्तृत्वे सतीति विशेषणानङ्गीकारे तु तादृशव्याप्त्या गृहस्थादिष्वेवानाशसिद्ध्या तादृशत्यागकर्तृत्वस्यैवाभाव इति दृष्टान्ताभावः । यदि तु भक्तिमार्गीयारम्भदशायां तत्त्यागकर्तृत्वात् अपिपक्वकषायत्वाद्वा सङ्गदोषसंभवाद्वा श्रवणादिप्रसिद्ध्यर्थत्यागकर्तृवदित्यनुमातव्यम्, तदाप्यसङ्गतम्, नारदपूर्वजन्मदृष्टान्तेन आद्ययोः साधारणत्वात्, तृतीयस्य तु 'गायन्विलज्जो विचरेदसङ्ग' इति वाक्येन स्वरूपासिद्धत्वात् । पूर्वोक्तदशायां गृहत्यागकर्ता न नश्यति, पूर्वोक्तारम्भदशायां त्यागकर्तृत्वात्, पूर्वजन्मीननारदवदिति प्रत्यनुमानेन निरस्तत्वाच्च । न चाप्रयोजकम् । नारदपूर्वजन्मकथासन्दर्भीयवाक्यैस्ताभ्यां नाशस्यैवासिद्धत्वादिति । अनेनैव हेतुना नाशानुमाने तु सिद्ध एव दृष्टान्ताभाव इति सुष्ठूक्तं दृष्टान्तस्याप्यभावत

'ये वै
इति । किञ्च, अयं त्यागो हि भगवद्धर्मः । 'धर्मान्भागवतान् ब्रूते'ति निमेः प्रश्ने कविना
भगवता प्रोक्ता उपाया ह्यात्मलब्धये । अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान्' इति
लक्षयित्वा'कायेन वाचे'त्यादिभिः कथ्यमानेषु 'गायन् विलज्जो विचरेदसङ्ग' इत्यनेनासङ्ग-
विचरणरूपस्य त्यागस्यापि बोधनात् । भगवद्धर्मस्यारम्भेपि न ध्वंस इत्यपि भगवतैवोक्तं
'न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपी'ति । तथा चातोपि न नाश इत्यर्थः । न चैवं सति
श्रवणादिप्रसिद्ध्यर्थं कृते त्यागे कथं ध्वंस इति शंक्यम् । तस्यां दशायामज्ञानात्तत्करणेन
उपक्रमत्वाभावात् । 'ज्ञात्वारम्भ उपक्रम' इति कोशेन ज्ञात्वारम्भस्यैवोपक्रमत्वादिति । ननु
मास्तु नाशस्तथापि देहरक्षणार्थं भिक्षादेरावश्यकत्वात् फलविलम्बसम्पादको बाधः केन वा-
र्येतेत्यत आहुः स्वास्थ्येत्यादि । त्यागिनः स्वास्थ्यस्य हेतुर्हि विगर्हाभिन्नेषु चतुर्षु वर्णेषु भिक्षा
तस्यास्त्यागात् । 'चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः परभृतः सरितोप्य-
शुष्यन् । रुद्धा गुहाः किमजितोवति नोपपन्नान् कस्माद्भजन्ति कवयो धनदुर्मदान्धान्' इत्युक्त-
रीत्या त्यागात् । यद्वा, अत्र स्वास्थ्यहेतुपदं परित्यागविशेषणम्, परित्यागादिति ल्यब्लोपे
पञ्चमी । तथा च स्वस्मिन् तिष्ठतीति स्वस्थः स्वरूपावस्थित इति यावत् । तस्य भावः
स्वास्थ्यम्, तद्धेतुर्यः परित्यागस्तं प्राप्य जीवन्मुक्त एव जात इति । अस्यैतादृशस्य बाधः
केन सम्भवेत्, न केनापीत्यर्थः । नन्वेवमविद्याकामादीनां बाधकत्वाभावेपि कालादिभिर्बाधः
केन वार्येतेत्याकांक्षायां कैमुतिकन्यायेनाबाधमुपपादयन्ति हरिरित्यादि । हरिः स्मर्तुः
सर्वापद्दुःखहर्ता सोपि अत्रास्मिन् परित्यागे बाधां कर्तुं न शक्नोति । अस्य भगवद्धर्मस्य
स्वयमेवोक्तत्वात्, 'वक्ता कर्ता विना नान्यो धर्मस्याच्युत ते भुवी'ति वाक्येन स्वयमेवाव-
नाच । तथा सति अपरे कालादयः कुतो हेतोः कर्तुं शक्नुयुः । ते हि भगवदधीना इति
न तत्कृतोपि बाधसम्भव इत्यर्थः । अत्र तर्कमाहुः अन्यथेत्यादि । अत्र पुपुपुरिति अत्यन्ता-
पह्नवे लिङ्वक्तव्य इति वार्तिकाल्लिट् । तथा च स्वधर्मोत्पादको रक्षकश्च भगवानेव यदि
बाधां कुर्यात्, तदा मातरो जननीभ्यः बालान् स्वोत्पन्नान् यस्तन्यैः पुष्णन्ति, तत्र पुपुपुः,
ततश्च तत्कृतं पोषणमत्यन्तापह्नुतमेव स्यात्, तथा च भगवत्कृतो बाधस्वकादपि बाधित
इत्यर्थः । ननु भवत्वेवं, तथापि मोहनार्थं नियुक्ता या माया सा तु स्वकार्यं मोहं कुर्यादेव,
'ज्ञानिनामपि चेतांसि देवी भगवती हि सा, बलादाकृष्य मोहाय महामाया प्रयच्छती'ति
वाक्ये भगवत्प्रियतमस्य ज्ञानिनोपि तत्कृतमोहस्योक्तत्वादित्यत आहुः ज्ञानिनामित्यादि ।
'ज्ञानिनामपी'ति वाक्यं ज्ञानिनामपि वाक्यं उत्तरपदलोपी समासः । तथा चानेन मार्कण्डे-
यवाक्येन ज्ञानिनामेव मायाकृतो मोह उक्तो, न तु भक्तानां, अतः सा भक्तं न मोहयि-
ष्यति । गीतायां 'दैवी ह्येषे'ति वाक्ये भगवता तस्याः प्रपत्तितरणीयत्वकथनात्, उक्तनिष-
भक्तस्य च प्रपन्नत्वे सन्देहाभावात्, अतो दूरापास्तं मोहनमित्यर्थः । न चेति कारणाभावे
ज्ञानिनामिति पदस्य कथं वाक्यबोधकत्वमिति शंक्यम्, प्रश्निसाव्यायेषु 'यावद्भक्ते'ति
श्लोके'सर्वं विष्णुमयं गिर'इत्याचार्यैः श्रीधरेण च सर्वं विष्णुमयमिति पदद्वयस्येति व्याख्या-

वेपि 'सर्वं विष्णुमयं जग'दिति वाक्यप्रतीकतया अङ्गीकारेणात्रापि तथोक्तौ दोषाभावादिति। चाचामतेप्येवम्। किञ्च, अयं भक्तः आत्मप्रदः आत्मानं भगवते प्रकर्षेण सर्वसाहित्येन समर्पितवान्, न तु स्वार्थमात्मानमपि स्थापितवान्। तथा प्रियश्चायं भगवतः, 'यो मद्भक्तः स मे प्रियः' इति वाक्यात्। माया तु भगवतस्तद्भक्तेभ्यश्च जिह्रेति, 'विलज्जमानया यस्य स्थातुमीक्षापथेमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धिय' इति द्वितीयस्कन्धवाक्यात्। उक्तभक्तस्य तु न दुर्धीत्वम्, भगवति वद्धसौहृदत्वात्। नाप्यन्यत्रासक्तिः। अतः किमर्थं मोहयिष्यति। तथा चोक्तैर्हेतुभिः सापि न भक्तं मोहयितुं शक्तेत्यर्थः। एवमेतेन विचारेणास्यारम्भदशायामपि भक्तिमार्गीये त्यागे न पश्चात्तापादिदोषसम्भावनेति सिद्धम्। तद्वदन्त उपसंहरन्ति तस्मादित्यादि। यस्मादन्ये त्यागप्रकाराः सदोषाः असम्भविनश्च, मुख्यस्त्वाज्ञां नापेक्षते। तादृशभावप्रष्ठत्वप्रयत्नेन स्वाभाविकत्वात्। अतोऽयमेवाज्ञाविषयो भवितुमर्हति, तस्मात् उक्तप्रकारेण भगवतोद्धवं प्रत्याज्ञप्तेन प्रकारेण भक्तिमार्गीयः परित्यागो विधीयताम्, भक्तैः कर्तव्यः। अन्यथा उक्ताधिकाराभावेपि त्यागकरणे अधिकारसद्भावेपि तदकरणे च स्वार्थात् स्वस्य यः अर्थः प्रयोजनं विरहानुभवो भगवत्प्रसादश्च तस्माच्च्यवते, च्युतो भवतीत्यर्थः। अत्र स्वस्य निश्चयमाहुः इति मे निश्चिता मतिरिति। एवंप्रकारिका निश्चयवती मम बुद्धिरित्यर्थः। श्रीमदुद्धवकर्तृकश्च परित्याग एवंरूपस्तृतीयस्कन्धे चतुर्थाध्याये 'इहागतोहं विरहातुरात्मे'ति 'सोहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभो'रित्येताभ्यां बोधितः। तृतीयस्य चतुर्थे पादे 'वहिस्तूभयथापि स्मृतेराचाराच्चे'त्यधिकरणे विचारितश्च। तत्र हि प्रचुरभगवद्भावमात्रवतः साक्षात्स्वरूपभोगवतो वा गृहत्यागः कर्तव्यो न वेति संशये फलस्य सिद्धत्वान्नाद्यस्य कर्तव्यः। 'मद्वार्तायातयामानां न बन्धाय गृहा मता' इति वाक्यात् गृहाणां बन्धकत्वाभावेन द्वितीयस्यापि न कर्तव्य इति प्राप्ते आह 'वहि रित्यादि। उक्तपूर्वपक्षनिरासाय तुशब्दः। भावमात्रे साक्षाद्भगवत्सम्बन्धे चेत्युभयथापि वहिः गृहाद्बहिर्गमनम् गृहत्याग इति यावत्। [illegible] आवश्यकः। तत्र प्रमाणमाह 'स्मृतेराचाराच्चे'ति। 'त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु। मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गा'मित्यादि स्मृतिर्भगवद्भाववतास्त्मज्ञविशिष्टस्यापि बहिर्गमनमाह। तदाचारोपि तथैव श्रूयते, अतस्तथेति निष्कर्ष उक्तः। अयं च त्यागो नाश्रमधर्मरूपः, तस्य पूर्वं 'ऊर्ध्वरेतःसु च शब्दे ही'त्यत्र विचारितत्वात्। न चैवमस्यास्मिन्सूत्र उक्तत्वे विचारितत्वेनेति कुतो नोक्तमिति शङ्क्यम्। प्रकारस्यानुल्लेखेन तथात्वाभावात्। शुकभंवर्तादिकर्तृकस्य ज्ञानमार्गीयसार्वेयसन्न्यासस्यापि तथात्वाच्चेति ॥ १७-२१ ॥

एवं त्यागप्रकारं तत्कर्तव्यताप्रकारं च निरूप्योपसंहरन्ति इति कृष्णप्रसादेनेति।

इति कृष्णप्रसादेन वल्लभेन विनिश्चितम्।
संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥

एवं सर्वे प्राञ्च आहुः। मम त्वन्यत् प्रतिभाति, उपक्रमे परित्यागो विचार्येत इति कथनात्, उक्तश्लोके च परित्यागो विधीयतामिति कथनाच्च तत्रैवोपसंहारप्रत्यभिज्ञानात्, इति कृष्णप्रसादेनेति श्लोकस्तु तत्रैव विशेषान्तरस्य बोधनाय। तथा हि। आचार्याणां पुरःस्फूर्तिकविचारेण देहदेशपरित्यागविषयकभगवदाज्ञाद्वयाकरणाभिमानजनितखेदे सति यदा लोकपरित्यागविषयिणी तृतीयाज्ञा जाता, तदा तद्वाक्यार्थविचारेऽनेन प्रकारेण कृते भगवान् विशेषतः प्रसन्नो भूत्वा तस्य संन्यासरूपतामाचार्याणां मनसि स्फोरितवान्, तदेतदस्मिन् श्लोके बोधयन्ति इति कृष्णप्रसादेनेति। इति एवं पूर्वोक्तप्रकारेण परित्यागे विचारिते सति यः कृष्णप्रसादः पूर्वस्मादतिरिक्तः तेन कृत्वा वल्लभेन भगवत्प्रियेण मया भक्तौ भक्तिमार्गे संन्यासवरणं उद्धववत् संन्यासाङ्गीकरणं विनिश्चितं विशेषतो निश्चितम्। अन्यथा एवमाज्ञाऽभावे तत्करणे पतितो भवेत्। भक्तिमार्गीयधर्माणां संन्यासधर्माणां चेतरेतरविरुद्धत्वात् भक्तिमार्गतश्च्युतो भवेदित्यर्थः। विशेषनिश्चयस्तु, 'आहिताग्नेस्तु संन्यासो वैराग्यादुत्तरायुषि। यावज्जीवश्रुतेस्तत्र न विरोधः कथञ्चन। यजमानोऽग्निवचनाज्जरामर्याग्निहोमता। आत्मयागविधानाच्च द्रव्ययागविनिन्दनात्। श्रेयानित्यादिवचनादपुनर्भाववाक्यतः। न्यासो विधेयस्तत्रादौ प्रातर्हुत्वा यथाविधि। भार्यानुज्ञा तु नापेक्ष्या देवादारादिवाक्यतः। त्वं मह्येति च नापेक्ष्य पुत्राणां लौकिकत्वतः। आगूपचयनं कृत्वा जीवश्राद्धविधानतः। आभ्युदैवप्रकारेण श्राद्धान्यष्ट समाचरेत्। वर्गत्रयं प्रसिद्धं हि तत्र आत्मत्रयं मतम्। देहेन्द्रियप्राणदेवाः पञ्चमे देवता मताः। शिरःपाण्याद्यङ्गदेवा यन्तुदेवास्त्वगादिकाः। गोलाधिष्ठानदेवाश्च चक्षुराद्यास्ततः परम्। त्रिधाहङ्कृतिदेवाश्च रुद्रः सङ्कर्षणः शिवः। सप्तमे गुणदेवास्तु ब्रह्माद्या अष्टमे मताः। ततो दण्डत्रयं शिक्यं पवित्रं जलभाजनम्। पात्रं चेति समादाय तथा कार्पटिकाकृति'मित्यादिषु श्लोकेषु वर्तते। सर्वो ग्रन्थ उत्सन्नः, पूर्णो न लभ्यत इत्यत एते श्लोका न विलिख्यन्ते। अतस्तदुक्तप्रकारस्तत्तच्छास्त्रीयसंन्यासपद्धतिभ्योऽवगन्तव्यः। भगवता संन्यासस्य स्फोरणादेवाचार्यैस्त्रिदण्डसंन्यास एव कृतः। भार्यादिभिराज्ञायाः अदाने स्वपर्णशालाज्ज्वालनं प्रदर्श्य तैर्निर्गच्छत शीघ्रं निर्गच्छतेत्युक्ते करककौपीने गृहीत्वा निर्गताः। ततोऽग्निरपि शान्तः। ततो यथाविधि संन्यासं गृहीत्वा अरैलग्रामात् काश्यामागताः। मासमात्रं पानशनं कृतम्, दिनाष्टकं च मौनव्रतम्, तेन पूर्वाज्ञाद्वयस्य देशदेहत्यागो पाक्षिकदोषपरिहारेण कृतौ। तत आषाढशुक्लद्वितीयायां सिद्धिं गता इति प्राचां वाक्यादवगम्यते।

कर्मोपसंहृतिगतश्रुतिसूत्रगं यदद्योधितं भगवता निजभृत्यमुख्ये।
यच्चेतरच्चदुमृत्य च वाक्यजातं संन्यासनिर्णयमयं व्यवृणोत्तदीयः॥ १॥

इति श्रीपीताम्बरात्मजश्रीपुरुषोत्तमविरचितं विवरणं सम्पूर्णम्॥

१ नारायणेन्द्रतीर्थेन इत्यधिकं लीलाभट्टस्य पुस्तके नृगपुस्तके।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# संन्यासनिर्णयः ।

## श्रीविट्ठलेशात्मजश्रीवल्लभकृतविवृतिसमेतः ।

---

विचारितपरित्यागाः पश्चात्तापनिवृत्तये ।
प्रसीदन्तु सदा मह्यमङ्गीकृतपितृत्वकाः ॥ १ ॥

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

भक्तानां स्वहिताज्ञानेपि भगवांस्तेषां हितमेव सम्पादयतीति वस्तुस्थितिः । अतः साधनदशायां भक्तेन चिकीर्षितेपि परित्यागे तस्य पतनमाशङ्क्य तत्र विघातं करोति । ततो भक्तस्य तत्स्वरूपाज्ञानात् पश्चात् सेवानवसरे भावनादशायां तापो भवति, मया चिकीर्षितेपि महाफले परित्यागे भगवानविघातं करोति, अतो मयि न कृपेति मम फलसुखाधिकाराभावात् सर्वमेव व्यर्थमित्येवंरूपः। **तन्निवृत्त्यर्थं परित्यागः** केन कर्तव्यः, कदा कर्तव्यः, किं वा तस्य स्वरूपमित्येव **विचार्यते**, स्वमनस्येव युक्तिभिः परिशील्यते, तत्स्वरूपं पश्चात्ताय बोध्यते, न तु कर्तव्यत्वेनोपदिश्यते । साधनदशायां निषेधस्य फलदशायां च स्वकृत्य-साध्यत्वस्य वक्ष्यमाणत्वादित्यर्थः । भक्तिमार्गीयेण फलानुभवकाले कृतो देहेन्द्रियादिषु स्वीयत्वत्यागोधिकारिभेदेन पूर्वसिद्धतत्त्यागो वा परित्याग इति कर्तृकालस्वरूपाणां त्रयाणा-मुत्तरं भविष्यति, तज्ज्ञाने मम साधनदशापन्नत्वाद्भगवांस्तद्विघातं कृपयैव करोतीति स्वस्मिन् कृपाज्ञानेन पश्चात्तापनिवृत्तिर्भविष्यतीति भावः । युक्तिभिः स्वमार्गीयनिर्धारार्थं सामान्यतः सर्वनिर्णयमाहुः **स** इति । फलरूपभक्त्यनुभावार्थं च मार्गद्वये **विशेषतः प्रोक्त** इत्यर्थः । यद्यपि कर्ममार्गेप्याश्रमधर्मत्वेनोक्तः, तथापि यावज्जीववाक्यस्यापि विद्यमानत्वात् विशेषतो नोक्त इत्यर्थः ॥ १ ॥

कर्तव्यतायोधकवाक्येन पाक्षिककर्तव्यत्वमाशङ्क्य तदपि निराकुर्वन्ति **कर्मे**ति ।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

यावज्जीववाक्येन प्रत्यवायश्रवणात् पाक्षिकोपि दोषः परिहरणीय इति न्यायेन न
कर्तव्य इति भावः । वाक्यद्वयस्य रागारागभेदेन व्यवस्थायामपि कलौ तु 'अग्निहोत्रं गवा-
लम्भ'मित्यादिवाक्यैः प्रत्यक्षत एव निषेधाद्देशादीनां दुष्टत्वाच्च न कर्तव्य एवेत्याहुः सुतरा-
मिति । स्वस्य भक्तिमार्गविचारकत्वात्तन्मार्गीयकर्तव्यतामेव विचारे हेतुत्वेनाहुः अत इति ।

तत्रापि साधनदशायां निषेधमाहुः श्रवणादीति ।

श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

एतेषां साधनरूपाणां प्रकर्षेण गेहीयानामनुकूलत्वेपि कदाचित् स्वासक्तिसम्पादनेन प्रति-
बन्धकानामसंसर्गेण सिद्ध्यर्थं कर्तव्य इति चेत्? स परित्यागोस्माभिर्नेष्यते, इष्टफलासाधक-
त्वादित्यर्थः । प्रतिकूले तु त्याग उचित एवेति भावः । तद्विशदयन्ति सहायेति । श्रवणे
सहायभूतो यस्तादृशानां सङ्गस्तत्साध्यत्वात् श्रवणादीनामिति शेषः । एकाकिनस्तदसम्भवात्
ग्रन्थावलोकनादिना स्वत एव शक्तितात्पर्यनिर्धारसम्भवे दोषान्तरमाहुः साधनानामिति । पु-
स्तकादीनामित्यर्थः। तावत्स्थापनेपि परित्यागो न सिद्ध इति भावः। अत एव 'ग्रन्थान् नैवाभ्यसेत्
बहू'निति वाक्यम् । यत्किञ्चिद्ग्रन्थाभ्यासस्तु पुस्तकं विनापि भवतीति बहूनित्युक्तम् । एवं स्वरू-
पासाधकं दोषद्वयमुक्तमित्यनयोः समुच्चयेनैकरूपत्वबोधनार्थं चकारः। फलसाधकं दोषद्वयमाहुः
अभिमानादिति । भूयोभ्यासेन प्रतिभोत्पत्तौ पुस्तकादिरूपसाधनत्यागेपि अन्तःकरणाशुद्ध्या
अहं ज्ञानीत्यभिमानो भवेत् । ततो मुख्यफलासिद्धिः । तीर्थादिभिरन्तःकरणशुद्धावभिमानाभावे
दोषान्तरमाहुः नियोगादिति । नियोगो विधिस्तस्माद्धेतोरित्यर्थः । मुख्यफलस्य निष्प्रपञ्चत्वा-
द्विहितत्वेन कृतेन त्यागेन न तत्सिद्धिरिति भावः । एवं फलासाधकं दोषद्वयमुक्तमिति चकारः ।
मुख्यदोषमाहुः तद्धर्मैरिति । तस्य भगवतो भजनकर्मणो धर्मैस्तनुवित्तजसेवारूपैर्विरोधात् ।
त्यागे सति तादृशसेवाऽसम्भवादित्यर्थः । तथा च फलरूपाया मानस्याः पूर्वोक्तदोषैरसिद्धिः ।
तनुवित्तजायाश्च त्याग इत्युभयभ्रंश इति भावः । नन्वेवं सति सेवाश्रवणादिसाधकस्थापनेन
भार्यादेरनुकूलत्वेपि स्वासक्तिसम्पादनरूपपाक्षिकदोषसद्भावेन बाधकत्वात् पाक्षिकोपि दोषः
परिहरणीय इति न्यायेन त्यागः कर्तव्य इत्याशङ्क्य निषेधन्ति गृहादेरिति । भार्यादेरित्यर्थः ।
साधनार्थमिति । अन्यत्रानासक्त्या सेवाश्रवणादिसम्पादनार्थमित्यर्थः । तादृशैरिति ।
रागिभिः स्वस्मिन्नासक्तिसम्पादकैरित्यर्थः । नान्यथेति । अतिविरक्तैरित्यर्थः । तादृशैरुच्छृङ्खलैः

सेवाश्रवणादिकमपि न सिध्येदिति भावः । ननु ते कीदृशा अपि भवन्तु, स्वस्य किं दूषणमित्यत आहुः स्वयं चेति । ते विषयाक्रान्तास्तत्सङ्गात् स्वयं च तदीयैर्विषयै रूपादिभिराक्रान्तो लुब्धः सन् पाखण्डी वेदविरुद्धविषयभोगकर्ता भवेदित्यर्थः । ननु दृढचित्तः कथमेवं भवेदित्यत आहुः कालत इति । कलिकालस्यादार्ढ्यसम्पादकत्वादिति भावः । साधनदशायां कालस्य प्रबलत्वान्निश्चितमेव स्यादिति पक्षान्तरनिरासकस्तुशब्दः । भार्यादिसद्भावे विषयाक्रमणेऽपि पाखण्डित्वं तु न भवेदिति भावः । ननु निषिद्धविषयाक्रमणे भवतु नाम वेदमार्गविरोधः, स्वमार्गीयफलस्य तु निष्प्रत्यूहत्वात् तत्र किं बाधकमित्याशङ्क्य स्वमार्गविरोधमप्याहुः विषयेति । स्वकीयैरनिषिद्धैर्विषयैरन्तःकरणमेवाक्रान्तं भवति । तदपि देहेन्द्रियप्राणानामनाक्रान्तत्वात् तैः सेवाश्रवणादिकरणं निवर्तेत । तदा नित्यभगवदावेशो भवेत् । परकीयैर्निषिद्धैस्तु दुर्लभत्वेन निरन्तरभावनया दृढैर्दुरदृष्टजनकैः प्रातिलोम्येन देहपर्यन्तमाक्रान्तं भवति । तथा च देहपदेनेन्द्रियप्राणान्तःकरणानामाक्रमणं कैमुत्येन सूचितम् । तादृशानां सर्वस्यापि सङ्घातस्य विषयाक्रान्तत्वेन सेवाद्यसम्भवात् तैर्निपं यान्तीति व्युत्पत्त्या निपयैर्मृत्युरूपं दुःखमेव भवेत्, न तु दुःखहर्तुरावेशेनामृतरूपभगवदानन्द इति भावः । सर्वदेति । एवमपि गुणगानादिना तत्काले कदाचिद्भगवदावेशो भवेदपि, न तु सर्वदा । तादृशस्तु कादाचित्कत्वेनागन्तुकत्वादसमर्थ इति भावः । उपसंहरन्ति अतोऽत्रेति । अतो भगवदनावेशादेव हेतोरत्र मार्गे साधनभक्तिसिद्ध्यर्थं परित्यागो न भगवदानन्दप्रापकः, किन्तु मृत्युरूपदुःखप्रापक इत्यर्थः ॥ ३–६ ॥

द्वितीयदलानुभवाय फलानुभवकाले त्यागाभ्यनुज्ञामाहुः विरहेति ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
*सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।*
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।
बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोऽयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३½ ॥

पूर्वसंयोगव्यावृत्त्यर्थं तुशब्दः । सुप्तप्रबुद्धन्यायेन । तदनन्तरं जातस्तु संयोगो विर-हाभिन्न एव, तदर्थं परितस्त्यागो देहेन्द्रियादीनामप्यननुसन्धानरूपः । प्रकर्षेण गुरूपदेश-भार्याभ्यनुज्ञादिव्यतिरेकेणैव फलसाधकत्वेन शस्यते । तर्हि वेषोपि तथा न स्यादित्यतस्त-प्रयोजनमाहुः स्वीयेति । बहिस्तथावेषाभावे स्वीयानां भार्यादीनामन्तःकरणबन्धो वासनारूप एतस्मिंस्तिष्ठेदेव, वेषे तु कृते अयमस्मदुपयोगानर्ह इति ज्ञानेन स्वीयानां वासना एतस्मान्निवर्तेतेति तदर्थं स त्रिदण्डिवेषोत्र मार्गे शस्यते इति पूर्वेणान्वयः । न चान्यथेति । फलार्थं चकारात् साधनसिद्ध्यर्थं च नेत्यर्थः । ननु गुरूपदेशाभावे 'यस्त्वि-च्छया कृतः पुम्भि'रिति वाक्याद्धर्माभासत्वेनाधर्मवत्त्वमेतस्य स्यादित्यत आहुः कौण्डिन्य इति । कुण्डिने भवा कौण्डिनी, आद्यमहिषी । तत्प्रधानत्वात् तस्या एव सर्वत्राविष्टत्वात् सर्वा एव महिष्यः कौण्डिन्यः । तथा च कौण्डिन्यो गोपिकाश्चेति वाचिककायिकतिरोधान-द्वयजनितद्विविधविरहानुभवविशिष्टं गुरुद्वयमित्यर्थः । तथा च तयोर्नियामकत्वान्न स्वेच्छाकृति-रूपो दोषः । ननु तत्कृतोपदेशासम्भवात् कथं गुरुत्वमत आहुः साधनं चेति । तत् एत-द्वये निरन्तरभावनया सिद्धं स्थायिभावरतिरूपं क्रमेण तिरोधानद्वये वचनैः स्वरूपेणोत्कटं सत् साधनम् । चकारात् फलमपि तत्र सिद्धो विरहानुभव एव । तथा च साक्षादुपदेशा-भावेपि साधनफलबोधकत्वात् गुरुत्वमिति भावः । नन्वेवं साधनसाध्यत्वे 'नायमात्मे'ति वाक्यविरोध इत्यत आहुः भाव इति । भावनया चर्वणया सिद्धं स्थायिभावरतिरूपं विरहानु-भवस्य साधनं वरणादन्यत्प्रवचनादिरूपं नेष्यते, किन्त्विदं सर्वं वरणान्तःपात्येवेति न पूर्वोक्त-वाक्यविरोधः । ननु विरहे विकलत्वास्वास्थ्याभ्यां दुःखानुमानात् कथं फलत्वम्? आनन्दस्यैव फलत्वादित्यत आहुः विकलत्वमिति । एतद्द्वयमन्तःस्थितस्य विरहात्मकस्यानन्दरूपस्य भगवत एव प्रकृतिः स्वभावो धर्म इति यावत् । न त्वानन्दतिरोभावेन दुःखरूपायाः प्रकृतेर्धर्म इत्यर्थः । तादृशे दुःखधर्मत्वं नोचितमिति हिशब्दः । एवं सर्वदा द्वितीयदलानुभवे पूर्वदला-ननुभवात् पूर्णरसानुभवो न भवेदतः पूर्वदलानुभवमाहुः ज्ञानमिति । ज्ञानं 'तद्दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धन'मित्यत्रोक्तं प्रेमबन्धनदर्शनम्, गुणा ऐश्वर्यादयश्च क्रमेण तस्यैवं वर्तमानस्य गुरुद्वयस्य बाधकाः, पूर्वानुभवं बाधित्वा पुनः संयोगरसानुभावका इत्यर्थः । तत्र प्रकारमाहुः सत्येति । ज्ञानात् तत्पूर्वोक्तात् सत्यस्याक्षरब्रह्मणः श्रीवत्सस्य लक्ष्म्याश्च लोके विशाले स्थाने वक्षसि स्थितिः 'आश्लिष्य बाहुना राज'न्नित्यत्रोक्ता भवति । नन्वेवं प्रकारं ज्ञानं तु पूर्वमप्यासीदतः कथं पूर्वं तिरोभावसम्पादनमत आहुः संन्यासेनेति । सम्यक् न्यासेन विरहे देहेन्द्रियाद्यननुसन्धानेन विशेषितं प्रेमबन्धनज्ञानं जातमित्यर्थः । नित्यज्ञानवत्त्वेपि रसमार्गस्थस्य भगवतो रसमर्यादयैव ज्ञानोद्बोध इति सिद्धान्तात् । नन्वेतादृशज्ञानस्य सत्यलोकस्थितिरूपस्य फलस्य चाद्यमहिष्यामेवोक्तत्वात् कथं सर्वासां गुरुत्वमित्यत आहुः भावनेति । पूर्वोक्तं भावसाधकभावनारूपं साधनं तथा आद्यमहिषी-सदृशं यत्र भक्तेषु भवेत् फलं चकारात् तत्साधनं भावश्च तथा पूर्वसदृशं विरहानु-

भवरूपं यत्र भक्तेषु भवेत् तादृशा भक्ताः महिषीरूपाः सत्यलोके आदिपदेन 'तामुत्थाप्य चतुर्भुज' इत्यत्रोक्तोत्थापनकेशसमूहनवक्त्रमार्जनादिना भुजादिषु च तिष्ठन्त्येव, तावत्सिद्धौ तावदपि युक्तमेवेत्येवकारः । तत्रै'वायान्त्यासामपी'त्यतिदेशादत्र संशयो न कार्य इत्याहुः न संशय इति । ननु पूर्वमपि संयोगस्य विद्यमानत्वात् कथं विरहानन्तरं जातस्यैव फलत्वमत आहुः बहिरिति । स्वस्य भक्तस्यात्मा भगवान् वाचिकतिरोधानलीलया बहिः प्रकटो भक्तस्वरूपाद्बहिर्भूतो भिन्नश्चेत् सन् पुनर्भक्तस्वरूपे प्रविशेत्, सत्यलोकादौ तत्स्थापनेन तत्प्रत्यङ्गेषु संयुज्य स्थितो भवेत्, तदैव सकलो देहेन्द्रियादिषु वासनारूप आध्यात्मिकोऽपि बन्धो नाशमेति, नान्यथा तिरोभावातिरिक्तप्रकारेण न भवतीत्यर्थः । विरहेतितापेन देहेन्द्रियाननुसन्धाने सर्वांशेन तद्वासनानिवृत्तिः, तदनन्तरं संयोगेऽप्याध्यात्मिकाविद्याया निवृत्तत्वाद्देहेन्द्रियादिकमात्मा च भगवदीयत्वेनैव प्रियो भवति, भगवानपि भगवत्त्वेनैवेति मुख्यो निरोधो सिद्धो भवतीति पूर्वसंयोगेऽप्याध्यात्मिकबन्धस्य विद्यमानत्वान्न तस्य फलत्वम्, किन्त्वस्यैव निरोधस्यैव फलत्वादिति भावः । तत्र दृष्टान्तः वह्निवदिति । यथा वह्निर्मथनेन काष्ठाद्बहिर्भूतः सन् पुनः काष्ठे यदा प्रविशति तदा काष्ठांशं निवर्तयति तथेत्यर्थः । एवं वाचिकतिरोभावे वचसोत्कटेन भावेन विरहानुभवः, ज्ञानेन संयोगानुभवः पुनरेवमिति पौर्वापर्येण दलद्वयानुभव एव, नान्यापरस्येति प्रथमगुरौ साधनं फलं चाभिहितम् । द्वितीयगुरौ कायिकतिरोभावे स्वरूपेणोत्कटेन भावेन विरहानुभवः, गुणैः संयोगानुभवः, संयोगेऽपि न विरहबाधः, विरहेऽपि न संयोगबाध इति सार्वदिकशबलितरसानुभव इति । ततोऽपि विशिष्टं साधनं फलं चेत्यभिप्रेत्य पुनः पूर्ववद्दलानुभवे साधनं दलस्वरूपं चाहुः गुणास्त्विति । पूर्व गुरौ ज्ञानं सर्वांशेन विरहं बाधित्वा संयोगानुभावकमुक्तम्, न तथा गुणा अत्रेति तुशब्दः । किन्त्वेकांशेन विरहं बाधित्वा संयोगानुभावका इति । मद्रहित्याद्देहेन्द्रियादिभिर्यः सङ्गस्तद्राहित्यात्तत्तिरोभावाद्धेतोः स्वयमेव देहेन्द्रियादिरूपा भूत्वा फलानुभवाय जीवनसम्पादनार्थं साधनरूपा भवन्ति । न तु सर्वथा विरहबाधिका इत्यर्थः । विरहेणात्युपमर्दिना देहेन्द्रियादितिरोभावे भगवद्गुणा एव तद्रूपा भूत्वा तत्र स्थिता इति चतुर्थाध्याये निरूपितम् । अत एव पञ्चमाध्यायेऽपि गुणरूपा एव ता इति निरूपितम् । तथा च सङ्गमेऽपि विरहे इवात्युत्कटदिदृक्षासत्त्वेन न सर्वथा विरहबाधः । अत एव सङ्गमेऽपि 'दिदृक्षितदृशोऽभ्यगम'न्निति वाक्यम् । विरहेऽप्यान्तररमणाच्च सर्वथा संयोगबाधः । अत एव 'वर्णयन्त्यो मिथो गोप्यः रमिंग्यस्तु तच्चित्ताः' । 'निशोक्ता अहनी निन्यु'रित्यादिवाक्यानि । एवं शबलितरसानुभवः सर्वदा, न तेनान्तरबाधः । अत्र कदाचिद्दिदृक्षापूर्तिप्रलापादिभावा अपि जायन्ते । उद्धवोपदेशानन्तरभावे तु भगवदैव तयेति तम्यात्यन्तिकत्वम् । ननु विरहभावस्य प्रबलत्वाद्दुर्भेद्यबाधासम्भवेऽपि भगवान् स्वभक्तेन तदाऽनवबाधकः स्यादित्याशङ्क्याहुः भगवानिति । भगवानुभय फलरूप इति स्वरूपतो नैकतरबाधक इत्यर्थः, किन्तु वाक्यं स्वास्थ्यजनकं विरहभावनिवर्तकं 'मया परोक्षं भजता तिरोहितं'मित्यादिरूपं वदति । तादृशं वाक्यं तु एताभिर्न कर्तव्यं न मन्तव्यं, 'स्वागतं व' इत्यादि-

वाक्यवत् । एतासां स्वरूपमात्रनिष्ठत्वाद्वाक्यैः पूर्वभावोपमर्दो न भवतीत्यर्थः । ननु दलयोरुभयोर्विरुद्धत्वादेकदैवोभयदलरूपो भगवान्मर्यादया विरुध्यत इत्यत आहुः दयालुरिति । भगवानेतासु दयालुरतो दयया शबलितपूर्णरसदित्सया मर्यादामप्यतिक्रम्य लीलां करोति । अतो न विरुध्यते,' विरोधविषयो न भवतीत्यर्थः । ननु विरहभावात् पूर्वम'प्यात्मारामोप्यरीरम'दिति प्रकारकभावस्य जातत्वात्तदैव देहेन्द्रियादितिरोभावरूपः परित्यागः कुतो न सम्पन्न इत्यत आहुः दुर्लभ इति । अयं पूर्वोक्तः परित्यागो दुर्लभः, दुःखेन वियोगात्मकेन लभो लाभो यस्य तादृशः । तत्र हेतुः । प्रेम्णा भावनासिद्धेन रत्याख्येन सिध्यति, नान्यथा, प्रकारान्तरेण न सिध्यति । तादृशप्रेमौत्कट्यं तु विरहात्मकदुःखे एव भवति । अतो दुर्लभत्वान्न वियोगात् पूर्वं तत्सिद्धिरित्यर्थः ॥ ७–१३½ ॥

ज्ञानमार्गीयं निरूपयन्ति ज्ञानमार्गे त्विति ॥

**ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥**
**ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।**
**ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥**
**अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।**
**पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥**
**सुतरां कलिदोषाणां प्रबलत्वादिति स्थितिः ॥ १६½ ॥**

भक्तिमार्गीयोस्माभिर्विचारितः, ज्ञानमार्गीयस्तु प्रमाणगम्यत्वात् तैर्विचारित एव । अस्माभिस्त्वनूद्यते, परप्रीतिविभेदज्ञापनाय तुशब्दः । विविदिषाविद्वद्भेदेन द्विविधोपि प्रमाणैर्विचारितः । साधनमपि विचारितमित्याहुः ज्ञानार्थमिति । भक्तिमार्गीयेण त्यागेन विरहानुभवार्थं साधनत्वेन भावः पूर्वमुक्तः । ज्ञानमार्गीयेण 'यदहरेव विरजे'दिति प्रकारेण त्यागेन आत्मापरोक्षरूपज्ञानार्थं साधनत्वेन उत्तरं मुख्यमङ्गं श्रवणं, तदपि विचारितं 'आत्मा वारे द्रष्टव्य' इति वाक्यादित्यर्थः । पूर्वस्मादेतस्य वैलक्षण्यमाहुः सिद्धिरिति । परमत्र जन्मशतैरनेकजन्मभिः सिद्धिर्भवति, तत्र तु न विलम्बः, 'बहूनां जन्मनामन्ते' इति वाक्यादिति भावः । नन्वाद्युभयप्रकारेण कृते कर्ममार्गीयेपि संन्यासे तुरीयाश्रमे ज्ञानमेवाभिहितम् । अतो विशेषाभावात् कर्ममार्गीयोपि कुतो न कर्तव्य इत्याशङ्क्य मार्गद्वयीयज्ञानयोर्भेदार्थं कर्ममार्गीयज्ञानस्वरूपमाहुः ज्ञानं चेति । ज्ञानमार्गे पश्चात्प्रकारेणाधिकारिदेहस्य सिद्धत्वाज्ज्ञानमस्मिन्नपि जन्मनि साधनानपेक्षम्, श्रवणरूपं तु साधनं फलनान्तरीयकत्वात् फलाङ्गमेव, अत एवोत्तराङ्गमित्युक्तम् । कर्ममार्गीयं तु ज्ञानमस्मिन्नपि जन्मनि साधनापेक्षम्, गार्हस्थ्ये यज्ञादयः कर्तव्या इति श्रवणाद्वेतोर्मतं सम्मतमित्यर्थः । चस्त्वर्थे, पूर्वज्ञानव्यवच्छेदाय । अतः साधनाधीनत्वात् साधनानां कलौ देशादिदोषेणासिद्धत्वाच्चित्तशुद्ध्यभावेन ज्ञानानुदयान्मया वृथैव परित्यागः कृत इत्याकारकपश्चात्तापाय स कर्ममार्गीयः संन्यासो

भवेत् । **नान्यथेति** । ज्ञानभक्तिप्रकारकस्तु साधनानपेक्षत्वात्तथा न भवेदित्यर्थः । न केवलं पश्चात्तापमात्रं किन्तु दोषसम्बन्धोऽपि भवेदित्याहुः **पाषण्डित्वमिति** । चित्तचाञ्चल्याद्वेदविरुद्धकार्यकर्तृत्वमपि भवेत् । कदाचिद्दोषाभावेऽपि पाक्षिकदोषसम्भावनाया विद्यमानत्वात् फलसिद्ध्यभावाच्च न कर्तव्य इति चकारः । पूर्वोक्तपश्चात्तापसमुच्चयार्थमपिशब्दः । तस्माद्धेतोर्ज्ञाने साधनापेक्षज्ञानसिद्ध्यर्थं न संन्यसेत्, संन्यासं न कुर्यादित्यर्थः । ननु कालदोषा इव कर्माणि प्रमाणसिद्धमतः कालेन कथं कर्मबाध इत्यत आहुः **सुतरामिति** । कलिदोषाणां सुतरां कर्मापेक्षयापि प्रबलत्वात् । काले कर्मविधाने कर्मणः कालाधीनत्वात् कालस्य कर्मापेक्षया प्रबलत्वम् । 'रस्म्यनुसारी'त्यारभ्य 'योगिनः प्रति स्मर्यते स्मार्ते चैते' इति सूत्रेण कर्मणि कालबाधस्य व्यवस्थापितत्वादिति **स्थितिरित्युक्तम्** ॥ १४–१६ ॥

ननु तत्र तु ज्ञान एव कालानपेक्षोक्ता । अतः कर्मणीव भक्तावपि कालबाधः प्राप्त इत्याशङ्क्य तत्समाधानमाहुः **भक्तिमार्गेपीति** ।

**भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥**
**अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।**
**स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥**
**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**
**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियस्यापि किमर्थं मोहयिष्यति ॥ २० ॥**
**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

किं कार्यं, भक्तिमार्गेणैव स्थेयं, तं मार्गं परित्यज्य ज्ञानमार्गो वा आश्रणीय इत्याशङ्कायां समाधानमुच्यते । व्यासस्य ज्ञानावतारत्वेन ज्ञानरूपत्वात्तन्मार्गसमाधानं व्यासैरुक्तम् । अस्माकमास्यत्वेन भक्तिरूपत्वाद्भक्तिमार्गसमाधानमस्माभिरुच्यते इत्यर्थः । तत्र ज्ञानमार्गे फलदशायामेव बाधाभाव उक्तः । अत्र तु साधनदशायां फलदशायां च तथेति ततोऽपि वैशिष्ट्यबोधनार्थं पूर्वं साधनदशायां बाधाभावमाहुः **अत्रेति** । **आरम्भे** साधनदशायामित्यर्थः । बाधो हि स्वरूपतः फलतः साधनतश्चेति । तत्र प्रथमं स्वरूपतस्तदभावमाहुः **न नाशः स्यादिति** । भगवतः सर्वतः प्रबलस्य रक्षकत्वाच्च भवत्येवेति स्यादिति निर्दिष्टः । फलतस्तदभावमाहुः **दृष्टान्तस्येति** । कालदृष्टो यः अन्तः फलं तस्याभावात् । स्वर्गादेर्हि फलं कालेन नाश्यते, इदं तु फलं कालातीतम्, अतः कथं फलनाशद्वारा श्रवणादिसाधननाशः कालेन कर्तुं शक्यतेत्यर्थः । साधनतस्तदभावमाहुः **स्वास्थ्येति** । स्वास्थ्यनाशस्य निवृत्तत्वात् स्व कालस्य तस्य श्रवणादीनां नाश इति यावत् । सर्वमेव नष्टं स्यात् कालस्य भवति । तादृशनाशस्य हेतुर्विषयादिः । विषयोपाधिकत्वेन श्रवणादिक नाश-

स्थितस्य हेतोर्विषयादेः परित्यागात् नाशस्य स्वास्थ्यस्य
प्रतियोगि भवति, न तु भगवदीयम्, स्वास्थ्यस्य नाशस्य हेतोर्विषयादेः परित्यागात् स्थितस्य
च भगवति समर्पणादित्यर्थः । भगवदीयो विषयस्तु स्थितोपि कालेन नाशयितुमशक्य
इति साधनतोपि नाशाभाव उक्तः । अतः प्रकारत्रयस्याप्यभावादस्य साधनभूतश्रवणादेः
कालकृतो बाधः केन प्रकारेण सम्भवेदित्यर्थः । फलस्य तु बाधः सम्भावयितुमपि न शक्य
इति तत्र कैमुत्यमाहुः हरिरत्रेति । दुःखहर्तृत्वेन सर्वात्मना विरहं बाधितुमुचितोपि तद्भा-
वस्यापि भगवद्रूपत्वेन प्रबलत्वात्तद्बाधां कर्तुं न शक्नोतीत्युक्तम् । अपरे कालादयः कुतो
हेतोः करिष्यन्ति, एकांशेनापि बाधहेतुभूतयोर्ज्ञानगुणयोरपि कालाद्यतीतत्वात् कुतो हेतोरि-
त्युक्तम् । भगवान् संयोगं पुनरनुभावयितुं तं भावमेकांशेन ज्ञानगुणाभ्यां बाधयति, सर्वां-
शेन तु बाधनेऽशक्तः । कालादयस्तु बाधहेतोः संयोगरूपफलस्य ज्ञानगुणरूपस्य साधनस्य च
स्वागम्यत्वात् कुतो हेतोरेकांशेनापि बाधितुं शक्नुवन्तीत्यर्थः । एवं भगवतोऽशक्तौ स्वरूपमेव
हेतुरिति दृष्टान्तेन बोधयन्ति अन्यथेति । भगवतो बाधकत्वे मातरो न पुपुपुरित्यपि स्यात् ।
तथा च यथा मातृस्वरूपस्यैव तथात्वान्मातरो बालान् स्तनैर्न पुपुपुरित्यसम्भावितम्,
तथा भगवत्स्वरूपस्यैव तथात्वाद्भगवता सर्वांशेन भावबाधनमप्यसम्भावितमिति बिम्ब-
प्रतिबिम्बभावसिद्धया दृष्टान्तालङ्कारसिद्धिः । ननु 'तर्हि भवतीनां वियोगो मे न ही'त्यादीना
कथं विरहाभावबोधनमित्यत आहुः ज्ञानिनामपीति । ज्ञानिनां ज्ञानमिश्रभक्तिमार्गीयाणामपि
सम्बन्धिना तादृशवाक्येन भक्तं ज्ञानांशरहितं शुद्धभक्तं न मोहयिष्यति, पूर्वसिद्धविरहानुभव-
रहितं न करिष्यति । ज्ञानमिश्रभक्तिमार्गीयाणामेव तादृशैर्वाक्यैर्विरहबाधो भवति । एतासां
तैर्वाक्यैः प्रत्युत स भाव उत्कटो जातः । एतच्च विवृतं तत्रैव । ननु ज्ञानिन इव भक्तमपि कुतो न
मोहयति, अशक्तावपि तुल्यबलत्वादधिकप्रयासेन तत्सम्भवादित्याशङ्क्य तत्र प्रयोजनाभावं हेतु-
त्वेनाहुः आत्मप्रद इति । ज्ञानमिश्राणां विरहे विप्रयोगरसात्मकस्य स्वरूपस्य न प्राकट्यम्,
अत आत्मनः स्वरूपभूतस्यानन्दस्य दानार्थं पूर्वभावं बाधयति । सुखदातृत्वेनैव च प्रियः,
अतो दुःखबाधे प्रियोपि न स्याद्, अतः पूर्वं बाधयतीत्यात्मदाने प्रीतिरूपप्रयोजनद्वयं भगव-
न्निष्ठं भक्तनिष्ठं च निरूपितम् । एतासां तु विप्रयोगरसात्मकस्वरूपानुभवाद्विरहेपि भगवान्
आत्मप्रदः । निरुपाधिकप्रीतिविषयत्वात्तादृशदुःखेपि प्रियः । अतः प्रयोजनद्वयस्य तदापि
सिद्धत्वात् किमर्थं कस्मै प्रयोजनाय मोहयिष्यतीत्यर्थः । तत्र 'नीलाम्बुदश्यामो हृदयाद-
पसरत्वि'त्यादिनोक्तोपि भावो जायते इति चकारः । परं तस्य व्यभिचारिभावत्वान्न स्थायि-
भावरूपप्रीतेर्हानिः । तादृशस्वरूपदानेपि प्रीतिसूचनायापिशब्दः । एवं गुरुद्वये सिद्धं सर्व
निरूपितम् । तत्राधुनिकस्य यावत्कर्तव्यं तदाहुः तस्मादिति । यतो भक्तिमार्गीयस्य न
बाधस्तस्माद्धेतोरुक्तेन गुरुद्वये सिद्धेन प्रकारेण परित्यागो विधीयतामित्यभ्यनुज्ञा । गुरौ दल-
द्वयमुक्तम् । तत्रैकदलार्थं तत्सम्पादकः परित्याग आधुनिकेनापि कर्तव्यः । अपरस्य तु दलस्य
तत्र सिद्धस्य नाधिकार इति तदाकाङ्क्षायां बाधकमाहुः अन्यथेति । परित्यागादन्यप्रकार-
करणे इत्यर्थः । अपरदलेच्छायामपि स्वस्मिन् सिद्धादर्शात् फलाङ्गस्यते, ततोप्यधः पतती-

त्यर्थः । अयोग्यमिच्छन् पुरुषः पतत्येवेत्यवधारणात् । एतस्य फलावान्तरविचारस्य प्रमाणागम्यत्वात् स्वस्यैवाऽस्यत्वेन भक्तिरूपस्य मतेः सम्मतिमाहुः इति मे निश्चिता मतिरिति।

उपसंहरन्ति इति कृष्ण इति ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

कृष्णस्य प्रसादेन करणेन तस्यैव वल्लभेन कर्त्रा विनिश्चितं, भक्तौ फलरूपभक्तिसिद्ध्यर्थम् । संन्यासो व्रियते स्वीक्रियते अनेन करणेन तादृशो विचारः संन्यासवरणम् । इति समासमित्यर्थः । 'अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणे'त्यनेन भक्तिमार्गीयस्यैव तात्पर्यविषयत्वेनोपक्रान्तत्वात्तेनैवोपसंहारः । स्वनिश्चितमिदमेव । ज्ञानमार्गीयं तु प्रमाणैर्निश्चितमेव, स्वयमनूदितं परमिति भावः । अन्यथाकरणे बाधकमाहुः अन्यथेति । स्वयं निश्चितात् फलमार्गीयादनूदिताच्च ज्ञानमार्गीयादन्यथा साधनमार्गप्रकारेण कर्ममार्गप्रकारेण वा करणे तस्मात् साधनात् पतितो भवेत्, विरुद्धाचरणात् स्वयमेव पतितो भवेत्। ननु भगवांस्त्वत्पातक इति श्लेषे स्वामिनामग्रहणस्य हेतुत्वेनायुक्तत्वात् कर्मपदमित्यनेन वृत्रवाक्यविवरणे प्रभुक्ता भक्तिमार्गमर्यादा सूचिता। स्वस्यैतन्निश्चयस्य सिद्धत्वेपि करणकर्तृकथनेनैवंविधनिश्चये कृष्णप्रसाद एव साधनम्, तत्प्रियत्वमेव च स्वरूपयोग्यतासम्पादकमित्यनुग्रहेतरसाधनासाध्यत्वं सूचितम्। नन्वेवं सति स्वस्य दासत्वमायाति, अत एव ग्रन्थान्तरेपि 'इति श्रीकृष्णदासस्ये'त्युक्तम्, अन्यत्र च 'वैश्वानराद्वाक्पते'रित्यनेनाधिदैविकास्यत्वं स्वयमेवोक्तम्, अतः कथं विरोधपरिहार इति चेदुच्यते । यथा भगवतो 'जीवय मृतमिव दास'मित्यादिवाक्यैस्तथात्वमप्युच्यते, तत्र रसात्मकत्वस्य प्रमाणसिद्धत्वाद्रसस्य च तावद्विधत्वाद्धर्मिग्राहकमानेनोभयरूपत्वम्, न तु कस्यचिदारोपितत्वमिति निर्णयः, तथा प्रकृतेपि रसात्मकत्वेन दासरसानुभवार्थमाविर्भावात्द्रसस्यैव तथाविधत्वादुभयरूपत्वम्, न तु किञ्चिदारोपितम्, अतो यथार्थवादित्वेनाप्तत्वात्तद्वाक्यमखिलप्रमाणमूर्धन्यमिति तदनुग्रहभाजनैरवगन्तव्यम्। एवमेवाग्निकुमारचरणेष्वपि भगवत्त्वं 'यावन्ती पदपद्मानी'त्यादिसूक्तं तद्दासीत्वमित्यादिकं यद्यद्रसानुभवे यद्यदुक्तं तत्तत्सर्वमनारोपितमेवेति ज्ञेयम् । एतेन विरुद्धधर्माश्रयत्वकथनेन भक्तेभ्यः स्वस्य भगवत्त्वमेव सूचितं भवति, मानुषभावस्वीकारादनधिकारिणां परं न तथा प्रतीतिरिति विभावनीयम् । पूर्वप्रणिपातादिकरणेपि 'न पारयेह'मित्यादिवाक्यैः भक्तप्रकारकं दास्यं न सम्पन्नम्, अत एवमाविर्भूय ग्रन्थद्वयोक्तप्रकारेण स्वामिनीदास्यरसत्वमनुभूतवानिति भावः ॥ २२ ॥

श्रीपपु कृपयोक्तस्य ग्रन्थस्यास्य महात्मभिः । वदनानलदासोक्ता व्याकृतिः पूर्णतामगात् ॥१॥

**इति श्रीविट्ठलेशात्मजश्रीवल्लभकृता संन्यासनिर्णयस्य**
**विवृतिः सम्पूर्णा ॥**

श्रीकृष्णाय नमः ।

# संन्यासनिर्णयः ।

## चाचाश्रीगोपेशविरचितविवृतिसमेतः ।

निबन्धे 'त्रिदण्डं परिगृह्णीत सर्वशास्त्राविरोधि तत्' इत्यादिवचनैरुपेत्यात्र त्रिदण्ड-
विषयकेष्टसाधनताभ्रमाद्भ्रमसवशेन पुष्टिमार्गीयोपि तुरीयाश्रमत्वेन त्रिदण्डं गृह्णन् पश्चात्ता-
पमाप्नुयाद्, अतस्तदनुदयाय पुष्टिमार्गसन्यासस्य विचारमारभन्ते ।

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

कलिकालजन्यदोषाक्रान्तत्वात् कर्ममार्गीयस्य विलम्बेन फलजनकत्वात् ज्ञानमार्गीयस्य च परित्यागस्य सदोषत्वमुद्भाव्य पुष्टिमार्गीयपरित्यागस्य किंप्रयोजनं, कोत्र गुरुः, किं वा साधनं, का च परित्यागिनो व्यवस्थितिरित्यादिविचारः क्रियते इत्यर्थः । तथा चैवं विचारेण परित्यागे निर्णीते सत्यन्यत्र प्रवृत्त्यनुदयात् पश्चात्तापानुदय इति भावः । स इति । यस्य विचारः क्रियते स परित्यागो भक्तौ भक्तिमार्गे ज्ञाने ज्ञानमार्गे च कर्तव्यत्वेन प्रोक्त इत्यर्थः । विशेषत इति । मार्गद्वितयोक्तावपि ज्ञानमार्गे विशेषत उक्त इत्यर्थः । तथा च वेदस्मृतिपुराणेतिहासेषु सर्वत्र प्रसिद्धत्वाद्विशेषेणोक्तः, भक्तिमार्गे तु भगवदनुग्रहैकलभ्यभजनानन्दानुभवयोग्यतासम्पादकविरहानुभवार्थं भगवत्कृतवरणरूपस्तद्रसिकेष्वेव प्रसिद्धत्वाद्विशेषेण नोक्त इति भावः ॥ १ ॥

ननु मार्गद्वितयप्रोक्त एव विचार्यते, न तु कर्ममार्गीयः, तथा च तस्याविचारे को हेतुरित्यत आहुः ।

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

वस्तुतो ज्ञानमार्गेपि न कर्तव्य एव, अनन्तजन्मभिः सिद्धिसम्भवात्, परन्तु ज्ञानमार्गे दैवात् ज्ञानसिद्धौ पाक्षिक्यपि सिद्धिः, अतः कर्तव्योपि, कर्ममार्गे तु न कर्तव्य एवेत्याशयेन सुतरामित्युक्तमिति बोध्यम् । तत्र हेतुः कलिकालत इति । कर्ममार्गस्य देशकालद्रव्यकर्तृमन्त्रादिसापेक्षत्वात् कलौ तु देशादीनामशुद्धत्वात् कर्ममार्गीययावत्पदार्थसिद्धिः कालत्रयेपि बाधितेत्याशयः । तथा च कलिकालजन्यदोषाक्रान्तत्वेनाकर्तव्यत्वात्तद्विचारोपि न क्रियते इति भावः । अत इति । सत्वरासन्दिग्धफलजनको निर्दोषोऽवश्यकर्तव्यश्च, अतो हेतोः ज्ञानमार्गीयपरित्यागविचारात् प्रथमं भक्तिमार्गीयो विचार्यते इत्यर्थः ॥ २ ॥

तत्र प्रथमं परित्यागप्रयोजनं विचारयन्तः प्रयोजनानन्तरमाशङ्क्य दूषयन्ति ।

श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेपि तादृशैरेव सङ्गो भवति नान्यथा ।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोऽत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

प्रेमजनकश्रवणादीनां गार्हस्थ्ये व्यासङ्गान्तरेण सम्यगसिद्धेः, प्रकर्षेण सिद्ध्यर्थं परित्यागः कर्तव्य इति पक्षो नेष्ट इत्यर्थः । अनिष्टत्वे हेतुमाहुः । श्रवणे सहायाः श्रवणकारयितारः तत्सङ्गसाध्यत्वात् श्रवणस्येत्यर्थः । तथा च परित्यागे सर्वसङ्गराहित्येन स्थितिरपेक्षितेति भावः । ननु मास्तु श्रवणार्थं, कीर्तनस्मरणादिनिमित्तपरित्यागे को दोष इत्यत आहुः साधनानामिति । कीर्तनस्मरणादिसाधनानां वाङ्मनसादीनां प्रेमाभावात् स्वतोऽप्रवर्तमानानां प्रयत्नेन कीर्तनस्मरणादिषु रक्षणात् स्थापनात् प्रवर्तनादिति यावत् । तथा च स्वतः प्रवृत्तिरहितानीन्द्रियाणि यत्नेन प्रवर्तनाद्विक्षेपमासादयन्तीति भावः । एवं पादसेवनादिषु सर्वेन्द्रियप्रवृत्तौ स्वयमूह्यम् । दार्ढ्यार्थं हेत्वन्तराण्याहुः अभिमानादिति । मया सर्वं परित्यक्तं, मत्समः कोपि नास्तीत्येवमादिरूपाद् गर्वादित्यर्थः । तथा चैवं गर्वे सति सर्वेषामुद्वेगजननात् ऐहिको वेदस्मृत्यादिनिन्दनात् पारलौकिकश्चोपद्रव इति भावः । नन्वभिमानत्यागे को दोषोत आहुः नियोगादिति । ईश्वराज्ञालक्षणाद्वेदादेरित्यर्थः । तथा च वेदादिप्रसिद्धयतिधर्मानुष्ठाने सति अनुष्ठानरूपव्यासङ्गात् श्रवणस्य सम्यगसिद्धिः, तदनुष्ठानाभावे त्वारूढपतित एव स्यादिति नियोगादुपद्रव इत्यर्थः । ननु 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते' इति वाक्याद्भगवदीयैकसङ्गः सन् श्रवणादीनि कुर्वाणः सत्सङ्गवशात् शनैः शनैः स्वतः प्रवर्तमानेन्द्रियो गर्वमप्यकुर्वन् उक्तवाक्याद्यतिधर्मानपि नानुतिष्ठन् सत्सङ्गातिरिक्तं सर्वं परित्यजेत्तदा को दोष इत्याशङ्क्याहुः तद्धर्मैरिति । पुष्टिमार्गीयपरित्यागधर्मैरित्यर्थः । तथा च पुष्टिमार्गीयरसिकानुभवैकसाक्षिकभगवद्विरहरूपपरित्यागे भावनासिद्धभावातिरिक्तयावत्साधनानामनभिमतत्वात् भावपोषकविरहानुभवातिरिक्तयावत्पदार्थस्य व्यासङ्गान्तरजनकत्वेन तदनुभवसाक्षिकभावरूपैः प्रकृतपरित्यागधर्मैः विरोधात् परित्यागकारणीभूतप्रेमजनकश्रवणादिसिद्ध्यर्थं कर्तव्यो नेत्याशयः । तथा च विचारस्याग्रस्थत्वात् प्रकृतप्रयोजनकातिरिक्तपरित्यागकथनम्, वस्तुतस्तु विरहानुभवातिरिक्तप्रयोजनकः परित्यागः पुष्टिमार्गीयभक्तानां बुद्धिस्थोपि न प्रभवति, कुतोस्य कर्तव्यतेति ध्येयम् । ननु भावविरोधित्वान्मास्तु श्रवणार्थं, परन्तु पुष्टिमार्गीयभक्तोपदिष्टप्रकारेण साध्यमाने भावलक्षणे स्वरूपानन्दस्य साधने प्रतिबन्धकीभूतभार्यादेस्त्यागे को दोष इत्याशङ्क्याहुः गृहादेरिति । सा-

धनार्थं साधनं भावस्तत्सिद्ध्यर्थं यदि चेत्तथा परित्यागः कर्तव्य इत्यर्थः । तथा च प्रतिबन्धकनिवृत्तिरवश्यं सम्पादनीयेति गृहादेर्भावोत्पत्तौ प्रतिबन्धकत्वेन चेत् परित्यागो भावरूपसाधनसिद्ध्यर्थमिति भावः । दोषमाहुः अग्रेपीति । तादृशैर्भावसिद्धौ प्रतिबन्धकैरेवेत्यर्थः । तथा च कृतेपि भेषजे न क्षान्तो व्याधिरिति न्यायापात इति भावः । नान्यथेति । ये अन्यथा अतादृशा अबाधकाः साधका इति यावत्तैः सङ्गो न भवतीत्यर्थः । तदोक्तं निबन्धे विवृतौ 'सन्ति ब्रह्मभावं प्राप्ता नत्वेतादृशा भक्ता' इति। यद्यपि 'प्रतिकूले गृहं त्यजे'दिति निबन्धे प्रोक्तं, तथापि स परित्यागः पूजानिर्वाहजनकत्वेनोक्तः, न त्वेतद्देहावसान एव भजनानन्दरूपफलार्थमिति पूजानिर्वाहको भिन्नः, अयं च भिन्न इत्यनुसन्धेयम् । तथा च पूजानिर्वाहके तु सहायसङ्गेत्यादिनोक्तमेव दूषणमित्यपि ध्येयम् । तर्हि प्रकृतगृहादिपरित्यागस्य का गतिरिति चेत्, न । प्रकृते तु गृह एव तिष्ठन्नविरतमेव तन्मार्गीयोपदिष्टप्रकारेण भावनां कुर्वाणः सिद्धभावलक्षणसाधनः सन् गृहादि सर्वं परित्यजति विरहानुभवार्थं, न तु साधनसिद्ध्यर्थमिति सर्वमवदातम्। ननु बाधकं गृहादि परित्यज्य सर्वसङ्गरहितः सन् भावनया भावलक्षणं साधनं साधयेत्तदा को दोष इति अत आहुः स्वयं चेति । आहारादिविषयाप्राप्त्या क्लिष्टः सन् तदेव ध्यायन् विषयाक्रान्तः स्यात् । ततो मनसेन्द्रियार्थान् स्मरन् मिथ्याचारपदवाच्यः पाषण्डी तु भवेत्, तथा च भावरूपेष्टसिद्धिस्तु दूरे, प्रत्युतानिष्टसिद्धिरिति भावः । नन्विन्द्रियनिग्रहे सर्वमुपपद्यत इत्यत आहुः कालत इति । कलाविन्द्रियनिग्रहस्य दुःसाध्यत्वादित्यर्थः । विषयाक्रान्तत्वे पाषण्डित्वम्, एकमनिष्टमुक्त्वा द्वितीयं बलवदनिष्टमाहुः विषयाक्रान्तेति । देहो लिङ्गशरीरं तस्य मोक्षपर्यन्तमनवरतमुपचीयमानत्वाद्देहपदेनोक्तिः, एवञ्च लिङ्गशरीराध्यक्षत्वेन (अध्यस्तत्वेन) तदभेदं मन्यमान आत्मैव ( देह ) पदेनोच्यते, तथा च विषयाक्रान्तात्मनां भगवदावेशः कदापि न भवतीत्यर्थः । इत्थं च यदर्थं सर्वोप्युद्यमस्तस्यैवासिद्धेर्महदेवानिष्टमित्यर्थः । उपसंहरन्ति अतोत्रेति । यत उक्तदूषणानि अतो भक्तौ श्रवणादिसिद्ध्यर्थं अत्र साधने परित्यागो नैव सुखावह इत्यर्थः ॥ ३–६ ॥

अनन्यभावलक्षणसाधनसिद्ध्यर्थं च परित्यागे च दूषणमुक्त्वा प्रकृतप्रयोजनमाहुः ।

एवं प्रयोजनान्तरेण प्रयोजनान्तरकृतपरित्यागे च दूषणमुक्त्वा प्रकृतप्रयोजनमाहुः ।

विरहानुभवार्थं तु परित्यागः प्रशस्यते ।
स्वीयबन्धनिवृत्त्यर्थं वेषः सोऽत्र न चान्यथा ॥ ७ ॥
कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत् ।
भावो भावनया सिद्धः साधनं नान्यदिष्यते ॥ ८ ॥
विकलत्वं तथास्वास्थ्यं प्रकृतिः प्राकृतं न हि ।
ज्ञानं गुणाश्च तस्यैवं वर्तमानस्य बाधकाः ॥ ९ ॥
सत्यलोके स्थितिर्ज्ञानात् संन्यासेन विशेषितात् ।
भावना साधनं यत्र फलं चापि तथा भवेत् ॥ १० ॥
तादृशाः सत्यलोकादौ तिष्ठन्त्येव न संशयः ।

बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदि ॥ ११ ॥
तदैव सकलो बन्धो नाशमेति न चान्यथा ।
गुणास्तु सङ्गराहित्याज्जीवनार्थं भवन्ति हि ॥ १२ ॥
भगवान् फलरूपत्वान्नात्र बाधक इष्यते ।
स्वास्थ्यवाक्यं न कर्तव्यं दयालुर्न विरुध्यते ॥ १३ ॥
दुर्लभोऽयं परित्यागः प्रेम्णा सिध्यति नान्यथा ॥ १३½ ॥

निरोधलक्षणे 'हरिमूर्तिः सदा ध्येया सङ्कल्पादपि तत्र हि' इत्याद्युक्तप्रकारेणान्तरमणान्तःपातिसंयोगविशेषानुभवेनोत्पन्नस्योत्कण्ठाविशेषस्य विषयीभूतानां भगवत्स्वरूपनिष्ठतत्तत्पदार्थानामनवाप्तेर्भवति हि विरहस्तदनुभवाय परित्यागः प्रशस्त इत्यर्थः । प्रयोजनमुक्त्वा प्रकारमाहुः । अत्रास्मिन् परित्यागे वेदादिषु प्रसिद्धः स वेशो बन्धुजनकृतबन्धनाशनिमित्तत्वेनैव स्वीकार्यः, न तु संस्कारत्वेनेत्यर्थः । काषायदण्डादिधारणं तत्प्रयोजनं चोक्त्वा गुरुमाहुः । भगवदर्थमेव सर्वविषयत्यजनात् कौण्डिन्यो गुरुः, गोपिकास्तु सर्वप्रकारेषु गुरव इत्याशयः । गुरुमुक्त्वा साधनमाहुः साधनं चेति, । तत्तत् पुष्टिमार्गीयरसिकेषु प्रसिद्धमित्यर्थः । किं तदत आहुः भाव इति । ननु भावे किं साधनमित्याकांक्षायामाहुः भावनयेति । भावे भावनैव साधनम्, अन्यत् साधनान्तरं तद्रसिकसम्मतं नेत्यर्थः । तथा च ज्ञानमार्गीयपरित्यागे श्रवणमननादिभिरुत्पन्नं ज्ञानं मोक्षे साधनं, तथा भावनया सिद्धो भावः स्वरूपानन्दे साधनमिति भावः । साधनमुक्त्वेदानीमस्य ज्ञानिसदृशी दशान्यादृशी वेत्यत आहुः । निकलत्वमात्माद्यनुसन्धानराहित्यम् । अस्वास्थ्यमभिलषितार्थानवाप्तेर्भगवद्विषयनिर्वेदादनिवृत्तिरिति यावत् । तथा च सङ्कल्पप्रतिभाते भगवति जातासु चक्षूरागचित्तासङ्गसङ्कल्पनिद्राच्छेदतनुताविषयनिवृत्तित्रपानाशोन्मादमूर्छान्तासु नवस्ववस्थासु विषयनिवृत्तिपर्यन्तानामस्वास्थ्यपदेन त्रपानाशोन्मादमूर्छानां विकलत्वमित्यनेनोक्तिरिति ध्येयम् । एवं च अस्वास्थ्यं निकलत्वं च भावनासिद्धभाववतः प्रकृतिस्वभावः स्वाभाविकमिति यावत् । हि निश्चयेन प्राकृतं न, प्राकृताः सत्त्वरजस्तमोगुणास्तत्सम्बन्धि न भवतीत्यर्थः । ननु गुणजन्यज्ञानेनापि जडोन्मत्तसदृश्यवस्थाजननात् भवति विकलत्वं, तथा तमोगुणजन्यप्रमादमोहाज्ञानैरपि तज्जायते । एवं रजोगुणजन्यलौकिकविषयलोभे सति लौकिकविषयानवाप्तेरपि स्यादस्वास्थ्यम् । तथा चैतदपि निष्कलत्वास्वास्थ्ये प्राकृते एवेत्याशङ्क्याहुः ज्ञानमिति । एवं वर्तमानस्य निकलत्वास्वास्थ्यराहित्येनादृशभाववतो निर्गुणमपि ज्ञानं बाधकं, गुणा अपि बाधकाः, तथा च यथा प्रतिबन्धं निर्गुणं ज्ञानं स्वात्मैकात्म्यस्फूर्त्यादयः, यदि च सत्त्वरजस्तमांसि स्युस्तदा सगुणज्ञानलौकिकविषयलोभप्रमादमोहाज्ञानैश्च प्रतिबन्धजननात् अयं भाव एव नोत्पद्येतेत्यन्यथानुपपत्त्या ज्ञानस्य गुणानां चाभावनिश्चयादिकलत्वास्वास्थ्ययोः प्राकृतत्वं दुर्वचमित्याशयः । न च तन्निमित्तप्रेक्षणन्यायादिनिरूपितैरास्वस्मृतिभिरपि प्रतिबन्धिकाभिरिति वाच्यम् । तस्यास्तत्तत्सामयिकभावान्तरेण प्रतिबध्य-

स्यात्। यद्यपि पुष्टिमार्गीयैकात्म्यस्फूर्तिलक्षणं रसान्तःपाति निर्गुणं ज्ञानमप्रतिवध्यमप्रसिद्धमेव, तथापि 'मन्निष्ठं निर्गुणं स्मृत'मिति भगवद्वाक्याद्भगवद्विषयकं भगवच्चरणारविन्दरूपाक्षरविषयकं च **ज्ञानं** सत्वगुणजन्यमपि ज्ञानं निर्गुणमेव, तत्राप्रतिवध्यं सत् प्रतिवन्धकमिति बोध्यम्। एवं च निर्गुणं ज्ञानं प्रतिबन्धकं यत्र, तत्र गुणानां प्रतिबन्धकत्वे किं वक्तव्यमिति कैमुतिकन्यायप्रदर्शनपूर्वकं गुणानां प्रतिबन्धकत्वाय ज्ञानमित्युक्तमिति विभावनीयम् । ननु रजस्तमसोरास्तां लौकिकविषयलोभादिजननेन प्रतिबन्धकता, सत्वस्य तु ज्ञानमात्रजननेन कथं प्रतिबन्धकतेत्याशङ्क्य तुरीयाश्रमविहितश्रवणादिना सत्वगुणोद्रेकात् जातस्य सगुणज्ञानस्य मोक्षरूपफलान्तरविषयकेच्छाजननपूर्वकं सत्यलोकलक्षणफलजननात् प्रतिबन्धकत्वमाहुः । मोक्षरूपफलान्तरविषयकेच्छाजननपूर्वकं सत्यलोकलक्षणफलजननात् प्रतिबन्धकत्वमाहुः । ततोर्वाक् ब्रह्मलोकीयसुखानुभवविशेषितात् सहकृतादित्यर्थः । नन्वत्र ब्रह्मणा सह मोक्षोपि, ततोर्वाक् ब्रह्मलोकीयसुखानुभव इति फलद्वयजननेन पुष्टिमार्गादुत्कृष्ट इत्यत आहुः । यत्र भावे यथा भावना कारणं तत्र तथा फलमपि स्यात्, तथा च भावनया यथा भावो जन्यते, तथा भावेन स्वफलमपि जन्यत इत्यर्थः । एवं च भावनयास्मिन्नेव जन्मनि भावो जन्यते यथा, तथा भावेन भजनानन्दलक्षणं स्वफलमपि झटित्येतद्देहावसानाव्यवहितोत्तरक्षण एव जन्यत इति भावः । एवं भावस्योत्कर्षमुक्त्वा ज्ञानस्यापकर्षमाहुः **तादृशा** इति । अप्राप्तमोक्षा एवेत्यर्थः । इत्थं चानेकजन्मक्रियमाणयोगाभ्यासादिभिर्ज्ञानं विलम्बेन जन्यते यथा, तथा ज्ञानमपि ब्रह्मस्थितिपर्यन्तं ब्रह्मलोके स्थापयित्वा ब्रह्मणा सह मोक्षजननाद्विलम्बेनैव स्वफलमपि जनयतीत्येवमादिरूपाद्भावात् भावसाधनात् भावफलाच्च स्फुटतर एव ज्ञाने ज्ञानसाधने ज्ञानफले चापकर्ष इति भावः । नन्वास्तां तावत् भावस्त्वरया फलजनकः, परन्तु यदुक्तं स्वसाधनीभूतभावनातः सत्वरमुत्पन्नत्वात् स्वफलमपि सत्वरमेव जनयति भावस्तन्न साधु । नहि वर्षशतेन पुष्टो दृढदण्डो घटजननेऽचिरयति, नवा सत्वरमुत्पन्नं कपालं सति प्रतिबन्धे सज्जीभवति घटमुत्पादयितुम्, तथा च को हेतुर्भावस्य सत्वरफलोत्पादन इत्याशङ्क्य आहुः । यथा दारुण्यभिभूतो वह्निर्मथनेनोद्भूतः सन्नन्तःप्रविष्टः सर्वं भस्मसात्करोति तथाविर्भूतो भगवान् सर्वमप्यविद्यारूपं बन्धं नाशयतीत्यर्थः । तथा च व्यापकत्वात् सर्वत्रैव भगवानस्ति, यदा तु भक्त्या अन्तःकरणे 'प्रकटीभूयान्तःकरणे प्रकटो भवति, न कदाचित्तिरोधत्ते इति यावत्, तदा झटित्यविद्यानाशात् स्वरूपानन्दानुभव इति भावः । **न** **चेति** ज्ञानमार्गीयप्रकारेण नैवमित्यर्थः । ज्ञाने तु स्वापप्रबोधवदुदयानुदयाभ्यां चिरेण ब्रह्मणा सह मुक्तिरिति भावः । नन्वविद्याबद्धस्य जीवनं सम्भवति, नत्वबद्धस्य । तथा च बन्धे नष्टे किं प्रयोजनं जीवनस्य, किं वा जीवनसाधनमिति आशङ्क्याहुः । तुशब्दात् कारणान्तरव्यावृत्तिः । भगवद्गुणा एव जीवनं सम्पादयन्ति । हि निश्चितोयमर्थ इत्यर्थः । ननु गुणाः किमर्थं जीवयन्तीत्यत आहुः सङ्गेति । सङ्गराहित्याद्विरहात् प्रयोजनीभूतादित्यर्थः । तथा च भजनानन्दानुभवयोग्यतासम्पादकविरहानुभवसिद्धिनिमित्तं गुणा एव जीवनार्थं भवन्तीत्याशयः । ननु सर्वसमर्थो भगवान् यथा गुणैर्जीवयति, तथा संयोगेनैव कुतो न जीवयति, यतः किञ्चित् स्वास्थ्यमपि

स्यादित्याशङ्क्याहुः भगवानिति । यदि संयोगं सम्पादयेत्तदा भजनानन्दानुभवयोग्यताजनकविरहनाशजननेनास्वाध्यापगमात्, स्वयमेव प्रतिबन्धकः स्यात्, तथा च फलरूपस्य स्वस्य स्वप्राप्तौ प्रतिबन्धकत्वं नोचितमित्यर्थः । नन्वतिक्लेशात् कदाचिद्धैर्येणास्य मनसि फलप्राप्तिसन्देहोदयजन्यमस्वास्थ्यं स्यात्तन्निवृत्त्यर्थं सन्देहनिवारकं वचनं वक्तव्यम्, यथा ब्रह्मानन्ददानार्थं यतमानं नारदं प्रति 'गन्ता भजनतामसी'त्युक्तवांस्तथेत्याशङ्क्याहुः स्वास्थ्येति । कर्तुमेव योग्यं न भवति यतोऽयं दयालुरनुग्रहकर्ता यतश्च स्वयं न विरुध्यते । विरोधी नातो हेतोः, तथा च स्वेच्छयानुगृह्य दुर्लभपरित्यागपर्यन्तं सर्वं सम्पादितवान्, अतो दयालुर्यतश्च स्वप्रापकभावोत्पत्तौ प्रतिबन्धकं न कृतवानतोऽविरोधी, इत्थं चाविरुद्धानुग्राहको भगवांस्तथैव मनः प्रेरयति यथा न सन्देहोदयः, न च तज्जन्यमस्वास्थ्यमिति तादृशवाक्यं प्रयोजनाभावान्न कर्तुमुचितमिति भावः । इदानीं प्रकृतपरित्यागाधिकारं वदन्त उपसंहरन्ति दुर्लभोयमिति । ज्ञानमार्गीयवैराग्यमिवात्र व्यसनरूपं प्रेम साधकम् । तथा च प्रेमवानधिकारीत्यर्थः । नेति । प्रेमाभावेऽयं परित्यागः सिध्यत्येव नेत्यर्थः । दुर्लभो भगवदनुग्रहैकसाध्यत्वाद्दुःप्राप इत्यर्थः ॥ ७–१३½ ॥

इत्थं प्रकृतमुपसंहृत्य ज्ञानमार्गीयसंन्यासे किञ्चिदाहुः ।

**ज्ञानमार्गे तु संन्यासो द्विविधोपि विचारितः ॥ १४ ॥**
**ज्ञानार्थमुत्तराङ्गं च सिद्धिर्जन्मशतैः परम् ।**
**ज्ञानं च साधनापेक्षं यज्ञादिश्रवणान्मतम् ॥ १५ ॥**
**अतः कलौ स संन्यासः पश्चात्तापाय नान्यथा ।**
**पाषण्डित्वं भवेच्चापि तस्माज्ज्ञाने न संन्यसेत् ॥ १६ ॥**
**सुतरां कलिदोषाणां प्रबलत्वादिति स्थितम् ॥ १६½ ॥**

विचारित इत्यविचारेपि सिद्धवन्निर्देशाद्वस्तुतोत्र न किञ्चिद्विचार्यमस्तीत्यर्थः । तथाहि, विद्वत्संन्यासस्य प्रकृतपरित्यागविचार एव प्रसङ्गाद्वयस्योक्तैव सत्यलोक इत्यादिना । परमवशिष्यते विविदिषासंन्यासः, तस्य तूच्यत एवेति न किञ्चिदपि विचार्यमस्तीत्याशयः । अवशिष्टव्यवस्थामाहुः ज्ञानार्थमिति । उत्तरस्य स्वजन्यज्ञानोत्पत्त्यनन्तरमुत्पत्स्यमानस्य मोक्षस्य अङ्गपरम्परया प्रयोजकः, न तु साक्षाज्जनकः, तथा चैतादृशपरित्यागो ज्ञानोत्पत्त्यर्थं धक्रियतेत्याशयः । दोषमाहुः सिद्धिरिति । परन्तु तत्फलमनेकैर्जन्मभिर्भवतीत्यर्थः । ननु सत्वरमेव कुतो न भवतीत्यत आहुः ज्ञानं चेति । यज्ञा आदिर्यस्यैतादृशश्रवणाद्भवति, यतः साधनापेक्षं मनं कारणमपेक्षं स्वीकृतं सर्वैरित्यर्थः । तथा च वर्तमानसमयानामावश्यकत्वात् कृतिपूर्वकमेव श्रवणमुचितम् । इत्थं च मानससमयश्रवणयोस्तत्तदिन्द्रियनिग्रहाधीनत्वात् निग्रहस्य सुतरामशक्यत्वात्ज्ञानैरपि जन्मभिः सिद्धिर्दूरतरा ज्ञानस्येति भावः । उक्तं च निबन्धे 'नग्ना यदनुवत्ता च प्रमादात् परमात्मनः । त्रियां प्राप्तोत्युक्तेशः क्वचित् सत्ययुगे पुमा'निति ध्येयम् । इममेवार्थमाहुः अत इति । सत्ययुगे कदाचिदपि सिद्धिः, कलौ तु पश्चात्तापानिरिक्तं

किमपि फलं न भवतीत्याशयः । नेति । अस्मिन्नर्थे न काचिद्विप्रतिपत्तिरित्यर्थः । एवमन्येष्ट-सिद्ध्यभावमात्रं न, किन्त्वनिष्टसिद्धिरपि भवतीत्याहुः पाषण्डित्वमिति । यथोक्ताश्रम-धर्माणामनाचरणाद्वेदमार्गाच्युतेः पाषण्डित्वं, चकारान्नरकोपि स्यादित्यर्थः । उपसंहरन्ति तस्मादिति । ज्ञाने ज्ञानमार्गे संन्यासो न कर्तव्य इत्यर्थः । इत्थमकर्तव्यत्वसाम्यादुपस्थित-ज्ञानमार्गीयसंन्यासस्य स्थूणानिखननन्यायेन पुनरकर्तव्यतामाहुः सुतरामिति । कलिदोष-प्राबल्यात् सुतरां न कर्तव्य इति स्थितं, प्रथममेवोक्तममूलयेत्याशयः । तथा चोभावपि न कर्तव्यौ, समानदोषत्वादिति भावः ॥ १४–१६३ ॥

एवं मार्गान्तरीययोः सदोषत्वमुक्त्वा प्रकृतस्य सयुक्तिकं निर्दोषत्वमाहुः ।

**भक्तिमार्गेपि चेद्दोषस्तदा किं कार्यमुच्यते ॥ १७ ॥**
**अत्रारम्भे न नाशः स्याद् दृष्टान्तस्याप्यभावतः ।**
**स्वास्थ्यहेतोः परित्यागाद्बाधः केनास्य सम्भवेत् ॥ १८ ॥**
**हरिरत्र न शक्नोति कर्तुं बाधां कुतोऽपरे ।**
**अन्यथा मातरो बालान्न स्तन्यैः पुपुषुः क्वचित् ॥ १९ ॥**
**ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यति ।**
**आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति ॥ २० ॥**
**तस्मादुक्तप्रकारेण परित्यागो विधीयताम् ।**
**अन्यथा भ्रश्यते स्वार्थादिति मे निश्चिता मतिः ॥ २१ ॥**

भक्तिमार्गे परित्यागकृतौ यदि दोषसम्भावना तदा किं कर्तव्यमित्यर्थः । तथा च परित्यागः कर्तव्यो न कर्तव्यो वेत्याशङ्कायां समाधानमुच्यत इत्यर्थः । समाधानं वदन्तः प्रथमं प्रवृत्तिप्रतिबन्धकविघ्नरूपं दोषमाशङ्क्य तदभावमाहुः । अत्रास्मिन् परित्यागे आरम्भे प्रवृत्तौ नाशो विघ्नो न भवेदित्यर्थः । ननु मास्तु प्रवृत्तौ प्रतिबन्धकस्तदभावस्यानुभविकत्वात् परन्तु फले प्रतिबन्धकान्तरानुमाने को दोष इत्यत आहुः दृष्टान्तेति । अनुमानस्य दृष्टान्त-सापेक्षत्वात्तदभावादनुमातुं न शक्यत इत्यर्थः । अपिशब्दात् सद्धेतोरप्यभावान्नानुमानमित्या-शयः । ननु लौकिकविषयानुरागात् स्वर्गाद्यक्षरानन्दतामुष्मिकफलाभिलाषात्स्वास्थ्यनाशेन फलप्रतिबन्धलक्षणो दोषः प्रकृतपरित्यागेपीत्याशङ्क्याहुः स्वास्थ्येति । स्वास्थ्यहेतोरस्वास्थ्यना-शकस्येत्यर्थः । तथा च भजनानन्दातिरिक्तयावदभिलाषविषयाणां प्रथममेव तुच्छीकृत्य परित्यक्त-त्वात्तदभिलाषाभावेन फलप्रतिबन्धः केन स्यात्, न केनापीत्यर्थः । ननु कालादयश्चेत्प्रतिबन्धकाः स्युस्तत्र आहुः हरिरिति । अपरे कालादय इत्यर्थः । पूर्वपक्षिणं मनसिकृत्याहुः अन्यथेति । प्रश्ने चासन्नकाल इति सूत्रेणासन्नकालिक्यां क्रियायां पृच्छमानायां पुपुषुरिति लिट् । अन्यथा बाधां करोति भगवानिति, यदि त्वं निश्चितोसि तदाहं पृच्छामि, कच्चिदद्य प्रातः सन्ध्ये वा मातरो बालान् स्तन्यैर्न पुपुषुः किमित्यर्थः । तथा चैतावत्कालं तु मातरोर्भकपोषणपरा एव सर्वसंमतास्त्वया त्वद्य किमपुष्णन्त्यो दृष्टा इतीदृशः प्रश्नः पुपुषुरित्यस्य वाच्यः । इत्थं च

यद्यसम्भावितमर्मकपोपामावमद्राक्षीस्तदा भगवत्कृतबाधामपि मनस्यानयेः । एवं चोभयमपि शशविषाणायमानमिति भावः । ननु दैवात् मिलिता ज्ञानिनः स्वानुभवज्ञापनपूर्वकं स्वमार्गोपदेशं कुर्युस्तदा का गतिरत आहुः । यद्वा, ननु भगवान् स्वयं प्रतिबन्धं न जनयति, परन्तु सर्वमोहिका माया चेन्मोहमुत्पाद्य मार्गान्तररुचिलक्षणं प्रतिबन्धं जनयेदित्याशंक्याहुः । **ज्ञानिनामपीति** च वाक्यं चेति कर्मधारयः । तथा च 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा, बलादाकृष्य मोहाय महामाया प्रयच्छती'ति वाक्येनेत्यर्थः । एवं चास्मिन् वाक्ये ज्ञानिनामित्युक्तम्, ननु भक्तानामपीत्यतो ज्ञानिमोहजनन एवास्या शक्तिर्न तु भक्तमोहजनन इत्याशयः । **मोहेति** । अतीतवर्तमानमोहयोरभावस्त्वेतन्मार्गान्यथानुपपत्त्यैव निश्चितः, परमवशिष्यते सन्दिग्धसम्भवो भविष्यमाणः स तु पाक्षिकोपि दोषः परिहरणीय इति न मोहयिष्यतीत्यनेन परिह्रियत इति ध्येयम् । ननु भगवदिच्छाया दुरूहतरत्वाद्भगवतः स्वतन्त्रत्वात् कदाचित्स्वयमपि मोहयेदत आहुः **आत्मप्रद** इति। लुब्धो द्वेष्टा वाऽभविष्यदमोहयिष्यद्भगवांस्तु जीवकृतिसाध्यसाधननिरपेक्षः सन् स्वात्मानमपि प्रकर्षेण ददद्दुदारः, तथा द्वेष्टापि न भवति, उदासीनोपि न भवति, अपि तु प्रियः, तथा च प्रयोजनयोः लोभद्वेषयोरभावान्नैव **मोहयिष्यतीत्यर्थः** । अत्रापि अतीतवर्तमानमोहयोरभावस्तु वरणान्यथानुपपत्त्यैव निश्चितः,अवशिष्टस्तूच्यत एवेति ध्येयम् । एवं प्रकृतपरित्यागे दोषाभावमुपपाद्य प्रवृत्तिं विदधति । यस्मात्सर्वथा निर्दोषस्तस्मादुक्तप्रकारेण 'स्वीयबन्धनिवृत्त्यर्थं वेश' इत्याद्युक्तप्रकारेणेत्यर्थः । स्वार्थाद्विरहानुभवलक्षणस्वप्रयोजनात् रहितो भवतीत्यर्थः । किमत्र प्रमाणमत आहुः **इति मे** इति । निश्चिता साक्षात्कृतविषया मतिरेव प्रमाणमित्याशयः ॥ १७–२१ ॥

नन्वयं परित्यागः किं तुरीयाश्रमः, किं वा भक्तिमार्गीयः साधनविशेष इति सन्दिहानं प्रत्याहुः ।

**इति कृष्णप्रसादेन वल्लभेन विनिश्चितम् ।**
**संन्यासवरणं भक्तावन्यथा पतितो भवेत् ॥ २२ ॥**

**इति** समाप्तोयं ग्रन्थ इत्यर्थः । भगवत्प्रसन्नतया हेतुभूतया साक्षात्कृतमित्यर्थः । **भक्तौ** भक्तिमार्गे **संन्यासवरणं** परित्यागलक्षणो भगवदङ्गीकारः । तथा च नायं तुरीयाश्रमः, न वा भक्तिमार्गीयः स्वकृतिसाध्यः साधनविशेषः, किन्तु भगवत्कृतो जीवस्याङ्गीकाररूपोयं परित्याग इत्याशयः । **अन्यथा**ङ्गीकाराभावे **पतितो**ऽस्मान्मार्गात् च्युतो भवेत् । तथा चैतन्मार्गाच्च्युतिः पातित्यमेवेति पतितपदप्रयोग इति बोध्यम् । इत्थं च भगवानेव स्वभिन्नयावल्लौकिकालौकिकविषयेभ्योन्तःकरणं निरुध्य यदि स्वस्मिन् व्यसनं सम्पादयेत्तदायं परित्यागो भजनानन्दानुभवयोग्यतासम्पादकविरहानुभवार्थं कर्तव्यः, नो चेत्तनुवित्तजैव सेवा कर्तव्येति श्रीमदाचार्यचरणानामाशयोऽनिशमनुसन्धेयः । तथा चोक्तं विद्वन्मण्डने श्रीमत्प्रभुचरणैः 'नम्माङ्गीयानां मर्यादेव हितकारिणी'ति ॥

**चाचाश्रीगोपेशकृता संन्यासनिर्णयविवृतिः सम्पूर्णा ॥**

श्रीकृष्णाय नमः

श्रीगोपीजनवल्लभाय नमः

# संन्यासनिर्णयः ।

## શ્રીપુરુષોત્તમજીકૃત વિવરણસહિત.

[ હરિગીત ]

સ્વાચાર્યવર્યચરણપ્રતાપે પ્રકટ ભક્તિસુમાર્ગમાં
પ્રારંભકાલિક જન કરે સહુ ત્યાગ આ સંસારમાં ।
તેનો પ્રકાર જણાવતો સંન્યાસનિર્ણય વિસ્તરૂં
હું દાસ આ શ્રીબાલકૃષ્ણપદારવિંદ હૃદય ધરૂં ॥ ૧ ॥

ભગવાને શ્રીમદ્વલ્લભાચાર્યને દેહનો પરિત્યાગ કરવાની અને દેશનો પરિત્યાગ કરવાની એમ બે આજ્ઞા કરી, તે પોતે આગળ સ્ફુરતા વિચારથી પાળી નહિ. ત્યારે ભગવાન્ સેવ્ય અને પોતે સેવક હોવાથી ભગવદાજ્ઞા ઉલ્લંઘન કરવાથી પશ્ચાત્તાપ થયો. એટલામાં લોકનો ત્યાગ કરવાની ભગવાન્‌ની ત્રીજી આજ્ઞા થઈ, ત્યારે પોતે વિચાર કરવા લાગ્યા કે ભગવાન્ મારાપર પ્રસન્ન છે કે નહિ? જો પ્રસન્ન ન હોત તો ઉપેક્ષાજ કરત, આજ્ઞા કરત નહિ. માટે પ્રસન્ન છે એતો નક્કી. પણ આ પ્રમાણે બે આજ્ઞા નહિ પાળવા છતાં પ્રસન્ન છે તેનું કારણ શું? આમ વિચાર કરતાં પ્રભુની આજ્ઞામાં દેહ અને દેશ શબ્દો યૌગિક[1] અર્થમાં વપરાયલા હતા એમ સમજ પડી. કેમકે દિશ્ એટલે અતિદાન કરવું, તે પરથી દેશ શબ્દ થાય છે, અને દેશત્યાગ એટલે અતિદાનનો ત્યાગ એવો યૌગિક અર્થ થાય છે. શ્રીમદ્ભાગવતની સૂક્ષ્મટીકા નિવૃત્ત થવાથી પોતે એ ટીકારૂપ અતિદાનનો ત્યાગ કર્યો હતો, એટલે દેશત્યાગ કર્યો હતો. તેમજ દિહ્ એટલે વૃદ્ધિ પામવું, તે પરથી દેહશબ્દ થાય છે: માધવભટ્ટ કાશ્મીરી લેખક હતા, તેમના લેખોથી સર્વ ગ્રંથાદિની વૃદ્ધિ થતી હતી. તેમની નિવૃત્તિ થવાથી વૃદ્ધિનો ત્યાગ એટલે દેહત્યાગ થયો હતો. એ બંને દેશ અને દેહ ત્યાગ ભગવાને જ કરાવ્યા હતા. આ પ્રમાણે આ બંને આજ્ઞા ભગવાને આ પ્રકારે સિદ્ધ કરાવેલી હતી, તેથીજ ભગવાન્ પોતે અપ્રસન્ન નથી એમ નિશ્ચય થયો. આ બંને આજ્ઞા જેમ દુર્જ્ઞેય ( સમજ ન પડે તેવી ) હતી, તેમ આ ત્રીજી આજ્ઞા પણ દુર્જ્ઞેય છે એમ સમજ્યા. અને જો કે પ્રથમની બે આજ્ઞા પળાઈ હતી, પણ પોતે તે પાળવા પ્રયત્ન કર્યો ન હતો, માટે તે પ્રયત્ન ન કરવાથી પશ્ચાત્તાપ થયો; તે કેમ નિવૃત્ત થાય એમ વિચાર કરતાં હવે થની આજ્ઞા (લોક ત્યાગ) ના વિષયના વિચાર કરવાથી જ ભગવાન્ પશ્ચાત્તાપ નિવૃત્ત કરશે એમ નિશ્ચય કરીને પોતાની અવસ્થાને સૂચન કરનાં પરિત્યાગ એટલે શું તે નિરૂપણ કરવાની પ્રતિજ્ઞા કરે છે.

---

૧. શબ્દના અર્થ બે પ્રકારે થાય છે, એક રૌઢિક અર્થ અને બીજો યૌગિક અર્થ. ધાતુ એટલે જે જે વસ્તુ ધાતુમાંથી ઉત્પન્ન થાય તે. એ રૌઢિક અર્થ. ધાતુ એટલે ક્રિયા કે એ યૌગિક અર્થ.

**पश्चात्तापनिवृत्त्यर्थं परित्यागो विचार्यते ।**
**स मार्गद्वितये प्रोक्तो भक्तौ ज्ञाने विशेषतः ॥ १ ॥**

**सान्वयपदार्थः**—पश्चात्तापनिवृत्त्यर्थं પશ્ચાત્તાપની નિવૃત્તિને માટે **परित्यागः** પરિત્યાગ અથવા સંન્યાસ विचार्यते વિચારાય છે. તે ( સંન્યાસ ) विशेषतः વિશેષે કરીને भक्तौ ભક્તિમાર્ગમાં ज्ञाने જ્ઞાનમાર્ગમાં **मार्गद्वितये** બે માર્ગમાં प्रोक्तः કહ્યો છે.

श्लोकार्थ :—પશ્ચાત્તાપની નિવૃત્તિને માટે પરિત્યાગ અથવા સંન્યાસનો વિચાર કરવામાં આવે છે. સંન્યાસ વિશેષે કરીને ભક્તિમાર્ગ અને જ્ઞાનમાર્ગ એમ બે માર્ગમાં કહેલો છે.

અહીં કેટલાક પ્રાચીન મહાનુભાવીઓ ( શ્રીગોકુલનાથજી ) કહે છે કે શ્રીઆચાર્યજીએ ભક્તિમાર્ગીય પરિત્યાગ શિવાયના બીજા સર્વ પદાર્થનો વિચાર કર્યો, અને ત્યાગનો વિચાર કર્યો નહિ, તેથી પોતાને પશ્ચાત્તાપ થયો, તેની નિવૃત્તિને માટે પરિત્યાગનો વિચાર કરવો એવી પ્રતિજ્ઞા કરે છે. બીજા પ્રાચીનો ( શ્રીમદ્રઘુનાથજી ) કહે છે કે કર્મમાર્ગીઓને વૃદ્ધાવસ્થામાં પણ વૈરાગ્ય થતો નથી, અને તેમના સંગથી કદાચિત્ ભગવદીઓ પણ તેવા થઈ જાય, તે અટકાવવા માટે સેહેલાઈથી થઈ શકે એવા સંન્યાસનું નિરૂપણ કરવાની પ્રતિજ્ઞા શ્રીમદાચાર્યજી કરે છે, અને કહે છે કે ભગવદીઓ શરીર શિથિલ થતા પોતાની પ્રથમની દશાનું સ્મરણ કરે છે, અને 'મેં પ્રથમથી જ ભગવાનને માટે પ્રયત્ન કેમ ન કર્યો?' એવો તેમને ક્લેશ થાય છે, તે પશ્ચાત્તાપનું વર્ણન અહીં કર્યું છે.

વળી બીજા મહાનુભાવીઓ ( શ્રી ગોકુલોત્સવજી ) કહે છે કે ભક્તિમાર્ગમાં અને જ્ઞાનમાર્ગમાં સાધનદશામાં અને સિદ્ધ દશામાં પરિત્યાગ કરવો એમ કહ્યું છે; તેમાં સાધનદશામાં પૂર્ણ વૈરાગ્યનો અભાવ હોવાથી સારી રીતે પરિત્યાગ થઇ શકે નહિ, અને પાખંડનો પ્રસંગ આવે, તેથી સાધનદશાના સંન્યાસથી તો પશ્ચાત્તાપ જ થાય. આ તારતમ્ય ( તફાવત ) નું જ્ઞાન ન હોવાથી ભગવદીઓ પણ જો પ્રથમથી જ પરિત્યાગ કરે તો પશ્ચાત્તાપ જ થાય, અને તેમને જોઇ આચાર્યજીને પોતાને પણ પશ્ચાત્તાપ થાય, માટે એ બંને પ્રકારના પશ્ચાત્તાપને અટકાવવાને શ્રીમદાચાર્યજી સંન્યાસનિર્ણય ગ્રંથની પ્રતિજ્ઞા કરે છે. વળી બીજા મહાનુભાવીઓ કહે છે કે નિબન્ધમાં શ્રીમદાચાર્યજીએ આજ્ઞા કરી કે ત્રિદંડનું ગ્રહણ કરવું સર્વશાસ્ત્રસંમત છે, આવી આજ્ઞા જોઇને કોઈ પુષ્ટિમાર્ગીય પણ ચતુર્થ આશ્રમવડે ત્રિદંડનું ગ્રહણ કરીને પશ્ચાત્તાપ પામે, માટે તેવું ન થવા માટે પુષ્ટિમાર્ગીય સંન્યાસના વિચારનો આરંભ શ્રીમદાચાર્યજી કરે છે. વળી બીજા પ્રાચીન મહાનુભાવીઓ ( શ્રીમદ્યોગેશ્વરજી ) કહે છે કે શ્રુતિ વિગેરે પ્રમાણથી સિદ્ધ રસાત્મક ભગવાનના વિરહભાવનો અનુભવ સર્વાત્મભાવથી થયલી શરણાગતિથી જ થાય તેમ છે, તે વિરહભાવનો અનુભવ સર્વપરિત્યાગવિના સંભવે નહિ; અને તે ત્યાગનું સ્વરૂપ વિગેરે નહિ જાણનાર નિજ જન જ્ઞાનમાર્ગ વિગેરેમાં કહેલા સંન્યાસથી ગંદેહમાં પડે, અને અવિચારથી પરિત્યાગ કરે તો પશ્ચાત્તાપ થાય, તે અટકાવવા માટે સંન્યાસના વિચારનો આરંભ કર્યો છે. આ સર્વ મહાનુભાવીઓ પરસ્પર સંમત નથી એમ મને લાગે છે, અને મંગ.શરણમ્રોધ ગ્રન્થમાં જે પશ્ચાત્તાપ અને પરિત્યાગ બને શબ્દો આવેલા છે, તે બંને શબ્દોનો અહીં વિચાર છે, તેથી તેજ પશ્ચાત્તાપની નિવૃત્તિ કરવાનું અહીં કહ્યું છે એવો અર્થ હું કરે છું. આમ અર્થ કરવામાં મને કાંઈ દોષ દેખાતો નથી.

* ભગવાને પરિત્યાગની આજ્ઞા કરી છે, અને પોતે પરિત્યાગ કરવો એમ નિશ્ચય કર્યો છે.

ત્યારે પરિત્યાગવિષેના વિચારનું પ્રયોજન શું? સમાધાન—પરિત્યાગ બે માર્ગમાં[1] કહેલો છે. કયા બે માર્ગ? શા માટે બે માર્ગમાં કહ્યો છે? સમાધાન—ભક્તિમાર્ગ અને જ્ઞાનમાર્ગ. ભક્તિમાર્ગમાં આરંભદશામાં અને સિદ્ધદશામાં અને જ્ઞાનમાર્ગમાં વિવિદિષા ( જાણવાની ઈચ્છારૂપ ) દશામાં અને વિદ્વદ્દશામાં જ્યારે વૈરાગ્ય ઘણો થાય ત્યારે સંન્યાસ લેવાનું કહ્યું છે.

એકાદશ સ્કંધમાં ભગવદ્વાક્ય છે કે 'જ્ઞાનયોગ કર્મયોગ અને ભક્તિયોગ એ ત્રણ યોગ મનુષ્યનું કલ્યાણ કરવાની ઈચ્છાથી મેં કહ્યા છે;' માટે એ ત્રણે યોગ મનુષ્યનું કલ્યાણ કરનાર હોવાથી સરખા ગણાય, તો પછી કર્મમાર્ગમાં પરિત્યાગ કેમ ન કરવો? એ શંકાના ઉત્તરમાં કહે છે કે:—

**कर्ममार्गे न कर्तव्यः सुतरां कलिकालतः ।**
**अत आदौ भक्तिमार्गे कर्तव्यत्वाद्विचारणा ॥ २ ॥**

**સાન્વયપદાર્થ:**—સુતરાં વિશેષે કરીને કલિકાલતઃ કલિકાલને લીધે કર્મમાર્ગે કર્મમાર્ગને વિષે કર્તવ્ય કરવા યોગ્ય ન નથી. અતઃ તેથી આદૌ પ્રથમ ભક્તિમાર્ગે ભક્તિમાર્ગમાં કર્તવ્યત્વાત્ કરવા યોગ્ય હોવાથી વિચારણા વિચાર.

**શ્લોકાર્થ:**—હાલમાં કલિકાલને લીધે કર્મમાર્ગને વિષે સન્યાસ કરવા યોગ્ય નથી. માટે પ્રથમ ભક્તિમાર્ગમાં કરવા યોગ્ય હોવાથી વિચાર કરીએ.

બ્રહ્મચર્ય, ગૃહસ્થ, વાનપ્રસ્થ અને સંન્યાસ એમ ચાર આશ્રમના પક્ષવડે જો કે કર્મમાર્ગમાં પણ સંન્યાસ કહ્યો છે, તોપણ ભગવાનનું વચન છે કે કામીઓએ કર્મયોગ કરવો, માટે સંસારમાં કામનાવાળા કર્મમાર્ગના અધિકારી છે, અને વૈરાગ્યવાળા સંન્યાસના અધિકારી છે, માટે કર્મમાર્ગમાં સન્યાસ કરવો નહિ. અંગિરાઋષીએ કહ્યું કે 'વાનપ્રસ્થાશ્રમમાં જે વિદ્વાન્ હોય તે સંન્યાસ ગ્રહણ કરે, અથવા આતુર કે દુઃખી હોય તે સંન્યાસ ગ્રહણ કરે;' અહીં આતુર અને દુઃખીને પણ સંન્યાસ ગ્રહણ કરવાનું કહ્યું, તો પણ કલિકાલને લીધે સંન્યાસ કરવો નહિ, કેમકે કલિકાલમાં નહિ કરવાયોગ્ય વસ્તુઓમાં સંન્યાસ પણ ગણેલો છે. ત્યારે ભલે કર્મમાર્ગમાં સંન્યાસ ન કરવો, તોપણ જે માર્ગમાં કહ્યો હોય તે માર્ગમાં કહ્યાપ્રમાણે કરવો, તેમાં વિચાર કરવાનું પ્રયોજન શું? એમ આકાંક્ષા થાય તો કહે છે કે જૂદા જૂદા માર્ગમાં જૂદી જૂદી દશામાં સંન્યાસ કરવાનો કહ્યો છે. માટે ભક્તિમાર્ગમાં આરંભમાં કરવો કે નહિ, તેનો વિચાર કરીએ છીએ. કોઈ પણ મનુષ્યને કોઈ પણ રીતે ભક્તિ ઉત્પન્ન થઈ હોય, તેની ભક્તિને વધારનાર શ્રવણ-

---

1 માર્ગદ્વિતયે સંખ્યા જ્યારે અવયવના અર્થમાં વપરાય ત્યારે તેને તયપ્ પ્રત્યય લાગે, એ સૂત્ર પ્રમાણે દ્વિને તયપ્ લાગવાથી દ્વિતય શબ્દ થયો હોવાથી 'અવયવનો' અર્થ અત્રે કર્યો છે, તેથી અંગનો એક ભાગ તે અવયવ એવા અર્થથી અર્થ થાય છે, તે અર્થ અહીં ઘટતો નથી. વંદરાસ્ત્રમાં કહેલા ૨૪ ગુણોમાં સંખ્યા પણ એક ગુણ છે, અને ગુણના જૂદા જૂદા વિભાગ પાડી શકાય નહિ. તેથી તયપ્ પ્રત્યય 'અવયવ એટલે અંગનો એક વિભાગ' એ અર્થના લઈ શકાય નહિ. અહીં તયપ્ પ્રત્યય ઉપાદાન એટલે સમવાયિ કારણમાં વપરાયલો છે, જેમકે દ્વાદશ સ્કંધમાં કહ્યું છે કે સર્વ અવયવવાનનો અવયવ સત્ય કહેલો છે સમવાયુ કારણ ( જેની સંખ્યા થાય તે ) સંખ્યેય અહીં માર્ગ એ સંખ્યેય છે. માર્ગદ્વિતય એટલે માર્ગનું દ્વિતય સંખ્યેય ( માર્ગ ) ની સાથે અભેદમાં છઠ્ઠી વિભક્તિ લેવાથી જેનો અર્થ થાય કે માર્ગથી અભિન્ન દ્વિતય. માર્ગથી અભિન્ન એવા દ્વિત્વ સંખ્યા અને સંખ્યેય તેમાં વિષેષે કરીને પરિત્યાગ કરવાનો કહ્યો છે.

દિનો જે દશામાં નિર્વાહ થાય તે આરંભદશા કહેવાય. એ શ્રવણાદિનો અભ્યાસ થવાથી આસક્તિની સિદ્ધિ જે દશાથી થઈ શકે તે બીજી દશા કહેવાય. આસક્તિ સિદ્ધ થયા પછી જે દશાથી વ્યસન સિદ્ધ થઈ શકે તે ત્રીજી દશા કહેવાય. આ સર્વમાં જે દશામાં કલિકાલ વિગેરેથી થતા દોષનો સબંધ ન થાય તે માટે તેની દશાના ફલ અને સ્વરૂપના પ્રકારનો વિચાર કરીએ છીએ. આપ્રમાણે દોઢ શ્લોકવડે ગ્રંથ કરવાના પ્રયોજનનું વર્ણન કર્યું.

અહીં ભાવાર્થ નીચે પ્રમાણે છે. એકાદશ સ્કંધમાં સપ્તદશ અધ્યાયમાં ઉદ્ધવજીએ શ્રીકૃષ્ણને પ્રશ્ન કર્યો છે કેઃ—

यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ।
स्वधर्मेणारविंदाक्ष तन्मे व्याख्यातुमर्हसि ॥

**अर्थ**—હે કમલનયન પ્રભુ, સ્વધર્મનું આચરણ કેવી રીતે કરવાથી મનુષ્યોને આપને વિષે ભક્તિ ઉત્પન્ન થાય, તે ઉપાય મને કહેવો જોઈએ.

આવો ઉદ્ધવજીએ પ્રશ્ન કર્યો ત્યારે ચારે આશ્રમના ધર્મ કહેતાં ભગવાને અષ્ટાદશ અધ્યાયમાં કહ્યું કે 'શાસ્ત્રમાં જેપ્રમાણે ઉપદેશ કર્યો છે તેપ્રમાણે મારૂં યજન કરવું, પોતાનું સર્વસ્વ યજ્ઞ કરાવનાર બ્રાહ્મણને આપી દેવું, અગ્નિનો પોતાના પ્રાણમાં સમાવેશ કરવો, અને પછી નિરપેક્ષ થઈ સંન્યાસ ગ્રહણ કરવો. (૧૩). બ્રાહ્મણ સન્યાસ લેવા તૈયાર થાય, ત્યારે તેના સ્ત્રીપુત્રાદિકમાં દેવતાઓ પ્રવેશ કરીને વિઘ્ન કરે છે, કેમકે તેઓને ઈર્ષ્યા થાય છે કે આ અમારાથી ઉપર જશે. (૧૪). મુનિ જો વસ્ત્ર પહેરે તો કૌપિન માત્ર તેટલા શરીરને ઢાંકવાને પહેરે. દંડ અને કમંડલુ શિવાય ત્યાગ કરેલા કાંઈ પણ પદાર્થને આપત્તિવિના ગ્રહણ કરે નહિ. (૧૫). દૃષ્ટિથી પૃથ્વી પવિત્ર કરીને (સંભાળથી) પગ મુકવો, વસ્ત્રથી પવિત્ર કરીને જલ પીવું, સત્યથી પવિત્ર કરીને વાણીનો ઉચ્ચાર કરવો, અને મનથી પવિત્ર કરીને સદાચરણ કરવું. (૧૬). મૌન, અનીહા (શરીરથી કાંઈ પણ ચેષ્ટા કરવી નહિ તે), પ્રાણને નિયમમાં રાખવા, એ વાણી, દેહ અને ચિત્તના દંડ છે. આ ત્રણ દંડ જેણે સાધ્યા નથી, તે કેવલ વાંસના દંડ રાખવાથી યતિ થતો નથી. (૧૭). ચારે વર્ણમાં પતિતવિગેરેને છોડીને બાકીના સાત ઘરોમાં ભિક્ષા માગવી. તે સાત ઘરો પ્રથમથી ધારેલા હોવાં ન જોઈએ. તેટલામાં જે મળે તેમાં સંતોષ રાખવો. (૧૮). પછી બહાર જઈને જલાશયમાં આચમન લઈને ભિક્ષામાં મળેલું અન્ન અંચળામાં લઈને જલમાં બોળીને બહાર કાઢવું એટલે તે પવિત્ર થાય. પછી તે અન્ન ખાવું. (૧૯).' આ વિગેરેના પંચદશ શ્લોકવડે સન્યાસાશ્રમરૂપ પરિત્યાગ કહ્યો છે. ત્યારપછી ભક્તિ અને વૈરાગ્ય વિશેષ થાય ત્યારે કહ્યું છે કેઃ—'જ્ઞાનમાં નિષ્ઠાવાળો, વિરક્ત, અથવા મારો ભક્ત કોઈ પણ પ્રકારની અપેક્ષાવિના આશ્રમોના ચિન્હો છોડી દઈને વેદાદિક વિધિની દરકારવિના ફર્યાં કરે. (૨૮). ડાહ્યો છતાં બાલકવત્ ક્રીડા કરે, કુશલ છતાં જડવત્ ફરે, વિદ્વાન્ છતાં ઉન્મત્તવત્ બોલે, વેદને જાણતા છતા પશુવત્ આચરણ કરે. (૨૯). વેદના વાદમાં પ્રીતિ રાખે નહિ, પાખંડ કરે નહિ, શાસ્ત્રમાં કહેલા ધર્મોના હેતુઓ શોધવા પ્રયત્ન ન કરે, શુષ્ક વાદવિવાદમાં કોઈ પક્ષનો આશ્રય કરે નહિ. (૩૦). ધીર થઈ મનુષ્યોથી ઉદ્વેગ પામે નહિ, તેમજ મનુષ્યોને ઉદ્વેગ કરે નહિ, અતિવાદ સહન કરે, કોઈનું અપમાન કરે નહિ. (૩૧)' આમ ચાઉદશ શ્લોકથી વિધિવિનાનો સન્યાસ કહ્યો છે. અહીં જ્ઞાનમાર્ગીય અને ભક્તિમાર્ગીયના સમાન ધર્મો એકઠા કરી કહ્યા છે. તેવી જ રીતે પ્રથમ કહેલા વિધિપૂર્વક સન્યાસમાં પણ સમજી લેવું. તેમજ તૃતીય સ્કંધમાં

એમ ચાર ભેદ કહ્યા છે, તેથી ત્રણે માર્ગમાં
સંન્યાસના કુટીચક, બહૂદક, હંસ અને પરમહંસ એમ ચાર ભેદ કહ્યા છે. પાદમાં પુરુષાર્થોઽતઃશબ્દાત્ એ અધિ-
સંન્યાસ કર્તવ્ય છે. વ્યાસસૂત્રના તૃતીયાધ્યાયના ચતુર્થ વિગેરે કર્મ કરવાનો આચાર લખેલો
કરણના પાંચ સૂત્રમાં બ્રહ્મજ્ઞાની વશિષ્ઠાદિકને અગ્નિહોત્ર યજન કર્યું, એમ શ્રુતિમાં કહ્યું છે તેથી
છે. અને 'જનકરાજાએ ઘણી દક્ષિણાવાળા યજ્ઞથી 'તે વિદ્યા, કર્મ અને પૂર્વની બુદ્ધિથી
બ્રહ્મજ્ઞાની જનક કર્મ કરતા હતા એ શ્રુતિસિદ્ધ છે.' કર્મથી ફલનો આરંભ થાય છે એમ
પ્રાપ્ત થાય છે,' એમ શ્રુતિમાં કહ્યું છે, તેથી વિદ્યા અને યજ્ઞમાં વરણ કરે છે.' એમ કલ્પ-
શાસ્ત્રાજ્ઞા છે. 'બ્રહ્મિષ્ઠ બ્રહ્મા છે, તેનું દર્શ અને પૂર્ણમાસ થવાનું લખ્યું છે. 'જે દુર્બ્રાહ્મણ
શ્રુતિમાં કહ્યું છે, તેથી બ્રહ્મજ્ઞાનીને પણ બ્રહ્માપણાથી ઋત્વિક પશુનું આલભન
સોમપાન કરવાની ઇચ્છા કરે, તે ધૂસરા પુચ્છવાળા અશ્વિનીકુમારસંબંધી કહેવાય છે.
કરે.' જેની પેઢીમાં ત્રણ પુરુષસુધી સોમપાન કર્યું ન હોય તે વિચ્છિન્ન બ્રાહ્મણ અગ્નિહોત્ર
તેણે ઇન્દ્રાગ્નિસંબંધી ઉત્કૃષ્ટ પશુનું આલભન કરવું,' 'જ્યાંસુધી જીવે ત્યાંસુધી સ્ત્રી તથા
હોમવું,' વિગેરે શ્રુતીઓથી સિદ્ધ થાય છે કે કર્મ નિત્ય કરવા. અને કર્મ કરવામાં આશ્રમનો જ પક્ષ
પુરુષ બંનેનો ઉપયોગ છે, તેથી જૈમિનિના મતમાં વાનપ્રસ્થ સુધી ત્રણ ત્યાગ કરી સંન્યાસ
છે, અને જેને કોઈ પણ રીતે કર્મ કરવાની શક્તિ ન હોય, તેને જ સર્વ સેવો' એ વિગેરે
ગ્રહણ કરવાનો છે. અને ' જે દિવસે વૈરાગ્ય થાય તેજ દિવસે સંન્યાસ એટલે તે શ્રુતિ
શ્રુતિ કર્મ કરવાને અશક્ત અને આંધળા લૂલા વિગેરે અનધિકારી માટે છે. કર્મમાર્ગમાં સંન્યાસ
વ્યર્થ થઈ જતી નથી, આવો કર્મવિચારક જૈમિનિનો સિદ્ધાંત છે, માટે
કરવો નહિ.

તેથી જ્ઞાનનો અધિકાર સર્વને
હવે 'તુલ્યં દર્શનમ્' ( સર્વ વર્ણાશ્રમને જ્ઞાન તુલ્ય છે, દૃષ્ટાંતથી જ્ઞાન સર્વને
સમાન છે ) વિગેરે સૂત્રોમાં શુક, સંવર્ત, આરુણિ અને જડભરતના સંન્યાસ ગ્રહણ કર-
સાધારણ છે, તેથી કર્મની આવશ્યકતા સિદ્ધ થતી નથી, અને તેથી જ તેથી એના મતમાં
વામાં આંધળા પાંગળાનો જ અધિકાર છે એ જૈમિનિમતનું ખંડન થાયછે.
સંન્યાસશ્રુતિની વ્યર્થતા ઘટતી નથી.

વેદમાં કહ્યું છે કે 'તે વિદ્વાન્ કાવષેય ઋષિઓ એમ કહેતા હતા કે અમે શામાટે
વેદનું અધ્યયન કરીશું? શા માટે યજ્ઞ કરીશું? પૂર્વે વિદ્વાનો હતા તેઓએ અગ્નિહોત્ર કર્યું નથી.'
'ત્યાગ કરવો એજ ખરેખર અમૃતપણું છે એમ કહીને યાજ્ઞવલ્ક્ય ત્યાગ કરીને ચાલી નીકળ્યા.'
આવી ઘણી શ્રુતિઓથી સંન્યાસ કરવાનો બોધ થાય છે. અને કર્મ કરવાની શ્રુતિ સર્વત્ર લાગુ
પડતી નથી એ નિશ્ચયાત્મક છે.

બ્રહ્મિષ્ઠ બ્રહ્માને દર્શ પૂર્ણમાસમાં વરણીમાં વરાવ્યાનું શ્રુતિમાં કહ્યું છે, ત્યાં પણ બ્રહ્મ
શબ્દનો અર્થ વેદ થાય છે, તેથી વેદ જાણનારને જ યજ્ઞમાં ઋત્વિક કરવો એવો અર્થ થાય
છે. તેથી એ શ્રુતિથી જ્ઞાન કર્મનું અંગ છે એમ પ્રતિપાદન થઈ શકતું નથી.

'જેના કુલમાં ત્રણ પુરુષ સુધી સોમપાન ન કર્યું હોય તે દુર્બ્રાહ્મણ કહેવાય છે, તે
સોમપાનની ઇચ્છા કરે તો તેણે ધૂસરા પુચ્છવાળા અશ્વિનીકુમારસંબંધી પશુનું આલભન
કરવું,' ઈત્યાદિ શ્રુતિમાં જેમ કર્મનો નિયમ બાંધ્યો છે, તેમ 'કર્મવડે, પ્રજાવડે કે ધનવડે કોઈ
મોક્ષને પ્રાપ્ત થયો નથી, કેટલાક ત્યાગવડે મોક્ષને પ્રાપ્ત થયા છે,' ઇત્યાદિ શ્રુતીઓમાં ત્યાગનો
નિયમ પણ સાંભળવામાં આવે છે. તેથી જે સંસારાસક્ત હોય તેણેજ કર્મ કરવા એવો નિશ્ચય
હોવાથી કર્મનિયમની શ્રુતિમાં કાંઈ વિરોધપણું નથી. છેલ્લી અવસ્થામાં ચતુર્થાશ્રમ ગ્રહવાથી

દ્રવ્યના યજ્ઞ કરવાનો નિષેધ છે તો પણ જરા*મર્યાગ્નિહોત્રની શ્રુતિથી યજ્ઞની સિદ્ધિ થાય છે. માટે જીવતા સુધી અગ્નિહોત્ર હોમવું એ શ્રુતિનો પણ બાધ આવતો નથી. તેથી જૈમિનિઉક્ત દૂષણનો પરિહાર થાય છે. આ પ્રમાણે કર્મમાર્ગસંબંધી ચતુર્થાશ્રમના પક્ષનો પણ નાશ થતો નથી. તેથી કર્મમાર્ગમાં સંન્યાસ કર્તવ્ય છે એમ પ્રાપ્ત થાય છે, તે છતાં સ્મૃતિમાં કહ્યું છે કે 'અગ્નિહોત્ર, મધુપર્કમાં બળદનું આલભન, સંન્યાસ, માંસના પિંડવાળું શ્રાદ્ધ, દીયરથી પુત્રોત્પત્તિ એ પાંચ કલિયુગમાં કરવાં નહિ,' તેથી કલિયુગમાં સંન્યાસ વર્જ્ય હોવાથી કરવો નહિ. જો કે બીજી સ્મૃતિમા તેની સામુ કહ્યું છે કે 'જ્યાંસુધી બ્રાહ્મણ, ક્ષત્રિય, વૈશ્ય, શૂદ્ર એવા વર્ણવિભાગ છે, અને જ્યાં સુધી વેદ પ્રવર્તે છે, ત્યાંસુધી કલિયુગમાં અગ્નિહોત્ર અને સંન્યાસ કરવા,' તેથી કર્મમાર્ગમાં પણ સન્યાસ કરવાનો સંભવ થાય, તો પણ જાબાલશ્રુતિમાં ચારે આશ્રમના પક્ષને પ્રથમ કહીને પછીથી કહ્યું છે કે 'અથવા બીજી રીતે બ્રહ્મચર્યથી, ગૃહસ્થાશ્રમથી અથવા વાનપ્રસ્થ થયો હોય ત્યાંથી સન્યાસ ગ્રહણ કરે. અને વ્રતવગરનો, વ્રતવાળો, સ્નાતક કે અસ્નાતક, અથવા ઉત્સન્નાગ્નિક અથવા અનગ્નિક પણ જે દિવસે વૈરાગ્ય ઉત્પન્ન થાય તેજ દિવસે સંન્યાસ ગ્રહણ કરે.' આ પ્રમાણે છેલ્લે સમાપ્તિમાં વૈરાગ્યવાળાને જ સંન્યાસ ગ્રહણ કરવાનો અધિકાર છે એમ સર્વત્ર સાંભળવામાં આવે છે. તેમજ એકાદશ સ્કંધમાં ભગવાને કહ્યું છે કે 'જ્યારે સકામ કર્મોમાં અને નરકરૂપ લોકોમાં સારી રીતે વૈરાગ્ય થાય, ત્યારે અગ્નિહોત્રનો ત્યાગકરીને સન્યાસ ગ્રહણ કરવો.' આવા વાક્યોથી વૈરાગ્ય થાય ત્યારે જ સંન્યાસનો પક્ષ ભગવાને કહેલો છે. અને કલિયુગમાં કર્મ સર્વધર્મશૂન્ય છે, તેમાં વૈરાગ્ય થવાનો સંભવ નથી, તેથી કલિયુગમાં કર્મમાર્ગની રીતે સન્યાસ કદાપિ કરવો નહિ.

આ પ્રમાણે ચાર આશ્રમના પક્ષથી પ્રાપ્ત થતા સંન્યાસનો હમણા અધિકાર ન હોવાથી જ્યારે જ્ઞાનનિષ્ઠા કે ભક્તિનિષ્ઠા થાય ત્યારે તે માર્ગની રીતે સંન્યાસ લેવો.

શ્રીઆચાર્યજી મહાપ્રભુજી પોતે ભક્તિમાર્ગીય હોવાથી, ભક્તિમાર્ગમાં સંન્યાસ કર્તવ્ય હોવાથી, ભક્તિમાર્ગમાં સન્યાસ કેવી રીતે લેવો તેનો વિચાર પ્રથમ કરે છે. જો સન્યાસગ્રહણ એક જ માર્ગમાં કહ્યું હોય, અથવા ભક્તિ, જ્ઞાન અને કર્મ ત્રણે માર્ગમાં એકજ પ્રકારનો સંન્યાસ હોય, તો સન્યાસ ગ્રહણ કરવાની ભગવદાજ્ઞારૂપ વાક્યમાં સંદેહ થાય નહિ, તેથી તેનો વિચાર કરવાની જરૂર રહે નહિ પણ સન્યાસ તો સર્વત્ર કહેલો છે, અને તે જ્ઞાનમાર્ગ અને ભક્તિમાર્ગમાં ગ્રહણ કરવો એમ સિદ્ધ થયું, ત્યારે ભક્તિમાર્ગમાં કયો સંન્યાસ કેવા પ્રકારથી લેવાની ભગવદાજ્ઞા છે તેનો નિશ્ચય કરવાને વિચાર કરવામાં આવે છે. આ પ્રમાણે પ્રયોજન કહીને વિચારનો આરંભ કરે છે:—

* નારાયણોપનિષદ્‌ની સમાપ્તિમાં જરામર્યાગ્નિહોત્ર કહ્યુ છે:—'એવી રીતે યજ્ઞને જાણનારનો આત્મા યજમાન છે, શ્રદ્ધા પત્ની છે, શરીર ઇધ્મ છે, વક્ષ સ્થલ વેદી છે, રોમ દર્ભ છે, શિખા દર્ભમુષ્ટિ છે. હૃદય યૂપ (સ્તંભ) છે, વીર્ય ઘી છે, ક્રોધ હોમવાનો પશુ છે, તપ અગ્નિ છે, દમ પશુને મારનાર તથા દક્ષિણા છે, વાણી હોતા છે પ્રાણ ઉદ્‌ગાતા છે, અધ્વર્યુ ચક્ષુ છે, મન બ્રહ્મા છે, જ્યાં સુધી શરીરને ધારણ કરાય છે, તે દીક્ષા છે. જે ખાય છે તે હવિર્ છે, જે પીવે છે તે સોમપાન છે, જે રમણ કરે છે તે ઉપસદ્ છે, જે ફરે છે, બેસે છે, ઉઠે છે, તે પ્રવર્ગ્ય છે, જે મુખ છે તે આહ્વનીય છે, જે વ્યાહૃતિનો ઉચ્ચાર કરે છે, તે આહુતિ છે, જે તેનું જ્ઞાન છે તે હોમે છે, જે સાંજે તથા સવારે ખાય છે તે સમિધ્ છે, જે પ્રાતઃકાલ, મધ્યાન્હકાલ અને સાયંકાલ છે, તે તેના સવન છે, જે રાત્રિદિવસ છે તે દર્શપૂર્ણમાસ છે, જે અર્ધમાસ તથા માસ થાય છે તે ચાતુર્માસ્ય યજ્ઞ છે. જે છ ઋતુ છે તે પશુબંધ યજ્ઞ છે, જે સંવત્સર તથા પરિવત્સર છે તે અહર્ગણ છે. જે મરણ થાય છે તે યજ્ઞ પછીનું અવભૃથ સ્નાન છે.' એવી રીતે જરા પ્રાપ્ત થાય ત્યાંથી મરણપર્યંત અગ્નિહોત્ર અને તેના અંગના યજ્ઞોની પોતાના શરીરની અંદર જ ભાવના [illegible] તે જરામર્યાગ્નિહોત્ર કહેવાય છે. તે અગ્નિહોત્ર સંન્યાસીને પણ સિદ્ધ રહે છે.

श्रवणादिप्रसिद्ध्यर्थं कर्तव्यश्चेत् स नेष्यते ।
सहायसङ्गसाध्यत्वात् साधनानां च रक्षणात् ॥ ३ ॥
अभिमानान्नियोगाच्च तद्धर्मैश्च विरोधतः ।
गृहादेर्बाधकत्वेन साधनार्थं तथा यदि ॥ ४ ॥
अग्रेऽपि तादृशैरेव सङ्गो भवति नान्यथा ।
स्वयं च विषयाक्रान्तः पाषण्डी स्यात्तु कालतः ॥ ५ ॥
विषयाक्रान्तदेहानां नावेशः सर्वदा हरेः ।
अतोत्र साधने भक्तौ नैव त्यागः सुखावहः ॥ ६ ॥

સાન્વયપદાર્થઃ—શ્રવણાદિપ્રસિદ્ધ્યર્થં શ્રવણાદિ સારી રીતે થઈ શકે તે માટે કર્તવ્યઃ કરવી, ચેત્ જો સ તે ન નહિ ઇષ્યતે ઇચ્છવા યોગ્ય, સહાયસંગસાધ્યત્વાત્ સહાય સંગથી સિદ્ધ થાય છે તેથી ચ અને સાધનાનાં સાધનનું રક્ષણાત્ રક્ષણ કરવાથી. (૩) અભિમાનાત્ અભિમાન થાય તેથી નિયોગાત્ શ્રવણાદિ નિરંતર કરવું જોઇએ તેથી તદ્ધર્મૈઃ તેના ધર્મોથી ચ અને વિરોધતઃ વિરોધ હોવાને લીધે યદિ જો, ગૃહાદેઃ ગૃહવગેરેનું બાધકત્વેન બાધકપણું હોવાથી સાધનાર્થં સાધન માટે તથા તે પ્રમાણે (સન્યાસ ગ્રહણ કરવો) (૪) અગ્રે આગળ અપિ પણ તાદૃશૈઃ તેવાઓની સાથે એવ જ સંગ સંગ ભવતિ થાય છે, ન નહિ, અન્યથા અન્ય પ્રકારે ચ અને, સ્વયં પોતે, વિષયાક્રાન્તઃ વિષયાસક્ત પાષણ્ડી પાખંડી વળી કાલતઃ કાલક્રમથી સ્યાત્ થાય (૫). વિષયાક્રાન્તદેહાનાં જેમનો દેહ વિષયાસક્ત છે તેમને, હરેઃ હરિનો, આવેશઃ આવેશ સર્વદા હમેશ ન નહિ. અતઃ તે માટે, અત્ર અહિં, ભક્તૌ ભક્તિમાર્ગમાં સાધને સાધનાવસ્થામાં ત્યાગઃ સન્યાસ સુખાવહઃ સુખ આપનાર, ન નહિ એવ જ.

શ્લોકાર્થઃ—શ્રવણાદિની સિદ્ધિ સારી રીતે થાય, તેમાટે સંન્યાસ લેવો, એ યોગ્ય નથી, કેમકે શ્રવણાદિ સહાયથી અને સહાય સંગથી સિદ્ધ થાય છે, અને શ્રવણાદિના સાધનોનું રક્ષણ કરવું જોઇએ, (જે ત્યાગમાં બને નહિ). વળી શ્રવણાદિમાં અભિમાન અથવા અહંતા મમતા રહે છે, અને શ્રવણાદિ નિરંતર કરવું જોઇએ, તેથી સંન્યાસ ધર્મને વિરોધ આવે છે. જો ગૃહાદિ શ્રવણ વગેરેમાં બાધક માની સાધન કરવા માટે સંન્યાસ લેશો એવો પક્ષ લઇએ, તો પણ આગળ ત્યાગ કર્યા પછી પણ તેવાઓની સાથે જ સંગ થાય છે, અને કાલના દોષથી પોતે પણ વિષયાસક્ત અને પાખંડી થાય છે. જેઓનો દેહ વિષયાસક્ત એવ છે, તેમને હમેશાં ભગવાનનો આવેશ રહેતો નથી, માટે અહીં ભક્તિમાર્ગમાં સાધનાવસ્થામાં સંન્યાસ સુખકારી નથી. (૩-૬).

શ્રવણ, કીર્તન, સ્મરણ, પાદસેવન, અર્ચન, વંદન, દાસ્ય, સખ્ય અને આત્મનિવેદન એ નવ પ્રકારની ભક્તિની સારી રીતે સિદ્ધિ થવાસારૂ સંન્યાસ કરવો, એ પણ અંગીકાર કરવાયોગ્ય નથી. અહીં આશય આ છેઃ ભગવાને એકાદશ સ્કંધમાં મનુષ્યોના કલ્યાણ કરવાની ઇચ્છાથી જ્ઞાન, કર્મ અને ભક્તિરૂપ ત્રણ માર્ગ કહ્યા છે. તેમાં જ્ઞાનના અધિકારી વૈરાગ્યવાળા, કર્મના અધિકારી વૈરાગ્યવાળા પણ નહિ અને કામી પણ નહિ, એમ કહ્યું છે. તે ત્રણે માર્ગમાં સન્યાસ નિરૂપણ કર્યું છે. તેમજ શ્રુતિમાં પણ 'કર્મવડે, પ્રજાવડે કે ધનવડે કોઈ મોક્ષને પ્રાપ્ત થયું નથી, પણ કેટલાક ત્યાગવડે મોક્ષને પ્રાપ્ત થયા છે.' એમાં મોક્ષરૂપ ફળ

કહ્યું છે. તે ફલ પણ ત્રણમાંથી કોઈ પણ માર્ગની રીતિથી સંન્યાસ કરે ત્યારે જ પ્રાપ્ત થાય, કેવલ સંન્યાસથી તે ફલ પ્રાપ્ત થતુ નથી. કેમકે સન્યાસ તે તે માર્ગના અંગરૂપ છે. તેથી તેમાં કહેલું ફલ તે તે માર્ગના અર્થવાદ રીતે કહેલું છે. તેમજ ભગવાને એકાદશ સ્કંધમાં કહ્યુ છે કે 'યોગ, સાંખ્ય, દાન, વ્રત, તપ, યજ્ઞ, વ્યાખ્યાન, વેદાધ્યયન અને સંન્યાસવડે પ્રયત્ન કરનાર પુરુષ પણ જેની પ્રાપ્તિ કરી શકતો નથી,' એ વાક્યમાં કેવલ ત્યાગમાત્રથી પોતાની પ્રાપ્તિ થતી નથી, એમ ભગવાને કહ્યું છે. માટે ત્યાગ કોઈક રીતે સહાય કરે છે એટલુંજ. અને ત્યાગનો અધિકાર વૈરાગ્યથી થાય છે. તે વૈરાગ્ય જેમ જેમ ઉત્કૃષ્ટ હોય તેમ તેમ ત્યાગ તે તે માર્ગમાં વિશેષ સહાયકારક થાય છે. ત્યારે વૈરાગ્યનો ઉત્કર્ષ કેમ થાય? એ વિચાર કરીએ તો કેવલ અદૃષ્ટમાત્રથી વૈરાગ્ય થતો નથી. તેથી તે તે માર્ગને અનુકૂલ શ્રવણાદિક સાધન તેને સિદ્ધ કરનારા સમજવા. માટે તે સાધનની સિદ્ધિને માટે ત્યાગ કરવો હોય તો તે પક્ષ ભગવાનના મત પ્રમાણે અંગીકાર કરવા યોગ્ય નથી. ભગવાને એકાદશ સ્કંધમાં 'જ્યારે સર્વત્ર વૈરાગ્ય થાય ત્યારે ત્યાગ કરવો' એમ કહ્યું છે, ત્યાં સાધનદશાને પ્રાપ્ત થયો હોય તેને ત્યાગ કરવાનું કહ્યુ છે, તેમાં તેને પર્યટન કરવાનું જ કહ્યુ છે, કોઈ પણ સ્થલે સ્થિર રહીને શ્રવણાદિ કરવાનું કહ્યું નથી. પછી સિદ્ધદશાને પ્રાપ્ત થયેલા જ્ઞાની અને ભક્તના ત્યાગનું નિરૂપણ સાડા નવ શ્લોકમાં કર્યું છે, તે નીચે પ્રમાણે છે, 'જ્ઞાનનિષ્ઠ વિરક્ત અથવા કાંઈ પણ અપેક્ષાવિનાનો મારો ભક્ત આશ્રમના ચિન્હોસહિત આશ્રમને છોડી દઈને વેદના વિધિ જેનાપર લાગુ પડતા નથી એવો થઇ ફર્યા કરે. (૨૮). ડાહ્યો છતાં બાલકની માફક રહે, કુશલ છતાં જડવત્ આચરણ કરે, વિદ્વાન્ છતાં ઉન્મત્તવત્ બોલે, વેદને જાણતા છતાં પશુ માફક આચરણ કરે. (૨૯). વેદવાદમા પ્રીતિ ન કરે, પાખંડી ન થાય, ધર્મની બાબતમાં કારણો શોધવા પ્રયત્ન ન કરે, શુષ્ક વિવાદમાં કોઈ પક્ષનો આશ્રય કરે નહિ. (૩૦). ધીર થઈ મનુષ્યોથી ઉદ્વેગ પામે નહિ, તેમજ કોઇને ઉદ્વેગ કરે નહિ, અતિવાદ સહન કરે, કોઇનું અપમાન ન કરે, દેહને માટે પશુની માફક કોઈ સાથે વૈર ન કરે. (૩૧). કેમકે જેમ જલના જૂદા જૂદા પાત્રોમાં એકજ *ચંદ્ર રહ્યો છે તેમ સર્વ ભૂતમાં આત્મામાં પરમાત્મા એકજ રહ્યો છે, તેમ જ પંચમહાભૂત પણ સર્વમા એક જ છે. (૩૨).

વખતસર ખાવાનું ન મળે તો ધૈર્ય ધરી ખેદ કરવો નહિ, વખતસર મળે તો રાજી થવું નહિ, કેમકે મળવું ન મળવું બન્ને દૈવાધીન છે. (૩૩). ફક્ત આહારને માટે ચેષ્ટા કરવી, કેમકે પ્રાણધારણ માટે આહાર યોગ્ય છે, પ્રાણધારણથી તત્વવિચાર થાય છે, તત્વ જાણવાથી મનુષ્ય સંસારમાંથી મુક્ત થાય છે. (૩૪). દૈવેચ્છાથી મળેલું અન્ન, શ્રેષ્ઠ હોય કે હલકું હોય, તો પણ ખાવું, તેમ જ વસ્ત્ર તથા શય્યા પણ જે સમયે જેવું મળે તેવું મૌન વ્રત રાખી સ્વીકાર કરવું (૩૫). જેમ હું ઈશ્વર લીલાવડે સર્વ ક્રિયા કરૂં છું, તેમજ જ્ઞાનીએ પણ કોઈની પ્રેરણાવિના શૌચ, આચમન, સ્નાન તેમજ બીજા નીયમોને કરવા. (૩૬). એ પ્રમાણે સાડા નવ શ્લોકમાં સિદ્ધ દશાવાળા જ્ઞાની અને ભક્તનું નિરૂપણ કરીને પછી બે શ્લોકથી વિવિદિષા સન્યાસ કહ્યો છે તે નીચે પ્રમાણે:—'દુઃખરૂપ કામને વિષે વૈરાગ્યવાળો આત્મજ્ઞાની અને મારા (ભગવાનના) ધર્મને ન જાણનાર, મનનશીલ ગુરૂપાસે જાય, અને જ્યાંસુધી બ્રહ્મનું સ્વરૂપ જાણવામાં આવે ત્યાંસુધી આદરથી ગુરુરૂપ મને (ભગવાનને) શ્રદ્ધાથી નિંદા કર્યા વિના સેવે."

---

* ચંદ્રને બધુ રૂપે બતાવ્યા આ દૃષ્ટાંત છે, પ્રતિબિંબના અભિપ્રાયથી નથી. સર્વમાં પંચમહાભૂત છે, ત્યાં પ્રતિબિંબપણું ઘટતું નથી

ત્યારપછી બે શ્લોકથી જ્ઞાન અને વૈરાગ્ય ન હોય તો કષાય (મલ) પક્વ ન હોવાથી બંને લોકની હાનિ થવાનું કહ્યું છે તે નીચે પ્રમાણે:—'જેણે કામ, ક્રોધ, લોભ, મોહ, મદ અને મત્સર એ છ શત્રુ જીત્યા નથી, જેના ઇંદ્રિયોરૂપી સારથી પ્રચંડ છે, અને જે જ્ઞાન અને વૈરાગ્યથી રહિત છે, તે જો સન્યાસ ગ્રહણ કરે તો ધર્મની હાનિ કરનાર તે માણસ દેવતા-ઓને, આત્માને, તથા પોતામાં રહેલા પરમાત્મારૂપ મને છેતરે છે, અને અંતઃકરણના કષાય (મલ) નહિ પાકેલા હોવાથી આ લોક તેમજ પરલોકથી ભ્રષ્ટ થાય છે.'

એ પ્રમાણે જ્ઞાનમાર્ગના સંન્યાસનું નિરૂપણ કર્યું છે. ભક્તિમાર્ગીયને તો સાધનદશામાં સંન્યાસમાં કાંઈ પણ અધિક કહ્યું નથી; પણ શમ અને અહિંસા એ ભિક્ષુનો ધર્મ છે, એ બે શ્લોકવડે કહીને, સંક્ષેપથી ચતુરાશ્રમના ધર્મને કહીને ફલકથનપૂર્વક ચાર આશ્રમના ધર્મનો ઉપસંહાર નીચે પ્રમાણે કર્યો છે:—'એવી રીતે જે પોતાના ધર્મવડે અનન્ય ભાવથી મને ભજે છે, અને સર્વ ભૂતને વિષે મારો ભાવ રાખે છે, તેને મારી દૃઢ ભક્તિ પ્રાપ્ત થાય છે.' આથી ભક્તિમાર્ગીયને પણ ત્યારપછી તરતજ ત્યાં કહેલો સન્યાસધર્મ જ મુખ્ય છે એમ સિદ્ધ થાય છે. એમ હોવાથી જો શ્રવણાદિમાટે સંન્યાસ ગ્રહણ કરે તો તેના સ્વરૂપ અને ધર્મથી વિરોધ આવે. આ આશયથી પ્રથમ સંન્યાસના સ્વરૂપમાં વિરોધાત્મક હોવનું વર્ણન सहायसङ्गसाध्यत्वात् એ શ્લોકથી કરે છે. સંન્યાસનું સ્વરૂપ तद्धेके प्राजापत्याम् અહીંથી આરંભીને एवमेवैतद्भगवन् ત્યાંસુધી જબાલશ્રુતિમાં નિરૂપણ કરેલું છે, તેનું જ વર્ણન કરતાં એકાદશ સ્કંધમાં કહ્યું છે કે 'ઉપદેશપ્રમાણે મારું યજન કરીને, ઋત્વિજને સર્વસ્વ આપી દઇને, અગ્નિનો સ્વપ્રાણમાં આવેશ કરીને નિરપેક્ષ થઇ સન્યાસ ગ્રહણ કરે.' આમ છે ત્યારે જીવશ્રાદ્ધના વિધાનથી આગ્ન-પચયન કરીને તેમજ પ્રજાપત્યેષ્ટિ તથા આઠ શ્રાદ્ધ કરીને, મન્ત્રવડે અગ્નિનો સ્વપ્રાણમાં આવેશ કરીને નિરપેક્ષપણાથી સર્વત્ર પર્યટન કરવુ એમ સિદ્ધ થાય છે. શ્રવણાદિ તો પોતાના સરખા સ્વભાવવાળાના સંગથી સિદ્ધ થાય છે. વક્તાવિના શ્રવણ સિદ્ધ થતું નથી, શ્રોતાવિના કીર્તન સિદ્ધ થતુ નથી. તે બંને ઉપર કહેલા સંન્યાસીની સાથે પરિભ્રમણ કરતા નથી. તેથી શ્રવણ કીર્તનની સિદ્ધિ થતી નથી. प्रभूतयर्थम् પાઠ હોય તો 'ઉત્કૃષ્ટપણાથી શ્રવણાદીની વિદ્યમાનતા માટે' એવો અર્થ કરવાથી ઉપરનો જ અર્થ થાય છે.

આવા સન્યાસીની સાથે કદાચિત્ શ્રોતા અને વક્તા પર્યટન કરે, તો નિરપેક્ષપણાથી સર્વત્ર એકલા ફરવારૂપ સંન્યાસના સ્વરૂપમાં વિરોધ આવે છે. વળી હાલના સમયમાં તીક્ષ્ણ બુદ્ધિના અભાવથી સ્વરૂપ અને લીલા વિગેરેનું શ્રવણ કર્યું હોય તે પણ હૃદયમાં સ્થિર થતું નથી, તેથી તે સ્વરૂપ તથા લીલાવિગેરે હૃદયમાં સ્થિર કરવા માટે પુસ્તક વિગેરે પાસે રાખવાં જોઇએ. તેમજ સેવા કરવા માટે સેવાના સાધનો પાસે રાખવા જોઇએ. આ સર્વ નિરપેક્ષતાથી વિરુદ્ધ છે. આ સર્વ કારણોને લીધે શ્રવણ વિગેરે સહાયના સંગથી સિદ્ધ થતાં હોવાથી, અને તેનાં સાધનોનું રક્ષણ કરવાનું હોવાથી સંન્યાસના સ્વરૂપમાં વિરોધ આવે છે, માટે ભક્તિમાર્ગમાં શ્રવણાદિકની સિદ્ધિમાટે સંન્યાસ કરવો એ પક્ષ અંગીકાર કરવા યોગ્ય નથી.

અથવા, यस्त्वसंयतषड्वर्गः એ બે શ્લોકમાં ભગવાને ક્રોધાદિ જીત્યા વિના સંન્યાસ ગ્રહણ કરવામાં બાધક કહ્યું છે, તેથી પ્રથમ કહેલા સંન્યાસના સાધનનું રક્ષણ કરવાનું સૂચવ્યું છે. અને તેનું રક્ષણ एकश्चरेन्महीमेताम् એ શ્લોકોથી જે ધર્મો પ્રથમ કહ્યા છે તે કરવાથી જ સિદ્ધ થાય છે. શ્રવણાદિ કરવું એમ સિદ્ધ થતુ નથી, કેમકે એકલા ફરવામાં સહાયનો સંગ થતો નથી. કદાચિત સહાયસંગ થાય તો પણ એક સ્થલમાં સ્થિતિ કરી રહેવાતું નથી, અને સંન્યાસમાં કહેલા સાધને : આચરણ કરવું એ સંન્યાસ કરનારને આવશ્યક છે. આમ હોવાથી

